निर्देशादाकलयामः। प्रतिसंस्कारश्चायं पुराणस्य नवीकरणरूपो जीर्णसंस्कारात्मको व्यापारः। तेन सेयं चरकसंहिता साक्षादग्निवेशतन्त्रमेवेति न युज्यते वक्तुम्। अग्निवेशतन्त्रस्य हि जीर्णावशेषः चक्रपाणि-विजयरक्षित-श्रीकण्ठ-शिवदासादिसमयेऽपि सुलभोऽभूदिति तदुद्धृतपाठोद्धारैरवगच्छामः, न च ते ते पाठा लभ्यन्ते सम्प्रति लभ्यमानचरकसंहितायाम्। किञ्च, जीर्णसंस्कृतेऽप्यग्निवेशतन्त्रे—

चरकसंहिता

"अस्मिन् सप्तदशाध्यायाः कल्पाः सिद्धय एव च।
नासाद्यन्तेऽग्निवेशस्य तन्त्रे चरकसंस्कृते॥
तानेतान् कापिलबलिः शेषान् दृढबलोऽकरोत्।
तन्त्रस्यास्य महार्थस्य पूरणार्थं यथायथम्॥"

—इति स्पष्टो विलोपापूरणसूचकलेखो दृढबलपण्डितकृतश्चरकसंहितायामेव[१]। न च नाकारि दृढबलेन चरकप्रतिसंस्कृतांशेऽपि स्ववचोनिवेश इति शक्यं शपथेन विभावयितुम्। स ह्यनृषिः स्वरचितांशेष्वपि यतस्ततः स्वकपोलकल्पनया आत्रेयाग्निवेशसंवादमाचक्षाणः[२] स्वकृतांशेऽपि प्रत्यध्यायशेषम् "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते" इति प्रतिजानानश्च न खलु सर्वथा भूतार्थवादीति शक्यते वक्तुम्। तथा चेयं लभ्यमाना चरकसंहिता परमकारुणिकेन चरकर्षिणा चिकित्सास्थानार्द्धं यावत् कृतजीर्णोद्धारापूरणा, तदनन्तरं च दृढबलेन पूरितावशेषा नूनं पुनः पुनः प्रतिसंस्कृता चेति न प्रमाणान्तरापेक्षं प्रेक्षावताम्।

सुश्रुतसंहिता पुनः केनचित् प्रतिसंस्कृतं सौश्रुततन्त्रमिति प्रसिद्धा किंवदन्ती। न चास्याः प्राचीनसौश्रुततन्त्राद् वृद्धसुश्रुतापरपर्यायादभेदः कथमपि सम्भाव्यः। दृश्यन्ते हि वृद्धसुश्रुतोक्ताः पाठा[३] बहुधा वैद्यकटीकाकृद्भिरुद्धृताः, न च ते समुपलभ्यन्ते लभ्यमानसुश्रुतसंहितायाम्। "औपधेनवमौरभ्र"मित्यादिपद्ये च सुश्रुतसंहितादृष्टे सौश्रुततन्त्रस्य पृथङ्निर्देशतः शेषाणां शल्यतंत्राणां मूलभूतेषु ग्रन्थेष्वन्यतमं प्राचीनसौश्रुततन्त्रं पृथगेवासीदिति च शक्यं संशयितुम्। सन्ति च सुश्रुतसंहितायामुत्तरतन्त्रारम्भे परमत-संग्रहस्वीकृतिसूचकानि पद्यानि, यथा—

सुश्रुतसंहिता

१। चिकित्सास्थाने ३०शाध्याये। २। यथा चरके सिद्धिस्थाने तृतीयाध्याये।
३। यथा तृणपुष्पाख्यो ज्वरो वृद्धसुश्रुते वर्णितो विजयरक्षितेन निरदेशि। वृन्द-शिवदास-उल्लनादीनामपि तथैव सिद्धान्तः।

"शालाक्यशास्त्राभिहिता विदेहाधिपकीर्त्तिताः ।
ये च विस्तरतो दृष्टाः कुमाराबाधहेतवः ॥
षटसु कायचिकित्सासु ये चोक्ताः परमर्षिभिः ॥" इत्यादीनि ।

वाग्भटश्च लभ्यमानचरकसुश्रुतयोरनार्षवचोबहुलत्वं प्रतिपादयन्नाह—"ऋषि-प्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ । भेलाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम् ॥" इति । तदेतदरुणदत्तो व्याचक्षाण उपसंहरति—"अतश्चरकसुश्रुतवदनार्षमपीदं ( अष्टाङ्ग-हृदयम् ) गुणवत्त्वान्मतिमद्भिर्ग्राह्यमेव"—इति । प्रतिसंस्कृतत्वं[१] च लभ्यमानसुश्रुतसंहितायाः डल्लनचक्रपाण्यादिभिरनुमन्यते सुस्पष्टया गिरेत्येवमिह सति नानाप्रमाणसंप्लवे कृतं वृथार्षभक्तिसंरम्भेण । एवञ्च स्वीकरणीयैव पुनःप्रतिसंस्कारार्हता[२] सुश्रुतादिग्रन्थानाम् ।

यथा चेदानीं लभ्यमानायां सुश्रुतसंहितायां बहुधा विपर्यासं याताः प्रत्यक्ष-विरुद्धत्वेनोपन्यस्ताश्च साम्प्रतं दृश्यंते केचन दर्शयिष्यमाणाः शरीरविषयास्तथा

---

१ । यथा निबन्धसंग्रहे डल्लनः—"यत्र यत्र परोक्षे नियोगस्तत्र तत्रैव प्रतिसंस्कर्तृसूत्रं ज्ञातव्यम् । प्रतिसंस्कर्ता हि सुश्रुतमुखेनेदमाह,—"यथोवाच भगवान् धन्वन्तरिः सुश्रुताय इति ।" तथा च भानुमत्यां चक्रपाणिः "चतुर्विधं हि शास्त्रे सूत्रम्, 'अहं हि धन्वन्तरि'रित्यादि गुरुसूत्रम्, 'वायोः प्रकृतिभूतस्य व्यापन्नस्य च कोपनैः,' इत्यादि शिष्यसूत्रम्, 'प्रतिरसं पाकः' इत्याद्येकीयसूत्रम्, 'सुश्रुतप्रभृतय ऊचुः' इत्यादि प्रतिसंस्कर्तृसूत्रम् इति ।"

२ । ये पुनरखिलं विदन्तोऽपि गजनिमीलिकामास्थिता न विदन्ति पुनः प्रतिसंस्कारार्हतां वैद्यकग्रन्थानाम्, तेषां विचाराय समुद्धरामः कांश्चन सौश्रुतानपपाठानद्यापि अपरिशोधितान् । न ह्येते अपपाठा अपि आप्तजनप्रणीता इति मन्तव्यम् । तथा मन्वानाश्च वृथार्षभक्तिं नटयन्तो दूषयन्त्येव महर्षीन्, न भूषयन्ति । तत्र सुश्रुते—अपपाठा यथा—

(१) "अस्मिंस्तु शास्त्रे पञ्चमहाभूत-शरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रिया, सोऽधिष्ठानम् । कस्मात् ? लोकस्य द्वैविध्यात्"—इत्यादि । ( सुश्रुत० सूत्र० १म अ० ) ।

अत्र लोकस्य द्वैविध्यं पुरुषस्य क्रियाधिष्ठानत्वे हेतुरुपन्यस्तः । तत्र च तादृशहेतुतावच्छेदकं नास्ति किमपि, किं बहुना, नायं हेत्वाभासोऽपि । सम्भाव्यते चेह अस्मद्-गुरुपरम्परागतः—"लोकस्य तद्विधेयत्वाद्"—इति पाठः साधीयान् । लिपिकरप्रमादो ह्ययं 'द्वैविध्यात्' इति पाठः ।

(२) "प्राणिनां पुनर्मूलमाहारो बलवर्णौजसां च । स षट्सु रसेष्वायत्तः । रसाः पुनर्द्रव्याश्रयाः । द्रव्याणि पुनरोषधयः । तास्तु द्विविधाः स्थावरा जङ्गमाश्च । तासां स्थावराश्चतुर्विधाः—वनस्पतयो वृक्षा वीरुध ओषधयश्चेति" । ( सुश्रुत० सूत्र० १म अ० ) ।

अत्र "द्रव्याणीत्यादि"—रेखाङ्कितांशे ओषधिपदं स्थावरजङ्गमवस्तुमात्रे प्रयुक्तमिति सर्वप्रसिद्धिविरोधं पाठभ्रंशहेतुकमेव प्रतीमः । विभागश्च "स्थावराश्चतुर्विधाः—वनस्पतयो

प्रतीमः—सौश्रुततन्त्रमिदं प्रतिसंस्कारादनन्तरमपि ग्रन्थलोपात् केषाञ्चिदज्ञातनाम्नां संशोधकानां प्रभावादिमामवस्थामगमदिति ।

एवञ्च सौश्रुतप्रथमाध्यायो यथा पुरा बहुधा खण्डितोऽभूत् तथा क्वचित् क्वचिदन्येऽप्यध्याया :—इति सुखेनाविष्करणीयम् प्रेक्षावद्भिः, तद्दृष्टान्ताश्च केचन अत्रैव चतुर्थपादे दर्शिताः ।

पाठव्यत्ययाश्च लेखक-मुद्रकादिप्रमादकृताः लभ्यमानचरक-सुश्रुतसंहितयोरसंख्य-प्राया नित्यमुपलभ्यन्तेऽध्ययनाध्यापनादिविघ्नभूताः । तेनानयोः संहितयोरनाविलता न स्वप्नेऽपि साम्प्रतं सम्भाव्येत्याकलयतः कस्य न दूयते चेतः ?

यतश्च खलु प्रतिसंस्कारगुणाः प्रतिसंस्कर्तृगुणापेक्षिणस्ततः कोऽसावग्नि-वेशतन्त्रप्रतिसंस्कर्त्ता चरको दृढ़बलश्च, को वाऽयं सौश्रुततन्त्रप्रतिसंस्कर्त्ताऽज्ञातनामेति संक्षेपतः प्रसङ्गादनुसन्धीयते ।

तत्राहुरेके,—"कठचरकाल्लुक्"—इति पाणिनीयसूत्रे चरकनामदर्शनात् अयमग्नि-वेशतन्त्रप्रतिसंस्कर्ता चरकः पाणिनेरपि पूर्वजः इति, तन्न । सूत्रे निर्दिष्टाभ्यां

**कोऽसौ चरकः ?**

कठ-चरकपदाभ्यां यजुर्वेदस्य शाखाविशेषप्रवक्तुः ऋषिद्वयस्याभि-धानात् । तथाहि चरणव्यूहे भगवान् कात्यायनः—"यजुर्वेदस्य षड़शीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदाः,—चरका आह्वरकाः कठाः प्राच्यकठा * * * इत्यादि ।" तम्मादन्य एवायं सूत्रनिर्दिष्टश्चरकर्षिर्मन्त्रप्रवक्तेति

---

वृक्षा वीरुध ओषधयश्चे"ति—अन्याप्तिदुष्टः, स्थावरान्तःपातिनां पार्थिवानां तत्राग्रहणात् । न च वाच्यम्—"पार्थिवाः सुवर्ण-रजत-मणि-मुक्ता-मनःशिला-मृत्कपालादयः" इत्यंशस्याग्रे पुनरभि-धानान्नैष दोष इति । यतो नैतावता परस्तादुक्तेनापि विभागदोषोऽव्याप्तिमूलः संशोध्यते । वस्तुतस्तु अत्र पाठभ्रंशो लिपिकरप्रमादकृतः स्वीकरणीयः । वयन्तु मन्यामहे—"ते चाश्रया द्विविधाः—स्थावरा जङ्गमाश्च । तत्र स्थावरा द्विविधाः—ओषधयः पार्थिवाश्च । तत्र ओषधयश्चतुर्विधाः ।" इति साधीयान् पाठः ।

(३) एवमेव "तद्दुःखसंयोगाद् व्याधय उच्यन्ते"—इत्युपक्रम्य "ते चतुर्विधा आगन्तवः शारीरा मानसाः स्वाभाविकाश्चेति"—इति विभागोऽपि केनचिदल्पबुद्धिना प्रक्षिप्तः प्रतिभाति । विभागबीजस्य सामान्यादर्शनात् । न हि खलु मानुष्यकविभागे क्रियमाणे ब्राह्मणाः दाक्षिणात्याः कृष्णाः यवना :—इत्येवं विभागः केनचिदुन्मत्ततरेण क्रियते । अत एव चरके "द्विविधा व्याधयः निजागन्तुकभेदेन" इत्युक्तम्, तत्रैवान्येषामन्तर्भावात् ।

एवमन्येऽप्यपपाठाः सुश्रुते बहुधा दृश्या अत एव टीकाकृतः स्वटीकासु बहुधा सौश्रुतपाठान्

कोऽत्र संशयः ? न चायमेव स्यादग्निवेशतन्त्रप्रतिसंस्कर्त्तेत्यत्र किञ्चिदस्ति प्रमाणम् । न वा युज्यते कथमपि तादृशी कल्पना, वेदप्रवक्तुश्चरकस्य बहुप्राचीनत्वात् ।

कश्चित्[१] पुनराह—चरकोऽयं वैद्यकप्रतिसंस्कर्त्ता कनिष्काख्यस्य राज्ञो भिषगासीदिति त्रिपिटकाख्ये चीनदेशीयबौद्धग्रन्थे दृश्यते, कनिष्कश्च राजतरङ्गिण्याख्ये काश्मीरेतिहासे[२] तुरुष्कान्वयजो नरपतिः सार्द्धसप्तदशशताब्दीपूर्वज इति वर्ण्यते, तस्मात् सोऽयं चरकोऽग्निवेशतन्त्रप्रतिसंस्कर्त्तेति । तदपि न विचारसहम् । प्रमाणाभावात् । कनिष्कनरपतेर्वैद्योऽसौ चरकश्चेदायुर्वेदप्रतिसंस्कर्त्ताऽभविष्यत्, किमिति राजतरङ्गिण्यां कनिष्कवृत्तान्ते नाख्यास्यत तादृशस्य नामापि !. अथ प्राचीनतया स एव चेत् स्वीकार्य्यः प्रतिसंस्कर्त्ता, तर्हि यजुर्वेदशाखाप्रवक्ता चरकर्षिरेवास्तां सुपरिज्ञातस्तत्पदाभिषिक्त इत्यलममूलकमतोन्मूलनेन ।

वयन्तु चरकोऽयं स्वयं भगवान् पतञ्जलिरेवेति चिरन्तनं प्राचीनमतमाद्रियामहे । तथाचाह—चरकचतुराननश्चक्रपाणिदत्तश्चरकटीकारम्भे,—

"पातञ्जल-महाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥" इति ।

तथाच योगवार्तिके विज्ञानभिक्षुः—

"योगेन चित्तस्य पदेन वाचाम्
मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत्तं वरदं मुनीनाम्
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥" इति ।

भोजश्चाह पातञ्जलसूत्रवृत्तिप्रारम्भे,—

"शब्दानामनुशासनं विदधता पातञ्जले कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ।

---

दर्शयन्ति यत्र तत्र संशयाकुलमनसा । अपरे च केचित् सौश्रुता अपपाठा अस्माभिः अत्रैव चतुर्थपादे शारीरविचारप्रसंगे प्रदर्शनीयाः ।

१ । पाश्चात्यपण्डितस्य 'लेभि'संज्ञकस्य मतमेतत् (Dr. Sylvain Lévi in Jour. Asiatique, 1896. T. viii. P. 456. et seq). २ । कनिष्कवृत्तान्तो राजतरङ्गिण्यां प्रथमतरङ्गे द्रष्टव्यः ।

वाक्चेतोवपुषां मलः फणभृतां भर्त्रेव येनोद्धृतः
तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः ॥" इति ।

नागेशभट्टोऽपि मञ्जूषायामाप्तलक्षणं चरककृतमुद्धृत्याह—"इति चरके पतञ्जलिरिति ।" भावमिश्रोऽपि नूनमेनामेव प्रसिद्धिं मनसिकृत्य स्वग्रन्थादौ लिलेख,—

"यदा मत्स्यावतारेण हरिणा वेद उद्धृतः ।
तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् ।
अथर्वान्तर्गतं सम्यगायुर्वेदञ्च लब्धवान् ।
एकदा स महीवृत्तं द्रष्टुं चर इवागतः ।
तत्र लोकान् गदैर्ग्रस्तान् व्यथया परिपीड़ितान् ।
स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान् ।
तान् दृष्ट्वातिदयायुक्तस्तेषां दुःखेन दुःखितः ।
अनन्तश्चिन्तयामास रोगोपशम-कारणम् ।
सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह ।
प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ।
यतश्चर इवायातो न ज्ञातः केनचिद् यतः ।
तस्माच्चरकनाम्नाऽसौ विख्यातः क्षितिमण्डले ।
स भाति चरकाचार्यो देवाचार्यो यथा दिवि ।
सहस्रवदनस्यांशो येन ध्वंसो रुजां कृतः ॥
आत्रेयस्य मुनेः शिष्या अग्निवेशादयोऽभवन् ।
मुनयो बहवस्तैश्च कृतं तन्त्रं स्वकं स्वकम् ॥
तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता ।
चरकेनात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः ॥"

इति ( भावप्रकाश १ अ० )

अहिपतिर्हि भगवान् शेषः पतञ्जलिरूपेण वेदवेदाङ्गवेदिनो मुनेः पुत्रो बभूवेति एकस्यैव शेषावतारस्य प्रसिद्धेर्भोजचक्रपाण्यादिसंवादाच्चायं भावमिश्रवर्णितश्चरकर्षिः पतञ्जलिरेवेति मन्यामहे ।

समीक्षामहे च पातञ्जल-सूत्रैश्चरकसंहितायाः सौभ्रात्रम् । तथाहि "कतिधा पुरुषीये" चरकः "चतुर्विंशतिरित्येष राशिः पुरुषसंज्ञकः" इति सांख्यमतमुपक्रम्य योगमेव मोक्षद्वारं प्रधानं प्रतिपादयति स्म—

"योगे मोक्षे च सर्वासां वेदनानामवर्त्तनम् ।
मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्त्तकः ॥
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते ।
सुखदुःखमनारम्भादात्मस्थे मनसि स्थिरे ॥
निवर्त्तेते तदुभयं वशित्वञ्चोपजायते ।
आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात्तत् सर्वमुपजायते ॥"

( च० शा० १ अ० )

—इत्यादिना बहुधा। पातञ्जलदर्शनोक्तैश्च "योगश्चित्तवृत्तिनिरोधः," "तदा द्रष्टुः स्वरूपेऽवस्थानम्[१]", "स्वविषयासम्प्रयोगे चित्तस्वरूपानुकारे इन्द्रियाणां प्रत्याहारः," "ततः परमा वश्यतेन्द्रियाणाम्[२]" "बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्चित्तस्य परशरीरावेशः,"[३] "परिणामत्रयसंयोगादतीतानागतज्ञानम्"[४] "श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्",[५] "ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च",[६] कायस्य रूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंयोगेऽन्तर्धानम्"[७]—इत्यादिसूत्रैः चरकपाठसादृश्यं सुग्रहं पातञ्जलप्रविष्टैरित्यलमतिप्रसङ्गेन ।

किञ्च रामभद्रदीक्षितप्रणीते पतञ्जलिचरितेऽपि श्रूयते पतञ्जलेर्वैद्यकसंहिताकारत्वम्। तदुक्तम्—

"सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च[८] संहितामतुलाम् ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ।" इति ॥

( पतञ्जलिचरितस्य ५म सर्गे )

न चासौ पतञ्जलिः केवलं चरकसंहिताकार एव, रसशास्त्रेऽपि तन्नामश्रवणात् । तथाहि चक्रदत्तटीकायां लौहपाकविधिव्याख्याने शिवदासः—

"पातञ्जले तु स्पर्शादिनाऽपि पाकज्ञानमुक्तम्—
तावल्लौहं पचेद्वैद्यो यावद्वस्त्रेण पीड़ितम् ।
समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥" इत्यादि ।

१। समाधिपादे २।३ सूत्रद्वयम्। २। साधनपादे ५४।५५ सूत्रद्वयम्। ३। विभूतिपादे ३९ सूत्रम्। ४। तत्रैव १६ सूत्रम्। ५। तत्रैव ४२ सूत्रम्। ६। तत्रैव ४६ सूत्रम्। ७। तत्रैव २१ सूत्रम्। ८। "वार्त्तिकानि ततः"—इत्यपि क्वचित् पाठः।

लौहादिव्यवहारश्च चरकेऽपि दृश्यते। तदुक्तम्—

"एष एव च लोहानां प्रयोगः सम्प्रकीर्त्तितः।
अनेनैव विधानेन हेम्नश्च रजतस्य च।
आयुःप्रकर्षकृत् सिद्धः प्रयोगः सर्वरोगनुत्॥" इति
(चरक० चिकि० १ अ०)

चरके पारदव्यवहारोऽपि क्वाचित्को दृश्यत एव, यथा—

"सर्वव्याधिनिवर्हणमद्यात् कुष्ठी रसञ्च निगृहीतम्" इति
(च० चिकि० ७ अ०)

निगृहीतो रसश्च मकरध्वजाख्यः प्रयोगः स्यादिति तर्कयन्त्यनेके।

केचित्त्वाहुः—भगवान् पतञ्जलिश्चरकस्य भाष्यं निर्ममे, न पुनः स एव स्वयं प्रतिसंस्कर्त्तेति। तत्तुच्छम्, प्रमाणाभावात्। यदि हि नाम चरकस्य पातञ्जलभाष्यं कदाचिदपि प्रसिद्धमभविष्यत् तर्हि सहस्राधिकवर्षपुराणेषु चक्रपाणिदत्तादिव्याख्यानेषु किमिति तद्वार्त्तापि नाश्रोष्यत ? न च वाच्यं, रसग्रन्थकारत्वेनैव पतञ्जलेर्वैद्यककारत्वसिद्धेरलमस्य संहिताप्रतिसंस्कर्त्तृत्वकल्पनयेति ; चक्रपाण्यादिभिः स्पष्टं प्रतिसंस्कर्तृत्वाभिधानात्।

तदेवं भगवतः पतञ्जलेरग्निवेशसंहिताप्रतिसंस्कर्तृत्वे सिद्धे साम्प्रतं तत्कालनिर्णयाय ब्रूमः। पतञ्जलेः खल्वाविर्भूतस्य वर्षसहस्रद्वयं (किञ्चिदधिकं वा) समतीतमिति सम्प्रतिपद्यन्ते प्रायः सर्व एवेतिहासविदः प्राच्याः प्रतीच्याश्च। तत्प्रतिपादकानि प्रमाणानि तु तत्तदाकरेषु[१] मृग्यानि—नेह विस्तरभिया विचारयामः।

पतञ्जलेः प्रादुर्भावकालः

चरकसंहितापूरकः पुनर्दृढबलाचार्यः पञ्चनदपुरवास्तव्यः कश्चन भिषगतिप्राचीनः इति तदुक्त्या[२] प्रतिपाद्यते। कालः पुनरस्य पतञ्जलेरर्वाक् वाग्भटादिसंग्रहकारेभ्यश्च प्रागिति शक्यमसंशयं वक्तुम्, यतः पतञ्जलिप्रतिसंस्कृतायाश्चरकसंहितायाः चिकित्सास्थानशेषार्द्धे सह सिद्धि-कल्पस्थानाभ्यां विलुप्तेऽसौ प्रादुरासीत् तदापूरकः, संग्रहकारेषु पुराणतमो वाग्भटश्च दृढबलरचितान् चरकपाठान् क्वचित् किञ्चित्परिवर्त्तितान् समुद्धरति स्म बहुधा। वाग्भटश्च इत्सिङ्गाख्यबौद्धपरिव्राजकेन चीनदेशागतेन तदीय[३] ग्रन्थे

दृढबलस्य प्रादुर्भावकालः (प्रसंगतो वाग्भटकालश्च)

---

१। Vide Goldstücker's Pāṇini, pp. 233—34 ; also Prof. Bhandarkar's Indian Antiquary (1872), pp. 298-302. २। तदुक्तिश्च—"अखण्डार्थं दृढबलो जातः पञ्चनदे पुरे"—इत्यादिश्चरकचरमाध्याये द्रष्टव्या। ३। It-sing's

अष्टाङ्गायुर्वेदसंग्राहको नवीनाचार्य इतीङ्गितेन निर्दिष्टः, इत्सिंगश्च खृीस्तीयसप्तमशतके भारतं परिचक्रामेति सुपरिज्ञातं तद्वचसा। तदेवं प्रायस्तत्कालाद्वर्षद्विशतीप्राक्तनः ( खृीस्तीयपञ्चमशतकारम्भे वा ) वाग्भटकालः स्यादिति प्रतीतिरितिहासविदाम्। दृढ़बलश्च वाग्भटानुसृतस्ततोऽपि वर्षशतद्वयात् प्राक् सम्बभूव इति कल्पनया तस्य प्रादुर्भूतस्य प्रायः सप्तदशशती वर्षाणां समतीतेत्यामनन्ति मतिमन्तः।

सुश्रुतसंहिता पुनरियं लभ्यमाना कदा केन प्रतिसंस्कृतेति दुःशको निर्णयः। तत्राह सुश्रुतटीकायां डल्लनः,--"प्रतिसंस्कर्त्तापीह नागार्जुन एवेति।" सुगमश्चेदमनया निर्देशभङ्ग्या, यत् स्वपूर्वतनैः कैश्चिद् व्याख्यातृभिरनुमतानामन्येषां प्रतिसंस्कर्तृत्वं

**सुश्रुतप्रतिसंस्कर्त्ता नागार्जुनो वा न वा ?**

प्रसक्तं निरस्यति डल्लन एवकारेणेति। चक्रपाणिश्च स्वकृतायां भानुमत्याख्यसुश्रुतटीकायां सुश्रुतस्य प्रतिसंस्कृतत्वमुरी कुर्वाणोऽपि नागार्जुन एव तत्प्रतिसंस्कर्त्तेति नाशंसत्। तथाच शङ्कामहे, नागार्जुनादयः केचिदासन् नैकाधिकाः सुश्रुतप्रतिसंस्कर्तृ-तया पूर्वप्रसिद्धाः, न चात्र किंवदन्तीमात्रमूलं निष्प्रमाणं डल्लनवचो विनि-गमकमिति।

अथ चेन्नागार्जुन एव सुश्रुतप्रतिसंस्कर्त्ता,—तथापि कोऽसाविति दुःशकं निर्णेतुम्। श्रूयन्ते ह्यनेके नागार्जुनाः प्राचीनेतिहासप्रसिद्धाः। तत्रैको नागार्जुनो लौहशास्त्रप्रवक्ता[१] रसतन्त्राचार्यः, अपरस्तदाख्यो बौद्धनरपतिः काश्मीरेतिहासप्रसिद्धः,[२]

**कोऽसौ नागार्जुनः ?**

अन्यश्च माध्यमिकमतप्रवर्त्तको महायानाख्यसम्प्रदायप्रतिष्ठापको बौद्धाचार्यो बौद्धेतिहासेषु[३] सुप्रथितनामा। तत्राद्यः सिद्ध-नागार्जुनो नाम कक्षपुटतन्त्र-रसरत्नाकरादिकारः[४]। स च नेपालप्रत्यन्तेष्वासीत् कृताश्रमः इति तद्देशीया जनश्रुतिः। न चासौ सुश्रुतप्रतिसंस्कर्त्तेति सम्भाव्यते, यतः तादृशेन रसतन्त्राचार्येण सकलरोगहरस्य रसेन्द्रस्याभ्यन्तरप्रयोगः समग्रसुश्रुतसंहितायां क्वचिदपि

Buddhistic Practices in India ( Translated by Prof. Takakusu ), p. 128.

१। यथा चक्रसंग्रहे—"नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्"—इति रसायनाधिकारे। २। यथा राजतरङ्गिण्यां प्रथमतरङ्गे—"तदा भगवतः शाक्यसिंहस्य परनिर्वृतेः। अस्मिन् महीलोकधातौ सार्द्धं वर्षशतं ह्यगात्। बोधिसत्त्वश्च देशेऽस्मिन्नेको भूमीश्वरोऽभवत्। स च नागार्जुनः श्रीमान्—" इत्यादि। ३। For a full description of the subject, vide Dr. P. C. Roy's History of Hindu Chemistry, Vol. II, Introduction. ४। अन्योऽपि रसरत्नाकरोऽस्ति नित्यनाथकृतः प्रसिद्धतरः।

किमिति न निरदेशीति दुरुत्तरः संशयः। तथाहि सुश्रुते द्रव्यसंग्रहणीयाध्याये,— "त्रपु-सीस-ताम्र-रजत-कृष्णलोह-सुवर्णानि लौहमलश्चेति" धातवश्चिकित्सोपयोगिनः संगृहीतास्तद्गुणाश्च अन्नपानविध्यध्याये वर्णिताः, न तु तत्र श्रूयते वार्त्तापि जराव्याधि-विध्वंसिनो रसेन्द्रस्य[१]। न च नागार्जुनाख्यो बौद्धनरपतिः प्रसिद्धबौद्धाचार्यो वा सुश्रुतप्रतिसंस्कर्त्तेति सुवचम्, प्रमाणाभावात्। अस्ति हि नागार्जुनो नाम माध्यमिक-सूत्रादिकारो बौद्धधर्माचार्यः सुप्रसिद्धो, न त्वसौ वैद्यो वैद्यकप्रतिसंस्कर्त्ता वेति क्वचिद् दृश्यत उल्लेखो बौद्धग्रन्थेषु[२]। तस्माद् दुरुपपादमेवैतन्मतं—बौद्धनागार्जुन एव सुश्रुत-प्रतिसंस्कर्त्तेति। न त्वेतावता प्रतिसंस्कृतत्वेऽपि सन्देहः सूक्ष्मदृशां, पूर्वोक्तप्रमाण-बाहुल्यात्, शारीरस्थाने प्रत्यक्षविरुद्धप्रमाददर्शनाच्च[३]।

**नागार्जुनकालः**

यदि पुनरुरीक्रियते बौद्धनागार्जुन एव सुश्रुतप्रतिसंस्कर्त्तेति, तथापि सुश्रुत-प्रतिसंस्कारस्य सम्प्रति वर्षसहस्रद्वयाधिकः कालो व्यतीत इति निर्विवादः सिद्धान्तः। नागार्जुनो हि सिद्धबौद्धाचार्यो द्विसहस्रवर्षतः पूर्वं समजनीति मतस्य सर्ववादिसम्मतत्वात्।

एवञ्च द्विसहस्रवर्षतः पूर्वमप्यायुर्वेदस्य प्रतिसंस्कारार्हता समभूदिति नात्र सन्देहावसरः कोऽपि। परतश्च प्रतिसंस्कारात् प्रादुर्बभूवुरनेके वाग्भट-माधववृन्द-चक्रपाणि-विजयरक्षित-श्रीकण्ठ-शार्ङ्गधर-भावमिश्रादयो वैद्यकसंग्रहकाराः व्याख्यातार-

**आवर्षसहस्रद्वयम् आयुर्वेदस्य दशाविपर्यासः**

श्चेत्यपि सुविदितं विदुषाम्। इदानीं पुनरेतेषामेव निबन्धान् प्राचीनमतपिष्टपेषणव्रतान् सर्वायुर्वेदसारं मन्वानास्तुष्यन्ति च स्तुवन्ति च केचन धन्यम्मन्या भिषज इति हन्त नो दशाविपर्यासः। आर्षी तु बत सा प्रतिभा नियतनवीन-तत्त्वान्वेषणपरायणा साम्प्रतं विलीनैव, नूनमथवा भूमण्डलस्य पूर्वार्द्धादस्तमिता पुनः पश्चिमार्द्धे समुदितेति चिन्तयतः कस्य नु प्रेक्षावतो भारतीयस्य न विषीदति हृदयम्?

यदा निर्वर्णयामः, पूर्वोक्तानामनार्षनिबन्धकाराणां समयेऽपि लभ्यन्ते स्म

---

१। यत्तु सुश्रुते—"रक्तं श्वेतं चन्दनं पारदञ्च काकोल्यादिः क्षीरपिष्टश्च वर्गः" (सु० चि० २५ अ०) इत्यादि। तत्र पारदस्य बाह्यप्रयोग एवोपदिष्टो नाभ्यन्तरप्रयोगः। २। यत्तु तिब्वतीय-बौद्धभिक्षुतारानाथकृते नागार्जुनोपाख्याने (Life and Legends of Nāgārjuna) नागार्जुनस्य लोकातीतशक्तिसम्पन्नत्वमभिहितं क्वचिद् वैद्यविद्यानैपुण्यञ्च, तेनापि सुश्रुतप्रतिसंस्कर्तृत्वमस्य नोच्यते। न च सर्वथा स्तुतिमात्रपरायणं द्विशतवर्षमात्रपूर्वजस्य तारानाथस्य जल्पमात्रं प्रमाण-मितिहासविदाम्। ३। ते च प्रमादा अग्रे दर्शयिष्यन्ते।

नानाविधाः प्राचीनार्षसंहिताः ( सांगा विकलांगा वा ), विलुप्तप्रायाश्च ताः सर्वथैव साम्प्रतम् ,—तदा समतीतवर्षसहस्रीयं वैद्यकध्वंसवृत्तमाकलयन्तः शपामो भारतभाग्य-विधातारं विधातारमेव। यथा चासीदमूषां संहितानां सौलभ्यं सहस्रवर्षान्तस्तथा च सप्रमाणमनुपदं दर्शयिष्यामः।

तदेवमित्थं गते नानानार्षजनप्रतिसंस्कृतजीर्णावशेषे वर्षसहस्रयुगीयलिपिकरप्रमाद-प्रक्षेपादिपरामृष्टे च प्रधानार्षसंहिताद्वितये, सत्सु च तदुपजीविषु केषुचिदष्टाङ्गहृदय-भावप्रकाश-शार्ङ्गधर-चक्रदत्त-बङ्गसेनादिषु संग्रहग्रन्थमात्रेषु, सन्तमसाच्छन्नेषु च शारीर-वनौषधिविद्यादिष्वायुर्वेदपूर्वाङ्गेषु, प्रलीनप्रायेषु च काय-चिकित्सावर्जमपरेष्वायुर्वेदप्रधानाङ्गेषु, सर्वथा प्रतिसंस्कारा-पूरणाभ्यां पुनः सञ्जीवनीयोयं निगूढशक्तिर्महाप्रभावः समग्र-जगदेकाश्रयो वैद्यकवटतरुरिति कस्तावदत्र चक्षुष्मानुदासीत ? एवं हि हन्तायुर्वेदो विपन्नदीधितिरप्येतर्हि कायचिकित्साङ्गमात्रेण कथं कथमपि ध्रियमाणो निखिलभारतीय-प्रजाप्राणत्राणाय प्रभविष्णुर्बहुधा परकीयचिकित्साशास्त्रचन्द्रमसमद्यापि निष्प्रभीकरोति रविरिव पश्चिमाचलस्थः। न विद्मो, नवेन तेजसा समुदितः किं किमेष न विदधीत दश दिशः समुज्ज्वलयन्।

आयुर्वेदवटतरुः पुनः सञ्जीवनीयः

## अथ आयुर्वेदस्य प्राचीनगौरववर्णनं नाम
## द्वितीयपादः।

अथैवमतिसंक्षेपादायुर्वेदस्य पुरावृत्तं किञ्चिदालोच्य सम्प्रति विलुप्तप्राचीन-गौरवं परिचाययितुं यतामहे। दर्शयिष्यामश्चाग्रे सकलचिकित्सा-शास्त्र-मूलता-मायुर्वेदस्यैव।

तत्र यदा पूर्वदर्शितदिशा ब्रह्म-प्रजापत्यश्वि-वासवपरम्परयाऽभूदवतरणमायु-र्वेदस्य धन्वन्तरिभरद्वाजादिषु परमर्षिषु, सोऽयमस्य स्निग्धकान्तः प्रभातकालः, तमिह दैवकालमाचक्ष्महे। यदा पुनर्धन्वन्तरि-सुश्रुतादिसम्प्रदायत आत्रेयाग्नि-वेशादिसम्प्रदायतश्च द्विविधा प्रवृत्तिः, क्रमशः कार्यविभागा-दष्टांगवैद्यकतन्त्रकाराणां प्रादुर्भावश्च, तदेतदखिलभूमण्डलोद्भासि मध्यन्दिनमायुर्वेदस्य—सोऽयमार्षकालः संहिताकालो वा। यस्तु पुनः प्राचीनविज्ञानारुणरागसंग्रहणः संग्रहकृतां कालः, सेयमपराह्णवेला हीयमानज्योतिषो वैद्यकस्य,—तं संग्रहकालमभिदध्मः। साम्प्रतं पुनरेष सम्प्राप्तः करालः सन्ध्यासमयो

आयुर्वेदस्य काल-चतुष्टयविभागः

यत्र समुपचीयमाने गाढ़ान्धकारे न दृश्यते दर्शनीयं, न क्रियते करणीयं, न च सम्यग् ज्ञायते पन्था गन्तव्यः। तथाप्याशास्महे—चक्रनेमिपरिवृत्तिन्यायेन पुनरपि समुदेष्यति नः पौर्णमासी रजनी, यत्र दिव्यालोकेन ज्ञास्यते शोभनो मार्गो महर्षिजनानुसृतः, सम्पत्स्यते च भूयोऽपि सैव सम्पदायुर्वेदस्येति।

अथेदानीमायुर्वेदप्रभातसमये विरचितानां केषाञ्चिन्नाममात्रशेषाणां ग्रन्थानां परिचयमाख्यापयामः। तेषु चाद्या ब्रह्मकृता लक्षश्लोकमयी संहिता—इति श्रूयते। अन्याश्चानन्तरं बभूवुः क्रमात् संहिताः—प्रजापतिसंहिता, अश्विसंहिता, बलभित्संहिता चेति प्रतियन्ति वैद्यकविदः।

*तत्राद्यो दैवकालः प्रभातकालो वा*

ब्रह्मवैवर्त्तपुराणे तु आयुर्वेदावतरणक्रमः किञ्चिद्भिन्न एवाख्यायते प्राचीनग्रन्थपरिचयश्चाश्रुतपूर्व एव। यथा—

*ब्रह्मवैवर्त्तपुराणोक्तः आयुर्वेदावतरणस्य क्रमभेदः, तत्कालीनग्रन्थपरिचयश्च।*

ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः।
विचिन्त्य तेषामर्थञ्चैवायुर्वेदं चकार सः॥
कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः।
स्वतन्त्रसंहितां तस्माद्भास्करश्च चकार सः॥
भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्व-संहिताम्।
प्रददौ पाठयामास ते चक्रुः संहितास्ततः॥
तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च।
व्याधिप्रणाशवीजानि साध्वि मत्तो निशामय॥
धन्वन्तरिर्दिवोदासः काशिराजोऽश्विनीसुतौ।
नकुलः सहदेवोऽर्किश्च्यवनो जनको बुधः॥
जावालो जाजलिः पैलः करथोऽगस्त्य एव च।
एते वेदांगवेदज्ञाः षोडश व्याधिनाशकाः॥
चिकित्सातत्त्वविज्ञानं नाम तन्त्रं मनोहरम्।
धन्वन्तरिश्च भगवान् चकार प्रथमे सति॥
चिकित्सादर्शनं नाम दिवोदासश्चकार सः।
चिकित्साकौमुदीं दिव्यां काशिराजश्चकार[1] च॥

---

[1] अत्र धन्वन्तरि-दिवोदास-काशिराजादीनां पृथक्त्वमङ्गीकृतमिति चित्रमेतत्।

चिकित्सासारतन्त्रञ्च भ्रमघ्नञ्चाश्विनीसुतौ ।
तन्त्रं वैद्यकसर्वस्वं नकुलश्च चकार सः ॥
चकार सहदेवश्च व्याधिसिन्धुविमर्दनम् ॥
ज्ञानार्णवं महातन्त्रं यमराजश्चकार ह ॥
च्यवनो जीवदानञ्च चकार भगवानृषिः ॥
चकार जनको योगी वैद्यसन्देहभञ्जनम् ।
सर्वसारं चंन्द्रसुतो जाबालस्तन्त्रसारकम् ॥
वेदाङ्गसारं तन्त्रञ्च चकार जाजलिर्मुनिः ।
पैलो निदानं करथस्तन्त्रं सर्वधरं परम् ।
द्वैधनिर्णयतन्त्रञ्च चकार कुम्भसम्भवः ॥
चिकित्साशास्त्रवीजानि तान्येतानि हि षोड़श ।
व्याधिप्रणाशवीजानिबलाधानकराणि च ॥
मथित्वा ज्ञानमन्थेनैवायुर्वेदपयोनिधिम् ।
ततस्तस्मादुदाजह्रुर्नवनीतानि कोविदाः ॥"

( इति ब्रह्मवैवर्त्तपुराणस्य ब्रह्मखण्डे १६ अ० )

दृश्यते चान्योऽपि सुप्रसिद्धमतविलक्षणो वैद्यकावतरणक्रमश्चरकचिकित्सा-स्थानारम्भेऽपि । तद् यथा—

"अथात आयुर्वेदसमुत्थानीयं रसायनपादं व्याख्यास्यामः । इति ह स्माह भगवानात्रेयः—ऋषयः खलु कदाचिच्छालीना यायावराश्च ग्राम्यौषध्याहाराः सन्तः साम्पन्निका मन्दचेष्टा नातिकल्याणाश्च प्रायेण बभूवुः । ते सर्वासामितिकर्त्तव्यतानामसमर्थाः सन्तो ग्राम्यवासकृतं दोषं ज्ञात्वा पूर्वनिवासमपगतग्राम्यदोषं मत्वा शिवं पुण्यमुदारं मेध्यमगम्यमसुकृतिभिर्गङ्गाप्रभवममर-गन्धर्व-यक्ष-किन्नरानुचरितमनेकरत्ननिचयमचिन्त्याद्भुतप्रभावं ब्रह्मर्षिसिद्धचारणानुचरितं दिव्यतीर्थौषधिप्रभवमतिशरण्यं हिमवन्तममराधिपतिगुप्तं जग्मुर्भृग्वंगिरोऽत्रिवशिष्ठ-कश्यपागस्त्य-पुलस्त्य वामदेवासित-गौतमप्रभृतयो महर्षयः ।

"तानिन्द्रः सहस्रदृगमरवरोऽब्रवीत्—स्वागतं ब्रह्मविदां ज्ञानतपोधनानां ब्रह्मर्षीणामस्ति ननु वो म्लानिरप्रभावत्वं वैस्वर्यं वैवर्ण्यञ्च ग्राम्यवासकृतमसुखानुबन्धश्च । ग्राम्यो हि वासो मूलमशस्तानाम् । तत्कृतः पुण्यकृद्भिरनुग्रहः प्रजानां स्वशरीरमरक्षिभिः । कालश्चायमायुर्वेदोपदेशस्य ब्रह्मर्षीणामात्मनः प्रजानाञ्चानु-

ग्रहार्थम्। आयुर्वेदमश्विनौ मह्यं प्रायच्छतां, प्रजापतिरश्विभ्यां, प्रजापतये ब्रह्मा, प्रजानामल्पमायुर्जराव्याधिबहुलमसुखमसुखानुबन्धम् अल्पत्वादल्पतपोदमनियमदानाध्ययनसञ्चयं मत्वा। तं पुण्यतममायुःप्रकर्षकरं जराव्याधिप्रशमनमूर्जस्करममृतं शिवं शरण्यमुदारं भवन्तो मत्तः श्रोतुमर्हन्त्युपधारयितुं प्रकाशयितुञ्च प्रजानुग्रहार्थमिति तत् श्रुत्वा विबुधपतिवचनमृषयः सर्व एवामरवरमृग्भिस्तुष्टुवुः प्रहृष्टास्तद्वचनमभिननन्दुश्चेति।

"अथेन्द्रस्तदायुर्वेदामृतमृषिभ्यः संक्रम्योवाचैतत् सर्वमनुष्ठेयम्॥" इत्यादि।

(चरक चिकित्सास्थान० १ अ०)

तदेतत् सुप्रसिद्धमतविलक्षणं कल्पद्वयमायुर्वेदावतरणस्य, पौराणिकवृत्तानां कल्पभेदकल्पनया वा ब्रह्मेन्द्रादिगुरूणामनेकशिष्योपदेशसम्भावनया वा समाधानीयमिति दिक्। अथवा सुप्रसिद्धेऽपि वैद्यकस्य वेदाङ्गत्वे, चरक-सुश्रुतयोर्दृश्यते अथर्ववेदस्यैवायुर्वेदप्रभवता वर्णिता, चरणव्यूहे तु ऋग्वेदस्यैव, इति मतभेदः सर्वत्रैव सोढव्यः। तथाहि—

'भिषजा पृष्टेनैवं चतुर्णां वेदानामात्मनोऽथर्ववेदे भक्तिरादेश्या—" इति चरकः (सूत्रस्थाने ३० अ०)। "आयुर्वेदो नाम यदुपाङ्गमथर्ववेदस्ये"ति सुश्रुतः। (सूत्रस्थाने १ अ०) "ऋग्वेदस्यायुर्वेद उपवेदः"—इति चरणव्यूहे कात्यायनः। समाधानञ्चात्र ऋग्वेदस्याद्यवेदत्वेन आयुर्वेदमूलता, वैद्यकविस्तरस्य पुनरथर्ववेदे विशेषेण दर्शनात् तदुपाङ्गताऽयुर्वेदस्येति केचित्। पौर्वापर्यञ्च वेदेष्वप्यस्तीति मतं तु सुप्रसिद्धवेदाचार्येण स्वर्गतेन तत्र भवता सत्यव्रतसामश्रमिणा प्रतिपादितं तदीयत्रयीचतुष्टयाख्ये ग्रन्थे इत्यलमस्मादृशामल्पधियाम् अपारकालसागरसन्तरणप्रयासेन।

अथास्य वैद्यकप्रभातकालस्य इयत्कालतया इयत्कालपूर्वतनतया वा निर्णयः सर्वथा अशक्य एवास्माकम्। साहसिकाः पुनः केचन पाश्चात्त्याः षट्सहस्रवर्षमात्रपरिच्छिन्नां विधातुः सृष्टिं मन्वानाश्चतुःसहस्रवर्षतः प्राक्तनमेनं कालं मन्यन्ते। वयन्तु स्मरणातीतोऽयमतिपुराणो दैवयुगाख्यः काल इत्येतावता विरमामः।

अथैवमायुर्वेदावतरणादर्वागधिगतविद्या महर्षयो विरचयाम्बभूवुरनेकानि तन्त्राणि,

**आयुर्वेदस्य मध्यन्दिनम्—आर्षकालः**

तैश्च गजाश्वायुर्वेदादि-नानोपाङ्गं मानुषचिकित्साशास्त्रं लोके परां प्रतिष्ठामयासीत्। कालश्चायमायुर्वेदस्य मध्यन्दिनभूतः संहिताकाल आर्षयुगं वेत्यवोचाम। स च सार्द्धवर्षसहस्र-

द्वयात् प्राक्तनोऽनेकसहस्रवर्षव्यापी चेति निश्चयोऽस्माकम्। यतो हीयमाने वैदिकाचारगौरवे प्रलीनप्राये च महर्षिगणतीव्रप्रभावे सम्बभूव नवीनधर्मप्रवर्त्तको भगवान् शाक्यसिंहः, स च सार्द्धवर्षसहस्रद्वयेन पुराणः। दर्शितपूर्वञ्चेदं यथा द्विसहस्रवर्षतः किञ्चित् पूर्वं चरकादीनां वैद्यकप्रतिसंस्कर्तॄणां प्रादुर्भावात् प्रतिसंस्कारार्हता वैद्यकस्य तदैव समभूदिति। अतीतवर्षसहस्रद्वयान्तश्च प्रादुर्भूता दृढबलवाग्भटाद्या वैद्यकाचार्या इत्यपि अदर्शयाम। एवञ्च ततोऽपि वर्षसहस्रार्द्धात् पूर्वमार्षयुगावसानं सम्भाव्यते।

एष चार्षयुगीयानां संहिताग्रन्थानां परिचयः, स च दिष्ट्याद्यापि लभ्यत एव लभ्यमाननिबन्धेषु टीकासु चेति नास्ति तेषां सत्तायां सन्देहः।

## ( अथ कायचिकित्सा-तन्त्राणि )

**१। अग्निवेशसंहिता।**—तदेतदग्निवेशमहर्षिकृतमात्रेयसाम्प्रदायिकानां प्रधानं तन्त्रं पृथगेव चरकसंहितायाः। तत्पाठांश्च बहुधा समुद्धरन्ति टीकाकृतः। तद् यथा—

चरकटीकायां चक्रपाणिः—

"यदुक्तमग्निवेशेन—कर्षार्द्धं वा कणाशुण्ठ्योरिति।" ( च० सू० २ अ० )

एष पाठश्चरकसंग्रहेऽपि दृश्यते, व्याख्यातश्च शिवदासेन 'अग्निवेशोक्तेयं परिभाषेति। षडङ्गपरिभाषाऽपि शिवदासेन तादृगेव निर्दिष्टा।

पुनः निदानटीकायां विजयरक्षितः—

"वातपित्तकफैः सप्त-दश-द्वादशवासरान्।
प्रायोऽनुयाति मर्यादा मोक्षाय च बधाय च॥—
इत्यग्निवेशमते प्रायोग्रहणेन द्वैगुण्यमिति।"

श्रीकण्ठोऽपि वृन्दकृतसिद्धयोगटीकायामाह—

"तथाचाग्निवेशः—

"प्रवेपमाने ज्वरिते शीते हृष्टतनूरुहे।
कट्यूरुजङ्घापार्श्वास्थिशूलिने स्वेदनं हितम्"—इत्यादि।
( ज्वराधिकारे )

यतश्चैते पाठा लभ्यमानचरकसंहितायां न दृश्यन्ते, तस्मादितः पृथगेवासीदग्निवेशतन्त्रमिति स्वीकार्यमेव।

सुश्रुतप्रतिसंस्कर्त्ताऽपि स्पष्टमग्निवेशादितन्त्राणां पूर्वसत्तामुरीचकार—

"षट्सु कायचिकित्सासु ये चोक्ताः परमर्षिभिः" इत्यादिना उत्तरतन्त्रादौ।

वाग्भटश्च—"तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः" इत्याद्यष्टाङ्गहृदय-प्रस्तावनायामग्निवेशादितन्त्राणि स्पष्टमुद्दिदेश ।

अञ्जननिदानाख्यश्च ग्रन्थः अग्निवेशमहर्षिकृत एवेति केचित् । तत्र नो महान् सन्देहः, यतस्तत्र दृष्टेपु केषुचित् पाठेषु चरकसंहितायां क्वचिद् वर्त्तमानेष्वपि तत्रत्याः केचन पाठाः वर्त्तमानसुश्रुतसंहितायामेव दृश्यन्ते, न चरके । यथा—

"दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥" इति—

( सु० उत्तर० ४३ अ० ) ।

किञ्च—

"गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिड़कार्त्तिकृत् ।
भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥"—

इति माधवधृतः पाठश्चरकसुश्रुतवाग्भटेषु न दृश्यते, दृश्यते चाञ्जननिदाने इति तत्कारस्य माधवपरभावित्वमाशङ्क्यते । ननु माधव एवाञ्जननिदानादेनं पाठमुद्धारेति चेत्, तथापि माधवस्य प्राथम्येन निदानकारत्वप्रसिद्धेः, चक्रपाणि-विजयरक्षित-श्रीकण्ठादिभिश्च क्वचिदपि अञ्जननिदानपाठस्यानुद्धारात्, क्वचित् चपलरचनादर्शनाच्च युज्यत एवात्र प्रेक्षावतां संशयः ।

तदेतदञ्जननिदानमग्निवेशमहर्षिकृतं मा भूत्, तथापि अतिसंक्षेपेणाऽप्यतिरमणीयतया वर्णितमत्र रोगाणां निदानमिति परमव्युत्पादकमिदमल्पधियां मन्यामहे ।

**२ । भेलसंहिता ।**—सेयमात्रेयसाम्प्रदायिकानां द्वितीया संहिता साम्प्रतं 'ताञ्जोर'नगरीस्थराजकीयग्रन्थागारे[१] खण्डिताकारेण वर्तमानाऽपि न सर्वैः सुलभा । सति वा तत्सौलभ्ये[२] नाधिकफलं सम्भाव्यते इति ग्रन्थमेनं स्वयमालोच्य ब्रूमः । वाग्भटोऽपि स्पष्टमाह—

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ।
भेलाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम् ।" इति—

( अष्टाङ्गहृदय समाप्तौ )

---

१ । Vide Burnell's Catalogue ; also Dr. Hoernle's Medicine of Ancient India p. 37. २ । अधुना ( प्रत्यक्षशारीरस्य तृतीयावृत्तिकाले ) मुद्रापिता सा कलकत्ता-युनिवर्सिटीपण्डितैः । अतिखण्डितश्चासौ ग्रन्थः सुश्रुतादितन्त्रस्यापि पुरा कदाचिदेवंविधपरिणामं स्मारयति ।

भेलसंहिता चेयं भालुकितन्त्रादभिन्नेति केचित्। तन्न। डल्लनेन तदुभयोः पृथङ्निर्देशात्। तथाहि सुश्रुतटीकायां ज्वरप्रतिषेधव्याख्याने डल्लनः—

"इदानीं भेल-भालुकि-पुष्कलावतादीनां शल्यतन्त्रविदां मतेन विषमज्वरोत्पत्तिमभिधाय"—इत्यादि। (सुश्रुतटीका० उत्तरतन्त्र ३९ अ०)

भालुकितन्त्रस्य शल्यतन्त्रत्वेन पृथगुपलम्भाच्च। दृश्यतामग्रे भालुकितन्त्र-प्रसङ्गः।

भेलसंहितापाठाश्च बहुधा टीकाकृद्भिरुद्धृताः। तत्र दिङ्मात्रं यथा—

निदानटीकायां ज्वराधिकारे विजयरक्षितः—

"भेलेऽपि पैत्तिकः पठ्यते—

आमाशयस्थः पवनो ह्यस्थिमज्जगतोऽपि वा।

कुपितः कोपयत्याशु श्लेष्माणं पित्तमेव च। इति"

शिवदासश्च—

"नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम्।

दद्यात् पाचनकं पूर्वं ज्वरिताय ज्वरापहम्॥"—

इति चक्रसंग्रहोक्तं पाठं भेलस्येति निर्दिशति।

"ताञ्जोरग्रन्थसूची"-कारो बार्णेलाख्यः पाश्चात्यबुधस्तु—वागभटस्योपजीव्यमभूत् प्राधान्येन भेलतन्त्रमेवेत्याह। तन्निर्मूलम्। नहि लभ्यमानं भेलतन्त्रं वाग्भट-ग्रन्थस्य कलामप्यर्हति। जागर्त्ति चाद्यापि वाग्भटस्य "भेलाद्याः किं न पठ्यन्ते"—इत्यधिक्षेपवचनम्।

**३। जतूकर्णसंहिता।** सेयमात्रेयसाम्प्रदायिकानामाद्यता संहिता साम्प्रतमतिदुर्लभा। तत्पाठाश्च बहुधा प्रायः सर्वैरपि टीकाकृद्भिरुद्धृताः। तद् यथा—

चरकटीकायां चक्रपाणिः—

"तथाच जतूकर्णः—

"पृश्नी-गोकण्टक-गुडैर्मूत्रार्त्तिवस्तिशूलनुत्।"

(च० सूत्र० २ अ०) इति।

पुनस्तत्रैव—"यदाह जतूकर्णः—

"पक्त्वाऽथाम्बुशतप्रस्थे दशभागस्थितेन तु।

तैलप्रस्थं पचेत्तेन छागीक्षीरेण संयुतम्॥" इति (च० सूत्र० ५ अ०)

'यदुक्तं जतूकर्णे—दोषाणां धातूनामोजोमूत्रशकृदिन्द्रियमलायननानामष्टादश क्षयास्ते लक्ष्याः स्वगुणक्रियानाशात्।" इति च।

अथ निदानटीकायां विजयरक्षितः—

"जतूकर्णेनाप्युक्तं - जीर्णस्त्रयोदशदिवस इति ।"

(ज्वराधिकारे)

"यदाह जतूकर्णः—'आद्याश्चतस्रो दुःसाध्याः यमिका मोहतृष्णावतः सद्यः प्राणहृत् ।" इति च (हिक्काश्वासाधिकारे)

श्रीकण्ठोऽपि निदानटीकायामाह —

"जतूकर्णेऽप्युक्तं—"कुपितेन वायुना दीपस्येवाग्नेर्निर्वापणं, पित्तेनोष्णजलवत् कफेनाम्बुवत्"—इति ।" (क्षुद्ररोगाधिकारे)

एवं शिवदासोऽपि चक्रसंग्रहटीकायां बहुधा जतूकर्णपाठानुद्धरतीति दिक् ।

इत्थञ्च जतूकर्णसंहिताख्योऽयं गद्यात्मकरचनाभूयिष्ठो महाग्रन्थः शिवदाससमयेऽपि सुलभोऽभूदिति सुप्रतिपादम् । शिवदासश्च समाहृतटीकाकारेष्ववर्वाचीनतम इत्यग्रे दर्शयिष्यामः ।

**४।८ पराशरसंहिता, क्षारपाणिसंहिता** च ।—तदेतत्तन्त्रद्वयं न केवलं विजयरक्षितश्रीकण्ठाभ्यां बहुधा समुद्धृतपाठम्, अपितु शिवदाससमयेपि तत्सौलभ्यमासीदिति ज्ञायते चक्रसंग्रहटीकोद्धृतैः पाठैः । तद्यथा —ग्रहणीचिकित्साव्याख्याने शिवदासः—

"यदाह पराशरः —

"निर्वाहयेत्[१] सफेनञ्च पुरीषं यो मुहुर्मुहुः ।
प्रवाहिकेति साख्याता कैश्चिन्निश्चारकस्तु सः ॥" इति

पुनः कासचिकित्सितव्याख्याने स एव—

"यदाह क्षारपाणिः —

'पिप्पल्यामलकं द्राक्षा खर्ज्जूरं शर्करा मधु ।
लेहोऽयं सघृतो लीढः पित्तक्षयजकासजित् ॥" इति ।

**६। हारीतसंहिता**—सेयं चक्रपाणि-विजय-श्रीकण्ठ-शिवदासादि-समये सुलभाऽपि साम्प्रतं सुदुर्लभा संवृत्ता । न च मुद्रितप्रसिद्धा हारीतसंहिता स्वप्नेऽपि आर्षीति सम्भाव्या,[२] पूर्वोक्तहेतु[३]शतसद्भावात् । चक्रादिशिवदासान्तैर्व्याख्याकारैरुद्धृतानां पाठानां प्रायस्तत्रादर्शनाच्च । दिङ्मात्रमुदाह्रियते—

१। अत्र प्रवाहयेदिति युक्ततरः पाठः प्रतिभाति । २। मुद्रणञ्च हारीतसंहिताख्यस्यास्य निबन्धस्य कलिकातायां कविराजश्रीकालीशचन्द्रेण, मुम्बय्याञ्च तदनुसारिणा केनचित् कृतमिति प्रसिद्धम् । ३। दृश्यतामुपोद्घातस्य चतुर्थपत्रम् ।

तत्र चरकटीकायां चक्रपाणिः—

"उक्तञ्च हारीते –

"नानापुष्पप्रकाराणां रससारात्मकं मधु ।
तच्छैत्यात् सौकुमार्याच्च सर्वैरुष्णैर्विरुध्यते ।।" इति

( च० सूत्र० २३ अ० व्याख्याने )

तथा निदानटीकायां विजयः—

"तथाच हारीतो व्याहरति—

"चातुर्थको नाम गदो दारुणो विषमज्वरः ।
शोषणः सर्वधातूनां बलवर्णाग्निनाशनः ।

* * * *

—इत्यादि ( ज्वराधिकारे )

तत्रैव विद्रधिनिदानव्याख्याने च स एव—

"ऊर्द्ध्वं प्रभिन्नेषु मुखान्नराणां
प्रवर्त्ततेऽसृक्सहितोऽपि पूयः ।" इत्यादि –

ते चैते पाठा मुद्रितहारीतसंहितायां क्वचिदपि न दृश्यन्ते इति परमार्थतो हारीत-संहिताया अपि तुल्यमेव दौर्लभ्यम् ।

७ । **खरनादसंहिता**—साऽपीयमात्रेयसाम्प्रदायिकानामेव संहिता । तत्-प्रसङ्गाश्च यथा—

ज्वरनिदानटीकायां विजयः—

"इति षड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः ।
अतः परं पाचनीयं शमनं वा ज्वरे हितम् ।।

—इति खरनादवचनञ्च पूर्ववदष्टाहप्रतिपादकं द्रष्टव्यम् ।" इति ।

वाग्भटटीकायां हेमाद्रिश्च—

"यदाह खरनादः—

रसशेषे हितः स्वप्नो घर्माम्बु लघुभोजनम्"—इत्यादि ।

( अष्टाङ्गहृदय० सूत्र० ८ अ० टीकायाम् )

हेमाद्रिणा खारनादिनाम्नाऽपि केचिदुद्धृताः पाठाः । ते खरनादस्यैव, अन्यस्य वा खरनादपुत्रस्येति न सम्यग् ज्ञायते । अरुणदत्तोऽपि खरनादपाठान् बहुधा समुद्दधार ।

८। **विश्वामित्रसंहिता**[१]—तदेतदतिप्राचीनं तन्त्रं चक्रपाणिना समुद्धृतपाठं चरकटीकायां सुश्रुतटीकायाञ्च। तत्र दिक्—

'यदुक्तं विश्वामित्रेण—

"तड़ागजं दरीजञ्च तडागाद् यत् सरिज्जलम्।
बलारोग्यकरं तत् स्याद् दरीजं दोषलं स्मृतम्॥" इति—

(चरकटीकायां सूत्र० २७ अ०)

"यदुक्तं विश्वामित्रेण—

सूक्ष्मकेशप्रतीकाशा बीजरक्तवहाः सिराः।
गर्भाशयं पूरयन्ति मासाद् बीजाय कल्पते॥" इति।

(सुश्रुतटीकायां सूत्र० १४ अ०)

शिवदासोऽपि विश्वामित्रपाठमुद्धरति मुष्ककवर्णनावसरे। यथा—

"यदाह विश्वामित्रः—

श्वेतपुष्पः कृष्णपुष्पो रक्तपुष्पस्तथैव च।
पीतोऽन्योऽपि वरस्तेषु कृष्णपुष्पः प्रकीर्त्तितः॥" इति

(चक्रटीकायामर्शोऽधिकारे)

९। **अगस्त्यसंहिता**।—अगस्त्यो नाम धन्वन्तरि-शिष्य इति दक्षिणापथे प्रसिद्धिः। तत्र च अगस्त्यप्रणीतसंहितामवलम्ब्य प्रवृत्तः अगस्त्यसम्प्रदायो नाम चिकित्सकसम्प्रदायो विशेषतः प्रतिष्ठामयासीत्। एतत्सम्प्रदाय-प्रवर्त्तका आचार्याः अष्टाविंशतिसंख्यका इति केचित्, द्वाविंशतिरित्यन्ये; चतुश्चत्वारिंशदित्यपरे। तेषां ग्रन्थाः केचिद् देवभाषालिखिताः केचिच्च द्राविड(तामिल)भाषामया अद्यापि दक्षिणापथे[२] बहुधा समुपलभ्यन्ते।

वङ्गसेनाचार्यस्तु स्वकीयसंग्रहान्ते प्राह—

"अगस्त्यसंहितेयं प्राक् ख्याता मज्जन्मतस्ततः।
गदाधरगृहे जन्म लब्ध्वा मत्प्रतिसंस्कृता॥
वङ्गसेन इति ख्यातो नाम्नाऽसौ तदनन्तरम्।
ग्रन्थोऽयं सर्वसिद्धान्तसारः शीघ्रफलप्रदः॥"

---

१। संहितेयं प्रायः कायचिकित्साप्रसङ्गेष्वेव समुद्धृतपाठा इत्यस्याः कायचिकित्सातन्त्रेष्वन्तर्भावः सम्भावितः। २। एतत्प्रसङ्गीयदक्षिणापथवृत्तान्तो मान्द्राजवास्तव्यसुहृद्वरवैद्यरत्न-पण्डित-श्रीगोपालाचार्यमहाशयेभ्यः प्राप्तः।

**१० । अत्रिसंहिता**(?) – सेयमतिप्राचीना संहितेति केचित् , अर्वाचीनेन केनचिन्निर्मितेत्यपरे । यतश्च प्राचीनटीकाकारैरस्याः संहितायाः पाठा न दृश्यन्ते प्रायः समुद्धृताः – ( अस्माभिश्च क्वचिदपि तत्पाठा नासादिताः )—ततोऽस्याः प्राचीनत्वे संशयानाः स्मः । श्रुतं पुनरस्माभिरद्यापि पञ्चनदेषु क्वचिदस्त्येव सुमहानत्रिसंहिताख्यो ग्रन्थः परं नासादितोऽद्यापि ।

तान्येतानि कायचिकित्साप्रधानतन्त्राण्यार्षाणि लब्धपरिचयान्यस्माभिः ।

## [ अथ शल्यतन्त्राणि ]

**११।१२ औपधेनवतन्त्रम् औरभ्रतंत्रञ्च**—तदेतत् तन्त्रद्वितयं सम्प्रति सर्वथा नाममात्रावशेषमेव यतस्तदुद्धृतप्रमाणान्यपि विरलानि । तत्सत्ता तु "औपधेनवमौरभ्र"मित्यादिसुश्रुतीयश्लोकेन समुन्नेया । डल्लनेन च "दोषोऽल्पोऽहितसम्भूत—" इत्यादिसौश्रुतपद्यव्याख्याने ( सु० उत्तर० ३९ अ० ) औपधेनवमतमिदमिति निरदेशि ।

**१३ । सौश्रुततन्त्रं वृद्धसुश्रुता**परपर्यायम् । तच्च लभ्यमानसुश्रुतसंहिताया मूलभूतम् । ये तु केचिदाहुरनयोरभेदं, तन्मतनिरासाय बहूनि प्रमाणानि दर्शितपूर्वाणि सुश्रुतसंहिताप्रसङ्गे । प्रदर्शितं च तत्र विदेहाधिपादीनां नामकीर्त्तनादि पर्याप्तं प्रमाणम् लभ्यमानसुश्रुतग्रन्थस्य अनाद्यत्वप्रतिपादनाय[१] ।

एवञ्च अर्वाचीनकालीनस्य शिवदासस्य समयेऽपि वृद्धसुश्रुतस्य सौलभ्यमासीदिति विज्ञायते । न विद्मः,—सम्यगन्वेषणेन जातु पुनर्लभ्येत वाऽदस्तन्त्रमिति ।

---

१ । अन्यच्च किञ्चिदस्मत्सुहृदो राजवैद्यश्रीमद्विरजाचरणकविभूषणस्य कृतेर्वनौषधिदर्पणस्य वङ्गभाषाविरचिताद् उपोद्घातप्रसङ्गादुद्धृत्य दर्शयामः । यथा—

माधवीयनिदानटीकायामागन्तुज्वरव्याख्याने विजयः—

"पुष्पेभ्यो गन्धरजसी ओजस्विभ्यो यदानिलः"—इत्यादिना वृद्धसुश्रुतेन पठितं तृणपुष्पाख्यं ज्वरमत्रैवान्तर्भावयन्ति ।" इति । नैष पाठो लभ्यमानसुश्रुतसंहितायां दृश्यते ।

सिद्धयोगटीकायामर्शोऽधिकारे "पिप्पल्यादितैल"व्याख्यानप्रसङ्गे श्रीकण्ठश्च—

"वृद्धसुश्रुते तु तैलेऽस्मिंश्चतुर्गुणं तोयं दर्शितं तद् यथा—शटीकृष्णे'त्यादि ।

लभ्यमानसुश्रुते पिप्पल्यादितैलप्रसङ्ग एव नास्ति, कुतोऽयं पाठः ?

एवं चक्रसंग्रहस्य वातव्याध्यधिकारे शाल्वणस्वेदव्याख्यानप्रसङ्गे शिवदासोऽपि—

"वृद्धसुश्रुते तु काकोल्यादिर्यथा"—इत्युपक्रम्य पद्यमयं काकोल्यादिगणमुद्दधार । लभ्यमानसुश्रुते तु काकोल्यादिगणो गद्यमयो दृश्यते, न पद्यमयः ( सु० सू० ३९ अ० ) इति दिक् ।

१४। **पौष्कलावततन्त्रम्**—तच्च "औपधेनवमौरभ्रम्" इत्यादिप्रसिद्ध-सौश्रुतपद्ये निर्दिष्टमुद्धृतपाठञ्च टीकाकारैः। यथा भानुमत्यां चक्रपाणिः—

"पुष्कलावतेऽप्युक्तम्—आहारस्य यत् परं धाम तदग्निना रञ्जितं रक्तत्वं प्रतिपद्यते—तत् सौम्याग्नेयत्वादुष्णद्रवैश्चाभिवर्द्धते इति (सु० सू० १४ अ० व्याख्याने)

१५। **वैतरणतन्त्रम्**—एतदपि बहुधा समुद्धृतपाठम् प्राचीनैर्व्याख्यान-कारैः। तथाहि सुश्रुतटीकायामश्मरीचिकित्सिते डल्लनः—

"तथाच वैतरणः—

भगस्याधः स्त्रिया वस्तिरूर्ध्वं गर्भाशयाश्रिता।
गर्भाशयश्च वस्तिश्च महास्रोतःसमाश्रितौ।
वस्तिभागं समुन्नम्य चावनम्याश्मरीं बुधः।
स्फिगग्रे वेधनं तासां हितमन्यत्र दोषकृत्॥" इत्यादि।

चक्रपाणिरपि सुश्रुतटीकायां वैतरणपाठमुद्धार, यथा—

"उक्तञ्च वैतरणे

"सर्वशस्तु निशां प्राप्य प्रलेपन्तु निवर्त्तयेत्।"

इत्यादि (सु० सू० १८ अ०)

यतश्च व्रणबन्धनादिलक्षणविशेषाः शस्त्रचिकित्सितविशेषाश्च सुश्रुतेऽनुक्ता बहुधा वैतरणतन्त्रादुद्धृत्य टीकाकारैर्दर्शितास्तत्र तत्र व्याख्याने, ततः सम्भावयामो लभ्यमान-सुश्रुतसंहिताया बृहत्तरोऽसौ ग्रन्थोऽभूदिति।

१६। **भोजतन्त्रम्** (**भोजसंहिता**[1] वा)—तदेतत् शल्यतान्त्रिकाणा-मतिबृहत् तन्त्रमिति शतशस्तदुद्धृतपाठैर्जानीमः। भोजश्च सुश्रुतादिसतीर्थो महर्षिरिति डल्लनेन सुश्रुतटीकायां व्याख्यातम्। तथा च नासौ धारेश्वरो नृपतिरिति शङ्कनीयम्। सन्ति तु धारेश्वरभोजकृता अपि राजमार्त्तण्डादयो वैद्यकसंग्रहग्रन्थाः, ते भोजसंहिता-पेक्षया भृशमर्वाचीनाः। समापतन्ति च ते वैद्यकापराह्णकालीनेषु ग्रन्थेषु। भोज-राजापेक्षया भोजमुनेर्बहुप्राचीनत्वाच्च क्वचिदस्य वृद्धभोजसंज्ञयापि व्यपदेशः।

भोजसंहितापाठांश्च नैकधा समुद्धरन्ति वैद्यकटीकाकृतः सर्वेऽपि। दिङ्मात्र-मिहोदाहरामः।

---

१। संहिता तन्त्रञ्चेति तुल्यार्थं पदद्वयं वैद्यके। अत एवाग्निवेशसंहिताया अग्निवेशतन्त्र-मित्यपि प्रसिद्धिः।

तत्र डल्लनः—"तथाच भोजः—

"शस्त्रं व्रीहिमुखं कार्यमङ्गलानि षडायतम्।
द्वयङ्गुलं तस्य वृत्तं स्यात् तत्फलं चतुरङ्गुलम्॥" इति—
(सु० सू० ८ अ०)

पुनः शारीरस्थाने डल्लनः—

"तदुक्तं भोजे—

हस्तपादाङ्गुलितले कूर्चेषु मणिबन्धयोः।
बाहुजङ्घाद्वये चापि जानीयान्नलकानि तु॥" इति
(सु० शा० ५ अ०)।

चक्रपाणिश्च सुश्रुतशस्त्रावचारणीयाध्यायव्याख्याने भोजकृतान्येव लक्षणानि बहुश उदाजहार (दृश्यतां सु० सू० ८ अ० व्याख्यानम्)।

अन्येऽपि चक्रपाणिसमुद्धृताः पाठा यथा—

"यदुक्तं भोजे—

संव्यूहिमस्तथा पाक्यो द्विविधः क्षार इष्यते।
पाक्यस्तु सप्रतीवापस्तीक्ष्णोऽन्यस्तु भवेत् पुनः॥" इति
(सु० सू० ११ अ० व्याख्याने)।

"भोजेऽपि—

लोहिता मर्मगाः कृष्णाः कर्णपालिश्रिताः सिराः।" इत्यादि
(सु० सूत्र० १६ अ० व्याख्याने)।

"तथा भोजेऽपि—

व्रणोदरास्थापनपीडितानां
प्रमेहिणां छर्द्यतिसारिणाञ्च।
द्रवं न दद्यादथवापि कोष्णं
स्वल्पं हितं भेषजसंस्कृतञ्च॥"
इति च (सु० सूत्र० १९ अ० व्याख्याने)।

एवं विजयरक्षितोऽपि माधवीयनिदानटीकायां बहुशो यथा—

"भोजादौ त्वियं विस्रंसीति नाम्ना पठ्यते" इति।

"तथाच भोजः—

कासो ज्वरो रक्तपित्तं त्रिरूपं राजयक्ष्मणि।"
इति (तत्रैव कासाधिकारे)।

"यदाह भोजः—

स्तब्धाङ्गदृष्टिर्भवति गूढोच्छ्वासस्तथैव च ।
दर्शनादस्रजस्तज्जाद् गन्धाच्चैव प्रमुह्यति ॥"

इति ( मूर्च्छाधिकारे ) ।

श्रीकण्ठोऽपि तत्रैव स्वकृतव्याख्यानांशे बहुधा भोजतन्त्रतः पाठानुद्धृत्य तत्रात्मनो दृढभक्तिमाख्यापयति । तत्रोदाहरणार्थं किञ्चिद् यथा—

"तथाच भोजः—

यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि ।
अग्निदग्धनिभान् स्फोटान् कुरुतः सर्वदेहगान् ।
सज्वरान् सपरीदाहान् विद्याद्विस्फोटकांस्तु तान् ॥"

इति ( निदानटीकायां विस्फोटकाधिकारे ) ।

"भोजेऽप्युक्तं—

पित्तेन जातो वदने विकारः
पार्श्वे विशेषात् स तु येन शेते ।
स्नायुप्रतानप्रभवो विशेषाद्
दाहप्रपाकप्रचुरो विदारी ॥"

इति ( तत्रैव मुखरोगाधिकारे ) ।

**१७ । करवीर्यतन्त्रम् ।** इदञ्च टीकाकृत्समये नातिप्रसिद्धमपि क्वचित् समुद्धृतपाठमेव यथा—

"उक्तं हि करवीर्य्याचार्य्येण[१]—

चन्द्रकैः शिखिपिच्छाभैर्नीलपीतादिराजिभिः ।
आवृतं वेशवाराम्बु मज्जक्षीरोपमं त्यजेत् ॥"

इति ( निदानटीकायामतीसाराधिकारे )।

**१८ । गोपुररक्षिततन्त्रम् ।** 'गोपुररक्षित' इति संज्ञा धन्वन्तरिशिष्येषु कस्यचिद् दृश्यते । तत्कृतञ्च तन्त्रमस्तीति किंवदन्ती । तत्पाठास्तु नाद्यापि क्वचिदस्माभिरभिलक्षिताः । केचित्तु 'गोपुर-रक्षित" इति व्यक्तिद्वयस्य नामद्वयमित्याहुः, सम्भावयामासुश्च तत्कृतं तन्त्रद्वयम् ।

---

१ । अत्र क्वचित् 'करवीराचार्य' इति प्रामादिकः पाठः सुधीभिर्नादरणीयः ।

१९। **भालुकितन्त्रम्।** तच्च भेलसंहितायाः पृथगेव शल्यतन्त्रमिति पूर्वमवोचाम। तत्प्रतिपादकं प्रमाणन्तु किञ्चिद् यथा—सुश्रुतटीकायां शस्त्रस्वरूप-व्याख्याने चक्रपाणिः—

"तथाच भालुकिः—

यदग्रे मण्डलं वृत्तं क्षुरसंस्थानमेव च।
मण्डलाग्रं विजानीयात् प्रमाणन्तु षडङ्गुलम्॥"

इति (सु० सूत्र० ८ अ० व्याख्यायाम्)।

पुनस्तत्रैवाग्रे, यथा—

"तत्र भालुकिः—

मुद्रिकया विबद्धं स्याद् वृद्धिपत्रसलक्षणम्।
द्व्यङ्गुलं मुद्रिकाशस्त्रं क्षुरसंस्थानमेव च॥" इति।

एवं डल्लनेन सुश्रुतटीकायां विजय-श्रीकण्ठाख्याभ्यां निदानटीकायामपि समुद्धृता भालुकितन्त्रीयाः पाठाः। परं चक्रपाणिवचनप्रामाण्याद् यन्त्रशस्त्रादिलक्षणसमन्वितमिदं तन्त्रं शल्यतन्त्रमेवेति निश्चयोऽस्माकम्।

तान्येतानि औपधेनवादीनि नव शल्यापहर्त्तॄणां तन्त्राण्यस्माभिर्लब्धपरिचयानि। अन्यच्च तन्त्रद्वयं कपिल-गौतमयोर्नामधरं क्वचिदुद्धृतपाठं कायचिकित्साविषयकमेवेति सम्भाव्यते। अनिश्चयात्तु कायचिकित्सातन्त्रेषु शल्यतन्त्रेषु वा नान्तर्भावितमस्माभिः। तदेतत्—

२०। **कपिलतन्त्रम्।**
२१। **गौतमतन्त्रञ्च।** } तत्प्रमाणद्वयं यथा—

सुश्रुतटीकायामृतुचर्य्याव्याख्याने चक्रपाणिः—

"तदुक्तं कपिलवचने—

मधौ सहे नभस्ये च मासि दोषान् प्रवाहयेत्।
सहस्यप्रथमे चैव वाहयेद्दोषसञ्चयम्।"

इति (सु० सूत्र० ६ अ० व्याख्यायाम्)।

निदानटीकायामर्शोऽधिकारव्याख्याने विजयश्च—

"यदाह गौतमः—

श्लेष्मा च पञ्चधोरःस्थः श्लेषकादिः स्वकर्मणा
कफधाम्नाञ्च सर्वेषां यत् करोत्यवलम्बनम्
अतोऽवलम्बकः, श्लेष्मा यस्त्वामाशयसंश्रितः
क्लेदकः सोऽन्नसंघातक्लेदनात्, रसबोधनात्
बोधको रसनास्थस्तु, शिरःसंस्थोऽक्षितर्पणात्
तर्पकः, श्लेषकः सम्यक् श्लेषणात् सन्धिषु स्थितः ॥" इति

अपरापि गौतमसंहिता गवायुर्वेदविषया वर्त्तते इति शृणुमः।

## ( अथ शालाक्यतन्त्राणि )

**२२। विदेहतन्त्रम् ।**—तदेतत् शालाकिनां प्रधानतन्त्रं विदेहाधिपेन निर्मितम्। मूलभूतञ्चेदं लभ्यमानसुश्रुतोक्तशालाक्यतन्त्रांशस्य, तथाहि सुश्रुतस्य उत्तरतन्त्रारम्भे---

'शालाक्यशास्त्राभिहिता विदेहाधिपकीर्त्तिताः

इति (सु० उत्तर० १ अ०)।

विदेहाधिपश्चाऽसौ जनको नाम राजर्षिः सुप्रसिद्ध इति केचित्। डल्लनश्च उत्तरतन्त्रटीकारम्भे प्राह—"अस्याग्रे केचित् 'विदेहाधिपतिः श्रीमान् जनको नाम विश्रुतः'—इत्यादि पाठं पठन्ति व्याख्यानयन्ति च, तच्च बृहत्पञ्जिकाकारो न पठति, तस्मान्मयापि न पठितो व्याख्यातश्च" इति।

अन्ये तु निमिविदेहाधिपयोरभेदं मन्यन्ते; विदेहाधिपेष्वाद्यस्य राज्ञो निमेर्जनकपूर्वजत्वेन रामायणे[1] वर्णनात्। तदपि न विचारसहम्।

"इन्द्रियाणीति जनको वैदेहः" (च० शा० ६ अ०)—

इति चरकीयपाठदर्शनात्। एवञ्च वयं पुण्यश्लोकं भगवन्तं जनकमेव राजर्षिं शालाक्यतन्त्रकारं मन्यामहे, गणयामश्च निमिनामानमपरं पृथगेव, डल्लन-श्रीकण्ठादिभिः पृथङ्निर्देशदर्शनात्। तथाहि श्रीकण्ठो निदानटीकायां नेत्ररोगप्रसङ्गे "यदाह निमिः—'काच इत्येष विज्ञेयो यः स्यात्त्रिपटलोत्थितः" इति प्रमाणमुद्धृत्य पुनः "तथाच विदेहः—"एष याप्यः स्मृतः काचो म्लायी नाम शरीरिणाम्"इति प्रायस्तुल्येऽर्थे पृथक् प्रमाणमुपन्यस्यति स्म।

---

१। दृश्यतां रामायणे हरधनुर्भङ्गप्रसंगे जनककृतं स्वकुलकीर्त्तनम्।

अथेदानीं डल्लनादिभिरुद्धृतेषु विदेहतन्त्रीयप्रमाणेष्विह कानिचिद् दर्श्यन्ते। तत्र डल्लनः—"तथाच विदेहवाक्यम्,

समन्ताद्विस्तृतः श्यावो रक्तो वा मांससञ्चयः।
सन्निपातेन दोषाणां प्रस्तार्यर्म तदुच्यते॥"

इति (सु० उत्तर० ४ अ० व्याख्याने)।

पुनरन्यत्र स एव—

"तथाच विदेहः,

अन्तर्गतसिरायान्तु यदा तिष्ठति मारुतः।
स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति॥"

इति (सु० उत्तर० ६ अ० व्याख्यायाम्)।

विजयश्च निदानटीकायां यथा—

"यदाह विदेहः,

क्रोधशोकौ स्मृतौ वात-पित्त-रक्तप्रकोपणौ"—

इति (ज्वराधिकारे)।

पुनः स एव—

"यदाह विदेहः,

पित्तेन तिक्तास्यविदाहकृत् स्यात्
स्वाद्वास्य-हृल्लासकरः कफेन॥"

इति (अरोचकाधिकारे)

श्रीकण्ठश्चानेकशो विदेहपाठानुद्दधार निदानटीकायाम्। तत्र दिक्—

"तथाच विदेहः—

सर्वलिङ्गं रुजायुक्तमर्वुदं विद्धि सर्वजम्"

इति (नासारोगाधिकारे)।

"तदुक्तं विदेहे—

नक्तमन्धास्तु चत्वारो ये पुरस्तात् प्रकीर्त्तिताः"—

इत्यादि (नेत्ररोगाधिकारे)।

एष च "नक्तमन्धास्तु"—इत्यादिपाठो डल्लनेनाप्युद्धृतः।

एतच्च विदेहतन्त्रं शालाक्यविषयप्रधानमपि सर्वाङ्गसम्पन्नं तन्त्रं सुश्रुतादिवदिति प्रत्येतव्यम्, यतो विजयेन ज्वरारोचकपाण्ड्वादिप्रकरणेऽपि तत्प्रमाणान्युपन्यस्तानि।

२३। **निमितन्त्रम्।** तदेतद् विदेहाधिप-तन्त्रात् पृथगेव शालाक्य-तन्त्रमिति सप्रमाणमवोचाम। तत्प्रमाणानि च टीकाकारैः शालाक्यव्याख्यानावसर एव समुद्धृतानि। यथा श्रीकण्ठः—

"तथाच निमिः,

श्लेष्मपित्तजलोन्मिश्रे शोथे शोणितमांसजे।
जायन्ते जन्तवस्तत्र कृष्णास्ताम्राः सितारुणाः॥"

इत्यादि ( निदानटीकायां कर्णरोगाधिकारे )।

"तथाच निमिः—

पञ्चभूतात्मिका दृष्टिर्मसूरार्द्धदलोन्मिता।"

—इत्यादि ( नेत्ररोगे )।

२४। **काङ्कायनतन्त्रम्।**—काङ्कायनादीनां संज्ञा डल्लनेन सङ्ख्याता, चरकेऽपि यतस्ततः 'काङ्कायनो वाह्लीकभिषग्' इति काङ्कायनस्य निर्देशः। तदीयतन्त्रोद्धृतानि प्रमाणानि तु नाद्याप्यस्माभिरासादितानि।

२५।२६। **गार्ग्यतन्त्रं, गालवतन्त्रञ्च**— गार्ग्यगालवयोस्तन्त्रकारत्वमपि डल्लनवचसैव सूच्यते। तत्प्रमाणानि पुनर्नास्माभिः क्वचिदाविष्कृतानि।

२७। **सात्यकितन्त्रम्**—तदेतत् प्राचीनं शालाक्यतन्त्रं डल्लनेन श्रीकण्ठेन च नेत्ररोगाधिकारे समुद्धृतप्रमाणम्।

तत्र डल्लनो यथा—

"तथाच रागकथनप्रस्तावे सात्यकिः—

पित्तरक्ताहिताः पीताश्चित्रिताः सन्निपातजाः"

इति ( सु० उत्तर० ७ अ० )।

श्रीकण्ठश्च—

"याप्यश्चायं, तथाहि सात्यकिः,—

तृतीयं पटलं प्राप्ते तिमिरे रागि जायते।
अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम्।
कृच्छ्रं द्वितीये रागि स्यात्तृतीये याप्यमुच्यते॥"

इति ( निदानटीकायां नेत्ररोगे )।

**२८। शौनकतन्त्रम्।**—शौनकस्य शालाक्यतन्त्रकारत्वं डल्लनेन सुश्रुतोत्तरतन्त्रव्याख्यारम्भे सूचितम्। तत्पाठाश्च डल्लनचक्रपाणिभ्यां समुद्धृताः। तत्र दिक् यथा—चरकटीकायां चक्रपाणिः—

"अत्र शौनकवचनन्तु,
द्रव्यादापोथितात्तोये प्रतप्ते निशि संस्थितात्।
कषायो योऽभिनिर्याति स शीतः समुदाहृतः॥"
इति ( च० सूत्र० ४ अ० व्याख्याने )।

लभ्यमानचरकसुश्रुतयोश्च दृश्यते शौनकमतस्य विचारो गर्भावक्रान्तिप्रकरणे।

तत्र चरकः—
"पक्वगुदमिति शौनको मारुताधिष्ठानत्वात्"
इति ( च० शा० ६ अ० )।

सुश्रुते तु—
"गर्भस्य हि सम्भवतः पूर्वं शिरः सम्भवतीत्याह शौनकः"
इति ( सु० शा० ३ अ० )।

अनयोश्च मतयोरतिस्फुटविरोधदर्शनादनुमीयते चरकोक्तोऽयं शौनकः सुश्रुतोक्तशौनकाद्भिन्न एव स्यादिति। एवञ्च चरके क्वाचित्को "मद्रशौनकः[१]" इति पाठः साधीयान् प्रतिभाति, विरोधपरिहारसम्भवात्। तथा स्थिते च **मद्रशौनकतन्त्रं** पृथगेवोन्नेयम्।

डल्लनेन तु मदशौनक इति संज्ञया किञ्चित्तन्त्रं निरदेशि। तत्र चेत् 'मद्रशौनक' इति युक्ततरः पाठः कल्प्यते, तर्हि चरकीयपाठेन सुवचा सङ्गतिः। डल्लनकृतपाठोद्धारस्तु यथा—

"तथाच मदशौनकः,
त्वङ्मांससंश्रितो वायुस्त्वग्दाहेनैव शाम्यति।
मांसे दग्धे हि शाम्यन्ति सिरास्नाय्वस्थिसन्धिजाः॥"
इति ( सु० सूत्र० १२ अ० )।

किञ्चैवं पूर्वोक्तेन डल्लनवचसा शालाक्यतन्त्रकारेषु गणनार्हेऽपि शौनके, शौनकतन्त्रं न केवलं शालाक्यमात्रपरं, किन्त्वतिविस्तृतं शारीरभेषजकल्पनादिवर्णन-

१। मद्रदेशीयः शौनको मद्रशौनकः। क्वचित्तु 'भद्रशौनक' इत्यपि पाठः।

परायणश्च प्रतिभाति, सुश्रुतप्रतिसंस्कर्त्रा चक्रपाणिना च समुद्धृतेभ्यः पाठेभ्यस्तथा प्रतीतेः। मद्रशौनकतन्त्रन्तु शल्यतन्त्रप्रधानमासीदिति उद्धृतपाठदर्शनात् सम्भाव्यते।

यत्तु केचित्—आथर्वणशौनकसंहिताकारः शौनक एवासौ शौनकतन्त्रकार इति, तत्र ब्रूमः। अतिपुराणः खल्वाथर्वणसंहिताकारः, नवीनश्च तदपेक्षयायं तन्त्रकारः शौनकः इति—"कठचरकाल्लुक्"—इतिप्रासङ्गिकविचारसादृश्याद् भेद एवानयोः सम्भाव्यते। बहवः किलेह पुरा प्रादुर्भूतास्तुल्यनामान आचार्यास्तन्त्रकाराश्च ; तत्र नाममात्रसादृश्याद् न युज्यते परस्पराभेदस्वीकारः परीक्षकाणामिति।

२९। **करालतन्त्रम्।**—करालश्चायं करालभट्टसंज्ञया डल्लनेन व्यपदिष्टः। स चासौ ऋषिर्वाऽनृषिर्वेति न शक्यं निश्चयेन वक्तुम्, यतो भट्टान्तपदव्याऽनृषिरेवासौ स्यादिति कैश्चित् शंक्यते। तथापि भृशं प्राचीनोऽयं तन्त्रकार इति नात्र संशयः, [1]डल्लनश्रीकण्ठादिनिर्देशात्।

तत्र श्रीकण्ठो यथा -

"यदाह करालः—

कूणितं खरवर्त्माक्षि कृच्छ्रोन्मीलाविलेक्षणम्।
सदाहं सास्रजा वाताच्छुष्कापाकान्वितं वदेत्॥"

इति (निदानटीकायां नेत्ररोगे)।

३०। **चक्षुष्यतन्त्रम्।**—केचित्तु चक्षुष्येणतन्त्रमिति संज्ञान्तरमस्याहुः। एतत्तन्त्रप्रमाणञ्च यथा—

निदानटीकायां श्रीकण्ठः,

चक्षुष्योऽप्याह —

स्त्रीप्रसङ्गादभीघातादथवा देहकर्मणा।
क्षिप्रं संजायते कृच्छ्रः शिरोरोगः क्षयात्मकः।
वातपित्तात्मकं लिङ्गं व्यामिश्रं तत्र लक्षयेत्॥"

इति (शिरोरोगाधिकारे)।

३१। **कृष्णात्रेयतन्त्रम्।**—कृष्णात्रेयश्च पुनर्वसुरात्रेयश्चेत्येक एवेति केचित्। तन्न। कृष्णात्रेयस्य शालाक्यतन्त्रकारत्वेन पृथक् प्रसिद्धेः। तथाहि सिद्धयोगव्याख्याने (कवलाधिकारे) श्रीकण्ठः—

---

१। डल्लननिर्देशस्तु उत्तरतन्त्रटीकारम्भे द्रष्टव्यः।

५

"शालाकिभिस्तु प्रतिदोषं पठितानि द्रव्याणि। तथाच कृष्णात्रेयः"—इत्यादि।

शिवदासोऽपि चक्रसंग्रहटीकायां नस्याधिकारे समुद्धार कृष्णात्रेयतन्त्रीयं पाठम्। यथा—

"उक्तं हि कृष्णात्रेयेण,

सप्तवर्षमुपादाय नस्तः कर्म चतुर्विधम्।" इति।

तान्येतानि विदेहाधिपादिकृष्णात्रेयान्तपरमर्षिकृतानि दश शालाक्यतन्त्राणि साम्प्रतमस्माभिर्लब्धाभिज्ञानानि।

## अथ भूतविद्यातन्त्राणि

अथेदं भूतविद्याख्यमायुर्वेदाङ्गं कदाचिदतिप्रसिद्धमपि सम्प्रति चिराय विलुप्तमेव। तथा चेदानीं भूतविद्यातन्त्राणां नामान्यपि न लभ्यन्ते, किमुत ग्रन्थाः ?

अस्ति त्वायुर्वेदे लभ्यमानेषु निबन्धेषु भूतविद्याबीजमद्यापि ; तद् यथा—

(१) सुश्रुते अमानुषप्रतिषेधाध्याये ( उत्तर० ६ अ० ) ;

(२) चरके उन्मादचिकित्सिते ( चिकि० ६ अ० )।

(३) वाग्भटे भूतविज्ञानीय-भूतप्रतिषेधाख्ययोरध्याययोः

( उत्तर० ४, ५ अ० )। इति दिक्।

किञ्च सुश्रुत-वाग्भटयोः पृथग् भूतविद्याभिधानेऽपि, चरकेण भूतविद्याया उन्मादाधिकार एवाऽन्तर्भावः सम्पादित इत्यवधेयम्। यथा च तत्तत्प्रसङ्ग-व्याख्याने सहस्राधिकवर्षपुराणैर्व्याख्यातृभिरपि क्वचिन्नोद्धृतानि कस्यापि भूतविद्या-तन्त्रस्य प्रमाणानि, तथा तर्कयामो बहुतिथः किल कालो व्यतीतो भूतविद्या-तन्त्राणां विलुप्तानामिति। तथापि पौराणिकयुगेषु नाभूत् सर्वथा भूतविद्या-विलोप इत्यग्नि-गरुडादिपुराणेषु तत्प्रसङ्गविस्तरस्य दर्शनात् सम्भावयामः। बाल-ग्रहादिचिकित्सायाश्च भूतविद्यायामेवान्तर्भावः सुकरः। तथापि तस्याः पृथग् बालतन्त्रे ( कौमारभृत्ये ) वर्णनादनुमीयते—चरकानुसृतमार्गेण मानसरोगाधिकार एवेयं भूतविद्येति।

---

१। वयन्तु आथर्वणतन्त्रमिदं वेदनिर्दिष्टाथर्वमहर्षिणैव प्रणीतं तन्त्रमित्यत्र संशयानास्तर्क-यामः—अनेके किलासन् युगे युगे वशिष्ठविश्वामित्राथर्वादिनामधरा महर्षयः, न च वेदनिर्दिष्टेभ्यो वशिष्ठविश्वामित्रादिभ्यो रामायण-महाभारतादिनिर्दिष्टानां तत्तदाख्यमुनीनामभेदः सम्भाव्यते, तुल्यनाम्नां लोके बाहुल्येन सम्भवात् तादृशकल्पनाया अन्याय्यत्वात्।

वृद्धास्त्वाहुः—आथर्वणतन्त्रमिति अथर्वाख्यमहर्षिप्रणीतमभूत् कदाचित् प्रसिद्धं भूतविद्यातन्त्रम् पृथगेव, अथर्वाख्यश्चासौ महर्षिरथर्ववेदनिर्दिष्ट[१] इति। तदेतन्मतं किंवदन्तीमात्रमूलमित्यलमस्य बहुविचारेण।

## अथ कौमारभृत्यतन्त्राणि

कौमारभृत्यतन्त्रकारेषु जीवक-पार्वतक-बन्धकानां संज्ञाः डल्लनेन निर्दिष्टाः सौश्रुतोत्तरतन्त्रव्याख्यानारम्भे। एवञ्च—

**३२। जीवकतन्त्रम्,**

**३३। पार्वतकतन्त्रम्,**

**३४। बन्धकतन्त्रञ्चेति** तन्त्रत्रयं पूर्वमभूत् प्रसिद्धमित्यनुमीयते। तत्प्रमाणानि तु नास्माभिरद्यापि लब्धानि। जीवकादयश्च बौद्धाचार्या इति चिरन्तनी प्रसिद्धिः।

एतेषु च जीवकादिषु जीवको नाम बौद्धभिषग् 'जीवककोमारभच्च[१]' (कौमारभृत्यः) इति संज्ञया बौद्धेतिहासेषु प्रसिद्धः। स च सुप्रथितनाम्नो बिम्बिसाराख्यबौद्धनृपतेर्भगवतस्तथागतस्य च चिकित्सको, भिक्षोरात्रेयस्य च शिष्य इति बौद्धेतिवृत्तविदां[२] प्रवादः। भिक्षुरात्रेयश्च[३] चरके निर्दिष्ट इति केचित्।

---

१। "कोमारभच्च" इति तु 'कौमारभृत्य'शब्दस्य पालिभाषारूपम्।

२। Cf "When Jivaka, surnamed Komaravaccha, had reached the years of discretion, he went to Takshasila to study Medicine under a renowned professor. After seven years of study, he was perfectly skilled in the Art and was dismissed as such by his teacher. In course of time, the young physician had occasion to show his eminent skill. He cured Pradyota the Cruel, king of Ujjayini, as well as Bimbisara who appointed him to be his physician. On a certain day, Buddha was troubled with constipation, Jivaka was called" etc. etc. (Kern's manual of Buddhism, P. 30). Also see बुद्धदेव by Mahamahopadhyaya Satish Ch. Bidyabhusan, pp. 220—223 and 166—170, and It-Sing's Record of Buddhistic Practices, P. 128.

३। चरके तु वशिष्ठविश्वामित्रभरद्वाजात्रेयादीनां भिक्षोरात्रेयस्य च हिमवत्सानौ सम्मेलनं प्रतिपादितं, तथाचैषां तुल्यकालिकता स्यात्! तथापि जीवकगुरोर्भिक्षोरात्रेयस्य चरकोक्तात्रेयभिक्षोर्भेद एव सम्भाव्यते। पुनर्वसुरात्रेयस्त्वग्निवेशादिगुरुः सर्वथैव भिन्नः। अन्ये तु गम्भीरदर्शिनः चरकोक्तमृषिसंघं भोजप्रबन्धोक्तकविसंघवत् काल्पनिकमाहुः।

यत्तु कुमारतन्त्रमिति भानुमत्याख्यसुश्रुतटीकायां निर्दिष्टं चक्रपाणिना,—

"यदुक्तं कुमारतन्त्रे—

कर्णव्यधे कृते बालो न ग्रहैरभिभूयते ।

भूष्यतेऽस्य मुखं तस्मात् कार्य्यस्तत्कर्णयोर्व्यधः ॥"

( सु० सू० १६ अ० व्याख्याने )

इति पाठोद्धारपूर्वकम् ; तत् केन रचितं कुमारतन्त्रमिति न शक्यं निर्णेतुम् ।

**३५ । हिरण्याक्षतन्त्रमिति** प्रसिद्धमपरञ्चासीत् कुमारतन्त्रमिति सम्भाव्यते । तत्प्रमाणञ्च श्रीकण्ठेनोद्धृतं निदाने बालरोगव्याख्याने, यथा—

"हिरण्याक्षेऽप्युक्तम्—

संस्राव-दाह-पाकाद्यैश्चितः स्फोटैर्भयान्वितः ।

स्रस्ताङ्गो विस्रगन्धिः स्यात् शकुन्या पीडितः शिशुः ॥" इति ।

कौमारभृत्यप्रसङ्गश्च सुश्रुते उत्तरतन्त्रे ( २७ तः—३८ ) द्वादशभिरध्यायैर्वर्णितः । तथाचानुमीयते सुमहदङ्गमेतदायुर्वेदस्य सम्प्रति सर्वथा प्रनष्टप्रायमिति ।

इदञ्चात्रावधेयम् । "कौमारभृत्यं नाम कुमारभरण-धात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थानाञ्च व्याधीनामुपशमनार्थम्"—इति सुश्रुतः । प्रसूतितन्त्रस्य गर्भिण्युपचारादिप्रयोजनकस्य तु नात्रान्तर्भावः । तस्य हि वैद्यके शारीरएवान्तर्भावः, शल्यतन्त्रे च मूढगर्भचिकित्सादेः । एवञ्च सर्वथा कौमारभृत्यात् पृथगेव प्रसूतितन्त्रं ( Midwifery ) मन्तव्यम् । स्त्रीरोगास्तु केचित् कौमारभृत्यान्तर्गता एव, सौश्रुतोत्तर-तन्त्रीयविभागदर्शनात् । तत्र हि योनिव्यापत्प्रतिषेधाध्यायान्ते दृश्यते पाठः—"इति सुश्रुताचार्यविरचिते आयुर्वेदशास्त्रे उत्तरतन्त्रे कौमारभृत्यं समाप्तम्"--इति

## [ अथ अगदतन्त्राणि ] ।

निखिलस्थावरजङ्गमविषचिकित्सा ( Toxicology ) खल्विह अगदतन्त्रमित्यु-च्यते । तच्च सम्प्रति सौश्रुतकल्पस्थाने चरकचिकित्सास्थानीयत्रयोविंशाध्याये तन्मूलकनिबन्धेषु च परिसमाप्यते । विलुप्तप्रायाः पुनरिदानीं प्राचीनाः संहिता-स्तद्विषयाः । तास्वेता अस्माभिर्लब्धपरिचयाः—

**३६ । काश्यपसंहिता*** । काश्यपो नामर्षिर्महाराजपरीक्षितश्चिकि-

* वृद्धकाश्यपतन्त्रमिति कश्चिद् विपुलो ग्रन्थः अस्मत्सुहृदा प० यादवजी त्रिकमजी महाशयेनाधुना नेपालदेशे आविष्कृतः सम्प्रति प्राकाश्यं नीयते, स तु पृथगेव प्रतिभाति ।

त्सार्थमागतो मध्येपथि प्रतिनिवर्त्तितश्च तक्षकेणेति प्रसिद्धा महाभारतीया वार्त्ता। काश्यपसंहितोद्धृतानि प्रमाणानि च डल्हन-चक्रपाणि-श्रीकण्ठैः प्रदर्शितानि।

तत्र डल्हनः—

"ननु काश्यपेन मुनिना सिरादिष्वग्निकर्म प्रतिषिद्धं, तथाच तद्वचनम्—

'न सिरास्नायुसन्ध्यस्थिमर्मस्वपि कथञ्चन।

दंशस्योत्कर्त्तनं कार्य्यं दाहो वा भिषजाऽग्निना।'

—इति" (सु० सूत्र० १२ अ० व्याख्याने)

चक्रपाणिश्च—

"उक्तं हि काश्यपीये—

भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे जने।

तत्र वर्षाप्रावृडाख्यौ ऋतू तेषां प्रकल्पितौ।"

अथ श्रीकण्ठोऽपि—

"यदाह वृद्धकाश्यपः—

संयोगजं च द्विविधं तृतीयं विषमुच्यते।

गरः स्याद्विषं तत्र सविषं कृत्रिमं मतम्॥"

इति (निदानटीकायां विषाधिकारे)

केचित्तु काश्यपीयं तन्त्रं कायचिकित्सापरं मन्यन्ते, अपरे च शल्यतन्त्रपरम्। अस्माभिस्तु महाभारतसंवादात्, "दंशस्योत्कर्त्तन"मित्यादि बाहुल्येन विषतन्त्रीय-पाठोद्धारदर्शनाद्, वृद्धवैद्यप्रसिद्धेश्च अगदतन्त्रविषयाऽसौ संहितेति निरणायि।

**३७। अलम्बायनसंहिता।**—तत्प्रमाणञ्च यथा निदानटीकायां विषाधिकारे श्रीकण्ठः—

"तदुक्तमलम्बायने—

नैति रक्तं क्षताद् यस्य लताघाते न राजिकाः।

न लोमहर्षः शीताद्भिर्वर्जयेत्तं विषार्दितम्॥ इति।"

**३८। उशनःसंहिता।** उशनसा कृतेयमगदतन्त्रीया संहितेति वृद्ध-वैद्यप्रसिद्धिः। उशनःपथानुसारिणा कौटिल्येन च कृतेऽर्थशास्त्रे विषादिप्रतीकारोप-देशस्य आशुमृतकपरीक्षायाश्च[१] दर्शनादनुमीयतेऽस्याः संहितायाः पूर्वसत्ता। (दृश्यतां कौटिलीयार्थशास्त्रस्य[२] कण्टकशोधनाधिकरणम्)।

---

१। आशुमृतकपरीक्षा हि साम्प्रतिकानां Post Mortem Examination इति प्रसिद्धम्। एवञ्च नव्यानां व्यवहारायुर्वेद-(Medical Jurisprudence) संज्ञमायुर्वेदाङ्गमुशनः-संहितादीनामङ्गमभूदिति। २। एष ग्रन्थः सम्प्रति दक्षिणापथे (Mysore) मुद्रितः प्रकाशितश्च।

**३९। सनकसंहिता।** ( शौनकसंहिता वा ? )— सेयमगदतन्त्रविषयाऽतिप्राचीना संहिता, यां स्वभाषयाऽनूदितवन्तः पुरा यवनाः। तत्प्रमाणानि च भूम्ना समुद्धृतानि डा० प्रफुल्लचन्द्ररायमहाभागैः स्वकीयरसायनशास्त्रेतिहासे[१], दर्शितञ्च तत्र तैरेव चरकसुश्रुतोद्धृतविषाधिकारप्रसङ्गानामेतत्संहितानुवादेन यावनभाषास्थेन सादृश्यम्। ( तच्च मुलराख्येन पाश्चात्त्यविदुषाऽऽविष्कृतम् )।

**४०। लाट्यायनसंहिता।** तत्प्रमाणञ्च डल्लनेन समुद्धृतं यथा—

"अथ लाट्यायनोक्तः सामान्यज्ञानोपायो लिख्यते—

कटुभिर्विन्दुलेखाभिः पक्षैः पादैर्मुखैर्नखैः।
शूकैः कण्टक लांगूलैः संश्लिष्टैः पक्षरोमभिः॥"
स्वनैः प्रमाणैः संस्थानैर्लिङ्गैश्चापि शरीरगैः।
विषवीर्यैश्च कीटानां रूपज्ञानं विभाव्यते॥"

( इति सौश्रुतकल्पस्थानव्याख्याने )।

तदेवमगदतन्त्रीयं संहिताचतुष्टयमस्माभिर्लब्धाभिज्ञानमिदानीं सर्वथा प्रनष्टं प्रतिभाति।

## अथ रसायनतन्त्राणि।

अथ रसायनाख्यमिदमायुर्वेदाङ्गं जराव्याधिविनाशन-भेषजप्रयोगक्रमोपदेश-परायणमार्यचिकित्साशास्त्र एव दृश्यते, नान्यत्र। तथाचाऽस्याङ्गस्याऽतिविलक्षणा समुन्नतिरभूदायुर्वेदमध्यन्दिने, तदनन्तरं बौद्धयुगे चेति प्रागवोचाम। केचित् पुनराहुः, आर्षा हि रसायनोपदेशाः प्रायो वनौषधिप्रयोगपराः, क्वचिदेव लोहादिप्रयोगपरा वेति कृत्वा रसतन्त्राणि सर्वथाऽयुर्वेदतः पृथगभूतानि। तन्न समञ्जसम्। रसायनाख्यस्याङ्गस्य सर्वथा वैद्यकाङ्गतयैव प्रसिद्धेः। "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनमिति" लक्षणव्याप्तेश्च। दृश्यते च सुश्रुते अन्नपानविध्यध्याये लोहानां गुणवर्णनम्, तत्रैव कुष्ठप्रमेहादिचिकित्सिते लौह-शिलाजतु-माक्षिकधात्वादिप्रयोगोपदेशश्च। अथ चरकेऽपि लोहानां रसस्य च दृश्यते क्वचिद् व्यवहारः। एवञ्च आर्षयुगेषु लोहानां

---

१। Vide Dr. P. C. Roy's History of Hindu Chemistry, Vol. I ( Introduction ) CXII. But "Asankar" ( Probably a corrupt form of अगदङ्कर ) *a book on poisons* by Sanaq the Indian" can not be the same as Astanga of Vagbhata as supposed by Dr. Roy. सेयं सनकसंहितैव पूर्वोक्ता।

प्रयोगेषु सत्स्वपि बौद्धयुगारम्भे रसादिपार्थिवभेषजोपचारबाहुल्यादतिपुष्टं रसायनाङ्गं पृथगिव सिद्धतन्त्रमिति प्रतीयते स्म, न तु वस्तुतः पृथगेवाभूदित्यवसेयम्। नहि व्यायामविशेषादुपचितमङ्गमनङ्गं पृथगङ्गं वा नाम भवति।

द्विविधानि च श्रूयन्ते रसायनतन्त्राणि—आर्षाणि अनार्षाणि चेति। तत्रार्षतन्त्रेष्वेतान्यस्माभिर्लब्धाभिज्ञानानि—

**४१। पातञ्जलतन्त्रम्।** तदेतत् पतञ्जलिमहर्षिप्रणीतं तन्त्रं बहुधा व्याख्यानकारैरुद्धृतपाठम्। तत्र शिवदासोद्धृतं किञ्चित् प्रमाणं दर्शितपूर्वम् (६ पृष्ठे), अन्यानि चक्रदत्तटीकायां रसायनाधिकारव्याख्याने द्रष्टव्यानि।

**४२। व्याडितन्त्रम्।**

**४२। वशिष्ठतन्त्रम्।**

**४४। माण्डव्यतन्त्रञ्च।** तदेतत्तन्त्रत्रयं रसतान्त्रिकाणामाश्रयभूतमतिप्राचीनमिति वृद्धवैद्यप्रसिद्धिः; व्याडि-माण्डव्ययोरभिज्ञानं रसरत्नसमुच्चयकारलिखितायां रसाचार्यसूच्यामधुनाऽपि द्रष्टव्यम्। वशिष्ठ-माण्डव्ययोस्तन्त्रकारत्वं पुनर्नागार्जुनकृते रसरत्नाकरे[१] दृश्यम्। यथा—

"शास्त्रं वाशिष्ठ-माण्डव्यं गुरुपार्श्वे यथा श्रुतम्।
तदहं संप्रवक्ष्यामि साधनञ्च यथाविधि॥"

**४५। नागार्ज्जुनतन्त्रम्** नाम नागार्जुनाख्येन केनचिन्मुनिना बौद्धाचार्येण वा प्रणीतं रसतन्त्रम्। चक्रपाणिस्त्वाह—

"नागार्ज्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम्।"

इत्यादि (चक्रसंग्रहे रसायनाधिकारे)।

एतत्प्रामाण्यबलेन नागार्जुनाख्यो लोहशास्त्रप्रवक्तासौ मुनिरिति केचित्। अपरे तु चक्रपाणिना नेत्ररोगाधिकारे श्रीनागार्जुनाञ्जनप्रसङ्गे—

"नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके"—

इत्येवमादिवार्त्तादर्शनात्, पाटलिपुत्रस्य बौद्धमहानगरतया प्रसिद्धेः, नागार्जुनस्य बौद्धाचार्यतया सुविज्ञातत्वाच्च बौद्धनागार्जुनमेवैनमाहुः।

---

१। एतद्ग्रन्थांशश्च डा० प्रफुल्लचन्द्ररायैः स्वग्रन्थसमाप्तौ उद्धृतः (Vide Dr. Roy's History of Hindu Chemistry, Vol. II. Sanskrit Texts, P. 14).

सम्भावयन्ति चान्ये नागार्जुनकृतं रसरत्नाकराख्यं ग्रन्थमेव नागार्जुनतन्त्रमिति।

सुश्रुतप्रतिसंस्कर्तृविचारे चास्माभिर्नागार्जुनप्रसङ्गो वर्णितपूर्वः।

**कक्षपुटतन्त्रम्, आरोग्यमञ्जरी** चेति ग्रन्थद्वयं नागार्जुनकृतमेवेति प्रसिद्धिः। आरोग्यमञ्जरीप्रमाणन्तु विजयेन दर्शितं निदानटीकायाम्। यथा—

"उद्गारेऽपि विशुद्धतामुपगते कांक्षा न भक्तादिषु, स्निग्धत्वं वदनस्य सन्धिषु रुजां कृत्वा शिरोगौरवम्"—इत्यादि—(अग्निमान्द्याधिकारे)।

इयञ्च रसतन्त्राचार्याणां सूची रसरत्नसमुच्चयकारेण सूचिता सूचयत्यन्यानपि रसतन्त्रकारान्—

"आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः।
कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः।
रत्नघोषश्च शम्भुश्च तथार्को नरवाहनः।
इन्द्रदो गोमुखश्चैव कम्बलिर्व्याडिरेव च।
नागार्जुनः सुरानन्दो नागबुद्धिर्यशोधनः।
चण्डः कपालिको ब्रह्मा गोविन्दो लम्पको हरिः।
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः।
रसाङ्कुशो भैरवश्च नन्दी स्वच्छन्दभैरवः।
मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा।
वामदेव ऋष्यशृङ्गः क्रियातन्त्रसमुच्चयी।
रसेन्द्रतिलको योगी भालुकिर्मलयाह्वयः।
महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः।
एतेषां क्रियतेऽन्येषां तन्त्राण्यालोच्य संग्रहः।" इति*

# अथ वाजीकरणतन्त्राणि।

अथ वाजीकरणं नाम "अल्पदुष्टविशुष्कक्षीणरेतसामाप्यायनं प्रहर्षजननार्थ" शास्त्रमायुर्वेदचरमाङ्गम्। वाजीकरणतन्त्रेषु च साम्प्रतं नावशिष्यते प्राचीनः संहितालेशोऽपि। विलुप्ताश्च नूनमखिला आर्षसंहिताः सहस्रवर्षतोऽपि प्राक्, यतः पुराणटीका-

* एष पाठोऽस्मदीयपुस्तकालयस्थाद्धस्तलिखितपुस्तकाद् गृहीतः। मुद्रितपुस्तके तु बहुधा दृश्यन्ति पाठान्तराणि।

कृद्भिरपि नोद्धृतानि तत्प्रमाणानि। न चैतावता सर्वथा तासामभावः शङ्कनीयः। दृश्यन्ते हि वात्स्यायनीये कामसूत्रे औपनिषदिकाधिकारे नानाविधा वाजीकरणा योगाः प्राचीनाः, श्रूयते च तत्रैव —

"महादेवानुचरश्च नन्दी सहस्रेणाध्यायानां पृथक् कामसूत्रं प्रोवाच। तदेव तु पञ्चभिरध्यायशतैरौद्दालिकः श्वेतकेतुः संचिक्षेप। तदेव तु पुनरध्यर्द्धेनाऽध्यायशतेन साधारणसांप्रयोगिक-कन्यासंयुक्तक भार्याधिकारिक-पारदारिक-वैशिकौपनिषदिकैः सप्तभिरधिकरणैर्बाभ्रव्यः पाञ्चालः संचिक्षेप। तस्य षष्ठं वैशिकमधिकरणं पाटलिपुत्रिकाणां गणिकानां नियोगाद्दत्तकः पृथक् चकार। तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं पृथक् प्रोवाच। सुवर्णनाभः साम्प्रयोगिकम्। घोटकमुखः कन्यासंप्रयुक्तकम्। गोनर्दीयो भार्याधिकारिकम्। गोणिकापुत्रः पारदारिकम्। कुचुमार औपनिषदिकमिति।"

एवञ्चानुमीयते पुरा कामसूत्रकारैरेव ऋषिभिः प्रणीतं कामशास्त्राङ्गभूतमौपनिषदिकाख्यमेतत्तन्त्रमायुर्वेदे वाजीकरणतन्त्रमिति संज्ञया पृथक् प्रतिष्ठामयासीत्। एवञ्च वात्स्यायननिर्दिष्टमिदम्—

**४६। कुचुमारतन्त्रं**—नाम प्राचीनं वाजीकरणतन्त्रं कदाचित् सुप्रसिद्धमभूदिति शक्यमसंशयं वक्तुम्। किञ्चैवमौद्दालकिबाभ्रव्यकृतयोरतिमहतोः कामशास्त्रयोरौपनिषदिकाधिकारद्वयमपि पुराणं वाजीकरणतन्त्रद्वयमेवेत्यपि सुवचम्।

वात्स्यायनश्चासौ महाराजचन्द्रगुप्तस्याचार्य्यभूतः कौटिल्य एवेति केचित्। तदाख्यो मुनिरित्यपरे। उभयथाऽपि द्विसहस्राधिकवर्षपुराणत्वमस्य न व्याहन्यते। तथाचामूनि वात्स्यायनोद्दिष्टानि औद्दालकि-बाभ्रव्य-कुचुमारादिकृतानि तन्त्राणि ततोऽपि भृशं प्राचीनतराणीति निर्विवादः सिद्धान्तः।

वाजीकरणतन्त्रावशेषस्तु सम्प्रति चरके चिकित्सास्थानस्य द्वितीयाध्याये सौश्रुतचिकित्सास्थानस्य षड्विंशतितमाध्याये च दृश्यते इति दिक्।

गजाश्वचिकित्सितादिविषये पुनरभूवन्नैकसंख्याः प्राचीनाः संहिताः, तास्तु—

**(१) शालिहोत्रसंहिता**—अश्वायुर्वेदविषया। सेयमिदानीं दुर्लभाऽपि सुप्रसिद्धैव। सा च पुरा आरवदेशीयैः स्वभाषयाऽनूदिता "शालाटोर" इति संज्ञया प्रख्यापिता बभूवेति प्रसिद्धिः पुरावृत्तविदाम्।

नकुलकृतं जयदत्तसूरिकृतञ्चाश्ववैद्यकमिदानीं वङ्गदेशीयैसियाटिक-समाजेन प्रकाशितं प्रसिद्धमेव। तत्र नकुलकृते ग्रन्थे दृश्यते—

"जयति स पाण्डवनाथो धर्मसनाथो युधिष्ठिरो नृपतिः।
भीमार्जुनसहदेवास्तदनुचरो वाजिशास्त्रतत्त्वज्ञः॥
दृष्ट्वा सम्यङ् नकुलः शास्त्रं कृत्स्नं च शालिहोत्रीयम्।
ब्रूते शास्त्रार्थमन्यच्छास्त्रं कृत्वा समासेन॥" इति।

(२) **पालकाप्यसंहिता**—गजायुर्वेदविषयः सुमहान् ग्रन्थः। स चेदानीं पुण्यपत्तनस्थानन्दाश्रमाध्यक्षैर्मुद्रितः। तत्र अङ्गाधिपरोमपादनृपतिं प्रति भगवता पालकाप्यमुनिना समुपदिष्टं कृत्स्नं गजायुर्वेदशास्त्रम्।

(३) **गोतमसंहिता**--गजायुर्वेदविषया। तदुद्धृतपाठाः क्वचिदुपलभ्यन्ते, ग्रन्थस्तु विलुप्तप्राय एव। तदेतदद्यापि षट्चत्वारिंशत्संख्यानां विलुप्तार्षग्रन्थानामभिज्ञान-सूचितमष्टाङ्गमानुषचिकित्सासमन्वितमतिप्रौढ़िमुपागतं शास्त्रमायुर्वेदाख्यमर्णववदगाधमिदानीं दुर्दैवागस्त्यचुलुकीकृतं कस्य न शोकमावहति? को नु वा समर्थः प्राचीनगौरवमनुस्मरन् पुनस्तदुद्धारापूरणार्थं न प्रयतेत?

बभूव च किलास्मिन्नेव समये वैद्यकस्य बहुलप्रचारो दक्षिणापथेऽपि प्राधान्यतो द्राविड़भाषाद्वारेण। द्राविड़भाषाश्च चतस्र एव मुख्याः—आन्ध्री (तैलङ्गी), तामिली, कार्णाटी, केरली (मलयाली) चेति। तासु 'आन्ध्र'भाषालिखिताः संग्रहग्रन्थाः सन्त्यनेके 'केरल'भाषालिखिताश्च। 'तामिली'भाषालिखितास्तु न केवलं लभ्यन्ते संग्रहग्रन्थाः, किन्तु मूलग्रन्था अपि अगस्त्यादिमहर्षिप्रणीताः। सिद्धतन्त्रीयग्रन्थाश्च प्राधान्यतस्तद्भाषा लिखिता एव दक्षिणापथे प्रसिद्धाः।

श्रूयते चास्मिन् विषये किंवदन्ती यद् भरद्वाजात्रेयप्रमुखा महर्षयो यथा खल्वार्य्यावर्त्ते वैद्यकप्रचाराय संहिता रचयाम्बभूवुस्तथैव दक्षिणापथे अगस्त्य-पुलह-पुलस्त्य-लोमश-मतृस्यादिभिरारचिता बहवः संहिताग्रन्थाः संस्कृतभाषया, द्राविडभाषया च। तत्र संस्कृतग्रन्थकर्तॄणामाचार्याणां सम्प्रदायः—"वनसम्प्रदाय" इति, द्राविड-भाषाग्रन्थकर्तॄणाञ्च सम्प्रदायः "तेन-सम्प्रदाय" इति प्रसिद्धिं लेभे। तेषाञ्च साम्प्रदायिकानां केचन ग्रन्थाः वर्षसहस्रद्वयीतोऽपि पुराणतरा इति दक्षिणापथीयभिषजां प्रवादः।

एषा च उभयसम्प्रदायप्रवर्त्तकानामाचार्याणां नामसूची या वैद्यलोकदुर्भाग्यवशादकाले दिवंगतैरस्मत्परममित्रैर्वैद्यरत्नगोपालाचार्लूमहाभागैरस्मदुपकाराय संगृहीता। यथा—

अगस्त्यः, पुलस्त्यः पुलहः, प्युहमुनिः, वैखरिः, तिरुवान्, भोगरः, लोमशः, पुलिप्पाणिः, तेरष्यरः, हस्तचारिः, विशालः, विभाण्डकः, वाग्वलिः, नञ्जराजः, मृगशर्मा, सुरेन्द्र-मुनिः, देवेन्द्रमुनिः, वैदर्भनरः, नृसिंहभट्टः, मङ्गराजः, अभिनवचन्द्रः, उग्रादित्यः, पूज्यपादः इति। संग्रहकाराः सिद्धतान्त्रिकाश्चान्ये यथा—वैखरिमुसू, शिरट्टन्मुसू, जेविमुसू, पेव्वान्तोमुसू, तेक्कादूमुसू, आलत्तुरुनम्बिः, विज्ञानेश्वरः, वसवराजः, गङ्गाधरः, मन्थानभैरवः, त्रिमल्लभट्टः, नागनाथः, मङ्गब्वगिरिसूरिः, श्रीनाथपण्डितः, श्रीकण्ठपण्डितः, बल्लभेन्द्रः—इत्यादयः। एषु च वसवराजीयसंग्रहो दक्षिणापथेऽतीव प्रसिद्धः संग्रहग्रन्थः संस्कृतभाषाविरचितः। मन्थानभैरवकृत आनन्दकन्दाख्यग्रन्थश्च सिंहल ( लङ्का )-द्वीपे। अस्ति चापरः शोभननिर्माणः संग्रहग्रन्थो योगरत्नाकरो नाम ग्रन्थकर्तृनामविरहितः, स सिंहलीय-मयूरपादभिक्षुरचितः षट्शतवर्षपुराणश्चेति प्रत्ययः सिंहलवासिनां केषाञ्चिद् भिषजाम्। प्रसिद्धश्चापरं विशालं वैद्यकग्रन्थद्वयं सिंहले सारार्थसंग्रह-भैषज्यमंजूषाख्यम्।

अगदतन्त्रीयाश्च केचन रमणीया ग्रन्था मुद्रिताऽमुद्रिताः केरलेषु ( पश्चिमार्णवकूले कोचिन्-त्रावांकोरादिप्रदेशेषु ) वर्तन्ते। तेषां केचनाऽस्माभिर्दृष्टाः। सत्यपि च तत्र वाग्भटीयस्य अष्टाङ्गहृदयस्य बहुलप्रचारे केरलभाषारचिताः संस्कृतमिश्रकेरलभाषा-( "मणिप्रवाल"भाषा )-रचिताश्च अगदतन्त्रादिग्रन्था असंख्यप्रायाः। पठ्यते च केरलीयैरगदतन्त्रमधिकृत्येयं ग्रन्थसूची—

"लक्षणामृतमुड्डीशमुत्पलं हरमेखला।<br>नारायणीयमष्टाङ्गहृदयं कालवञ्चकम्॥" इति।

तेषु लक्षणामृतं नारायणीयमष्टाङ्गहृदयञ्च संस्कृतभाषारचितं मुद्रितञ्च। हरमेखला त्रावांकोरराजकीय-ग्रन्थागारे वर्त्तते। अपराणि तु मृग्याणि। कालवञ्चनं, ज्योत्स्निका, प्रयोगसमुच्चयश्चेति केरलभाषारचितं ग्रन्थत्रयं विशेषेण विषतन्त्रीयचिकित्सोपयोगि।

इदञ्चात्र प्रसङ्गे स्मर्त्तव्यम्। वङ्गसेनाख्येन केनचिद् भिषजा रचितस्य वङ्गसेन-संग्रहाख्यग्रन्थस्यान्ते लभ्यतेऽयं पाठः—

"अगस्त्यसंहितेयं प्राक् ख्याता मज्जन्मतस्ततः।<br>गदाधरगृहे जन्म लब्ध्वा मे प्रतिसंस्कृता॥<br>वङ्गसेनेति नाम्नाऽसौ विख्यातस्तदनन्तरम्।<br>ग्रन्थोऽयं सर्वसिद्धान्तसारः शीघ्रफलप्रदः॥"

सत्यमेव "अगस्त्यसंहितेयं" न वेति तामिलभाषारचितामगस्त्यसंहितामधीत-

वन्तः सुधिय एव वक्तुमलम् । किञ्च परहितसंहिता-धन्वन्तरिविलास-वीरभद्रीय-वृषराजीय-खगेन्द्रमणिदर्पणाद्या अपि सन्त्यनेके रमणीयाः संस्कृतभाषारचिता आन्ध्रभाषारचिताश्च ग्रन्था दक्षिणापथे प्रसिद्धाः, येषां नामान्यपि अश्रुतचराणि उत्तराखण्ड-वास्तव्यैरित्यलमतिविस्तरेण ।*

अथामुष्मिन्नायुर्वेदमध्यन्दिनसमये निखिलभूमण्डले भारतस्यैवासीदुज्ज्वल-ज्ञानालोकप्रकाशता, तदितरेषाञ्च देशानां सन्तमसाच्छन्नतेति सुविदितं पुरावृत्तविदाम् । तदानीञ्च आर्यावर्त्तबहिष्कृतैः कैश्चन व्रात्यक्षत्रियैर्नानादेशोपनिविष्टैः[१] समुन्मेषिता भारतीया ज्ञानालोकच्छटा तत्तद्देशेषु । क्रमशश्च परस्ताद् हीयमानेऽप्यार्षज्योतिषि नवाभ्युदितैर्बौद्धाचार्यैश्चिरन्तनार्ष-ज्ञानाधिकारिभिर्नवीनधर्मप्रचारोत्सुकैः प्रचारिताऽभूदधिकाधिकं भारतीया ज्ञानसम्पद् दूराद्दूरतरेषु प्राच्यप्रतीच्यप्रदेशेषु । एवञ्च क्रमात् परम्परया समुद्भासते स्म प्रतीच्याम् आरबदेशो (Arabia), मिश्रदेशो (Egypt), ग्रीस-रोमाद्याश्चापरे देशाः ; प्राच्यामुदीच्याञ्च जापानादिदेशाश्चीनाख्यो महादेशश्च, दक्षिणस्याञ्च यवद्वीपाद्याः[२] केचन द्वीपाः । ग्रीसदेशीयाश्च विद्वांसः पुरा समग्रस्य यूरोपखण्डस्य गुरुपदमधिरूढाः—इत्युरीकुर्वन्ति सर्व एव यूरोपीयाः । यथाच परम्परया साक्षाद्वा भारतशिष्या ग्रीसदेशीयास्तत्र बहुधा समुन्नेयानि प्रमाणानि । तेषु कानिचित् प्रदर्शयामः—

आयुर्वेदमध्यन्दिने समग्रभूमण्डले आयुर्वेदस्य प्रचारः निखिलचिकित्सा-शास्त्रबीजता च ।

(१) 'पोकक्'—इत्याख्येन पाश्चात्त्यपण्डितेन[३] शतशो दृष्टान्तप्रदर्शनपुरःसरं सम्यक् प्रतिपादितमेतद् यथा—न केवलं ग्रीसभाषा संस्कृतभाषातः समुद्भूता, किन्तु ग्रीसदेशीयानां नगर-दैवतनाम-कथावस्त्वादीन्यपि भारतीयनगरदैवतनामादीनां सर्वथाऽनुकारीणीति ।

---

* केरलेषु च अगदतन्त्रस्याद्यापि बहुलप्रचारोऽस्माभिः प्रत्यक्षीकृतः । विशेषतश्च सफला केरलीयानाम् 'अष्टवैद्य'संज्ञया प्रसिद्धानां भिषजां सर्पविषचिकित्सा, आलर्कविषचिकित्सा च ।

१ । यथा विष्णुपुराणे—'स (सगरः) तद्गुरुवचनमभिनन्द्य तेषां वेशान्यत्वमकारयत् । यवनान् मुण्डितशिरसः, अर्द्धमुण्डान् शकान्, प्रलम्बकेशान् पारदान्, पल्हवांश्च श्मश्रुधरान् निःस्वाध्यायवषट्कारानेतानन्यांश्च क्षत्रियांश्चकार'—इत्यादि । (विष्णुपुराणे ४ अंश ३ अ० ) ।
२ । यवद्वीपवासिषु केचिदद्यापि आर्यधर्मानुयायिन इति सम्प्रत्याविष्कृतं नाम । ३ । Vide Pocock's India in Greece.

(२) पुरातनचित्रेषु ग्रीसरोमदेशीयानां वेशविन्यासः सर्वथा भारतीय-वेशानुकार्येवाङ्कितः—इति च स्फुटं चक्षुष्मताम्।

(३) अतिविशदश्चान्यत्र[१] प्रदर्शितमस्माभिर्यन्निखिलान्यपीदानीन्तनानि यूरोपीयशल्यतन्त्रोक्तयन्त्रशस्त्राणि (—किमुत तानि ग्रीसदेशीयानि!) आयुर्वेदोक्तयन्त्र-शस्त्रैः प्रायेणाऽभिन्नरूपाणि। संवदन्ते च सर्वथा ग्रीसदेशीययन्त्रशस्त्राणां लक्षणान्यपि स्वल्पतरलभ्यमानैरपि पुराणटीकाकारोद्धृतैर्यन्त्रशस्त्रलक्षणैः।

(४) स्वीकृतश्चेदं प्राचीनैतिहासिकैर्ग्रीसदेशीयैर्यद्[२] भारत-मिश्रदेशादिलब्धैरेव ज्ञानैरभूवन् ज्ञानिनः 'पिथागोरस्'-'हिपोक्रेटिसाद्या' ग्रीसभिषगाचार्याः। मिश्रदेशश्च आर्य-बर्बरजात्योर्मिश्रीभूतयोर्निवासात्तथासंज्ञ इति सम्भाव्यते।

---

१। मदीये "आयुर्वेदोक्त यन्त्रशस्त्रादि ओ पाश्चात्य सर्जरि"—इत्याख्ये वङ्गभाषामये निबन्धे। निबन्धश्चायं बहुयन्त्रशस्त्रप्रतिकृतिसहितः कलिकातास्थसाहित्यसभया मुद्रितः।

२। Cf. "The Greeks themselves did not lay claim to the honour—which is now often claimed for them by modern writers—of originating culture generally or the Science of Medicine in particular. Nearchus and Arrian inform us that 'the Grecian physicians found no remedy against the bite of snakes but the Indians cured those who happened to incur that misfortune. Arrian tells us that the Greeks when indisposed applied to the Sophists (Brahmans), who by wonderful and even more than human means cured whatever would admit of cure, Dioscarides who lived in the first century A. D. is the most copious author on the Meteria Medica of the ancients and Dr. Royle has in an exhaustive inquiry shown how much of his Meteria Medica was taken from the more ancient Meteria Medica of the Hindus. The same remark holds good with rogard to Theophrasus, who lived in the 3rd century B. C., while even Ktesias who lived in the 5th century B. C., wrote an account of India, which Dr. H. H. Wilson has shown contains notices of the Natural products of India. But the chain of evidence is complete, when Hippocrates, called 'the father of medicine' because he first cultivated the subject as a science in Europe, is shown to have borrowed his Meteria Medica from the Hindus. We refer our readers for evidence to Dr. royle's excellent essay. "It is to the

(५) वातपित्तकफशोणितानां सर्वदेहधारणहेतुता सर्वरोगकारणता[१] च दृश्यते ग्रीसदेशीयभिषग्विद्याग्रन्थेषु। मतञ्चेदमतिपुराणं धन्वन्तरिसाम्प्रदायिकानाम्।

(६) अलिक्सन्दराख्यश्च ग्रीसदेशीयसम्राड् दिग्विजयाय प्रस्थितो भारतं समागत्य सर्पदष्टचिकित्सार्थं भारतीयान् वैद्यानाजुहाव, विसिष्मिये च तन्नैपुण्यदर्शनेनेति सुप्रसिद्धा वार्त्ता[२]। समनन्तरञ्च टिसियस्-मेगास्थिनिसाख्यौ ग्रीकभिषजौ भारतमध्यूषतुः।

(७) नव्यैरपि बहुभिर्गम्भीरदर्शिभिरुरीकृतं[३] यद् भारतीयचिकित्साशास्त्रमेव निखिलचिकित्साशास्त्रमूलमिति।

अथ चेदत्रापि विवदेरन् केचित् ग्रीसदेशत एवाविर्बभूव भारतीयज्ञानज्योतिरित्यभिदधानास्तर्हि सुखमिह मोदन्तां तादृशा आरूढ़शाखाच्छेदिनः।

<u>आरबदेशीयानाञ्च भारतीयज्ञानकणाधिकारिता</u> अल्बरुण्याख्येन[४] प्राचीनाऽरब्यैतिहासिकेन सम्यक् स्वीकृता। सुप्रथिता चेयं चिरन्तनी वार्त्ता यद् "हरुण् उल् रशीद्"—इत्याख्यस्य नरपतेः राज्याधिकारसमये खीस्तीयाष्टमशतके आरबभाषयानूदितं 'शरक्' (चरक), 'सस्रद्' (सुश्रुत)—इत्याख्यं ग्रन्थद्वयम्, माधवीयनिदानञ्च, अपरे च केचिद् ग्रन्था अगदतन्त्र-कौमारभृत्यादिविषयाः। श्रूयते च—

---

Hindus", says Dr. Wise, "that we own the first system of medicine" (R. C. Dutt's Ancient India Vol. II, p. 249—50). For the testimonies of Pythagoras, Herodotus &c. see Ibid, pp. 17-19. For the debt of Hippocrates to India, also see Royle's "Essay on the Antiquity of Hindu Medicine"—p. 109.

१। Cf. Dr. Allan Webb—"In the days of Hippocrates, the elementary theory was the only one known in Greece. His views and those which Pythogoras entertained of health and disease precisely accord with Plato's and the Hindu Sushruta's" (Historical Relations of Ancient Hindu with Greek medicine. p. 9).

२। Vide V. A. Smith's Early History of India.

३। *e. g.* Dr. Wise (Commentary on Hindu Medicine), Dr. Royle, Dr. Allan Webb &c.

४। Vide Dr. P. C. Roy's Hindu Chemistry, vol. I, Introd. Ch. VI which contains a full description of "The Indebtedness of Arabians to India."

मङ्कनामा कश्चन भारतीयो भिषक् तमेव नृपतिं दारुणरोगमुक्तं विधाय तत्सदसि महतीं प्रतिष्ठां गतो वनौषधिविद्याविषयं कञ्चन संस्कृतग्रन्थमारबभाषयाऽनूदितवानिति।

यावनचिकित्सा चेदानीं यूनानीति[1] तिब्बीति संज्ञया वा प्रसिद्धा। सेयं पुरा भारतादारबदेशं गता ततश्च पुनर्भारतविजयिभिर्महम्मदीयनृपतिभिर्भारते समानीतेति नात्र कस्यापि विमतिः। तत्र यावनचिकित्सायामायुर्वेदबीजान्यद्यपि दृश्यन्ते बहुशः। तथाह्यत्र[2] स एव सौश्रुतमतानुसारी वातपित्तकफशोणितवादः, सैव सिराव्यधप्रणाली, स एव सिराव्यधस्य बहुलप्रचारः[3], तान्येव मरिच-मधुक-लाक्षा गुग्गुल्वादीनि शतशो भारतीयानि भेषजानि, क्वचित् स एव रसादिप्रयोगक्रमः, सर्वत्र च सैव शैली भेषजप्रयोगस्य। वाजीकरणञ्चेदानीं सर्वस्वभूतं यावनचिकित्सायाः। तथाच सर्वथा निःसंशयं ब्रूमो यावनचिकित्सेयमायुर्वेदस्यापभ्रंशरूपेति।

चीनदेशीयचिकित्साशास्त्रेऽपि बहुधा दृश्यमायुर्वेदबीजम्। तथाहि तत्र स एव पुनर्वातपित्तकफशोणितवादः इत्सिङ्गाख्येन[4] चैनिकपरिव्राजकेन निर्दिष्टः। भेषजानि च बहुशो भारतोद्भवान्येव।

तस्मान्निखिलचिकित्साशास्त्रबीजभूतोऽयमायुर्वेद इत्यत्र न युज्यते धीमतां मनागपि संशयः। स चायमायुर्वेदमध्यन्दिनकालीनो वृत्तान्तो यं स्मरन्तोऽपि धन्या वयमिदानीन्तनीं निजाधन्यतां सुतरामाकलयामः।

## अथ आयुर्वेदस्य ध्वंसवृत्तान्तवर्णनीयस्तृतीयः पादः।

अथेदानीं द्विसहस्रवर्षाधिककालीनमायुर्वेदस्य (अथवा—सर्वार्यविद्याया एव) ध्वंसवृत्तान्तं संक्षेपादालोचयामः[5]।

---

१। यूनानीशब्दोऽसौ यवनानीशब्दस्यापभ्रंश एव। यवनानां भाषा यवनानी—इति हि वैयाकरणाः। २। एतत्प्रमाणार्थं दृश्यतां यः कोऽपि यूनानीग्रन्थः यथा—"इलाज् उल् गुर्बा," "तिब्ब अकब्बरी' इत्यादि। तत्र यावनभाषया वायुपित्तकफाः "सौदा सफरा बलगम्" इत्याख्याभिः प्रसिद्धाः। ३। तथा हि सुश्रुते—"सिराव्यधचिकित्सार्द्धं शल्यतन्त्रे प्रकीर्त्तितः।" (सु० शा० ८ अ०)। ४। Vide Itsing's Record of Buddhistic practices (Translated by Prof. Takakusu), Ch. 27—29. ५। अत्रत्या ऐतिहासिकवार्त्ताः प्रायैणैतेभ्यो ग्रन्थेभ्यः संगृहीताः—V. A. Smith's Early History of India; R. C. Dutt's School History of India; H. Shastri's History of India, Elphinstone's History of India &c. वैद्यकाचार्याणां कालनिर्णयस्त्वस्माभिर्बहुभिर्हेतुभिरन्यत्र कृतः।

अथ भारतीयानां ज्ञानार्जनविघ्नाः शास्त्रलोपहेतवश्च ।

इह खलु क्रमेण दुर्दैववशाद्धीयमाने चिरन्तनवैदिकाचारगौरवे, क्षीयमाण-ज्योतिषि बौद्धदुर्दिनाच्छन्ने च भारतप्रभावदिनकरे प्रादुर-भूवन्नकालवज्रनिर्घाता इव शक-हूण-यवनादिजातीनामुत्पाताः शतधा ज्ञानार्जनविघ्नभूताः । तेष्वाद्य उत्पातो भारताक्रमण-मलिक्सन्दराख्येन ग्रीकभूपतिना । स हि महाबलः परः-सहस्रचतुरङ्गसेनासमृद्धिः खीस्तपूर्वसप्तविंशत्यधिकत्रिशतमिते वर्षे ( 327 B. C.—अर्थात् प्रायः सपादद्विसहस्रवर्षतः प्राक् ) राहुरिव करालो भारतसूर्यमग्रसीत् । तदाक्रमणजन्ये च महति विप्लवे विध्वस्तप्राय आसिन्धुपञ्चनदावधिर्महादेशो येन गृहदाहदुर्भिक्षादिना सहस्रशो विनष्टाः प्रजाः, शतशः प्रनष्टानि च ग्रन्थरत्नानि । प्रतिनिवर्त्तमानेन च तेन ग्रीकभूपतिना तत्तत्प्रदेशशासनाय विनियुक्तः सेल्युकसाख्यो ग्रीकवीरः, स्वदेशं प्रापिताश्च केचन भारतीया ग्रन्थाः, विशेषतश्च चिकित्साग्रन्थाः भारतीयचिकित्सा-नैपुण्यविलोकनविमुग्धेन चेतसा । ततो मगधाधिपेन महाराजचन्द्रगुप्तेन पराजितोऽसौ सेल्युकस्वीरः सन्धाय प्रतिनिवर्त्तमानोऽपि भारतीयविद्यार्जनाय मेगास्थिनिसाख्यं ग्रीकभिषजं चन्द्रगुप्तसदसि पाटलिपुत्रे स्थापयाम्बभूव । तदेतदखिलं भारतीय-ज्ञानालोकस्य यावनदेशप्रचारस्य द्वारमभूदिति पुरावृत्तविदां वार्त्तया सुप्रतिपन्नं चक्षुष्मताम् । न च शंक्यम्—ग्रीसदेशीयज्ञानत एव भारतस्यासीद् विज्ञानसमृद्धि-रिति । न हि मुष्टिमेयैर्विताडितावशिष्टैश्च ग्रीकसैनिकैः शिक्ष्यन्ते स्म भारतीया ज्ञानर्द्धिसमृद्धाः सुधियः, न च सत्येवं ग्रीसदेशीयैरैतिहासिकैस्तथा नाभविष्यल्लिखितम् । दर्शिताश्चास्माभिरनेकधाऽन्येऽपि भूतार्थप्रतिपादका हेतवः ।

( १ ) तत्राद्यो विघ्नः—ग्रीसदेशीयाना-माक्रमणम् ।

ततः प्रशान्तप्राये नन्दकुलधूमकेतोर्महाराजचन्द्रगुप्तस्य शौर्येण ग्रीकाख्य-यवनानां प्रभावे चन्द्रगुप्तस्य तत्सूनोर्बिन्दुसारस्य च राज्या-वसाने क्रूरप्रकृतिरशोकनामा बिन्दुसारपुत्रो राजवंश्यान् बहुधा विनिपात्य सिंहासनमारुरोह ( 264 B. C. ) । तेन च क्रोधभयानकेन 'चण्डाशोक' इति पुरा ख्यातिं गतेन कलिङ्गेषु वर्षत्रयं सुमहान् युद्धविप्लवः समारब्धस्तेन लक्षशो विनष्टाः प्रजाः, न किमुत शतशो ग्रन्थरत्नानि ? ततोऽसौ उपगुप्ताख्येन बौद्धाचार्येणोपदिष्टो बौद्धधर्ममग्रहीत्, प्रसिद्धश्चानन्तरं धर्मिष्ठो भवन् 'धर्माशोक' इति बौद्धेषु । प्रचारितश्च तेन नानादिगन्तेषु प्रेषितैर्बौद्धश्रमणैश्चीन-ग्रीसादि सुदूरदेशेषु बौद्धानां धर्मो ज्ञानालोकश्च

( २ ) द्वितीयो विघ्नः—नन्दवंशध्वंसविप्लवः, राज्यारम्भे अशोककृतो महान् प्रजाध्वंसश्च ।

भारतीयः। आयुर्वेदश्च पुनस्तदानीं किञ्चिन्मन्दप्रभोऽपि परहितव्रतैर्बौद्धश्रमणैरुपासितश्चीन-यवनादिदेशेषु प्रचारविशेषं लेभे। तथापि राजाज्ञया शवच्छेदादि[१]-निषेधात्ततः प्रभृति शारीरशास्त्रस्यावनतिरेवाभूत्, नष्टप्रायशारीरस्य च वैद्यकस्य कथङ्कारं समुन्नतिः ?

(३) तृतीयो विघ्नः— पार्थिनाम्नां यवनानां शकानाञ्च भारताक्रमणम्।

ततो विनष्टपराक्रमे मौर्यवंशे (183 B. C.) पार्थिनामानो ग्रीकयवनाः शकाख्यबर्बराश्च पुनःपुनर्भारतमाक्रम्य आसिन्धु-साकेतपुरावधिप्रदेशेषु निरन्तरं विप्लवं जनयामासुः। तदा मिलिन्दाख्यो यवनः पञ्चनदप्रदेशं बुभुजे, स च नागार्जुनेन बौद्धधर्मे उपदिष्ट इति मिलिन्दप्रश्नीया[२] कथा बौद्धानाम्। मगधेषु च तदैव पुष्पमित्रः शुङ्गवंश्यो मौर्यवंश्यं बृहद्रथं विनाश्य राज्यमग्रहीत्, विताड़ितश्च तेन मिलिन्दाख्यो यवनः साकेतपुरीं रुन्धानः। भगवान् पतञ्जलिश्च तदानीन्तन एवेति ऐतिहासिकाः[३]।

[ ततः शुङ्गवंश्येन पुष्पमित्रेण स्थापितायां शान्तौ चरकस्य प्रादुर्भावः। ]

एवञ्च मनाक् प्रशान्ते विप्लवे चरकापरपर्यायेण तेन भगवता पतञ्जलिना प्रतिसंस्कृता विशीर्णप्राया अग्निवेशसंहितेति प्रागदर्शयाम। बौद्धाचार्येण नागार्जुनेन च तस्मिन्नेव काले सुश्रुतसंहिताऽपि प्रतिसंस्कृतेति केचित्। अमुष्य च प्रायो वर्षसहस्रद्वयी समतीता वृत्तान्तस्य।

[ शकनरपतेः कनिष्कस्य अधुना १८३९— शकाब्दाः। ततः परम् काश्मीरे दृढ़बल-प्रादुर्भावः।

अथ पुनः पुनः शकजातीयानामाक्रमणेन क्षीणदीनबलेषु सकलराजकेषु कुशाणवंशीयः कनिष्कनामा महाप्रतापः शकनरपतिराहिमाद्रिविन्ध्यपर्यन्तं भारतस्य उत्तरपश्चिमार्द्धं बहुभिर्युद्धैर्जिगाय। तस्य शकनरपतेरतीताब्दाश्च साम्प्रतं १८३५ संख्याः। परस्ताद्वर्षशतत्रयं कथञ्चिदिव प्रशान्ता रणलीला। अस्मिंश्चावसरे चरकसंहितापूरकः[४] सम्बभूव काश्मीरेषु दृढ़बलाचार्यः।

---

१। Vide Journal of Asiatic Society, Vol. vii. P. 261.

२। मिलिन्द्रप्रश्नश्चासौ पालिभाषया लिखितो "मिलिन्दपञ्हो"—इति संज्ञया प्रसिद्धो बौद्धग्रन्थः। मिलिन्द = Meander (Greak)।

३। Vide Mabel Duff's Chronology of Ancient India; also, Goldstucker and Bhandarkar (referred to on page 10 of text), अतएव "अरुणद् यवनः साकेत"मिति महाभाष्ये प्रयोगः।

४। दृढ़बलकालनिर्णयहेतुः (११ पृष्ठे) दर्शितपूर्वः।

ततो हूणैः काम्बोजीयैश्च पुनर्भारतमाक्रम्य शलभैरिव शतकोटिसंख्यैर्वर्षशतं समारब्धो विप्लवः सुमहान्। हूणाश्च शका एव भिन्नप्रान्तीयाः इति केचित्। तांश्च सर्वान् मालवाधिपो विक्रमादित्यो यशोधर्मदेवाख्यो महता शौर्येण विजित्य शकारिसंज्ञां लेभे, विस्तारयामास च सुमहत् साम्राज्यमुज्जयिनीत आ-हिमाद्रि-मूलम्। ततश्च प्रभृति (खृस्तीय ५३३ अब्दतः)—सर्वथा विताड़ितेषु शकहूणादिबर्बरेषु सार्द्धचतुःशतवर्षं पञ्चशतवर्षं वा कथञ्चित् प्रतिष्ठिता शान्तिः। विक्रमादित्यश्चायं कालिदासादिनवरत्नोपासितो विद्याब्धिकर्णधार इति प्रख्याप्यते पुरावृत्तवेदिभिः। सोऽयं संवत्प्रवर्त्तको[१] विक्रमो न वेति नास्मद्विचार्यम्।

(४) चतुर्थो विघ्नः—हूणजातिकृतः सुमहान् राज्यविप्लवः। ततः शकारिविक्रमादित्यस्य प्रादुर्भावः।

अत्र च सार्द्धचतुःशतवर्षान्तः पञ्चशतवर्षान्तर्वा विक्रमादित्यवंश्येषु भारतं शासत्सु पुनरपि समुद्भासते स्म म्लानज्योतिरपि भारतीय-ज्ञानसमृद्धिः। अत्रैव खल्वाविर्बभूवुर्विक्रमकाले कालिदासा-मरसिंह-वररुचि-वराहमिहिराद्या विद्वांसः, ततश्च परं क्रमेण दण्डि-बाणभट्ट-भवभूत्यादयः केचन कवयः, आर्यभट्ट-ब्रह्म-गुप्तादयो ज्योतिर्विदश्च। स च भगवान् शङ्कराचार्योऽपि खृीस्तीयनवमशतके प्रादुर्भूतः एतत्कालाभ्यन्तरीण एव। आयुर्वेदे च एतत्समयान्तरेव प्रादुरासीद् वाग्भटाचार्यो[२] नाम अष्टाङ्गवैद्यकसंग्रहीता, वृन्दमाधवादयश्चापरे संग्रहकाराः, जेज्जट-गयदास-भास्कर-ब्रह्मदेवाद्या वैद्यकव्याख्यातारश्च। चक्रपाणिदत्तस्तु वङ्गेषु नयपालनृपतेः प्रियभिषगासीदिति तदुक्त्या[३] ज्ञायते। नयपालकालश्च खृीस्तीय १०४०—१०६० वर्षाणि। तस्माद् भारतीयविद्यानां पुनरभ्युदयकालस्य शेषतः

[महाराजविक्रमादित्यादीनां राज्यकालेषु पञ्चशतवर्षान्तः भारतीयविद्यानां पुनरुद्धारः। तत्र कालिदासादीनां वाग्भट-वृन्द-माधव-चक्रपाणि-डल्लनादीनाञ्च प्रादुर्भावः]

---

१। संवत्प्रवर्त्तको विक्रमादित्यस्तु १९७० वर्षैः पुराणः स्यात्, किन्तु तत्काले कस्यापि विक्रमस्य प्रादुर्भावः साम्प्रतिकैरैतिहासिकैर्न शक्यो निर्णेतुम्। तथा चात्र बहुधा प्रवर्तन्ते वादाः। तद्विचारस्तु अप्रासङ्गिकत्वाद्विस्तरभिया नेह क्रियते। वराहमिहिरोक्तगणनया तु कालिदासादि-नवरत्नोपासितो विक्रमादित्यो यशोधर्मदेव एव पूर्वोक्तः। २। तत्र वाग्भटकालनिर्णये हेतुरुक्तपूर्वो वक्ष्यते च। वृन्दमाधवादीनां कालनिर्णये हेतवस्त्वनुपदमेव वक्ष्यन्ते। ३। तदुक्तिश्च चक्रसंग्रहसमाप्तौ—'गौडाधिनाथरसवत्यधिकारिपात्र'त्यादिप्रसङ्गस्य शिवदासकृतव्याख्याने द्रष्टव्या।

प्रादुरासीद् वैद्यकाचार्यश्चक्रपाणिः। डल्हनाख्यः[१] सुप्रसिद्धसुश्रुतटीकाकारश्च चक्रपाणेः समकालीनः किञ्चित्पूर्वतनो वा।

मालवराज्याधिपो नानाशास्त्ररसिकः प्रसिद्धतमो भोजनरपतिश्च एतत्कालान्ते खृ० १००६ अब्दे सम्बभूवेत्यैतिहासिकाः। मालवदेशश्च विन्ध्याद्रिश्रेणीरक्षित्वाद् नाभूद् महम्मदीयाक्रमणविषयस्तदानीम्।

अथ पुनर्भारतीयानां मन्दभाग्यवशात् प्रववृते महम्मदीयानां घोराक्रमणप्रवाहः।

(५) पंचमो विघ्नराशिः— महम्मद गज्निकृतो बहुवर्षव्यापी भारतकीर्त्तिध्वंसः।

तत्राद्यमाक्रमणं महम्मद-विन्-कासिम-कृतं सिन्धुदेशेषु (खी० ७१२ वर्षे) श्रूयते। ततः परं यदा एकादशशतके गान्धार-प्रान्तीयाद् 'गज्नि'नगरादागतेन दुर्द्धर्षेण मह्मुदाख्येन दस्युना बहुसहस्रदुराचारसैनिकसहायेन पुनः पुनराक्रम्य लुण्ठिताः सोमनाथपत्तनादिषु भारतीयसम्पदः, कुट्टितास्तीर्थस्थानेषु देवमूर्त्तयः, व्यापादिताः सहस्रशो ब्राह्मणाः, निर्दग्धाश्च प्रतिदिनं शतशो गृहाः, तदा सर्वथा धनजनधर्मरक्षणव्याकुलैः परित्यक्तो नवीनज्ञानार्ज्जनप्रयत्नो लोकैः। न विद्मः — कियन्ति नाम तदा ततः प्रभृति च भस्मीभूतानि लुप्तावशिष्टानि प्राचीनग्रन्थ-रत्नानि !!

ततोऽनुपदमेव सुघोरकर्मणा घोराख्येन महम्मदेन स्वदेशद्रोहिणो जयचन्द्राख्यस्य

(६) षष्ठो विघ्नः— महम्मदघोरकृतं सुघोरमाक्रमणम् पृथ्वीराज-राज्यापहारश्च।

कान्यकुब्जाधिपस्य साहाय्यात् समास्कन्द्य पातिता क्षत्रकुल-सूर्यस्य देहलीपतेर्महाराजपृथ्वीराजस्य राज्यश्रीः (खीस्तीय० ११९१)। देहलीराजधान्याश्चाद्यापि तत्कीर्त्तिस्तम्भमन्दिर-भग्नावशेषास्तत्तत्कुकृत्यसाक्षिभूताः। ततश्च दशवर्षाभ्यन्तरत एव महम्मदीयैर्दुर्वृत्तैर्निर्ज्जिता समग्रा आर्यावर्त्तभूमिर्मालव-दाक्षिणात्यवर्जम्। मालव-दाक्षिणात्ययोस्तु 'अल्तामास्' इत्याख्येन तद्दासपुत्रेण, 'अलाउद्दीन' इत्याख्येन च तत्परवर्त्तिना महम्मदीयेन खीस्तीय त्रयोदशशतकेऽभूदाक्रमणम्। तयोश्च कुकृत्यशतैर्भारतदक्षिणार्द्धस्था अपि विध्वस्तप्रायाः प्रायेण सर्वा एवाऽर्यकीर्त्तयः। उज्जयिनीस्थानि महाकालमन्दिरादीनि तु—अल्तामास इत्यनेनैव विध्वस्तानि।

वङ्गेषु तु महम्मदीयाक्रमणाद् दूरतरं स्थितेषु, खीस्तीयसप्तमशतके अष्टमशतके वा

१। डल्हनकालनिर्णयहेतुश्चाग्रे वक्तव्यः।

निदानसंग्रहकार इन्दुकरात्मजो माधवस्ततश्च परम् एकादशशतके चक्रपाणिर्नाम नयपालराजस्य वैद्यवरः प्रादुर्बभूव। ततो द्वादशशतके त्रयोदशशतके वा किञ्चित् प्रवृत्तेऽपि मुसलमानाक्रमणे विजयरक्षित श्रीकण्ठदत्ताभ्यां टीकाकाराभ्यां पुनरपि किञ्चित् समुद्दीपितं वैद्यकज्योतिः। तयोश्चान्तिके तदानीमप्यासन्ननेके प्राचीनवैद्यकग्रन्था इति तदुद्धृतप्रमाणशतैरनुमीयते। ततश्च हन्त महम्मदीयैः कपट-नीत्या निर्ज्जिता बङ्गराजलक्ष्मीरपि।

[ वङ्गेषु माधव-चक्रपाण्योरनंतरं विजय-रक्षित-श्रीकण्ठदत्तयोः प्रादुर्भावः ]

ततस्त्रयोदशशतकमध्यभागे 'चेङ्गिजखान्' इत्याख्येन मुगलजातीयमहादस्युना पुनरपि विलुण्ठिता भारतीयाः सम्पद आ-हिमाद्रिमध्यदेश-पर्यन्तम्। नृशंसाधमेन च तेन बहुलक्षनरघातकेनानुष्ठिता-न्यतिघोराणि कुकृत्यानि। ततः परावृत्तेऽपि चेङ्गिज्खानाख्ये मुगले पुनः पुनः समागतैर्मुगलैः सह पाठान नरपतीनां प्रावर्त्तत चिराय दारुणा रणलीला बहुजनपदध्वंसिनी। अन्तरा च 'तैमुरलङ्ग'ख्यो घोरकर्मा मुगलदस्युराजः ख्रीस्तीयचतुर्दश-शतकान्ते समापतितो मासद्वयं यावदप्रतिहतप्रसरो लक्षशः प्रजा विनिहत्य, प्रज्वाल्य च तद्गृहान् विलुण्ठ्य च तत्समृद्धीः समग्रमार्यावर्त्तं हाहाकारमयमकरोत्।

(७)

सप्तमो विघ्नराशिः—चेंगिज्खान्-तैमूर-लंगाभ्यां भारत-समृद्धिलुण्ठनं जनपद-विध्वंसनञ्च।

दाक्षिणात्ये त्वेवंविधेऽपि समये वीरबुक्को नामाऽभून्महाविक्रान्तो नरपतिर्येन विजयनगरराज्यमधितिष्ठता न केवलं सुरक्षिता दाक्षिणात्य-राज्यश्रीरेव, किन्तु भगवता मत्स्यावतारेणेव समुद्धृता व्याख्या-पिताश्च वेदाः स्वसभासदः सायणमाधवादीन् प्रोत्साह्य। शार्ङ्गधरो नाम स्वसंहिताख्यवैद्यकसंग्रहकारश्च दाक्षिणात्ये एतत्कालाभ्यन्तर एव समभूदिति शार्ङ्गधरपद्धत्यां निर्दिष्टेन कालेन ( सं० १४२० ) प्रतीयते।

[ दाक्षिणात्ये वीरबुक्क-नृपतिकृता राज्यरक्षा सायण-माधव-कृतो वेदोद्धारश्च। तत्-समकालं च शार्ङ्गधराख्यस्य वैद्यक-संग्रहकारस्य प्रादुर्भावः ]

अथ षोड़शशतकारम्भे बाबराख्येन मुगलराजेन विजितेषु पाठानराजकेषु मुगलराज्याधिकारः प्रववृते। ततः कतिपयवर्षाणि बाबर-पुत्रो हुमायूनो दिग्विजयविप्लवं समारेभे, शेरशा इत्यनेन वङ्गेषु पराजितोऽसौ क्रमादपहृतसिंहासनश्चाभूत्। अन्तरा च मुगलपाठानानां सुदुर्द्धर्षाणां युध्यमानानां संघर्षेण महानभूत् प्रजाविध्वंसः षोड़शवर्षाणि। ततः षोड़शवर्षान्ते पुनर्मुगलराज्यं

( ८ )

अष्टमो विघ्नः मुगल-पाठानानां रणलीला-कृतो राज्यविप्लवः।

प्रतिष्ठाप्य उपरते हुमायूने तत्पुत्रः प्रथितनामा अकव्वरशाहाख्यो नरपतिर्बाहुबलेन सिंहासनमध्यास्य विजितवान् प्रायः समग्रमपि भारतं वर्षम् ।

[ अथ अकव्वरशाहसमये प्रतिष्ठितायां शान्तौ विदुषां प्रादुर्भावो विद्योन्नतिश्च । तत्र कान्यकुब्जेषु वैद्यकाचार्यो भावमिश्रः ]

ततः सुप्रतिष्ठितायां शान्तौ नानाविद्यारसिकोऽसौ नरपतिर्बहुधा समादृत्य भारतीयान् विदुषः शास्त्राणि च, "दिल्लीश्वरो वा जगदीश्वरो वेति" महतीं यशोगाथामर्जयाञ्चकार । ईदृशे च समयेऽभूवन् तानसेनाद्या भारतीयसङ्गीताचार्याः, टोडरमल्लाद्या राजनीतिकोविदाः, अपरे च केचिन्नानाशास्त्ररसिका विद्वांसः । अस्मिन्नेव च काले षोड़शशतकपरार्द्धे सप्तदशशतकपूर्वार्द्धे वा कान्यकुब्जेषु प्रादुर्बभूव भावमिश्राख्यः प्रसिद्धवैद्यकसंग्रहकारः ।

[ अथ शाहजहानराज्यकाले भट्टोजिदीक्षितादीनां विदुषां प्रादुर्भावः ]

ततः अकव्वरशाहानन्तरं तत्पुत्रे जहाङ्गीरवादशाहे राज्यं भुक्त्वा उपरते जहाङ्गीरपुत्रो शाहजहान् नरपतिर्भारतसाम्राज्यं बुभुजे । स चासौ देहलीदुर्ग-ताजमहलादिनिर्मापकः स्थापत्यादिनानाकलाप्रियः सुप्रसिद्धकीर्तिरद्यापि । तद्राज्यकाले च भट्टोजिदीक्षित-जगन्नाथपण्डितराजादीनां, समनन्तरञ्च नागेशभट्टादीनां प्रादुर्भाव इत्यैतिहासिकाः ।

( ९ )
नवमो विघ्नः—
अवरंगजेवकृतः सुमहानार्यकीर्तिध्वंससंरम्भश्च ।

ततः अवरङ्गजेवनामा शाहजहानस्य कनिष्ठपुत्रः कपटशतेन स्थविरं पितरमवरुध्य भ्रातॄंश्च हत्वा राज्यमधिचक्रे । ततश्च पुनः प्रावर्त्तत यतस्ततः सुमहानार्यकीर्तिध्वंससंरम्भः । तेन हि 'हिन्दु'नामद्वेषिणा विनाऽपि क्रोधकारणं शतशश्चूर्णीकृतानि देवमन्दिराणि, निर्दग्धाः सहस्रशो ग्रन्थराशयः, व्यापादिताश्च बहुशः स्वधर्मनिष्ठाः प्रजा नानाविधमिषशतेन । एवञ्च भूयः कथञ्चिदुज्जीवितप्रायाऽपि शोच्यां दशामाजगाम पुनरपि भारतीया विद्यासमृद्धिः । आयुर्वेदश्च यावनवैद्यैर्हृतसर्वस्वस्ततः प्रभृति कथञ्चित् प्राणिति स्म ।

सोऽयमायुर्वेदस्य,—अथवा समस्तभारतीयविज्ञानदिनकरस्य—अपराह्णकालः, नूनं वा सन्ध्यारम्भ एव । तादृशे च काले प्राचीनविज्ञानारुणरागसंग्रहणपरा एवाभूवन्नाचार्या इत्यपि भागधेयमेव भारतस्य । नवीनविज्ञानाविष्करणी तु प्रतिभा न समुन्मिमेष तादृशराज्यविप्लवैकार्णवीभूते भारते इति किमत्र विस्मयपदं नाम ?

(अथ महाराष्ट्रवीरैः शिवाजीप्रमुखैः कृतो धर्मसाम्राज्यस्थापनप्रयत्नस्तन्निष्फलता च आत्मद्रोहकृता)

एवंविधे च काले महाराष्ट्रवीरैः शिवाजीप्रमुखैः पुनरपि धर्मसाम्राज्यस्थापनाय समारब्धः सुमहान् प्रयत्नो लब्धश्च कथञ्चित् साफल्यमपीति चिराय स्मरणार्हम्। परं तत्परवर्त्तिभिर्महाराष्ट्रराजकैः परस्परं विवदमानैः प्रकामं विलुण्ठनपरैश्च निर्मूलिता स्वल्पेनैव कालेन महाराष्ट्रसाम्राज्यस्थापनस्याऽऽशालता। तथापि पुण्यश्लोकानां शिवाजीराजारामादीनां सुकृतप्रभावादद्यापि इन्दौर-बड़ौदा-गवालियरादिराज्येषु सावशेषं महाराष्ट्रज्योतिरिति महदिदं हर्षस्थानं भारतीयानाम्।

(१०) [दशमो विघ्नोत्पातः "नादिरशाह"— "महम्मदशाह" इत्येताभ्यां कृता संहारलीला]

अथ दुर्विषहपापभाराक्रान्ते मुगलसाम्राज्ये, अवरङ्गजेवराज्यावसाने (ख्री० १७०७) अतिदुर्बलप्रभावेषु तत्पुत्रपौत्रादिषु पुनरपि "नादिरशाह" इत्याख्येन महादस्युना नवधा देहलीराजधानीमाक्रम्य महती संहारलीला प्रवर्त्तिता (ख्री० १७३६)। ततश्च पुनर्नववर्षान्ते 'अहमदशाह अबदली'—इत्याख्येन दुर्द्धर्षदस्युना चतुर्द्धा विलुण्ठिता देहलीमथुराद्या नगराः, अनुष्ठितानि च पुनःपुनस्तानि तानि गृहदाहादिकुकृत्यानि।

(ततः सदयेन वेधसा प्रतिष्ठितं ब्रिटिशसाम्राज्यम्।)

ततः सदयहृदयेन वेधसा एतावतीभिरत्याचारपरम्पराभिरपि अविनश्यन्तीमिव भारतीयविद्यासमृद्धिमाकलयता तद्रक्षणाय सम्प्रेषिता उदारहृदयाः श्वेतद्वीपपुरुषब्रिटिशनामानः। तैश्च वाणिज्यार्थमागतैरपि भारतीयप्रजानां दुर्दशाविमोचनार्थमिव क्रमाद् वङ्गेषु च दाक्षिणात्ये च राज्यभित्तयो निर्मिताः, स्थापितञ्च वर्षशतेन बहुरक्तपातं विनैव सुमहत् साम्राज्यमखिलभारतव्यापि। ततः (ख्री० १८५७ वर्षे) प्राप्तेऽपि सैनिकविद्रोहकृते विप्लवे गुणलुब्धेव राज्यश्रीर्न मुमोच तेषामेवाङ्कारोहणसुखम्। ततः प्रभृति क्रमात् सुप्रतिष्ठायां शान्तौ सुरक्षिते च प्रजालोके, प्रतिदिनमादीप्यते भारतीयं ज्ञानज्योतिः। न च स्वयं सुविमलज्ञानाधिकारिणोऽपि प्रकामं नोत्साहयन्ति राजपुरुषाः सम्प्रति सर्वा अपि भारतीया विद्याः—इति सर्वथा धन्यवादार्हा एते भारतीयानाम्।

सोऽयमेतावानतिदारुणोऽपि सम्प्रति प्राप्तावधिर्वैद्यकविद्यायाः (प्रत्युत सर्वासां विद्यानां) ध्वंससमयः। अथेदानीमेतत्कालान्तः प्रादुर्भूतानां वैद्यकाचार्याणां कालनिर्णये हेतवः केचिदुपन्यस्यन्ते प्रसङ्गात् संक्षेपेण।

*चरकसुश्रुतयोः प्रतिसंस्कारकालो दृढबलस्य वाग्भटपूर्वजत्वञ्च*

तत्र चरकदृढबलयोः कालो निर्णीतपूर्वः। वाग्भटश्च दृढबलस्यावरज एव न पूर्वजः, इति निश्चयोऽस्माकम्। यतो वाग्भटेन अष्टाङ्गसंग्रहशेषे दृढबलीयकल्पस्थानमेव गद्यमयेन वचसाऽनूदितं, अष्टाङ्गहृदये "ऋषिप्रणीते प्रीतिश्चे"दित्यादिवचनेन स्पष्टं लक्षितञ्च दृढबलकृतं चरकापूरणम्।

सुश्रुतसंहितायाः प्रतिसंस्कारस्तु चरकसंहितारचनादनन्तरजः प्रतिभाति। दृश्यन्ते ह्यत्र बहुधा चरकीयाः पाठाः, विषयसन्निवेशक्रमश्च साधीयान्। तत्र दिङ्मात्रमुदाह्रियते—

चरके—"सूक्ष्माणि हि दोष-भेषज-देश-काल-बल-शरीराहारसात्म्य-सत्त्वप्रकृति-वयसामवस्थान्तराणि यान्यनुचिन्त्यमानानि विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः किं पुनरल्पबुद्धेः।" (च० सूत्र १५ अ०) इति। सुश्रुते—"सूक्ष्मा हि द्रव्य-रस-गुण-वीर्य-विपाक-दोष-धातु-मलाशय-मर्म-सिरा-स्नायु-सन्ध्यस्थिगर्भसम्भवद्रव्यसमूह-विभागा * * * ये विचिन्त्यमाना विमलविपुलबुद्धेरपि बुद्धिमाकुलीकुर्युः किं पुनरल्पबुद्धेः। (सु० सूत्र० ४ अ०) इति।"

पुनः सुश्रुते कासाधिकारे—"अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहै"रित्यारभ्य "कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम्" इत्यन्तः सन्दर्भः (सु० उत्तर० ५२ अ०) चरकीयकासाधिकाराद्[1] गृहीतः (च० चिकि० १८ अ०)। सुश्रुतीय-ऋतुचर्याध्यायश्च (सु० सू० ६ अ०) चरकीयकालविभागानुवादपुरःसरमारब्धः। सुश्रुतप्रतिसंस्कर्त्ता चासौ न माध्यमिकाचार्यो नागार्जुनो भवितुमर्हति, तन्नाम्नः प्रसिद्धबौद्धाचार्यस्य चरकसमकलीनत्वात्। न हि समकालीनानामाचार्याणां वचांसि तथावद् गृह्यन्ते प्रसिद्धैराचार्यैर्विनैव तन्नामग्रहणम्। अथासौ कश्चनान्यो बौद्धाचार्य्यो नागार्जुनाख्यः स्वीक्रियते, तदवरजः सुश्रुतप्रतिसंस्कर्त्तेति, तथास्तु,—का क्षतिः ?

*वाग्भटकालनिर्णये हेतुत्रयम्*

अथ वाग्भटकालनिर्णये त्रयो हेतव उपलभ्यन्ते। तत्र इत्सिङ्गाख्येन चैनिकपरिव्राजककृतः "अष्टाङ्गवैद्यकसंग्राहको नवीनाचार्य्यः"—इत्यादिनिर्देशो दर्शितपूर्वः प्रथमो हेतुः। तेन ख्रीस्तीयपञ्चम-

---

१। न च सुश्रुतस्यैव सन्दर्भश्चरके समुद्धृत इति वैपरीत्यं शङ्क्यम्, यतो वाग्भटेन—"यदि चरकविहीनः प्रक्रियायामखिन्नः किमिव खलु करोतु व्याधितानां वराकः"—इति स्पष्टमेव वदता सुश्रुते केषाञ्चित् कायचिकित्सावर्णनीयानां रोगाणामभावो लक्षितः। अरुणदत्तश्च "व्याधितानाम्" इति पदस्य कासश्वासाद्यभिभूताना"मित्यर्थं व्याचक्षाणस्तथैवाभिसन्धिमाविष्करोति। तदेतत् साधु दर्शितमस्मन्मित्रेण "वनौषधिदर्पण"कारेणापि स्वकीयोपोद्घाते।

शतकारम्भे वाग्भटकालोऽस्माभिः स्थापितः। अथ चक्रपाणिडल्लनादिभिः प्रायो वर्षसहस्र-पुराणैराचार्यैर्वाग्भटपाठोद्धारो द्वितीयो हेतुर्येन तत्कालादपि बहुपुराणः (अन्यून-पञ्चशतवर्षप्राक्तनः) सम्भाव्यते वाग्भटसमयः। महम्मद-बिन् कासिमकृतं (ख्रीस्तीयाष्टमशतकारम्भे) सिन्धुदेशाक्रमणं तृतीयो हेतुर्येन तत्पूर्वतन एव स्यात् सिन्धुदेशजो वाग्भट इति प्रतीतिः। न हि तदारभ्य प्रवृत्ते सिन्धुराजविप्लवे कथमपि अष्टाङ्गसंग्रहाष्टाङ्गहृदयाख्ययोर्महाग्रन्थयोर्निर्माणं सम्भवति नाम। यत्तु अष्टाङ्गसंग्रहकारो वाग्भटः अष्टाङ्गहृदयकाराद् वाग्भटाद् भिन्न इति कस्यचित् पाश्चात्त्यविदुषो[१] मतम्, तत् सर्वथा निर्मूलमतिविस्मयकरञ्च नः। ग्रन्थद्वयस्य सर्वत्रैव भाषासादृश्यात्, ग्रन्थकर्त्रोः पितृनामसादृश्यात्, क्वचिदपि मतभेदस्यादर्शनाच्च। वाग्भटेन हि महान्तं ग्रन्थमष्टाङ्गसंग्रहाख्यं विरचय्य तत्संक्षेपो "हृदयमिव हृदयमेतत्" निरमायीति स्वय-मेवाभिहितं तेन सुस्पष्टया गिरा ग्रन्थसमाप्तौ।

**रसरत्नसमुच्चयकारो वाग्भटस्तु भिन्न एव भृशमवरजश्च**

'रसरत्नसमुच्चय'कारो वाग्भटस्तु कश्चनार्वाचीनो भिन्न एवाचार्यस्तुल्य-नामा, यतः समुद्रवद्गम्भीरे अष्टाङ्गसंग्रहेऽपि न लभ्यते रसतन्त्रोक्तविषयाणां रससंस्कारादीनां गन्धोऽपि, लभ्यन्ते च समुच्चये प्राचीन-वाग्भटापेक्षया भृशमवरजानां सोमदेव-गोविन्दभगवत्पादा-दीनां ग्रन्थेभ्यः पाठोद्धाराः। तत्र सोमदेवग्रन्थात् समग्रं रसपरिभाषाप्रकरणं गृहीतं रसरत्नसमुच्चये (र० र० स० ६ अ०)। गोविन्दभगवत्पादकृतात् रसहृदयतन्त्रात्तु गृहीतानि—"सुकृतफलं तावदिदम्" इत्यादीनि "भ्रूयुगमध्यगतं यत्"—इत्यादीनि च कानिचित् पद्यानि। गोविन्दभगवत्पादाश्च भगवतः शङ्कराचार्यस्य गुरव इति प्रसिद्धा एव, नान्ये—इति सुप्रतिपादितं विद्वद्वरैः श्रीमद् गुरुनाथ त्र्यम्बक काले इत्येतैः रसहृदयोपोद्घाते[२]। न च शङ्क्यं—कथं तर्हि "सूनुना सिंहगुप्तस्ये"ति रसरत्नसमुच्चयादौ परिचय इति, यतो बहुषु हस्तलिखितग्रन्थेषु "सूनुना सङ्घगुप्तस्ये"त्येव पाठः साधीयान् दृश्यते। तेन "सिंहगुप्तस्ये"ति पाठः कस्यचित् पण्डितम्मन्यस्य संशोधनप्रसूतो मन्तव्यः। असौ च रसतान्त्रिको वाग्भटः ख्रीस्तीयत्रयोदशशतके प्रादुरासीदिति डा० प्रफुल्लचन्द्ररायस्य मतं[३] युक्तियुक्तमेव।

---

१. Vide Dr. Horneli's "Medicine of Ancient India" pt. I, P. p. 10-5. २। रसहृदयञ्च समग्रं मुम्बय्यां निर्णयसागरयन्त्रात् प्रकाशितम्। ३। Vide Dr. P. C. Roy's 'History of Hindu Chemistry', Vol. I, P. liii.

माधवकारस्य कालनिर्णयः

अथ माधवकरो नाम प्रसिद्धवैद्याचार्यो निदानकार इन्दुकरात्मजो वङ्गेषु प्रादुरासीदिति सुप्रथिता किंवदन्ती। कर इत्युपाधिश्चास्य वङ्गीयतां स्फुटं व्यनक्ति। स च वागभटादवरजः, निदाने "निदानं पूर्वरूपाणि"—इत्यादि "तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम्"—इत्यन्तस्य समग्रसन्दर्भस्यान्येषाञ्च वाग्भटपद्यानां बहुधा ग्रहणात्। वृन्दचक्रपाण्योः पूर्वजश्च सः, ताभ्यां स्व-स्व-चिकित्सासंग्रहयोः 'गदविनिश्चयो''क्तक्रमेण चिकित्सोपदेशात्। चक्रपाणिश्च खीस्तीयैकादशशतकमध्यभागे वङ्गभूमिमलञ्चकारेति सहेतुकमवोचाम। स च वृन्दकृत"सिद्धयोगा"ख्यग्रन्थमुपजीव्य स्वकीयं चिकित्सासंग्रहं रचयाम्बभूवेति तदुक्त्या[१] चक्रपाणेरन्यूनवर्षशतद्वयेन प्राक्तनः स्याद् वृन्दः। तेनासौ वृन्दाचार्यो नवमशतकेऽभूदिति उन्नीयते। माधवश्च तत्पूर्वजः खीस्तीयसप्तमशतके सम्बभूवेति सम्भाव्यते। इतश्च अष्टमशतके "हरूण उल् रसीद" समये माधवीयनिदानस्य पारस्यभाषानुवादोऽभूदित्यैतिहासिकवार्त्तयाऽपि तत्पूर्वज एव माधवः पर्यवस्यति। तस्माद् वाग्भटपरवर्त्तित्वाच्च सप्तमशतके किञ्चित्पूर्वं वा माधवप्रादुर्भावः सिध्यति। माधवकरश्चासौ रुग्विनिश्चयाख्यनिदानग्रन्थप्रणेता रत्नमालाख्यद्रव्यगुणकारश्चेति प्रसिद्धः। डल्लनादिनिर्दिष्टः सुश्रुतटिप्पणकारः श्रीमाधवस्तु भिन्न एवास्मात् प्रतिभाति, तस्य कुत्रापि माधवकर इति निर्देशादर्शनात्।

सायणमाधवस्तु भिन्न एव

सायणापरनामा वेदभाष्यकृन्माधवाचार्यस्तु माधवकरात् सर्वथा भिन्नः पूर्वोक्तहेतोः, वर्षपञ्चशत्या तदवरजश्चेति तयोरभेदः कथमपि न शङ्कनीयः।

डल्लनस्य कालनिर्णयः।

डल्लनो नाम सुप्रसिद्धः सुश्रुतव्याख्याता तु चक्रपाणेः समकालीनः समीपकालीनो वेति शक्यं निश्चयेन वक्तुम्, यतोऽसौ सहनपालदेवनृपतेर्वल्लभमात्मानं ख्यापयामास। पालनरपतयः खल्विह भारते खृस्तीयदशमैकादशशतकयोरेव मगधेषु गौड़ेष्वन्यत्र च प्रादुर्बभूवुः। तत्र नयपालनृपतेर्गौड़ाधिपस्य वैद्योऽभूच्चक्रपाणिरिति तदुक्त्या[२] ज्ञायते, तत्पूर्वजस्य "पाल"वंशीयनृपस्य नृपद्वयस्य वा नाम न सम्यङ्निरूपितमद्यापि। तदूर्ध्वाधस्तनास्तु नारायणपालादयो नरपतयः सुविदितनामान इतिहासविदाम्[३]। तदभ्यर्णकालजाश्च 'गया'-

१। तदुक्तिश्च "यः सिद्धयोगलिखिताधिकसिद्धयोगानि"त्यादिरूपा चक्रसंग्रहसमाप्तौ।

२। तदुक्तिश्च तत्कृतचिकित्सासंग्रहावसाने दृश्या। ३। Vide R. C. Dutt's History of Civilization in Ancient India, Vol. III p. 213 et. seq.

'भागलपुरा'दिस्थानेषु कृतराज्या गोविन्दपालदेवमदनपालदेवाख्या भूपतयः "पालदेवा"न्तसंज्ञा इत्यपि सम्प्रत्येवाऽविष्कृतं ताम्रशासनाद्युट्टङ्कनेन[१]। तस्मादुच्यते चक्रपाणेः समकालीनः समीपकालीनो वाऽभूड्डल्लन इति। डल्लन-चक्रपाणिभ्याञ्च लभ्यमानसुश्रुतटीकयोस्तत्प्रणीतयोः क्वचिदपि परस्परस्य नाम न गृहीतं, गृहीतानि तु डल्लनेन जेज्जट-गयदासब्रह्मदेवादीनां नामानि। तस्मादितोऽपि तयोः परस्परप्रतिद्वन्द्विता शङ्क्यते। तदेवं ख्रीस्तीयदशमशतकशेषार्द्धे एकादशशतकपूर्वार्द्धे वा समभूद् डल्लन इति नः प्रत्ययः।

**चक्रपाणिकालः**

चक्रपाणिकालश्च ख्रीस्तीयैकादशशतकमध्यभाग इति सर्ववादिसम्मतः सिद्धान्तः पूर्वोक्तहेतुः।

**विजयरक्षित-श्रीकण्ठदत्तयोः कालनिर्णयः।**

विजयरक्षितस्तु निदानटीकामुखे चक्रपाणिं नामतो निर्दिदेश[२], श्रीकण्ठश्च तच्छिष्य एव। कालश्चानयोस्त्रयोदशशतकस्य द्वितीयः पादः, आतङ्कदर्पणाख्य-निदानटीकाकृता वाचस्पतिना त्रयोदशशतकमध्यजेन तन्निर्देशात्। कृतश्च विजयरक्षितेन योगरत्नमालाकारस्य गुणाकरस्य मतोद्धारः। योगरत्नमालाकारकालश्च त्रयोदशशतकस्याद्यः पादः, —इत्यपि हेतोः स एव निश्चयः। तदेतत् सर्वं साधु निर्णीतं डा० हर्नलि इत्याख्येन पाश्चात्यविदुषा।

**अरुणदत्तकालः**

अरुणदत्ताख्यः[३] प्रसिद्धवाग्भटटीकाकारस्तु त्रयोदशशतकस्य प्रथमे पादे समभूदित्यपि तत्कृत एव निर्णयः।

**शार्ङ्गधरकालः**

शार्ङ्गधरपद्धति-शार्ङ्गधरसंहितादिग्रन्थकारः शार्ङ्गधरस्तु चतुर्दशशतकस्य प्रथमार्द्धे प्रादुरासीदिति शार्ङ्गधरपद्धतिप्रस्तावनायां लिखितेन परिचयेन समुन्नेयम्।

**शिवदासकालः**

शिवदाससेनो नाम चक्रसंग्रहस्य चरकसंहितायाश्च प्रसिद्धटीकाकारस्तु अरुणदत्त-श्रीकण्ठदत्तयोरर्वाचीनः, गौडावनीपालाश्रितभिषग्वरस्य सुतः, इति कृत्वा वङ्गदेशीयवैद्यब्राह्मणः पञ्चदशशतकीयश्च प्रतीयते।

---

१। दृश्यतां वरेन्द्रानुसन्धानसमितिप्रकाशितायां "गौड़राजमालायां" गोविन्दपालदेवादीनां विवरणम् (५०-५० पृष्ठेषु)। ग्रन्थोऽयं वङ्गभाषायां विरचितः। २। यथा—"भट्टार-जेज्जट-गदाधर वाप्यचन्द्र-श्रीचक्रपाणि-वकुलेश्वरसेनभव्यैः" इत्यादि। ३। यथा चक्रदत्तव्याख्यायां ग्रहण्यधिकारे कपित्थाष्टकचूर्णव्याख्याने—"अरुणस्तु वाग्भटटीकायां षड्गुणसितै"रित्यादि। तृष्णाधिकारे च—"श्रीकण्ठस्तु—घृतस्योपरि च्छिन्नभागो घृतमण्ड"मित्यादि।

गौड़ावनीपालश्चासौ महम्मदीय एव स्यादिति तत्प्रदत्तपरिचयभंग्या ऐतिहासिकविचारेण च समुन्नेयम्।

भावमिश्रकालः

भावमिश्रस्तु शार्ङ्गधरवङ्गसेनयोरवरजः कान्यकुब्जश्च—इत्यत्र नास्ति संशयः, यतोऽसावनयोः पाठानुद्धरति स्वग्रन्थे भावप्रकाशाख्ये, निर्दिशति च परिचयं स्वकीयं तत्रैव। किञ्च तत्र फिरङ्गरोगस्य वर्णनात् षोडशशतकस्य प्रथमपादादर्वाचीनोऽसौ निश्चीयते। फिरङ्गरोगो हि प्रथमं पोर्टुगीजाख्य-फिरङ्गीयैस्तस्मिन्नेव काले स्वाङ्गसम्पर्केण भारतीयपण्याङ्गनासु प्रसारितः—इति सुप्रथितेयं वार्त्ता। चोपचीन्यहिफेनादीनां गुणाख्यानश्चास्य नवीनतां व्यनक्ति।

वङ्गसेनकालः

वङ्गसेनस्तु शार्ङ्गधरभावमिश्रयोर्मध्यस्थे समये समभूत्। स च वङ्गदेशीय एव संग्रहकारः। सेनोपाधिश्चास्य वङ्गीय-वैद्याख्यब्राह्मणतां प्रकाशयति। तत्संग्रहस्तु जीर्णप्रतिसंस्कृता अगस्त्यसंहितैवेति स स्वयमेवाह।

अधुनाविलुप्तेषु आयुर्वेदाङ्गेषु शारीर-मेवादौ समुद्धर्त्तव्यम्

त एते वैद्यकापराह्णकालसम्भवा अतिप्रसिद्धवैद्यकाचार्याः, यैः खल्विह संग्रहैकत्रतैः समूहिताः परमयत्नेन हीयमानदीप्तेरायुर्वेदभास्करस्य ज्योतिश्छटाः। राज्यविप्लवसमये च तावदेवाभूत् पर्याप्तमित्यकामेनापि स्वीकरणीयं बुद्धिमता। तथाप्यत्र सर्वथा विलुप्तप्रायाणि न केवलमसंख्येयप्रायाणि प्राचीनार्षतन्त्राणि, किन्तु कायचिकित्सावर्जं सर्वाण्यप्यायु-र्वेदाङ्गानीति सशोकं स्मर्त्तव्यं नाम। किञ्चात्र कथं कथमपि ध्रियमाणस्यास्य काय-चिकित्साङ्गमात्रस्यापि प्रधानपूर्वाङ्गम्—शारीरविद्या वनौषधिविद्या चेति विद्याद्वयं विलुप्तप्रायमेव। तत्राप्याद्या शारीरविद्या तु साम्प्रतमशरीरिणीव प्रायः संवृत्तेति हन्त को नाम सहृदयो नात्र दीर्घं निःश्वसिति? कश्च वा समर्थः सम्प्रति सुप्रतिष्ठितशान्तिके देशे विद्योत्साहिषु च महानुभावराजकेषु पुनरपि समग्रभारत-शरण्यमिदमायुर्वेदशास्त्रं तया संवर्द्धयितुं न प्रयतेत, विषहेत वा दुर्दैवहतकप्रापिता-मायुर्वेदस्याऽपूर्णतां परैर्विहस्यमानाम्?

# अथ शारीरविचारणीयो नाम

## चतुर्थः पादः ।

तत्रेह **शारीरं** नाम सकलनरशरीरबाह्याभ्यन्तरवस्तुविवरणपरायणं प्रधान-पूर्वाङ्गमायुर्वेदस्य यदिदमाचक्षते द्वारभूतं चिकित्साविद्यायाः,—व्याकरणमिव निखिलवाङ्मयस्य, तर्कशास्त्रमिव च सर्वार्थावबोधस्य। शरीरं हि खल्वधिकृत्य प्रवर्त्तन्ते तास्ताः क्रियाः स्वाभाविक्यः श्वसनान्नविपचन-रक्त-संवहन-विषयग्रहण-चेष्टनाद्याः नानाशयसिराधमन्यादिसमाश्रयाः यास्विह विकृतिमापद्यमानासु प्रभवन्ति रोगा नैकप्रकारास्तत्तदाशयाद्यधिष्ठानाः। न चाज्ञातेषु आशयादिविशेषेषु सर्वथा स्थानसंस्थानादिभिर्विज्ञायन्ते शारीरक्रियाः स्वाभाविक्यः, रोगा वा तद्विकृतिभूताः।

**शारीरस्य वैद्यके प्रधानपूर्वाङ्गता**

चिकित्सा हि चिकित्स्यमपेक्ष्य प्रवर्त्तते, चिकित्स्यश्च पुरुषस्तत्तदाशयादि-गतविकारशतैः क्लिश्यमानः। पश्यंश्च शारीरशास्त्राख्यज्ञानचक्षुषा सर्वानातुरगतान् विकारांस्तत्तदाशयादिसंश्रितानलं भिषग् भेषजैः प्रतिकर्त्तुम्। आहुश्च—

"आतुरस्यान्तरात्मानं यो नाविशति रोगवित्।
ज्ञानबुद्धिप्रदीपेन न स रोगान् चिकित्सति ॥

इति ( च० वि० ४ अ० )

अथ ये तु पुनर्व्याधयो मनोमात्राधिष्ठानास्तेऽपि शरीरक्रियाविकृतिविशेषैरेव लक्षणीयाः शारीरोपक्रमसाध्याश्च भूम्ना दृश्यन्ते—इत्यप्रतिहतं सर्वथा शारीरविद्याया वैद्यकप्रधानपूर्वाङ्गत्वं मन्यन्ते परमर्षयः पुराणाः। उपदिशन्ति च—"शरीरविचयः शरीरोपकारार्थमिष्यते, भिषग्विद्येयम्। ज्ञाते हि शरीरतत्त्वे शरीरोपकारकेषु भावेषु ज्ञानमुत्पद्यते। तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः।" इति ( च० शा० ६ अ० )।

एष पुनरितरेभ्यः शास्त्रेभ्यो विशेषः शारीरशास्त्रस्य यन्नियतप्रत्यक्षपरत्वात् न केनचिदुन्मत्तेतरेण शक्यमस्य सत्यतायां संशयितुम्। विप्रतिषिद्धं ह्यत्र शास्त्रे

यदुपदिष्टञ्च प्रत्यक्षविरुद्धञ्चेति। न वा सर्वथा प्रत्यक्षविरुद्धमिहोपलभ्यमानं ब्रह्म-वचोऽपि समाद्रियेरन् सम्यग्दृशः। "नहि युक्तयः सहस्रमपि घटं पटयितुमीशते"। आह च भगवान् धन्वन्तरिः सुश्रुताय—"प्रत्यक्षानुमानोपमानागमै-रविरुद्धमुच्यमान-मुपधारयेति।"

शारीरस्य प्रत्यक्ष-परत्वात् प्रामाण्यम्।

प्रशंसन्ति चेह प्रत्यक्षसमर्थितस्यैव शास्त्रोपदेशस्य प्रामाण्यं प्राञ्चः। तथा ह्युक्तम्—

"शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः॥
प्रत्यक्षतश्च यद्दृष्टं शास्त्रदृष्टञ्च यद् भवेत्।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम्॥" इति (सु० शा० ६अ०)

न च वाच्यं—शल्यतान्त्रिकाणामेव समुपादेयमिदं शास्त्रं न कायचिकित्सकानाम्, ते हि तावत् सुपरिज्ञातैर्वातपित्तकफतत्त्वसूक्ष्मानुसूक्ष्मविशेषैरलं रोगान्निर्णेतुं प्रतिकर्त्तुञ्च सर्वथेति किमनेन वहुपरिश्रमसाध्येन नव्य-शास्त्रेणेति। पूर्वोक्तप्रयोजनानां नियतजागरूकत्वात्। न च शारीरक्रियाणां प्राकृतवैकृतीनां सम्यगवबोधो वातपित्तकफ-तत्त्वैरेव शारीरज्ञानविरहितैः सम्भाव्यते। वातपित्तकफैर्हि खलु व्यक्ताव्यक्तस्वरूपैः प्रग्रहभूतैः प्रवर्त्यन्ते प्रगृह्यन्ते च शारीर्यः क्रियास्तत्तदाशयाद्य-धिष्ठानाः—इत्यनवगतशारीरवस्तु-क्रियास्वरूपस्य वातपित्तकफविवेक एव न पुष्कलः सम्पद्यते, किमुत रोगावबोधः। न वा क्वचित् प्रग्रहपरिज्ञानादेव प्रगृह्यमाणपरिज्ञानं सम्भवति,—न खलु रश्मिषु परिज्ञातेष्वेव ज्ञायन्ते वाजिनः स्वरूपेण, चिकित्स्यन्ते वा सम्यक् तद्रोगाः। न च निदानोक्तरोगाणां सम्प्राप्तिविशेषावबोधः शारीरज्ञान-मन्तरेण सम्भवति। तथाहि श्रूयते ज्वरसम्प्राप्तावेव—"दोषा ह्यामाशयाश्रया बहि-र्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगा"—इति। तत्र चेन्न ज्ञायते भिषजा कस्ताव-दामाशयः क च कीदृशश्च, कथङ्कारं वा कोष्ठाग्नेर्वहिर्निरसनं रसानुगमनञ्चेति,—तर्हि किमसौ बुध्येत, किं वा परान् बोधयेत्? एवं "भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत्" इत्यत्र ग्रहणीस्थान-संस्थानबोधः, "दूषयित्वा रसं दोषा विगुणा हृदयं गताः" इत्यत्र रसस्य हृदयप्रवेशक्रमादिबोधश्च सर्वथा शारीरज्ञानापेक्ष इति पदे पदे सन्ति शतशो दृष्टान्ताः[१]। तस्मात् शल्यतान्त्रिकाणामेवेदमुपादेयं शास्त्रमित्यालस्यपरं वचो न युज्यते

न च शारीरम् शल्यतान्त्रिकाणामेव उपादेयम्

१। अथाऽपरे केचिद् दृष्टान्ताः यथा—"आमपक्वाशयचरः समानो वह्निसंगतः" (सु० नि० १ अ०)। "मूत्रवेगनिरस्ताभिः प्रशमं याति वेदना। यावदस्याः पुनर्नैति गुड़िका स्रोतसो मुखम्"

सद्वैद्यमुखेषु। यत्तु "शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेष्वि"ति वचनं, तत् शारीरज्ञान-प्रदत्वेन शल्यतन्त्रस्योपादेयतां प्रतिपादयति, न पुनः कायचिकित्सकानां शारीराऽनुपादेयताम्। यतः खलु सर्वायुर्वेदप्रधानपूर्वाङ्गमिदं शास्त्रं शल्यतन्त्रे विशेषतो दृश्यते वर्णितं, ततः कायचिकित्सकैरप्यवश्यमध्येतव्यं शल्यतन्त्रमित्ययमस्य ह्यभिसन्धिः। कायचिकित्साप्रधाने अग्निवेशतन्त्रेऽपि प्राणाभिसरसद्वैद्यगुणवर्णने दृश्यते—"ते ज्ञेयाः प्राणानामभिसरा हन्तारो रोगाणां; तथाविधा हि केवले शरीरज्ञाने शरीराभिनिर्वृत्ति-ज्ञाने प्रकृतिविकारज्ञाने च निःसंशयाः," (च० सू० २९ अ०)। तस्मादवहेलित-व्याकरणस्य वैदुष्यमिव मा तावदविज्ञातशारीरवस्तुतत्त्वस्य ते वैद्यत्वं विवेकिजनोपहास्यं भूदित्यलमतिसरलेऽपि वस्तुनि वृथावादविस्तरेण।

एवञ्च प्राञ्चोऽपि परमाद्रियन्ते स्म शास्त्रमिदमायुर्वेदभित्तिभूतम्। तथाह चरकोऽपि सुश्रुतवत् संशयच्छेदिना वचनेन—

"शरीरं सर्वथा सर्वं सर्वदा वेद यो भिषक्।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम्॥" (च० शा० ६ अ०)

शारीरे प्राचामादरः। दृश्यन्तां वेदपुराण-तन्त्रादीनि

न चासीदायुर्वेद एवादरविशेषः शारीरशास्त्रस्य। शतपथ गोपथ-ब्राह्मणादिषु, पुराणेषु, पातञ्जलादियोगशास्त्रेषु, विष्णु-याज्ञवल्क्यादिस्मृतिषु, रुद्रयामलादितन्त्रेषु च शारीरविवरणविस्तरस्य स्फुटमभिधानात्। तथाहि शतपथब्राह्मणे,—"शिर एवास्य त्रिवृत्, तस्मात् त्रिविधं भवति,—त्वगस्थिमस्तिष्काः। ग्रीवाः पञ्चदश चतुर्दश वा एतेषां कारूकराणि"—इत्यादिर्महान् प्रसङ्गः।

यास्ककृतनिरुक्तेऽपि—

"अष्टोत्तरं सन्धिशतमष्टाकपालं शिरः सम्पद्यते, षोड़श वपावहनानि, नव स्नायु-शतानि, सप्तशतं पुरुषस्य मर्मणा"मित्यादि (निरुक्तपरिशिष्टे १४ अ०)।

---

(सु० शा०)। "स्थानाच्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः। शोषयत्युपसंगृह्य शुक्रं तच्छुक्र-मश्मरी" (माधव० अश्मरी नि०)। "वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाऽप्यथ। तेषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः (माधव० विद्रधि नि०। "यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः" (सु० नि० १ अ०)। पार्ष्णिप्रत्यङ्गुलीनां तु कण्डरा याऽनिलार्दिता। सक्थ्नः क्षेपं निगृह्णीयाद् गृध्रसीति हि सा स्मृता" (सु० नि०)। "मन्ये संश्रित्य वातोऽन्तर्यदा नाड़ीः प्रपद्यते। मन्यास्तम्भं तदा कुर्यादन्तरायामसंज्ञितम्" (च० चि० २८ अ०)। "आरुह्य-धमनीर्गत्वा सर्वान् धातून् नयन् रसः (वाग्भटः)। तस्य च हृदये स्थानं स हि हृदयाच्चतुर्विंशतिं धमनीमनुप्रविश्य" इत्यादि (सु० सू० १४ अ०)।

विष्णुधर्मोत्तरे च,—"अस्थ्नां त्रिभिः शतैः षष्ट्यधिकैर्धार्यमाणम्। तेषां विभागः * * * *"— इत्यादि।

अग्निपुराणेऽपि[१]—"श्रोत्रं त्वक् चक्षुषी जिह्वेत्यादिना" समग्राध्यायेन संक्षेपतः प्रायः सर्वेऽपि शारीरावयवा वर्णिताः।

याज्ञवल्क्योऽपि[२] स्वसंहितायाम्—"तस्य षोढ़ा शरीराणि षट् त्वचो धारयन्ति च"—इत्युपक्रम्य साङ्गोपाङ्गं शरीरं समासतो व्याचचक्षे।

किञ्चैवं विष्णुस्मृतावपि शेषार्द्धे व्याख्यातं समग्रं शारीरं संक्षेपेण।

एवञ्च भगवता पतञ्जलिनोपदिष्टं—'नाभिचक्रे कायव्यूहज्ञानमिति", तदिदं विस्तारयाञ्चक्रे योगिलोको हठयोगप्रदीपिकादिषु ग्रन्थेषु।

तन्त्रशास्त्रेऽपि रुद्रयामलादौ सविस्तरमाकलयामः सहस्रार-सुषुम्णेड़ापिङ्गलादिस्वरूपं निखिलसंज्ञाचेष्टामूलम्। तथाच सम्प्रति विलुप्तप्रायस्याप्यस्य शास्त्रस्य पूर्वं समादरातिशयः प्राचां नासीदिति न मनागपि शङ्कनीयम्। विलोपः पुनरस्य शास्त्रस्य दुर्दैवकृत इति न तावद् बुद्धिमता हृतधनेन पुनर्नार्ज्जनीयं सर्वार्थसाधनं द्रविणं नवीनम्।

न च लिप्तप्रायेष्वपीदानीमायुर्वेदमहाजलधिरत्नेषु न लभ्यते परिचयः प्राचीनाऽर्वाचीनशारीरनिबन्धानाम्। तथाह्यत्र—

**प्राचीनार्वाचीनशारीरनिबन्धानां परिचयः**

**(१) भोजकृतसंहितायाः शारीरस्थानं** प्राचीननिबन्धेषु प्रधानमभूदिति प्रतिभाति। भोजश्चासौ सुश्रुतसतीर्थो महर्षिरेव न तु तन्नामा नृपतिरित्यवोचाम, तथाचास्य प्राचीनता निर्विवादैव। भोजकृतशारीरोद्धृताः पाठास्तु बहुधा दृश्यन्ते डल्लन-चक्रपाणिभ्यामुल्लिखिताः। दिङ्मात्रमिहोदाहरामः।

तथाच भोजः—

हस्तपादाङ्गुलितले कूर्चेषु मणिबन्धयोः।
बाहुजङ्घाद्वये चापि जानीयान्नलकानि तु॥" इति—

(सु० शा० ५ अ० टीकायां डल्लनः)

पुनश्च तत्रैव "यथाह भोजः—

१। अग्निपुराणे ३७० अध्याये। २। याज्ञवल्क्यस्मृतौ यतिधर्मप्रकरणे।

संघाताः सञ्चिता यैस्तु सीमन्तांस्तान् प्रचक्ष्महे" — इत्यादि ।

अवयववर्णनविस्तरश्च तत्रैव भोजकृतो यथा—

"विपुलपिप्पलपत्रसमाकृते-रवयवस्य शिरस्तलमाश्रितम् ।
सकलकामसिरामुखचुम्बितं निगदितं मदनातपवारणम् ॥" इति ।

(२) श्रूयते च प्रायः सहस्रवर्षपुराणः शारीरनिबन्धो—भास्करभट्टकृतः **"शारीर-पद्मिनी"** संज्ञः सम्प्रति पाश्चात्यपण्डितैराविष्कृतः । तत्र वर्णितानि शारीरवस्तूनि प्रायः प्रतिसंस्कृतसौश्रुतमतानुसारेण । तत्पाठाश्च बहुशः समुद्धृताः श्रीमता डा० हर्न्‌लि समाख्येन पाश्चात्यविदुषा स्वकीये ग्रन्थे । यथाच शवच्छेदादिना अप्रत्यक्षीकृतशारीरस्य संग्रहमात्रमेतत्, तथाऽस्य शिष्योपयोगितां नाकलयन्ति धीमन्तः ।

(३।४) अस्ति चान्यदपि ग्रन्थद्वयं शारीरविवरणपरं पाश्चात्त्यदेशेषु वर्त्तमानमद्यापि । तच्च—

**श्रीमुखकृतं शारीरशास्त्रं, शारीर-वैद्यकञ्च**—नाम (केनचिदपरेण कृतम्) ।

अनयोश्च ग्रन्थयोर्विवरणं Aufrecht's Catalogue इत्याख्यायां संस्कृत-ग्रन्थसंग्रहसूच्यां द्रष्टव्यम् ।

एषाञ्च शारीरपद्मिन्यादीनां ग्रन्थानां प्राचीनटीकास्वनुद्धारदर्शनादनुपादेयता नातिप्रसिद्धता वा शङ्क्यते इत्यलमितोऽधिकं सम्भाव्य ।

तदेवं पुरा स्थितेऽपि कदाचित् सुमहति शारीरशास्त्रे सर्वायुर्वेदमूलभूते, प्रायः सपादद्विसहस्रवर्षतः प्राक् प्रसिद्धबौद्धनृपतेरशोकस्याज्ञया प्रतिषिद्धे शवच्छेदे, विलुप्तेषु चानन्तरप्रवृत्तराज्यविप्लवशतेन प्राचीनग्रन्थरत्नेषु शनैः शनैरहीयत शारीरज्ञानं भिषजाम् । एवञ्च बौद्धयुगेषु शवच्छेदाद्यशक्तानां निबन्धॄणां कल्पना-कल्पतरोः संरुरोह भ्रान्तशारीरवस्तुविस्तरः प्रत्यक्षविरुद्ध इति किमत्र चित्रं नाम ? जीर्णवलभ्यामेव ह्यत्र दृश्यन्ते भूतवेताला निवसन्तः !

अतीत-सपाद-द्विसहस्र-वर्षेषु शवच्छेदस्याऽशक्यत्वात् शारीर-शास्त्रस्य दशा-विपर्यासः ।

अथैवं बौद्धयुगेषु विपर्यस्तवस्तुकं शारीरं यथेच्छं विवृण्वन् सुश्रुतप्रतिसंस्कर्त्ता जीर्णप्रतिसंस्कृतावशेषां सुश्रुतसंहितामापूरयामास स्तोक-मात्रेण शारीरस्थानेन । तत्र ह्यसौ दशाध्यायीमात्रमिते शारीरे सांख्यञ्च गर्भादानादिविधिश्च गर्भावक्रान्तिश्च गर्भिणी-चर्याश्च कुमारभरणञ्चेति नानाविधप्रासङ्गिकाऽप्रासङ्गिक-

विपर्यस्तशारीरस्य प्रतिसंस्कर्तृभिस्तदनु-वर्तिभिरपरैश्च ग्रहणं विपर्ययवर्द्धनं च

विषयान् सङ्कलयन् कथमपि ग्रन्थपुष्टिं विदधे, सन्दधे च यथार्थशारीरविवरणे विलुप्तप्राये बहुधा प्रत्यक्षविरुद्धं कल्पनाविजृम्भितं प्रामादिकञ्च वचः। मृतकपरीक्षायास्तदानीमशक्यत्वाच्च न कोऽपि तत् परीक्षितुमलमासीत् परवर्त्ती आचार्यः। प्राचीनमहोपदेशस्त्वद्यापि जागर्त्ति सुश्रुते—

"शोधयित्वा मृतं सम्यग् द्रष्टव्योऽङ्गविनिश्चयः" इति ( सु० शारीर० ५ अ० ) यथा पुनर्मृतकपरीक्षया न केवलं बहुधा प्रत्यक्षविरुद्धं किन्तु स्वग्रन्थविरुद्धमपि दृश्यते शारीरविवरणं सौश्रुतशारीरे तथाऽग्रे विशदं दर्शयिष्यामः। एवञ्च योऽसौ "शारीरे सुश्रुतः श्रेष्ठ" इति प्राचीनः प्रवादः, स वृद्धसुश्रुतमभिकृत्य प्रचलितो नेदानीन्तने सुश्रुते भग्नप्रक्षिप्तभूयिष्ठे प्रयोक्तव्य इति निःशङ्कं ब्रूमः। इदानीन्तु हन्त लभ्यमान सुश्रुतमधिकृत्य "शारीरे सुश्रुतो नष्टः"—इत्येव युज्यते विलपितुम्।

वाग्भटाचार्योऽप्यष्टाङ्गसंग्रहेऽष्टाङ्गहृदये च यथामति वर्णयामास शारीरवस्तूनि। स च स्वयं बौद्धाचार्यः शवच्छेदाऽशक्तश्च सुश्रुत-चरकयोरवशिष्टं शारीरं बहुधा स्वकपोलकल्पनया पुनर्विपर्यासयाञ्चकार तृतीयेनैव मार्गेणेति सुवेदं शारीरविद्भिः।

शार्ङ्गधरस्तु चरकसुश्रुतवाग्भटानां शारीरवर्णनेभ्यः सारमिवाकर्षन् स्वल्पैरेव वचोभिः स्वग्रन्थे शारीरलेशं सञ्जग्राह। किञ्चासौ दक्षिणापथे राज्यविप्लवस्याल्पीयस्त्वादवशिष्टेभ्यः प्राचीनसंहितांशेभ्यो नवीनमपि किञ्चिदन्यत्र दुर्लभं वस्तुजातमुपाहरत्। तद् यथा—आकृष्टश्वासवायोर्गुणकथनप्रसङ्गे—

"नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्।<br>
कण्ठाद् बहिर्विनिर्याति पातुं विष्णुपदामृतम्॥<br>
पीत्वा चाम्बरपीयूषं पुनरायाति वेगतः।<br>
प्रीणयन् देहमखिलं जीवयन् जठरानलम्॥" इति—

( शार्ङ्ग० पूर्व० ५ अ० )

—तदेतदम्बरपीयूषं विष्णुपदामृतं वा आकृष्टश्वासवायोः सारभूतः प्राणदवायुविशेषः शोणितशोधनादिसहायः पाश्चात्यबुधैः "अक्सिजेन्" (Oxygen) इति संज्ञया व्यपदिष्ट—इत्यत्र न संशयः। पुराणमपि नवीनायितमिदं तत्त्वमन्यत्र वैद्यकग्रन्थेषु दुर्लभमेव[१]।

१। भ्रान्तयोऽपि पुनः शार्ङ्गधरे न दुर्लभाः, शवच्छेदसहकृतपरीक्षाविरहात्।

भावमिश्रोऽपि स्वग्रन्थे गतानुगतिकरीत्या वर्णयति स्म शारीरवस्तुविस्तरम्। स च बहुधा प्रमादसङ्कुलः तदीयकल्पनाऽनल्पीकृतश्च प्रतीयते विदितवेदितव्यानाम्।

सोऽयं हन्त वैद्यके साम्प्रतिकः शारीरावशेषः शारीरविपर्ययो वा लभ्यमानः।

दर्शयितव्ये विपर्यये वस्तुपरिचयः परिभाषाबीजञ्च।

तत्राद्यो विपर्ययक्रमः संज्ञानां व्याकुलीभावादवगन्तव्यः। दर्शयितव्ये च तस्मिन् वस्तुपरिचयस्तावदुपक्रम्यते संक्षेपतः, प्रदर्श्यन्ते च बीजान्यस्मत्परिभाषितार्थेषु कासाञ्चित् संज्ञानां व्यवहारस्य।

तत्राद्यो विपर्ययक्रमः संज्ञानां व्याकुलीभावात्।

सन्ति खल्विह नानाविधप्रणाल्यर्थेषु प्रयुज्यमानाः संज्ञाः—सिराः, धमन्यः, स्रोतांसि, रसायन्यो, नाड्यश्चेति। तासु नाड़ीतिसंज्ञायाः प्राचुर्येण व्यवहारस्तन्त्रशास्त्रेष्वेव, इतरासान्तु सिरादिसंज्ञानां चरक-सुश्रुत-वाग्भटादिषु बहुधा। न चासां संज्ञानां सर्वथा पृथगर्थप्रयुक्तानामेकार्थता कथमपि सम्भाव्यते, निखिलशास्त्रार्थव्याकोपप्रसङ्गात्। इदृश्चेदृश्च नः प्रत्यक्षं मृतकपरीक्षया, यत् सन्तीह काये चतुर्विधाः प्रणाल्यः प्राधान्येन, या नामरूपकर्मभिः सर्वथा विभिन्नाः। तासु द्विविधाः शोणितवहाः, एकविधास्तन्वच्छजलवहाः, अपराश्च संज्ञाचेष्टावहाः।

द्विविधासु च शोणितवहासु काश्चिन्नीलाः प्रायेण त्वचोऽधस्तादाभासमानास्ताः श्यामाभं रक्तं वहन्ति हृदयाभिमुखम्। अन्यास्त्वरुणाभा गम्भीरावस्थिताश्च। ता उज्ज्वलारुणं रक्तं वहन्ति हृदयतो बहिर्मुखं सर्वधातुपोषणाय। तत्राद्यासु नीलाभप्रणालीषु सिरापदं प्रयुक्तमाचार्यैः स्पष्टमेव सिराव्यधाधिकारे, तस्मात् तासां सिरेति संज्ञा स्वीकरणीया।

सिरा-धमनीसंज्ञयोः परिचयः

अतश्चास्माभिरत्र सिरापदमस्मिन्नेवार्थे निरूढम्। अरुणाभासु पुनः शोणितवहासु प्रणालीषु दृश्यते स्फुटमेव शास्त्रे धमनीपदप्रयोगः सार्थकः, तद्यथा—"तस्य च हृदयं स्थानं, स हृदयाच्चतुर्विंशतिं धमनीरनुप्रविश्योर्ध्वगाः दश दश चाधोगामिन्यश्चतस्रस्तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति यापयति जीवयति चादृष्टहेतुकेन कर्मणा" इति ( सु० सू० १४ अ० )। अस्माभिश्च ईदृशमेव धमनीपदप्रयोगं यथार्हमुपलभ्य अस्मिन्नेवार्थे संज्ञेयमिह परिभाषिता।

तन्वच्छजलवहासु पुनः प्रणालीषु चरके रसायनीति संज्ञा प्रसिद्धा, निरूढा च सा तस्मिन्नेवार्थेऽस्माभिः। स्रोतांसीति संज्ञा तु सुश्रुते पृथक् परिभाषिताऽपि प्रायो यथेच्छमेव प्रयुक्ता। चरके तु स्रोतांसीति

रसायनीसंज्ञापरिचयः

सर्वविधप्रणालीषु निरुक्ता साधारणी संज्ञा, प्रयुक्ता च साऽस्माभिश्चरकानुवृत्त्या मलमूत्र-वीर्यादिवाहिषु निखिलेष्वपि मार्गेषु।

नाड़ीसंज्ञापरिचयः

अथ या स्पर्शादिसंज्ञावहा अवयवसङ्कोच-प्रसारणादिचेष्टावेगवहाश्च प्रणाल्यः शरीरे, ताः पीताभतन्तुमय्यो नीरन्ध्रास्तन्त्र्यः। तासु हि विद्युद्वहधातुमयतन्त्रीष्विव प्रवहन्ति संज्ञाचेष्टाप्रदा वेगाः। तासाञ्च समूहितमूलानां प्रधानायतनं पृष्ठवंशान्तरस्थस्तादृशतन्तुगुच्छभूयिष्ठः कमल-नालाकारः काण्डः सुषुम्णाख्यः, स च शिरोगुहान्तरस्थेन मस्तिष्केणोर्ध्वं संलग्नः। अन्यासाञ्च तन्त्रीणां सूक्ष्मतराणां मूलभूते द्वे स्थूलतन्त्र्यौ पृष्ठवंशमुभयतः स्थिते धनुर्वक्रे इड़ा-पिङ्गलाख्ये। तदेतदखिलं प्रत्यक्षदृश्यम्। परीक्षाशतसिद्धञ्च तासां संज्ञा-चेष्टावहत्वम्। एतेन च बीजभूतेन परिचयेन सम्यक् संवदति वक्ष्यमाणतन्त्र-शास्त्रोक्तो नाड़ीचक्रवर्णनविस्तरः। नाड़ीचक्रवर्णनञ्च योगियाज्ञवल्क्ये, रुद्रयामले, निरुत्तरतन्त्रे, शारदातिलके, षट्चक्रनिरूपणादौ च मृग्यम्। प्रसङ्गविस्तरभिया त्विह दिङ्मात्रमुदाहरामः।

तन्त्रोक्तविस्तरस्य सारोद्धारः

एष हि तन्त्रोक्तविस्तरस्य सारः। "नाड्योऽनन्ताः[१] समुत्पन्नाः सुषुम्णापञ्च-पर्वसु"—इत्यनन्तानां नाड़ीनां मूलभूता मुख्यास्तिस्र एव नाड्यः—ईड़ापिङ्गले पृष्ठवंशमुभयतः पुरःस्थे धनुराकारे, सुषुम्णा तु पृष्ठवंशमध्यस्था 'चव्यवल्लीव'[२] बहुसूत्रसंघातमयीति। सा च "ग्रीवान्तं प्राप्य गलिता तिर्यग्भूता"[३] शिरसि सहस्रदलपद्मेन संलग्ना। सहस्रदलञ्चेदं मस्तिष्कमेव, नान्यत्। तन्त्रोक्तं चक्रषट्कञ्च न काल्पनिकं, न वाऽप्रत्यक्षमूलम्। तथाहि पूर्वोक्तप्रधाननाड़ीत्रितयसंयुक्तैः सूक्ष्मनाड़ीप्रतानैरारचिताश्चक्राकारनाड़ीसङ्घाताः सुषुम्णाकाण्डान्तस्तद्बहिश्च कोष्ठान्तः प्रत्यक्षदृश्याः। तानिहाग्रे यथास्थानं सम्यग वर्णयिष्यामः। कर्णिकान्तरीयाः सूक्ष्मतमवर्णादिविशेषास्तु ध्यानगम्या योगिनामेव, नास्मादृशाम्। तथाप्येतत् सुस्पष्टं प्रचुरञ्च बीजमुपलभ्यास्माभिस्तन्त्रशास्त्रोक्तार्थानु-सारेण परिभाषिता नाड़ीति संज्ञा। किञ्च, परिभाषितार्थे नाड़ीपदप्रयोगश्चरकेऽपि

---

१। इदं शारदातिलकीयं वचनम्। २। एष निर्देशः "मेरोर्बाह्यप्रदेशे शशिमिहिरसिरे सव्यदक्षे निषण्णे मध्ये नाडी सुषुम्णे"ति वचनव्याख्याने षट्चक्रनिरूपणटीकायां दृश्यते। वचनं हि "सुषुम्णा चव्यवल्लीव मेरुमध्ये परिस्थिता" इत्यादि। अतिमनोहरञ्चेदं स्वरूपानुगतं सादृश्यं, चव्यवली हि सूत्रगुच्छसंघातमयी भवति। पृष्ठवंशमध्यस्थश्च सुषुम्णाकाण्डस्तादृगेव लक्ष्यते सूक्ष्मशारीरपरीक्षया। ३। एषोऽपि पाठस्तन्त्रान्तरात्तत्रैवोद्धृतः।

दृश्यते, यथा—"मन्ये संश्रित्य वातोऽन्तर्यदा नाड़ीः प्रपद्यते। मन्यास्तम्भं तदा कुर्या-दन्तरायामसंज्ञितम्।" इति ( च० चिकि० २८ अ० ) इति दिक्।

नाड़ीशब्दतश्च लाटिनभाषायां "न्युरन्" इति, पारस्यभाषायां 'नर्ह' इति, आंग्ल-भाषायां 'नर्भ' इति च संज्ञाः समुद्भूता इत्यस्माकं सुदृढः प्रत्ययः।

**नाड्यर्थे स्नायुपदप्रयोगः प्रामादिकः परिहर्तव्यश्च**

नाड्यर्थे स्नायुपदप्रयोगस्तु विपर्यस्तेऽपि शारीरशास्त्रे क्वचिदपि न दृष्टः, प्रचलितस्तु हन्त सोऽद्य कस्यचिदज्ञानादादौ वङ्गभाषायां तदनुकारेण च कासुचिदन्यास्वपि भारतीयभाषासु। स चैतर्हि विज्ञैः सर्वथैव वर्जनीयः। स्नायुपदार्थस्त्वस्माभिः परिभाषाध्याये सम्यक् प्रतिपादितः।

अथैवमतिसंक्षेपेण सिराधमन्यादिवस्तूनां यथार्हं परिचयमारचय्य सम्प्रति प्रति-संस्कर्तॄणां, निबन्धॄणाञ्च निरङ्कुशप्रयोगानुदाहरामः।

**वैद्यके शारीरसंज्ञा-विप्लवस्य उदाहरणानि**

तत्र सिरापदस्य सुश्रुते सिराव्यधाधिकारेऽन्यत्र च बहुशो यथायथप्रयोगे दृश्यमानेऽपि, परिभाषितधमन्यर्थे प्रयोगो यथा—"असृग्-वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः"—इत्यत्र ( सु० शा० ७ अ० )

वाग्भटे धमन्यर्थे सिरापदप्रयोगो यथा—

"दश मूलसिरा हृत्स्थास्ताः सर्वाः सर्वतो वपुः। रसात्मकं वहन्त्योजः"—इत्यादौ। रसायन्यर्थे सिरापदप्रयोगो यथा—

"शीता गौर्यः स्थिराः कफात्" ( सु० शा० ७ अ० )।

परिभाषितनाड्यर्थे सिरापदप्रयोगो यथा तत्रैव—

"कर्णयोर्दश, तासां शब्दवाहिनीनामेकैकां परिहरेत्" इति—

"व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः।
प्रतानाः पद्मिनीकन्दाद्बिसादीनां यथा जलम्॥"—इति च।

अत्र हि शेषोक्ते पद्ये मणिपूराख्यचक्रात् समन्ततः प्रसृता नाड्यो लक्ष्यन्ते विसतन्तुसदृशाः, न पुना रक्तवाहिन्यः प्रणाल्य—इति स्फुटमेव सूक्ष्मदृशाम्।

अथ कण्डरार्थे सिरापदप्रयोगो यथा सुश्रुते—

"अंसदेशस्थितो वायुः शोषयित्वांऽसबन्धनम्।
सिरास्त्वाकुञ्च्य तत्रस्थो जनयत्यवबाहुकम्॥" इति (सु० निदान० १ अ०)

सर्वथा सिरापदार्थव्याकुलीभावः सुश्रुते, यथा—

"धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम् ।
स्वाः सिराः सञ्चरद्रक्तं कुर्याच्चान्यान् गुणानपि ॥" इति (सु० शा० ७ अ० )

न हि सिरासु सञ्चरद्रक्तं स्पर्शज्ञानं साधयति, तद्धि स्पर्शसंज्ञावादिभिर्नाड़ीप्रतानैः सम्पद्यते ।

संग्रहकृतस्तु स्रोतःसाधारणेऽर्थेऽपि क्वचित् सिरापदं प्रयुञ्जते, यथा—

"वीर्यवाहिसिराधारौ वृषणौ पौरुषावहौ" इत्यादौ । (शार्ङ्ग० पूर्व० ५ अ०)

अथ क्रमादीदृशमपि हास्यास्पदं शारीरमाविर्बभूव यथा, तत्रैव—

"सन्धिबन्धनकारिण्यो दोषधातुवहाः सिराः" इति ।

सन्धिबन्धनकारिण्यो हि स्नायवः, न सिराः । दृश्यतां सुश्रुते सन्ध्यध्यायः ।

एवं धमनीपदस्य सुश्रुते शोणितवर्णनीयाध्याये, चरके चार्थेदशमहामूलीयेऽन्यत्र च परिभाषितधमन्यर्थे सुष्ठुप्रयोगेऽपि क्वचित् परिभाषितसिरार्थे धमनीपदप्रयोगो यथा—

"अधृतिरदृढसौहृदः कृतघ्नः ।
कृशपरुषो धमनीततः प्रलापी ॥" – इत्यादि
( सु० शा० ४ अ० )

अत्र धमनीततत्वं हि नीलाभसिराबहुलत्वमिति स्फुटमेव ।

परिभाषितनाड्यर्थे धमनीपदप्रयोगाश्च दृश्यन्ते बहुशः । यथा—

"ऊर्ध्वगाः शब्द-स्पर्श-रूप-रस-गन्ध-प्रश्वासोच्छ्वास-जृम्भित-क्षुद्धसित-कथित-रुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति ।—इति ( सु० शा० ६ अ० ) ।

अथ नानाविधस्रोतोऽर्थेषु धमनीपदप्रयोगा यथा—

"मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रप्रादुर्भावाय द्वे, द्वे च विसर्गाय,—ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्" इति ( सु० शा० ६ अ० ) ।

अथ पूर्वदर्शितोदाहरणे चरके नाड़ीपदस्य यथार्हप्रयोगेऽपि नानार्थेषु तत्प्रयोगा न विरलाः । यत् सत्यं, नाड़ीपदस्य नानाविधप्रणाल्यर्थे प्रयोग एव वैद्यके प्रचुरतरो दृश्यते, अस्मत्परिभाषितार्थे तत्-प्रयोगस्तु तन्त्रशास्त्रेष्वेव भूम्ना । तत्र परिभाषितधमन्यर्थे नाड़ीपदं नाड़ीविज्ञानग्रन्थेषु दृश्यम् । विस्मयपदञ्चेदं यत् चरक-सुश्रुत-वाग्भटेषु नाड़ीपरीक्षाया गन्धोऽपि नोपलभ्यते । न च वाच्यं, नाड़ीविज्ञानेऽपि धमन्यर्थे नाड़ीपदमेव प्रयुक्तमिति, "धमनी जीवसाक्षिणी"—इत्यादौ धमनीपदस्यान्वर्थस्यापि तत्रैव श्रवणात् ।

नाड़ीपदस्य नानार्थेषु प्रयोगाः

किञ्च सुश्रुतेऽपि—"मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्यमभिवहति", (सु० शा० ३ अ०)—इत्यत्र परिभाषित-धमन्यर्थ एव प्रयुक्तमाद्यं नाड़ीतिपदं द्रष्टव्यं, सिराधमनीसमष्ट्यर्थे तु द्वितीयम्। परं तत्रैवानुपदं धमनीपदस्यान्वर्थप्रयोगोऽपि सुलभः, यथा - "असञ्जाताङ्गप्रत्यङ्गविभागमा निषेकात् प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्यग्गतानां धमनीनामुपस्नेहो जीवयति" इति (सु० शा० ३ अ०)।

नाड़ीपदस्य प्रणालिकार्थे प्रयोगास्तु वैद्यके काव्यादिषु च शतशो दृश्यन्ते। तत्र दिक्—

"द्वारमलभमानः पूयः स्वमाश्रयमवदीर्योत्सङ्गं महान्तमवकाशं कृत्वा नाड़ीं जनयित्वा कृच्छ्रसाध्यो भवत्यसाध्यो वेति" (सु० सू० १७ अ०)। 'नाड़ीव्रणं' इति प्रयोगश्चेदृश एव, "नाड़ीन्धम"—इति पदञ्च तथा स्वर्णकारार्थे लोके।

"सद्यश्छिन्नासु सिरासु रक्तातिप्रवृत्तिः, पक्वासु च तोयनाड़ीभिरिव तोयागमनं पूयास्रावश्च"—इत्यत्र च तादृश एव प्रयोगः (सु० सू० २२ अ०)।

एवं नाड़ीपदस्य दुग्धवहस्रोतोऽर्थे प्रयोगोऽपि दृश्यते, यथा सुश्रुते स्तनपाक-चिकित्सायाम्—

"पक्वे च दुग्धहरिणीः परिहृत्य नाड़ीः
कृष्णञ्च चूचुकयुगं विदधीत शस्त्रम्"—इत्यत्र।
(सु० चि० १७ अ०)

**अमरकोषीयभ्रमः तन्निरसनञ्च**

ननु अमरेण "नाड़ी तु धमनिः सिरा" इति—नाड्यादिपदत्रयस्य पर्याय-त्वेनाभिधानाद् यथेच्छप्रयोगे को दोष इति चेत्। मैवम्। ईदृश-पारिभाषिकपदानां पृथगर्थतया शारीरेऽवश्यग्रहणीयत्वात्, गृहीत-त्वाच्च। तथाहि सुश्रुते सिरावर्णनाध्यायः सर्वथा पृथगेव धमनीव्याकरणाध्यायात्। श्रूयते च तत्र—"अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः, कस्माद्? व्यञ्जनान्यत्वान्मूलसन्नियमात् कर्मवैशेष्यादागमाच्च।" इति (सु० शा० ९ अ०)। युगपत्प्रयोगश्च सिरादिपदानां दृश्यते यथा—"तासां प्रथमा मांसधरा नाम, यस्यां मांसे सिरा-स्नायु-धमनी-स्रोतसां प्रताना भवन्ति" (सु० शा० ४ अ०)—इत्यादौ। न हि पर्यायशब्दानां क्वचिद् युगपत्प्रयोगो भवतीदृशः। तस्मादमरसिंहोक्तं पर्यायवचनं शारीराऽज्ञानमूलमित्यवसेयम्। एवं वैद्यकेऽपि संज्ञात्रयस्य यथेच्छप्रयोगः

प्रतिसंस्कर्तृणां प्रमादजन्य इति चाऽकामेनापि स्वीकरणीयम्। परमर्षिकृतानां यथार्ह-प्रयोगाणां विभागानाञ्चाद्यापि बहुधा जागरूकत्वात्।

स्वोक्तिविरोधश्च संज्ञार्थव्याकुलीभावनिमित्तः सुश्रुते, यथा—सूत्रस्थाने 'हृदयञ्चतुर्विंशतिं धमनीरनुप्रविश्य" इत्याद्यभिधाय पुनः शारीरे "चतुर्विंशतिर्धमन्यो नाभिप्रभवा अभिहिता"—इति सूचनम्। वस्तुतस्तु अनयोः प्रयोगयोराद्ये परिभाषितधमन्यर्थे, द्वितीये तु नाड्यर्थे धमनीपदस्य प्रयोग इति शारीरानुगतः समाधिः।

न चात्र शक्यं किमपि समाधानम्

न च वाच्यं—वैद्यके द्विविधास्वपि रक्तवहप्रणालीषु सिरापदं प्रयुक्तं, त्वदुक्त-नाड्यर्थे तु धमनीपदमिति। सिरापदस्य दर्शितोदाहरणेषु रसायन्यादिनानार्थेषु प्रयोगदर्शनात्, क्वचित् स्पर्शज्ञानसाधनता-भिधानात्, वाग्वह-शब्दवहत्वादिसूचनाच्च। धमनीपदस्य च रसवह-रक्तवहादि-प्रणाल्यर्थेष्वपि दर्शितदिशा प्रयोगशतदर्शनात्। तस्मात् सर्वथा व्याकुलीभूतमिदं संज्ञात्रितयं प्रतिसंस्कर्तृदोषात्, तद्दर्शनाच्च कोषादौ पर्यायाभि-धानमित्यलमतिविस्तरेण।

अन्यो विपर्ययक्रमः आशयादिवर्णना-विलोपात् तत्परिचय-विरहाच्च

अथान्यः शारीरविपर्ययक्रमः शास्त्रनिर्दिष्टानामाशयादीनां वर्णनाविलोपात् परिचयविरहाच्च द्रष्टव्यः। श्रूयन्ते हि शास्त्रे आशयादीनां संज्ञाः, न च लभ्यन्ते तत्परिचायकानि वर्णनानि। तत्र दिङ्मात्रं यथा—

"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुस्फुसश्च कोष्ठ इत्यभिधीयते॥" इति
(सु० चिकि० २ अ०)

—इत्यत्राभिहितानामाशयादीनां वर्णनविस्तरः शारीरे यथास्थानं न दृश्यते, दृश्यते तु किञ्चित् कुत्रचित् प्रसङ्गतः। यथा आमाशयवर्णनं हृद्वर्णनञ्च सुश्रुते पञ्चमाध्याये नोपलभ्यते, मर्माध्याये तु—"स्तनयोर्मध्यमधिष्ठायाऽमाशयद्वारं सत्त्वरज-स्तमसामधिष्ठानं हृदयं नाम, तत्र सद्य एव मरणम्।" (सु० शा०, ६ अ०) इति निर्देशः। पुनरन्यत्र गर्भव्याकरणे च दृश्यते—"पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्" इति (सु० शा० ४ अ०)।

मूत्राशयपरिचयः सौश्रुतशारीरस्थाने नास्त्येव, अस्ति तु प्रासङ्गिको निदान-स्थाने। यथा—

"नाभि-पृष्ठ-कटी-मुष्क-गुद-वंक्षण-शेफसाम् ।
एकद्वारस्तनुत्वक्को मध्ये वस्तिरधोमुखः ।
अलाब्वा इव रूपेण सिरास्नायुपरिग्रहः ॥"—इति
(सु० निदान० ३ अ०)

'फुस्फुस'-परिचयश्च सुश्रुते नैव लभ्यते, न वा क्वचित्तस्य श्वासयन्त्रमित्यभिधानम् । शार्ङ्गधरे तु दृश्यते—"उदानवायोराधारः फुस्फुसः प्रोच्यते बुधै"रिति । न च "शोणितफेनप्रभवः फुस्फुसः" इत्यनेन सौश्रुतवचनेन फुस्फुसस्य स्वरूपज्ञानं सम्भवति । तत्स्वरूपावबोधस्त्वद्यापि कथञ्चिद् गतानुगतिकश्रुतेरेव ।

एवञ्च 'क्लोम'पदार्थव्याकुलीभावोऽपि स्फुट एव । तथाहि—केचिदामाशयपश्चाद्वर्त्तिनि अग्न्याशयाख्ये यन्त्रे[1] क्लोमपदं प्रयुञ्जते साम्प्रतिकाः, तत् प्रामादिकम् । यतः "शुष्कक्लोमगलाननः"—इत्यादिप्रयोगदर्शनात् (सु० उ० तन्त्रे ४१ अ०), टीकाकृद्भिः क्लोम्नः पिपासास्थानत्वेन निर्देशाच्च गलसमीपवर्ती कोऽप्यवयवः क्लोमेति शक्यमुन्नेतुम् । "क्लोम स्याद् गलनाड़िका"—इति देवयाज्ञिकभाष्यदर्शनात् सुश्रुतेन मण्डलाख्यस्यास्थिसन्धीनां क्लोम्नि (सु० शा० ५ अ०) दृष्टान्तप्रदर्शनाच्च तरुणास्थिचक्रपरिवेष्टितः श्वासपथ[2] एव कण्ठपुरःस्थः क्लोमेति निश्चयोऽस्माकम्[3] । श्वासपथश्चायं फुस्फुसद्वये प्रविशन् द्वेधा विभक्त इति उरोमध्यतोऽस्य स्थानम् । यत्तु "हृदयस्याधो वामतः प्लीहा फुस्फुसश्च दक्षिणतो यकृत् क्लोम चे"ति सौश्रुतः पाठः, तत्र लिपिकरप्रमाद एव दरीदृश्यते । "हृदयस्याधो वामतः प्लीहा दक्षिणतो यकृदुभयतः क्लोम फुस्फुसौ चे"ति तु साधीयान् पाठः । अन्यथा न केनापि कथमपि शक्यं समाधातुम् ।

'उण्डुक'—परिचयश्च क्वापि स्पष्टं न वर्णितः, न च 'शोणितकिट्टप्रभव उण्डुक"—इत्युक्तेस्तत्स्वरूपावबोधः । समुन्नेयन्तु तत्स्वरूपं कथञ्चित् मलधराख्यकलाख्यानप्रसङ्गे "उण्डुकस्थं विभजते मलं मलधरा कला"—इत्यभिधानात् । उण्डुको हि नाम बृहदन्त्रस्याद्यो भागश्चरके 'पुरीषोण्डुक' इति प्रतिपादितः ।

आशयपदार्थाऽज्ञानादर्थव्याकुलीभावश्च प्रतिसंस्कर्त्तृकृतः प्रसङ्गाद् यथा—"तस्य पुनः संख्यानं—त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुस्फुस उण्डुको हृदयमाशया अन्त्राणि बृक्कौ स्रोतांसि"—इत्याद्युपक्रम्य तत्रैव—"आशयास्तु—वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां

**आमाशयार्थाऽज्ञानात् सुश्रुते अर्थव्याकुलीभावः**

१। Pancreas. २। Trachea or Tracheo-bronchial tree.
३। प० कृष्णशास्त्रि कवडे महाशयास्तु क्लोमपदेन गलविलावेष्टनमवयवं (Pharynx) साधयति, क्लोमनिर्णयाख्ये निबन्धे । तच्चाग्रे क्लोमवर्णनप्रसङ्गे विचार्यम् । अन्यानि तु मतानि तुच्छानि ।

गर्भाशयोऽष्टम इति"—पुनरुक्तौ। इह हि हृदय-फुस्फुसान्त्रादिभ्यः पृथङ् न सन्ति रक्ताशय-श्लेष्माशय-पक्वाशयाद्या आशयाः क्वचिदपि लभ्यमानवैद्यके, प्रत्यक्षदर्शने[1] वेति नूनमर्थाऽज्ञानमूलोऽयं पृथङ्निर्देशः। अथ यकृत्प्लीहानौ रक्ताशयं मन्यसे तत्र रसस्य रक्तीभावोपदेशात्? तथापि यकृत्प्लीहव्यतिरिक्तोऽसौ रक्ताशयः कथमभिहितः? वस्तुतस्तु—"त्वचः सप्त, कलाः सप्त, आशयाः सप्त"—इत्यादौ 'समास'वचने यकृत्प्लीहादेरन्तर्भाव एवाशयेषु प्राचामभिप्रेतः, तथाचोक्तप्रसङ्गे पाठसंस्कारः करणीय एव, अन्यथा स्वोक्तिविरोधस्य दुर्वारत्वात्।

सन्ति च खल्विहाद्यापि लभ्यमाने शास्त्रावशेषे नानाविधाः शारीरसंज्ञास्तासामर्थावबोधो दुष्करप्रायः। तदुदाहरणानि यथा—सुश्रुते अश्मरीनिदाने—

'वस्तिर्वस्तिशिरश्चैव पौरुषं वृषणौ गुदम्।
एकसम्बन्धिनो ह्येते गुदास्थिविवरस्थिताः॥"

(सु० नि० ३ अ०)

**तथापीह प्राचीनशारीरसंज्ञा अद्यापि बहुशो वर्त्तन्ते दुर्बोधप्रायाः**

—इत्यत्र पौरुषं वस्तिशिरश्चेति पदद्वयं दुर्बोधम्। तत्र हि वस्तिशिरस्तावद् वस्तेः शीर्षभागो वा मूलभागो वेति सन्देहः। पौरुषन्तु वस्तिमूलस्थो ग्रन्थिविशेषः[2] प्रत्यक्षदृष्टः स्यादिति प्रतीतिः शारीरविदाम्। न चात्र डल्हणोक्तः "पौरुषं मेढ्रम्"—इत्यर्थः सङ्गच्छते, पौरुषस्येह गुदास्थिविवरस्थितत्वाभिधानात्[3]।

किञ्चैवमश्मरीचिकित्सिते—

सेवनी शुक्रहरणी स्रोतसी फलयोर्गुदम्।
मूत्रसेकं मूत्रवहं मूत्रवस्तिस्तथाष्टमः॥"

(सु० चिकि० ७ अ०) इत्यत्र—

निर्दिष्टानां पदानामर्थग्रहोऽपि अज्ञातशारीराणां सुदुष्कर एव। वयन्तु उक्तप्रसङ्गस्य निपुणविचारविशेषतः प्रतीमः शुक्रहरणी शुक्रप्रसेचनमार्गद्वयं शिश्नमूलस्थं मूत्रप्रसेकान्तर्निगूढं शुक्रप्रसेकसंज्ञम्। सामान्ये एकवचनम्। स्रोतसी फलयोः फलकोषयोर्निर्गते वीर्यवाहिन्यौ

---

१। हृदयमेव रक्ताशयः, फुस्फुसः श्लेष्माशयः, अन्त्राणि पक्वाशयश्चेत्यादेः सुप्रसिद्धत्वात्तद्व्यतिरिक्तानां तत्तदाशयानामदर्शनाच्चेत्यभिसन्धिः। २। Prostate gland—इत्याख्यया प्रसिद्धः। ३। यद्यपि वृषणावपि न गुदास्थिविवरस्थौ तथापि गर्भावस्थानकाले बालस्य श्रोणिविवरान्तरेव तयोरवस्थानात् तथाभिधानं सङ्गच्छते। मेढ्रन्तु तदापि श्रोणिविवराद्बहिरेव तिष्ठति।

मूत्रवहमिति वृक्काभ्यां विनिर्गतं मूत्रवहस्रोतोद्वयं गवीनीसंज्ञम्। मूत्रसेको मूत्रप्रसेको नाम मूत्रक्षरणमार्गः वस्तितो विनिर्गतः, यः पुंसां शिश्नाभ्यन्तरस्थः। (एतत्समुदायस्य विवरणमस्य ग्रन्थस्य आशयखण्डे प्रजननयन्त्रप्रसङ्गे द्रष्टव्यम्)।

एवं सौश्रुतनेत्रवर्णनप्रसङ्गोऽपि क्वचित् क्वचिदतिदुर्बोधः शारीरविदाम्—यथा—"तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम्। मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम्।" इत्यत्र (सु० उत्तर० १ अ०) पूर्वोक्तपक्ष्मवर्त्मादिपदानामर्थग्रहेऽपि अत्र वक्तुरभिसन्धिर्न सुवेदः। टीकाकृतां तु हन्त सन्देह एवात्र नास्ति।

अथापरो विपर्ययक्रमः काल्पनिकशारीरसम्भवाद् दृश्यते। इह हि प्रतिसंस्कर्तॄणां संग्रहकृताञ्च कल्पनाकल्पतरोरुदियाय नानाविधः शारीर-विवरणविस्तर—इत्यवोचाम। सोऽसावनार्षश्च प्रत्यक्ष-विरुद्धश्चेति सर्वथा वर्जनीय एव। यथा चैतत्, तथा साम्प्रत-मुदाहरणैः प्रतिपादयामः।

**अथ तृतीयो विपर्ययक्रमः काल्पनिकशारीरसम्भवात्**

तत्रैकमुदाहरणं वस्तौ मूत्रागमनविषयम्। मूत्रं हि नाम वृक्कयोः सहस्रशो-ऽवस्थितेष्वतिसूक्ष्मेषु आन्त्राख्येषु मूत्रस्राविसूक्ष्मप्रणालीमुखेषु नियतं सञ्चीयते, ततश्च वृक्कद्वयविनिर्गताभ्यां "गवीनी"संज्ञाभ्यां स्रोतोभ्यां प्रक्षरति मूत्राशये वस्त्यपरपर्याये—इत्येतदसन्दिग्धं सत्यं प्रत्यक्षसिद्धं परीक्षासिद्धञ्च। यत्तु सुश्रुतेऽश्मरीनिदाने श्रूयते—

"पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः।
तर्पयन्ति सदा मूत्रं सरितः सागरं यथा॥
सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः।
नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥
जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्यते।
आ मुखात् सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः।
घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्यते॥" इति—

(सु० निदान० ३ अ०)।

तत् सर्वथा प्रामादिकम्।

मा चैवं मंस्थाः—परमर्षीणामेवैष मतिभ्रमो, नात्र प्रतिसंस्कर्त्तुरपराध-इति। यतः, अग्निपुराणे सर्वायुर्वेदमहाकरेऽथर्ववेदे सुश्रुते चान्यत्र च दृश्यते मूत्रनिर्माण-विषयकस्य यथार्थशारीरज्ञानस्य पुष्कलं प्रमाणम्। तद् यथा—

अथर्ववेदे मूत्ररोधप्रसङ्गे शरशलाकया मूत्रसंस्रावणप्रसङ्गे मन्त्रः—

"यद् आन्त्रेषु गवीन्योर्यद्वस्तावधि संश्रितम्।

एवा ते मूत्रं मुच्यतां वहिर्बालिति सर्वकम्[१] ॥" इति—

अत्र गवीन्योरित्यनेन निःसंशयं बृक्काभ्यां विनिर्गते मूत्रवहे स्रोतसी लक्ष्येते। व्याख्यातञ्च सायनाचार्येणापि—"मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ इत्युच्येते" इति।

सुश्रुतेऽपि धमनीव्याकरणे—

"मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे" इति स्पष्टं गवीन्योरेव[२] निर्देशः।

किञ्चाश्मरीचिकित्सितेऽपि श्रूयते सुश्रुत एव—

"मूत्रवह-शुक्रवह-मुष्कस्रोतो-मूत्रप्रसेक-सेवनी-योनि-गुद-वस्तीन् परिहरेत्। तत्र मूत्रवहच्छेदान्मरणं मूत्रपूर्णवस्तेः[३]। शुक्रवहच्छेदान्मरणं क्लैब्यं वा। मुष्कस्रोत-उपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्।" इत्यादि

(सु० चिकि० ७ अ०)।

अत्रापि मूत्रवहे गवीन्यावेवं। मूत्रप्रसेकः शिश्नस्थो मूत्रमार्ग इत्युक्तपूर्वम्।

अतएव मन्यामहे, पूर्वोद्धृतसन्दर्भे "सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः" इत्युक्त्या परमर्षिणा बृक्काभ्यन्तरस्थाः सूक्ष्मतमाः प्रणाल्योऽभिलक्षिताः, ताभिर्हि शनैर्मूत्रं सञ्चिन्वतीभिर्बृक्कद्वये प्रथमं ततश्च बृक्काभ्यां विनिर्गतयोर्गवीन्योर्मूत्रमर्प्यते, गवीनीभ्यान्तु मूत्रस्य मूत्राशयप्राप्तिः। प्रतिसंस्कर्त्रा पुनरिह शारीराऽज्ञानात् स्वकपोलकल्पनया मूत्राशय एव मूत्रवहा नाड्यः सहस्रशो योजिताः—इति सर्वथा हास्यास्पदमेवेदं विदितशारीराणाम्।

अथवा लिपिकरप्रमाद एवात्र स्वीक्रियताम्। तथाहि प्रथमश्लोके "तर्पयन्ति

---

१। एष मन्त्रः अथर्ववेदस्य प्रथमकाण्डे प्रथमानुवाके तृतीयसूक्ते लभ्यते। अस्य चेदं सायणभाष्यम्—"आन्त्रेषु उदरान्तर्गतेषु पुरीतत्सु। अधि सप्तम्यर्थानुवादे। यत् मूत्रं संश्रितं समवस्थितं रोगवशाद् बहिरनिर्गच्छन्निरुद्धमभूत्। तथा गवीन्योः,—आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ—इत्युच्येते। तयोरपि यत् मूत्रं संश्रितम्। तथा वस्तौ—धनुराकारो मूत्राशयो वस्तिरुच्यते, तत्रापि यत् मूत्रं संश्रितमस्ति। ते तव उक्तस्थानेषु निरुद्धं तत् मूत्रं, एवा एवम् यथापूर्वं मुच्यतां निर्गच्छतु। निर्गमनप्रकारमेवाह, सर्वकं सर्वं तन्मूत्रम्। बहिः शरीराद् बाह्यप्रदेशे। मुच्यताबाल्—अनुकरणशब्दोऽयम्। इति एवमात्मकं शब्दं कुर्वत्। मुच्यतामिति सम्बन्धः। २। गवीन्यौ = Ureters. ३। अत्र वस्तिपदेन वस्तिदेश उच्यते, अन्यथा अर्थासङ्गतेः।

सदा मूत्रं" इत्यत्र "तर्पयन्ति सदा बृक्कौ"—इति पाठ एव साधीयान् प्रतिभाति, "सरितः सागरं यथा तथा मूत्रं तर्पयन्ती"त्युक्तौ सागरमूत्रयोरुपमानोपमेयभावासङ्गतेः। शेषतश्च "घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्यते" इत्यस्य स्थाने "घटो यथा तथा बृक्कौ ततो वस्तिश्च पूर्यते" इति पठनीयम्, "विद्धि" इति पदस्य वृथागर्भितत्वादन्यथाऽर्थासङ्गतेश्च।

अपरश्च शारीराऽज्ञानजन्यः सार्वजनीनप्रायो भ्रमो यथा—

"यथा पयसि सर्पिस्तु गूढ़श्चेक्षौ रसो यथा—
शरीरेषु तथा शुक्रं नृणां विद्याद् भिषग्वरः" ।—(सु० शा० ४ अ०)

इति प्राचीनसौश्रुतपद्यदर्शनात् शुक्रस्य स्थानमेव नास्तीति मन्यन्ते केचिद् भिषजः। वस्तुतस्तु शुक्रं नियमेन फलकोषयोर्निर्मीयते, सञ्चीयते च शुक्राधारयोर्बस्तिपार्श्वगतयोः शुक्रवहाभ्यां स्रोतोभ्याम्। अतएव चरके—

"शुक्रवहानां स्रोतसां वृषणौ मूलम्" इत्यादि (च० विमान० ५ अ०)। सुश्रुतेऽपि—"शुक्रवहच्छेदान्मरणं क्लैव्यं वे"ति स्पष्टमुच्यते। न च शुक्राधारयोर्ज्ञानाभावः परमर्षीणां सम्भवति, यतश्चरके वाजीकरणपादे नक्रशुक्रं व्यवस्थितम्, न च तत् शुक्रधारच्छेदमन्तरा लभ्यते।

"यथा पयसि सर्पि"रित्याद्यभिधानन्तु सर्वशरीरचरं सूक्ष्मतरं शुक्रसारं[१] लक्षयति। अस्ति हि स्थूलं शुक्रं व्यवायादौ प्रच्यवत्—"स्फाटिकाभं द्रवं स्निग्धम्", —इतिलक्षणकम्। अस्ति चापरं सूक्ष्मतरं परमसारभूतं शुक्रं, यस्मात् पुंस्त्वव्यञ्जकश्मश्रु-पौरुषाकृतिविशेषाः सम्भवन्ति, यदभावाच्च कृतकनपुंसकानां बलीवर्दादीनां च नाविर्भवन्ति श्मश्रु-ककुदादीनि पुंस्त्वलिङ्गानि। तदेवं शुक्रद्वैविध्ये सिद्धे सूक्ष्मतरं शुक्रमभिप्रेत्य "यथा पयसि सर्पि"रित्यादि प्राचां वचनं व्याख्येयम्।

अथ चतुर्थः शारीरविपर्यासक्रमो लिपिकरप्रमादजन्य इति निर्विशङ्कं ब्रूमः। तदुदाहरणानि यथा—

**चतुर्थः शारीरविपर्ययक्रमो लिपिकरप्रमादनिमित्तः।**

"पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति" (सु० शा० ५ अ०) इत्यत्र "वस्ति पक्वाशयमध्ये" इति पाठो भवितुमर्हति, शरीरे तथैव दर्शनादन्यथा प्रत्यक्षविरोधाच्च।

किञ्च—"द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते"। (सु० शा० ४ अ०)

---

१। इदं पाश्चात्यशारीरे—Internal secretion of the Testicles—इत्याख्यया प्रसिद्धम्।

—इत्यत्र "द्व्यङ्गुले दक्षिणे वामे"—इत्येव साधीयान् पाठः। अन्यथा प्रत्यक्ष-विरोधात् स्वोक्तिविरोधाच्च। श्रूयते हि "शुक्रवहे द्वे शुक्रप्रादुर्भावाय, द्वे शुक्रविसर्गाय चे"ति सुश्रुत एव ( सु० शा० ९ अ० )।

तदेतत् क्रमचतुष्टयं वैद्यके शारीरविपर्यासस्य। इदन्तु परमत्र विस्मयपदं यदित्थं विपर्यस्तेऽपि शारीरे न केवलमुपलभ्यन्ते सत्यसिद्धान्त-बोधकानि प्रमाणानि, काश्चिन् संज्ञाश्चाद्यापि, किन्तु रक्त-संवहनादिशारीरक्रियावर्णनसूत्राण्यपि बहुशः। रक्तसंवहनक्रिया हि नाम सार्वकायिकस्य रक्तस्य उत्तराधर-महासिराभ्यां संगृहीतस्य हृदयदक्षिणार्द्धे प्रवेशस्ततो हृत्पेशीपीड़नात् फुस्फुसयोर्गत्वा तत्र 'विष्णुपदामृत'[1]-संयोगात् परिशोधितस्य तस्य पुनर्हृदयवामार्द्धे प्रत्यागमनं, ततस्तस्य सर्वशरीरप्रचारो धमनीभिस्ततश्च पुनः सिराभी रसायनीभिश्च संगृहीतस्य तस्य महासिराभ्यां हृदयदक्षिणार्द्धे पुनःप्रवेशः—इति सुपरीक्षितं परीक्षकैः। तदेतत्तत्त्वमाविष्कुर्वतां प्रतीच्यकोविदानां नाद्यापि वर्षशतत्रयमत्यगात्, परमधुनाऽपि प्राचीनशारीरशेषे श्रूयते—

सन्ति च विपर्यस्तेऽपि शारीरे प्राचां सत्यसिद्धान्त-ज्ञानसूचकानि प्रमाणानि यथा रक्तसंवहनक्रिया-वर्णनम्।

"दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः। रसात्मकं वहन्त्योज" इति—
( अष्टाङ्गहृदय० शा० ३ अ० )

सुश्रुतेऽपि "तस्य च हृदयं स्थान"—मित्यादिपूर्वोद्धृतः सन्दर्भ एतदेव लक्षयति, धमनीभिः सर्वशरीरे रसप्रचारस्य वर्णनात्। चरकेऽपि -

"यत् सारमादौ गर्भस्य यत्तद्गर्भरसाद्रसः।
संवर्त्तमानं हृदयं समाविशति यत् पुनः।"—
( च० सूत्र० ३० अ० )

इति पाठोऽपि गर्भस्थशिशोः रक्तसंवहनसूचक एव। श्वासवायुना "विष्णुपदामृत"ग्रहणं तु शार्ङ्गधरोक्तं दर्शितपूर्वम्।

तन्त्रोक्तः षट्चक्रविस्तरश्च प्राचां शारीरज्ञानमपूर्वं बोधयति। तत्र दिगिहैव दर्शितपूर्वा। दर्श्यते चापरं किञ्चित्। तथाहि श्रूयते—षट् चक्राणि शरीरे मूलाधार-स्वाधिष्ठान-मणिपूराऽनाहत-विशुद्धाऽऽज्ञासंज्ञानि। तत्र मूलाधारस्तावत् 'ध्वजाधो गुदोर्ध्वम्", "खगाण्डवद्" उच्यते —तदेतत् ग्रन्थ्याकारं दृश्यते मृतके गुदास्थिपुरस्ताद् ईड़ापिङ्गलाख्यनाड़ीद्वयमूलभूतम्।

(२) षट्चक्रविज्ञानञ्च

---

१। Oxygen.

तच्च पाश्चात्यानां—Ganglion Coccygeum Impar—इत्याख्यया प्रसिद्धमित्यस्माकं निर्णयः। स्वाधिष्ठानचक्रं "ध्वजमूले"ऽवस्थितं, तच्च पाश्चात्यानां शारीरे—Hypogastric Plexus इत्याख्यया प्रसिद्धं नाड़ीचक्रमिति प्रतिभाति। मणिपूरचक्रं नाम "तस्योर्ध्वे नाभिमूले" स्थितं नाड़ीचक्रं प्राचां,[१] स च पाश्चात्यानां—Solar Plexus—इति प्रसिद्धश्चक्राकारो नाड़ीसंघात एव। "तस्योर्ध्वे हृत्प्रदेशे"ऽवस्थितं पुनरनाहताख्यं चक्रं पाश्चात्यनये—Cardiac Plexus—इत्याख्यया प्रथितो नाड़ीजातविशेषः प्रतीयते। विशुद्धाख्यं तु चक्रमभिन्नं—Carotid Plexus—इत्याख्येन नाड़ीचक्रेणाकण्ठदेशावस्थितेन। आज्ञाचक्रं पुनर्भ्रूमध्यानुपूर्व्याऽवस्थितं पाश्चात्यनये—Cavornous Plexus—इत्यनेन तुल्यार्थमिति नः प्रतीतिः*। सर्वोर्ध्वं च शिरसि विन्यस्तं सहस्रारं सर्वज्ञानायतनं, तच्च मस्तिष्कमेवेत्यत्र न सन्देहः। तदेतदखिलं सूक्ष्मानुसूक्ष्मविशेषविवेकेन सम्यग् बुबुधिरे प्राञ्चः—इति षट्चक्रनिरूपणाद्यालोचनया दृढं प्रतीमः। कालवशात्तु हन्त प्रविलुप्तप्रायमार्षज्ञानमाविर्भूतानि च ज्ञानार्जनकण्टकानि शतशः—इति नैषा प्राचां वचनीयता।

**कर्त्तव्ये शारीरप्रतिसंस्कारे द्विविधं साधनम्**

अथैतर्हि सम्पादनीये शारीरप्रतिसंस्कारे द्विविधमिहोपकरणमुपलभामहे—प्राचीनशारीरञ्च प्रत्यक्षविज्ञानञ्चेति। तत्र प्राचीनशारीरं तावद् बहुधा विपर्यस्तमपि नानाविधज्ञाताऽज्ञातसंज्ञानामाकरभूतमद्यापि वरीवर्त्ति। वस्तुपरिचयसाधनानि चात्र नैकधा दृश्यन्ते यतस्ततः प्रासङ्गिकानि, भग्नावशेषहर्म्येषु महार्घरत्नानीव रजोधूसराणि। प्रत्यक्षविज्ञानं पुनर्मृतकपरीक्षयाऽर्ज्जितमिदानीमपरं साधनं सर्वसन्देहनिराकरणम्। न चेदमायत्तं नव्यानामेव, नवैतत् तेषामेव शास्त्रं, प्रत्यक्षज्ञानस्य सर्वजनसम्पाद्यत्वात्। न च नाकलयामः प्राचामुपदेशं प्रत्यक्षपरीक्षणविधायकं बहुधा। यत्र यत्र तु पुनरुपलभ्यते प्रत्यक्षविरुद्धं शारीरं, दिष्ट्या तत्र तत्रैव प्रायो विषयेऽन्यत्र प्रत्यक्षानुगतसिद्धान्तबोधकानि सन्त्यपराणि प्राचां वचांसि। तथा च लभ्यमानानि प्रत्यक्षविरुद्धवचनानि प्रक्षिप्तानि वा, प्रतिसंस्कर्त्तृकल्पनोत्थानि वा, लिपिकरप्रमादकण्टकितानि वेति युज्यते वक्तुम्।

---

१। "सिराभिरावृतो नाभिश्चक्रनाभिरिवारकैः" इत्यादिप्राचीनप्रयोगश्च एतदेव चक्रं लक्षयतीति नः प्रत्ययः।

* अवेदमवधेयम्। द्विविधानि हि षट्चक्रवर्णितानि नाड़ीचक्राणि—बाह्यानि आभ्यन्तराणि च। तत्र बाह्यानि यथोक्तानि स्थूलानि, आभ्यन्तराणि तु सुषुम्णाकाण्डान्तर्निगूढानि तत्तन्मूलानि सूक्ष्माणि। तद्विवरणं मूलग्रन्थे नाड़ीखण्डस्य द्वादशाध्याये द्रष्टव्यम्।

इत्थंगते चेदानीं शारीरप्रतिसंस्कारः षोढ़ा संविधातव्यः—

शारीरप्रतिसंस्कारस्य षड्विधो विधिः—

(१) प्रसिद्धानां कासाञ्चित् प्राचीनसंज्ञानां परिभाषानिर्द्धारणेन, (२) अनतिप्रसिद्धानामप्रसिद्धानां वाऽपरासां संज्ञानामाविष्करणार्थनिर्णयाभ्याम्, (३) प्राचीनसंज्ञाऽलाभे नवीनसंज्ञानां निर्माणेन, (४) प्रत्यक्षदृष्टशारीरस्य सम्यग्वर्णनेन, (५) प्रत्यक्षानुगत्या प्रामादिकपाठ-संशोधनेन, (६) दृश्यविषयैः प्राचीनशारीरस्य यथासम्भव सामञ्जस्य-सम्पादनेन चेति। तत्र—

परिभाषानिर्णयः

(१) प्रसिद्धानां प्राचीनसंज्ञानां परिभाषानिर्द्धारणविधिः सिराधमन्यादिपदानामर्थविचारप्रसङ्गे सूचितपूर्वः। स च प्रसिद्धसंज्ञानामर्थविशेषेषु निरोधेन सुकरः।

अप्रसिद्धप्राचीनसंज्ञानामाविष्कारः

(२) अनतिप्रसिद्धानां संज्ञानामाविष्करणमर्थनिर्णयश्च यथा शक्यते कर्तुं तदुदाहरणमथर्ववेदनिर्दिष्टानां गवीन्यादिपदानामर्थविचारे प्रादर्शयाम। याश्च वैद्यके मूत्रवह-मूत्रप्रसेकादिसंज्ञा दर्शितचरास्ता अनतिप्रसिद्धा अपि ज्ञेयार्थाः श्रमविशेषेण। सन्ति च तन्त्रेषु काश्चिदीडा-पिङ्गलाद्याः संज्ञा यासामर्थनिर्द्धारणमकरवाम। सत्सु चैवं नानाशास्त्रप्रकीर्णेषु बहुषु संज्ञाशब्देषु तदर्थद्योतनाय न निर्माणीयाः न वा प्रयोज्याः संज्ञा नवीनाः—अन्यत्र प्रसिद्धतरसंज्ञाभ्यः। दृश्यन्ते हि वेदेषु काश्चन संज्ञाः शारीरवस्तुपराः, याः प्रायेणाश्रुतपूर्वा वैद्यैः। यथा - अनूकम्, पुरीतत्, गवीन्यौ, वनिष्ठुः, ग्रावस्तुत् - इत्यादयः। सन्ति च वैद्यकग्रन्थेष्वपराः, यथा - कृकाटिका-कुकुन्दरगोजिह्विकादयः। तन्त्रेषु चान्याः, यथा—कुहूः, हस्तिजिह्वा, अलम्बुषा—इत्यादयः।

नवीनसंज्ञानिर्माणम्

(३) प्राचीनसंज्ञाऽलाभे नवीनसंज्ञानां निर्माणन्तु शारीरवर्णनविधौ बहुधाऽवश्यकमुपलभ्यते। तत्र च डित्थ-डवित्थादिवन्निरर्थकसंज्ञाकरणादन्वर्थानां श्रुतिसुभगानाञ्च संज्ञानामेव निर्माणं श्रेयः।

प्रत्यक्षदृष्टशारीरस्य सम्यग् वर्णनम्

(४) प्रत्यक्षदृष्टशारीरस्य सम्यग्वर्णनं तावदल्पैः पदैरतिदुष्करम्। अस्ति ह्यत्र पाश्चात्यानां शारीरं प्रभूतविस्तरं यस्यैकैको ग्रन्थश्चरकसुश्रुतवाग्भटानां समष्टिकोटिमारोहति विशालायतनेन। न च तादृशं विपुलविस्तरमधीयेरन् वैद्यकविद्यार्थिनो वर्णनबाहुल्यात्। न चातिसंक्षेपे कृते सम्यगर्थोऽवबुध्येत, शारीरविषयाणामश्रुतचरत्वात्, प्रत्यक्षमन्तरेण

दुरधिगमत्वाच्च। एवञ्च प्रत्यक्षानुकल्पभूतानि चित्राण्यपि बोधसौकर्याय बहुधा प्रयोज्यानि, तानि च बहुश्रमसम्पाद्यानि प्रचुरव्ययसाध्यानि च।

(५) प्रत्यक्षानुगत्या प्रामादिकपाठसंशोधनविधिरपीह प्रदर्शितचरः। अपराणि च पाठसंशोधनानि इहैव प्रादर्शयाम सविचारम्।

प्रामादिकपाठसंशोधनम्

(६) प्रत्यक्षदृश्यविषयैः प्राचीनशारीरस्य सामञ्जस्यविधानं तावद् बहुश्रमविचाराभ्यां दुःखसाध्यमपि करणीयमेव, प्राचीनप्रत्ययिनां सन्देहनिराकरणाय। दृश्यन्ते हि प्राचीनशारीरे केचनापातविरुद्धा विषयाः, येषां विरोधो न केवलं प्रत्यक्षदृश्यशारीरेणैव, किन्तु परस्परमपि स्वोक्तिभिः। तथाहि चरकयाज्ञवल्क्यादिषु षष्ट्यधिकं शतत्रयमस्थ्नां परिगण्यते, सुश्रुते तु शतत्रयं, नव्यशारीरे तु शतद्वयमेव। अस्य पुनः समाधानम्,—"आपातविरुद्धवादिनोऽपि सर्व एवैतेऽवितथमाहुः—गणनाप्रकारभेदात्। तथाहि वेदवादिनो नखदन्तादीनस्थिगणनायामन्तर्भावयन्ति, नैवमितरे। तरुणास्थीनि दशनांश्च गणयन्ति शल्यतन्त्रविदः प्राच्याः, नैवं प्रतीच्याः। पृथग् वयोग्रहणाच्च। प्राञ्चो हि यौवनप्रविष्टस्य सञ्चक्षतेऽस्थीनि, पञ्चविंशतिवर्षदेशीयस्य तु प्रतीच्याः"—इत्यादिना मूलग्रन्थे वक्ष्यते। अपराणि च विरोधपरिहारस्य कानिचिदुदाहरणानि यथा।—सुश्रुते श्रूयते "पार्श्वे षट्त्रिंशदेवमेकस्मिन्, द्वितीयेऽप्येवम्" इति, नव्यमते तु एकैकस्मिन् पार्श्वे द्वादशैव पर्शुकाः--इति विरोधः। तत्समाधानञ्च सुश्रुते एकैकस्मिन् पार्श्वे द्वादश पर्शुकाः, द्वादश उपपर्शुकाः, द्वादश पर्शुकामूलभागाश्चेति गणनया सुकरम्। पर्शुकामूलभागा हि तन्मुण्डसहिताः पृथगेव दृश्यन्ते आ पञ्चविंशतिवर्षात्। एवं च सुश्रुते—"एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि, तानि पञ्चदश। तलकूर्चगुल्फसंश्रितानि दश। पार्ष्ण्यामेकम्। जङ्घायां द्वे। जानुन्येकम्। एकमूराविति। त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति"—इत्यादौ "एकैकस्यां तु पदाङ्गुल्यां त्रीणि त्रीणि द्वे अङ्गुष्ठे इति चतुर्दश। तलकूर्चगुल्फसंश्रितानि एकादश"--इति पाठसंशोधनं प्रत्यक्षानुगत्या सर्वथा युज्यते, अन्यथा सन्धिवर्णनोक्तेन 'एकैकस्यां पादाङ्गुल्यां त्रयस्त्रयो द्वावङ्गुष्ठे, ते चतुर्दश" इति स्ववचसा विरोधो दुर्वारः—इति दिक्।

नव्य-प्राचीनशारीरयोः सामञ्जस्यविधानम्।

तदेतदखिलं प्रतिसंस्कारविधिं स्मारं स्मारमस्माभिर्यथामतिश्रमपरैः प्रत्यक्षशारीराख्योऽयं ग्रन्थो निरमायि। अत्र चादौ शिष्याणां सम्यगवबोधाय स्वपरिभाषाः साधु निरूपिताः, नवीनसंज्ञाश्च तदन्वर्थताश्च स्मरणसुखताश्च प्रकल्प्य यथाशक्ति प्राचां पदाङ्कानुसारत एवोद्भाविताः। गृहीताश्च वेदादिभ्यो वैद्यकग्रन्थेभ्यश्च नवीनायिताः

काश्चित् पुराण्यः संज्ञा गवीन्यादयः। प्रत्यक्षदृष्टशारीरस्य वर्णनन्तु यावच्छक्यमल्पैरेव पदैः शिष्योपयोगितां मनसिकृत्य व्यधायि। चित्राणि चानल्पानि विषयाववोध-सहायकानि श्रमलाघवञ्च व्ययकार्पण्यञ्चाऽकृत्वैव संयोजितानि। प्रदत्तानि च शारीर-संज्ञानां नवीन-पुराणानां निरूपणसौकर्याय पत्राधस्तनीषु टीकासु आंग्लभाषासंज्ञाः, दुर्बोधपदानां सरलार्थाश्च। एवं हि पाश्चात्यवैद्यकमात्रज्ञानां डाक्टर-पदवाच्यानां भिषजामपि साहाय्यमज्ञातशारीराणां वैद्यविद्यार्थिनां सुलभं स्याद्, अर्थाश्च साधु प्रतीयेरन्।

**न चायं ग्रन्थः कस्यचित् पाश्चात्यग्रन्थस्यानुवादः**

इदञ्चेह कृपया विमृशन्तु प्रेक्षावन्तो यदेष प्रत्यक्षशारीराख्यो ग्रन्थः कस्यचिदपि पाश्चात्यशारीरग्रन्थस्यानुवादो न भवतीति। यैर्हि खलु पूर्वं तादृशानुवादो विहितः पाश्चात्यविद्याप्रवीणैस्तेषां ग्रन्थेषु दृश्यतेऽतिदारुणः संज्ञाविपर्ययो दुर्बोधता च, बहूनां प्राचीन-संज्ञानां निरङ्कुशप्रयोगात्, पाश्चात्यसंज्ञानां तादवस्थ्येनोपलम्भाच्च। न हि तादृश-मप्राच्यमपाश्चात्यं भाषासङ्करं सम्यगुच्चारयितुमलं वैद्यविद्यार्थिनः, किं पुनर्बोद्धुम्। एवंविधहेतोरतिविस्तराभिधानाच्च तत्र न भिषजामुन्मुखीभावः, नापि तेनायुर्वेदोप-कारः। तदिदमाकलयतामस्माकं श्रमराशिं कृततादृशश्रमा एव बुध्येरन्। साफल्यन्तु पुनरस्मद्ग्रन्थस्य निरवधिना कालेन विशेषज्ञजनैश्च निर्णेष्यते।

एतत् परमतीव सन्तोषमावहति नः, यद् ये खलु विद्यार्थिनो भिषजश्च ज्ञान-पिपासवो नानादिग्देशागताः प्रत्यक्षशारीरस्याद्यभागमस्माभिरध्यापिताः—तैः सुगम एवामन्यत दुर्बोधोऽप्ययं विषयः। स्मरन्ति च ते सुखेनैवेदृशान् स्मारकश्लोकान् नीरस-दुःस्मर-विषयानधिकृत्य— यथा—

"झर्झरश्च जतूका च शुक्तिका चाथ सीरिका।
स्वसंज्ञश्चोर्ध्वहन्वस्थि तालवस्थ्ना संहितानि षट्।"
(प्रत्यक्षशारीरे तालवस्थिवर्णने)

**त्रुटीस्वीकारः क्षमाप्रार्थना च**

अथैवं सुमहता प्रयत्नेन साधितेऽप्यस्मिन् ग्रन्थविरचनकार्ये अस्मद्दृष्टिदोषाद्वा मुद्राकरत्रुटीनां दुष्परिहरत्वाद्वा अस्मादृशाल्पज्ञजनभ्रम-प्रमादसौलभ्याद्वा यत्र यत्र स्खलनमभूत्तत्र तत्र दोषज्ञ-जन-करुणैव नः शरणम्। प्रार्थयामहे च प्रवीणान्— गुणमात्रपक्षपातपरायणैरत्रभवद्भि-रध्ययनाध्यापनाभ्यामस्मद्ग्रन्थस्य सफलीकरणीयो नः श्रम इति। मा भूदतः-

परमुपहास्यता प्राच्यवैद्यानां पाश्चात्यवैद्यैः शारीराऽज्ञाननिमित्तम्—इत्येव नस्तेषु विनयाञ्जलिः।

इदञ्चावसाने निवेद्यम्—

आ-काश्मीर-कुमारिकं कृतधियाम् आ-चट्टल-द्वारकं
येषां[१] पत्रशतैरिहाऽस्म सुतरां प्रोत्साहिता दुर्गमे।
येषाञ्चाथ नियोगतः श्रममिमं सत्यं लघुं मन्महे
तेषामेव कृतित्वमत्र न तु नोऽनुज्ञावहा वै वयम्॥

इयञ्चापरा प्रार्थना—

अनभिज्ञातशारीराः प्रमादानपरैः कृतान्।
मोहादृषीणां[२] शिरसि येऽर्पयन्ति पदे पदे॥
तेऽधीयतामुपोद्घातं सावधानं कृपालवः।
विमृशन्तु च भूतार्थान् प्रविलोक्य स्वचक्षुषा॥
नास्माभिर्दूषिताः क्वापि गुरवः परमर्षयः।
प्रत्यक्षपरिदृश्यार्थं वेदेष्वद्यापि[३] तद्वचः॥

कलिकातामहानगर्यां
सं १९७१।

इति—विद्वज्जनकृपार्थिनः
**श्रीगणनाथसेनशर्मणः।**

१। तानि च पत्राण्यद्यापि सुरक्षितानि स्मरणाय। २। "एतानि आर्षवाक्यान्येव" इति जल्पनं तेषां व्यामोहमूलमेव, ततश्च त एव ऋषिदूषकाः, न वयम्—इत्यभिसन्धिः। ३। वेदोक्तं हि शारीरमद्यापि न विकलमिति भावः।

# प्रत्यक्षशारीरस्य चतुर्थावृत्तिमुद्रणे

## ग्रन्थकर्त्तुर्निवेदनम्

निखिलकल्याणगुणाकरस्य श्रीमन्नारायणकरुणावतारस्य भगवतो धन्वन्तरेः कृपया प्रत्यक्षशारीरस्य तिस्रो मुद्रणावृत्तयः समाप्ताः। तेन चतुर्थमिदं संस्करणं शिष्योपयोगितां विचार्य परिवर्त्तन-परिवर्धनाभ्यामुपबृंहितं प्रकाश्यते। अत्र च पूर्वं लेशोक्ताः केचन विषयाः सम्यग् विस्तारिताः, विस्तरोक्ताश्च क्वचित् क्वचित् संक्षेपिताः, सूक्ष्मशारीरादिविषयाश्चानुक्तपूर्वाः यथास्थानं संयोजिताः सह नवीनैश्चित्रैः। भूयस्तरमुपदिष्टानि च शारीरक्रियाविज्ञानतत्त्वानि।

पाददटिप्पण्यश्चात्र स्पष्टतरीकरणाय संवर्धिताः संयोजिताश्च सुस्पष्टतरपरिष्करणाय प्राचीनप्रमाणैः। परिशिष्टे च पारिभाषिकसंज्ञानां वर्णानुक्रमिकी सूची सहांग्लपरिभाषाभिः प्रकाशिता। आशास्यते चेत्थं ग्रन्थकर्त्रैव प्रतिसंस्कारनवीकृतोऽयं ग्रन्थः प्रियतरतां प्राप्स्यति शिष्याणामध्यापकानाञ्च।

हन्त महानयमनुग्रहो मयि भगवतः परमेश्वरस्य यद् रोगजराजीर्णस्यापि मे नाहीयत सामर्थ्यमस्मिन् प्रतिसंस्कारकर्मणि। तथापि प्रथमभागस्यैवायं प्रतिसंस्कारः, द्वितीयतृतीयभागयोस्तु नाद्यापि तदावश्यकताभूत्। मन्ये यथाकालं तत्रापि प्रभविष्यामि—यद्यायुर्न क्षीयेत।

इदञ्चात्र विदांकुर्वन्तु विद्वांसः—प्रत्यक्षशारीराद्यभागद्वयस्य वङ्गभाषया हिन्दीभाषया चानुवादः पृथगेव प्रकाशितो मदीयैः शिष्यजनैः शिष्यजनोपकाराय। तृतीयभागस्यानुवादोऽपि शीघ्रं प्रकाशमेष्यतीति सम्भाव्यते। एवञ्चास्य गुजरातीभाषानुवादोऽपि प्रथितयशसां सुहृद्वर्याणामायुर्वेदमार्त्तण्ड प० श्रीयादवत्रिविक्रमाणामनुरोधात् प्रदत्तयास्मदनुज्ञया आहमदावादस्थ डा० बालकृष्ण पाठक (M. B., B. S.) महाशयैः स्वव्ययेन व्यधायि, प्राकाश्यमनायि च मुम्बय्याम्। एवञ्च शारीरज्ञानस्यावश्यकता साम्प्रतं सम्यगुपलभ्यते वैद्यैरित्याकलय्य हृष्यति नश्चेतः।

किञ्च, भारतीयनानादिग्देशेषु कार्यप्रसङ्गात पर्यटतो मे प्रसिद्धनगरेषु सुविशाल-

सभाह्वानपुरःसरं यानि यान्यभिनन्दनपत्राणि प्रदत्तानि प्रत्यक्षशारीरादिकृतिकृतज्ञैर्वैद्यवरैस्तेषामानृण्यमद्याऽपि नाशकम् विधातुं सिद्धान्तनिदानादिग्रन्थसमापनेनेति कृतागसमात्मानं मन्ये। तच्च निराकर्त्तुं यथाशक्ति प्रयत्यते।

अथेदमपरं प्रमोदस्थानं नः, यदधुना मद्राज-मुम्बई-युक्तप्रदेश-विहार-वङ्गदेशादिनानाप्रदेशेषु ब्रिटिशगवर्णमेण्टानुज्ञानात् राजानुमोदितेयं दिष्ट्या वैद्यकविद्या वङ्गदेशादन्यत्र सर्वत्रापि ( अन्यत्र वङ्गदेशात् ) राजकीयार्थसाहाय्यं भूरि वाऽल्पं वा लभते। एवञ्च सम्यगुपचीयमानेयमष्टाङ्गवैद्यकविद्या सुरचितग्रन्थानां प्रणयन-प्रकाशनाभ्यां तदध्ययनाध्यापनाभ्यसनैश्च वर्धितश्रीरचिरादेव रुजार्त्तप्रजाप्राणत्राणायाधिकाधिकं प्रभविष्यतीति शक्यं सम्भावयितुम्।

अन्यच्चास्मिन् प्रसङ्गे विज्ञापनीयम्—"प्रत्यक्षशारीर"ग्रन्थस्य निखिलभारतीयवैद्यसम्मेलनेन वैद्यविद्यार्थिनामवश्यपाठ्यत्वेन निर्देशात् सर्वलोकप्रशस्यत्वाऽसहिष्णुतया वा तद्दोषाविष्करणेन सुलभयशोलिप्सया वा कश्चन महाराष्ट्रो विद्वान् प० गङ्गाधर जोशीशास्त्रीतिप्रसिद्धः पेशी-स्नायु-सिरा-धमनी-कलेतिसंज्ञापञ्चकं प्रमादप्रयुक्तमित्याघोषयन् आंग्लसंस्कृत-महाराष्ट्रभाषारचितानि त्रिचतुराणि लघुपुस्तकानि प्रकाशयामास। तेषाञ्च निरुत्तरीकरणमुत्तरं पुण्यपत्तनस्थेन विद्वद्वरवैद्यपञ्चानन प० श्रीकृष्णशास्त्रि कवड़ेमहाभागेन त्रिभिर्निबन्धैः प्रादायि 'केशरी'तिप्रसिद्धपत्रिकायाम्। तथाऽप्यतुष्यता तेन शास्त्रिणा तदर्थमेवान्यं निबन्धं 'सौश्रुतशारीरप्रतिष्ठापनाविज्ञप्ति'संज्ञं प्रकाश्य समर्थ्य च तं कतिचिदनुव्रतशास्त्रिणां स्वाक्षरैः स्वमतं पुनराम्रेडितम्। मया तु तदानीं प्रत्यग्रधर्मपत्नीवियोगविधुरेणाऽपि त्रयाणां महाराष्ट्रीयविदुषामनुरोधात् तत्सन्देहनिराकरणाय प्राचीनप्रयोगादिप्रदर्शनपुरःसरं "A Brief Answer to Criticisms" इत्याख्यं संक्षिप्तमुत्तरपत्रमांग्लभाषया विरचय्य प्रेषितं मित्रवर प० श्रीमत्कृष्णशास्त्रि-कवड़े महाशयानामन्तिके पत्रिकासु प्रकाशनाय। तैश्च महाभागैः प्रकाशितं तत् स्वव्ययेनैव प्रचुरप्रचाराय।

तथाप्यतृप्यता तेन पुरोभागिपुरन्दरेण शास्त्रिणा इं० १९२९वर्षे कराचीनगरसंमिलिते निखिलभारतीयवैद्यसम्मेलने प्रस्ताव एष उपस्थापितः—"प्रत्यक्षशारीरकाराः पेशीस्नाय्वादिसंज्ञापञ्चकमधिकृत्य प्रकाशितानाक्षेपान् यदि न निराकुर्युरेकेन वर्षेण तदा सौश्रुतपरिभाषानुसारि-नवीनशारीरग्रन्थनिर्माणाय विद्वांसोऽभ्यर्थनीयाः" इति। तदनन्तरञ्चास्माभिर्विदुषां निर्बन्धातिशयेन "संज्ञापञ्चकविमर्श"संज्ञो ग्रन्थः प्राणायि। तत्र च विवादास्पदीभूताः पञ्चापि संज्ञाः समञ्जसार्थेष्वेवास्माभिः प्रयुक्ताः स्वग्रन्थे—

इति सरलैः शब्दैः सयुक्तिप्रयोगं प्रतिपाद्य प० जोशीशास्त्रिकृताः प्रमादाः सविस्तरं निरसिताः। तस्य चायमन्तिमः श्लोकः—

"उच्छास्त्र-शास्त्रिकुल-संकुलवाक्यशल्यै-
राविध्यमानमवलोक्य शरीरतन्त्रम्।
संज्ञाप्रणाश इह माऽस्त्विवति तस्य शल्यो-
द्धारं विधाय रचितोऽमृतलेप एषः॥"

सोऽयं ग्रन्थो 'विदुषां विद्यार्थिनाञ्च ज्ञानवृद्धये भविष्यति चिरायेति" केषाञ्चिद् धीमतां मतमतीव नः प्रमोदायेति तान् प्रति कृतज्ञतां प्रकटयामः। अभ्यर्थयामहे च सुधीजनान् मादृशां भ्रमप्रमादसौलभ्याद् यदि सत्यमेव संशोधनीयं किञ्चिदुपलभ्येत, तर्हि मर्षयित्वा मे मन्तुं संशोध्यतां भ्रमः, विज्ञाप्यतां चासौ कृपया इति विनीतविज्ञप्तिः।

विदुषामाश्रवस्य—

कलिकातामहानगर्यां
सं० १९६५, पौषपूर्णिमायाम्।

सेनोपाह्व-
**श्रीगणनाथशर्मणः**

# प्रत्यक्षशारीरम् ।

## ओं नम आयुर्वेदाचार्येभ्यः ।

कालिन्दीजलनीलिम्नो[1] नीलं ज्योतिरुपास्महे[2] ।
यद्भासमनुभासन्ते[3] ज्योतींषि[4] च जगन्ति च ॥ १ ॥

वैद्यविद्या-महाम्भोधि-पारोत्तीर्ण-महाधियम् ।
विद्याकल्पद्रुमं तातं विश्वनाथं गुरुं नुमः ॥ २ ॥

यदन्तरगतं[5] महः परमहर्षिबोधोज्ज्वलं
विराट्पुरुषधामर्जि[6]न्निखिलरोदसी[7] व्यानशे[8] ।
विलोप-परकल्पना[9]-जलदजाल-मन्दप्रभो
न कस्य विषयः शुचां स इह वैद्यविद्यारविः ? ॥ ३ ॥

आत्रेयादिमहर्षिभिर्निजतपःप्रज्ञान[10]दीप्तेक्षणै-
दुर्ज्ञेयान्यपि[11] चेत्करामलकवत्तत्वानि संजज्ञिरे[12] ।
सुज्ञेयं करणैः[13] पुरो नयनयोर्देदीप्यमानं तनोः
स्थूलं[14] तत्वमपास्य हन्त नु भिषङ्मन्या न लज्जेमहि[15] ? ॥४॥

---

१ यमुनाजलनीलतायाः सारभूतमिति शेषः । यद्वा कालिन्दीजलस्य नीलिमेव नीलिमा यस्य तादृशस्य । २ श्रीकृष्णरूपमिति फलितार्थः । ३ यस्य दीप्तिं । ४ सूर्यचन्द्रादीनि । तथाच श्रुतिः-"तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति ।" ५ यस्य अभ्यन्तरगतं तेजः । ६ सहस्रशीर्ष्णो विष्णोस्तेजःस्पर्द्धि, तथाचोक्तं—"ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" इत्यादि । ७ समग्रद्यावापृथिव्यौ । ८ व्याप । ९ विलोपः—अग्निवेशसुश्रुतौपधेनवौरभ्रादिमहर्षिप्रणीतमूलग्रन्थानामनासादनं, परकल्पना—नानानापजनोद्भावितप्रक्षिप्तभ्रान्तमतादीनि । १० प्रज्ञानं परमज्ञानं, तपःप्रज्ञानाभ्यामुन्मीलितदिव्यदृष्टिभिः । ११ पारलौकिकान्यपि किमुत ऐहिकानि । १२ सम्यग् ज्ञातानि । १३ इन्द्रियैः । १४ शारीरं तत्त्वमज्ञात्वैव । १५ न लज्जेमहीति काकुः । अवश्यं लज्जेमहीति भावः ।

प्राच्यप्रतीच्यगुरुसङ्घमुपाश्रित्य[१] तस्मात्
तत्तद्भिषग्जनवचांसि विचार्य सम्यक् ।
प्रत्यक्षदृष्टनिखिलार्थकमद्य[२] शास्त्र-
मुद्योतयन्न भवितास्मि विगीतकृत्यः[३] ॥ ५ ॥

प्राचां गिरः शिरसि नोऽथ तदीयशैली
प्रायः पवित्रयति पद्धतिमस्मदीयाम् ।
भागीरथीव्यतिकरः[४] कुरुते महिम्ना
रथ्यापयोऽतिमलिनं विमलं क्षणेन ॥ ६ ॥

प्राचां विरोध[५] इह नास्ति, कुतोऽथ[६] भाति,
प्रत्यक्षवस्तुविषये सहनीय एषः ।
आर्षे निबन्धृशतदुष्टवचोऽभिमृष्टे[७]
शास्त्रेऽपि शस्यतुषभेदविदो[८] विदः[९] स्युः ॥ ७ ॥

धान्वन्तरीयमतमाकुलतामुपेतं
स्वच्छं पुनर्विदधता मृतकान् परीक्ष्य ।
अग्रन्थि[१०] सम्प्रति मया नवको निबन्धो
बोद्धा श्रमस्य यदि तं शिरसा नमामि ॥ ८ ॥

तनुमतिरपि गुरुकरुणां गणनाथः सोऽयमाश्रयन् शरणम् ।
रचयति शरीरतत्व-प्रत्यक्षीकरणकारणं दीपम् ॥ ९ ॥

क्षमध्वमिह दोषान्मे[११] चिनुध्वं गुणलेशकान् ।
आद्रियध्वञ्च यत्सत्यं प्रत्यक्षे[१२] को नु संशयः ? ॥ १० ॥

---

१ पृथिव्यां प्राच्याः भारतवर्षीयाः, प्रतीच्या यूरोपीयाः । २ शवच्छेदादिना प्रत्यक्षकृतसमस्ततत्त्वम् । ३ निन्दितकर्मा । ४ सम्पर्कः । ५ यतः अनार्षजनप्रमादादिजन्य एव दृश्यते लभ्यमानग्रन्थेषु शारीरवस्त्वर्थव्याकुलीभावः । दृश्यतामुपोद्घातः । ६ यथा सिराधमन्यादिशब्देषु । ७ निबन्धॄणां शतैः प्रक्षिप्तानि यानि व्याकुलार्थानि वचांसि तैर्दूषिते । यथा चैतत्तद् दर्शितमुपोद्घाते । ८ इदं शस्यं ग्राह्यमिदं तुषन्त्याज्यमिति भेदज्ञाः । ९ पण्डिताः । १० व्यरचि । ११ क्वचित् प्रसिद्धभ्रान्तमतविरुद्धकथनादीन्. दुस्तरेऽस्मिन् शास्त्रे स्खलितानि च । १२ तत्रापि सकलजनसाधारणे स्थूलप्रत्यक्षे । उक्तञ्च केनचित् प्रसङ्गान्तरे—"अध्यापयन्ति यदि दर्शयितुं क्षमन्ते, सूतेन्द्रकर्म गुरवो गुरवस्त एव" इति । स च न्यायः शारीरविषयेऽपि प्रयोज्यः । अप्रत्यक्षीकृतशारीरतत्वाः केचन चेदत्रापि विवदेरन्, का गतिः ?

# प्रत्यक्षशारीरम् ।

## प्रथमोऽध्यायः ।

अथातः शारीरोपक्रमणीयमध्यायं* व्याख्यास्यामः ।

इह खलु शरीर-मनः शरीरि[1]-समवायः पुरुष इत्युच्यते, तद्दुःखसंयोग-विशेषाश्च[2] व्याधय इति । दुःखसंयोगश्चासौ द्वेधा समुत्पद्यते, शरीरव्यतिकरेण मनोव्यतिकरेण चेति । तत्र शरीरनिष्ठा[4] व्याधयः शारीरैरुपचारैरुपक्रान्ताः प्रतिनिव-र्त्तन्ते, मनोनिष्ठाश्च[5] भूम्ना[6] तथैव, अपरैश्च समाधिसान्त्वादिभिरुपायैः[7] प्रायेण शरीरद्वारप्रयुक्तैः[8] । तस्मात् व्याध्यायतनमिति चिकित्साधिष्ठानमिति च कृत्वा शरीरमेवादौ भिषजां विजिज्ञासितव्यं[9] भवति । आहुश्च प्राञ्चः—"शरीरविचयः[10] शरीरोपकारार्थमिष्यते, भिषग्विद्येयम् । ज्ञाते हि शरीरतत्वे शरीरोपकारकेषु भावेषु ज्ञानमुत्पद्यते । तस्मात् शरीरविचयं प्रशंसन्ति कुशलाः" — इति (च० शा० ६ अ०) ।

श्रूयते च चरकसंहितायामात्रेयोपदेशः — "भगवानुवाच—य इमे कुलीनाः पर्यवदातश्रुताः परिदृष्टकर्माणो दक्षाः शुचयो जितहस्ता जितात्मानः सर्वोपकरण-वन्तः सर्वेन्द्रियोपपन्नाः प्रकृतिज्ञाः प्रतिपत्तिज्ञाश्च, ते ज्ञेयाः प्राणाभिसरा हन्तारो रोगाणां ; तथाविधा हि केवले[11] शरीरज्ञाने[12] शरीराभिनिर्वृत्तिज्ञाने[13] प्रकृतिविकारज्ञाने च निःसंशया इत्यादि ।" ( च० सू० २९ अ० )

---

* शारीरस्योपक्रमणमारम्भः, तदधिकृत्य कृतम् (छप्रत्ययः) । एवमग्रेऽपि । १ शरीरी आत्मा, समवायः समष्टिः । तथाह चरकः "सत्त्वमात्मा शरीरञ्च त्रयमेतत् त्रिदण्डवत् । लोकस्तिष्ठति संयोगात्तत्र सर्वं प्रतिष्ठितम् ।" २ अयं सुश्रुतस्यानुवादः ( सु. सू. १अ. ), तस्मिन् पुरुषे ये दुःखकर-संयोगस्य विशेषाः विशिष्टलक्षणसमष्टिभूता भावास्ते रोगाः । ३ सम्पर्केण । ४ शारीराः । ५ मानसाः । ६ प्राचुर्येण । ७ समाधिश्चित्तैकाग्रता, सान्त्वं मधुरवचः । ८ "समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्" इत्यादिभगवदुक्तरीत्येति भावः । ९ विशेषेण ज्ञातुमीप्सितव्यम् । १० अङ्गविनिश्चयविद्या । ११ समग्रे । १२ गर्भव्याकरणे । १३ शारीरक्रियाविज्ञाने विकृतशारीरज्ञाने च ( In Physiology & Pathology ) ।

इतश्चेदं शरीरं मातापित्रोरान्तरभावभावितात्[1] अदृष्टविशेषात्कृष्टशुक्रशोणितसंयोगादुद्भिद्यमानं क्रमशस्तैस्तैरवस्थाविशेषै[2]रभिव्यज्यमानस्वरूपं रसादिशुक्रान्तधातूनामनेकाशयसिराधमन्यादीनाञ्चाधारभूतमभिसम्पद्यते प्राणायतनं नाम। प्राणा हि शरीरमाश्रित्य ध्रियन्ते[3]। तस्मात् प्राणान् रक्षितुकामेन शारीरं ज्ञानमवश्यमेवान्वेष्टव्यं भवति।

द्विविधः पुनरस्य शरीरस्य विज्ञानोपायो भवति। बाह्य आभ्यन्तरश्चेति। तत्र बाह्यः पञ्चानामिन्द्रियाणां, विशेषतस्तु दर्शनेन्द्रियस्य, व्यापाररूपः। स जीवच्छरीरं मृतकशरीरं च प्रति प्रयुज्यमानः शारीरं ज्ञानमुत्पादयति। आभ्यन्तरस्तु उपायस्तपोज्ञानर्द्धिसमृद्धैरास्थीयमानो ज्ञानचक्षुर्व्यापाररूपः स्थूलेन्द्रियप्रयत्नमन्तरेणैव सर्वमपि सूक्ष्मानुसूक्ष्ममपि प्रकाशयति। सोऽयमुत्तरोपायो योगिभिरेव शक्यः प्रयोक्तुं, नास्मादृशैः। तस्माद् बाह्यमुपायमाश्रित्य वक्ष्यामः।

द्विविधं च बाह्योपायसाध्यं ज्ञानं शरीरस्य, स्थूलं सूक्ष्मं चेति। तत्र स्थूलं केवलेन चक्षुषा साध्यम्। सूक्ष्मं तु अणुवीक्षणादियन्त्रसहायेन। उभयमप्यावश्यकं शरीरस्य स्थूलसूक्ष्मनिर्माणादिविज्ञानाय।

द्विविधं च शारीरवस्तु, प्राकृतं वैकृतं चेति। तत्र प्राकृतं प्रकृतिस्थे शरीरे दृश्यम्। वैकृतं तु जरा-रोगादिविकृतेष्ववयवेषु। इह तु प्राकृतशारीरमधिकृत्य उपदेशः।

तदेवं चतुर्विधं शारीरज्ञानम्। स्थूलप्राकृतं स्थूलवैकृतं, सूक्ष्मप्राकृतं सूक्ष्मवैकृतञ्चेति। तत्र वैकृतशारीरज्ञानमावश्यकं रोगविज्ञानाय नैदानिकानाम्। जरारोगादिविकृतेऽपि मृतकशरीरे स्थूलं शारीरसंस्थानं प्रायेण प्राकृतमिव दृश्यते। सूक्ष्मनिर्माणन्तु विभिद्यते विकृतावयवेषु क्वचिदाकृतिविशेषश्च।

आह च सुश्रुतः—"तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीड़ितमवर्षशतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्कल-कुश-शणादीनामन्यतमेनावेष्टिताङ्गमप्रकाशे देशे कोथयेत्[4]। सम्यक् प्रकुथितञ्चोद्धृत्य देहं सप्तरात्रादुशीर-बाल-वेणु-वल्कल-कूर्च्चीनामन्यतमेन[5] शनैः

---

१ गर्भाधानकाले यथा यथा पित्रोरान्तरा भावास्तथा तथा गर्भस्यापि सम्भवन्ति, अदृष्टविशेषतश्च तस्मिंस्तस्मिन् काले गर्भसम्भवः। २ कललाद्यवस्थाविशेषैरित्यर्थः। तथाहि सुश्रुतः—"प्रथमे मासि कललं जायते" (सु. शा. ३ अ.) इत्यादि। कललं घनमृदु पिच्छिलं पिण्डम्। ३ तिष्ठन्ति। ४ गलितं कुर्यात्। ५ कूंचीति भाषायाम्।

शनैरवघर्षयंस्त्वगादीन् सर्वानेव बाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेचक्षुषेति[1]" (सु० शा० ६ अ०)।

इदानीन्तनास्तु सद्योमृतशरीरं कोथनिवारणैरुपायैः शोधितं हिमशीतलगृहेष्वभिरक्षितं[2] परीक्षन्ते प्राकृतवैकृत-शारीरविज्ञानाय।

तदेतत् खलु षड़ङ्गं शरीरं शरीरविदो भाषन्ते। अङ्गानि चास्य "शाखाश्चतस्रो, मध्यं[3] पञ्चमं, षष्ठं शिरश्चेति[4]"—(सु० शा० ५ अ०)।

तत्र ग्रहण-धारण-स्थूणन[5]-चलनादिसहायाः शाखाः—द्वौ बाहू, द्वे च सक्थिनी। शोणितसंवहन-श्वसनान्नविपचन-मूत्रोच्चार[6]विभजनाद्याशयानामाधारो मध्यं, प्रकाण्ड इव महीरुहस्याश्रयः शिरसः शाखानाञ्च। श्वासाऽन्नद्वारयोर्मुखमण्डलस्य चाधिष्ठानं, संज्ञावह-चेष्टावहानां[7] नाडीनां ज्ञानेन्द्रियाणाञ्च मूलाधिष्ठानं शिरः, तद्धि ज्ञानायतनमुत्तमाङ्गमाहुः मस्तिष्काधारत्वात्। मस्तिष्कं[8] हि नाम सर्वज्ञानाकरतया मन्यन्ते मनीषिणः। सोऽयं षड़ङ्गस्य देहस्य परिचयो भवति बीजरूपो यमधिकृत्य विस्तरोऽत ऊर्ध्वम्।

भवन्ति चात्र—

"शरीरे चैव शास्त्रे च दृष्टार्थः स्याद्विशारदः।
दृष्टश्रुताभ्यां सन्देहमवापोह्या[9]चरेत् क्रियाः॥

प्रत्यक्षतो हि यद् दृष्टं शास्त्रदृष्टञ्च यद् भवेत्।
समासतस्तदुभयं भूयो ज्ञानविवर्द्धनम्॥"[10] (सु० शा० ६ अ०)

"शरीरं सर्वदा सर्वं सर्वथा वेद यो भिषक्।
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम्॥"
(च० शा० ६ अ०)

---

१ स्थूलोऽयमुपायः सर्वथा सर्वानेव विशेषान्न दर्शयितुं क्षमः। २ एवञ्च ते ते विशेषाः सूक्ष्मानुसूक्ष्माः स्पष्टं परिदृश्यन्ते चक्षुषा। ३ मध्यं मध्यकायः, चरके त्वस्यैव 'अन्तराधि'संज्ञा। अन्तरा शाखादीनां धीयते—इत्यन्तराधिः। ४ चरके तु शिरोग्रीवमिति गृह्यते। स्थूणाः स्तम्भाः, ५ स्थूणनं तत्कर्मकरणमवलम्बनम्। ६ उच्चारः शकृत्। ७ द्विविधा नाड्यः, संज्ञावहाश्चेष्टावहाश्च। तत्र संज्ञावहाः—शब्दादीन् विषयान् मस्तिष्काभिमुखं वहन्ति, येन तत्तद्विषयग्रहणं भवति। चेष्टावहास्तु—मस्तिष्कतश्चेष्टाप्रवर्त्तकान् वेगानादाय नाड़ीतन्तुद्वारेण पेशीः क्रियावतीः कुर्वन्ति। ८ अत एव वाग्भटः—"ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः। मूलप्रहारिणस्तस्माद् रोगान् शीघ्रतरं जयेत्॥ सर्वेन्द्रियाणि येनाऽस्मिन् प्राणा येन च संश्रिताः। तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत्॥" (वाग्भट० उत्तरस्थान० २४ अ०)। ९ दूरीकृत्य। १० समुच्चयतः।

# द्वितीयोऽध्यायः।

अथातः शारीरपारिभाषिकीयमध्यायं व्याख्यास्यामः[१]॥

त्वचः, कलाः, पेश्यः, स्नायवः, सिराः, धमन्यः, रसायन्यः, नाड्यः, धातवो रसादिशुक्रान्ताश्चेति शारीरोपादानसमुच्चयः[२]। आशयाः श्वसनाऽन्नविपचनादिक्रियाकरा बहवः। पञ्च ज्ञानेन्द्रियाधिष्ठानानि[३]। पञ्च कर्मेन्द्रियाधिष्ठानानि[४]। नव द्वाराणि। ललाटभ्रूगण्डादीनि चोपाङ्गानि – इति प्रत्यङ्गावयवसमासः। तत्र—

**त्वचो नाम**—सर्वदेहावरणरूपा भूमिः स्पर्शेन्द्रियस्य,[५] स्रोतसाञ्च स्वेदवहानां, रोम्नामपि सरोमकूपानाम्। ताः स्थूलदृष्ट्या स्तरद्वयविभक्ताः,—बहिस्त्वग्भागोऽन्तस्त्वग्भागश्चेति। तत्र बहिस्त्वङ् नामातीव तन्वी कृष्णगौरादिवर्णाधारा बह्निस्पर्शेण प्लोषपिड़काव्यञ्जना[६] च। अन्तस्त्वङ् नाम स्थूला शरीराभिरक्षणी स्नेहादिकर्षणी च। सैव प्रधानमायतनं स्पर्शभूमेः स्वेदस्रुताञ्च मार्गाणाम्।

प्राञ्चस्तु सूक्ष्मदृष्ट्या क्षीरस्येव सन्तानिकाः सप्त[७] षड् वा त्वचो मन्यन्ते। तासु प्रथमा अवभासिनी नाम, तस्या बाह्यत्वग्भागेनाऽभेदः। अपरासान्तु अन्तस्त्वग्भागेऽनुप्रवेशः। त्वङ्निर्माणविशेषविस्तरस्तु इन्द्रियविज्ञाने वर्णयितव्यः।

**कला नाम**—सूक्ष्मकौषेयवासःसमाकारा नानाविधसंस्थानाः, या मांसस्याऽस्थ्न आशयानाञ्च सर्वेषामन्तर्बहिरावृत्य तिष्ठन्ति, यथादेश-कर्म संज्ञाश्च

---

१ शारीरशास्त्रे वक्ष्यमाणे या याः संज्ञाः प्रयोक्तव्याः, तासां परिभाषा अवश्यमेवादौ वक्तव्या, अन्यथा क्वचिद्द्भ्रान्तार्थेषु तेषां प्रयोगाननुस्मृत्य व्याकुलीकुर्युरर्थान् शिष्या इत्यभिप्रायेणोपक्रम्यतेऽयमध्यायः। २ न खल्वत्रोपादानानि उपादानकारणानि, किन्तु उपादानवत् शरीरनिष्पादकानि। ३ श्रोत्रत्वङ्नेत्ररसनाघ्राणाख्यानि ४। कर्मेन्द्रियाधिष्ठानानि वाक्पाणिपादपायूपस्थानि। यानि तु लोके निर्दिश्यन्ते इन्द्रियाणीति तानि हि इन्द्रियाधिष्ठानानि। इन्द्रियाणि त्वतीन्द्रियाणि। ५ स्पर्शेन्द्रियाधिष्ठानमित्यर्थः। भूमिपदेन परतोऽपि सम्बन्धः। ६ वह्निदाहेन या प्लोषपिड़का समुदेति तया व्यज्यते तन्वी बहिस्त्वक् पृथगेवान्तस्त्वच इति। ७ षडिति चरकस्य मतं, सप्तेति सुश्रुतस्य (सु. शा. ४ अ.)। पाश्चात्यमतेऽप्येवमणुवीक्षणाद्दृश्यञ्च। सन्तानिका दुग्धसरः। अवभासिनीति सुश्रुतोक्ता संज्ञा, चरकमते तु प्रथमा उदकधरा नाम। कृष्णगौरादिवर्णाधारत्वात् अवभासिनी, प्लोषपिड़कायां जातायामुदकेन तां पूरयतीति उदकधरा वा। ता एतास्त्वचः षडङ्गं शरीरमवतत्य तिष्ठन्ति क्वचित् स्थूलाः क्वचित्तन्व्यः।

लभन्ते। ताः "धात्वाशयान्तरमर्यादा"[1]—इति पूर्वे (सु० शा० ४ अ०)। आहुश्च—

"स्नायुभिश्च[2] प्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः॥" इति।
(सु० शा० ४ अ०)

कलाविशेषांस्तु तत्र तत्र प्रसङ्गेषु वक्ष्यामः।

**पेश्यो नाम**—प्राणभृतां सकलचेष्टासाधनानि[3]। ताः मांसमय्यः[4] स्वरूपेण प्रायः स्थूलमध्या रज्ज्वाकाराः क्वचित् प्रच्छदाद्याकाराश्च[5]। ता द्विविधाः—स्वतन्त्राः परतन्त्राश्च, क्रियावैशेष्यात्[6]। तत्र परतन्त्राणां प्रायः सर्वासामेव पेशीनामेकैकस्या द्वौ द्वावन्तौ रजतवर्णावस्थिनिबद्धौ चोभयतः[7] प्रायेण। आकुञ्चनप्रसारणाभ्याञ्च पेशीनां नानाविधचेष्टाभिनिर्वृत्तिः। रज्ज्वाकाराणाञ्च पेशीनां शुभ्रमसृणदृढप्रान्तभागाः कण्डरा[8] इत्युच्यन्ते। ताः स्वरूपतः स्नायुनिर्मिता रजतशुभ्रा बहुभारसहाश्च। तासां पेशीष्वेव[9] स्नायुष्वेव वाऽनुप्रवेशः। "स्नायवो वृत्ताः कण्डरा भवन्ती" ति हि प्राञ्चः (सु० शा० ५ अ०)।

---

१ धातवो—रसादीन्याधेयानि, आशया—आमाशयाद्या आधाराः, तेषामन्तरे मध्ये मर्यादा व्यवधानभूताः, तत्तदाशयानामन्तरावरण्यः कलाः सूक्ष्मपटरूपाः। इह धातव आशयाश्चेत्युपलक्षणमाधेयाधारार्थकं पदद्वयम्। तेन ह्यामाशयादौ ध्रियमाणस्यान्नादेरपि धातुपदेन ग्रहणं, तथाच आमाशयान्तरावरणी या कला सैव तत्र व्यवधायिनी सेयं भुक्तधरा नाम, सिरा-धमन्यन्तरावरणी कला रक्तधरा नाम, अस्थ्यन्तरावरणी कला मज्जधरा नामेति दिक्। तदेतदुच्यते—"धात्वाशयान्तरमर्यादा" इति। पूर्वे—धन्वन्तरिप्रमुखाः। २ स्नायुभिः तदाख्यैः शुभ्रसूक्ष्मसूत्रैः प्रतिच्छन्नान् परस्परानुप्रवेशेन निष्पन्नान्। जरायुः सूक्ष्मजालकमुल्ववत् तेन सन्ततान् व्याप्तान्। श्लेष्मणा तर्पकश्लेषकादिसंज्ञेन तरलपिच्छिलपदार्थेन वेष्टितान्। तथाच सूक्ष्मकौषेयवासःसदृशाः कला इति फलितोऽर्थः। [कला = Membrane—Mucous, Serous, Synovial etc.] एतद्विषयेको विचारविस्तरस्तु 'संज्ञापञ्चकविमर्श'-नाम्नि निबन्धे द्रष्टव्यः। ३ चेष्टाप्रवृत्तिस्तु मस्तिष्कतश्चेष्टावहनाडीराश्रित्य भवति, ताश्च नाड्यः पेशीरनुप्रविष्टाः। चेष्टाप्रवृत्तेः साधनभूता अधिष्ठानभूता हि पेश्य। ४ मांसमय्यः—मांसोपादानाः। ५ प्रच्छदाद्याकाराः—यथा ललाटसङ्कोचनी पेशी, सेयं प्रच्छदपटवदास्तृता शिरश्छादयति। ६ क्रियावैशेष्यञ्चेदृशम्—अन्त्र-हृदयादिनिर्मापिकानां पेशीनां क्रियासु नास्मदिच्छायाः प्रभुता, स्वतन्त्राः हि खल्वेताः। करसञ्चालनादिकरीनां पेशीनां क्रियास्त्वस्मदिच्छाधीनाः, अतएव ताः परतन्त्राः। ७ एकैकतः अस्थिप्रदेशविशेषे (क्वचिदन्यत्र वा) दृढनिबद्धौ, तथाच पेश्याः सङ्कोचे सति अस्थिविशेषैकदेशाकर्षणेन तत्तदङ्गानां चेष्टाविशेषः। चेष्टाभिनिर्वृत्तिः—चेष्टानिष्पत्तिः। ८ कण्डराः—Tendons. ९ पेश्यवयवत्वात् पेशीषु, स्नायुनिमितत्वात् स्नायुषु वा।

**स्नायवो नाम**– सान्द्रमसृणशणगुच्छसमाकाराः सन्धिबन्धनार्थाः प्रायेण। स्नायुशब्दश्चैष[१] द्वयोरर्थयोर्दृश्यते प्रयुक्तः—स्नायुसंहतिषु स्नायुव्यक्तिषु च। तत्र प्रथमः अस्थिसन्धिबन्धनरूपोऽर्थः, स मुख्यः—'प्रतानवतीभिर्हि स्नायुभिर्दृढीकृताः सन्धय"– इति पूर्वाचार्योक्तेः। अथ द्वितीयः स्नायुव्यक्तिरूपोऽर्थः स गौणः। तेन स्नायुशब्दः क्वचित् शणसूत्रवद् दृढशुभ्रसूक्ष्मसूत्राण्यभिधत्ते। तथाहि—कलासु कण्डरासु पार्श्वपृष्ठोरःपेश्यन्तेषु आमाशय-पक्वाशय-वस्त्यन्तभागस्थशुषिरपेशीषु च दृश्यते यः स्नायुशब्दः प्रयुक्तः पूर्वैः, सोऽस्मिन्नेवार्थे। आहुश्च—

"स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा॥
प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्वाः विज्ञेयाः कुशलैरिह॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ॥
नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्वृता।
भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता॥
एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः।
स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः॥" (सु० शा० ५ अ०)

**सिरा[२] नाम**—अविशुद्धशोणितवहाः[३] सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे। ताभिः शरीरप्रचारान्मलिनीभूतं शोणितमभिप्रवर्तते हृदयाभिमुखम्। निखिलदेहव्याप्तानाञ्च तासां मिलितानामाशयो हृदयं समुद्र इवापगानाम्।

---

१ हन्त तावदयं स्नायुशब्दो वङ्गभाषायां कदाचित् केषाञ्चिद् भ्रान्तप्रयोगदर्शनात् नाड्यर्थे (To imply Nerves) प्रयुज्यते बहुशः। तथाच न भ्रमितव्यम्। न खल्वेष स्नायुशब्दः कदाचिदपि कथञ्चिदपि संज्ञावहचेष्टावहनाड़ीरूपमर्थं प्रकाशयति। यश्च तावच्छास्त्रे जातिव्यक्तिरूपो द्विविधोऽर्थो दर्शितः स युक्त एव, यथा तृणशब्दस्तृणविशेषे तृणजातौ च प्रसिद्धो दृश्यते, यथा च लोहमृगादयोऽपि शब्दाः। स्नायुः = Ligament (संहत्यर्थे) or Fibrous tissue (व्यक्त्यर्थे)।
२ सिराधमनीशब्दयोरस्मिन् शास्त्रे विशिष्टार्थयोर्निरोधः क्रियते, अन्यथा लभ्यमानचरकसुश्रुतादिषु प्रतिसंस्कर्तृप्रयोगाननुस्मृत्य व्याकुलीकुर्युरर्थानविशेषविदः। एतत्प्रासङ्गिको विचारविस्तरस्तु उपोद्घाते 'संज्ञापञ्चकविमर्शे' च द्रष्टव्यः। [सिराः = Veins; धमन्यः = Arteries]. ३। इदं सामान्यतः। फुस्फुसप्रभवासु सिरासु तु विशुद्धं रक्तं वहतीति विशेषः।

**धमन्यो नाम**—विशुद्धशोणितवहाः[1] सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे। तासां मूलं हृदयं, तद्धि धमनीद्वारेण सर्वत्र शरीरे शोणितं धमति विक्षिपति वा। ताभिर्जीवरक्तवाहिनीभिः केदार इव कुल्याभिरभिप्रीयते शरीरं सिराधमनीनां प्रान्तस्थेभ्यो जालकेभ्यः प्रस्रुतया लसीकया।

सिराधमनीनाञ्च रक्तस्रोतांसीति साधारणी संज्ञा, केवलं सिरेति संज्ञा वा प्राचाम्।

**रसायन्यो[2] नाम**—लसीकाख्यतन्वच्छरसवाहिन्यः प्रणाल्यः। ता हि निखिलदेहप्रसृता जालकेभ्यः प्रस्रुतां लसीकां धातुपोषणावशिष्टां भूम्ना संगृह्णन्ति। अनुविद्धाश्च ताः कक्षा-वंक्षण-गलादिषु प्रदेशेषु गुञ्जा-निम्बफलाद्याकारैर्ग्रन्थिभिः।

**नाड्यो[3] नाम**—मृदुसूक्ष्मसूत्रसंघातमय्यो नीरन्ध्रास्तन्त्र्योऽस्मिन् शास्त्रे। ताश्च समाश्रित्य संज्ञा-चेष्टयोरभिप्रवृत्तिः। तासां भगवान् वायुरधिष्ठाता[4]। स हि विभुरचिन्त्यशक्तिरखिलान् शब्दादीन्विषयानादत्ते प्रवर्त्तयति च नानाविधाश्चेष्टाः क्रमेण संज्ञावहाश्चेष्टावहाश्च नाडीरधिष्ठाय। तासां च निखिलानां नाडीनां मूलं मस्तिष्कं सुषुम्णा च स्वतन्त्रनाडीतन्त्रसहिता। सर्वासाञ्चासां विस्तरं यथास्थानं वक्ष्यामः।

[ **स्रोतांसीति**—तु शारीरमार्गाणां साधारणी संज्ञा। तथाहि चरकः—"स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्त्ययनार्थे" ]

---

१ शरीरप्रचारान्मलिनीभूतं हि शोणितं फुस्फुसान्तः श्वासवायुसमानीत-विष्णुपदामृत (Oxygen)-संयोगात् शुद्धीभूतं पुनर्हृदयागतं हृत्संकोचेन विक्षिप्यते सर्वतो धमनीभिः। एवञ्च फुस्फुसीयरक्त-संवहने सिराधमनीशब्दयोः किञ्चिदर्थविपर्ययः फुस्फुसगामिधमन्यां फुस्फुसागतसिरासु च वक्ष्यते। तत्रापि हृदयान्निर्गता धमन्यः, हृदयाभिमुख्यः सिरा इति नियमस्तु स्थिर एव। सिराधमनीशब्दयो-रुचितानुचितार्थेषु प्रयोगास्तद्विषयकविचारश्च उपोद्घाते 'संज्ञापञ्चकविमर्शे' च द्रष्टव्याः।
२ रसायन्यः—Lymphatics. रसायनीति चरककृतेयं संज्ञा ( च. वि. ५ अ. )। ३ नाडीशब्दस्येह तन्त्र्युक्तार्थे निरोधः। ( नलिकार्थे प्रयुक्तो नाडीशब्दस्तु पृथगेव )। ताश्च नाड्यो विद्युद्वहधातुमय-सूत्रवत् रन्ध्रहीनास्तन्त्र्यः। तासु काश्चित् शब्दादिसंज्ञाः प्रापयन्ति मस्तिष्काभिमुखं, ताः संज्ञावहा नाम (Sensory Nerves)। अपरास्तु मस्तिष्कतो बहिर्मुखं नयन्ति चेष्टावेगविशेषान्, ताश्चेष्टावहा नाम ( Motor Nerves )। ४ स चायमचिन्त्यशक्तिर्वायुर्नाम येन समुत्पाद्यन्ते अन्तर्मुखा बहिर्मुखाश्च वेगाः। अतएव चरकः—"वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्याना-पानात्मा, प्रवर्त्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योतकः सर्वेन्द्रियार्थानामभिवोढे"त्यादि ( च. सू. १२ अ. )। तीसटाचार्योऽप्याह—"चेष्टाचेतनयोस्तनौ तनुभृतां धाता तु वायुः स्मृतः।" ( चिकित्साकलिका १७ )

**धातवो नाम**—प्रीणन-जीवन-चालन-स्नेहन-धारण-गर्भोत्पादनादि-कराणि शारीरोपादानानि। ते सप्तसंख्याः—"रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" इति। तत्र—

**रसो नाम**—चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याहारस्य सम्यक्परिणतस्य तेजोभूतः सारः सौम्यः। "रस गतौ धातुरहरहर्गच्छतीति[१] रसः।" स खल्वाप्यो रसो भुक्तमार्गस्थैरतिसूक्ष्मैः स्रोतोभिराकृष्यमाणो यकृत्प्लीहानौ प्राप्य पाकरागावुपैति रक्तसंज्ञाञ्चानन्तरं लभते। भवति चात्र—

"रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम्।
अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते॥" (सु० सू० १४ अ०)

[ **लसीका**[२] **तु**—शोणितस्यैव तन्वच्छजलभागो जालकेभ्यः प्रस्रुतः सर्वधातुपोषणः, तस्य धातुपोषणावशेषांशो रसायनीषु प्रचरिष्णुः। तस्या रस एवाऽन्तर्भावः। ]

**रक्तं नाम**—सकलधातुप्रीणनः सारः शरीरस्य रस एव रञ्जकाख्येन पित्तेन तथा विपरिणमितः। तस्य च संग्रहणप्रेरणस्थानं हृदयम्[३], तद्धि हृदयादेव धमनीरनुप्रविश्य[४] कृत्स्नं शरीरमहरहस्तर्पयति वर्द्धयति धारयति जीवयति यापयति च। मलिनीभूतश्च तत् शरीरप्रचारात्, सिराभिः प्रविशति हृदयमेव पुनः शुद्ध्यर्थं फुस्फुसाभिगमनाय।

**मांसं नाम**—पेशीनामुपादानधातुर्मृदुलोहिततन्तुमयो जलौकाशरीरवत् सङ्कोचप्रसरणशीलः।

**मेदो नाम**—सान्द्रसर्पिस्तुल्यः स्नेहधातुः शरीरस्य। तस्य स्थानमुदरान्तः[५], त्वचामधस्तात्,[६] अन्तरालेषु च पेश्यादीनाम्।

[ **वसा तु**—मांसान्तरनुप्रविष्टः सूक्ष्मतरः स्नेहभागस्तस्या मेदस्यनुप्रवेशस्तुल्योपादानत्वात्। ]

---

१ रसपदेन क्वचिद्रक्तस्यापि ग्रहणं प्राचाम्, यथा "रसवहानां स्रोतसां हृदयं मूलम्" (च० वि० ६ अ०) इति। धमति हि शुद्धशोणितं सर्वत्र शरीरे हृदयम्। वाग्भटे चोक्तं—"दश मूलसिरा-हृत्स्थास्ताः सर्वं सर्वतो वपुः। रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम्"-इति (अष्टाङ्गहृ० शा०)। तच्च शरीरप्रचारान्मलिनीभूतं रक्तं पुनरभिप्रपद्यते हृदयं शोधनार्थं फुस्फुसगमनाय। तस्मादुच्यते, "अहरहर्गच्छती"ति। २ लसीका—Lymph. ३ तथाच सुश्रुतः—"तस्य च हृदयं स्थानमित्यादि।" (सु० सू० १४ अ०) चतुःप्रकोष्ठं च हृदयम्, तद्विवरणमग्रे वक्ष्यते। ४ उक्तञ्च—"आरुह्य धमनीर्गत्वा सर्वान् धातूनयं रसः"—इत्यादि। ५ उदरच्छदभूतायां वपाख्यस्थूलकलायाम् (In the Omentum) इति भावः। ६ मेदोधराख्यकलायां सर्वदेहच्छादिन्याम् (In Superficial Fascia)।

**अस्थीनि नाम**—स्थिरकठिनावलम्बनो धातुः कायस्य, यमाश्रित्य समग्रं शरीरमवतिष्ठते। विशेषश्चास्थ्नामनुपदं व्याख्यास्यामः।

**मज्जा नाम**—अस्थिमध्यगतः स्नेहः। स द्विविधः पीतो रक्तश्च, तत्र पीतो नलकास्थ्नामन्तः, रक्तस्त्वितरास्थिषु प्रान्तभागेषु च नलकास्थ्नाम्। सोऽयं स्थूलरूपेण मेदसोऽभिन्नोऽपि कर्म-निर्माणवैशेष्यात् पृथगेव धातुः। रक्तमज्जा तु शोणितस्य शोणकणिकाप्रभवः—इति नव्याः।

**शुक्रं नाम**—प्रजाजननार्थश्चरमो धातुः। तस्य प्रभवस्थानं मुष्कौ[1]। स्रोतसी चास्य द्वे मूत्रमार्गमुभयतः प्रतिबद्धे सह शुक्राधारिकयोः स्रोतोभ्याम्।

तच्च शुक्रमव्याकृतं "स्फटिकाभं द्रवं स्निग्धं मधुरं मधुगन्धि च" इत्याहुः। त एते रसादिशुक्रान्ता धातवः। [ प्राकृता वातपित्तश्लेष्माणोऽपि कदाचिद् देहधारणाद् धातुसंज्ञाः ]

**आशया[2] नाम** — श्वसनाऽन्न-विपचन-शोणितसंवहनादिक्रियाकराणि-यन्त्राणि विविधानि। तेषां तिसृषु गुहास्ववस्थानम्। तास्तु यथा—शिरोगुहा, उरोगुहा, उदरगुहा चेति [ द्रश्यतां पुरश्चित्रम् ( ग्रन्थारम्भे ). ] तत्र

**शिरोगुहायां**—मस्तिष्कमनुमस्तिष्कं सुषुम्णाशीर्षकञ्च[3] सपरिकरम्। तदेतत् त्रयं निखिलसंज्ञाचेष्टामूलं, येन संबध्यते निम्नतः सुषुम्णाकाण्डः पृष्ठवंशान्तरस्थः। सेयं प्रथमा शिरोगुहा व्याख्याता भवति।

**उरोगुहायां**—फुस्फुसद्वयं[4] हृदयञ्च[5] साङ्गोपाङ्गं प्रधानम्। तत्र श्वसनार्थौ फुस्फुसौ श्वासपथेन कण्ठाभिगतेनोरसि द्वेधा विभक्तेन प्रतिबद्धौ। शोणितसंग्रहण-प्रेरणार्थकं नियतस्पन्दनशीलं हृदयं पुण्डरीकाकारं फुस्फुसयोरन्तरालस्थं, तत्र प्रतिबद्धं महासिराद्वयं, महाधमनीमूलं, फुस्फुसीया महासिरा, फुस्फुसागतं सिरा-चतुष्टयं च यथास्थानं वक्ष्यमाणम्—इति द्वितीया उरोगुहा व्याख्याता भवति।

**उदरगुहायां**—भुक्तमात्रस्याधारो दृतिसमाकार आमाशयः[6], स नाभेरूर्ध्वम्। पच्यमानस्य विपक्वस्य चाशयः अन्त्राणि[7] नाभेरधः परितश्च। तत्र क्षुद्रान्त्राणि

---

१ "यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा" इत्याद्यभिधानन्तु पुंलक्षण-श्मश्रुगुम्फादिसम्पादकं-सर्वशरीरचरशुक्रस्य बोधनार्थम्। तद्विवरणमग्रे। २ आशयविवरणविस्तरस्तु आशयखण्डे द्रष्टव्यः।
३ मस्तिष्कम्=Cerebrum or Brain. अनुमस्तिष्कम्=Pons & Cerebellum. सुषुम्णा-शीर्षकम्=Medulla Oblongata. ४ फुस्फुसद्वयम्=Lungs. ५ हृदयम्=Heart.
६ आमाशयः=Stomach. ७ अन्त्राणि=Intestines.

पच्यमानाशयः[1], बृहदन्त्रं[2] तु पक्वाशयो मलाशयो वा। सर्वान्त्राणां वा पक्वाशयसंज्ञे-त्यन्ये। पाचक-रञ्जकपित्तयोः प्रभवो यकृत्[3], तत्र संलग्नः पित्ताशयः[4] (पित्तकोषो वा)। रञ्जकपित्तप्रभवः प्लीहा[5]। यकृत्प्लीह्नोश्च स्थितिः क्रमेण दक्षिणतो वामतश्चा-माशयात्। पृष्ठत आमाशयात् कुठारिकाकारोऽग्न्याशयः[6], स पाचकस्याग्नेयरसस्य प्रभवः। मूत्रप्रभवौ महाशिम्बीबीजाकारौ कोषौ वृक्कौ[7] नाम कटिपार्श्वयोः। वृक्कप्रभवस्य मूत्रस्य मूत्रस्रोतोभ्यां समागतस्याशयो[8] वस्तिर्नाम, स नाभेरधः। योनेरूर्ध्वमुखप्रतिबद्धः क्षुद्रकलसाकारो गर्भाशयः[9], स स्त्रिया एव। सोऽयं स्वमुष्टि-मात्राकारोऽगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भमभिवर्द्धते। तस्य चोभयोः पार्श्वयोर्बीजार्त्तवप्रभवौ बीजकोषौ[10] नाम, तौ बीजस्रोतोभ्यां[11] प्रतिबद्धौ गर्भाशयेन—तावेव तु पुरुषस्य बहिःस्थितौ मुष्कौ[12] नाम शुक्रप्रभवौ। सेयं तृतीया उदरगुहा व्याख्याता भवति। ता एतास्तिस्रो गुहाः, यासु निखिलाशयानामवरोधः।

**पञ्च ज्ञानेन्द्रियाधिष्ठानानि**— श्रोत्र-त्वङ्-नेत्र-रसना-घ्राणाख्यानि। तत्र—

**श्रोत्रे**—द्वे श्रवणेन्द्रियाधिष्ठाने। तदवयवास्तु—कर्णशष्कुल्यौ[13] कर्णकुहरे[14] श्रुतिपटहादीनि[15] चेति।

**त्वचो**— व्याख्याताः। ताः स्पर्शेन्द्रियाधिष्ठानम्।

**नेत्रे**—द्वे दर्शनाय। तत्र प्रतिनेत्रमवयवाः—सपक्ष्मणी नेत्रपुटे, नेत्र-वर्त्मनी, अक्षिगोलके च सिरा-धमनी-पेशीजालवेष्टिते इति। अक्षिगोलकयोः पश्चात् प्रतिबद्धे दृष्टिनाड्यौ।

**रसना**— नाम पेशीमयं यन्त्रम्, तस्योर्ध्वतले स्वादग्राहिनाड्याः प्रतानमुखानि स्वादांकुरेषु प्रतिबद्धानि। वाग्यन्त्रोपकरणं च रसना। तत्र हि वाग्वाहिनाड्या अपि प्रतानास्तत्तत्पेशीषु प्रतिबद्धाः।

---

१ क्षुद्रान्त्राणि पच्यमानाशयः=Small Intestines. २ बृहदन्त्रं=Colon. ता एताः फुस्फुसादयः प्राचीनसंज्ञाः। ३ यकृत्=Liver (लिभर)। ४ पित्ताशयः—Gall-Bladder (गल् ब्लाडार)। ५ प्लीहा=Spleen (स्प्लीन)। ६ सर्वाहारजरणान्नमस्य रसविशेषस्याग्नि-स्वरूपस्य धारणादग्न्याशयः=Pancreas. सोऽयं क्लोमेति केचित्। तत्तुच्छम्, दृश्यतामुपोद्घातः। ७ वृक्कौ=Kidneys, ८ मूत्रस्रोतसी गवीनीसंज्ञे वृक्काभ्यां निर्गत्य वस्तिमभिप्रपन्ने=Ureters. वस्तिः=Bladder. ९ गर्भाशयः=Uterus. १० बीजकोषौ=Ovaries. ११ बीजस्रोतसी= Fallopian or Uterine Tubes. १२ मुष्कौ=Testicles. १३ कर्णशष्कुल्यौ=Pinnae of the Ears. १४ कर्णकुहरम्=External Auditory Meatus. १५ श्रुतिपटहः= Tympanic Membrane. आदिपदात् श्रुतिशम्बूकादीनि इन्द्रियखण्डे वक्ष्यमाणानि।

**घ्राणे**—द्वे अस्थिप्राचीरकेण द्विभागविभक्ते। तदवयवास्तु– घ्राण-पुटे, घ्राणविवरे, घ्राणकला, घ्राणपथश्च त्रिभूमिविभक्तः। तदन्तःस्थायां घ्राण-कलायाञ्च गन्धग्राहिनाड्याः प्रतानाः।

सर्वेषाञ्चैषां विस्तरमिन्द्रियखण्डे वक्ष्यामः।

**पञ्च कर्मेन्द्रियाधिष्ठानानि**—वाक्पाणिपादपायूपस्थसंज्ञानि। तत्र—

**वागिन्द्रियाधिष्ठानम्**—जिह्वासमवेतं स्वरयन्त्रं कण्ठस्थम्; वाचो हि कण्ठघोषेण नानाविधजिह्वाप्रचेष्टन-परिणमितेनाभिनिष्पाद्यन्ते।

**पाणिपादम्**—ग्रहण-धारण-स्थान-चलनादिसहायमित्युक्तपूर्वम्।

**पायुर्नाम**—मलविक्षेपकर्मा बृहदन्त्रस्य प्रान्तभागो गुदसंज्ञः।

**उपस्थो नाम**—जननेन्द्रियम्—पुरुषस्य शिश्नः, स्त्रिया योनिरिति।

**नव द्वाराणि**—चक्षुषी, श्रोत्रे, नासाविवरे, मुखं, पायुः, मूत्रमार्गश्चेति। स्त्रियास्तु त्रीण्यधिकानि—स्तनावपत्यपथश्चेति।

[**मर्माणि नाम**—"मांस-सिरा-स्नाय्वस्थि-सन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति। तस्मान्मर्मस्वभिहतास्तांस्तान् भावानापद्यन्ते। तान्येतानि पञ्चविकल्पानि मर्माणि। तद्यथा– सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणि चेति। सप्तोत्तरञ्च मर्मशतमत्र काये"—इति प्राञ्चः[१]।]

अथेदानीं प्रत्यङ्गावयवविशेषान् ब्रूमः। तत्र—

**शिरोग्रीवोपाङ्गानि**—ललाटं, भ्रुवौ, शङ्खौ, गण्डौ, ऊर्ध्वहनुमण्डलम्, अधोहनुमण्डलम्, ओष्ठाधरौ, चिबुकं, शिरोधरा चेति स्पष्टार्थानि।

**मध्योपाङ्गानि**—स्तनौ, वक्षः, पार्श्वौ, पृष्ठम्, उदरं, कुक्षिद्वयं, नाभिः, वस्तिदेशः, कटिः, त्रिकञ्चेति[२] प्रसिद्धार्थानि।

**शाखोपाङ्गानि**—अंसः, कक्षा, प्रगण्डः, कफोणिः, प्रकोष्ठः, मणिबन्धः, पाणितलं, पाणिपृष्ठम्, अंगुलयश्चेति प्रतिबाहु उपाङ्गानि। तत्रांसो भुजशिरः। भुजवक्षसोः सन्धिः कक्षा। अंसात् कफोणिं यावत् प्रगण्डः। बाहुमध्यसन्धेः पृष्ठभागः कफोणिः, स एव कूर्परोऽपि। कफोणेरधश्चोर्ध्वं मणिबन्धात् प्रकोष्ठः।

---

१ यथा सुश्रुतशारीरषष्ठाध्याये। इदानीन्तनशल्यतान्त्रिकनैपुण्येन तु बहवो मर्माभिघाताः साध्याः—इति पृथगुपदिष्टानि मर्माणि। न च भ्रमितव्यं मर्मस्वभिहतेषु मृत्युरेव भवति नियमेनेति। २ त्रिकं नाम पृष्ठवंशस्याधरो भागः, यत्र सन्धीयेते श्रोणिफलके उभयतः।

करप्रकोष्ठयोः सन्धिर्मणिबन्धः। मणिबन्धादाकनिष्ठं करस्य वहिर्भागः करभः। अधो मणिबन्धात् पाणिः करापरपर्यायः। पाणेः सम्मुखो रेखांकितो भागः पाणितलम्, तद्विपरीतं पाणिपृष्ठम्। अंगुष्ठ-तर्जनी-मध्यमा-ऽनामिका-कनिष्ठाख्याः पञ्च करांगुलयः।

जघनं, वंक्षणः, ऊरुः, जानु, जङ्घा, गुल्फौ, पादसन्धिः, पार्ष्णिः, पादतलं, प्रपदं, पादपृष्ठम्, अंगुलयश्चेति प्रतिसक्थि उपाङ्गानि। तत्र जघनं नाम श्रोणिपार्श्वम्—सक्थिशिरःस्थम्। मध्यकाय-सक्थ्नोः सन्धिर्वंक्षणः। वंक्षण-जानुनोर्मध्यमूरुः। ऊरुजङ्घयोः सन्धिर्जानु। जानुनोऽधस्तात् जङ्घा। जङ्घाया अधोभागे उभयतो गुल्फौ। तयोर्मध्येऽधस्तात् पादसन्धिर्गुल्फसन्धिर्वा। तदधः पादः। तदवयवास्तु पादपश्चिमो भागः पार्ष्णिः, पादाग्रं प्रपदं, रेखांकितो भागः पादतलम्, तद्विपरीतं पादपृष्ठम्, पादांगुलयश्च पञ्च करांगुलिवदेव इति।

सा खल्वियं शारीरपरिभाषा, या सम्यगवगता निखिलमपि शारीरतत्वमग्रे वक्ष्यमाणमवबोधयिष्यति।

तथा चाहुः—

"अव्यक्तानुक्तलेशोक्तसन्दिग्धार्थप्रकाशिकाः।
परिभाषाः प्रकथ्यन्ते दीपीभूताः सुनिश्चिताः॥"
"शरीरसंख्यां यो वेद सर्वावयवशो भिषक्।
तदज्ञाननिमित्तेन मोहेन स न युज्यते॥" (च० शा० ९ अ०)

---

## तृतीयोऽध्यायः।

अथातः अस्थिसामान्यवर्णनीयमध्यायं व्याख्यास्यामः।

**अस्थीनि नाम**—स्थिरकठिनावलम्बनधातुः शरीरस्य यत्र प्रतिबध्यन्ते मांसपेश्यन्ताः स्नायवश्च। तानि प्रथमतः परिज्ञेयानि, तेषां प्रधानालम्बनत्वात् कायस्य। तथाह्युक्तम्—

"अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः।
अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम्॥
तस्माच्चिरविनष्टेषु त्वङ्मांसेषु शरीरिणाम्।
अस्थीनि न विनश्यन्ति साराण्येतानि देहिनाम्॥" (सु० शा० ६ अ०)

तान्युपादानद्वितयसंयोगादभिनिष्पद्यन्ते। उपादानद्वितयञ्च—कोमलः स्नायुसंघातभागः, कठिनः सुधाबहुलभागश्चेति[१]। कोमलस्नायुतन्तुजालकेषु कठिनसुधांशसंयोगाद्धि[२] सर्वास्थ्नामभिसम्भवः।

अथास्थ्नां द्विरूपमावरणम्—बाह्यमाभ्यन्तरञ्च। तत्र या बहिरावृणोत्यस्थीनि, सा अस्थिधरा नाम कला[३] जीवभूमिरस्थ्नाम्। या त्वन्तरावृणोत्यस्थिविवराणि अन्तर्वेष्टनीभूय, सा मज्जधरा[४] नाम कला स्वनामव्याख्याता।

द्विविधश्चास्थ्नामुपादानसङ्घातविशेषश्छेदेन दृश्यः—घनसङ्घातः शुषिरसङ्घातश्चेति[५]। तत्र घनसङ्घातः सर्वास्थ्नां बहिर्भागेषु, विशेषतश्च नलकास्थ्नाम्। शुषिरसङ्घातः क्षुद्रविषमास्थ्नां कपालास्थ्नाञ्चाभ्यन्तरतः,[६] प्रान्तेषु च नलकास्थ्नाम् लोहितमज्जधारणाय।

सूक्ष्मनिर्माणं पुनः कठिनास्थ्नामुत्तरोत्तरावेष्टकप्राकारवद् विन्यस्तैः सूक्ष्मैरस्थिकोषाणुकैः[७], तच्च दृश्यमणुवीक्षणयन्त्रसहायेन चक्षुषा। तरुणास्थ्नान्तु निर्माणमस्थिकोषाणुकयुग्मैरन्यथा विन्यस्तैः। (तद्विशेषाः १म चित्रे द्रष्टव्याः)

एष पुनरस्थ्नां पोषणप्रकारः। धमन्यः सर्वास्थिषु स्फुटानि विवराण्या[८]श्रित्य प्रविशन्ति, प्रसरन्ति चानेकधा सूक्ष्मानुसूक्ष्मैः प्रतानैरस्थिसुरङ्गासु सूक्ष्मासु—एवं पोषणार्थं शुद्धरक्तागमः। सिराश्च तत्सहचर्यः तैरेव मार्गैरविशुद्धं[९] रक्तं बहिर्नयन्ति—एवमविशुद्धरक्तविसर्गः।

अथैषां सर्वेषामेवास्थ्नां बाल्ये तारुण्यं[१०] संख्याबाहुल्यञ्च, वयःपरिणामेन कठिनोभावः संख्याल्पत्वञ्च परस्परसंयोगेन[११] आ पञ्चविंशवर्षात्। श्वासपथादिगतानान्तु नियतमेव तारुण्यमन्यत्र वार्द्धकात्। वार्द्धके हि नियततरुणानामपि केषाञ्चित् काठिन्यसम्भवः; कठिनानाञ्च भंगुरत्वम्, सुधांशाधिक्यसम्भवात्। तेन दुर्लभं तदानीं भग्नानामस्थ्नां सम्यक् प्रतिसन्धानम्।

कठिनोभावश्च तरुणास्थ्नां तन्मध्यवर्त्तिनः केन्द्रविशेषानाश्रित्य तदभितः प्रसर्पति। ते अस्थिकेन्द्रसंज्ञाः[१२]। तत्र नलकास्थ्नां प्रान्तभागाः प्रायेण बाल्ये पृथग्भूताः

---

१ सुधा—चूर्णकम् (Lime)। २ शणसूत्रवद्दृढ-सूक्ष्मतन्तुजालकेषु कठिनचूर्णवद्वस्तुसंयोगेन ह्यस्थ्नां निर्माणमित्यर्थः। तरुणास्थीनि तु नातिकठिनानि कोमलस्नायुभागस्याधिक्याद्। ३ सेयं कला (Periosteum) चेदभिहन्यते, तदा तदावृतमस्थ्यपि शीर्यते, अत एव जीवभूमिरियमस्थ्नाम्। ४ मज्जधरा कला = Endosteum. ५ सुधांशाधिक्ये सति घनसङ्घातः, स्नाय्वंशाधिक्ये शुषिरसङ्घातः (Compact tissue and Cancellous tissue). ६ कपालास्थ्नामपि बाह्याभ्यन्तरावरणफलकद्वयं घनसङ्घातमयमेव। ७ Bone-cells. ८ Nutrient Foramina. ९ हृदयाभिमुखं नयन्तीति भावः। १० कोमलत्वम्। ११ बहवः खल्वस्थ्यवयवाः प्रौढावस्थारम्भे कठिनीभूय परस्परं संयुज्यन्ते। १२ अस्थिकेन्द्रम् = Nucleus of Bone.

केन्द्रान्तरेभ्यः प्रवर्द्धन्ते, तांश्च तथाविधान् प्रान्तास्थि[1] संज्ञया निर्दिशन्ति नव्याः। दृश्यते च प्रान्तास्थ्नां प्रायो मध्यनलकेभ्यो विश्लेषः शिशूनां सन्धिविश्लेषे इति स्मर्त्तव्यम्।

आकृतितः पुनः पञ्चविधान्याहुरस्थीनि प्राञ्चः। तानि—"कपाल-रुचक-तरुण-वलय-नलकसंज्ञानि।" तत्र कपालाकृतीनि कपालानि, यथा शिरसि। दशनास्तु रुचकानि[2]। घ्राणकर्णादिषु तरुणानि। पार्श्वपृष्ठोरःसु वलयानि[3]। शाखासु नलकानि। इतराण्यपि सन्ति क्षुद्रकठिनान्यस्थीनि, येषां नैतेष्वन्तर्भावः सुकरः। तानि विषमाणि[4] नाम यथा पाणिपादकूर्चास्थीनि।

संख्यातस्तु त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो[5] भाषन्ते। त्रीणि शतानि शल्यतन्त्रविदः[6]। द्वे शते प्रतीच्याः[7]। आपातविरुद्धवादिनोऽपि सर्वे एवैतेऽवितथमाहुः। गणनाप्रकारभेदात्। तथाहि वेदवादिनो नख-दन्तादीनि तरुणास्थीनि चास्थिगणनायामन्तर्भावयन्ति, नैवमितरे। तरुणास्थीनि दशनांश्च[8] गणयन्ति शल्यतन्त्रविदः प्राच्याः, नैवं प्रतीच्याः। पृथग्वयोग्रहणाच्च। प्राञ्चो हि यौवनप्रविष्टस्य[9] सञ्चक्षतेऽस्थीनि, प्रौढस्य तु प्रतीच्याः। ये हि खलु तावदस्थ्यवयवाः पृथक् सन्ति किशोरवयसस्त एव एकीभूय बहुधा सम्पूर्णास्थीनि स्वल्पसंख्यानि निष्पद्यन्ते प्रौढस्येति हि संख्याल्पत्वं नव्यानाम्।

इह तु प्रौढकाये प्रत्यक्षदृष्टानि कठिनास्थीन्येव संचक्ष्महे—गणनासौकर्याल्लाघवाच्च। तरुणास्थिनखदशनानान्तु नेह गणना। तरुणास्थ्नामसंख्येयप्रायत्वात्, अस्थिरसंख्यत्वाच्च, नखदशनानाञ्च त्वग्विपरिणाममात्रत्वात्[10]। एवञ्चेह कठिनास्थीनि चतुर्विधान्येव—कपालानि, वलयानि, नलकानि, विषमाणि चेति। तरुणास्थीनि तु वलय-पत्रकादिनानाविधाकृतीनि।

अथैषां सङ्ख्यानम्। तत्र—

**शाखाऽस्थीनि**—यथा [ दृश्यतां कङ्कालचित्रद्वयम् (१।२) ]—एकैकस्यां पादांगुल्यां त्रीणि त्रीणि, द्वे अंगुष्ठे इति चतुर्दश[11] अंगुलीषु। पंचानामंगुलीनां

---

१ Epiphysis. २ रुचकानि, रुचकाकारत्वात्। रुचकं नाम कङ्कतिका ( कंकही, चिरुणीति वा भाषा )। ३ पूर्णवलयवत्तदंशवद् वा दृश्यमानत्वात्। ४ उच्चावचाकारत्वात्। ५ चरक-याज्ञवल्क्यादयः। ६ सुश्रुतभेलाद्याः। ७ यूरोपीयाः। ८ न तु नखान्। ९ कशेरुकावयवादीनां पृथक्संख्यानदर्शनात् स्फुटमनुमीयते खल्वेतत्। १० त्वच एव विपरिणामेन निष्पद्यन्ते नखा दशनाश्च शैशवे। तेषामस्थिषु गणनं वेदवादिनां युज्यत एव, दशनादीनामपि गङ्गाजलादौ निःक्षेपे अस्थिनिक्षेपफल-स्वीकारात्। ११ यत्तु सुश्रुते "एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणीति पञ्चदश"—इति, तत् लिपिकरप्रमादजन्यम्, प्रत्यक्षविरोधात् स्वोक्तिविरोधाच्च। तथा हि सन्धिगणनायां "एकैकस्यां पादाङ्गुल्यां त्रीणि त्रीणि द्वे अङ्गुष्ठे" इति अङ्गुलीसन्धीनां चतुर्दशैव संख्या निर्दिष्टा (सु० शा० अ०)। अङ्गुल्यस्थीनि = Phalanges.

## द्वितीय चित्रम्—नरकङ्कालम् (१)—( सम्मुखतो दृष्टम् )।




चित्रव्याख्या—मू० करमूलशलाकाः । अं० करांगुलिनलकानि ।



( To face page 16 )

## तृतीय चित्रम्—नरकङ्कालम् (२)—(पार्श्वतो दृष्टम्)।



मूलतः शलाकाः[1] पञ्च । तन्मूले पादकूर्चास्थीनि[2] सप्त । जङ्घायां[3] द्वे । जानुन्येकम्[4] । एकमूरावि[5]ति । त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति । तथा द्वितीये ।

बाहौ तु अङ्गुलीषु चतुर्दश । शलाकाश्च[6] पञ्च पूर्ववत् । पाणिकूर्चास्थीनि[7] अष्टौ । प्रकोष्ठे[8] द्वे । प्रगण्डे[9] एकम् । त्रिंशदेवमेकस्मिन् बाहौ भवन्ति । तथा द्वितीये । एवं शाखासु सविंशतिकमस्थिशतं द्रष्टव्यम् ।

**अथ मध्यशरीरे अस्थीनि**—तत्र शरीरस्य मध्यालम्बनभूते पृष्ठवंशे कण्ठादारभ्य कटिं यावत् चतुर्विंशतिः कशेरुकाः[10] । तदनुबन्धेन त्रिकसंस्थमेकं त्रिकास्थि[11] नाम ( तदस्थिपञ्चकसङ्घातमयम् ) । तदनुबन्धेन च गुदपश्चिममेकम् अनुत्रिकं[12] गुदास्थि वा नाम ( तदपि तथैव ) । श्रोण्योर्द्वे कपालास्थिनी[13] श्रोणिफलके नाम । उरसि पुरो मध्यफलकमेकम् उरःफलकं[14] नाम ( तदस्थित्रयसंयोगजम् ) । अक्षके[15] द्वे तदुभयतः । अंसफलके[16] द्वे अंसपृष्ठतः । पार्श्वयोरेकैकस्मिन् द्वादशेति चतुर्विंशतिः पर्शुकाः[17] । ग्रीवायां पुरो रसनामूलगमेकमर्द्धवलयाकारं कण्ठिकास्थि[18] नाम । एवमष्टपञ्चाशदस्थीनि मध्यकाये भवन्ति ।

**अथ शिरसि**—चत्वारि शिरःकपालानि—पुरःकपालम्[19] पश्चात्कपालं[20], पार्श्वकपाले[21] द्वे चेति । द्वे शङ्खयोः—शङ्खास्थिनी[22] नाम । द्वे शिरोभूमिभूते—तयोरेकं जतूकाकारं कण्ठताल्वादिच्छादनं जतूकास्थि[23] नाम, अपरं झर्झराख्यं[24] लघुशुषिरं नासामूलगम् । द्वे गण्डयोः[25] । द्वे ऊर्ध्वहन्वस्थिनी[26] । एकमधोहन्वस्थि[27] । द्वे तालवस्थिनी[28] । द्वे नासामूलतः पार्श्वयोः नासास्थिनी[29] नाम । द्वे नासाभ्यन्तरतः शुक्तिके[30] नाम । एकं नासामध्यप्राचीरभूतं सीरिकाख्यम्[31] । द्वे अश्रुमार्गाश्रये अश्रुपीठे[32] नाम एकैकतः अक्षिकोटर-नासापार्श्वयोर्मध्ये । त्रीणि सूक्ष्मास्थीनि[33] प्रतिकर्णमभ्यन्तरतो निगूढे इति कर्णयोः षट्, तानि श्रुतियन्त्रांशभूतानि । एवमष्टाविंशतिरस्थ्नां शिरसि । द्वाविंशतिर्वा कर्णास्थिवर्जम् ।

---

१ Metatarsals. २ Tarsal Bones. ३ (Leg Bones) Tibia and Fibula. ४ Pateall. ५ Femur. ६ Metacarpals. ७ Carpal Bones. ८ Radius and Ulna. ९ Humerus. १० Vertebrae. ११ Sacrum. १२ Coccyx. १३ Os Innominatum ( Hip-bone ) १४ Sternum. १५ Clavicles. १६ Scapulae. १७ Ribs. १८ Hyoid. १९ Frontal Bone. २० Occipital Bone. २१ Parietal Bone. २२ Temporal Bone. २३ Sphenoid. २४ Ethmoid. २५ Malar Bones. २६ Maxillae ( Superior Maxillary Bone ). २७ Mandible ( Inferior Maxillary Bone ). २८ Palate Bones. २९ Nasal Bones. ३० Inferior Nasal Concha or Turbinated Bone. ३१ Vomer. ३२ Lachrymal Bones. ३३ Ossicles of the Ear.

तदिदं समुदायेन षडधिकं शतद्वयं कठिनास्थ्नामवगन्तव्यम्, शतद्वयं वा कर्णास्थिवर्जम्। केषुचित् कण्डरान्तेष्वपि प्रायश्चिपिट-चणकाकाराणि[1] दृश्यन्ते क्षुद्रास्थीनि। नेह तेषां पृथक् संख्या, अनिश्चितावस्थानात्।

तरुणास्थ्नां[2] च नेह गणनेति प्रागवोचाम, दिग्दर्शनार्थन्तु कानिचिद् निर्दिश्यन्ते। तानि यथा पृष्ठवंशे, कशेरुकान्तरालेषु, सन्ध्यन्तरालेषु, पर्शुकान्तेषु, नासाप्राचीरेषु, कर्णपाल्योः, श्वासपथे, तच्छाखाप्रशाखासु चेति। तानि तत्तत्-प्रसङ्गेषु वर्णयिष्यन्ते।

दशनास्तु द्वात्रिंशत्। तेषु चतुर्णां पश्चिमानां यौवने समुद्भेदः कदाचित् चिरेण वा। त्वग्विपरिणाममात्रत्वाद्दशनानामिह नास्थित्वमङ्गीक्रियत इत्युक्तपूर्वम्। तद्विशेषवर्णनन्तु करोटितलवर्णने सूक्ष्मशारीरे च द्रष्टव्यम्।

सोऽयं सर्वास्थिप्रविभागः संक्षेपेण व्याख्यातः। विशेषोऽत ऊर्ध्वम्।

---

# चतुर्थोऽध्यायः।

## अथातोऽस्थिविशेषवर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु सामान्यतः परिज्ञानेऽप्यस्थ्नां विशेषा अवश्यं ज्ञातव्या भवन्ति सूक्ष्मप्रतिपत्तये, पेशीक्रियाविज्ञानाय,[3] भग्नास्थिप्रतिसन्धानार्थञ्च।[4] तानेवेदानीं विशेषान् प्रविभज्य समाचक्ष्महे।

आदौ चेह तावद् वर्णनासौकर्य्याय पुरुषस्योत्तानकरयुगलस्य आलम्बित-हस्तपादस्य च ग्रहणम्। तदपेक्षया च ऊर्ध्वाऽधः-पुरः-पश्चादिति व्यवहारः सर्वत्र सर्वावयववर्णनेषु। तस्य च नाभेरनुक्रमेण कल्प्यते ऊर्ध्वाधोगामिनी रेखा—सेयं **मध्यरेखा** नाम। तस्याः सन्निकृष्टा[5] सीमा—**अन्तःसीमा, माध्यसीमा**[6] वा नाम। विप्रकृष्टा तु **बहिःसीमा, पार्श्विकसीमा**[7] वा नाम।

### अथात्र प्रथमः शाखास्थिविज्ञानीयः परिच्छेदः।

तत्र ग्रहण-धारण-स्थूणन-चलनादिसहायाः शाखाश्चतस्रः—द्वौ बाहू, द्वे च सक्थिनी। तत्र प्रतिसक्थि त्रिंशदस्थीनि। यथा—पादाङ्गुलीषु चतुर्दश, पाद-

---

१ Sesamoid Bones. २ तरुणास्थि = Cartilage. ३ पेश्यो हि प्रायेणास्थिनिबद्धाः प्रान्तभागैरित्युक्तपूर्वं, पेशीक्रियाश्च करचरणादिसञ्चालनाद्यशेषविशेषरूपाः, अस्थिसन्निवेशविशेषतश्च पेशीनां क्रियाविशेषाः। ते तु पेश्यध्याये वक्तव्याः। ४ पेशीसन्निवेशज्ञानादस्थिविशेषाभिज्ञानाच्च विना भग्नास्थ्नां यथायथं सन्निवेशनं दुष्करमिति भावः। ५ समीपस्था अभिमुखी वा। ६ शरीरस्य मध्यरेखाभिमुखत्वात् मध्यसीमा = Medial Border. ७ पार्श्वाभिमुखत्वात् पार्श्वसीमा = Lateral Border.

मध्ये मूलशलाकाः पञ्च, पादमूले पादकूर्चास्थीनि सप्त इति प्रतिपादं षड्विंशतिः। जङ्घयोर्द्वे, जानुन्येकम्, एकमूराविति।

## अथादौ पादास्थीनि ब्रूमः। तत्र पादांगुल्यस्थीनि –

एकैकस्यां पादांगुल्यां त्रीणि त्रीणि, द्वे अंगुष्ठे। तानि पादांगुलिनलकानि[1] नाम प्रतिपादं चतुर्दश। तानि तिसृषु श्रेणीषु विभक्तानि—अग्रिमश्रेण्यां पञ्च, मध्यमश्रेण्यां चत्वारि, पश्चिमश्रेण्यां पञ्चेति। तेषु अग्रिमाणि पञ्च पुरतो मुकुवितताग्राणि नखधारणाय; सन्धीयन्ते चैतानि पश्चिमतोऽङ्गुलीनलकैर्मध्यश्रेणीस्थैरन्यत्रांगुष्ठात्, अंगुष्ठे तु पश्चिमनलकाग्रेण अग्रिमनलकस्य सन्धिः, मध्यनलकाभावात्। मध्यश्रेणीस्थानि चत्वारि तु उभयतः[2] सन्धिमन्ति। पश्चिमश्रेणीस्थानि पञ्च, तान्यप्येवम्[3]।

## अथ पादांगुलिमूलशलाकाः –

अंगुलीनां मूलतः प्रतिपादं पञ्च नलकास्थीनि पादांगुलिमूलशलाका[4] नाम, तैरालम्ब्यते प्रपदम्। मूलतश्च तानि यथायथं कूर्चास्थिभिः सन्धीयन्ते, अग्रतश्च पश्चिमांगुलीनलकैः। अतएव कूर्चास्थ्नां शलाकाधिष्ठानसंज्ञा प्राचाम्।

तत्रेमे विशेषाः—( चतुर्थचित्रम् )

**प्रथमा—अंगुष्ठमूलशलाका** नाम। सा स्थूलतमा ह्रस्वतमा च पादशलाकास्थ्नाम्। तया निर्मीयते प्रपदस्यान्तःसीमा, सन्धीयते चासौ मूलतः आन्तरकोणकाख्येन कूर्चास्थ्ना। अस्याश्च मुण्डं स्थूलं खातद्वयाङ्कितञ्च पादतलप्रदेशे मध्यतः, तयोश्च खातयोर्विवर्त्तेते ह्रस्वायाः पादांगुष्ठसङ्कोचन्याख्यपेश्याः[5] कण्डरे चणकास्थिनी[6] च तदन्तरीये। सन्धीयते चेदमंगुष्ठपश्चिमनलकेन पुरतः।

**द्वितीया—तर्जनीमूलशलाका** नाम। सा पादांगुलिशलाकासु दीर्घतमा, मूलतश्च त्रिभिः सन्धिलक्ष्मभिरङ्किता[7] कोणकाख्यकूर्चास्थित्रयेण सन्धिसूचकैः। मुण्डं चास्याः सन्धीयते तर्जनीपश्चिमनलकमूलेन।

---

१ Phalanges. २ पुरोऽग्रिमनलकैः पश्चात् पश्चिमनलकैरिति भावः। ३ उभयतः सन्धिमन्तीत्यर्थः। सन्धिश्च कनिष्ठाद्यङ्गुलिचतुष्टये पुरो मध्यनलकैरङ्गुष्ठे पुरोऽग्रिमनलकेन, पश्चात्तु पञ्चस्वपि अङ्गुलीमूलशलाकाग्रैः। ४ Metatarsals. ५ Flexor Hallucis Brevis. ६ चणकास्थि—Sesamoid Bone. ७ सन्धिलक्ष्म सन्धेश्चिह्नं श्लक्ष्णांशरूपम् ( Facet ).

**तृतीया—मध्यमामूलशलाका** नाम । तस्या मुण्डं मध्यमांगुली-पश्चिमनलकमूलेन सन्धिमत्, मूलतश्चासौ चतुर्भिः सन्धिलक्ष्मभिरङ्किता । तेषु माध्यसीम्नि सन्धिलक्ष्मद्वयं तर्जनीमूलशलाकापार्श्वेन सन्धिसूचकम् । पार्श्विक-सीम्नि त्वेकं सन्धिलक्ष्म अनामिकामूलशलाकापार्श्वेन सन्धानाय, मध्यतश्चैकं बृहत्तरं बाह्यकोणकाख्येन कूर्चास्थ्ना सन्ध्यर्थम् ।

**चतुर्थी—अनामिकामूलशलाका** नाम । सा मूलतः सन्धीयते घनाख्येन बाह्यकोणकाख्येन चेति द्वाभ्यां कूर्चास्थिभ्यां, तत्रैव बाह्यान्तरपार्श्वयोश्च यथाक्रमं कनिष्ठातर्जनीमूलशलाकयोर्मूलपार्श्वाभ्याम् ।

**पञ्चमी—कनिष्ठामूलशलाका** नाम । सा मूलतो बहिःसीम्नि स्थूलार्बुदेनोपलक्षिता । द्वे चास्या मूलतः सन्धिलक्ष्मणी, एकं त्रिकोणं घनाख्येन कूर्चास्थ्ना सन्ध्यर्थम्, अपरमनामिकामूलशलाकापार्श्वेन ।

पेश्यस्तु मूलशलाकान्तरीयाः सप्त तत्पार्श्वसंसक्ताः, चतस्रः पादपृष्ठत-स्तिस्रश्च पादतले । तद्विवरणं चित्रेषु पेशीखण्डे च द्रष्टव्यम् ।

तदेवं पञ्च पादांगुलिमूलशलाका व्याख्याताः । तासां नानास्थिभिः सन्धि-प्रकारस्मरणार्थमिमे श्लोकाः—

सन्धीयन्ते पादमूलशलाका मुण्डतः पुरः ।
अंगुलीपश्चिमनलैरथ कूर्चास्थिभिः क्रमात् ।
प्रथमा संहितैकेन द्वितीया संहिता त्रिभिः ।
तृतीयैकेन तुर्या तु द्वाभ्यामेकेन पञ्चमी ॥
अन्योन्यमथ मूले तु सन्धिस्तिसृषु पार्श्वयोः ।
एकतस्तु कनिष्ठायामंगुष्ठे क्वचिदेव तु[१] ॥

**अथ कूर्चास्थीनि**[२]—कूर्चास्थीनि नाम पादपश्चिमभागनिर्मापकाणि स्थूलह्रस्वविषमाणि प्रतिपादं सप्त । तान्येव मूलशलाकाधिष्ठानानि नाम प्राचाम् ।

तानि क्रमेण कूर्चशिरः—पार्ष्णि—नौनिभ—घन—आन्तरकोणक—मध्य-कोणक—बाह्यकोणकसंज्ञानि । ( चतुर्थ चित्रम् ) तत्र—

**कूर्चशिरो**[३] नाम—( चतुर्थ चित्रे ७ ) सर्वेषां कूर्चास्थ्नामुपरिस्थितं वृत्त-प्रायमुण्डमस्थि जङ्घापादयोः संयोजकम् । अस्य मुण्डं वर्त्तुलाकारं न्युब्जपृष्ठं सन्धि-

१ कुत्रचित् कङ्काले अंगुष्ठमूलशलाकापि मूलपार्श्वतस्तर्जनीमूलशलाकया सन्धिमती, न त्वेवं प्राय इत्यर्थः । २ Tarsal Bones. ३ Talus ( or Astragalus. )

चतुर्थ (क) चित्रम्

# दक्षिणपादास्थीनि।

(पादपृष्ठे द्रष्टानि) ❀




**चित्रव्याख्या—**

१—७ कूर्चास्थीनि। तत्र १।२।३ इति आन्तर-मध्य-बाह्यसंज्ञानि कोणकास्थीनि। ४ घनाख्यं कूर्चास्थि। ५ नौनिभम्। ६ पार्ष्णिः। ७ कूर्चशिरः। पे—इत्यङ्कितेषु स्थानेषु संयुज्यन्ते पेश्यः। तद्यथा—पे १, पे २, पे ३, पे ४—उत्तराः शलाकान्तरीयाः। पे ५—पादाङ्गुलिप्रसारण्या दीर्घायाः कण्डराचतुष्टयनिवेशाः। पे ६ पादांगुष्ठप्रसारण्या दीर्घायाः निवेशः। पे ७, पे १०—पादांगुलिप्रसारण्या ह्रस्वायाः प्रान्तद्वयस्य निवेशौ। पे ८, पे ९—पादविवर्त्तन्याः ह्रस्वायाः तृतीयायाश्च प्रान्तद्वयम्। पे ११, पिण्डिकाकण्डरायाः पार्ष्णिपश्चिमतो निवेशः।

---

❀ पादतलचित्रमपरपृष्ठे द्रष्टव्यम्।

(To face page 20)

## चतुर्थ ( ख ) चित्रम् ।

# दक्षिणपादास्थीनि ।

( पादतले दृष्टानि )




### चित्रव्याख्या—

१-७ कूर्चास्थीनि। तत्र १-२-३, कोणकाख्यमस्थित्रयम्। ४ घनाख्यं कूर्चास्थि। ५ नौनिभम्। ६ पार्ष्णिः। ७ कूर्चशिरः। पेशीनां निर्देशे तत्र तत्र निवेशः प्रभवो वा ज्ञेयः। क—अङ्गुष्ठसंकोचन्या दीर्घाया विवर्त्तनाय अन्तर्गुल्फपश्चिमा नाम सीता। ❀ अङ्गुलिचतुष्टये कण्डरान्तैर्निविष्टा। जंघानुगा पेश्या मूलचतुष्टयनिवेशाः जंघानुगा १।२।३।४ इत्यंकैर्दर्शिताः।

लाञ्छनयुतश्चोपरिष्टात् जङ्घास्थ्नोऽधःप्रान्तेन सन्ध्यर्थम् । अधःप्रदेशे चास्य गम्भीरा सीता[1] सन्धि-स्नायुरज्जुप्रवेशाय, द्वे च सन्धिलक्ष्मणी पार्ष्णिशिरसा सन्ध्यर्थम् । माध्यपार्श्विकसीम्नोस्तु सन्धिलक्ष्मणी-जंघास्थ्नोर्गुल्फांशाभ्यां सन्धानार्थम् । पुरोमुखेऽप्यस्यैकं सन्धिलक्ष्म, तत् नौनिभेन कूर्चास्थ्ना सन्धानाय ।

**पार्ष्णिः**[2] नाम – ( ४र्थ चित्रे ६ ) बृहत्तमं कूर्चास्थि । तत् पार्ष्णिनिर्मापकं सर्वदेहभारसहञ्च । अस्योर्ध्वप्रदेशे सन्धिलक्ष्मणोर्मध्ये गम्भीरा सीता सन्ध्यन्तरीय-स्नायुरज्जुप्रवेशाय, सन्धिलक्ष्मणी च तत्र कूर्चशिरसा सन्ध्यर्थम् । अस्य पुरोमुखं विषमं ह्रस्वञ्च । पश्चाद्भागस्त्वीषद्विषमो दीर्घश्च, स एव पार्ष्णिमूलं निष्पादयति । अस्यान्तरसीम्नि ओष्ठाकारं प्रवर्धनकं[3] पार्ष्ण्योष्ठं नाम । तस्योपरि स्फुटं सन्धिलक्ष्म कूर्चशिरसा सन्ध्यर्थम् । अधश्चास्य प्रवर्धनकस्य गम्भीरा सीता पादतलस्थ-सिरा-धमनी-नाड़ी कण्डरामुखानां धारणाय । षट् तु पेश्योऽस्मिन् कूर्चास्थ्नि संयुक्तास्तासु एका पार्ष्णिमूलपृष्ठतः पिण्डिकाकण्डरा[4] नाम, अपरा पादपृष्ठे पादांगुलिप्रसारणी[5] ह्रस्वा नाम या पार्ष्णिपुरोभागस्य पृष्ठसम्भूता । चतस्रोऽपराः पार्ष्णितलात् सम्भूय पादतले प्रसृताः, ता यथा—पादांगुष्ठापकर्षणी,[6] पादकनिष्ठापकर्षणी,[7] पादांगुलिसङ्कोचनी ह्रस्वा,[8] पादतलचतुरस्रा[9] नाम । ( तासां विशेषाः पेश्यध्याये द्रष्टव्याः )

**नौनिभं**[10] **नाम**–( ४र्थ चित्रे ५ ) पादान्तरसीम्नि नावाकारं कूर्चास्थि । तस्य तु पुरोभाग ईषत्खातोदरस्त्रिभिः सन्धिलक्ष्मभिरुपलक्षितश्च क्रमेण कोणकाख्यकूर्चास्थित्रयेण ( ४र्थ चित्रे १, २, ३ ) सन्ध्यर्थम् । अस्य पश्चिमभागोऽपि खातोदरः कूर्चशिरसः पुरोभागेन सन्ध्यर्थम् । अस्य बहिःसीम्नि क्षुद्रं सन्धिलक्ष्म घनाख्येन कूर्चास्थ्ना सन्धानाय । अन्तःसीम्नि चास्य क्षुद्रमर्बुदम्, तत्र जङ्घानुगाख्यपेश्याः[11] कण्डरान्तनिवेशः ।

**घनं**[12] **नाम**–( ४र्थ चित्रे ४ ) घनाकारं[13] पादबहिःसीम्नि स्थितं कनिष्ठाऽनामिकामूलशलाकयोरधिष्ठानभूतं कूर्चास्थि । तस्य पुरोभागे द्विभागविभक्तं

---

१ इह सीता नाम गभीरखातम् । अस्मिन् शास्त्रे सीतादिशब्दाः पारिभाषिकार्थेषु निरूढाः ज्ञेयाः । २ Calcaneum (Os Calcis). ३ प्रवर्द्धनकं नाम प्रवृद्धाग्रोऽस्थ्यवयवः । ४ Tendo Calcaneus. ५ Extensor digitorum Brevis. ६ Abductor Hallucis. ७ Abductor digiti minimi. ८ Flexor digitorum Brevis. ९ Quadratus Plantaris. १० Navicular. ११ Tibialis Posticus muscle. १२ Cuboid. १३ घनम् = कूटम् (Anvil).

सन्धिलाञ्छनं कनिष्ठाऽनामिकामूलशलाकामूलाभ्यां सन्ध्यर्थम्। अस्य पश्चिमो भागः सन्धीयते पार्ष्णिमुखेन, तदर्थं चात्र स्फुटं सन्धिलक्ष्म। अस्यैवान्तः सीम्नि सन्धिलक्ष्म बहिःकोणकाख्येन कूर्चास्थ्ना सन्धानार्थम्। प्रायशस्तदैवाऽपरमपि सन्धिलक्ष्म दृश्यते पश्चिमतः, तत् नौनिभेन सन्ध्यर्थम्। अधःप्रदेशे चास्य स्फुटा सीता दीर्घायाः पादविवर्त्तन्याख्यपेश्याः[१] कण्डरान्तधारणाय।

**अन्तःकोणकं[२] नाम**—( ४र्थ चित्रे १ ) अंगुष्ठमूलशलाकामूलस्थं कूर्चास्थि त्रिकोणप्रायम्। तस्य चान्तःसीमा त्वङ्मात्रावरणा, बहिःसीम्नि चास्य द्वे सन्धिलक्ष्मणी तर्जनी-मूलशलाकामूलेन मध्यकोणकपार्श्वेन च सन्ध्यर्थम्। तस्य पुरोभागस्थं सन्धिलक्ष्म शिम्बीबीजाकारम् अंगुष्ठमूलशलाका-मूलेन सन्धानाय। तस्य तलदेशे क्षुद्रमर्बुदम् जङ्घापुरोगा[३]-जङ्घानुगा[४]ख्यपेशी-द्वयस्य कण्डरान्तनिवेशाय।

**मध्यकोणकं[५] नाम**—( ४र्थ चित्रे २ ) तर्जनीमूलस्थं क्षुद्रतमं कूर्चास्थि त्रिकोणप्रायम्। तस्य पुरोभागे सन्धिलक्ष्म तर्जनीमूलशलाकामूलेन सन्ध्यर्थम्। पार्श्वयोस्तु सन्धिलक्ष्मणी क्रमेण अन्तःकोणक-बहिःकोणकाभ्यां सन्धानाय। पश्चिमतश्च क्षुद्रं सन्धिलक्ष्म नौनिभेन सन्ध्यर्थम्।

**बहिःकोणकं[६] नाम**--(४र्थ चित्रे ३) मध्यमाया मूलशलाकाया मूलस्थं त्रिकोणप्रायं कूर्चास्थि। तत् सन्धीयते पुरो मध्यमामूलशलाकमूलेन तर्जन्य-नामिकामूलशलाकयोर्मूलाभ्याञ्च, तदर्थं चात्र दृश्यानि तथा तथा सन्धिलक्ष्माणि। पार्श्वाभ्यां चेदं सन्धीयते मध्यकोणकेन घनेन च, यदर्थं स्फुटे तत्र सन्धि-लाञ्छने। पश्चिमतस्तु तस्य सन्धिलक्ष्मैकं नौनिभेन सन्धानाय।

चरमोक्तानां त्रयाणां कूर्चास्थ्नां कोणकत्रयसंज्ञया निर्देशः।

तदेवं पादास्थीनि व्याख्यातानि। तत्र पेशीसंयोगाश्चित्रे पेश्यध्याये च द्रष्टव्याः।

## अथ जङ्घास्थिनी।

**जङ्घास्थिनी[७]**—तावद् द्वे, जङ्घास्थि अनुजङ्घास्थि चेति। जान्वस्थि चैकं क्षुद्रकपालाकारं जङ्घास्थ्नोरुपरि जानुसन्धेः पुरस्तात् शिथिलतया संहितम्।

---

१ Peroneus Longus muscle. २ Internal Cuneiform. ३ Tibialis Anticus. ४ Tibialis Posticus. ५ Middle Cuneiform. ६ External Cuneiform. ७ Leg-bones ( Tibia & Fibula ).

## पञ्चम (क) चित्रम्।

## जङ्घास्थिनी *

(सम्मुखतो दृष्टे)




[ अधः प्रान्तौ ]

चित्रव्याख्या। अत्रैता निविशन्ते पेश्यः। पे १ दीर्घायामा। पे २ ऊर्वन्तःपट्टिका। पे ३ जानुकर्षणी कण्डराकल्पा। पे ४ जंघापुरोगा (जंघास्थिन)। पे ५ द्विशिरस्का। पे ६, पे६—इति द्वयं व्याप्य पादाङ्गलीप्रसारणी दीर्घा। पे ७ पादविवर्त्तनी दीर्घा। पे ८ सैव ह्रस्वा, पे १० सैव तृतीया। पे ६ पादांगुष्ठप्रसारणी दीर्घा।

अङ्कपरिचयास्तु यथा—१।२ जंघास्थ्नः शिरःस्थमुत्सेधद्वयम् ऊर्वस्थिकन्दाभ्यां सन्धायि। सं सं—सन्धिलक्ष्मणी। क—जानुसन्धिमध्यस्थं द्विमुखकण्टकम्। ३ जंघास्थ्नः पुरःस्थमर्बुदम्। ४ अनुजंघास्थिशिरःसन्धानम्। ५ जघानुजंघास्थ्नोरधःप्रान्तसन्धानम्। ६ जंघास्थ्नः कूर्चशिरसा सन्धेयोंऽशः। ७ तस्यैव अन्तर्गुल्फनिष्पादकोंऽशः। ८ अनुजंघास्थ्न ऊर्ध्वप्रान्तः जंघास्थिपार्श्वेन सन्धायी। तत्र च ८ अङ्कं परितो निविशते द्विशिरस्काया और्व्याः कण्डरान्तः। ६ जंघास्थ्नोरन्तरालस्था कला (दीर्घावकाशमाच्छाद्यस्थिता)। * जंघास्थ्नोः पश्चिमदृश्यमपरपृष्ठे द्रष्टव्यम्।

( To face page 22 )

## पञ्चम (ख) चित्रम्।

# जंघास्थिनी ( पृष्ठतो दृष्टे )।




**चित्रव्याख्या**—सीता १—पादांगुलिसंकोचन्या दीर्घायाः, जंघानुगायाश्च (पेश्याः) कण्डरान्त-विवर्त्तनाय सीता। सीता २—पादांगुष्ठसंकोचन्या दीर्घायाः पेश्याः कण्डरान्तविवर्त्तनाय सीता। सीता ३—पादविघर्त्तन्योः ह्रस्व-दीर्घयोः पेश्योः कण्डराविवर्त्तनाय सीता।

**तत्र जङ्घास्थि[१] नाम** – ऊर्वस्थ्नः परं दीर्घतमं नलकास्थि (५म चित्रम्)। तस्य द्वौ प्रान्तौ मध्यनलकञ्चेति त्रयो भागाः।

तस्य ऊर्ध्वप्रान्तो द्वाभ्यामुत्सेधाभ्याम् उपलक्षितः पार्श्वयोः। (५म चित्रे १, २)। तयोरुपरिष्टात् स्फुटे सन्धिलक्ष्मणी ऊर्वस्थ्नोऽधःप्रान्तस्थिताभ्यां कन्दाभ्याम्[२] सन्ध्यर्थम् (५ म चित्रे – सं सं)। अनयोश्च सन्धिचिह्नयोर्मध्यस्थं (तत्रैव—क) द्विमुखं कण्टकम्, येन संयुज्यते सन्ध्यन्तःस्थमर्द्धचन्द्राकारं तरुणास्थिद्वयम्[३]। तस्य च पुरः पश्चाद्वाधीयते सन्ध्यन्तरीयस्वस्तिकस्नाय्वोः प्रान्तद्वयम्। पुरश्चोर्ध्वप्रान्तस्य स्फुटमर्बुदं (५म चित्रे ६), यत्परितः संयुज्यते जानुकपालबन्धनी स्नायुः। तस्यैव चोपरि पुरस्तात् सन्धिलक्ष्म जानुकपालेन सन्धानाय। पश्चात्तूर्ध्वप्रान्तस्य जानुपश्चिमः खातः, तत्र सन्धीयते पश्चिमा स्वस्तिकस्नायुः। तस्यैवोर्ध्वप्रान्तस्य माध्यसीम्नि पश्चात् लक्ष्यते सीता, तत्राधीयते जानुकर्षण्याः कलाकल्पाख्यपेश्याः[४] कण्डरामुखम्। तस्य पार्श्विकसीम्नि पश्चाद्भागे च सन्धिलक्ष्म क्षुद्रं (५म चित्रे ४), तद् अनुजंघास्थ्नः शिरसा सन्ध्यर्थम्।

अधःप्रान्तस्तु जङ्घास्थ्नः—ऊर्ध्वप्रान्ताद् ह्रस्वाकारः। तस्य पश्चाद् दृश्यते सीता दीर्घायाः पादांगुष्ठसंकोचन्याः पेश्याः कण्डरान्तसंयोगाय। बहिःसीम्नि चास्य त्रिकोणप्रायं सन्धिलक्ष्म (५म चित्रे ५) अनुजंघास्थ्नोऽधःप्रान्तेन सन्ध्यर्थम्। तस्य चाधःप्रान्तस्य निम्नप्रदेशे खातोदरं सन्धिलक्ष्म (५म चित्रे ६) कूर्चशिरसा सन्ध्यर्थम्। तस्यैव पुनरधःप्रान्तस्य माध्यसीम्नि प्रवर्द्धनकम् अन्तर्गुल्फभूतम् तदन्तःसीमस्थं सन्धिलक्ष्म कूर्चशिरसः पार्श्विकसीम्ना सन्ध्यर्थम्। अस्य चान्तर्गुल्फप्रवर्द्धनकस्य पश्चाद् दृश्यते सीता जंघानुगायाः, पादांगुलिसंकोचन्या दीर्घायाश्च पेश्याः कण्डरान्तविवर्त्तनाय। अत्र च प्रवर्द्धनके संयुज्यते गुल्फसन्धिबन्धनी स्नायुः।

मध्यनलकं काण्डं वा जंघास्थ्नः – ईषद्वक्राकारं पार्श्विकसीम्नि खातोदरञ्च। तिस्रश्चास्मिन् परिस्फुटा धाराः[५], तासां पुरोवर्त्तिनी त्वचोऽधस्तादनुभवनीया। बहिःसीमस्थायां धारायां संयुज्यते अस्थिद्वयमध्यवर्त्तिनी जंघान्तरालाख्या[६] कला (५म चित्रे ६ अङ्कितेऽवकाशे)। पश्चिमायां पुनर्धारायां जंघापश्चिमपेशीनां निवेशः। तद्विशेषाश्चित्र पेश्यध्याये च द्रष्टव्याः।

---

१ Tibia. २ कन्दाकाराभ्यामस्थ्यंशाभ्याम्। ३ स्वकीयकोटिचतुष्टयेनेति शेषः। ४ Semimembranosus ५ Borders ६ Interosseus Membrane (of leg)

**अनुजङ्घास्थि**[१] **नाम**—( ५म चित्रम् ) दीर्घयष्ट्याकारं जंघास्थ्नोऽनुगतं द्वितीयं जंघानिष्पादकमस्थि तनुयष्ट्याकारम् । तस्यापि द्वौ प्रान्तौ मध्यनलकञ्चेति त्रयो भागाः ।

तस्योर्ध्वप्रान्तः—जंघास्थ्न ऊर्ध्वप्रान्तेन सन्धीयते पार्श्वसीम्नि पश्चिमतः ( ५म चित्रे ४ ) । तत्र चास्योत्सेधो ( ५म चित्रे ८ ) जानुसन्धिबन्धन्या दीर्घस्नायोः संयोगाय । अस्यैव पश्चिमतश्चूड़ाकारं प्रवर्द्धनकं द्विशिरस्काख्यपेश्याः,[२] जानु-सन्धिबन्धन्या ह्रस्वस्नायोश्च संयोगाय ।

अधःप्रान्तस्तु—अनुजंघास्थ्नो बहिर्गुल्फनिष्पादकम् । तस्य माध्यसीमा त्रिकोणेन सन्धिलक्ष्मणाङ्किता कूर्चशिरसा सन्ध्यर्थम् । अन्यच्चात्रैव सन्धि-लक्ष्म जंघास्थ्नोऽधःप्रान्तस्य बहिःपार्श्वेण सन्धानाय । पश्चिमतश्चास्य सीता पाद-विवर्त्तन्याख्यपेशीद्वयस्य कण्डरान्तविवर्त्तनाय । तत्परितश्च सम्बध्यते बहिः-सीमस्था गुल्फसन्धिबन्धनी स्नायुः ।

मध्यनलकम्—पुनरनुजङ्घास्थ्नः किञ्चिद्विवृत्तकायम्, धारात्रयाङ्कितञ्च । तत्रान्तःसीम्नि या रेखा तस्यां सम्बध्यते जङ्घान्तरालाख्या कला । अत्र च मध्यनलके संयुज्यन्ते चाष्टौ जङ्घापेश्यः । तद्विस्तरः पेश्यध्याये द्रष्टव्यः ।

## अथ जान्वस्थि ।

**जान्वस्थि**[३] **नाम**—( षष्ठं चित्रम् ) वृत्तप्रायं जानुसन्धेः पुरःस्थं कपालास्थि । तदिदं सक्थिप्रसारणीसंज्ञकपेशीनां सम्मिलितायाः कण्डरायाः[४] प्रान्तस्थं वृहदाकारं चणकास्थीति केचित् ।

अस्य च जान्वस्थ्नः पुरोदेश ईषदुच्चावचः, तत्र संयुज्यते सक्थिप्रसारणीसंज्ञानां पेशीनां कण्डरा सम्मिलिता (षष्ठचित्रे-पे) । पश्चिमप्रदेशस्तु मध्योन्नतः सन्धिलक्ष्म-णोपलक्षितश्च (षष्ठचित्रे—सं) । उत्तरार्धश्च सन्धिलक्ष्मण ऊर्वस्थ्नो निम्नप्रान्त-पुरोभागेन सन्ध्यर्थम्, निम्नार्धः पुनर्जंघास्थ्न ऊर्ध्वप्रान्तपुरोभागेन सन्धानाय । समन्तात् पुनर्जानुकपालस्य सम्बध्यते जानुसन्धेः पुरोभागच्छादकः स्नायुप्रच्छदः ।

---

१ Fibula. २ Biceps Muscle. ३ Patella. ४ ऊरुपिण्डिका काण्डरेत्यर्थः । दृश्यन्तां पेशीखण्डे ऊरुपेश्यः ।

[ षष्ठ-चित्रम्—जान्वस्थि । ]




( पश्चिमभागः )　　( पुरोभागः )

अथ ऊर्वस्थि ।

**ऊर्वस्थि[1] नाम**—( ७म चित्रम् ) दृढ़दीर्घबृहत्तमं शरीरास्थ्नाम् बहुभारसहञ्च । तत् प्रायः सुवृत्तवंशाकारमीषद्वक्रञ्च कङ्काले श्रोणिपार्श्वाद् जानुसन्धिं यावत् तिर्यगभिगतम् । तस्य त्रयो भागाः—ऊर्ध्वप्रान्तोऽधः प्रान्तो मध्यनलकञ्चेति ।

तत्रोर्ध्वप्रान्ते लक्षणीयानि—वर्त्तुलप्रायं मुण्डं ( ७म चित्रम् ), तदधःस्था ग्रीवा, तदधःस्थे प्रवर्द्धनके च - महाशिखरकं लघुशिखरकञ्च नामतः ।

तत्र मुण्डं नाम —(७म चित्रे १) वर्त्तुलार्द्धव्यापिना सन्धिलक्ष्मणोपलक्षितम्, विवर्त्तते च तद् वंक्षणसन्धावुदूखलाख्ये । मध्यतो विलयुतश्च तद् वंक्षणसन्धिमध्यस्थायाः स्नायुरज्ज्वाः प्रवेशाय ।

ग्रीवा नाम ( ७म चित्रे २ )—ऊर्वस्थ्न ऊर्ध्वप्रान्तपार्श्वाद् वक्रभावेन समुद्गतमूर्ध्वान्तमुखं प्रवर्द्धनकम् । तद् जीवच्छरीरे वंक्षणसन्धिबन्धनेन स्नायुकोषेण परिवेष्टितमवतिष्ठते । भवति च तद् वयःपरिणामेण क्रमादृजुप्रायं भंगुरञ्च । तत्र च दृश्यन्ते अस्थिधमनीद्वाराणि[2] बहुशः ।

महाशिखरकं[3] तु ( ७म चित्रे ३ )– मध्यनलकस्य शिखरभूतं चतुष्कोणकल्पं विषमबहिःपार्श्वं प्रवर्द्धनकम् । तस्य च विषमपार्श्वैकदेशाश्रयेण विवर्त्तते महती नितम्बपिण्डिकाख्या[4] पेशी श्लेष्मधरकलापुटकव्यवधानेन । संयुज्यन्ते चात्रैव षड् नितम्बपेश्यः, यथा–श्रोणिगवाक्षिणी अन्तःस्था[5], यमलाद्वयम्[6], शुण्डिका[7], नितम्बपिण्डिके च मध्यमा-लघिष्ठाख्ये[8] । माध्यसीम्नि पुनर्महाशिखरकस्य अंगुल्यग्रप्रवेशार्हं कोटरम् (७म चित्रम् ५), तत्र बहिःस्थायाः श्रोणिगवाक्षिणीपेश्या[9] निवेशः ।

---

१ Femur. २ Nutrient foramina. ३ Trochanter major. ४ Gluteus Maximus. ५ Obturator Internus. ६ Gemelli. ७ Pyriformis. ८ Gluteus medius & Minimus. ९ Obturator Externus.

लघुशिखरकं[1] नाम—(७म चित्रे ४) ऊर्वस्थिग्रीवाया अधो मूलतः पश्चिमस्थं ह्रस्वं प्रवर्द्धनकम्। तत्र निविशते दीर्घा कटिलम्बिनी[2], अधश्चास्य श्रोणिपक्षिणी[3]।

अनयोश्च शिखरकयोर्मध्ये पुरः पश्चाच्च द्वे रेखे शिखरान्तराले नाम। तयोः सम्बध्येते वंक्षण-सन्धिच्छादनस्य स्नायुकोषस्य पूर्वपश्चिमौ भागौ। पश्चिमशिखरान्तराला तु रेखा निम्नाभिगा, तत्र सम्बध्यते ऊरुचतुरस्रा[4] नाम पेशी।

मध्यनलकं तु ऊर्वस्थनः—पुरस्ताद् धनुर्वक्रमन्तयोरायतं मध्ये त्रिधारप्रायम्। अस्य पुरोभागादुद्भवतः (७म चित्रे पे ४।५) मध्यस्था ऊरुप्रसारणी जानुकोषकर्षणी चेति प्रेश्यौ[5]। मध्यभागे पश्चिमतो दृश्या प्राकारिका[6] नाम रेखा ऊर्ध्वमधश्च द्विधारा। तत्रोर्ध्ववर्त्ति यद् धाराद्वयं तत् प्रसरति महाशिखरकं लघुशिखरकञ्च यावत्। अधोवर्त्ति धाराद्वितयं तावदूर्वस्थनः अधःप्रान्तस्थाभ्यां महार्बुदाभ्यां सङ्गतम्। अस्या एव चतुर्भुजायाः प्राकारिकाख्यरेखायाः प्रान्तभागेष्वन्तरालेषु चेत्थं सम्बध्यन्ते ऊरुपश्चिमस्थाः अष्टौ पेश्यः यथा—ऊरुपृष्ठे प्राकारिकायाः पार्श्विकसीम्नि ऊरुप्रसारणी बाह्या[7], माध्यसीम्नि ऊरुप्रसारणी अन्तःस्था[8]। तयोरन्तराले (उत्तरार्धभागे)—कङ्कतिका[9], नितम्बपिण्डिका गरिष्ठा[10] च। (अधरार्धभागे) द्विशिरस्का औवीं[11]। ऊरुसंव्यूहनी[12] संज्ञास्तिस्रोऽपि पेश्यो भूम्ना प्राकारिकाप्रभवाः। तद्विवरणविस्तरस्तु पेश्यध्याये द्रष्टव्यः।

अधःप्रान्ते—पुनरूर्वस्थनो लक्षणीयानि—द्वे महार्बुदे (७म चित्रे ८, ९), अर्बुदान्तरालं, द्वे उपार्बुदे च (तत्रैव ६, ७)।

तत्र महार्बुदे[13] द्वे कन्दापरपर्याये बाह्यमाभ्यन्तरञ्च जानुसन्धिनिर्मापके। तयोः पृष्ठतः कोटरं जानुसन्धिमध्यस्थायाः स्वस्तिकाख्यस्नायोः प्रवेशाय। तत्रैव ऊर्ध्वमुभयतः सम्बध्यते जङ्घापिण्डिकाख्यपेश्याः[14] शीर्षद्वयम्। तन्मध्यतो जानुपृष्ठिकाख्यधमन्याः स्थानम्। बाह्यार्बुदस्य तु पार्श्वतः सम्बध्यते जानुपृष्ठिकाख्या[15] पेशी। अर्बुदयोर्मध्यतः पुरस्त्रिकोणप्रायं सन्धिलक्ष्म तदाश्रित्य सन्धीयते जानुकपालम्।

उपार्बुदे[16] द्वे, तयोः संयुज्येते जानुसन्धिबन्धन्यौ स्नायुरज्जू। तत्रान्तरमुपार्बुदं कलायकाकारेणोत्सेधेनोपलक्षितं, तत्र (७म चित्रे पे ६) निविशते गरिष्ठा ऊरुसंव्यूहनी[17] नाम पेशी। त्रिंशदेवमेकस्मिन् सक्थ्नि वर्णितान्यस्थीनि। एवमपरेऽपि।

१ Trochanter minor. २ Psoas Magnus. ३ Iliacus. ४ Quadratus Femoris. ५ Vastus medius & Crureus. ६ Linea Aspera. ७ Vastus Externus. ८ Vastus Internus. ९ Pectineus. १० Gluteus Maximus. ११ Biceps Femoris. १२ Adductor Longus, Magnus & Brevis. १३ Condyles. १४ Gastrocnimus. १५ Popliteus. १६ Tuberosities. १७ Adductor Magnus.

# ७म (क) चित्रम्—ऊर्वस्थि ( पुरोभागः )।




**७म (क) चित्रस्य व्याख्या**—पे० इति पेशीनिवेशस्थानसूचकम्। पे १ शुण्डिका, तदधः श्रोणिगवाक्षिणी अन्तःस्था, यमलाद्वयञ्च। पे २ नितम्बपिण्डिका लघिष्ठा। पे ३ ऊरुप्रसारणी बहिःस्था। पे ४ सैव मध्यस्था। पे ५ जानुकोषकर्षणी। पे ६ गरिष्ठा ऊरुसंव्यूहनी। पे ७ ऊरुप्रसारणी अन्तःस्था। पे ८ दीर्घा कटिलम्बिनी।

( To face page 26 )

# ७म (ख) चित्रम्—ऊर्वस्थि ( पश्चिमभागः )।




मध्ये स्वस्तिकस्नायुसंयोगि कोटरं, उभयतश्च जानुसन्धिस्नायुकोषस्य संयोगसीमा पश्चिमा ( रेखाङ्किता )

**७म (ख) चित्रस्य व्याख्या**—पे०—इति चिह्नं पेशीसंयोगस्थानसूचकम्। क—और्वी-संज्ञयोः सिराधमन्योः पेशीनिर्भेदस्थानम्। ख—ऊर्वस्थ्नोऽधःप्रान्तपृष्ठस्थं त्रिकोणखातम्।

# अथ बाह्वस्थीनि ।

अथेदानीं बाह्वस्थीनि व्याख्यास्यामः । तत्र प्रतिबाहु त्रिंशदस्थीनि । तद् यथा—

( अष्टमचित्रम्—पाणि-पुरोभागः । )



करांगुलीषु चतुर्दश, करमध्ये मूलशलाकाः पञ्च, करमूले कूर्चास्थीन्यष्टौ—इति प्रतिकरं सप्तविंशतिः । प्रकोष्ठे द्वे, प्रगण्डे चैकमिति ।

अथ करास्थीनि । तेषु च

## करांगुल्यस्थीनि—

एकैकस्यां करांगुल्यां त्रीणि त्रीणि, द्वे अंगुष्ठे,[2] तानि करांगुलीनलकानि[1] नाम प्रतिकरं चतुर्दश । तानि तिसृषु श्रेणीषु विभक्तानि । तत्र अग्रिमश्रेण्यां पञ्च, मध्यमश्रेण्यां चत्वारि[2], पश्चिमश्रेण्यां पञ्च । तेष्वग्रिमाणि पञ्च पुरतो मुक्तवितताग्राणि नखधारणाय; सन्धीयन्ते चैतानि पश्चिमतोऽङ्गुलीनलकैर्मध्यश्रेणीस्थैरन्यत्र

८म चित्र-व्याख्या । १ नौनिभम् २ अर्द्धचन्द्रम् ३ उपलकं ४ वर्त्तुलकं ५ पर्याणकं ६ कूटकं ७ मध्यकूटकं ८ फणाधरम्—इत्यष्टौ करकूर्चास्थीनि । अथ पेशीनिवेशाः—पे १ पे २ पे ३—इत्यत्र अग्रिमाः शलाकान्तरीयास्तिस्रः । पे४ अङ्गुलीसङ्कोचन्यः मध्यपर्विकाः । पे५ अङ्गुलीसङ्कोचन्यः अग्रपर्विकाः । पे ६ कनिष्ठापकर्षणी ह्रस्वा, कनिष्ठासंकोचनी च । पे ७ कनिष्ठामूलकर्षणी । पे८ अङ्गुष्ठमूलकर्षणी । पे ९ अङ्गुष्ठसंकोचनी दीर्घा । पे १० अङ्गुष्ठसङ्कोचनी ह्रस्वा । पे ११अङ्गुष्ठ-मूलकर्षणी । पे १२ पे १३ अङ्गुष्ठापकर्षणी । पे १४ पे १५ अंगुष्ठजापिनी । पे १६ अंगुष्ठप्रसारणी दीर्घा । पे १७ पाणिसङ्कोचनी अन्तःस्था । पे १८ कनिष्ठापकर्षणी ।

---

१ अंगुलीनलकानि = Phalanges. २ अंगुष्ठे मध्यनलकाभावात् ।

अंगुष्ठात्, अंगुष्ठे तु पश्चिमनलकाग्रेण सन्धिः मध्यमनलकाभावात्। मध्यश्रेणीस्थानि चत्वारि तु उभयतः[१] सन्धिमन्ति। पश्चिमश्रेणीस्थानि पञ्च, तान्यप्येवम्[२]।

**करांगुलीमूलशलाकाः**[३]—करांगुलीनां मूलतः प्रतिकरं पञ्च शलाकास्ताः करांगुलीमूलशलाका नाम, ताभिरवलम्ब्यते करतलम्। मूलतश्च तानि यथायथं कूर्चास्थिभिः सन्धीयन्ते, अग्रतश्च पश्चिमांगुलीनलकैः। अतएव कूर्चास्थ्नां "शलाकाधिष्ठान"-संज्ञा प्राचाम्। तत्रेमे विशेषाः—

**प्रथमा—अंगुष्ठमूलशलाका** नाम, सा मूलशलाकासु ह्रस्वतमा मूलतश्चैकेन सन्धिलक्ष्मणोपलक्षिता पर्याणकाख्येन कूर्चास्थ्ना सन्ध्यर्थम्।

**द्वितीया—तर्जनीमूलशलाका** नाम, सा मूलतश्चतुर्भिः सन्धिलक्ष्मभिरुपलक्षिता पर्याणक-कूटक-मध्यकूटाख्यैस्त्रिभिः कूर्चास्थिभिः मध्यमामूलशलाकामूलपार्श्वेन च सन्धानाय।

**तृतीया—मध्यमामूलशलाका** नाम, सा त्रिभिः सन्धिलक्ष्मभिरङ्किता मूलतः, मध्ये मध्यकूटाख्येन कूर्चास्थ्ना, उभयतश्च तर्जन्यनामिकयोः मूलशलाकामूलपार्श्वाभ्यां सन्ध्यर्थम्।

**चतुर्थी—अनामिकामूलशलाका** नाम, सा सन्धिलक्ष्मचतुष्टयेनाङ्किता मूलतः। तत्र मध्यस्थे सन्धिलक्ष्मणी मध्यकूट-फणधर-संज्ञाभ्यां कूर्चास्थिभ्यां सन्धानाय। पार्श्वगे तु सन्धिलक्ष्मणी तर्जनी-कनिष्ठयोः मूलशलाकामूलपार्श्वाभ्यां सन्धिसूचनाय।

**पञ्चमी—कनिष्ठामूलशलाका** नाम, तस्या मूलतो द्वे सन्धिलक्ष्मणी, तत्रैकं फणधरेण, अपरमनामिकामूलशलाकामूलपार्श्वेन सन्ध्यर्थम्।

ता एताः करमूलशलाका व्याख्याताः। तासां नानास्थिभिः सन्धिप्रकारस्मरणार्थं श्लोका[४]स्तु पादास्थिवदेव, केवलं तत्रैव "पादमूलशलाका" इत्यत्र "करमूलशलाका" इति पाठपरिवृत्तिः कार्या।

---

१ पुरोऽङ्गुलीनलकैः पश्चात् पश्चिमनलकैः। २ उभयतः सन्धिमन्तीत्यर्थः। सन्धिश्च कनिष्ठाद्यंगुलीचतुष्टये पुरो मध्यनलकैरंगुष्ठे पुरोऽग्रिमनलकेन, पश्चात्तु पञ्चस्वपि अंगुलीमूलशलाकाग्रैः। ३ Metacarpals. ४ दृश्यतां २० पृष्ठे।

**अथ करकूर्चास्थीनि**[1]—करकूर्चास्थीनि नाम मणिवन्धनिर्मापकानि तनुह्रस्वविषमाणि प्रतिकरमष्टौ। तान्येव करशलाकाधिष्ठानानि नाम। तानि श्रेणीद्वयविन्यस्तानि। तत्रोर्ध्वश्रेण्यां चत्वारि, क्रमेण नौनिभार्द्धचन्द्रोपलक-वर्त्तुलकाख्यानि। अधःश्रेण्यां चत्वारि, पर्याणक-कूटक-मध्यकूट-फणधर-संज्ञानि। तत्रोर्ध्वश्रेणीस्थानां चतुर्णां मध्ये प्रथमानि त्रीणि मणिवन्धसन्धौ प्रविष्टानि। वर्त्तुलकाख्यन्तु वहिः सन्धितः, तत् कण्डरान्तरीयं चणकास्थीति केचित्। तत्र—

**नौनिभं**[2] नाम—(८म चित्रे १) नावाकारं कूर्चास्थि, तुल्यसंज्ञेन पाद-कूर्चास्थ्ना सदृशम्। तद् वहिःस्थेन क्षुद्रार्वुदेनोपलक्षितं, ऊर्ध्वं सन्धिलक्ष्मयुतञ्च प्रकोष्ठास्थ्नः अधःप्रान्तेन सन्ध्यर्थम्। अस्य पार्श्वतः खातोदरं सन्धिलक्ष्म अर्द्ध-चन्द्र-मध्यकूटकयोः पार्श्वाभ्यां सन्धानाय। निम्नसीम्नि च सन्धिलक्ष्म पर्याणक-कूटकयोरूर्ध्वप्रान्ताभ्यां सन्ध्यर्थम्। पश्चिमतश्च नौनिभस्य उच्चावचा रेखा मणिवन्धस्नायुसूत्राणां संयोगाय।

**अर्द्धचन्द्रं**[3] नाम—(८म चित्रे २) तादृशाकारेण सन्धिलक्ष्मणा वहिरुप-लक्षितं कूर्चास्थि, तस्यार्द्धचन्द्रलक्ष्मणा नौनिभेन सह सन्धिः। अपरश्चास्य शिरसि सन्धिलक्ष्म वहिःप्रकोष्ठास्थिप्रान्तेन सन्ध्यर्थम्, इतराणि तु सन्धिलक्ष्माणि उपलक-फणधर-मध्यकूट-संज्ञैः कूर्चास्थिभिः सन्धिसूचकानि।

**उपलकं**[4] नाम—तृतीयं कूर्चास्थि न्युब्जपृष्ठं सन्धिलक्ष्माङ्कितञ्चोपरिष्टात् मणिवन्धसन्धिमध्यवर्त्तिना त्रिकोणतरुणास्थ्ना सन्धानाय। त्रीण्यत्र चापराणि सन्धिलक्ष्माणि क्रमेण अर्द्धचन्द्र-फणधर-वर्त्तुलकाख्यैः कूर्चास्थिभिः सन्ध्यर्थम्।

**वर्त्तुलकं**[5] नाम—प्रायेण वर्त्तुलाकारं क्षुद्रतमं कूर्चास्थि। सन्धिलक्ष्म-चात्रैकमुपलकेन सन्धिव्यञ्जनाय।

**पर्याणकं**[6] नाम—पृष्ठतः पर्याणकाकारेण सन्धिलक्ष्मणा चिह्नितमंगुष्ठ-मूलशलाकामूलेन सन्धानाय। त्रीणि चात्रापराणि सन्धिलक्ष्माणि क्रमेण नौनिभ-कूटक-तर्जनीमूलशलाकामूलैः सन्ध्यर्थम्। गभीरा चास्य मध्यतः सीता वहिःस्थायाः पाणिसङ्कोचन्याख्यपेश्याः[7] कण्डरान्तविवर्त्तनाय।

---

१ Carpal Bones. २ Scaphoid. ३ Semilunar. ४ Cuneiform. ५ Pisiform. ६ Trapezium. ७ Flexor Carpi Radialis.

**कूटक**[१] नाम – कूटाकारं क्षुद्रं कूर्चास्थि। तत्र चत्वारि सन्धिलक्ष्माणि। तेषामूर्ध्वसीमस्थं नौनिभेन, पार्श्विकसीमस्थं पर्याणकेन, माध्यसीमस्थं मध्य-कूटकेन, अधःसीमस्थं तर्जनीमूलशलाकामूलेन सन्धिमत्।

**मध्यकूट**[२] नाम—बृहत्तमं करकूर्चास्थि, तद् ऊर्ध्वतः सन्धिलक्ष्माङ्कितेन मुण्डेनोपलक्षितमर्द्धचन्द्राख्यकूर्चास्थ्ना सन्ध्यर्थम्। पार्श्विकसीम्नि चास्य द्विभाग-विभक्तं सन्धिलाञ्छनं क्रमेण नौनिभ-कूटकाभ्यां सन्धिसूचकम्, माध्यसीम्नि चात्रैकं सन्धिलक्ष्म फणधरपार्श्वेण सन्ध्यर्थम्। अधस्तु सन्धिलाञ्छनं तर्जनी-मध्यमानामिकानां मूलशलाकामूलैः सन्धानाय।

**फणधरं**[३] नाम सर्पफणाकारेण प्रवर्द्धनकेनोपलक्षितं त्रिकोणप्रां कूर्चास्थि। तद् ऊर्ध्वतः कोणाकारं मध्यकूटकोपलकयोरन्तरालप्रविष्टम्, पार्श्व-योश्च ताभ्यामेव सन्धिमत्। निम्नतश्चात्र द्विभागविभक्तं सन्धिलक्ष्म अनामिका-कनिष्ठामूलशलाकामूलाभ्यां सन्ध्यर्थम्। अस्य च फणोदरे विवर्त्तन्ते अंगुली-सङ्कोचनीपेशीनां कण्डराः।

सर्वाणि च कूर्चास्थीनि सन्धिलक्ष्मवर्जमन्यत्र उच्चावचानि मणिबन्धस्नायु-सूत्राणां संयोगाय। तदेवं करास्थीनि व्याख्यातानि। तत्र पेशीसन्निवेशास्तु साकल्येन त्रिंशत्प्रायास्ते चित्रेषु पेश्यध्याये च द्रष्टव्याः[४]।

## अथ प्रकोष्ठास्थिनी।

प्रकोष्ठास्थिनी तु द्वे प्रायस्तुल्यपरिणाहे। तत्रैकं पार्श्विकसीमस्थमंगुष्ठानु-पूर्व्या स्थितं, तद् **बहिःप्रकोष्ठास्थि** नाम। अपरं माध्यसीमस्थं कनिष्ठानु-पूर्व्या स्थितं, तद् **अन्तःप्रकोष्ठास्थि** नाम। तयोः प्रथमं प्रधानतो मणिबन्ध-सन्धिधारकं स्थूलेनाधःप्रान्तेन। द्वितीयं कूर्पर-सन्धिनिष्पादकमूर्ध्वप्रान्तेन तादृशेन। उभयोरपि संहितयोः क्वचित् 'अरत्नि'- संज्ञया व्यपदेशः[५]।

तत्र—**बहिःप्रकोष्ठास्थि**[६] नाम प्रकोष्ठबहिर्भागनिष्पादकं नलकास्थि। तस्य त्रयो भागाः—ऊर्ध्वप्रान्तोऽधःप्रान्तो मध्यनलकश्चेति।

तस्योर्ध्वप्रान्तस्तावत् चक्राकारेण कोरमध्येन मुण्डेनोपलक्षितः (६ म चित्रे १)। कोरे चात्र (तत्रैव १ सं) विवर्त्तते प्रगण्डास्थ्नोऽधःप्रान्तीया कन्दली। माध्यसीम्नि च मुण्डस्यार्द्धचन्द्राकारं सन्धिलक्ष्म (तत्रैव सं) चक्रनेमिर्नाम, तद् अन्तःप्रकोष्ठास्थ्न ऊर्ध्वप्रांतपार्श्वेन (तत्रैव ८सं) सन्ध्यर्थम्। तदाश्रित्य च विवर्त्तते तदस्थिमुण्डं कूर्परसन्धिमध्यतः।

---

१ Trapezoid. २ Os magnum. ३ Unciform. ४ दुःस्मरविस्तरभयादिह नोक्ताः। ५ प्राचां ग्रन्थेषु (यथा च० शा० ७ अ०) ६ Radius.

# ६म (क) चित्रम्—प्रकोष्ठास्थिनी ( सम्मुखतः )।




६म (क) चित्रस्थानामङ्कानां व्याख्या मूले द्रष्टव्या ।

बहिःप्रकोष्ठास्थिन—१ सं—प्रगण्डास्थि-कन्दल्या सन्धिमत् कोरम् । २ सं—अन्तः-
प्रकोष्ठास्थनश्चक्रनेमिस्थः सन्धेयोंऽशः.। ३ सं—मणिबन्धसन्धौ नौनिभार्धचन्द्राभ्यां सन्धेयोंऽशः ।
४ सं—अन्तःप्रकोष्ठास्थनः अधःप्रांतपार्श्वेन संधेयोंऽशः । अन्तःप्रकोष्ठास्थिन—५ सं—बहिः-
प्रकोष्ठास्थनः अधःप्रान्तपार्श्वेन सन्धेयांशः । ६ सं—चंचुप्रवर्धनशिखरस्थं सन्धिलक्ष्म प्रगण्डास्थ्ना
सन्धायि । ७ सं—प्रगण्डास्थनो डमरुप्रबर्द्धनेन सन्धेयांशः । ८ सं—चक्रनेमिसन्धायि खातम् ।

अथ पेशीनिवेशाः—पे १, पे ५ इत्यनयोः—करोत्तानिनी ह्रस्वा । पे २ अङ्गुलीसंकोचनी दीर्घा ।
पे ३ करविवर्त्तनी चतुरस्रा । पे४ अङ्गुलीसङ्कोचनी अग्रपर्विका । पे ६ कूर्परद्वारिका । पे ७ अङ्गुली-
सङ्कोचनी मध्यपर्विका । पे ८ करोत्तानिनी दीर्घा । ३ इत्यङ्क परितः, द्विशिरस्का । क—प्रकोष्ठा-
न्तराला कला ।

( To face page 30 )

## ९म (ख) चित्रम्—प्रकोष्ठास्थिनी ( पश्चिमतः )।




९म (ख) चित्रव्याख्या—सी १ इत्यादि सङ्घाङ्काः पेश्यन्तःकण्डराणां विवर्त्तनाय सीताः सूचयन्ति। तत्र सी १—इत्यत्र विवर्त्तते अङ्गुष्ठापकर्षणी दीर्घा, अंङ्गुष्ठप्रसारणी ह्रस्वा इति पेश्यौ। सी २—इत्यत्र मणिबन्धापकर्षणी दीर्घा ह्रस्व। सी ३—इत्यत्र सैव ह्रस्वा। सी ४—इत्यत्र अङ्गुष्ठ-प्रसारणी दीर्घा। सी ५—इत्यत्र तर्जनीप्रसारणी, अङ्गुलिप्रसारणी साधारणी च। सी ६—इत्यत्र अंगुष्ठप्रसारणी। सी ७—इत्यत्र मणिबन्धापकर्षणी करभिका। ❀ अनया पेश्याच्छाद्यतेऽयमंशः, न त्वत्र पेशीनिवेशः।

मूलतश्चास्य मुण्डस्य ग्रीवेव ग्रीवा, तदधश्चार्बुदाकार उत्सेधः ( तत्रैव क्रमात् २, ३ ), तत्र द्विशिरस्काख्यपेश्याः[१] कण्डरान्तसंयोगः।

अधःप्रान्तस्तु बहिःप्रकोष्ठास्थ्नः--त्रिकोणेन कोरोदरेण च सन्धिलक्ष्मणोपलक्षितो निम्नतः अर्द्धचन्द्र-नौनिभाख्यकूर्चास्थिद्वयेन सन्ध्यर्थम्। माध्यसीम्नि चात्रापरं सन्धिलक्ष्म ( ६म चित्रे ४ सं० ), तद्द अन्तःप्रकोष्ठास्थ्नः अधःप्रान्तपार्श्वेन सन्धिं सूचयति। पार्श्विकसीम्नि चात्र त्रिकोणाकारं प्रवर्द्धनकं बहिर्मणिकं नाम ( ६म चित्रे ४ ) मणिवन्धसन्धेर्बाह्यस्नायुरज्जुसंयोगाय। तदेतत् त्वचोऽधस्तादनुभवनीयम्। अस्य वहिः पश्चिमतश्च दृश्यन्ते सीताः ( ६म चित्रे ५ ) अंगुष्ठप्रसारणीनां पेशीनां कण्डरान्तगतागताय।

मध्यनलकं पुनरस्य त्रिधारमीषद्वक्रं माध्यसीम्नि खरधारश्च, प्रकोष्ठास्थ्नोरन्तरालस्थकलासंयोगाय। पुरश्चास्य स्फुटमस्थिधमनीविवरम्।

मध्यनलके चेह संयुज्यन्ते प्रकोष्ठपेशीनां मध्ये नव यथा—ऊर्ध्वप्रान्तस्य माध्यसीम्नि द्विशिरस्का बाहवो[१], पार्श्विकसीम्नि पश्चिमतश्च करोत्तानन्नी ह्रस्वा[२], मध्यनलकस्य मध्यभागे पुरस्ताद्द अंगुष्ठसंकोचनी दीर्घा[३], तदूर्ध्वं तिरश्चीनरेखायाम् अंगुलीसंकोचनी मध्यपर्विका[४], अधःप्रान्ते पुरस्तात् करविवर्त्तनी चतुरस्रा[५], तत्रैव बहिःसीम्नि करोत्तानन्नी दीर्घा[६]। मध्यनलकस्य पृष्ठतो मध्यभागे अंगुष्ठापकर्षणी दीर्घा[७] करविवर्त्तनी दीर्घा[८] च, तदधस्तात् अंगुष्ठप्रसारणी ह्रस्वा[९] इति।

**अन्तःप्रकोष्ठास्थि**[१०] नाम - प्रकोष्ठस्य माध्यसीम्नि स्थितं नलकास्थि। तस्य त्रयो भागाः—ऊर्ध्वप्रान्तोऽधःप्रान्तो मध्यनलकं चेति। तत्र—

ऊर्ध्वप्रान्तः - स्थूलतरः प्रवर्द्धनकाभ्यामुपलक्षितश्च। तयोरूर्ध्वप्रवर्द्धनकं कूर्परकूटं[११] नाम ( तत्रैव ६ )। तदिदं सर्पफणाकारं पुरःस्थितेनोन्नतमध्येन सन्धिलक्ष्मणोपलक्षितश्च। तस्य च चूड़ाग्रं निविशते प्रगण्डास्थ्नोऽधःप्रान्तपश्चिमस्थे खाते, तत्र सन्धिलक्ष्म तु प्रगण्डास्थ्नोऽधःप्रान्तवर्त्तिना डमरुकाकारेण सन्धिलक्ष्मणा सन्धिं सूचयति। पश्चिमतः पुनरस्य प्रवर्द्धनकस्योत्सेधः कूर्परनिष्पादकः त्वङ्मात्रावृतः। तत् पार्श्वयोः संयुज्यते त्रिशिरस्काख्या[१२] पेशी। कूर्परकूटमेव जानुकपालसादृश्यात् कूर्परकपालिकेति केचित्।

---

१ Biceps. २ Supinator (Brevis). ३ Flexor Pollicis Longus. ४ Flexor Digitorum Sublimis. ५ Pronator Quadratus. ६ Supinator Longus. ७ Abductor Pollicis Longus. ८ Pronator Teres. ९ Extensor Hallucis Brevis. १० Ulna. ११ Olecranon Process. १२ Triceps.

अत्रैवाधस्तनं प्रवर्द्धनकं चञ्च्वाकारं चञ्चुप्रवर्द्धनं[१] नाम। तदिदं त्रिकोणाग्रं शिरसि सन्धिलक्ष्मयुतञ्च। विवर्त्तते चैतत् प्रगण्डास्थ्नोऽधःप्रान्तीयं डमरुकाकारं सन्धिलक्ष्म समाश्रित्य। अग्रं चास्य प्रवर्द्धनकस्य प्रविशति तस्यैवास्थ्नो डमरु-सन्धिलक्ष्मणः पुरःस्थे खाते सति बाहुमध्यसंकोचे (९म १०म चित्रयोः)।

पार्श्विकसीम्नि पुनरन्तःप्रकोष्ठास्थ्न ऊर्ध्वप्रान्तस्य दृश्यते कोरमध्यमपरं सन्धि-लक्ष्म (तत्रैव सं ८) यदाश्रित्य विवर्त्तते बहिःप्रकोष्ठास्थ्न ऊर्ध्वप्रान्तीया चक्रनेमिः स्वेन सन्धिलक्ष्मणा (तत्रैव सं २)। तदिदं चक्रनेमिखातं नाम। अनयोश्च प्रवर्द्धनकयोश्चक्रनेमिखातस्य च परिधौ संयुज्यते कूर्परसन्धिबन्धनः स्नायुकोषः।

अथास्य चञ्चुप्रवर्द्धनस्य मूले परितश्च संयुज्यन्ते इमाः पेश्यः, यथा पुर-स्तान्मूलतः कूर्परद्वारिका[२], अंगुष्ठसंकोचनी दीर्घा[३] च। माध्यसीम्नि अंगुलीसङ्कोचनी अग्रपर्विका[४], करविवर्त्तनी दीर्घा[५] चेति।

मध्यनलकं तु अन्तःप्रकोष्ठास्थ्नस्त्रिधारं पार्श्विकसीम्नि तीक्ष्णधारञ्च, तस्य पुरोभागे मध्यतः अस्थिधमनीविवरद्वारम्। तत्र बाह्यसीमस्थायां तीक्ष्णधारायां संयुज्यते प्रकोष्ठान्तराला † नाम कला (नवम चित्रम्)।

अत्र च मध्यनलके संयुज्यन्ते द्वादशानां प्रकोष्ठपेशीनां मध्ये नव पेश्यः, यथा— मध्यनलकपुरोभागे—अंगुलिसंकोचनी मध्यपर्विका[६], करविवर्त्तनी चतुरस्रा[७] च। तयोराद्या माध्यसीम्नि पृष्ठतश्च संयुक्ता। पार्श्विकसीम्नि पृष्ठतश्च पञ्च यथा— कूर्परपृष्ठिका[८], अंगुष्ठापकर्षणी दीर्घा[९], अंगुष्ठप्रसारणी दीर्घा[१०] तर्जनीप्रसारणी[११] करोत्ताननी ह्रस्वा[१२] चेति। मणिबन्धापकर्षणी करभिका[१३], कूर्परपृष्ठिका चेति द्वे मध्यनलकपृष्ठतः इति। तद्विवरणविस्तरस्तु ९म चित्रे पेश्यध्याये च द्रष्टव्यः।

अधःप्रान्तस्तु अन्तःप्रकोष्ठास्थ्नो—माध्यसीम्नि प्रवर्द्धनकवता मणिमुण्डाख्येन[१४] वर्त्तुलेनोपलक्षितः (नवम चित्रे २)। तच्च प्रवर्द्धनकम् अन्तर्मणिकं[१५] नाम (तत्रैव ६), तत्र संयुज्यते मणिबन्धसन्धेः माध्यसीमस्था स्नायुरज्जुः। तस्य पश्चिमस्थायां सीतायां विवर्त्तते अन्तःस्थायाः करप्रसारणीपेश्याः[१६] कण्डरा।

---

१ Coronoid Process. २ Branchialis. ३ Flexor Pollicis Longus. ४ Flexor Digitorum Profundus. ५ Pronator Teres. ६ Flexor Digitorum Sublimis. ७ Pronator Quadratus. ८ Anconeus. ९ Abductor Pollicis Longus. १० Extensor Pollicis Longus. ११ Extensor Indicis Proprius. १२ Supinator ( Brevis ). १३ Extensor Carpi Ulnaris. १४ मणिकसंज्ञा तु चरककृता (च० शा० ७ अ०) १५ Styloid Process. १६ Extensor Carpi Ulnaris. † Interosseus membrane.

मणिमुण्डश्च सन्धिलाञ्छनाङ्कितं पार्श्वतः, बहिःप्रकोष्ठास्थ्नोऽधःप्रान्तेन सन्ध्यर्थम् । तदधश्च सन्धीयते मणिबन्धसन्ध्यन्तरालस्थं त्रिकोण-तरुणास्थि ।

## अथ प्रगण्डास्थि ।

**प्रगण्डास्थि**[1] **नाम**—( १०म चित्रम् ) बाहुस्थ्नां स्थूलतमं नलकास्थि । तस्य त्रयो भागाः—ऊर्ध्वप्रान्तोऽधःप्रान्तो मध्यनलकञ्चेति ।

तत्रोर्ध्वप्रान्तः—अर्द्धवर्त्तुलाकारेणान्तर्मुखेन मुण्डेनोपलक्षितः । तदिदं मुण्ड-मंसपीठस्थे[2] नातिगभीरे खाते सन्धीयते श्लक्ष्णेन सन्धिलक्ष्मणा, तत्परितश्च संबध्यते अंससन्धिबन्धनः स्नायुकोषः ।

अधश्चास्य मुण्डस्य द्वावुत्सेधौ बाह्यसीम्नि पुरःसीम्नि च क्रमात् महापिण्डक-लघुपिण्डक-संज्ञौ । तत्र महापिण्डकस्य शिखरतः पृष्ठतश्चोद्भवन्ति तिस्रः पेश्यः क्रमेण अंसपृष्ठिका उत्तरा[3], अंसपृष्ठिका अधरा[4], अंसाधरिका लघ्वी[5] चेति । लघुपिण्डके तु निविशते अंसान्तरिका[6] नाम पेशी, मध्ये च पिण्डकयोः परिखा द्विशिरस्काख्य[7] पेश्याः कण्डराधारणाय । तद्बहिस्तटे निविशते गरिष्ठा उरः-प्रच्छदाख्या[8]-पेशी, तदन्तस्तटे तु कटिपार्श्वच्छदा[9] । तदधस्तात् च अंसाधरिका[10] बृहती ।

मध्यनलकन्तु—प्रगण्डास्थ्न उपरिष्टाद्दण्डाकारमधस्तात् त्रिधारप्रायम् । तत्र मध्यतो बहिःसीम्नि ईषदुन्नतः प्रदेशः अंसपिण्डिकाख्य[11]-पेश्या निवेशाय । अस्याधः पश्चिमतो नातिगभीरा सीता गम्भीरप्रगण्डिकाख्यसिराधमन्योर्बहिर्बाहुकाख्य-नाड्याश्च धारणाय[12] । तस्याश्च तटयोः त्रिशिरस्काख्यपेश्याः[13] प्रभवस्थानम् । माध्यसीम्नि च मध्यतः काकोष्ठिकाख्य[14] पेश्याः निवेशः । निम्नार्द्धपुरस्तलं तु मध्यनलकस्य कूर्परद्वारिकाख्य[15] पेश्याः प्रभवः ।

अधोभागे पुनर्मध्यनलकस्य बाह्यान्तःसीम्नोर्द्वे धारे । तयोर्बाह्यधारायां क्रमात् दीर्घायाः करोत्तानन्याः[16], दीर्घायाः मणिबन्धापकर्षण्या[17] पेश्याः संयोगः । अमू च बाह्यान्तरीये धारे क्रमेण बाह्यान्तरीयाभ्यामर्बुदाभ्यां सङ्गते अधस्तात् ।

---

१ Humerus. २ अंसपीठं नाम अंसफलकस्य स्थालकं ( सन्धेयस्थानम् )। ३ Supra-spinatus. ४ Infra-spinatus. ५ Teres minor. ६ Sub-scapularis. ७ Biceps. ८ Pectoralis major. ९ Latissimus Dorsi. १० Teres major. ११ Deltoid. १२ Superior Profunda Artery Vein Radial Nerve. १३ Triceps. १४ Coraco Brachialis. १५ Brachialis. १६ Supinator Longus. १७ Extensor Carpi Radialis Longior.

अधःप्रान्ते--पुनः प्रगण्डास्थ्नो लक्षणीयाः क्रमादेते विशेषाः । अर्बुदे द्वे—बाह्यमान्तरञ्चेति, कन्दली, डमरुकं, पुरःखातद्वयञ्च ( १०म चित्रम् ) । तत्र—

बाह्यार्बुदं—नाम बहिःसीमस्थ उत्सेधः । तत्र सम्बध्यते बहिःस्था कूर्परसन्धिबन्धनो स्नायुः । प्रभवश्चायं पञ्चानां पेशीनां सम्मिलितमूलानाम् । ताश्च यथा—करोत्तानन्नी ह्रस्वा, मणिबन्धापकर्षणी दीर्घा करभिका च, अंगुलिप्रसारणी साधारणी, कनिष्ठाप्रसारणी[१] चेति । अस्यैव पृष्ठतः कूर्परपृष्ठिकाख्य[२]-पेश्याः प्रभवः ।

आन्तरार्बुदं—नाम माध्यसीमस्थं स्फुटतरं त्रिकोणप्रायमर्बुदम् । तत्र सम्बध्यते कूर्परसन्धेः माध्यसीमस्था स्नायुरज्जुः । प्रभवश्चायमुपरिष्टात् दीर्घायाः करविवर्त्तनी[३]-पेश्याः ; तदधश्च मणिबन्धसंकोचन्याख्य[४] पेशीद्वयस्य, मध्यपर्विकाया अंगुलीसंकोचन्याः[५] करतलप्रसारण्याश्च[६] पेश्याः ।

कन्दली—नाम बाह्यार्बुदस्य पुरोवर्त्ती सन्धिलक्ष्माङ्कितो भागः, यमाश्रित्य विवर्त्तते कूर्परसन्धिमध्यगं बहिःप्रकोष्ठास्थ्नः कोरमध्यं मुण्डम् ।

डमरुकं—नाम डमरुसमाकारो निम्नमध्यः सन्धिलक्ष्मयुतो भागः, यः सन्धीयते अन्तःप्रकोष्ठास्थ्न ऊर्ध्वप्रान्तस्थाभ्यां प्रवर्द्धनकाभ्याम् ।

पुरःखातद्वयं—नाम सन्धिलक्ष्माङ्कितभागस्य ऊर्ध्वं पुरस्ताद् बाह्यान्तरसीम्नोः स्फुटं गर्त्तद्वितयं, तत्र प्रविशतः ( बाहुसङ्कोचे सति ) क्रमेण अन्तःप्रकोष्ठास्थ्न ऊर्ध्वप्रान्तस्थं चञ्चुप्रवर्द्धनं, बहिःप्रकोष्ठास्थ्नो मुण्डांशश्च ।

कूर्परखातं—नाम प्रगण्डास्थ्नोऽधःप्रान्तपश्चिमस्थं खातं, यत्र धार्य्यते प्रसारितबाहोः कूर्परकूटाग्रम् ।

त्रिंशदेवमेकस्मिन् बाहावस्थीनि व्याख्यातानि, एवमपरेऽपि । तदेतत् सविंशतिकमस्थिशतं शाखासु व्याख्यातम् ।

इति शाखास्थिविज्ञानीयः प्रथमः परिच्छेदः ।

---

१ Common origin of five Muscles; Supinator, Extensor Carpi Radialis Brevis, Ext, Carpi Ulnaris, Ext. Com. Digiti & Ext. Minim Digiti. २ Anconeus. ३ Pronator Teres. ४ Flexor Carpi Radialis & Ulnaris. ५ Flexor Sublimis Digitorum. ६ Palmaris Longus.

# दशम (क) चित्रम्—प्रगण्डास्थि ( सम्मुखतः )।

( ऊर्ध्वम् )




( अधः )

**१०म (क) चित्र-व्याख्या।**

१ मुण्डम् २ महापिण्डकम् ३ लघुपिण्डकम् ४ पिण्डकद्वयमध्यगा परिखा। ५ बाह्यार्बुदम् ६ आन्तरार्बुदम् ७ कन्दली ८ डमरुकम् ९, १० पुरःखातद्वयम्।

अत्रैता निविशन्ते पेश्यः।—पे १ अंसपृष्ठिका उत्तरा। पे २ अंसान्तरिका। पे ३ उरश्छदा गरिष्ठा। पे ४ कटिपार्श्वच्छदा। पे ५ अंसाधरिका बृहती। पे ६ अंसपिण्डिका। पे ७ काकोष्ठिका। पे ८ कूर्परद्वारिका। पे ९ करोत्काननी दीर्घा। पे १० मणिबन्धापकर्षणी दीर्घा। पे ११ करप्रसारणी संज्ञक पेशीचतुष्टयस्य, करोत्तानन्याश्च साधारणः प्रभवः। पे १२ करविवर्त्तनी दीर्घा। पे १३ मणिबंध-सङ्कोचन्याख्यपेशीद्वयम्, अङ्गुलीसङ्कोचनी मध्यपर्विका, करतलप्रसारणी चेति पेशीषट्कस्य साधारणः प्रभवः।

( To face page 34 )

# दशम (ख) चित्रम्—प्रगण्डास्थि (पश्चिमतः) ।




१०म (ख) चित्रव्याख्या—पे १ अंसपृष्ठिका अधरा। पे २ अंसाधरिका लघ्वी। पे ३ (क) त्रिशिरस्काया बाह्यं शिरः। पे ३ (ख) तस्या एव आन्तरं शिरः। सी० तयोर्मध्यस्था तिरश्चीन-सीता—गम्भीरप्रगण्डिकाख्य सिराधमन्योः बहिर्बाहुकाख्य नाड्याश्च धारणाय। पे ४ कूर्परपृष्ठिका। पे ५ मणिबन्धसङ्कोचनी अन्तःस्था।

( ११श चित्रम्--पृष्ठवंशः )




## अथ द्वितीयः परिच्छेदः

### ( मध्यकायास्थिविज्ञानीयः )।

तत्रादौ पृष्ठवंशं ब्रूमः।

**पृष्ठवंशो**[१] हि मध्यालम्बनं कायस्य यमाश्रित्य वर्त्तन्ते शाखाश्चतस्रः शिरश्च। अन्तःसुषुम्नाकाण्डधारकश्च स एव। सोऽयं कशेरुकासंज्ञै रुपर्य्युपरि[२]—संहितै-रीषच्चलैः चतुर्विंशतिसंख्यकैरस्थिवलयैर्निर्मितः पर्वाभरिव वंशदण्डः अन्तःशुषिरः, स्थूलश्चाधोऽधः।

स चायं सन्धीयते ऊर्ध्वं शिरसः पश्चिमकपालमूलेन, अधस्तु त्रिकास्थ्ना ( दृश्यतां कङ्कालचित्रद्वयम् )। सम्मुखतो दृष्टश्च कङ्काले प्रतिभाति स त्रिधा धनुर्वक्रः, तत्र ग्रीवायां कट्याञ्च पुरस्तात् कूर्मपृष्ठवदुत्सङ्गः, पृष्ठे तु खातोदरता ( ११श चित्रम् )।

तत्र ग्रीवायां कशेरुकाः सप्त, पृष्ठे द्वादश, कट्यां पञ्चेति साकल्येन चतुर्विंशतिः। त्रिकास्थि चानुत्रिकास्थि चेति द्वयमानुपूर्व्या स्थितमपि पृथगेव।

**कशेरुकाः**[३] नाम पृष्ठवंशनिर्म्मापकान्यस्थिवलयानि। तत्र सामान्यतः प्रतिकशेरुकं द्वौ भागौ प्रधानभूतौ—कशेरुपिण्डं, कशेरुचक्रञ्च सह प्रवर्द्धनकैः। तत्र—

---

१ Vertebral Column or Spine.

२ सन्धानञ्च कशेरुकाणां तदन्तरालस्थतरुणास्थिचक्रव्यवधानेनैव, न साक्षात्।

३ Vertebrae.

( १२श चित्रम्—पृष्ठकशेरुका )

[ पुरोभागः ]




[ पश्चिमभागः ]

**कशेरुपिण्डं**[१] नाम पिण्डाकारः कशेरुपुरोभागो बहिर्घनसङ्घातोऽन्तःशुषिरसंघातश्च। उपलक्षितश्च तदूर्ध्वाधःस्थाभ्यां सन्धेयभागाभ्याम्।

**कशेरुचक्रं**[२]—नाम प्रायश्चक्राकारः कशेरुकाऽपरार्द्धः। तन्मध्ये सुषुम्नाविवरम्। तदिदं कशेरुचक्रं दृढ़संलग्नं कशेरुपिण्डेन उभयतश्चक्रमूलाभ्याम्, निर्मीयते च पश्चात् पत्रकाभ्याम्[३]। उपर्यधश्च प्रतिचक्रमूलमेकैकं छिद्रार्धं, तथाच प्रतिकशेरुचक्रं चत्वारि छिद्रार्द्धानि। तानि ऊर्ध्वमधश्च संहितयोः कशेरुकयोश्छिद्रार्द्धैर्मिलित्वा सम्पद्यन्ते तावन्ति पूर्णच्छिद्राणि सुषुम्नाप्रभवाणां मेरुजाख्यनाड़ीणां निर्गमाय।

अथात्र कशेरुचक्रे संगतानि सप्त प्रवर्द्धनकानि, तद्यथा—

**पृष्ठकण्टकं**[४]—नाम पश्चिमस्थं प्रवर्द्धनं त्वचोऽधस्तादनुभवनीयम्।

**कशेरुबाहु**[५]—संज्ञे द्वे पार्श्वयोः, त एव 'बाहुप्रवर्द्धनक'-संज्ञे।

**सन्धिप्रवर्द्धनकानि**[६]—चत्वारि—द्वे उपरिष्टात्, द्वे चाधस्तात्। सन्धिलक्ष्माङ्कितानि च, तानि ऊर्ध्वाधःकशेरुकयोः सन्धिप्रवर्धनकैः सन्धीयन्ते।

तान्येतानि सर्वकशेरुका-साधारणानि लिङ्गानि[७]। विशेषोऽत ऊर्ध्वम्।

---

१ Body of a Vertebra. २ Arch ३ Laminae. ४ Spinus Process. ५ Transverse Process. ६ Articular Process. ७ सर्वकशेरुका-साधारणत्वेऽपि लिङ्गानां पृष्टकशेरुकासु तेषां स्फुटतमत्वात् चित्रे पृष्ठकशेरुकैव प्रदर्शिता। ❀ स्थालकं नाम सन्धेयस्थानम्, इह तु तत् पर्शुकासन्धानायेत्यग्रे वक्ष्यते।

[ १३श चित्रम्—ग्रीवाकशेरुका ]
( पुरोभागः )




[ पश्चात् ]

१३श चित्र-व्याख्या— कम, कशेरुपिण्ड, १, १, तस्यैव ओष्ठद्वयम्। २, २, बाहुप्रवर्द्धनके। ३, ३, मातृकाच्छिद्रद्वयं ४, ४, सन्धिप्रवर्द्धनकद्वयमूर्ध्वस्थम्, ५, ५, तदेवाधःस्थम्। ६ सुषुम्नाविवरम्, क—पृष्ठकण्टकम् —इह द्विधाभिन्नम्।

## अथ ग्रीवाकशेरुकाः[1]।

ग्रीवाकशेरुकाः सप्त। तास्वेतानि भेदकलिङ्गानि ( १३ श चित्रम् )—

(१) कशेरुपिण्डानि ह्रस्वानि घनायतपार्श्वान्योष्ठवन्ति च।

(२) पत्रकाणि तनुह्रस्वानि अधोऽधश्छादीनि च, सुषुम्नाविवरञ्च त्रिकोणप्रायम्।

(३) पृष्ठकण्टकानि द्विधाभिन्नाग्राणि, दीर्घतराणि च क्रमादधोऽधः।

(४) वाहुप्रवर्द्धनकानि ह्रस्वानि द्विधाभिन्नाग्राणि सच्छिद्राणि च 'मस्तिष्कमातृका'[2]ख्ययोर्धमन्योरनुप्रवेशाय। अत एवैषां छिद्राणां 'मातृकाच्छिद्र' संज्ञा।

(५) सन्धिप्रवर्द्धनकानि ह्रस्वतमानि उत्तानानि च।

[ १४श चित्रम्—प्रथमा ग्रीवाकशेरुका—चूड़ावलया नाम ]
[ पुरः ]




[ पश्चात् ]

१४श चित्र-व्याख्या—१ कशेरुपिण्ड, २ दन्तप्रवर्द्धनकस्य प्रवेश-सन्धानस्थानम्, ३ मध्यरज्जुकाख्यस्नायोः संस्थानसूचकं, ४, ४ पश्चात्कपालमूलकोटिभ्यां सन्धानाय संन्धिलाञ्छनद्वयं ५ सुषुम्नाविवरम्, ६ पृष्ठकण्टकम् ७, ७ बाहुप्रवर्द्धनकद्वयम् ८, ८ तदन्तःस्थं मातृकाच्छिद्रद्वयम्।

अथ विशिष्टा ग्रीवाकशेरुकाः।

सप्तसु च ग्रीवाकशेरुकासु, प्रथमा, द्वितीया, सप्तमी चेति तिस्रः पृथग् लक्षणीयाः, इतरवैलक्षण्यात्। तत्र (१४ श-चित्रम् )—

## प्रथमा ग्रीवाकशेरुका चूड़ावलया[3]

नाम। सा पृष्ठवंशचूड़ायां वलयाकारेति तथासंज्ञा। सन्धीयते चेयमूर्ध्वं पश्चिमकपालमूलेनाधश्च दन्तचूड़ाख्यया द्वितीय-ग्रीवाकशेरुकया। तत्रेमे विशेषाः—

---

१ Cervical Vertebræ. २ Vertebral Arteries. ३ Atlas.

(१) कशेरुपिण्डं ह्रस्वं गुटिकाकारञ्च ( १४श चित्रम् ), तत्पृष्ठतश्च सन्धिलक्ष्म दन्तचूड़ाख्यायाः कशेरुकाया दन्तप्रवर्द्धनेन सन्ध्यर्थम् ।

(२) चक्रमूलयोरुपरिष्टात् शिम्बीबीजाकारे सन्धिलक्ष्मणी पश्चिमशिरः-कपालस्य मूलकोटिभ्यां सन्धानाय । अभ्यन्तरतश्चानयोः कलायके मध्य-रज्जुकाख्यायाः स्नायोः कोटिद्वयसंयोगाय । तया च विभज्यते ( जीवच्छरीरे) सुषुम्नाविवरं द्वयोर्भागयोः, तत्राग्रिमभागे प्रवशति दन्तप्रवर्द्धनम् ।

(३) पृष्ठकण्टकञ्च तनुगुटिकाकारम् प्रायो न द्विधा भिन्नाग्रम् ।

## द्वितीया ग्रीवाकशेरुका

### दन्तचूड़ा[1] नाम ।

१५श चित्रम्—द्वितीया ग्रीवाकशेरुका—दन्तचूड़ा नाम ।

( पार्श्वतो दृष्टा )

[ ऊर्ध्वम् ]




( अधः )

१ दन्तप्रवर्द्धनकम् । २ चूड़ावलया-ख्यकशेरुकायाः पिण्डपश्चिमस्थेन सन्धि-लक्ष्मणा सन्धानचिह्नम् । ३ मध्यरज्जु-कस्नायुवर्षणजं खातम् । क, पृष्ठ-कण्टकम् । सं १ ऊर्ध्वस्थं सन्धिप्रवर्द्धनम् सं २ अधःस्थं सन्धिप्रवर्द्धनम् ।

सा चूड़ायां दन्ताकारेण प्रवर्द्धनकेनोप-लक्षितेति तथासंज्ञा ( १५ श चित्रम् )। अस्य पुनः दन्त-प्रवर्द्धनकस्य चूड़ावलयायाः सुषुम्नाविवरपुरोभागं प्रविष्टस्य (१४ चित्रम् ) पुरः पश्चाच्च द्वे खातोदरे सन्धिलक्ष्मणी । तयोः पुरःस्थं चूड़ावलयायाः कशेरुपिण्ड-पश्चिमेन सन्धिलक्ष्मणा सन्धीयते, पश्चिमन्तु संस्पृश्यावतिष्ठते मध्यरज्जुकाख्या स्नायुः । पार्श्वयोश्च दन्तप्रवर्द्धनकस्य संयुज्येते अन्ये स्नायुसूत्रे । शिखरे चास्य सम्बद्धं स्नायु-सूत्रमपरं पश्चिमकपालमूलेन दन्तप्रवर्धनकस्य संयोजनाय । शिरो हि सह चूड़ावलयाख्य-कशेरुकया विपरिवर्त्तते दन्तप्रवर्द्धनकमेव मध्यकील-भूतमाश्रित्य पृष्ठवंशोपरिष्टात् । एतद् विवरणविस्तरस्तु शिरोग्रीवसन्धिवर्णने द्रष्टव्यः ।

---

[1] Axis or Epistrophius.

१६श चित्रम्—सप्तमी ग्रीवा-कशेरुका—महाकण्टकिनी नाम।

(पुरः)




१६श चित्र-व्याख्या—

कम, कशेरुपिण्डम्। सू, सुषुम्नाविवरम्। क, पृष्ठकण्टकम्। १, १, ऊर्ध्वमुखं सन्धिप्रवर्द्धनकद्वयम् २, २, मातृकाच्छिद्रद्वयम् ३, ३, बाहुप्रवर्द्धनके।

१७श चित्रम्—पृष्ठकशेरुका (पार्श्वतो दृष्टा)




१७श चित्रव्याख्या—कम, कशेरुपिण्डम्। १, १, सन्धिप्रवर्द्धनके ऊर्ध्वमुखे। २, ३, कशेरुपिण्ड-पार्श्वस्थं स्थालकद्वयम्। ४, अधोमुखं सन्धिप्रवर्द्धनकम् (दक्षिणम्)। ५, बाहुप्रवर्द्धनकस्थं स्थालकम्।

## सप्तमी ग्रीवाकशेरुका

**महाकण्टकिनी**[1] नाम (१६श चित्रम्) सा दीर्घतमेन पृष्ठकण्टकेनोपलक्षितेति तथासंज्ञा। तत्र च महाकण्टके सम्बध्यते ग्रीवाधरा नाम स्नायुरज्जुः[2]। न चेदं द्विधा भिन्नाग्रम्। तथापि मातृकाच्छिद्रादिलिङ्गदर्शनात् शक्यमस्या अभिज्ञानम्।

षड्विंशतिः पेश्यो ग्रीवाककशेरुकासु संयुक्ताः पुरः पश्चाच्च। तासां विवरणं ग्रीवापृष्ठपेशीवर्णने वक्ष्यामः।

## अथ पृष्ठकशेरुकाः।

पृष्ठे कशेरुकाः द्वादश। तास्विमे विशेषाः (११श-१२श-१७श चित्राणि)।

(१) कशेरुपिण्डानि मध्याकृतीनि वृत्तार्द्धप्रायाणि च। प्रतिकशेरुपिण्डश्च द्वे सन्धिलक्ष्मणी स्थालकाख्ये पश्चादुभयतः, ते पर्शुकाद्वयमूलसन्धानाय।

(२) बाहुप्रवर्द्धनकानि प्रायो वर्त्तुलाग्राणि स्थालकाख्यैः सन्धिलक्ष्मभिरङ्कितानि च पर्शकार्बुदैः सन्ध्यर्थम्। अतएव प्राचां बाहुप्रवर्द्धनकेष्वेव स्थालकार्बुदसंज्ञा।

(३) पृष्ठकण्टकानि अधोऽधश्छादीनि दीर्घवृत्तमुखानि च

१ Vertebra Prominens. २ Ligamentum Nuchae. ३ यथा चरके (शा० ७ अ०)

[ १८श चित्रम्—विशिष्टाः पृष्ठकशेरुकाः ]




१८श चित्र व्याख्या ।—

१म—पृष्ठकशेरुका प्रथमा । ९म—सैव नवमी । १०म—सैव दशमी । ११श—सैव एकादशी । १२श—सैव द्वादशी । १, २, ३—कशेरुबाहुस्थानि स्थालकानि पर्शुकासन्धानाय । ४, ५, ६, ७, ८, ९—सन्धिप्रवर्द्धनकानि । सं, पूर्णचक्राकारं स्थालकम् । सं १—अर्द्धचक्राकारं तदेव ।

अथात प्रथमा, नवमी, दशमी, एकादशी, द्वादशी चेति पञ्च पृष्ठकशेरुकाः विशेषतोऽभिज्ञेयाः (१८श चित्रम्) । तद्यथा—

प्रथमा पृष्ठकशेरुका—अस्या एकैकस्मिन् पार्श्वे द्वे द्वे स्थालके पूर्णचक्राकारे, — तत्रैकं कशेरुपिण्डपार्श्वत ऊर्ध्वसीम्नि, अपरं बाहुप्रवर्द्धनके । अधःसीम्नि पुनः कशेरुपिण्डपार्श्वतोऽर्धचक्राकारं स्थालकमेकमेव ।

द्वितीयान्तु पृष्ठकशेरुकामारभ्य अष्टमीं यावत् प्रतिकशेरुपार्श्वं त्रीणि त्रीणि स्थालकानि (१७श चित्रम्) । तेषु पूर्णचक्राकारमेकं बाहुप्रवर्द्धनके, अर्धचक्राकारे द्वे कशेरुपिण्डपार्श्वतः ऊर्ध्वाधःसीम्नोः ।

नवम्यां पुनः पृष्ठकशेरुकायाम् अर्द्धचक्राकारमेकमेव स्थालकमेकैकस्मिन् कशेरुपिण्डपार्श्वे ऊर्ध्वसीम्नि । अपरं च बाहुप्रवर्द्धनके (१८श चित्रम्) ।

दशम्यान्तु पूर्णचक्राकारं कशेरुपिण्डस्यैकैकस्मिन् पार्श्वे स्थालकमेकमेव, अपरं बाहुप्रवर्द्धनके ।

एकादश्यां द्वादश्याञ्च पृष्ठकशेरुकायां कशेरुपिण्डस्यैकैकस्मिन् पार्श्वे पूर्णचक्राकारमेकैकमेव स्थालकं, बाहुप्रवर्द्धनके तु सर्वथा स्थालकाभावः । तत्रापि द्वादशी विशेषतः कटिकशेरुकासदृशो त्रिमुखेन बाहुप्रवर्द्धनकेनोपलक्षिता चेति विशेषः ।

**कटिकशेरुकाः**—पुनः पञ्च। तास्विमे विशेषाः ( ११ श चित्रम् )।

(१) कशेरुपिण्डानि बृहत्तमानि पार्श्वायतानि च। (२) पार्श्वप्रवर्धनकानि ह्रस्वानि त्रिमुखानि पक्षवदायतानि च। (३) पृष्ठकण्टकानि स्थूलह्रस्वानि परशुमुखानि च। तत्रापि पञ्चमी कटिकशेरुका विशेषेण परिच्छिद्यते ऊर्ध्व-मुखाभ्यां बाहुप्रवर्द्धनकाभ्यां, पृष्ठकण्टकेन च तन्वग्रेण।

बहवश्च स्थूलमांसलाः पेश्यः पृष्ठ-कटि-त्रिक-कशेरुकाणां पृष्ठकण्टकेभ्यः सम्भूताः। तासु मुख्याः पृष्ठच्छदा-कटिपार्श्वच्छदा-त्रिकपृष्ठिकाप्रभृतयः। तद् विवरणं मध्य-कायपेशीवर्णनीये वक्ष्यामः॥ तदेवं चतुर्विंशतिः कशेरुका व्याख्याताः।

## अथ त्रिकास्थि।

( १६श चित्रम्—त्रिकास्थि )




अत्र १, २, ३, ४, ५—त्रिकास्थि-निर्मापिकाणां कशेरुकाणां सूचकानि। अन्तरालेषु च रेखाचतुष्टयं कशेरुपिण्डसंयोगसूचकम्। ६, ६,—त्रिकपक्षद्वयम्। ७—श्रोणिसन्धितलम्। ८, ८—अनुत्रिकास्थ्ना सन्धानाय पादद्वयम्। ६, ६—त्रिकशृङ्गाख्ये सन्धि-प्रवर्द्धनके, तत्पुरस्तादन्तराले च त्रिकौष्ठम् पञ्चम-कटिकशेरुपिण्डेन सन्धेयम्। १० त्रिकमूलमनुत्रिकास्थ्ना सन्धेयम्। ११ (रेखावेष्टितः) शुण्डिकाख्यपेश्याः प्रभवः।

**त्रिकास्थि[1] नाम**—पृष्ठवंशानुबन्धेन स्थितं श्रोणि-फलकयोरन्तरालस्थं न्युब्जपृष्ठं त्रिकोणप्रायम् अस्थिफलकम्। तदिदं स्थानभेदात् संहत-स्वरूपं कशेरुकापञ्चकमिति सूक्ष्मदृशः ( १६श चित्रम् )। लिङ्गञ्चाहुरत्र कशेरुपिण्डसंघात-सूचकं रेखाचतुष्टयं पुरतः, कशेरुपृथक्त्वञ्च बाल्ये।

अत्रैतानि विशेषतो लक्ष-णीयानि—

(१) अष्टौ पुरोवर्त्ति-च्छिद्राणि (एकैकतश्चत्वारि) रेखाचतुष्टयानुबन्धेन, त्रिकपुरो-गामिनीनां नाड़ीनां निर्गमाय।

(२) अष्टौ पश्चिमच्छिद्राणि (एकैकतश्चत्वारि) त्रिकपश्चिम-गामिनीनां नाड़ीनां निर्गमाय।

---

१ Sacrum.

(३) त्रिकौष्ठं त्रिकशिरसि पुरःस्थम् (१६श चित्रम्)। तच्च तदुभयतः स्थितं शृङ्गद्वयञ्च पञ्चमकटिकशेरुकापिण्डेन सन्धिप्रवर्द्धनकाभ्याञ्च सन्धीयते ।

(४) कण्टकानि पञ्च पृष्ठतः स्थूलह्रस्वानि ।

(५) उभयतश्च त्रिकपक्षौ श्रोणिसन्धिलक्ष्मयुतौ श्रोणिफलकाभ्यां सन्ध्यर्थम् ।

(६) त्रिकमूलं त्रिकाधःप्रान्तरूपं, तेन सन्धीयते अनुत्रिकास्थिचूड़ा। अस्यैवोभयतः त्रिकपादद्वयम् अनुत्रिकशृङ्गाभ्यां सन्धानाय ।

(७) त्रिकगुहा च त्रिकाभ्यन्तरस्था, "सुषुम्ना-चामर[१]"-धारिणी ।

सप्त चात्र युग्मरूपाः पेश्यस्त्रिकास्थ्नि संलग्नाः—पुरस्तिस्रः, पश्चात् चतस्रः—इति । तत्र पुरस्तादेकैकतः संलग्नास्तिस्रः पेश्यः, यथा—त्रिकपक्षस्य बहिःसीम्नि श्रोणिपक्षिणी[२], शुण्डिकाख्या पेशी[३] च तदधस्तात्। तदधश्च निम्नार्द्धे अनुत्रिकिणी[४]। त्रिकास्थ्नः पश्चिमभागे तु एकैकतः संलग्नाश्चतस्रः पेश्यः, यथा—उत्तरार्द्धे सुषुम्नाच्छिद्रद्वयस्य मध्यसीम्नि कटिपार्श्वच्छदा[५]। पृष्ठकण्टकान्युभयतो मेरुधारिणी[६], तद्-बहिःसीम्नि त्रिकपृष्ठिका[७]। तदधस्तात् निम्नार्द्धपार्श्वे नितम्बपिण्डिका गरिष्ठा[८] इति। एतासु तिस्रो युग्मपेश्यः, मेरुधारिणी त्वेकैव मध्ये। तद्विवरणं पेश्यध्याये वक्ष्यते ।

(२० चित्रम्)
अनुत्रिकास्थि ।
(पुरोभागः)




१, १,—शृङ्गद्वयम् । २, २—स्नायुरज्जुसंयोगि प्रवर्द्धनकद्वयम् । ३ अनुत्रिकाग्रम्, तत्र पुरस्तात् रेखाङ्कित भागः पायुधारणी प्रभवः। ४, ४—अनुत्रिकिणी-पेश्योः प्रभवौ रेखाङ्कितौ। म, त्रिकास्थिसन्धानस्थालकम्।

## अथ अनुत्रिकास्थि ।

अनुत्रिकं[९] नाम (२०श चित्रम्) त्रिकास्थ्नोऽधःस्थितस्त्रिकोणः काकचञ्चुनिभोऽस्थिसंघातः । तच्च क्षुद्रकशेरुकाणां चतुष्टयेन पञ्चकेन वा मिलितेन निष्पन्नमिति परीक्षकाः । अस्योर्ध्वभागे शृङ्गद्वयं त्रिकमूलस्थाभ्यां पादाभ्यां सन्धिमत्। मध्ये च तयोः सन्धिलक्ष्माङ्कितं पिण्डं पञ्चमत्रिककशेरुपिण्डेन सन्ध्यर्थम्। पार्श्वयोश्च तदुभयतः प्रवर्द्धनके स्नायुरज्जुसंयोगाय ।

इदञ्च गुदपश्चिमत्वात् गुदास्थीति प्राञ्चः । तदेव अनेकास्थिगुटिकामयं कल्पते गवादीनां पुच्छास्थिमालानिर्माणायेति प्राणितत्वविदः ।

षट् चात्र निविशन्ते पेश्यः—द्वे द्वे पुरः पश्चाच्च एकैकतः क्रमात् अनुत्रिकिणी नितम्बपिण्डिका गरिष्ठा चेति चतस्रः । अधःप्रान्तं परितस्तु एका पायुधारिणी पुरस्तात्, गुदसंकोचनी बाह्या च पश्चात् । तद्विवरणं पेश्यध्याये वक्ष्यते ।

---

१ Cauda Equina. २ Iliacus. ३ Pyriformis. ४ Coccygeus. ५ Latissimus Dorsi. ६ Multifidus Spinæ. ७ Sacro-spinalis. ८ Gluteus Maximus. ९ Coccyx.

# अथ श्रोणिफलकम् ।

**श्रोणिफलकं**[1] नाम (२१श चित्रम्)—त्रिक-नितम्ब सक्थिधारणं सुबृहदस्थिफलकं विषमाकृति कपालभूयिष्ठम् । तदेकैकस्मिन् नितम्बपार्श्वे तिर्यगवतिष्ठते कटिपार्श्वात् सक्थिशिरो यावत् । तच्च उपर्यधः आयतं, संकुचितमध्यं, अन्तर्विवृत्तप्रायञ्च अधरार्धे । सन्धिश्चोभयोः श्रोणिफलकयोः पुरस्तात् परस्परं तरुणास्थि पत्रव्यवधानेन, पश्चात्तु त्रिकास्थिव्यवधानेन । एवं संहितयोश्च तयोः **श्रोणिचक्रम्**[2]—इति संज्ञा, तन्मध्यस्थगुहायास्तु **श्रोणिगुहा,**[3] इति । सेयं श्रोणिगुहा पुंसो गभीरा स्वल्पायता च । नार्यास्तु उत्ताना विशालायता च, गर्भधारणाय निर्माणवैशेष्यात् श्रोणिफलकयोः ।

अथास्याः श्रोणिगुहाया उत्तरोंऽशः जघनपक्षयोरन्तरालस्थो बृहती श्रोणिगुहा[4] नाम । अधरोंऽशस्तु लघ्वी श्रोणिगुहा, वस्तिगुहा[5] वा नाम, वस्तिगुदादि धारणात् । उत्तराऽधरांशविभाजनी च रेखाऽत्र दृश्या वस्तिकण्ठिका[6] नाम ।

आ यौवनारम्भाच्च दृश्यते प्रतिश्रोणिफलकमस्थित्रितयं तरुणास्थिपत्रकत्रयव्यवधानेन परस्परसंयुक्तम्, तदा च सूच्यते वंक्षणोदूखलान्तःस्थेन रेखात्रितयेन मध्यकेन्द्रात् त्रिधानिर्गतेन तत्सन्धानम् (२१श चित्रे ×1, ×2, ×3—4) । तथाच तदानीमेवं विभागः—**जघनकपालं** नाम ऊर्ध्वस्थोऽंशः विस्तृतपक्षाकारः । **कुकुन्दरास्थि** नाम अधःस्थोऽंशः कुकुन्दरपिण्डोपलक्षितः । **भगास्थि** नाम पुरःस्थोऽंशो भगाधिष्ठानभूतः । विंश-पञ्चविंशवर्षयोर्मध्ये तु प्रायेण त्रयाणामंशानां संयोगाद् दृश्यमेकमेवास्थि श्रोणिफलकं नाम ।

समग्रे पुनरेकैकस्मिन् श्रोणिफलके द्वयं विशेषतो लक्ष्यम्—त्रयाणां तदंशानां संयोगप्रभवम्—वंक्षणोदूखलं श्रोणिगवाक्षञ्चेति । तत्र—

वंक्षणोदूखलं[7] नाम—श्रोणिफलकस्य बहिःपार्श्वे मध्यतः स्थितमधोमुखं गभीरं कोटरम् उदूखलाकारम् (२१श चित्रम्) । तदन्तः सन्धीयते ऊर्वस्थ्नो मुण्डं चूड़ायां स्नायुरज्जुनिबद्धम् । उदूखलपरिधौ च संसज्यते तत्सन्धिबन्धनः स्नायुकोषः । तदन्तश्च दृश्यते आ यौवनारम्भाद् रेखात्रयमंशत्रितयसंघातसूचकम् ।

श्रोणिगवाक्षो[8] नाम भगास्थि-कुकुन्दरास्थिभ्यां परिमण्डलीकृतमन्तरालं गवाक्षाकारम् । तद् जीवच्छरीरे कलावृतं, पुंसि बृहत्तरं, स्त्रियान्तु नात्यायतं त्रिकोणञ्च ।

वर्णनसौकर्याय पुनरेकैकस्मिन् श्रोणिफलकांशे कल्प्यन्ते विशेषा बहवः । यथा—

---

१ Os Coxæ (Hip-bone). २ Pelvic girdle. ३ Pelvic Cavity. ४ False or greater Pelvis. ५ True or lesser Pelvis. ६ Ileo-pectineal line. ७ Acetabulum or Cotyloid Cavity. ८ Obturator foramen.

२१श चित्रम्

## श्रोणिफलकस्य बहिस्तलम्।




चित्रव्याख्या—रे १ अग्रिम नितम्बिका रेखा। रे २ अधर नितम्बिका रेखा। रे ३ पश्चिम-नितम्बिका रेखा। रे ४, वस्तिकण्ठिका रेखा। पे १ उदरदण्डिका। पे २ वस्तिचूड़िका। पे ३ ऊरुसंव्यूहनी दीर्घा। पे ४ ऊरुसंव्यूहनी ह्रस्वा। अ० अधरं भगास्थि शृङ्गम्। भ० भगास्थि-कुकुन्दरास्थ्नोरग्रिमसन्धानम्। ×1 भगास्थि जघनकपालयोः संयोगरेखा। ×2 सैव जघनकपाल-कुकुन्दरास्थ्नोः। ×3-4 सैव भगास्थि कुकुन्दरोस्थ्नोः।

( २२ श चित्रम् )

# श्रोणिफलकस्य आन्तरतलम्।




**चित्र-व्याख्या**—अत्र स्त्रीलिङ्गान्तपदैर्निर्दिष्टा अंशाः तत्तत्पेशीनां प्रभवा निवेशा वा ज्ञेयाः। क—वस्तिकण्ठिका। सी १—श्रोणिवङ्क्षणिकाख्यसिराधमन्योः, वङ्क्षणिकाख्यनाड्याश्च धारणाय सीता। ग—श्रोणिगवाक्षः। सी २—गुदोपस्थिकाख्य नाड़ी-सिरा-धमनीनां धारणाय सीता।

(१) **जघनकपालं**[१] नाम श्रोणिफलकस्य ऊर्ध्वगोऽंशः प्रधानभूतः कपालाकारः ( २१श चित्रम् )। तस्य द्वौ भागौ — जघनपक्षः, वंक्षणोदूखलांशश्चेति । तत्र जघनपक्षो[२] नाम पक्षवदायतो जघनकपालस्य प्रशस्तो भाग उपरिष्ठः । तस्य द्वे तले, बाह्यमान्तरञ्च । तयोर्बाह्यतलं जघनपृष्ठं नाम पुरस्तात् स्तोकेन कूर्मपृष्ठाकारम्, तत्र नितम्बपिण्डिकाख्यपेशीत्रयस्य[३] प्रभवाः रेखात्रयव्यवधानेन । तिस्रो हि तत्र रेखाः क्रमेण अग्रिम-पश्चिम-निम्नगाख्याः नितम्बान्तरिकाः[४] नाम ।

जघनपक्षस्य च परिधिभूता धारा जघनधारा नाम । मध्ये च जघनधारायाः तुङ्गप्रदेशो जघनचूडा[५] नाम । तत्पुरस्ताज्जघनधारायां आदिम-मध्यमयोरुदरच्छदाख्यपेश्योर्निवेशः[६] । पश्चिमतश्च कटिपार्श्वच्छदाख्यपेश्याः[७] । तस्याः पुरःसीम्नि द्वावुत्सेधौ पुरःकूटौ[८] नाम, तयोरूर्ध्वाधोभेदेन उत्तराधरसंज्ञाद्वयेन व्यवहारः । पश्चिमसीम्नि च द्वावुत्सेधौ पश्चिमकूटौ[९] नाम, तयोरपि पूर्ववत् संज्ञाद्वयम् ।

अधः पश्चिमतश्च जघनपक्षस्य तोरणाकारं द्वारं गृध्रसीद्वारं[१०] नाम । तेन गृध्रस्याख्यनाड्याः[११], तदनुवर्त्तिसिराधमनीनाड़ीनां, शुण्डिकाख्यपेश्याश्च[१२] निर्गमः ।

आन्तरतलं तु जघनकपालस्य (२२श चित्रम्) जघनोदरं नामेषत्खातगर्भोऽशः, स श्रोणिपक्षिण्याः[१३] पेश्याः प्रभवः । तदधःसीम्नि च वस्तिगुहाया ऊर्ध्वसीमदर्शिनी रेखा वस्तिकण्ठिका[१४] नाम । तदानुपूर्व्या च पश्चिमतः कर्णपालिसदृशाकारं त्रिकसन्धिस्थानं त्रिकस्थालकं[१५] नाम, तस्य च पश्चाद्द बन्धुरांशे त्रिकजघनिकाख्यस्नायोः संयोगः । तस्यापि पश्चात् त्रिकपृष्ठिकायाः, कटिचतुरस्रायाश्च[१६] प्रभवः । वंक्षणोदूखलांशस्तु जघनकपालस्य पादमूलस्थो वंक्षणोदूखलवर्णनया वर्णितपूर्वः ।

(२) **कुकुन्दरास्थि**[१७] नाम नितम्बाश्रयतः श्रोणिफलकस्य अधरांशः । स श्रोणिगवाक्षस्य अधोऽर्द्धपरिधिभूतः । तस्य त्रयो भागाः—वंक्षणोदूखलांशः, कुकुन्दरपिण्डं, कुकुन्दरकूटश्चेति । तत्र वंक्षणोदूखलांशो वर्णितपूर्वः ।

---

१ Ileum. २ Iliac wing or ala. ३ Gluteus Maxim., Med., & Minim. ४ Anterior, Posterier & Superior Gluteal Lines. तत्र पश्चिमरेखायाः पश्चात् प्रभवति नितम्बपिण्डिका गरिष्ठा । पश्चिमाग्रिमरेखयोर्मध्ये सैव मध्यमा, अग्रिम-निम्नगरेखयोर्मध्ये तु सैव लघिष्ठा । ५ Iliac cerest. ६ Ext. Oblique and Int. Oblique Muscles. ७ Latissmus Dorsii. ८ Anterior Iliac Spines—Superior and Inferior. ९ Posterior Iliac Spines—Superior and Inferior. १० Great Sacro-sciatic Notch. ११ Sciatic Nerve. १२ Pyriformis. १३ Iliacus. १४ Arcuate or Ileo-pectineal Line. १५ Auricular Surface. १६ Sacro-Spinalis & Quadratus Lumborum. १७ Ischium.

तत्पश्चात् त्रिकोणप्रायं प्रवर्द्धनकं कुकुन्दरकण्टकं[१] नाम। तत्परितो यमलाख्यपेश्यो[२] प्रभवः।

तदधस्तात् क्षुद्रतोरणाकारं खातं कुकुन्दरद्वारम्[३], अनुगृध्रसीद्वारं वा (२१श चित्रम्) नाम, तेन अन्तःस्थायाः श्रोणिगवाक्षिणी[४]-पेश्याः तदनुचरीणां सिरा-धमनी-नाडीनाञ्च वस्तिगुहायां प्रवेशो निर्गमो वा ततः।

कुकुन्दरपिण्डं[५] स्वनामध्याख्यातम्, तद्व उपविशतः पुरुषस्य भारधारणमूलम्। स चतसृणां पेशीनां प्रभवः। ताश्च यथा – जानुकर्षणी कलाकल्पा, सैव कण्डरा-कल्पा, द्विशिरस्का और्वी, ऊरुचतुरस्रा चेति।

कुकुन्दरकूटं[६] नाम कुकुन्दरपिण्डादूर्ध्वं पुरःसङ्गतं शृङ्गं भगास्थ्नोऽधरशृङ्गेण मिलितं श्रोणिगवाक्षपरिधेरंशभूतम् तत्पार्श्विकप्रदेशो बहिःस्थायाः श्रोणि-गवाक्षिण्याः[७], गरिष्ठाया ऊरुसंव्यूहन्याश्च[८] इति द्वयोः पेश्योः प्रभवः। तदन्तः-प्रदेशस्तु अन्तःस्थायाः श्रोणिगवाक्षिण्याः।

(३) **भगास्थि**[९] नाम भगाद्यधिष्ठानभूतः श्रोणिफलकस्य पुरःस्थोऽशः। तस्य त्रयो भागाः—मुण्डम्, उत्तरशृङ्गम्, अधरशृङ्गञ्चेति। (२१।२२श चित्रयोः)

तत्र मध्यपिण्डभूतं मुण्डं[१०], क्वचिद्व भगपीठं लिङ्गपीठमिति वा व्यपदिष्टम्। अन्तःसीम्नि च तस्य इतरभगास्थिसन्धानाय स्थालकमुच्चावचम्। उत्सेधे च तत् पुरःस्थे उदरदण्डिकाख्यपेश्याः[११] निवेशः, तत् परितश्च स्नाय्वादीनाम्।

उत्तरशृङ्गं[१२] मुण्डात् पश्चिमतो वंक्षणोदूखलावधिकं, परार्द्धेन तदंशनिष्पा-दकञ्च। तदेव श्रोणिगवाक्षस्य ऊर्ध्वपरिधिभूतम्। तदूर्ध्वसीमा चान्तरतलस्थया वस्तिकण्ठिकाख्यरेखया सङ्गता वस्तिगुहाया ऊर्ध्वसीमांशं रचयति।

अधरशृङ्गं[१३] पुनर्भगास्थिमुण्डादधो बहिर्गत्य कुकुन्दरकूटेन सङ्गतं श्रोणि-गवाक्षस्य पुरःपरिधिभूतम्। अस्य बहिस्तले ऊरुसंव्यूहन्याख्यपेशीत्रयस्य[१४], बाह्यायाः श्रोणिगवाक्षिण्याख्यपेश्याश्च प्रभवाः, अन्तःप्रदेशे तु अन्तःस्थायाः श्रोणिगवाक्षिण्याख्यपेश्याः। पुरोवर्त्तिधारायाञ्चास्य शिश्नप्रहर्षण्याख्यपेश्याः[१५] शिश्नमूलस्य च संयोगः।

१ Spine of Ischium. २ Gemellus Sup. & Inf. Muscles. ३ Lesser Sacro-Sciatic Notch. ४ Obturator Internus. ५ Tuberosity of Ischium. ६ Ascending Ramus of Ischium. ७ Obturator Externus. ८ Adductor Magnus. ९ Pubes **प्राचां भगास्थि तु उभयोर्भगास्थ्नोः सन्धानभवम्।** १० Body of Pubes. ११ Rectus Abdominis. १२ Ascending Ramus of Pubes. १३ Descending Ramus of Pubes. १४ Adductor Magnus, Longus and Brevis. १५ Erector Penis.

तदेतत् सावयवं श्रोणिफलकं समासतो व्याख्यातम् । तस्य स्नाय्वादि-संयोगविशेषास्तु चित्रादिषु स्नायु-पेशीवर्णनेषु च द्रष्टव्याः ।

## अथ अंसफलकम्

**अंसफलकं**[१] नाम (२२श चित्रम्) त्रिकोणप्रायं पक्षवदायतमस्थि-फलकं कपालभूयिष्ठमेकमेकैकतः अंसपृष्ठे । तच्च तिर्यगवस्थितं पृष्ठार्द्धं संच्छाद्य आ सप्तमपर्शुकामूलात् । सन्धीयते चैतत् बहिःसीममात्रे अक्षक-प्रगण्डास्थिभ्याम्, विवर्त्तते च स्वच्छन्दमन्तःसीम्नि पश्चिमतः पेशीमात्रप्रतिबद्धम् ।

अक्षकसंहितस्य चांसफलकस्य **अंसचक्रम्**[२] इति संज्ञा । एकैकञ्च अंस-चक्रम् एकैकतः अंससन्धेरुपरि पटलभूतं[३] सन्धिसंरक्षणाय संयोजनाय च पेशीस्नायूनाम् । (द्रश्यतां प्रथमकङ्कालचित्रम्)

एकैकस्य पुनरंसफलकस्य पञ्च विभागाः—अंसप्राचीरकम्, अंसकूटम्, अंसतुण्डम्, अंसपीठम्, अंसकपालिका चेति । तत्र—

अंसप्राचीरकं[४] नाम (२२श चित्रम्) अंसकपालिकापृष्ठात्तिर्यक् समुद्गतं बहिर्मुखमस्थिफलकं खड्गसदृशाकारं त्वगधोऽनुभवनीयम् । तेनांस-कपालिकापृष्ठतलस्य द्वेधा विभागः—अंसपृष्ठम्, उत्तरम् अधरं[५] चेति ।

अंसकूटं[६] नाम अंसप्राचीरकस्याग्रं सर्पफणायतमुच्चावचञ्च, तत्र सम्बध्यते अंसतुण्डसंयोजनी[७] स्नायुः । प्रभवश्चायमंसच्छदायाः पृष्ठच्छदायाश्च[८] पेश्याः ।

अंसतुण्डं[९] नाम अंसफलकस्य चूडायां हंसतुण्डाकारं बहिर्मुखं प्रवर्द्धनकम् । अग्रेचास्य पृष्ठतो द्विशिरस्कायाः[१०] काकोष्ठिकायाश्च[११] पेश्याः प्रभवः, पुरश्च लघ्व्या उरश्छदाख्यपेश्याः[१२] । सम्बध्येते चात्र तुण्डाक्षकसंयोजनी तुण्डांसकसंयोजनी च स्नायुः ।

---

१ Scapula. २ Shoulder-girdle. ३ पटलं छदिः (Roof). ४ Spine of Scapula. ५ Supra-spinous & Infra-spinous fossæ. ६ Acromion process. ७ Coraco-acromial ligament. ८ Deltoid & Trapazeus. ९ Coracoid process. १० Biceps. ११ Coraco-brachialis. १२ Pectoralis Minor.

२३श चित्रम्।

# अंसफलकम् (वामम्)।




२२श चित्र-व्याख्या—१—६—इत्यंकयोर्मध्ये अंसप्राचीरकम्। १, अंसकूटम्। २, अंस-तुण्डम्। ३, अंसाक्षकसंयोजनी-तुण्डांसकसंयोजनी चेति स्नायुद्वयस्य संयोगस्थानम्। ४, अंसशिरः-कोटरम्। ५, अन्तःकोटिः। ६, अंसप्राचीरस्यमूलदेशः। तमाश्रित्य च विवर्त्तते पृष्ठच्छदाख्या पेशी श्लेष्मधरकलापुटकव्यवधानेन। ७, अधःकोटिः। ८, बहिःकोटिस्थं स्थालकमंसपीठं नाम।

अत्र चैता निविशन्ते पेश्यः—पे १, अंसच्छदा। पे २, पृष्ठच्छदा। पे ३, द्विशिरस्काया ह्रस्व-मूलं काकोष्ठिका च। पे ४, द्विशिरस्काया दीर्घमूलम्। पे ५, अंसपृष्ठिका उत्तरा। पे ६, सैव अधरा। पे ७, अंसोन्नमनी। पे ८, अंसापकर्षणी लघ्वी। पे ९, सैव बृहती। पे १०, अंसा-धरिका बृहती। पे ११, सैव लघ्वी। पे १२, त्रिशिरस्का पेशी।

अंसपीठं[१] नाम (२३ श चित्रम्) अंसकूटादधःस्थमंसफलकस्य बहिःकोटि-स्थितं स्थालकं, तत्र सन्धीयते प्रगण्डास्थ्नो मुण्डं तत्परिधिसंयुक्तेन स्नायुकोषेण प्रतिबद्धम्। तदूर्ध्वस्तात् संयुज्यते द्विशिरस्काख्यपेश्या दीर्घमूलम्, तदधश्च त्रिशिरस्काख्यपेश्या मूलम्।

अंसकपालिका[२] नाम (२३श चित्रम्) अंसफलकस्य प्रधानांशस्त्रिकोण-कपालिकाकारः। तस्य द्वे तले—पुरस्तलं पश्चिमतलञ्च। तत्र पुरस्तलं पृष्ठाभिमुखम्, ईषत् कोरोदरं, त्रिचतुरवक्ररेखांकितञ्च। तत् अंसान्तरिकाख्यपेश्याः प्रभवः। पश्चिमतलं पुनरंसप्राचीरकेण भागद्वयविभक्तम्, तत्र ऊर्ध्वभागः उत्तराया अंसपृष्ठिकाख्यपेश्याः प्रभवः, अधोभागस्तु तस्या एवाधरायाः। तिस्रश्चांस-कपालिकाया धाराः[३], तावत्यश्च कोट्यः[४]। तत्र ऊर्ध्वधारा, माध्यधारा, पार्श्विकधारा चेति तिस्रो धाराः क्रमेण ऊर्ध्वान्तर्बहिःसीमस्थाः। बहिःकोटिः, अन्तःकोटिः, अधःकोटिश्चेति तिस्रः कोट्यस्तु तत्कोणरूपाः। तत्र बहिःकोटिः वृत्तायतीभूय अंसपीठे परिणता, अन्यत् कोटिद्वयं तु त्वगधोऽनुभवनीयम्।

दृश्यञ्च ऊर्ध्वधारायाम् अंसतुण्डमूले कोटरम् अंसशिरःकोटरं[५] नाम। द्वारञ्च तद् अंसारोहिण्या नाड्याः पृष्ठतो निर्गमाय। पार्श्विकधारा तावदंस-कपालिकाया बहिःसीमस्था कक्षायाः पश्चिमसीमानुवर्त्तिनी। सेयं कक्षानुगा[६] नाम। प्रभवश्चासौ पुरस्तादंसपीठाधःप्रदेशे त्रिशिरस्काख्यपेश्याः, तदधश्च अंसाधरिकाया लघ्व्याः बृहत्याश्च। माध्यधारा पुनर्धनुर्वक्रा पृष्ठवंशमनुगता च, सेयं वंशानुगा[७] नाम। प्रभवश्चासौ पुरस्तादग्रिमाऽरित्राख्यपेश्याः। पश्चिमतस्तु अंसोन्नमन्याः, अंसापकर्षण्या लघ्व्या बृहत्याश्च।

## अथ अक्षकास्थि।

**अक्षकं**[८] नाम अंसमूलादुरःफलकावधि परिघवत्सङ्गतं[९] धनुर्वक्रं नलकास्थि, एकमेकैकतः। तदेव 'जत्रु'[१०]-संज्ञमपि। सन्धीयते च तद् अन्तःसीम्नि उरःफलकेन,

---

१ Glenoid Cavity. २ Body of Scapula. ३ Borders. ४ Angles. ५ Supra-scapular Notch. ६ Axillary border. ७ Vertebral border. ८ Clavicle. ९ परिघो नाम अर्गलः। १० अतएव जत्रुणोरूर्ध्वं जाता रोगाः नासाक्षिकर्णकण्ठादिगता ऊर्ध्वजत्रुगताः इति व्यपदिश्यन्ते।

वहिश्चांसकूटेन । अंसफलकसहितस्य च तस्य तथा संहितस्य 'अंसचक्रम्'[1] इति संज्ञा ।

इतरनलकास्थिवदस्यापि त्रयो भागाः—द्वौ प्रान्तौ, मध्यनलकञ्चेति ।

२४श चित्रम्

अन्नकास्थि ( वामम् )

(क) ( ऊर्ध्वतलम् )




(ख) अधस्तलम् )

२३श चित्र-व्याख्या—चित्रद्वये ऊर्ध्वस्थं चित्रम् ऊर्ध्वतलस्य दर्शकम्, अधःस्थमधस्तलस्य। तत्र १ अन्तःप्रान्तः (उरःफलकाभिमुखः)। २, बहिःप्रान्तः (अंसाभिमुखः)। ३, त्रिकोणिकाख्य-स्नायुसंयोगार्थमर्बुदम्। ४, तिरश्चीना रेखा चतुरस्रिकाख्यस्नायुसंयोगाय। ५, अंसकूटेन सन्धेयं लाञ्छनम्। ६, पर्शुकान्नकसंयोजन्याः स्नायोः संयोगाय बन्धुरः प्रदेशः। ७, प्रथमोपपर्शुकोपरिभागेन सन्धेयमर्बुदम्। अत्र चैता निविशन्ते पेश्याः—पे १ ऊरःकर्णमूलिका। पे २ उरश्छदा गुर्वी। पे ३ अन्नकाधरा। पे ४ अंसच्छदा। पे ५ पृष्ठच्छदा। पे ६ उरो-जिह्वामूलिका।

---

१ Shoulder-girdle.

अन्तःप्रान्ते चास्य द्वे सन्धिलाञ्छने उत्तरमधरञ्चेति। तयोरुत्तरमुपरिष्ट-मुरःफलकपार्श्वस्थेन स्थालकेन सन्धीयते। अधरन्तु (२४श चित्रम्) प्रथमाया उपपर्शुकायाः शीर्षभागेन। अधस्तले चास्य बन्धुरः प्रदेशः पर्शुकाक्षकसंयोजन्याः स्नायोः[१] संयोगाय। बहिःप्रान्ते पुनरेकं सन्धिलक्ष्म, तद् अंसकूटेन सन्ध्यर्थम् संयुज्यते अंसाक्षकसंयोजनी स्नायुः[१]।

मध्यनलकं पुनरक्षकास्थ्नोर्द्वेधा धनुर्वक्रं, बहिरर्द्धे उत्तानमन्तरर्द्धे कूर्मपृष्ठवत् पुरस्तात्। अन्तरर्द्धश्चास्य दण्डवद्वृत्तपरिणाहः, बहिरर्द्धस्तु चिपिटायतः। तत्र बहिरर्द्धस्य अधस्तलमर्बुदोपलक्षितं त्रिकोणिकाख्यस्नायुसंयोगाय। अर्बुदादुद्गता च तिरश्चीना रेखा चतुरस्रिकाख्यस्नायुसंयोगाय। बहिरर्द्धश्चायमूर्ध्वतले अंसच्छदायाः पृष्ठच्छदायाश्च पेश्याः प्रभवः, अधस्तले तु अक्षकाधरायाः पेश्याः।

अन्तरर्धे पुनरस्य संयुज्यन्ते तिस्रः पेश्यः क्रमेण--उरः-कर्णमूलिका, उरश्छदा गुर्वी, उरोजिह्वामूलिका चेति।

## अथ उरःफलकम्।

**उरःफलकं**[२] नाम (२४श चित्रम्) फलकाकारमस्थिखण्डमुरोमध्यतः पुरस्तात् (दृश्यतां प्रथमकङ्कालचित्रम्)। तच्च खण्डत्रयसंयोगजम्। तत्र प्रथमं खण्डं शिखरस्थं ग्रैवेयकं नाम, द्वितीयमसिफलकाकारं मध्यफलकं नाम, तृतीयमधः-प्रान्तस्थं अग्रपत्रं नाम तरुणे वयसि तरुणास्थिमयम्। खण्डत्रयात्मकस्य चास्य उभयतः संयुज्यन्ते तरुणास्थीनि पर्शुकासंयोजकानि उपपर्शुकाख्यानि।

**ग्रैवेयकं**[३] नाम प्रथमं खण्डं षट्कोणं कण्ठमूले। तत्र षट् स्थालकानि साकल्येन उभयतः, तद्यथा—द्वे स्थालके अक्षकाभ्यां सन्धानाय, द्वे प्रथमाभ्यामुप-पर्शुकाभ्यां, द्वे च द्वितीयाभ्याम्। शिखरे चास्य अर्धचन्द्राकारं खातं कण्ठकूपो नाम। निम्नतश्चास्य द्वितीयखण्डेन संयोगः। निविशते चात्र ऐकैकतः पुर-स्तादुरःकर्णमूलिकाख्या पेशी, पृष्ठतश्च उरोजिह्वामूलिका।

---

१ स्नायुद्वयञ्चैतत् शेषोक्तमंसतुण्डाक्षकसंयोजनमिति स्नाय्वध्याये वक्ष्यते। २ Sternum.
३ Manubrium.

२५श चित्रम्

# उरःफलकमुपपर्शुकाश्च ।

( ऊर्ध्वम् )




२४श चित्रव्याख्या ।

१म, २य, ३य,—उरःफलकम् । तत्र १म—प्रथमखण्डं ग्रैवेयकं नाम । २म्—द्वितीयखण्डं मध्यफलकं नाम । ३म्, तृतीयखण्डमग्रपत्रं नाम । १, २, ३, ४, ५, ६, ७, ८, ९, १०, ११, १२—पर्शुकाग्राणि उपपर्शुका-संहितानि । दक्षिणतस्तु केवलमुपपर्शुकाः पृथग् दर्शिताः । अं० सं०, अक्षक-सन्धानम् । क, कण्ठकूपः । अत्रैता निविशन्ते पेश्यः—पे १, अक्षकाधरा । पे२,—उरःकर्णमूलिका । पे ३, उरश्छदा गुर्वी । पे ४, उरश्छदा लघ्वी ।

**मध्यफलकं**[१] नाम द्वितीयं खण्डमुरःफलकस्य, तद् उपरिष्टाद् ग्रैवेयकेन संहितम् ( २४श चित्रम् ) खण्डचतुष्टयसंघातजं च, खण्डचतुष्टयस्य बाल्ये पृथगवस्थानात्। षट् चात्र एकैकतः स्थालकानि उपपर्शुकान्तैः सन्धानाय। पुरस्तलं च ग्रैवेयक-मध्यफलकयोः गुर्व्या उरश्छदाख्यपेश्याः प्रभवः, वामार्द्धे वामाया दक्षिणार्द्धे दक्षिणायाः।

**अग्रपत्रं**[२] नाम तरुणास्थिभूयिष्ठं त्रिकोणप्रायं तृतीयं खण्डमुपरिष्टान्मध्यफलकेन संयुक्तम् ( २४श चित्रम् )। तदेतद् यकृद्विवृद्धौ समुन्नताग्रं दृश्यते, संयुज्यते च तत्र पुरस्तात् चरमाया उदरच्छदाख्यपेश्या मध्यकण्डरा, पश्चिमतश्च महाप्राचीरायाः पुरोभागः। वार्द्धके चास्य सर्वथा कठिनीभावः सुधाभागस्योपचयात्।

## अथ पर्शुकाः।

**पर्शुकाः**[३] पार्श्वकानि वा नाम उरःपञ्जरवृतिभूतानि[४] धनुर्वक्राणि स्थितिस्थापकानि चास्थिफलकानि। तेषां द्वादश एकैकस्मिन् पार्श्वे इति चतुर्विंशतिः पर्शुकाः। ताः सर्वा एव पश्चिमतः पृष्ठकशेरुकापिण्डैः पुरश्च तरुणास्थिभिरुपपर्शुकाख्यैः संहिताः। तासां सप्त ऊर्ध्वभागस्थाः क्रमेणाधोऽधो दीर्घतराः, ताः पुरस्तादुपपर्शुकाभिः स्वीयाभिरुरःफलकेन सह प्रतिबद्धाः। ता एताः मुख्या[५] नाम, ताभिरेव मुख्यतया उरःपञ्जरनिर्माणात्। अधोभागस्थाः पुनः पञ्च पर्शुकाः क्रमेणाधोऽधो ह्रस्वतराः, असम्बद्धाश्च ता उरःफलकेन। ताः गौणी[६] नाम। तासामपि अष्टमी नवमी दशमी चेति तिस्रः स्वैः स्वैरग्रैर्यथापूर्वमुपपर्शुकाभिरेव परस्परसम्बद्धाः। एकादशी द्वादशी चेति द्वे स्वाग्रवर्त्तिना ह्रस्वोपपर्शुकाद्वयेन संहिते अपि सर्वथा विमुक्ताग्रे[७] नाम, उपपर्शुकानामग्रतः सन्धानाभावात्।

---

१ Gladiolus. २ Xiphoid or Ensiform Cartilage. ३ Ribs. ४ उरःपञ्जरमुरोगुहाधारणं पञ्जराकारं वक्ष्यमाणम्. तस्य वृतिभूतानि वेष्टनभूतानि। ५ मुख्याः पर्शुकाः = True Ribs. ६ गौणी पर्शुकाः = False Ribs. ७ Floating Ribs.

[२६श चित्रम्—पर्शु का]

( पुरःप्रान्तः )




( पश्चिमप्रान्तः )

इयञ्च षष्ठी सप्तमी वा पर्शु का। १, मुण्डस्थं द्विधा विभक्तं स्थालकम्। २, अर्बु दम्। क, पर्शु काकोणः। ग, ग्रीवा। प, पर्शु कानुगा परिखा, तदाख्यसिराधमनीनाड़ीधारणाय। ३, ४, परिखायास्तटद्वयम् उत्तराधरभेदेन, पर्शु कान्तरिकाख्यपेशीद्वयसंयोगाय। ५, अग्रकोटिस्थं खातमुपपर्शु कासंयोगाय।

अथ षडिमानि प्रतिपर्शुकं लक्षणीयानि साधारणलिङ्गानि—मुण्डम्, अर्वुदं, ग्रीवा, कोणः, काण्डम्, अग्रकोटिश्चेति। ( २६श चित्रम् )

मुण्डं[१] नाम पर्शुकायाः पश्चिमप्रान्तो वर्त्तुलाकारः। तत्र च दृश्यं स्थालकं[२] युग्मं पृष्ठकशेरुकाद्वय-पिण्डस्थाभ्यामर्द्धस्थालकाभ्यां सन्धानाय।

अर्वुदं[३] नाम तत्समीपस्थं पिण्डं स्थालकाङ्कितम्। तस्य कशेरुवाहुस्थेन स्थालकेन सन्धिः।

ग्रीवा[४] नाम मुण्डार्वुदयोरन्तरालस्थो भागः।

कोणो[५] नाम अवुदपुरोवर्त्ती कोणाकारः प्रदेशः। तेन दृश्यते भग्नसंहितमिव पर्शुकाकाण्डम्।

काण्डं[६] नाम धनुर्वक्रः पर्शुकामध्यभागः। तस्य द्वे धारे—ऊर्ध्वधारा अधोधारा चेति। तत्र अधोधारायां परिखा पर्शुकानुगाख्या, सा तदाख्यसिराधमनीनाड़ीनां धारणाय। अस्याश्च तटद्वये संयुज्यते पर्शुकान्तरिकाख्यं पेशीद्वयम्।

अग्रकोटिर्नाम[७] पशुकायाः पुरःप्रान्त, स उपपर्शकासंयोगाय उच्चावचखातयुतः।

तान्येतानि साधारणलिङ्गानि तृतीयादि-नवम्यन्तपर्शकासु यथोक्तानि। प्रथम-द्वितीय-दशमैकादशद्वादशसंख्यासु तु पर्शु कासु तद्वै लक्षण्यमन्ये च विशेषाः। तद्यथा—

---

१ Head. २ Circular facet or Socket. ३ Tuberosity. ४ Neck ५ Angle ६ Shaft ७ Sternal end.

## ( २७श चित्रम् । विशिष्टपर्शुकाः । ]




**प्रथमा पर्शुका** ह्रस्वतमा दात्रफलकाकारा[1] च। अस्या मुण्डं क्षुद्रमेकस्थालकञ्च। काण्डं त्वायतमूर्ध्वाधस्तलोपलक्षितञ्च। कोणस्तु नास्त्येव। ऊर्ध्वतले च सीताद्वयमक्षाधराख्य-सिराधमन्योर्धारणाय[2] ( २७श चित्रम् )। तिस्रश्चात्र निविशन्ते पेश्यः क्रमेण अग्रिमारित्रा, पर्शुकाकर्षणी पुरोगा, सैव मध्यमा चेति।

द्वितीया पर्शुका प्रथमावदेव प्रायः, दीर्घतरा च। तदूर्ध्वतले निविशते पेशीद्वयम् पर्शुकाकर्षणीपृष्ठगा, अरित्रा चेति।

२७श चित्र-व्याख्या—

(१म)—प्रथमा पर्शुका। (२य)—द्वितीया। (१०म)—दशमी। (११श)—एकादशी। (१२श)—द्वादशी। तत्र अ्र—अर्बुदम्। क—कोणः। सं, मुण्डस्थं स्थालकम्। सी—सीताद्वयम् अक्षधराख्यसिराधमनीधारणार्थं। पेशीनिवेशास्तु—प्रथमायां पे १, पर्शुकाकर्षणी मध्यमा। पे ३, पर्शुकाकर्षणी पुरोगा। द्वितीयायां—पे१, पर्शुकाकर्षणी पृष्ठगा। उभयोः पे २, पे २, अग्रिमारित्रायाः मूलद्वयम्।

दशमी पर्शुका तु ह्रस्वा बड़िशाकारा च। अस्या अपि मुण्डमेकस्थालकं, कोणस्तु काण्डमध्यस्थः। एकादश्यामप्येवमर्बुदाभावश्च। द्वादशी एकादशीवत्। तत्र कोणाभावश्च। ता एताश्चतुर्विंशतिः पर्शुका व्याख्याताः।

**उपपर्शुकाः** पुनः ( २५श चित्रम् ) पर्शुकावदेव संख्यया, पर्शुकाग्रसम्बद्धास्तरुणास्थिमय्यः। तासामुरोऽस्थिषु ग्रहणम् प्राचां ग्रन्थेषु।

---

१ दात्रं शस्यकर्त्तनी ( Sickle) २ Subclavian Vein & Artery,

## अथ उरःपञ्जरम्।

उरःपञ्जरं[1] नाम उरोगुहाधारणं पञ्जरमस्थिमयम् (कङ्कालचित्रद्वये द्रष्टव्यम्)। निर्मीयते च तत् पश्चिमतो द्वादशभिः पृष्ठकशेरुकाभिः, पृष्ठतः पार्श्वयोश्च तत्संलग्नाभिस्तावतीभिः पर्शुकाभिः, पुरस्तात् तु उरःफलकेन पर्शुकोपपर्शुका-सहितेन। तच्चोपरिष्टादुन्मुक्तं कङ्काले। जीवच्छरीरे तु संवृतं मांसकलामय-प्रावरण्या। संवृतञ्च तदधस्तान्महाप्राचीराख्यपेश्या। पार्श्वयोरायतञ्च तत्-क्रमादधोऽधः। आधीयन्ते च तत्र तथासंवृते फुस्फुसद्वयं सह श्वासमार्गेण, हृदयं च स्थूलमहासिराधमन्यादिसहितम्, अन्ननलिका च। तद्विवरणं तत्तदाशय-वर्णने वक्ष्यामः।

इति द्वितीयो मध्यकायाऽस्थिविज्ञानीयः परिच्छेदः।

---

## अथ तृतीयः शिरोऽस्थिविज्ञानीयः परिच्छेदः।

इह खलु षड़ङ्गेऽस्मिन् शरीरे सर्वज्ञानप्राणायतनमुत्तमाङ्गं शिरः। तत्र द्वाविंशतिरस्थनाम्, अष्टाविंशतिर्वा सह कर्णास्थिषट्केन। संहितं च तदधस्तात् पृष्ठवंशेन धारणदण्डभूतेन।

तेषाञ्च शिरोऽस्थनाम् अष्टौ शिरःसम्पुटनिर्मापकानि, चतुर्दश च मुखमण्डल-निर्मापकानि। दन्तास्तु हनुमण्डलस्थाः तदन्तर्भूताः। ते द्वात्रिंशत्संख्याः प्रौढ़ानाम्। नेह ते पृथग्गण्यन्ते[2]।

## अथ शिरःसम्पुटास्थीनि।

शिरःसम्पुटं[3] नाम सङ्गोपाङ्गमस्तुलुंगाधारभूतम् अस्थिसम्पुटम् अलावु-फलार्द्धसदृशाकारम्। तस्य चाधःसीमाद्योतकं चक्रमीदृशम् (२७श चित्रे स्पष्टम्)—

भ्रुवौ चेत् कर्णमूलाभ्यां पश्चात् केशान्तसंगते।
तदाऽसौ सूच्यते सीमा शिरःसम्पुटनिम्नगा[4]॥

---

१ Throax. २ चरक-याज्ञवल्क्यादयस्तु गणयन्त्येव तानित्युक्तपूर्वम्। ३ शिरःसम्पुटम् = Cranium. ४ अस्यह्ययमर्थः। भ्रूद्वयस्य बाह्यसीमे यदि कर्णमूलाभ्यां संयोज्येते रेखाकर्षणेन, ततश्च त एव रेखे यदि पश्चात् केशान्तं यावद् आकृष्येते, ततस्तद्रेखाद्वयसंयोगेन शिरःसम्पुटस्य निम्नसीमा दर्शिता भवति—इति।

## २८श चित्रम्—करोटिः।

( अत्र शिरःसम्पुटस्य निम्नसीमा तैरेवाक्षरैर्दर्शिता )




चित्र-व्याख्या—१, १, इति सीमाद्वयदर्शितं पुरःकपालम्। २, २, पार्श्वकपालस्य सीमाद्वयम्। ३, ३, पश्चात्कपालम्। ४, ४, शंखास्थि। ५, तस्यैव गोस्तनांशः। ६, ६, गण्डास्थि। रे१, शंखतोरणिका उत्तरा रेखा। रे२, सैव अधरा। मध्ये शंखच्छद पेश्याः प्रभवः।

**तत्र शिरःसम्पुटनिर्मापकानि अष्टौ अस्थीनि—पुरःकपालं, पश्चिमकपालं (पश्चात्कपालं वा), पार्श्वकपाले द्वे चेति चत्वारि शिरःकपालानि। द्वे शङ्खास्थिनी शंखदेशस्थे। जतूका झर्झरकं चेति द्वे शिरः सम्पुटभूमिभूते—इति। तत्र प्रथमषट्कं स्फुटं बहिर्दृश्यम् जतूका झर्झरकं चेति द्वयं तु नासा-कण्ठादिच्छदिभूतं निगूढशरीरम्।**

**करोटिस्तु समग्रमस्थिमयं शिरः सह मुखमण्डलेन। तत्र दृश्या विशेषा इहैवाऽग्रे वक्ष्यन्ते।**

## अथ पश्चिमकपालम्।

**पश्चिमकपालम्**[१] (पश्चात्कपालं वा) नाम चतुर्षु शिरःकपालेषु प्रधानम्, **तद्धि मूलबन्धनं शिरोऽस्थ्नाम्। सन्धीयते च तदेवाश्रित्य समग्रं शिरः पृष्ठवंशस्य चूडायाम्।**

१ Occiput or Occipital Bone.

तस्य च द्वौ भागौ—कपालभागो मूलभागश्चेति। तत्र कपालभागः सर्पफणाकार ऊर्ध्वस्थः पश्चिमः। मूलभागः सर्पग्रीवासदृशः अधःस्थः पुरोमुखः। संयोगेन चानयोर्निष्पद्यते महाविवरं[1] वृत्तप्रायं सशीर्षक-सुषुम्नाकाण्डधारणाय। (२९श।३०श चित्रयोः)

## २९श चित्रम्—पश्चिमकपालस्य पुरस्तलम्।




मूलपिण्डम्
(जतूकास्थिशरीरेण सन्धेयम्)

**चित्र-व्याख्या**—१, महावर्त्तः। २, २, पार्श्वकोणौ। २—१—२ पार्श्विकाख्या सिरा-परिखा। ३, पुरोधाराया मध्यबिन्दुः। ३—१—४ दीर्घिकाख्या सिरापरिखा। ५, ५, कलायकद्वयं स्नायुसंयोगाय। ६, ६, मन्याप्रबर्द्धनके। ७, ७, मन्याखाते। क, परिखातटयोः कलासंयोगसूचकं रेखाद्वयम्। म म—मस्तिष्कधारणाय खातद्वयम्। अम० अम—अनुमस्तिष्कपश्चिमांशधारणाय खातद्वयम्। अत्र चेदमवधेयम्। पार्श्विकाख्यसिरापरिखातटयोः संयुज्यते जवनिका नाम दृढ़कला, या मस्तिष्कानुमस्तिष्कयोर्विभजनी। ३-१-४—इत्यनुक्रमेण तु अनुदैर्घ्यमवस्थिता दात्रिका नाम कला।

---

१ Foraman Magnum.

दृश्यते च पश्चिमकपालस्य तलद्वयम्—पुरस्तलं पृष्ठतलञ्चेति। तत्र—

(क) **पुरस्तलं** शिरःसम्पुटाभ्यन्तरस्थम्। तत्र च—

कपालभागस्य पुरस्तलं कोटोदरं, खातचतुष्टयोपलक्षितञ्च, तत्राधीयते मस्तिष्कपश्चार्द्धः अनुमस्तिष्कस्य पश्चिमांशश्च धम्मिल्लकसंज्ञः प्रत्येकं वाम-दक्षिणपिण्डयोर्विभक्तः (२६श चित्रम्)। गभीरञ्च तत्र सिरापरिखाचतुष्टयम्[१] स्वस्तिकाकारं पूर्वोक्तखातचतुष्टयविभजनम्। स्वस्तिकमध्ये च तत्केन्द्रभूतः प्रदेशो महावर्त्तो[२] नाम, तत्सिरापरिखानां सम्मेलनस्थानम्। सिरापरिखातटेषु च संयुज्यन्ते 'मस्तिष्कावरणी' संज्ञाया दृढ़कलायाः आयतखण्डद्वयम्[३]—दात्रिका, जवनिका चेति।

मूलभागस्य[४] (२८श चित्रम्) पुरस्तल तु ईषत्खातप्रायम्, तत्राधीयते धम्मिल्लकसहितं सुषुम्नाशीर्षकम्[५]। कपाल-मूलभागयोश्च संयोगस्थले पार्श्वयो-रर्द्धचन्द्राकारे खाते[६] मन्याखाते नाम, ते अनुमन्याख्यस्थूलसिराद्वयधारणाय[७]। तदुपकण्ठस्थे च प्रवर्द्धनके मन्याप्रवर्द्धनके[८] नाम (२६श चित्रम्)।

(ख) **पृष्ठतलं** पुनः पश्चिमकपालस्य शिरःसम्पुटबहिःस्थम्। तस्यापि भागद्वयं पूर्ववत् पृथग् वर्ण्यते (३०श चित्रम्)। तत्र—

कपालभागस्य पृष्ठतलं कूर्मपृष्ठाकारम्, उपरिष्टात् शिरश्छदाख्यपेशी-संवृतञ्च जीवच्छरीरे। तस्य मध्यस्थ उत्सेधः पश्चिमार्वुदं[९] नाम, तदानुपूर्व्या चाधोलम्बिनी समुन्नता रेखा मध्यालिका[१०] नाम, तयोः संयुज्यते ग्रीवाधराख्या[११] स्नायुरज्जुः। उभयतश्च मध्यालिकातो बहिर्गते द्वे द्वे तोरणाकारे रेखे, तत्र ऊर्ध्वस्थे रेखे उत्तरतोरणिके[१२] नाम, अधःस्थे तु अधरतोरणिके[१३] नाम।

---

१ Two Longitudial and Two Lateral Sinuses. २ Torcular Herophilii. ३ Falx Cerebri and Tentorium Cerebelli. ४ Basilar Portion. ५ Medulla Oblongata. ६ Jugular Fossae. ७ Jugular Veins. ८ Jugular Processes. ९ Ext. Occipital Protuberence. १० Ext. Occipital Crest. ११ Ligamentum Nuchae. १२ Superior Curved lines, १३ Inferior Curved lines.

# [ ३०श चित्रम्—पश्चिमकपालस्य पृष्ठतलम् ]




चित्र-व्याख्या—१, १, पृष्ठतलस्य कूर्मपृष्ठनिभो मसृणभागः शिरश्छदाख्यपेश्या संवृतः। २, पश्चिमार्बुदम्। ३, ३, कलायकद्वयं स्नायुसंयोगि। ४, ४, मूलकोटिपश्चिमगं रन्ध्रद्वयम्। ५, ५, मूलकोटिद्वयं चूड़ावलयास्थि सन्धायि। ६, ६, तत्पुरोगं रन्ध्रद्वयम्। ७, ७, मन्याप्रबर्द्धनके। ८ मूलपिण्डम्। रे १, उत्तरतोरणिका। रे२, अधरतोरणिका। रे३, पश्चिमालिका। पेशीनिवेशास्तु—पे १, पृष्ठच्छदा। पे२, शिरश्छदा। पे ३, उरःकर्णमूलिका। पे ४, शिरोग्रीवविवर्त्तनी। पे ५, शिरोग्रीवपृष्ठिका। पे ६, उत्तरतिरश्चीना। पे ७, पे ८, शिरःपृष्ठदण्डिका गुर्वी, लघ्वी च। पे ९, शिरःपार्श्वदण्डिका। पे १०, पे ११, शिरःपूर्वदण्डिका लघ्वी गुर्वी च। पे १२, उत्तरा कण्ठसङ्कोचनी।

मूलभागस्य पृष्ठतले तूभयतः शिम्बीबीजाकारौ उत्सेधौ मूलकोटिसंज्ञौ[१], तयोश्चूड़ावलयाख्यकशेरुकाया उपरिष्टाभ्यां स्थालकाभ्यां सन्धिः। तदुत्संगयोश्चान्तः कलायके[२] मध्यरज्जुकाख्यस्नायोः[३] प्रान्तद्वयसंयोगाय। मध्ये च मूलपिण्डस्य पृष्ठतः कलायकम् उत्तरायाः कण्ठसंकोचनी पेश्याः संयोगाय। तदुपरिष्टाच्च द्वौ द्वौ रन्ध्रमार्गौ[४] मूलकोट्योः पुरः पश्चाच्च। तत्र पुरोवर्त्ति रन्ध्रमार्गद्वयं जिह्वामूलिन्योर्नाड्योर्निर्गमाय। पश्चिमं रन्ध्रद्वयं तु सिरापरिवाहिकानिर्गमाय।

१ Occipital Condyles. २ Tubercles. ३ Check Ligaments. ४ Anterior and Posterior Condyloid Foramina.

धाराः पुनः कपालभागस्यातिदन्तुराः (२६श चित्रम्)। तत्पार्श्ववर्त्तिनौ च कोणौ पार्श्वकोणौ[१] नाम (तत्रैव २, २,)। तयोरूर्ध्वभागस्थौ धारांशौ पार्श्वकपालयोः पश्चिमधाराभ्यां सन्धेयौ, अधोभागस्थौ धारांशौ तु उभयतः शङ्खास्थिभ्याम्। मध्ये च तयोर्मूलपिण्डं जतूकास्थिसंयोगि।

एवञ्च पश्चिमकपालस्य सन्धानं षड्भिरस्थिभिः परिज्ञेयम्। तद्यथा—उत्तरार्द्धे पार्श्वकपालाभ्यां, अधरार्द्धे पार्श्वयोः शङ्खास्थिभ्यां, मूलाग्रे जतूकास्थ्ना, मूलकोष्ठयोश्च चूडावलयास्थ्नेति। एष च तत्सन्धानस्मारकः श्लोकः—

जतूक[२]-चूडावलया-शङ्खपार्श्वकपालकैः।
पश्चिमस्य कपालस्य सन्धानं षड्भिरस्थिभिः॥

अथ पेशीनिवेशाः—

पेश्यश्च पश्चिमकपालस्य पृष्ठतले संयुज्यन्ते द्वादश एकैकतः। तद्यथा—उत्तरतोरणिकोपकण्ठे तिस्रः—शिरश्छदा, पृष्ठच्छदा, उरःकर्णमूलिका चेति; तोरणिकयोरन्तराले तिस्रः—शिरोग्रीवपृष्ठिका, उत्तरतिरश्चीना, शिरोग्रीवविवर्त्तनी उत्तरा चेति; अधरतोरणिकाधस्तिस्रः—शिरःपृष्ठदण्डिका लघ्वी, सैव गुर्वी, शिरःपार्श्वदण्डिका चेति; मूलभागे च तिस्रः—शिरःपूर्वदण्डिका लघ्वी गुर्वी च, उत्तरा कण्ठसंकोचनी चेति। (तत्संस्थानानि ३० चित्रे द्रष्टव्यानि)।

# अथ पार्श्वकपालास्थिनी।

**पार्श्वकपाले** नाम शिरःपार्श्वस्थे कपालास्थिनी चतुरस्रप्राये पुरःपश्चिमकपालयोर्मध्यस्थे। ताभ्यां मध्यरेखासंहिताभ्यां निर्मीयते शिरःसम्पुटस्य छदि[३]र्भागः, पार्श्वभागौ च भूम्ना।

---

१ Lateral Angles. २ जतूकं जतूकास्थि। नामैकदेश ग्रहणे नाम ग्रहणम्।
३ छदिः = Roof.

एकैकस्य च पार्श्वकपालस्य द्वे तले—वहिस्तलमन्तस्तलञ्चेति। चतस्रश्च धाराः, चत्वारश्च कोणाः।

तत्र वहिस्तलं कूर्मपृष्ठप्रायं (२८श चित्रम्), तत्र च पिण्डाकार उत्सेधः पार्श्वकुम्भाख्यः[१]। द्वे च धनुर्वक्रे रेखे शङ्खतोरणिका[१] उत्तरा अधरा चेति नामतः। तत्र अधरायाः शङ्खतोरणिकायाः क्रोड़देशः शङ्खच्छदाख्यपेश्या प्रभवः।

## ३१श चित्रम्—पार्श्वकपालस्य आभ्यन्तरतलम्।




[१, १, १, अङ्किताः प्रदेशाः कलाग्रन्थिखातानि। द्रष्टव्यानि चात्र धमनीप्रतानलाञ्छनानि।]

**अन्तस्तलं** कोरोदरमुच्चावचञ्च। तत्र स्फुटानि मस्तिष्ककलापोषण्या मध्यमधमन्याः प्रतानलाञ्छनानि, च क्वचित् क्वचित् खातानि तस्या एव कलाया ग्रन्थिवन्धननिवेशाय (३०श चित्रे १,)।

---

१ Partieal Eminences. Superior and Inferior Temporal Ridges.

धाराः पुनः पार्श्वकपालस्य चतस्रो दन्तुराग्राः,—क्रमादुत्तरा, अधरा, पुरोगा, पश्चिमगा चेति। तत्र उत्तरा इतरेण पार्श्वकपालेन सन्धेया, अधरा शङ्खास्थ्ना जतूकास्थ्ना च, पुरोगा पुरःकपालेन, पश्चिमगा पश्चिमकपालेन।

कोणाः पुनरस्य चत्वारः। तत्र पुरःकोणद्वयमूर्ध्वाधःस्थं क्रमादुत्तराधरसंज्ञं, पश्चिमकोणद्वयञ्च तथैव। तत्र पुरःपश्चिमौ कोणावूर्द्धवर्त्तिनौ आजन्मनो वर्षं यावत् कलामयौ स्तः, ततश्च दृश्यम् स्तनन्धयशिशोः कोमलं तालकद्वयं[१] शिरसि पुरः पश्चादवस्थितम्। अधरः पुरःकोणस्तु धमनीखाताङ्कितो जतूकास्थ्ना सन्धेयः। अधरः पश्चिमकोणः पुनः पार्श्विकाख्यसिरापरिखयाऽङ्कितः सन्धीयते शङ्खास्थ्ना।

**सन्धानं** चैवमेकैकस्य पार्श्वकपालस्य अस्थिपञ्चकेन द्रष्टव्यम्। तत्-संग्रहार्थश्चायं श्लोकः—

पुरःपश्चात्कपालाभ्यां शङ्खास्थ्ना च जतूकया।
सन्धिः पार्श्वकपालस्य स्वनाम्ना[२] चेति पञ्चभिः॥

# अथ पुरःकपालम्।

**पुरःकपालम्**[३] **(अग्रकपालं)** वा नाम शिरःसम्पुटपुरोभागनिर्मापकं कपालास्थि बृहन्मुक्तागृहाकारम्। तस्य च द्वावंशौ, ललाटभागो नेत्रच्छदि-भागश्चेति (३२ चित्रम्)। तत्र—

(१) **ललाटभाग**[४]स्त्रिभिः फलकैर्निर्मितः,—मध्ये ललाटफलकेन पार्श्व-योश्च पार्श्वफलकाभ्यामिति। तेषु—

(क) **ललाटफलकं**[५] बहिस्तले कूर्मपृष्ठाकारम्। उभयतश्च तत्रोत्सेधौ कुम्भतलवदुन्नतौ अग्रकुम्भौ[६] नाम, तौ मेधाविनामत्युन्नतौ प्रायः, अल्पमेधसान्तु स्तोकोन्नतौ। तयोर्मध्ये नासामूलगं स्थानं कूर्चकं[७], भ्रूमध्यं वा नाम, तत्र स्थप-न्याख्यं मर्मेति प्राञ्चः। तदानुपूर्व्या चोर्ध्वगता किञ्चिन्मात्रदृश्या रेखा पुरःकपा-लार्धयोराबाल्यं पृथगवस्थितयोः संयोगसूचिका, सेयं गूढसीमन्तिका[८] नाम।

---

१ Anterior and Posterior Fontanelles. २ स्वनाम्ना इतरपार्श्वकपालेन। ३ Frontal Bone. ४ Frontal Portion. ५ Frontal Plate. ६ Frontal Eminences. ७ Glabella. "कूर्चमस्त्री भ्रुवोर्मध्यम्" इत्यमरः। ८ Metopic Suture. प्रौढस्य पुरःकपाले तु नेयं दृश्या।

उभयतश्चात्र भ्रुवोरनुक्रमेण तोरणाकारावुत्सेधौ भ्रूतोरणिकाख्यौ[१]। तयोरेकैकस्या द्वे कोटी बहिःकोटिरन्तःकोटिश्चेति[२][३], मध्यतश्च च्छिद्रं (कोटरमात्रं वा सूक्ष्मम्) अधिभ्रुवं[४] नाम (३२श चित्रम्)। तत्र बाह्यकोटिरपाङ्गदेशस्था गण्डास्थि-सन्धायिनी, अन्तःकोटिस्तु नासामूलस्था नासास्थिसन्धायिनी। छिद्रं पुनरधिभ्रु-वाख्यं तदाख्यसिरा-धमनी-नाड़ीनां[५] निर्गमाय। भ्रूतोरणिकयोश्च मध्ये पश्चात् ललाटान्तर्निगूढ़ानि कोटराणि ललाटकोटराणि[६] नाम, तेषां नासागुहाभ्यामनुबन्धः सूक्ष्मरन्ध्रमार्गाभ्याम्। तानि जीवच्छरीरे श्लेष्मलकलावृतानि।

## ३२श चित्रम्—पुरःकपालस्य बहिस्तलम्।




[ चित्रव्याख्या—पा०—पार्श्वकपालेन सन्धेयांशः। सी०—गूढसीमन्तिका (बाल्ये दृश्या)। अ०कु०—अग्रकुम्भः। भ्र०तो०—भ्रूतोरणिका। अभ्रु—अधिभ्रुवं छिद्रम्। ]

अन्तस्तलं पुनर्ललाटफलकस्य (३३श चित्रम्) कोरोदरमुपलक्षितञ्च यतस्ततः कलाग्रन्थिखातैर्धमनीप्रतानांकैश्च[७]। मध्ये चास्य सिरापरिखा, यस्यास्तटयोः संयुज्यते वराशिकाख्यकलाया दात्रिकाख्यो[८] मध्यभागः।

---

१ Superciliary ridges. २ External Angular Process. ३ Internal Angular Process. ४ Supra-orbital Foramen. ५ Supra-orbital Vein, Artery and Nerve. ६ Frontal Sinuses. ७ Depressions for Pacchionian bodies. ८ Falx Cerebri.

(ख) **पार्श्वफलके**[१] नाम पुरःकपालस्य ललाटफलकमुभयतः स्थिते ईषत्खातोदरे फलके, ते शङ्खच्छदाख्यपेश्योः प्रभवभूते। तयोरूर्ध्वसीम्नोर्दृश्ये धनुर्वक्रे रेखे शङ्खतोरणिके[२] नाम, ताभ्यामपि तयोरेव पेश्योः प्रभवः ( ३३श चित्रम् )।

## ३३श चित्रम्—पुरःकपालस्य अन्तस्तलम् ।

( प्रदर्शनसौकर्याय उत्तानमधोमुखञ्च कृत्वा दर्शितम् )




[ चित्र-व्याख्या—१, कलाग्रन्थिखातम्। २, धमनीप्रतानांकाः। ३, ४, झार्झरकोटराणि। ५, महापरिखा। ६, तस्यास्तटद्वयम्। ७, अश्रुग्रन्थिखातम्। ८, नासागुहायाश्छदिनिर्मापकं क्षुद्रफलकम्। ९, सिरापरिखायास्तटद्वयम्। सं० १—जतूकास्थ्नो लघुपक्षत्या सन्धेयांशः सं० २, झर्झरकपार्श्वेन सन्धेयांशः। :सं० ३, अश्रुपीठास्थ्ना सन्धेयांशः। सं० ४, ऊर्ध्वहन्वस्थ्नो नासाकूटेन सन्धेयांशः। सं० ५, नासास्थ्ना सन्धेयांशः। सं० ६, झर्झरकस्य मध्यफलकेन सन्धेयांशः। ]

(२) **नेत्रच्छदिभागः पुनः** पुरःकपालस्य निर्मीयते नेत्रच्छदिफलकाभ्यां, महापरिखा च सुषिरतटद्वयवती तन्मध्यवर्त्तिनो। तत्र—

---

१ Temporal Plates. २ Temporal Ridges.

**नेत्रच्छदिफलके**[1] नाम त्रिकोणप्राये ईषत्कोरोदरे मसृणास्थिफलके, ते नेत्रगुहयोश्छदिभूते। एकैकस्य च फलकस्य बहिरंशे ईषदालक्ष्यं खातमश्रुग्रन्थिधारणाय[2]। (३३ चित्रम्)

मध्ये चानयोः फलकयोः परिखा--**महापरिखा**[3] नाम। सा करोटी स्वतटद्वयसंहितस्य झर्झरकास्थ्नश्चालनीपटलाख्येन भागेनापूर्यते। तटद्वये चास्याः कोटराणि झर्झरास्थ्नोऽभ्यन्तरस्थैः कोटरैरनुषङ्गीणि। तान्यपि जीवच्छरीरे श्लेष्मलकलावृतानि। पुरस्ताच्च महापरिखायाः क्षुद्रमस्थिफलकमेकमेकैकतो नासागुहाच्छदिनिर्मापकम्। तन्मध्यतश्च अग्रकण्टकं[4], तत्पुरोभागे नासास्थिभ्यां, पश्चिमतश्च झर्झरास्थ्नो मध्यफलकेन सन्धेयम्। तदुभयतश्च ललाटकोटराणां द्वाराणि।

**सन्धानं** पुनः पुरःकपालस्य द्वादशभिरस्थिभिर्द्रष्टव्यम्। तद्यथा—महापरिखाया बहिःसीम्नि सन्धीयते अस्थिसप्तकम् यथा—पुरोऽर्द्धे नासास्थिद्वयम्, ऊर्ध्वहन्वस्थिद्वयम्, अश्रुपीठास्थिद्वयं च; पश्चार्द्धे झर्झरकास्थि चेति। नेत्रच्छदिफलकस्य पश्चिमान्तःकोणे एकैकतो जतूकास्थ्नः क्षुद्रपक्षतिः, तद्बहिःसीम्नि पश्चार्द्धे तस्यैव बृहत्पक्षतिरिति चतुर्धा सन्धीयते जतूकास्थि। भ्रूतोरणिकयोर्बहिःकोट्योः गण्डास्थिद्वयम्। ललाटफलकस्य पश्चिमधारायां पार्श्वकपालद्वयमिति (द्रश्यतां ३३श चित्रव्याख्या)। तेषु जतूका झर्झरकञ्चेति द्वे एकैके, अन्यानि युग्मरूपाणि। अत्रायं सन्धिस्मारकः श्लोकः—

युग्मैर्नासाऽश्रु-गण्डोर्ध्वहनु-पार्श्वकपालकैः।
जतूका-झर्झराभ्याञ्च बद्धमग्रकपालकम्॥

**पेश्यः** पुनरत्र संयुज्यन्ते तिस्रो युग्मरूपाः। तद्यथा—भ्रूमध्यमुभयतो भ्रूसंकोचनीद्वयं नेत्रनिमीलनीद्वयं च, शङ्खतोरणिकयोस्तदधश्च शङ्खच्छदे पेश्यौ इति।

## अथ शङ्खास्थिनी।

**शङ्खास्थिनी**[5] द्वे शङ्खदेशस्थे पार्श्वकपालयोरधःसीमगे। एकैकस्य च शङ्खास्थ्नस्त्रयो भागाः कल्यन्ते वर्णनासौकर्याय—शङ्खचक्रं, कर्णमूलपिण्डम्, अश्मकूटञ्चेति। तत्र—

---

१ Orbital Plates. २ Lachrymal Fossa. ३ Ethmoid Notch. ४ Nasal Spine. ५ Temporal Bones.

(६) **शंखचक्रं**[१] नाम (३४श चित्रम्) शङ्खदेशनिर्मापकं चक्रप्रायमस्थिफलकमूर्ध्वगम्। तस्य बहिस्तलं मसृणं धमनीखाताङ्कितञ्च। तश्चोत्थितं दीर्घमग्रतोमुखं प्रबर्द्धनकं गण्डास्थिसन्धायि गण्डप्रबर्द्धनकं[२] नाम, तस्य द्वे धारे, उत्तरा अधरा चेति। तत्रोत्तरधारायां संयुज्यते शङ्खावरणी नाम प्रावरणी[३]। अधरधारायां पुनरधस्तात् पुरोभागे अर्वुदं हनुसन्धिपुरःस्थं सन्ध्यर्बुदं[४] नाम। तत्पश्चात् हनुसन्धिस्थालकं[५] हनुमुण्डधारणाय। तत्सन्निहितं च पश्चात् कर्णकुहरं[६] कर्णगुहाया बहिर्द्वारभूतम्। कर्णकुहरपरिधौ च कर्णशष्कुलीनिर्मापकाणां तरुणास्थ्नां संयोगः। मध्ये च स्थालक-कुहरयोस्त्रिकोणमस्थिफलकं कर्णमूल-

## ३४श चित्रम्—शंखास्थि ( बहिस्तलम् )।




**चित्र-व्याख्या।** अत्रताः संयुज्यन्ते पेश्यः यथा—पे१, शिरच्छदा। पे २, कर्णपूर्विका। पे ३, उरःकर्णमूलिका। पे ४, शिरोग्रीवविवर्त्तनी उत्तरा। पे ५, पृष्ठदण्डिकाशिरोयुजा। पे ६, द्विगुम्फिका। पे ७, शिफारसनिका। पे ८, शिफाकण्ठिका। पे ९, शिफागलान्तरीया। पे १०, हनुकूटकर्षणी। ग० सं०—गण्डास्थ्ना सन्धेयांशः। सं० रे०—शङ्खचक्र-कर्णमूलपिण्डयोः संयोगाङ्क रेखा। शं० तो० शङ्खतोरणिका रेखा।

---

१ Squamous Portion. २ Zygomatic Process. ३ Temporal Fascia. ४ Articular Tubercle. ५ Glenoid Fossa. ६ Ext. Auditory Meatus. ७ Tympanic Plate.

फलकं नाम, तत् कर्णमूलिकाख्यस्य लालाग्रन्थेः[१]-प्रबन्धनस्थानम्। गण्डप्रवर्द्धनस्य च पश्चिमधारा शङ्खतोरणिकाख्यया[२] समुन्नतरेखया सानुबन्धा, तस्याश्चाधस्ताद् दृश्या शङ्ख-कर्णमूलपिण्डयोः संयोगाङ्करेखा ( ३४श चित्रे सं० रे० )।

अन्तस्तलन्तु शङ्खचक्रस्य मस्तिकमध्यपिण्डधारणाय किञ्चित्खातोदरं धमनीखाताङ्कधरं प्रतनुधारं महामीनशल्कखंस्थानञ्च। सन्धीयते च तस्योर्ध्वधारा पार्श्वकपालेन जतूकास्थ्ना च पुरस्तात्। ( ३५श चित्रम् )

(२) **कर्णमूलपिण्डं**[३] नाम कर्णमूलस्थमस्थिपिण्डं गोस्तनकाख्येन[४] प्रवर्द्धनकेनोपलक्षितम्। प्रवर्द्धनञ्चेदमधोमुखम् अन्तःशुषिरञ्च। कोटराणि च तदन्तःस्थानि कर्णान्तरीयगुहया सानुबन्धानि गोस्तनकोटराणि[५] नाम। आन्तरतले

## ३५श चित्रम्—शंखास्थि ( अन्तस्तलम् )




**चित्र-व्याख्या**—१, धमनीप्रतानांकः। २, शङ्खचक्रस्य अश्मकूटेन संयोगाङ्करेखा। ३, अर्द्ध-चन्द्रिकाख्या सिरापरिखा। ४, गोस्तनच्छिद्रम्। ५, गोस्तनप्रवर्द्धनम्। ग० प्र०—गण्डप्रवर्द्धनम्।

---

१ Parotid Gland. २ Temporal Ridge. ३ Mastoid Portion. ४ Mastoid Process. ५ Mastoid cells.

चास्य अर्धचन्द्रिका नाम सिरापरिखा[१] पार्श्विकाख्यसिरापरिखया सानुबन्धा, छिद्रञ्च गोस्तनछिद्रं[२] नाम सिरापरिवाहिकानिर्गमाय।

(३) **अश्मकूटं**[३] नाम पाषाणवदतिघनसङ्घातं कूटवच्चतुरस्रमस्थिपिण्डं शिरःसम्पुटभूमेर्मध्यभागे तिर्यक्प्रविष्टम्। तस्य चोर्ध्वदेशः शैलसानुसदृशः शिरःसम्पुटभूमिनिर्मापकतया मस्तिष्कधारणसहायः, अधोदेशः कर्णपीठ-कण्ठच्छदि-निर्मापकः। निगूढानि च तदभ्यन्तरतस्त्रीणि कर्णास्थीनि सूक्ष्माणि, श्रुति-यन्त्रञ्चाभ्यन्तरम्। तद्विवरणमिन्द्रियखण्डे वर्णनीयम्। अधोधारा चास्य उच्चावचा पश्चिमकपालेन सन्धेया।

एतानि चात्र विशेषतो लक्षणीयानि (३५श चित्रम्)।

(क) शङ्खचक्राश्मकूटयोः संयोगाङ्करेखा[४] अश्मकूटस्योर्ध्वसीमस्था। तदुपकण्ठे च कूटाग्रभागसन्निधौ रन्ध्रमार्गद्वयम्, तत्रोर्ध्वस्थो मार्गः पटहोत्तंसिन्याख्यपेश्याः[५] प्रवेशाय, अधःस्थस्तु मार्गः श्रुतिमध्यस्रोतसा सङ्गतः पटहपूरणिकाख्य[६]-वायुनलिकाया द्वारभूतः।

(ख) श्रोत्रच्छदिकूटं[७] नाम उत्सेधः श्रोत्रपथस्य च्छदिभूतः। तत्पश्चिमतश्च समुन्नता रेखा अश्मतटिका नाम।

(ग) कर्णान्तर्द्वारं[८] श्रुतिवक्त्रनाड़ीद्वारं वा श्रुतिवक्त्राख्यनाड़ीद्वयप्रवेशाय।

(घ) कर्णभूमिरन्ध्रं कर्णिकारन्ध्रं[९] वा कर्णभूमौ सूक्ष्मनाड़ी-धमन्योः प्रवेशाय।

(ङ) शिफाप्रवर्द्धनकं[१०] शिफाकारमधोमुखं पेशीस्नायुसंयोगप्रयोजनम्। मध्ये च शिफा-गोस्तनकयोश्छिद्रं शिफागोस्तनान्तरीयं[११] नाम, तद् वक्त्रनाड्या बहिर्निर्गमाय।

(च) मातृकासुरङ्गा[१२]--मातृकाख्यधमन्या धारणाय रन्ध्रमार्गरूपा। सेयमश्म-कूटस्याग्रभागे दृष्टैकद्वारा कूटान्तर्निगूढा, अधोधारायाञ्च दृष्टान्यद्वारा।

**सन्धानं** पुनरेकैकस्य शङ्खास्थ्नः पञ्चभिरस्थिभिः परिज्ञेयम्। तद्यथा—गण्डप्रवर्द्धनाग्रे गण्डास्थ्ना। शङ्खचक्रधारायां पार्श्वकपालेन। गण्ड-प्रवर्द्धनस्य मूलदेशादश्मकूटाग्रं यावत् जतूकास्थ्ना। अश्मकूटस्य अधोधारायां

१ Sigmoid Groove. २ Mastoid Foramen. ३ Petrous Portion. ४ Petro-Squamous Suture. ५ Tensor Tympani. ६ Eustachian tube. ७ Eminentia Arcuata. ८ Internal Auditory Meatus. ९ Hiatus Canalis Facialis. १० Styloid Process. ११ Stylo-mastoid Foramen. १२ Carotid Canal.

पश्चिमकपालेन। हनुसन्धिस्थालके तु जीवच्छरीरे सन्धीयते अधोहन्वस्थिमुण्डम् स्पर्शमात्रेण। एष चात्र सन्धिस्मारकः श्लोकः।

पार्श्व-पश्चात्कपालाभ्यां गण्डास्थ्ना च जतूकया।
बद्धं, स्पृष्टमधोहन्वा, शंखं स्यात् पञ्चसन्धिकम् ॥

**पेश्यः** पुनः संयुज्यन्ते एकैकस्मिन् शङ्खास्थ्नि पञ्चदश। तद्यथा— शङ्खचक्र-बहिस्तले शङ्खच्छदा, गण्डप्रवर्द्धने गण्डमूलिनी—इति द्वे। कर्णमूलपिण्डस्य बहिस्तले ललाटसङ्कोचनी, उरःकर्णमूलिका, शिरोग्रीवविवर्त्तनी, पृष्ठदण्डिका शिरोयुजा, द्विगुस्फिका, कर्णपृष्ठिका चेति षट्। शिफाप्रवर्द्धनके शिफागलान्तरीया, शिफाकण्ठिका, शिफास्तनिका चेति तिस्रः। अश्मकूटभागे तालूत्तोलनी, पटहोत्तंसनी, तालूत्तंसनी, कर्णान्तरिका चेति चतस्रः। एवं साकल्येन पञ्चदश (तेषां संयोगस्थानानि ३४ चित्रे द्रष्टव्यानि)।

# अथ जतूकास्थि।

**जतूकास्थि**[1] (जतुकास्थि वा) नाम शिरःसम्पुटमध्यभूमिनिर्मापकं जतूकाकारमस्थिखण्डं सकलशिरःकपालकेन्द्रकीलभूतम् (३६श चित्रम्)। तस्य चत्वारो भागाः—मध्ये जतूकाशरीरम्, पार्श्वयोर्बृहत्पक्षतिद्वयं तदुत्सङ्गे लघुपक्षतिद्वयं, अधस्ताच्चरणद्वयमिति। तत्र—

(१) **जतूकाशरीरं**[2] नाम मध्यस्थं पिण्डमुच्चावचं शून्यगर्भञ्च। गर्भस्थानि चास्य कोटराणि जतूकाकोटराणि[3] नाम, तानि झर्झरास्थिकोटरैः सानुबन्धानि।

अथास्य चत्वारि तलानि द्रष्टव्यानि—पुरस्तलं, पश्चिमतलम्, ऊर्ध्वतलम्, अधस्तलञ्चेति। तत्र—

(क) पुरस्तलं झर्झरास्थ्नः पार्श्वपिण्डाभ्यां सन्धिमत्, मध्यतश्च तस्य समुन्नता रेखा झर्झरास्थ्नो मध्यफलकेन सन्धायिनी। चूडायाञ्चास्य प्रवर्द्धनं त्रिकोणकण्टकं[4] नाम, तत्त झर्झरास्थिच्छदिभूतेन फलकेन संध्यर्थम्।

(ख) पश्चिमतलं चतुरस्रं पश्चिमकपालमूलभागेन सन्धेयं, क्वचिदेकीभूतं वा।

---

१ Sphenoid Bone. जतूका चर्मचटिका। जतुका, जतूका चेति द्विविधमपि रूपं साधु।
२ Body of the Sphenoid. ३ Sphenoidal Sinuses. ४ Ethmoidal Spine.

३६श चित्रम्—जतूकास्थ्नः ऊर्ध्वतलम् ।
( स्वाभाविकायतनम् )




(ग) ऊर्ध्वतले त्रिकोणकण्टकस्य पश्चात् परिखा छिद्रद्वयञ्च परिखाप्रान्तयोः, क्रमाद् दृष्टिनाड़ीपरिखा[१], दृष्टिनाड़ीरन्ध्रे च नामतः । तत्र परिखा दृष्टिनाड़ीयोजिकाया[२] धारणाय, रन्ध्रद्वयन्तु दृष्टिनाड्योरक्षिगुहाप्रवेशाय । तेषां पश्चात् पोषणकाख्यग्रन्थि[३]धारणं खातं पोषणकखातं[४] नाम ।

१ Optic Foramina. २ Optic Commissure. ३ Pituitary Body. ४ Pituitary Fossa.

तस्यापि पश्चादीषदुन्नतं कूटं सुषुम्नापीठं[१] नाम सुषुम्नाशीर्षकधारणाय। उभयतश्च तस्य गभीरे खाते मातृकापरिखे[२] नाम, ते मातृकाधमन्योर्धारणाय। एकैकतश्च तत्पुरोभागे पौर्वापर्येण स्थितास्तिस्रो गुलिकाः[३] क्रमाद् अग्रिम-मध्यम-पश्चिमाख्याः।

(घ) अधस्तलन्तु जतुकाशरीरस्य नासागुहा-कण्ठविवरयोश्छदिभूतम्। तत्र स्थूलमूला समुन्नता रेखा रसनिका[४] नाम, सेयं नासामध्यप्राचीरभूतस्य सीरिकास्थ्नः पश्चिमप्रान्तेन दृढसन्धायिनी।

(२) **बृहत्पक्षतिद्वयं**[५] (३६श चित्रम्) नाम जतूकाशरीरादुभयतो वहिर्गतमूर्ध्वाभिमुखमस्थिपत्रकद्वयम् त्रिकोणप्रायम् विशालायतञ्च। एकैकस्याश्च पक्षतेः त्रीणि तलानि—ऊर्ध्वतलं, पुरस्तलं, वहिस्तलञ्चेति। तत्र—

(क) ऊर्ध्वतलं पक्षतिपृष्ठाख्यं मस्तिष्कभूमिभूतम्। तन्माध्यसीम्नि विवरद्वयं—वृत्तविवरं[६] जाम्ववविवरञ्च[७] नाम, ताभ्यां पञ्चमनाड्या मध्यम-पश्चिमयोः शाखयोर्यथाक्रमं निर्गमः। अधःकोणे चास्य पश्चिमतश्छिद्रं कोणविवरं[८] नाम, तत् कलापोषण्याख्यधमन्याः प्रवेशाय।

(ख) पुरस्तलं चतुरस्रं नेत्रगुहाया वहिःप्राचीरभूतम्।

(ग) वहिस्तलं विशेषादुच्चावचं शङ्खाधरिकाख्यरेखया[९] द्विभागविभक्तञ्च। तत्र उपरिष्ठो भागः शङ्खखातांशनिर्मापकः शङ्खच्छदाख्यपेशीप्रभवश्च, निम्नस्थो भागो गण्डोत्तरखातस्य अन्तःपरिधिस्थः।

(३) **लघुपक्षतिद्वयं**[१०] जतूकाशरीरस्य पुरस्तादुभयतोऽवस्थितं तनु-तीक्ष्णाग्रं त्रिकोणपत्रकद्वयं, तत् पुरःकपालास्थ्नो नेत्रच्छदिफलकाभ्यां सन्धेयम्। मध्ये च तयोः पुरःसंयोजकं त्रिकोणकण्टकम्[११], तदुभयतश्च दृष्टिनाड़ीरन्ध्रद्वयम्।

एकैकतश्च लघु-वृहत्पक्षत्योरन्तरालं त्रिकोणप्रायम्— पक्षान्तरालं[१२] नाम। तेन शिरःसम्पुटात् पुरो निर्गच्छन्ति—तृतीया, चतुर्थी, षष्ठी च नाम शीर्षण्या नाड्यः, पञ्चम्याश्च नाड्याः प्रथमा शाखा नेत्रगा, सिराधमन्यश्च नेत्रसम्बन्धिन्यः। (३६श चित्रम्)

---

१ Dorsum Sella. २ Carotid Grooves. ३ Clinoid Processes (anterior, middle & posterior). ४ Rostrum. ५ Greater wings. ६ Foramen Rotundum. ७ Foramen Ovale. ८ Foramen Spinosum. ९ Pterygoid Ridge. १० Lesser wings. ११ Ethmoidal Spine. १२ Superior Orbital Fissure.

(४) **चरणद्वयं**[१] तु जतूकास्थनस्तत्पश्चिमप्रान्तादुभयतो नीचैर्निर्गतम् । एकैकस्य च चरणस्य द्वे द्वे पत्रके[२]--पार्श्वस्थम्, अन्तःसीमस्थञ्चेति । तत्र पार्श्वस्थं पत्रकमायतपृष्ठम्, अन्तःस्थन्तु स्वल्पायतमंकुशाग्रञ्च । अंकुशञ्च[३] तदाश्रित्य विवर्त्तते तालूत्तंसनी पेशी । संयुक्ते च ते पत्रके पुरस्तादूर्ध्वभागे । पृथग्भूते च तेऽधस्तात् चरणान्तरालं[४] रचयतः । तस्य च तद्द्वयं सन्धीयते तालवस्थ्ना । अस्ति च संयुक्तचरणद्वयस्यान्तराले पश्चिमतो नावाकारं खातं सुगभीरं नौखातं[५] नाम यत्र संसज्येते—हनुमूलकर्षणी अधरा, तालूत्तंसनी चेति पेश्यौ ।

**सन्धानं** पुनर्जतूकास्थ्नः सप्तभिरपि शिरःसम्पुटनिर्मापकैरस्थिभिः, पञ्चभिश्च मुखमण्डलास्थिभिर्विज्ञेयम् । एष च तत्सन्धिसंग्राहकः श्लोकः—

शिरःसम्पुटगैः सर्वैर्युगाभ्यां गण्डतालुनोः ।
सीरिकास्थ्ना च संनद्धा जतूका मध्यसंस्थिता ॥

तत्सन्धानप्रकाराश्च करोटौ चित्रेषु च द्रष्टव्याः ।

**पेश्यः** पुनरत्र संयुज्यन्ते एकादश एकैकतः । तद्यथा—बृहत्पक्षतेर्बहिस्तले द्वे—शङ्खच्छदा, हनुमूलकर्षणी उत्तरा चेति । लघुपक्षतेः पुरोभागे (दृष्टिनाड़ीरन्ध्रं परितः) षट्—नेत्रगोलकसञ्चालन्यः[६] । जतूकाचरणफलकयोश्चतस्रः - हनुमूलकर्षणी अधरा उत्तरा[७] च, तालूत्तंसनी, उत्तरा कण्ठसंकोचनी चेति । *

## अथ झर्झरास्थि ।

**झर्झरास्थि**[८] नाम नासामूलगं शुषिरास्थिपत्रराशिमयं पिण्डकम्, अक्षिकोटरयोरन्तराले निगूढ़म् (३७श चित्रम्) । तस्य त्रयो भागाः—मध्यफलकम्, चालनीपटलम्, पार्श्वपिण्डद्वयञ्चेति । तत्र—

(१) **मध्यफलकं**[९] नाम नासागुहाभ्यन्तरे मध्यप्राचीरांशनिर्मापकमस्थिपत्रकम् । तस्याग्रधारायां सन्धीयते पुरःकपालस्य अग्रकण्टकं, नासास्थ्नोश्च परस्परसंयोगजा धारा । पश्चिमधारायां जतूकास्थ्नः पुरस्तलस्था रसनिकाख्या आलिका, सीरिकास्थि च । अधोधारा त्वस्य नासाग्रमध्यप्राचीरभूतेन त्रिकोणतरुणास्थ्ना सन्धायिनी ।

(२) **चालनीपटलं**[१०] नाम नासामूलेऽभ्यन्तरतः पटलभूतम्, मध्यफलक-

१ Pterygoid processess. २ Pterygoid plates. ३ Hamular process. ४ Pterygoid fissure. ५ Scaphoid Fossa. ६ तद्विवरणमिन्द्रियखण्डे द्रष्टव्यम् । ७ उत्तराया गणितपूर्वत्वात नेह पुनर्गणना । ८ Ethmoid Bone. ९ Perpendicular Plate. १० Cribriform Plate.
* अस्ति च पटहश्लथनी नामापरापि सूक्ष्मपेशी तत्र संसक्तेति केचित् ।

# ३७श चित्रम्—झर्झरास्थि

( पश्चिमतो दृष्टं—स्वाभाविकायतनञ्च )




शिरसि संलग्नं, चालनीवत् सूक्ष्मच्छिद्रबहुलं पत्रकम्। तस्य चूड़ायाम् प्रवर्द्धनं शिखरकण्टकं[१] नाम, तत्र दात्रिकाख्यकलांशसंयोगः, छिद्रपथैश्च प्रसरन्ति गन्धग्राहिनाड्योः प्रतानाः।

(३) **पार्श्वपिण्डद्वयम्**[२] मधुचक्रवत् शुषिरगर्भं प्रतनुपत्रकनिर्मितञ्च। एकैकस्य च पार्श्वपिण्डस्य षट् तलानि ऊर्ध्वाधः-पुरःपश्चिम-बाह्यान्तरसंज्ञानि। तत्रोर्ध्वतलं कोटरबहुलं पुरःकपालस्य महापरिखापरिधिना सन्धायि। अधस्तलं तु ऊर्ध्वहन्वस्थ्ना, ताल्वस्थ्ना च। पुरस्तलम् अश्रुपीठास्थ्ना, ऊर्ध्वहन्वस्थ्ना च, कोटराणि च तदन्तः नासागुहया सानुबन्धानि। पश्चिमतलमपि शुषिरबहुलं जतूकास्थिपुरस्तलेन सन्धिमत् कोटरानुबन्धि च। बहिस्तलं श्लक्ष्णचतुष्कोणफलकमयं नेत्रगुहान्तःसीमनिर्मापकम्, तस्य नेत्रान्तरीयपत्रक मितिसंज्ञा[३]। अन्तस्तलं नासागुहायाः पार्श्वप्राचीरभूतं क्षुद्रशुक्तिकाकाराभ्यामस्थिफलकाभ्यामुपलक्षितम्, तयोः क्रमात् ऊर्ध्वशुक्तिका, मध्यशुक्तिका[४] चेति संज्ञे। तयोराद्या नासागुहायाः ऊर्ध्वसुरङ्गायाः, द्वितीया तु मध्यसुरङ्गायाः छदिभूता, सन्धीयते च तदधस्ताद् अधःशुक्तिकास्थि[५]। एकैकस्य चैवं पार्श्वपिण्डस्यास्थिचतुष्टयेन सन्धिः। तद्यथा—ऊर्ध्वं पुरःकपालस्य नेत्रच्छदिफलकेन, अधस्ताद् ऊर्ध्वहन्वस्थ्ना, पुरस्ताद् अश्रुपीठास्थ्ना, पश्चात् ताल्वस्थ्ना चेति।

---

१ Crista Galli. २ Lateral Masses or Labyrinths. ३ Os planum. ४ Superior Turbinated and Middle Turbinated Processes. ५ Inferior Turbinated Bone, अस्यैव शुक्तिकास्थीति संज्ञा।

**सन्धान** चैवं झर्झरास्थ्नस्त्रयोदशभिः शिरोऽस्थिभिर्विज्ञेयम्। तद्यथा—

पुरःकपालश्च तथा जतूका नासास्थिनी चोर्ध्वहनू च तालू।
सीराग्रिका चाश्रुधरे च शुक्ती त्रयोदशैतानि हि झर्झरास्थ्ना[१]॥

पेशी तु नात्र संयुज्यते कापि।

तान्येतानि अष्टौ शिरःसम्पुटास्थीनि व्याख्यातानि।

## अथ कपालचक्रकाणि।

**कपालचक्रकाणि**[२] नाम कपालास्थ्नां सीमन्तेषु स्थितानि समन्ततो दन्तुरधाराणि चक्रप्रायाणि शकलाणि। तानि प्रायशः पार्श्वकपालयोः सन्धाने दृश्यानि, विशेषतश्च ब्रह्म-शिवरन्ध्रयोः सविधे। तेषां सर्वथा अनिश्चितावस्थानात् न पृथक्संख्यानम्।

## अथ मुखमण्डलास्थीनि।

**मुखमण्डलास्थीनि** चतुर्दश मुखमण्डलनिर्मापकाणि। तद्यथा—द्वे नासास्थिनी, द्वे ऊर्ध्वहन्वस्थिनी, द्वे अश्रुपीठे, द्वे गण्डास्थिनी, द्वे तात्वस्थिनी, द्वे शुक्तिके चेति साकल्येन द्वादश। सीरिका, अधोहनुश्चेति एकाकिनी अस्थिनी द्वे चेति। तत्र हन्वस्थ्नां प्रयोजनं भक्षण-चर्वणादि, इतरेषान्तु इन्द्रियाधिष्ठाननिर्माणम्।

## अथ नासास्थिनी

### ३८श चित्रम्—नासास्थिनी

(सम्मुखतो दृश्ये)




**नासास्थिनी**[३] द्वे नासामूलस्थे बहिरीषत्कूर्मपृष्ठे, अन्तःकोरोदरे च। ते मध्यरेखायां परस्परसन्धायिनी। तयोरूर्ध्वप्रान्तयोः सन्धिः पुरःकपालास्थ्नो नासामूलखातेन, बहिःपार्श्वयोस्तु ऊर्ध्वहन्वस्थ्नोर्नासाकूटाभ्याम्। अधःप्रान्तयोः पुनर्नासापार्श्विकाख्य[४]—तरुणास्थिभ्यां संयोगः। पश्चिमतश्चानयोः परस्परसन्धानरेखायां सन्धीयते पुरःकपालस्य अग्रकण्टकं, झर्झरास्थ्नः शिखर-

---

१ सन्धीयन्ते इति शेषः। २ Wormin Bones. ३ Nasal Bones. ४ Lateral Cartilages of the Nose.

कण्टकं च। एककस्य च नासास्थ्नो बहिस्तले मध्यतश्छिद्रं सिराप्रवेशाय, अभ्यन्तरतश्च सूक्ष्मा परिखा नासानाडी[1]धारणाय। (३८ चित्रम्)

**संधानं** चैवमेकैकस्य नासास्थ्नोऽस्थिचतुष्टयेन[2] द्रष्टव्यम्।

## अथ ऊर्ध्वहन्वस्थिनी।

**ऊर्ध्वहन्वस्थिनी[3]** द्वे मुखमण्डलास्थिषु प्रधानभूते (३९।४०श चित्रे)। ताभ्यां हि परस्परसंहिताभ्यां निर्मीयते ऊर्ध्वहनुमण्डलं सतालुपटलं सदन्तोदूखलञ्च। निर्माणोपकरणे च ते प्राधान्येन नासागुहापार्श्वयोः, नेत्रपीठयोः, मुखमण्डलपुरःपार्श्वभागयोश्च। आकारमहत्त्वेऽपि लघुतरे ते शून्यगर्भत्वात्।

एकैकस्य च ऊर्ध्वहन्वस्थ्नः पञ्च भागा—मध्ये हनुपिण्डम्, अभितश्च प्रवर्द्धनचतुष्टयमिति। प्रवर्द्धनानि च—उपरिष्टान्नासाकूटम्, बहिःपार्श्वतो गण्डधरकूटम्, अधस्तात् तालुफलकम्, अन्तःसीम्नि दन्तोदूखलिकमिति। तत्र—

### ३९ श चित्रम्—ऊर्ध्वहन्वस्थि (बहिस्तलम्)




**(१) हनुपिण्डं[4]** नाम शून्यगर्भमस्थपिण्डं मध्यस्थम्। तस्य चत्वारि तलानि यथा—(क) बहिस्तलं—मौखिकतलं नाम बहिर्मुखमण्डले पुरस्ताद् दृश्यम्,

---

१ Nasal Nerve (Ext. Branch). २ त्रिकोणातरुणास्थिभ्यां सह तु षड्भिरस्थिभिः।
३ Superior Maxillary Bones. सुश्रुते तु ऊर्ध्वहन्वस्थ्नोः संहितयोरैक्येन ग्रहणम्। तथा च तन्मते एकमेव ऊर्ध्वहन्वस्थि [ सु० शा० ५ अ० ]। ४ Body of Maxilla.

## ४० श चित्रम्—ऊर्ध्वहन्वस्थि (अन्तस्तलम्)




(ख) गण्डोत्तरतलं गण्डधरकूटस्य पश्चिमम्, (ग) नेत्रपीठतलं नेत्रगुहाया भूमिभूतम्, (घ) आन्तरतलं नासाऽस्यगुहयोः पार्श्वप्राचीरभूतमिति। तेषु— (३६।४० चित्रे)

(क) मौखिकतले[१] नेत्रगुहाधःसीम्नि छिद्रं नेत्राधरीयं नाम तदाख्य-सुरङ्गाया[२] द्वारभूतं, तत् नेत्राधरीयनाड़ी-धमनीनिर्गमाय।

(ख) गण्डोत्तरतलं[३] तदाख्यखातस्य प्राचीरनिर्मापकं पश्चिमतः, तत् शङ्ख-च्छदाख्यपेश्या संवृतम्। तत्र कानिचित् सूक्ष्माणि विवराणि पश्चिमदन्तिकाख्यानि तदाख्यसुरङ्गपथैः[४] स्वनामधरनाड़ी-धमनीनां प्रवेशाय। उच्चावचश्च उत्सेधः पश्चिममूले हनुपश्चिमार्बुदं[५] नाम, तस्य तालव्वस्थ्ना सन्धानम्।

(ग) नेत्रपीठतलं[६] नेत्रगुहाभूमेः पुरोभागनिष्पादकमूर्ध्वस्थं, तस्यान्तःसीम्नि खातम् अश्रुपीठखातं[७] नाम, तत्र सन्धीयते अश्रुपीठास्थि। आन्तरधारा चास्य क्रमात् झर्झरक-तालव्वस्थिभ्यां सन्धायिनी। सूक्ष्मा च तद्बहिःप्रान्ते सीता नेत्रा-धरीयपेशी-धमनीनां धारणाय, छिद्रञ्चात्रैव अग्रदन्तिकाख्यनाड़ी-धमनी निर्गमाय।[८]

(घ) आन्तरतलं नासास्यविवरपार्श्वस्थम्, तस्त पुरःसीम्नि महत् खातं नासाखातं[९] नाम। विभक्तञ्च तदूर्ध्वाधोभागयोस्तालुफलकेन। तस्य ऊर्ध्व-भागो नासागुहांशः, अधोभागस्तु मुखविवरांशः। दृश्यञ्च तत्रैव पार्श्वतो महत् कोटरं हनुगर्भकोटरं[१०] नाम, तत् सानुबन्धं नासागुहाया मध्यसुरङ्गापथेन।

---

१ Facial Surface. २ Infra-orbital Canal. ३ Zygomatic Surface. ४ Posterior Dental Canals. ५ Tuberosity of Maxilla. ६ Orbital Surface. ७ Lachrymal Notch. ८ Opening of Anterior Dental Canal. ९ Nasal Fossa. १० Antrum of Highmore.

वर्त्तते च तत् संहतकरोटौ झर्झरक-शुक्तिका-तात्वस्थिभिः पिहितम्, अन्तरावृतञ्च तत् श्लेष्मलकलया जीवच्छरीरे। अस्ति चास्य[1] तथापिहितस्य सूक्ष्मं द्वारं शलाकाप्रवेशार्हं नासागुहान्तः। अवरुद्धञ्च तद्विद्रधिभूमिश्च तद्व्रणशोथोत्पत्तौ।

(२) **नासाकूटं**[2] नाम नासामूल-पार्श्वगं प्रवर्द्धनम्। तस्य सन्धिरूर्ध्व-पुरःकपालेन, मध्यरेखायां नासास्थ्ना, बहिःसीम्नि च अश्रुपीठास्थ्ना। अन्तस्तलं चास्य खातोदरं नासामध्यसुरङ्गानिर्माणाय। तत्र च रेखाद्वयं क्रमात् झर्झर-कास्थ्नो मध्यशुक्तिकाभागेन, अधःशुक्तिकास्थ्ना च सन्धानाय। पश्चिमतश्चास्य स्फुटा परिखा अश्रुवाहिकाया[3] धारणाय।

(३) **गण्डधरकूटं**[4] नाम त्रिकोणाकार उत्सेधो बहिःपार्श्वगः। तस्य गण्डास्थ्नो बन्धुरप्रदेशेन सन्धानम्।

(४) **तालुफलकं**[5] नाम तालुपुरोभागनिर्मापकमस्थिफलकम् ऊर्ध्वहनु-पिण्डस्याऽन्तरतलादुद्गतम्। तस्योर्ध्वतलं नासाभूमिः, अधस्तलं तालुच्छदिभूतम्। सन्धीयते च तत् मध्यरेखायामितरस्योर्ध्वहन्वस्थ्नस्तालुफलकेन। एवं संहितस्य च तालुफलकद्वयस्य पुरोभागे मध्यरेखायां दृश्यते खातमधस्तले, तत् अग्रतालुखातं[6] नाम। तत्र चत्वारि छिद्राणि नासा-तालु-गामिनीनां[7] नाड़ी-धमनीनां तालु-प्रवेशाय, ऊर्ध्वतले च तालुफलकद्वयस्य मध्यरेखायां पुरोऽर्द्धे समुन्नता रेखा सीरिकास्थ्नः सन्धानाय। पश्चिमधारायाञ्च तालुफलकस्य सन्धीयते तात्वस्थ्नो ह्रस्वपत्रकम्।

(५) **दन्तोदूखलिकं**[8] नाम दन्तोदूखलधारणमर्द्धचन्द्राकारमधोमुखं प्रवर्द्धनकम्। तत्र बाल्ये पञ्च दन्तोदूखलानि, यौवने त्वष्टौ, तानि तावत्संख्यकानां दन्तानां धारणाय। तद्बहिःपृष्ठे चागभीरं खातं दन्तमूलविलाख्यं[9] नासा-संकोचनीपेशीसंयोगाय।

**सन्धानं** च एकैकस्योर्ध्वहन्वस्थ्नो नवभिरस्थिभिर्द्रष्टव्यम्। तस्य चायं संग्रहश्लोकः—

स्वनाम्ना गण्ड-नासाऽश्रु-सीरिका-तालु शुक्तिभिः।
झर्झराग्रकपालाभ्यां नवभिर्हनुरूर्ध्वगा[10]॥

---

१ एतच्च सर्व्वं घ्राणेन्द्रियवर्णनावसरे सम्यक् स्फुटीकृतम्। २ Nasal Process. ३ Lachrymal Duct. ४ Malar Process. गण्डकूटमिति तु गण्डास्थ्न उन्नतभागस्य संज्ञा। ५ Palatine Process. ६ Anterior Palatine Fossa. ७ Naso-palatine Nerves and Anterior Palatine Vessels. ८ Alveolar process. दन्तोदूखलानां धारणादियं संज्ञा। ९ Incisive Fossa. १० सन्धीयते इति शेषः।

**पेश्यः** पुनरत्र संयुज्यन्ते एकैकस्मिन् ऊर्ध्वहन्वस्थिन द्वादश। ताः प्रायेण नेत्रोन्मीलन-निमीलन-नासाधरौष्ठसंकोचन-विस्फारण चर्वणादिकार्याः। तासां षट् पेश्यो हनुपिण्डस्य पुरः पार्श्वतश्च सम्बध्यन्ते (ऊर्ध्वोर्ध्वम्) यथा—नासावनमनी, मुखमुद्रणी, नासासंकोचनी, सृक्कणीसमुन्नमनी, नासोष्ठकर्षणी, नासाविस्फारणी पश्चिमा चेति। तिस्रश्चापरास्तत्रैव दन्तोदूखलिकभागस्योपरिष्टात् यथा—कपोलिका, हनुमूलकर्षणी अधरा, हनुकूटकर्षणी चेति। नासाकूटस्य पुरः पार्श्वतश्च तिस्रः यथा - नेत्रनिमीलनी, नासोष्ठकर्षणी, वक्त्राधोदर्शिनी चेति। सर्वासाञ्चासां पेशीनां प्रभवनिवेशादिविस्तरः पेशीखण्डे द्रष्टव्यः।

## अथ अश्रुपीठास्थिनी।

**अश्रुपीठम्, अश्रुधरं वा**[1] (४१श चित्रम्) नाम एकैकं क्षुद्रास्थि नासास्थ्नोर्नासाकूटयोश्च पश्चादक्षिकोटरान्तःसीम्नि पुरस्तादेकैकतो निगूढम्, तत् तनुपत्रकनिर्मितम् अर्घपात्रसदृशाकारं च। अश्रुवाहिकाधारणाच्च तस्य अश्रुपीठमितिसंज्ञा।

### ४१श चित्रम्—अश्रुपीठास्थि

(बहिस्तलम्)




एकैकस्य चाश्रुपीठस्य द्वे तले—बहिस्तलमन्तस्तलञ्चेति। तत्र बहिस्तले अश्रुमार्गधारणाय प्रणाली—अश्रुवाहिका[2] नाम। अन्तस्तलन्तु झर्झरास्थ्नः कोटरद्वारपिधानभूतम्।

चतस्रश्चास्य धाराः—तत्र ऊर्ध्वधारायां सन्धीयते पुरःकपालास्थि, अधोधारायामग्रतः अंकुशाकारप्रबर्द्धनेन शुक्तिका, पुरोधारायामूर्ध्वहन्वस्थ्नो नासाकूटम्, पश्चिमधारायां झर्झरकस्य नेत्रपार्श्वपीठम्।

## अथ गण्डास्थिनी।

**गण्डास्थिनी**[3] द्वे वाणाग्रफलकसदृशाकारे गण्डयोः (४२श चित्रम्)। ताभ्यां निर्मीयेते गण्डोत्सेधौ, पार्श्वभूमी च नेत्रकोटरयोरंशतः। तयोरेकैकस्य द्वे तले—बहिस्तलमन्तस्तलञ्चेति। तत्र—

---

१ Lachrymal Bones. २ Nasal or Lachrymal Duct. ३ Malar Bones. गण्डास्थीति सुश्रुतकृता संज्ञा। चरके त्वस्यैव गण्डकूटमिति संज्ञा।

# ४२ श चित्रम्—गण्डास्थि (वामम्)

( बहिस्तलम् )




( अन्तस्तलम् )




[ ❀ एतत् चिह्नं पेशीसंयोगस्थानसूचकम् ]

**बहिस्तलम्** उन्नतपृष्ठम् गण्डकूटस्य[१] निर्मापकम् । तत्र विवरं गण्डविवरं[२] नाम, तत् शङ्खगण्डिकाख्यरन्ध्रमार्गस्य बहिर्द्वारभूतम् ।

**अन्तस्तलं** कोटोदरम्, तत्र बन्धुरत्रिकोणांशे ऊर्ध्वहन्वस्थ्ना गण्डधर-कूटस्य सन्धानम् ।

चत्वारि च एकैकस्मिन् गण्डास्थ्नि प्रवर्द्धनकानि, तेषु त्रीणि क्रमात् पुरः-पश्चिमोर्ध्वकोटिभूतानि, एकमक्षिकोटरभूमिप्रविष्टम् । तत्र—

(१) **पुरःप्रवर्द्धनं** तीक्ष्णाग्रं नेत्राधरीयं[३] नाम, ऊर्ध्वहन्वस्थ्ना सन्धेयम् ।

(२) **पश्चिमप्रवर्द्धनं** शाङ्खिकं[४] नाम शङ्खास्थ्नो गण्डप्रवर्द्धनेन सन्धाय ।

(३) **ऊर्ध्वप्रवर्द्धनम्**[५] अपाङ्गप्रवर्द्धनं नाम दन्तुरधारम्, तद् अपाङ्गदेशे अग्रकपालस्य बाह्यकोणेन सन्धीयते ।

(४) **अक्षिफलकम्**[६] अक्षिकोटरभूमेरग्रिम-पार्श्विकांशभूतमीषत्खातोदरम् अग्रिमोर्ध्व-प्रवर्द्धनयोर्मध्यस्थम् । तत्र च शङ्खगण्डिकाख्यो रन्ध्रमार्गः[७] ऊर्ध्व-हानव्याख्यनाड़ीशाखाया गण्डवक्त्रानुगायास्तदाख्यधमनीसहिताया निर्गमाय । तद् बहिर्द्वारं बहिस्तले द्रष्टव्यम् । धारा चाक्षिफलकस्य पश्चान्मुखी जतूकास्थ्नो बृहत्पक्षत्या सन्धायिनी ।

अधःकोटिस्तु गण्डास्थ्नो न केनापि सन्धीयते । अनुभूयते च सा सह गण्ड-कूटेन त्वचोऽधस्तात् ।

**सन्धानं** चैवमेकैकस्य गण्डास्थ्नश्चतुर्भिरस्थिभिर्द्रष्टव्यम् । श्लोकश्चायं तत्स्मरणार्थः—

शङ्खेनाग्रकपालेन चोर्ध्वहन्वा जतूकया ।
एकैकमिह गण्डास्थि चतुर्भिर्दृढसंहितम् ॥

**पेश्यः** पुनरत्र संयुज्यन्ते पञ्च । तद्यथा—बहिस्तले ओष्ठसमुत्कर्षणी, सृक्कणीकर्षणी लघ्वी, गुर्वी चेति तिस्रः । अन्तस्तले—शङ्खच्छदा, हनुकूट-कर्षणी चेति द्वे । ( तत्संयोगाङ्काः ४२ चित्रे द्रष्टव्याः ) ।

---

१ Malar Tuberosity. २ Malar Foramen. ३ Infra-orbital Process. ४ Temporal Process. ५ Fronto-sphenoidal Process. ६ Orbital Process. ७ Malar Canal. गण्डच्छिद्रश्च क्वचिद् युग्मरूपं दृश्यते ।

## ताल्वस्थिनी।

ताल्वस्थिनी, तालूषके[1] वा, नाम द्वे (४३श चित्रम्) तनुपत्रकनिर्मिते विषमास्थिनी नेत्र-नासाऽस्य-कुहराणां पश्चिमभागस्थे खनित्राकारे[2]। ते नेत्रकोटर-भूमेर्नासाभूमि-पार्श्वयोस्तालुपटलस्य च निर्माणसहायभूते। तयोरेकैकस्य द्वौ भागौ तनुपत्रकमयौ—दीर्घपत्रकं ह्रस्वपत्रकञ्चेति। तत्र—

### ४३श चित्रम्—ताल्वस्थि (वामम्)।

(गलाभ्यन्तरतो दृष्टम्)




(१) दीर्घपत्रकं[3] (तुङ्गपत्रकं वा) नाम ताल्वस्थ्नो नेत्रकोटरान्तात्तालुमूलं यावदालम्बितमूर्ध्वमुखं पत्रकम्। तस्य पुरोधारा ऊर्ध्वहन्वस्थिपिण्डस्य पश्चात् सन्धेया, पश्चिमधारा तु द्विमुखी जतूकास्थ्नश्चरणफलकाभ्यां सन्धायिनी। तस्यान्तस्तलं मसृणं नासागुहापार्श्वस्थं समुन्नताभ्यामालिकाभ्यां द्विभागविभक्तञ्च। तत्र ऊर्ध्ववर्त्तिनी आलिका उत्तरालिका[4] नाम, तया सन्धीयते झर्झरास्थ्नोऽवयवो मध्यशुक्तिकाख्यः। अधःस्था तु आलिका अधरालिका[5] नाम, तत्र शुक्तिकास्थ्नः सन्धानम्। अनयोश्च मध्यस्थः प्रदेशो नासापथस्य मध्यसुरङ्गयाऽनुषज्यते; तदूर्ध्वाधरौ प्रदेशौ तु ऊर्ध्वाधरसुरङ्गाभ्याम्।

---

१ Palate Bones. तालूषकमिति प्राचीना संज्ञा। २ खनित्रं भूमिखननयन्त्रं, कुदाल, कुदाली—वेति भाषा (Spade). ३ Vertical Plate. ४ Superior Turbinated Crest. ५ Inferior Turbinated Crest.

बहिस्तलन्तु दीर्घपत्रकस्य पश्चिमतालुकाख्यया[१] सूक्ष्मपरिखयाङ्कितम् ऊर्ध्व-हन्वस्थ्न आन्तरतलेन सन्धेयम्।

अथास्य दीर्घपत्रकस्य चूड़ायां द्वे प्रवर्द्धनके बहिरन्तश्च प्रसृते। तयोः बहिर्मुखं नेत्रगुहाभूमिप्रवेशि, नेत्राभिगप्रवर्द्धनं[२] नाम, तस्य जतूका-झर्झरकोर्ध्व-हन्वस्थ्नां नेत्रपीठफलकैः सन्धानम्। अन्तर्मुखं जतूकास्थिसन्धायि जातूकप्रवर्द्धनं[३] नाम। सन्धौ चानयोः खातं तालुजातूकं[४] नाम, तेन तालुजातूकाख्य धमन्याः पश्चिमनासानाड्याश्च नासाभ्यन्तरे प्रवेशः।

(२) **ह्रस्वपत्रकं**[५] तलपत्रकं वा नाम दीर्घपत्रकस्य मूलादुद्गतमन्तर्मुखं तलस्थं पत्रकम्। तस्योर्ध्वतलं नासाभूमेः, अधस्तलञ्च तालुपटलपश्चिमभागस्य निर्मापकम्। पुरोधारा ऊर्ध्वहन्वस्थ्नस्तालुफलकेन सन्धायिनी, पश्चिमधारा तु विमुक्तैव, कोमलतालुधरा च। कण्टकञ्चात्र काकलकधरम्[६] काकलकिन्याः पेश्याः संयोगाय।

ह्रस्व-दीर्घपत्रकयोः सन्धानकोणस्तु जातूककोणाख्यः स्थूल-बन्धुरो जतूका-चरणाद्वयान्तराले प्रविष्टः।

ह्रस्वपत्रकञ्चेद इतरताल्वस्थ्नो ह्रस्वपत्रकेण मध्यरेखायां सन्धिमत्। सन्धानेन चानयोरुपरिष्टात् विरच्यते परिखा सोरिकास्थ्नो दृढ़सन्धानाय।

**सन्धानं** च षड्भिरस्थिभिस्ताल्वस्थ्नो विज्ञेयम्। एष च तत्संग्राहकः स्मारक श्लोकः।

> झर्झरश्च जतूका च शुक्तिका चाथ सोरिका।
> स्वसंज्ञश्चोर्ध्वहन्वस्थि ताल्वस्थ्ना संहितानि षट्॥

**पेश्यः** पुनरत्र संयुज्यन्ते चतस्रः,—उत्तरा कण्ठसंकोचनी, अधरा हनु-कूटकर्षणी, काकलकिनी, तालूत्तंसनी चेति।

## अथ शुक्तिकास्थिनी।

**शुक्तिकास्थिनी**[७] द्वे—(५०श चित्रान्तर्द्रष्टव्ये) से प्रतनुशुषिरपत्रनिर्मिते क्षुद्रशुक्तिकाकारे, नासागुहायां निम्न मध्यसुरङ्गयोर्मध्यस्थे। ते च झर्झरकास्थ्नः शुक्तिकाद्वयात् निम्नस्थे—इति तयोः क्वचित् अधःशुक्तिकेतिसंज्ञा।

---

१ Posterior Palatine Canal. २ Orbital Process. ३ Sphenoidal Process. ४ Spheno-palatine notch. ५ Horizontal plate. ६ Uvula. ७ Inferior Turbinated Bone or Inferior Nasal Concha.

एकैकस्याश्च शुक्तिकाया द्वे तले—अन्तस्तलं बहिस्तलञ्च। तत्राद्यं कोरोदरं नासापथस्य निम्नसुरङ्गांशनिर्मापकम्, द्वितीयं कुब्जपृष्ठं नासामध्यप्राचीराभिमुखम्।

अस्याश्चोर्ध्वधारा पुरोभागे ऊर्ध्वहन्वस्थ्ना सन्धायिनी, पश्चिमभागे तु ताल्वस्थ्ना। द्वे च तत्र प्रवर्द्धनके अश्रुकूटक-झर्झरकूटकसंज्ञे[1],—तयोराद्यं सन्धीयते अश्रुधरास्थ्ना, द्वितीयन्तु झर्झरास्थ्ना। अधोधारा पुनरस्या विमुक्ताग्रा। एष चास्याः सन्धिस्मारकः श्लोकः।

झर्झरेणोर्ध्वहन्वस्थ्ना ताल्वस्थ्ना चाश्रुधारिणा।
चतुर्भिरूर्ध्वमेव[2] स्यात् शुक्तिका दृढसंहिता॥

# अथ सीरिका।

**सीरिका[3] सीराग्रिका** वा नाम (४४श चित्रम्) नासाखातस्य पश्चिमभागे मध्यप्राचीरभूतमस्थिफलकं सीराग्रसदृशाकारं प्रतनुपत्रमयम्। अस्याश्चाग्रधारायां संयुज्यते झर्झरकास्थ्नो मध्यफलकं नासाग्रप्राचीरभूतं, त्रिकोणतरुणास्थि च तदधः। पश्चिमधारा त्वस्याः गलविवराभिमुखी विमुक्ताग्रैव[4]। अधोधारा ऊर्ध्वहन्वस्थ्नोस्ताल्वस्थ्नोश्च परस्परसन्धानवत्यां मध्यरेखायां संहितेति तत्रास्थिचास्या चतुष्टयेन सन्धिः। ऊर्ध्वधारा तु परिखाङ्किता तद्द्वयोपलक्षिता च, तत्र जतूकास्थ्नो निम्नतलस्थया रसनिकाख्यरेखया सन्धिः।

## ४४श चित्रम्—सीरिकास्थि।




---

१ Lachrymal & Ethmoidal processes. २ ऊर्ध्वमेव सन्धानाभिधानात् अधस्तात् सन्ध्यभावो बोध्यः। ३ Vomer. ४ न केनापि संहितेत्यर्थः।

पार्श्वयोश्च सीरिकास्थनः सूक्ष्मे परिखे नासातालुकाख्ये[१] तदाख्यनाड्योर्धारणाय। एष चास्य सन्धिस्मारकः श्लोकः।

ऊर्ध्वहन्वस्थियुगलं तालुयुग्मञ्च झर्झरम्।
जतूका चेति षट्केन संहिता सीरिका दृढम्॥

## अथ अधोहन्वस्थि।

**अधोहन्वस्थि**[२] (४५श चित्रम्) तावदेकमधरदन्तपंक्तिधारणं मुखमण्डलास्थिषु बृहत्तमं दृढतमञ्च। तस्य द्वौ भागौ,—हनुमण्डलं नाम अश्वखुराकारो भागः, हनुकूटद्वयञ्च हनुसन्धिप्रविष्टमुभयतः। तत्र—

(१) **हनुमण्डलं**[३] दन्तोदूखलधारकं मुखमण्डलाधो भाग सम्पादकम्। तच्चबाल्ये पृथगवस्थितयोर्वामदक्षिणार्धयोः यौवने चिबुकदेश संहितयोरेकीभावान्निष्पन्नमिति शारीरविदः। तस्य च द्वे तले—बाह्यतलमान्तरतलञ्चेति, द्वे च धारे—ऊर्ध्वधारा अधोधारा चेति।

तत्र बाह्यतले चिबुकदेशस्थ उत्सेधः चिबुकपिण्डं[४] नाम। तदुभयतः अधरोत्क्षेपण्योः पेश्योर्निवेशः[५]। ततश्च समुद्गता सन्धानाङ्कभूता रेखा चिबुकसन्धानिका[६] नाम। तदुभयतश्च पश्चाद् विवरे अनुचिबुकाख्ये[७] तदाख्यनाड़ी धमनीनां प्रवेशाय। तयोरेकैकस्य मूलतस्तिर्यक्-पश्चिमाभिमुखा रेखा बाह्यतिरश्चीना[८] नाम,—तदुपकण्ठे संयुज्येते अधरावनमनी, सृक्कणीनमनी चेति पेश्यौ, तदधस्ताच्च अधोधारासमीपे गलपार्श्वच्छदा नाम पेशी।

---

१ Naso-palatine Grooves. २ Mandible. ३ Horizontal Portion or Body. ४ Mental process, ५ Symphysis menti. ६ Mental Foramina. ८ Ext. oblique line.

४५श चित्रम्—अधोहन्वस्थि ( बहिस्तलम् ) ।



आन्तरतलं तावदीषत्करोदरं सर्वत्रैव, तत्र मध्यरेखामुभयतो द्वे द्वे फलायके—रसनाफलायके[१] नाम। तत्र पेशीचतुष्टयस्य संयोगः। तन्मूले च तिर्यगूर्ध्वम् पश्चादुद्गता रेखा आन्तरतिरश्चीना[२] नाम, सेयं मुखभूमिकण्ठिकाख्यपेश्याः प्रभवभूता। अस्याश्चोपरिष्टात् पुरोभागे खातं जिह्वाधरीयं[३] नाम तदाख्यग्रन्थिधारणाय। अपरञ्चास्या अधस्तात् पश्चिमतः खातं हन्वधरीयं[४] नाम तदाख्यग्रन्थिधारणाय।

ऊर्ध्वधारा तावत् हनुमण्डलस्य दन्तोदूखलमण्डलधरा। दन्तोदूखलानि च बाल्ये पञ्च पञ्च एकैकार्द्धे, अष्टाष्टौ च यौवने। शनैर्विलीयन्ते च तानि वार्द्धके। पश्चार्द्धयोश्च तत्र निविशेते कपोलिकाख्ये पेश्यौ। दन्तास्तु समग्रकरोटिवर्णने विशेषतो वर्णनीयाः।

अधोधारा पुनरस्य स्थूलाग्रा त्वङ्मात्रावरणा च। तस्याः पश्चिमप्रान्तयोः नातिगभीरे परिखे वक्त्रधमनीपरिखे[५] नाम, ते वक्त्रधमन्यो धारणाय।

(२) **हनुकूटम्**[६] नाम हनुमण्डलस्य एकैकतः पश्चिमप्रान्तादुद्गतं चतुरस्रप्रायं प्रवर्द्धनम्। तदेव हनुमूलबन्धनसंज्ञं प्राचाम्[७]।

एकैकस्य च हनुकूटस्य द्वे शिखरे,—पुरस्तात् हनुकुन्तः, पश्चिमतो हनुमुण्डञ्चेति। द्वे च तले—बाह्यमाभ्यन्तरञ्चेति। चतस्रश्च धाराः – पूर्व पश्चिमोत्तराधराख्याः। तत्र—

**हनुमुण्डं**[८] नाम वर्तुलप्रायं पश्चिमशिखरं शङ्खास्थ्नो हनुसन्धिखातप्रवेशि। तन्मूले च परितः सम्बध्यते तत्प्रबन्धनः स्नायुकोषः, आभ्यन्तरतले चास्य मूलतो निविशते हनुमूलकर्षणी उत्तरा नाम पेशी।

---

१ Genial Tubercles. २ Internal obique line. ३ Sub-lingual fossa for Sub-lingual Gland. ४ Sub-maxillary fossa for Sub-maxillary Gland. ५ Groove for Facial Artery. ६ Ramus of Lower Jaw. ७ चरककृतेयं संज्ञा। ८ Condyle of Lower Jaw.

४६श चित्रम्—अधोहनुवामार्धम् ( अन्तस्तलम् )।




चित्र-व्याख्या।—क० ख० अधरदन्तमूलछिद्रङ्गया द्वारं सकपाटकम्। ग० हन्वन्तःशङ्खगायाः स्नायोः संयोगस्थानम्। घ० मुखभूमिकपिठिकाख्य नाडीधमन्योर्धारणाय सीता। ङ० हनुकोणिकाख्यस्नायुसंयोगस्थलम्। च० हन्वधरीयग्रन्थिधारणाय खातम्। छ—जिह्वाधरीयग्रन्थिधारणाय खातम्। ❀ एतत् चिह्नं पेशीसंयोगस्थानसूचकम्।

**हनुकुन्तः**[1] नाम त्रिकोणप्रायं कुन्ताग्रसदृशं पुरःस्थं शिखरं हनुकूटस्य एकैकतः। तत्र निविशते शङ्खच्छदाख्या पेशी बाह्याभ्यन्तरतलयोः। (४६ चित्रम्) बहिस्तले पुनर्हनुकूटस्य संयुज्यते हनुकूटकर्षणी नाम पेशी। अन्तस्तले तु हनुमूलकर्षणी अधरा। मध्ये चान्तस्तलस्य स्फुटं विवरम् अधराया दन्तमूल-

---

१ Coronoid Process.

सुरङ्गाख्यप्रणाल्या द्वारभूतम्[१], तेन अधरदन्तमूलिकाख्यानां सिरा-धमनी-नाड़ीनां प्रवेशः। तत् पुरश्च कण्टकं द्वारकण्टकं[२] नाम। तदधश्च सम्बध्यते हन्वन्तःपार्श्वगा स्नायुर्जतूकास्थनानिबद्धा। तदधश्च सीता मुखभूमिकण्ठिकाख्य नाड़ी-धमन्योर्धारणाय।

अथास्य हनुकूटस्य **ऊर्ध्वधारा** हनुमुण्ड-कुन्तयोरन्तरालस्था अर्द्धचन्द्राकारा,[३] तद्द्वारेण च हनुकूटकर्षण्याख्यपेशीमभितः प्रसरन्ति तदभिगा नाड्यः सिरा-धमन्यश्च। **अधोधारा** तावत् हनुमण्डलाधोधारया सानुबन्धा। कोणश्च तत्र पश्चिमतो **हनुकोणो**[४] नाम—तत्र हनुकोणिकाख्यस्नायोः संयोगः। **पुरोधारा** तन्वी पेशीनिगूढ़ा च। **पश्चिमधारा** पुनः स्थूला कर्णमूलिकाख्यग्रन्थिसमावृता।

**सन्धानं** पुनरधोहन्वस्थ्नः शङ्खास्थ्नोर्हनुसन्धिखाताभ्याम् उभयतः। शिशोः प्रथमे वर्षे तु तस्य द्वयोरर्धयोः पृथगवस्थितिरिति विशेषः। तत्सन्धानं च प्रायः प्रथमवर्षान्ते मध्यरेखायां।

**पेश्यः** पुनरिह संयुज्यन्ते पञ्चदश युग्मरूपा यथोक्ताः। एष च तासां स्थान-संक्षेपः। हनुकूटे चतस्रः यथा—हनुकूटकर्षणी, हनुमूलकर्षणी उत्तरा अधरा च, शङ्खच्छदा चेति। हनुमण्डलस्यान्तस्तले पञ्च यथा—चिबुककण्ठिका, चिबुकजिह्वा-कण्ठिका, मुखभूमिकण्ठिका, द्विगुम्फिका, उत्तरा कण्ठसङ्कोचनी चेति। हनु-मण्डलस्य बहिस्तले षट् यथा—अधरावनमनी, सृक्कणोनमनी, अधरोत्क्षेपणी, मुखमुद्रणी, गलपार्श्वच्छदा, कपोलिका चेति। एवं पञ्चदश एकैकार्द्धे।

एतावांश्च अधोहन्वस्थ्नि लक्ष्यो विशेषः। बाल्ये हनुकूटयोर्हनुमण्डलं प्रति तिर्यङ्निविष्टयोः क्रमाद् यौवने भू-निखातदण्डवदवस्थानम्, वार्द्धके पुनरनयोः विशेषतस्तिरश्चीनता, हनुमण्डलस्य पुरःप्रसरः, शनैर्दन्तोदूखलविलयश्चेति[५]।

तान्येतानि मुखमण्डलास्थीनि व्याख्यातानि।

## अथ कण्ठकास्थि।

**कण्ठकं जिह्वामूलिकं**[६] वा नाम कण्ठान्तर्निगूढं रसनामूलस्थमस्थि-वलयार्धम्, तत् नानापेशीस्नायुनिवेशभूमिभूतम् श्वासनलिकाचूड़ायामवतिष्ठते।

---

१ Opening of Internal Dental Canal. २ Mandibular spine. ३ Sigmoid Notch. ४ Angle of Lower Jaw. ५ अतएव वार्धके अधोहनोरग्रतः प्रसरो वक्त्रविकृतिविशेषश्च। ६ Hyoid Bone.

तच्च शून्यालम्बितमिव सुदीर्घस्नायुरज्जुभ्यां शङ्खास्थ्नोर्मूलशिफाद्वयेन प्रतिबद्धम् । सम्बद्धञ्च तत् पेशीभिरपि तेनैव अधोहन्वस्थ्ना च । अतएव तदपीह प्रसङ्गतो वर्ण्यते । ( ४७ चित्रम् )

तस्य च त्रयो भागाः—कण्ठिकपिण्डं, महाशृङ्गद्वयं, लघुशृङ्गद्वयञ्चेति । तत्र—

(४७श चित्रम्—कण्ठिकास्थि)




चित्रव्याख्या—

१ कण्ठिकास्थिपिण्डम् । २, २, लघुशृङ्गद्वयम् ३, ३, महाशृङ्गद्वयम् । पेशीनिवेशास्तु—पे १, चिबुककण्ठिका । पे २, उरःकण्ठिका । पे ३, मुखभूमिकण्ठिका । पे ४, अंस-कण्ठिका । पे ५, शिफाकण्ठिका । पे ६, अवटुकण्ठिका । पे ७, चिबुकजिह्वाकण्ठिका । पे ८, जिह्वाकण्ठिका । पे ९, मध्यमा कण्ठसङ्कोचनी ।

(१) कण्ठिकपिण्डं[1] नाम मध्यस्थं स्थूलं पिण्डं मध्यरेखायां द्वयोरर्धयोः सन्धानचिह्नाङ्कितम् । तत्र पुरस्तले निविशन्ते द्वादश पेश्यः ( षट् एकैकतः ) । ताः क्रमात् चिबुककण्ठिका, उरःकण्ठिका, चिबुकजिह्वाकण्ठिका, मुखभूमिकण्ठिका, शिफाकण्ठिका, अंसकण्ठिका चेति नाम । पृष्ठतलं तु तस्य मसृणं कलासम्बद्धञ्च जिह्वामूले गोजिह्विकया[2] ।

(२) महाशृङ्गद्वयं[3] नाम मध्यपिण्ड-मुभयतः पश्चिमाभिमुखं स्वनामव्याख्यातम् । तयोरग्रकोट्योर्द्वयो स्फुटे अर्बुदके स्नायुरज्जुसंयोगाय । एकैकस्मिन् महा-शृङ्गे च निविशन्ते तिस्रः पेश्यः,—क्रमात् मध्यमा कण्ठसङ्कोचनी, जिह्वाकण्ठिका, अवटुकण्ठिका चेति ।

(३) लघुशृङ्गद्वयं[4] तु महाशृङ्गयोः क्रोडस्थम् । तदग्रकोटिद्वयेऽपि शङ्खास्थि-शिफाद्वयसङ्गतयोः स्नायुरज्ज्वोः संयोगः ।

---

१ Body or Basi-hyoid. २ गोजिह्विका नाम जिह्वामूलस्थं श्वासपथच्छादनशीलं तरुणास्थि पिधानमग्रे वक्ष्यमाणम् । चरककृतेयं संज्ञा ( Epiglottis ). ३ Greater Cornua. ४ Lesser Cornua.

# अथ चतुर्थः समग्रकरोटिदर्शनीय-विशेषवर्णनीयो नाम परिच्छेदः ।

करोटि[1]र्नाम सकलशिरोऽस्थ्नां सङ्घातः । शिरोऽस्थीनि च सर्वाणि अधोहनुवर्जं स्थिरसन्धिसंहितानि । अधोहनोस्तु मुण्डाभ्यामुदूखलसन्धिः शङ्खास्थ्नोः पार्श्वस्थाभ्यां स्थालकाभ्याम् । विशेषाश्चा करोटौ सङ्घातदृश्या बहवः, तेषु केचित् सूचितपूर्वाः । तानेवेदानीमपरांश्च यथावस्थितान् विस्तरेण प्रतिपादयिष्यामः शिष्यबुद्धिवैशद्याय, शिरोऽस्थिसंस्थानवैचित्र्यावबोधाय[2] च ।

आदौ तावत् करोटेः पञ्च प्रदेशाः सम्यग् बोद्धव्याः । तद्यथा--ऊर्ध्वप्रदेशः करोटिपटलं नाम, अधःप्रदेशः करोटिभूमिर्नाम, पार्श्वप्रदेशौ करोटिपक्षौ नाम, पुरःप्रदेशश्च मुखमण्डलं नामेति । अपरे च नेत्र-नासागुहादिगता विशेषाः इहैवान्ते पृथक् प्रतिपाद्याः ।

## अथ करोटिपटलम् ।

करोटिपटलं[3] नाम ( ४८श चित्रम् ) शिरःसम्पुटस्य छदिभूतो भागः । तस्य निर्माणमग्रतः पुरःकपालस्य ललाटफलकेन, पार्श्वयोः पार्श्वकपालाभ्यां, पश्चिमतश्च पश्चिमकपालस्य उत्तरार्द्धेन । तस्य च द्वे तले—बाह्यमाभ्यन्तरञ्चेति । सन्ति च स्तनन्धयशिशोः करोटौ केचिद् विशेषा इहैव सूचनीयाः । तत्र —

बाह्यतलं करोटेरुपरिभागः कूर्मपृष्ठाकारः । तत्र लक्षणीयाः पञ्च सीमन्ताः —पुरःसीमन्तः, मध्यसीमन्तः, पश्चिमसीमन्तः, पार्श्वसीमन्तौ च द्वाविति । तेषु—

पुरःसीमन्तो[4] नाम पुरःकपालस्य पार्श्वकपालाभ्यां सन्धानरेखा पुरोदृश्या ।

मध्यसीमन्तो[5] माम पार्श्वकपालयोः परस्परसन्धानरेखा मध्यस्था ।

---

१ Skull. २ सन्ति खल्वेवंविधा बहवो विशेषाः सीमन्तादयो ये समग्रकरोटावेव सम्यग्दृश्या इति । ३ Roof of the Skull. ४ Coronal Suture. ५ Sagittal Suture.

# ४८श चित्रम्—करोटिपटलम् (स्तनन्धयशिशोः)।

अत्र दृश्या विशेषतो ब्रह्मरन्ध्र शिवरन्ध्रयोः कोमलकलामयता।
पुरःकपालस्य च द्वयोरर्धयोः पार्थक्यञ्च।



**पश्चिमसीमन्तो**[१] नाम पश्चिमकपालस्य पार्श्वलपालाभ्यां सन्धानरेखा पश्चाद्दृश्या ।

**पार्श्वसीमन्तौ**[२] नाम करोटिपटलस्य पार्श्वस्थे सन्धानरेखे । तयोरेकैका रेखा अस्थिषट्कस्य सन्धानाङ्कभूता । तथाह्यत्र उपरिष्ठानि त्रीणि पुरः-पार्श्व-पश्चिमाख्यानि कपालानि अधःस्थैस्त्रिभिः गण्ड-जतूका-शङ्खास्थिभिः संहितानि । ( सन्धिप्रकारस्तु २७श चित्रे द्रष्टव्यः ) ।

बाल्ये तु—**गूढसीमन्तिका**[३] नाम पुरःकपालार्धयोरसंहितयोर्मध्यस्था दृश्यते सूक्ष्मा सीमन्तरेखा आ षष्ठवर्षात् । सा क्वचिद् यूनःकरोटावपि दृश्या ।

अत्र च द्वौ सीमन्तसन्धी विशेषतो लक्ष्यौ पुरःपश्चिमस्थौ । तत्र पुरोमध्य-सीमन्तयोः सन्धिस्थलं **ब्रह्मरन्ध्रम्, ब्रह्मतालुकं**[४] वा नाम । पश्चिम-मध्य-सीमन्तयोस्तु सन्धिस्थलं **शिवतालुकम्, अधिपतिरन्ध्रं**[५] वा नाम, तदाख्य-मर्मधारणात् । अनयोश्च दृश्यते शैशवे कोमलकलामयता, ब्रह्मरन्ध्रे चतुरस्रप्रायता, शिवरन्ध्रे च त्रिकोणता, स्तनन्धयशिशोः करोटौ स्वभावतः । अस्थिनिर्माणस्य विलम्बितत्वात्तु कस्यचित् कौमारेऽपि तथैव । सन्ति चापरेऽपि चत्वारः सीमन्तकोणाः शैशवे कलामयाः—द्वौ द्वौ एकैकतः । तौ पार्श्वकपालयोरधोवर्त्ति-कोणद्वयसन्धानयोर्दृश्यौ एकैकस्मिन् पार्श्वे । शिशोर्जातस्य द्वित्रमासान्ते तेषामस्थिमयता ।

पञ्च चात्र उत्सेधाः—पुरःकुम्भद्वयं[६], पार्श्वकुम्भद्वयं[७], पश्चिमार्बुदञ्चेति[८] । तानि व्याख्यातपूर्वाणि ।

**आन्तरतलं** तावत् करोटिपटलस्य खातोदरं किञ्चिदुच्चावचञ्च मस्तिष्क-च्छादनाय । तत्र सर्वतो दृश्याः कलापोषणीनां धमनीनां प्रतानाङ्काः, खातानि[९] च मस्तिष्कबहिर्वृतेः वराशिकाख्यकलायाः सम्बन्धनकलाग्रन्थिधारणाय । मध्य-रेखायान्तु दृश्या **दीर्घिकाख्या सिरापरिखा**[१०] मध्यसीमन्तानुपूर्व्या-ऽभ्यन्तरतः ।

---

१ Lambdoid Suture. २ Temporal Suture. ३ Metopic Suture. ४ Anterior Fontanelle. ५ Posterior Fontanelle तथाहि सुश्रुतः—"मस्तकाभ्यन्तरोपरिष्टात् सिरा-सन्धिसन्निपातो रोमावर्त्तोऽधिपतिस्तत्र सद्योमरणम्" ( सु० शा० ६ अ० ) ६ Frontal Eminences. ७ Parietal Eminences. ८ Ext. Occipital Protuberence. ९ Depressions for Prcchionian Bodies. १० Longitudinal Sinus,

## अथ करोटिभूमिः ।

**करोटिभूमि**[१]र्नाम करोटेरधःप्रदेशो नानास्थिसङ्घातमयः सर्वत उच्चावचः । तस्या द्वे तले,—ऊर्ध्वतलं शिरोगुहान्तर्निगूढं **करोटिपीठं मस्तिष्कपीठं** वा नाम । अधस्तलं मुख-कण्ठगुहयोश्छदिभूतं शिरोगुहाबाह्यम् तत् **करोटिभूमितलं, करोटितलं** वा नाम—इति ।

## करोटिपीठम् ।

**करोटिपीठं, मस्तिष्कपीठं**[२] वा नाम ( ४९श चित्रम् ) करोटिभूमेः-रूर्ध्वतलं शिरोगुहान्तरीयं मस्तिष्कांशानां धारणाय खातोदरम् । तच्च करोटिपटलापसारणेन[३] दृश्यम् । खातानि चात्र त्रीनि **महाखातानि**[४] नाम । तेषां पुरोगं महाखात् मस्तिष्कस्य पुरःपिण्डधारणाय । मध्यगं मध्यपिण्डधारणाय । पश्चिमगं पश्चिमपिण्डस्य सानुमस्तिष्क-सुषुम्नाशीर्षकस्य धारणाय । तत्र—

( क ) **पुरोगं महाखातं**—पुरःकपालस्य[५] नेत्रच्छदिफलकाभ्यां झर्झरास्थनश्चालनीपटलेन च तन्मध्यसंहितेन निर्मिततलं विशेषादुच्चावचम् । तस्य पश्चिमसीमनिर्मापकं जतूकास्थ्नो लघुपक्षतिद्वयं, तन्मध्यस्थं त्रिकोणकण्टकञ्च । तत्रैते विशेषाः—

(१) **दीर्घिकाख्य-सिरापरिखाया** अग्रभागः समुन्नतरेखारूपः । तत्र दात्रिका[६]ख्यकलाया अग्रिमांशसंयोगः ।

(२) **शिखरकण्टकं**[७] नाम झर्झरास्थिचूड़ास्थितं प्रवर्द्धनं वर्णितपूर्वम् ।

(३) **चालनीपटलं**[८] बहुच्छिद्रमयं गन्धग्राहिण्योः प्रथमाख्यनाड्योर्धारणाय, छिद्राणि च तत्र तत्प्रताननिर्गमाय ।

(४) **धमनीप्रतानाङ्काः**[९]—पुरोगाया मस्तिष्ककलापोषण्या धमन्या धारणाय ।

---

१ Base of Skull. २ Upper surface of the Base of Skull. ३ भ्रुवोरधस्तात् करपत्रेण पूर्वापरच्छेदात् करोटिच्छदिभागस्य अपसारणं क्रियते । ४ Large Fossæ. ५ Anterior Fossa. ६ दात्रिका नाम मस्तिष्कावरण्याः कलाया दात्राकारो भागो मस्तिष्कस्य वामदक्षिणार्धविभाजकः—इति मस्तिष्कवर्णनावसरे वक्ष्यते । ( दात्रिका = Falx Cerebri ). ७ Crista Galli. ८ Cribriform Plate for the First or Olfactory Nerves. ९ Markings of Anterior Meningeal Arteries.

## ४९श चित्रम्—करोटिपीठं




चित्रद्वयस्य संयोगात् विज्ञेया पूर्णता बुधैः ।

## नाम मस्तिष्कभूमेरूर्ध्वतलम् [दक्षिणार्द्धम्]




एकैकार्धे यथा यत् स्यादन्यार्धेऽपि तथैव तत् ॥

(२) **मध्यमं महाखातम्**[१] उभयतो गभीरं मध्यतश्च समुन्नतम् । तस्य पुरःसीम्नि जतूकास्थ्नो लघुपक्षतिद्वयं त्रिकोणकण्टकसहितम् । पश्चिमसीम्नि तु तस्यैव सुषुम्नपीठं मध्यतः, उभयतश्च शङ्खास्थ्नोरश्मतटिके । निर्मीयते च तत् मध्यभागे जतूकास्थ्नः शरीरेण, पार्श्वयोस्तु तस्यैव बृहत्पक्षतिभ्यां शङ्खास्थिभ्याञ्च । तत्राधीयते मस्तिष्कस्य शङ्खिकपिण्डमेकैकतः सहान्यैर्विशेषैः ।

अत्र चैते विशेषाः संलक्ष्याः (४६ चित्रम्)—

(१) **दृष्टिनाड़ीपरिखा**[२] मध्यतः दृष्टिनाड़ी योजिकाया धारणाय । तदुभयतश्च **दृष्टिनाड़ीरन्ध्रे**[३] दृष्टिनाड़ीद्वयस्य[४] चाक्षुषधमनीभ्यां[५] सहितस्य निर्गमाय ।

(२) **पक्षान्तरालं**[६] नाम त्रिकोणविवरमेकैकतः, तद् व्याख्यातपूर्वम् । तेन तृतीय-चतुर्थ-षष्ठ-नाड़ीनां, पञ्चमनाड्या नेत्रगाख्यशाखायाः, सिराधमनीनाञ्च नेत्रगानामक्षिगुहयोः प्रवेशः ।

(३) **पोषणकखातं**[७] पोषणकाख्यक्षुद्रग्रन्थिधारणम् मध्यतः ।

(४) **वृत्तविवरं**[८] **जाम्बविवरञ्च**[९] एकैकतः, क्रमात् पञ्चमनाड्याः मध्यम पश्चिमशाखयोर्निर्गमार्थम् ।

(५) **मातृकापरिखा**[१०] एकैकतः, सा मातृकाधमन्यास्त्रिकोणिकाख्य-सिरासरित्परिवृताया धारणाय ।

(६) **त्रिधारग्रन्थिखातम्**[११] एकैकतः, तत् पञ्चमनाड्यास्त्रिधारग्रन्थि-धारणार्थं शङ्खास्थ्नोऽश्मकूटाग्रे दृश्यम् ।

(७) **धमनीप्रतानाङ्काश्च** मध्यमायाः कलापोषणीधमन्याः प्रतान-धारणाय ।

---

१ Middle Fossa. २ Groove for optic Commissure. ३ Optic Foramina. ४ दृष्टिनाड्यौ = Optic Nerves. ५ Opthalmic Arteries. ६ Foramen Lacerum Anticus. ७ Pituitary Fossa. ८ Foramen Rotundum. ९ Foramen Ovale. १० Carotid grooves. ११ त्रिधारग्रन्थिर्नाम पञ्चमनाड्या धारात्रयस्य मूलभूतो नाड़ीग्रन्थिः स यथास्थानं वर्णनीयः (Semilunar Ganglion). तद्धारणार्थमिदं खातमिति तथा संज्ञा (Depression for Semilunar Ganglion).

(३) **पश्चिममहाखातं**[१] पुनरतिगभीरं बृहत्तमञ्च। तत्राधीयन्ते मस्तिष्कस्य पश्चिमं पिण्डमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च। निर्मीयते च तत् स्तोकमात्रेण जतूकाशरीरेणाग्रतः, पश्चिमकपालेन मध्यतः, पार्श्वयोः शङ्खास्थिभ्यां पार्श्वकपालयोः पश्चिमाधारकोणाभ्याञ्च स्तोकेन। विभागश्चास्य मध्यममहाखातात् शङ्खास्थ्नः अश्मतटिकाभ्याम्। अश्मतटिकयोस्तु संयुज्यते जवनिकाख्यो मस्तिष्कविभाजकः मस्तिष्कवृति कलाभागः[२]।

एते च पश्चिममहाखाते द्रष्टव्या विशेषाः—(४६ चित्रम्)

(१) **सुषुम्नापीठं**[३] वर्णितपूर्वम्, मध्यतः।

(२) **कर्णान्तर्द्वारम्**[४] (एकैकतः) श्रुतिवक्त्राख्यनाड़ीद्वयप्रवेशाय।

(३) **महाविवरं**[५] पश्चिमकपालमूल-मध्यस्थं सशीर्षकसुषुम्नानिर्गमाय।

(४) **मूलकोटिपुरोगं**[६] विवरम् (एकैकतः), द्वादशनाड्याः निर्गमाय।

(५) **अनुमन्याविवरम्**[७] एकैकतः, तत्र पश्चिमकपालपार्श्वस्थं मन्याखातमेव शङ्खास्थिसन्धानेन विवरीभूतम्। तेन अनुमन्याख्यस्थूलसिराया नवम-दशमैकादशाख्यनाड़ीनाञ्च निर्गमः, प्रवेशश्च कलापोषकधमनीद्वयस्य।

(६) **पार्श्विकाख्या सिरापरिखा**[८] या पश्चिमकपालस्य पुरस्तले अनुप्रस्थमवस्थिता वर्णितपूर्वा। अपरा च तदनुषङ्गिणी सिरापरिखा **अर्द्धचन्द्रिका**[९] नाम मन्याविवरान्ता एकैकतः। तत्र च द्रष्टव्यं **गोस्तनच्छिद्रम्**[१०] तत्परिखाप्रवेशिसिराधारणाय एकैकतः। ते शङ्खास्थ्नः कर्णमूल-पिण्डवर्णने (३५ चित्रम्) वर्णितपूर्वे।

(७) **दीर्घिकायाः सिरापरिखायाः**[११] पश्चिमप्रान्तः, **महावर्त्तश्च**[१२]। ते च पार्श्व-पश्चिमकपालवर्णने व्याख्याते।

---

१ Posterior Fossa. २ Tentorium Cerebelli. जवनिकावत् मस्तिष्कानुमस्तिष्कयोरन्तरालेऽवस्थानादियं संज्ञा। ३ Dorsum Sella. ४ Internal Auditory Meatus. ५ Foramen Magnum. ६ Anterior Condyloid Foramen. ७ Jugular Fossa. ८ Lateral Sinus. ९ Sigmoid groove. १० Mastoid Foramen. ११ Longitudinal Sinus. १२ Torcular Herophili.

# करोटितलम्।

**करोटितलं, करोटिभूमितलं**[१] वा नाम (४७श चित्रम्) करोटिभूमेरधस्तलम्, तदतिमात्रमुच्चावचं मुख-गलविवरयोश्छदिभूतम्। तस्य त्रयो भागाः—पुरोभागः ऊर्ध्वहनुमण्डलप्रधानस्तालुपटलधरः, मध्यभागः तालुमहाविवरयोरन्तरालस्थः कण्ठविलच्छदिभूतः, पश्चिमभागः महाविवरादारभ्य उत्तरतोरणिकान्तः। तत्र—

(क) पुरोभागे लक्षणीये द्वे—दन्तोदूखलमण्डलं, तालुपटलञ्च। तयोः--

**दन्तोदूखलमण्डलं**[२] दन्तोदूखलानां षोड़शानां धारणम्। दन्ता ह्यत्र ऊर्ध्वहनुमण्डले एकैकार्धे अष्टाष्टौ—इति षोड़श। तद्यथा—कर्त्तनकाख्य[३] एकः मध्यरेखापार्श्वे, तदुबहिःपार्श्वे एको रदनकाख्यः[४], तद्बहिःपार्श्वे द्वौ अग्रचर्वणकाख्यौ[५], चरमतश्च पश्चात् त्रयः पश्चिमचर्वणकाख्याः[६] (४७श चित्रम्)। अष्टम चर्वणकाणाञ्च चतुर्णां प्रसिद्धा **ज्ञानदशन**[७] संज्ञा, तेषां यौवनारम्भे प्रौढ़ौ वा समुद्गमः। राजदन्तौ[८] इति तु ऊर्ध्वहनुमण्डले मध्यरेखामुभयतः स्थितयोः कर्त्तनकदन्तयोः संज्ञा प्राचीना। तत्र कर्त्तनक-रदनकानामेकैकं मूलम्, अग्रचर्वणकानां द्वे द्वे, पश्चिमचर्वणकानान्तु त्रीणि त्रीणि मूलानि।

त एते प्रौढ़स्योर्ध्वहनुमण्डलस्था दन्ता व्याख्याताः। अधोहनुमण्डलेऽप्येवम्। एवञ्च साकल्येनोभयोर्हनुमण्डलयोः दन्ता द्वात्रिंशत् प्रौढस्य। यौवनारम्भे तु अष्टाविंशतिरेव, ज्ञानदशननां विलम्बेनोद्भावात्।

बाल्ये तु एकैकस्मिन् हनुमण्डले दशैव दन्ताः—एकैकार्द्धे पञ्च पञ्चेति, पश्चिमचर्वणकानामभावात्। एवञ्च साकल्येन बाल्ये दशना विंशतिरेव। ते विनश्वराः[९] प्राग्यौवनारम्भात्। दन्तनिर्माणविस्तरन्तु अग्रे कथयिष्यामः।

---

१ Base of the Skull. २ दन्तोदूखलानां धारणादूर्ध्वहन्वोर्मिलितयोर्दन्तोदूखलमण्डलमिति संज्ञा (Alveolor Arch). ३ Incisors. ४ Canine. ५ Bicuspids or Premolars. ६ Molars. ७ Wisdom Tooth. लोकेऽपि "अकल दांत"—इति संज्ञा। ८ "राजदन्तौ तु मध्यस्थावुपरि श्रेणिकौ क्वचित्" इति हेमचन्द्रः। विनश्वरत्वाच्च तेषां 'दुग्धदन्ता' इति संज्ञा लोके।

**तालुपटलं**[1] नाम मुखविवरस्य च्छदिभागः स ऊर्ध्वहन्वस्थ्नोस्तालु-फलकाभ्यां, तालवस्थ्नोश्च ह्रस्वपत्रकाभ्यां मध्यरेखायां संहिताभ्यां निर्मितः। तस्य च मध्यभागे या परस्परसन्धानरेखा अनुलम्बा, सा ऊर्ध्वहनुतालु-फलकयोस्तालवस्थिभ्यां सन्धानाङ्करेखया अनुप्रस्थया लंघिता। अनयोश्च रेखयोः परस्परलङ्घिनोः **स्वस्तिकसीमन्तिके**ति[2] संज्ञा। तत्र मध्यरेखायामग्रतः खातं चतुश्छिद्रम् **अग्रतालुखातं**[3] नाम। तस्य पूर्वापरच्छिद्राभ्यां[4] नासातालु-काख्यनाड्योः, पार्श्वच्छिद्राभ्याञ्च[5] धमन्योः, क्रमान्नासाभूमौ तालुपटले च प्रवेशः। अनुप्रस्थरेखायास्तु प्रान्तयोरेकैकतश्छिद्रम् **पश्चिमतालुविवरं**[6] नाम, ताभ्यां तालुनाड्योस्तालुपटले प्रवेशः।

पश्चिमप्रान्ते च तालुपटलस्य मध्यरेखायां कण्टकं—**तालुपृष्ठकण्टकं**[7] काकल-कण्टकं वा नाम, तत्र काकलकस्य[8] संयोगः। पश्चिमप्रान्तधारायां तु कोमलतालुनः।

(ख) मध्यभागे पुनः करोटितलस्य लक्षणीयानि—

**कण्ठपटलं, गलविलपटलं**[9] वा नाम गलविलच्छदिभूतो भागः जतूकाशरीरस्य पश्चिमकपालमूलपिण्डेन सन्धानान्निष्पन्नः। तत्सन्धानरेखा चात्र स्फुटा मूलजातूका[10] नाम। तस्य पुरोभागे पश्चिमं नासागुहाद्वारं सीरिकास्थ्ना द्विधा विभक्तम्, तत्र चैकैकतो जतूकाचरणद्वयं तत्पार्श्वसीमभूतम्।

अन्यच्चात्र करोटितले द्रश्यम् **अनुमन्याविवरम्** अनुमन्याख्यसिरा-धारणाय। **मातृकासुरङ्गाद्वारं** च तद्बहिःस्थं अन्तर्मातृकाधमनीप्रवेशार्थम्।

(ग) पश्चिमभागे तु करोटिपटलस्य मध्यतो लक्षणीयान्येतानि—

**महाविवरं** सुषुम्नाधारणं, **मूलकोटि**द्वयञ्च तदुभयतश्चूड़ावलयाख्य-कशेरुकया सन्धेयम्। प्रतिमूलकोटि च द्वे विवरे पुरःपश्चिमस्थे पूर्वोक्ते नाड़ी-निर्गमाय। **पश्चिमालिका, पश्चिमार्बुदश्च** पश्चिमकपालस्य पश्चिम-भागमध्यस्थं, तद् ग्रीवाधराख्यस्नायुरज्जुसंयोगाय। तदुभयतश्च द्वे द्वे रेखे **उत्तरतोरणिके** नाम वर्णितपूर्वे।

१ Vault of the Palate. २ स्वस्तिकाकारेण रेखयोः परस्परसंयोगादियं संज्ञा ( Crucial Suture ) ३ Anterior Palatine Fossa. ४ Foramina of Scarpa. ५ Foramina of Stenson. ६ Posterior Palatine Foramen. ७ Spine of the Palate. ८ Uvula. ९ Roof of the Throat. १० Basilar Suture.

( वामार्द्धम् )

[ ५०श चित्रम्—




चित्रद्वयस्य संयोगात् विज्ञेया पूर्णता बुधैः ।

करोटितलम् (दक्षिणार्द्धम्)




एकैकार्धे यथा यत् स्याद् अन्यार्द्धेऽपि तथव तत्।

एकैकस्मिंश्च पार्श्वे करोटितलस्य लक्षणीया एते विशेषाः—

गण्डोत्तरकूटं, गण्डास्थि, गण्डप्रवर्द्धनकञ्चेति त्रयं मिलितं **गण्डचक्रं**[1] नाम, तद् गण्डोत्तरखातस्य बहिःपरिधिभूतम्। शङ्खास्थ्नि तु द्रश्यानि—

हनुसन्धिस्थालकं हनुमुण्डधारणार्थम्, कर्णकुहरं कर्णबहिर्द्वारभूतम्, गोस्तनप्रबर्द्धनकं शिफाप्रबर्द्धनकञ्च। तानि वर्णितपूर्वाणि।

**सन्धानाङ्का**श्चात्र ऊर्ध्वहन्वस्थ्नो—गण्डास्थ्ना जतूकाबृहत्पक्षत्या च। गण्डास्थ्नः—ऊर्ध्वहनु-शङ्खास्थि-जतूकाभिः। शङ्खास्थ्नश्च — जतूकागण्डास्थि-पश्चिमकपालैरिति।

**पेश्यः** पुनरिहः करोटितलस्य एकैकार्द्धे संयुज्यन्ते बहवः। तासां प्रभव-निबेश-नाम-संख्यादीनि चित्रेषु द्रष्टव्यानि, स्मर्त्तव्यानि च पेशीवर्णनतः।

सैषा करोटिभूमिरुभयोस्तलयोर्व्याख्याता।

## अथ करोटिपक्षौ।

**करोटिपक्षौ**[2] नाम करोटिपार्श्वदेशौ त्रिकोणप्रायौ ज्याकृष्टधनुराकारौ (५१श चित्रम्)। तयोरेकैकस्योर्ध्वसीमा शङ्खतोरणिका नाम धनुर्वक्रा रेखा अपाङ्गतः पश्चिमसीमन्तावधि प्रसृता। अधःसीमा त्वधोहनोः कोण एव। ऊर्ध्वसीमगायाश्च रेखायाः प्रान्तद्वयं चेत् संयोज्यते हनुकोणेन, तदा करोटिपक्षस्य पूर्वापरसीम्नोर्निर्देशः। (५२ चित्रम्)

निर्माणं च तस्य पञ्चानामस्थ्नां संयोगेन—पुरस्तात् पुरःकपालेन। पार्श्वतः पार्श्वकपालेन, शङ्खास्थ्ना, जतूकास्थ्ना च। पश्चिमतः पश्चिमकपालेन। सीमन्ताश्च तत्तत्सन्धानकृतास्तत्रैव द्रश्याः।

एकैकस्य च करोटिपक्षस्य द्वौ भागौ,—पुरोभागो हनुसन्धिस्थालकस्य पुरःस्थः, पश्चिमभागस्तत्पश्चिमस्थश्चेति। तत्र—

पुरोभागे द्रश्यानि त्रीणि खातानि—शङ्खखातं, गण्डोत्तरखातं, हनुजातूक-खातञ्चेति। तेषु—

---

१ तदेतत् त्रयं चक्रार्द्धाकारं गण्डबहिःस्थम् (Zygomatic arch). २ Side of the skull (Norma Lateralis).

## ५१ चित्रम्—करोटिपक्षः (वामः)।




( रे१ = शङ्खतोरणिका रेखा )

अङ्कयोजना च इकरोटिपक्षनिर्देशाय त्थम्—६-६→७→३→३→रे१—रः। शङ्खतोरणिकाप्रान्तौ च ६-३—इत्यङ्काभ्यां योजनयौ।

**(क) शङ्खखातं**[१] नाम अद्धचन्द्राकारं खातं गण्डचक्रादूर्ध्वस्थम्। तस्य च निर्माणमस्थिपञ्चकांशैर्द्रष्टव्यम्। तद्यथा—

गण्डं पुरःकपालञ्च जतूकापक्षतिस्तथा।
शङ्खं पार्श्वकपालञ्च पञ्चकं शङ्खखातकृत्॥

पर्यते च तद् समांसशरीरे शङ्खच्छदाख्यपेश्या तत्र संयुक्तेन, छादयति च तां शङ्खावरणी नाम स्थूलकलामयी प्रावरणी॥

**( ख ) गण्डोत्तरखातं**[२] गण्डान्तरखातं वा नाम गण्डचक्रान्तःसीमस्थं खातं हनुकुन्तधारणम्। तदप्यापूर्यते शङ्खच्छदाख्यपेश्या अधोभागेन, पेशीभ्याञ्च हनुकूटकर्षणीसंज्ञाभ्याम्। धार्यन्ते च तत्र आन्तरहानव्याः सिराधमन्यः, पञ्चमनाड्या हानव्यशाखाश्च।

अनयोश्च खातयोरपृथक्त्वेऽपि ऊर्ध्वाधरांशभेदात् संज्ञाद्वयम्।

---

१ Temporal Fossa. २ Infra-temporal or Zygomatic Fossa.

**(ग) हनुजातूकखातं**[१] नाम ऊर्ध्वहनुजतूकास्थ्नोः सन्धानोपरि स्थितं त्रिकोणप्रायं लघुतरं खातं नेत्रगुहायाः पश्चिमस्थम्। तस्य पूर्वसीम्नि ऊर्ध्वहनोः पश्चिमार्वुदं, पश्चिमसीम्नि जतूकास्थ्नश्चरणफलकद्वयम्। केन्द्रञ्चेदं तिसृणां परिखाणां क्रमात् हनुजातूका-हनुचरणिका-पक्षान्तरालाख्यानाम्[२]। अनुबन्धश्चास्य नेत्र-नासा-मुख-मस्तिष्क-गुहाभिर्गण्डाधरखातेन च। धार्यन्ते चात्र ऊर्ध्वहानव्या नाड़ी सग्रन्थिका[३], धमनी चान्तरहानव्या नाम।

पश्चिमभागे तु करोटिपक्षस्य विशेषाद्दर्शनीयानि—कर्णकुहरं, गोस्तन-प्रवर्द्धनं, पश्चिमसीमन्तश्च।

## अथ करोटिपुरोभागः—मुखमण्डलम्।

**करोटिपुरोभागः**[४] खलु मुखमण्डलनिर्मापको वृत्तप्रायः। (५२ चित्रम्)। निर्मीयते चासौ अष्टाभिरस्थिभिः। तद्यथा—ऊर्ध्वं पुरःकपालेन, नासास्थिभ्याञ्च। अधस्तात् ऊर्ध्वहनुयुग्मेन, अधोहन्वस्थ्ना, गण्डास्थिभ्याञ्च। तस्य चोर्ध्वसीम्नि ललाटफलकं, भ्रूमध्यं, भ्रूतोरणिके च। अधःसीम्नि अधोहनुमण्डलम्। पार्श्वसीम्नि चैकैकतो गण्डास्थि, अधोहनुकूटञ्चेति—चतुःसीमनिर्देशः। तत्र चैतानि लक्षणीयानि अधोऽधः क्रमेण—

(१) **कूर्चकं**[५] (**भ्रूमध्यं** वा), वर्णितपूर्वम्। तदुभयतश्च **भ्रूतोरणिके**[६]।

(२) **नासास्थिनी** परस्परसन्धानरेखासहिते। अनयोश्च पुरःकपालेन सन्धानस्थानं **नासामूलं**[७] नाम। नासास्थ्नोश्च संहितयोर्**नासासेतु**[८]रिति संज्ञा।

(३) **नासापुरोद्वारं**[९] त्रिकोणप्रायम्। सन्धीयते चास्य परिधिः पार्श्वयोर्नासापार्श्विकाभ्यां तरुणास्थिभ्यां, मध्ये च नासाग्रप्राचीराख्येन तरुणास्थ्ना। अधःसीम्नि चास्य भूमौ दृश्यं **नासाग्रकण्टकम्**[१०]। दन्तमूलविलञ्च तदधस्तादेकैकतः।

(४) सोदूखलं दन्तमण्डलद्वयम्, **चिबुकसन्धानिका** रेखा, **चिबुकपिण्डश्च**।

---

१ Spheno-maxillary Fossa. २ Spheno-maxillary, Pterygo-maxillary and Spenoidal Fissures. ३ Superior Maxillary Nerve with Meckel's ganglion. ४ Anterior Region of the Skull (Norma Facialis). ५ Glabella. ६ Superciliary Ridges. ७ Nasion. ८ Bridge of the Nose. ९ Anterior Nares. १० Sub-nasal Point.

## ५२ चित्रम्—मुखमण्डलस्य दक्षिणार्द्धम् (अधोहनुवर्जम्)



इमानि चात्र मुखमण्डल पार्श्वतो दृश्यानि एकैकार्धे—

(१) **नेत्रगुहा**[१] अक्षिगोलकधरा सप्तास्थिनिर्मितप्राचीरा (५२ चित्रम्)। छिद्रश्च तदूर्ध्वम् **अधिभ्रुवाख्यम्**[२]। तदधश्च **नेत्राधरीयं**[३] नाम वर्णितपूर्वम्।

(२) **गण्डच्छिद्र**[४] नाम गण्डास्थिन छिद्रं छिद्रद्वयं वा वर्णितपूर्वम्, **गण्डकूट**[५] च हनु-गण्डसन्धानरेखाङ्कितम्।

(३) **अनुचिबुकविवरं**[६], **बाह्यतिरश्चीना रेखा**, **वक्त्रधमनीपरिखा**[७] च ( ४५श चित्रम् )।

**दन्ताश्च** समग्रमुखमण्डलस्य एकैकार्धे यथा—

( ऊर्ध्वहनौ ) द्वौ कर्त्तनकौ, एको रदनकः, द्वौ अग्रचर्वणकौ, त्रयः पश्चिमचर्वणकाश्चेति एकैकार्धे ऊर्ध्वहनोरष्टौ। एवं षोड़श ऊर्ध्वहन्वस्थि समग्रे। अधोहनावप्येवम्। तद्विवरणविस्तरः करोटितलवर्णने वर्णितपूर्वः।

**पेश्यः** पुनरत्र संयुज्यन्ते मुखमण्डलस्य एकैकार्धे षोड़श। तद्यथा—भ्रूमध्यपार्श्वतो भ्रूसङ्कोचनी नेत्रनिमीलनी च; नेत्रान्तःकोणे नेत्रकण्डरिका, तदधश्च नासौष्ठकर्षणी; नेत्राधरीयविवरोपरिष्टात् ओष्ठसमुत्कर्षणी, तदधश्च सृक्कणीसमुन्नमनी। गण्डकूटे सृक्कणीकर्षणी लघ्वी गुर्वी च। गण्डकूटाधोधारायां हनुकूटे च हनुकूटकर्षणी। दन्तोदूखलमण्डलस्य पूर्वार्द्धे मुखमुद्रणी, पश्चार्द्धे च कपोलिका, दन्तमूलविलोपकण्ठे नासासङ्कोचनी नासानमनी च; चिबुकपिण्डपार्श्वतः चिबुकोत्क्षेपणी। अधोहनौ बाह्यतिरश्चीनरेखामभितश्च तिस्रः—अधरावनमनी, सृक्कणीनमनी, गलपार्श्वच्छदा चेति। (४५।५२ चित्रयोः)

---

१ Orbit. नेत्रगुहाविशेषास्तु अनुपदं पृथग् वर्णनीयाः २ Supra-orbital Foramen. ३ Infra-orbital Foramen. ४ Malar Foramen. ५ Malar Prominence. ६ Mental Foramen. ७ Groove for Facial Artery.

## अथ नेत्रगुहे।

**नेत्रगुहे नेत्रकोटरे**[१] वा नाम (५२ चित्रम्) धुस्तूरपुष्पसदृशायतने[२] कोटरे नासामुभयतः स्थिते नेत्रगोलकधरे। तयोरेकैका सप्तास्थिनिर्मितप्राचीरा। अस्थीनि चात्र एकैकस्यां गुहायां चत्वारि गुहाबहिर्द्वारपरिधिनिष्पादकानि, त्रीणि च गुहामूलमभितः स्थितानि। तद्यथा—(१) अश्रुपीठास्थि—अश्रुवाहिका-धारणम् अन्तःपरिधिनिर्मापकम्। (२) अग्रकपालस्य नेत्रच्छदिफलकमूर्ध्वपरिधि-निर्मापकम्। (३) ऊर्ध्वहन्वस्थ्नो नेत्रपीठफलकं नेत्रभूमिनिष्पादकमधः-परिधिस्थम् (४) गण्डास्थ्नः अक्षिफलकं वहिःपरिधिस्थम्। (५) जतूकास्थ्नः पक्षतिद्वयम्। (६) तालवस्थ्नश्चूड़ास्थं प्रवर्द्धनम्। (७) झर्झरकस्य नेत्रान्तः-पीठञ्चेति। तत्र शेष त्रयं नेत्रगुहामूलमभितः प्रततम्। एष चैषां संग्रहश्लोकः—

> अश्रूर्ध्वहनुगण्डाग्रकपालैर्द्वारि[३] वेष्टिता।
> मूले नेत्रगुहा नद्धा जतूका-तालु-झर्झरैः॥

साकल्येन तु—जतूका-झर्झरकाऽग्रकपालानामुभयोर्नेत्रगुहयोः प्रवेशात् नेत्र-गुहाद्वये[४] एकादशैवास्थीनीति विशेषः। सन्धानाङ्काश्चात्र तत्तदस्थ्नामालक्ष्या विशेषेण नेत्रगुहान्तः।

एकैकस्याश्च नेत्रगुहायाः षड् भागाः कल्प्यन्ते। तद्यथा—

(क) **नेत्रगुहाद्वारं**[५] वृत्तायतं यथोक्तपरिधिकम्।

(ख) **नेत्रगुहामूलं**[६] धुस्तूरपुष्पवृन्तवत् संकुचितप्रायं यथोक्तेनास्थित्रयेण संवेष्टितम्। तत्र च दृश्यं दृष्टिनाड़ीरन्ध्रं पक्षान्तःरालञ्च वर्णितपूर्वम्, नेत्रगुहान्तः-प्रवेशिनीनां दृष्टिनाड़ी-सिरा-धमनीनां प्रवेशाय।

(ग) **नेत्रगुहाच्छदिः**[७] गुहापटलभूतः, स अग्रकपालस्य नेत्रच्छदिफलकेन जतूकास्थ्नो लघुपक्षत्या च निर्मितः। दृश्यते चात्र वहिःकोणे अश्रुग्रन्थिखातम्, अन्तःकोणे च वक्रोर्ध्वदर्शिन्याख्यनेत्रपेश्याः आकर्षसंयोगभूमिः[८]।

---

१ Orbits. २ सादृश्यञ्च पुरःप्रान्ते सुविस्तृततया पश्चिमप्रान्ते च सङ्कुचिततया। ३ अश्रु-पदेनात्र अश्रुपीठास्थि गृह्यते। नद्धा सम्बद्धा संवेष्टितेति यावत्। ४ तेषां त्रयाणां मध्यस्थत्वात् न चतुर्दश। ५ Anterior Opening of the Orbit. ६ Posterior Opening of the Orbit, ७ Roof of the Orbit. ८ सेयं नेत्रपेशी अङ्कुशाकारेण तरुणास्थिमयेनाकर्षेण धृता तदाश्रित्य विवर्त्तते। स चाकर्ष इह संलग्न इति। तदेतत् पेश्यध्याये वर्णयिष्यते।

(घ) **नेत्रगुहाभूमिः**[१] भूम्ना ऊर्ध्वहनोर्नेत्रपीठफलकेन, स्तोकमात्राभ्याञ्च गण्डतालव्यस्थ्नोरंशाभ्यां निर्मिता समतलप्राया ।

(ङ) **अन्तःप्राचीरं**[२] च नेत्रगुहायाः ऊर्ध्वहनोर्नासाकूटपार्श्वेनाऽश्रुपीठेन, झर्झरास्थ्नो नेत्रान्तःफलकेन, स्तोकमात्रेण च जतूकाशरीरपार्श्वेन निर्मितम् । तत्र च विशेषतो दृश्या **अश्रुवाहिका** नासाभिमुखी[३] ।

(च) **बहिःप्राचीरं**[४] तु नेत्रगुहायाः पूर्वार्द्धे गण्डास्थ्नोऽक्षिफलकेन, पश्चार्द्धे तु जतूकास्थ्नो वृहत्पक्षत्या निर्मितम् । दृश्यश्चात्र शङ्खगण्डिकरन्ध्रमार्गस्य[५] विवरं, विवरद्वयं वा कदाचित् ।

अनुबन्धश्च एकैकस्या नेत्रगुहायाः द्वाभ्यां गुहाभ्यां, त्रिभिश्च खातैः । तद्यथा—दृष्टिनाडीरन्ध्र-पक्षान्तरालाभ्यां शिरोगुहया । अश्रुवाहिकापथेन नासागुहया । खातानि च तदनुबन्धीनि शंख-गण्डोत्तर-हनुजातूकाख्यानि हनुजातूकाख्य परिखापथेन ।

**विवराणि** च नेत्रगुहान्तर्बहिश्च तत्परिधौ नवसंख्यानि । तद्यथा—मूले—दृष्टिनाड़ीरन्ध्रम्[६] दृष्टिनाड्योः प्रवेशाय । तद्बहिः पक्षान्तरालं[७], तेन तृतीय-चतुर्थ-षष्ठ-नाड़ीनां पञ्चमनाड्याः नेत्रगशाखायाः नेत्रगानाञ्च सिरा-धमनीनां नेत्रगुहाप्रवेशः । हनुजातूकखातञ्च[८] । तदन्तःसोम्निझर्झरकविवरद्वयं[९] सूक्ष्मम् । अन्तःकोणे अश्रुवाहिका[१०] । ऊर्ध्वपरिधौ अधिभ्रुवम्[११] । अधःपरिधौ नेत्राधरीयं[१२] विवरम् । बहिःकोणे शङ्खगण्डिकाख्यो[१३] रन्ध्रमार्गश्चेति ।

**पेश्यस्तु** नेत्रगुहावेष्टनप्राचीरेषु संयुज्यन्ते सप्त—क्रमात् ऊर्ध्वदर्शिनी, अधोदर्शिनी अन्तर्दर्शिनी, बहिर्दर्शिनी, वक्रोर्ध्वदर्शिनी, वक्राधोदर्शिनी चेति—षट् नेत्रगोलके सम्बद्धाः । सप्तमी च अश्रुविसर्जनी[१४] नाम अश्रुवाहिकायाः पश्चिमत इति ।

सेयं नेत्रगुहा नातिविस्तरं व्याख्याता ।

---

१ Floor of the Orbit. २ Inner wall. ३ अतिस्रुतमश्रुजलमनेनैव अश्रुवाहिकापथेन नासाभ्यन्तरे प्रविशति । ४ Outer wall. ५ Malar Canal. ६ Optic Foramen. ७ Foramen Lacerum Anticus. ८ Spheno-maxillary Fissure. ९ Ethmoidal Canals. १० Lachrymal Canal. ११ Supra-orbital Foramen. १२ Infra-orbital Foramen. १३ Tempero-malar Canal. १४ Tensor Tarsi.

## अथ नासागुहे।

**नासागुहे**[१] द्वे घ्राणेन्द्रियाधिष्ठाने श्वासवायोरादानविसर्जनद्वारभूते च। तयोर्मध्यतः प्राचीरकं प्रतन्वस्थिमयम्। सम्बन्धश्च तयोः प्रधानतो गलविलेन[२], अनुबन्धश्च अग्रकपाल-जातूका-झर्झरकोर्ध्वहनुगर्भस्थैः कोटरैः। निर्माणञ्च चतुर्दशभिरस्थिभिः, — झर्झरक-जतूका-पुरःकपालाख्यैस्त्रिभिः शिरोऽस्थिभिः, अधोहनु-गण्डास्थिद्वयवर्जं सर्वैः मुखमण्डलास्थिभिश्चेति[३]।

एकैकस्याश्च नासागुहायाः षड् भागाः कल्प्यन्ते वर्णनासौकर्याय। तद्यथा ( ५३ चित्रम् )—

**गुहाच्छदिः, गुहाभूमिः, अन्तःप्राचीरम्, बहिप्राचीरम्, नासापुरोद्वारम्, नासापश्चिमद्वारञ्चेति।**

तिस्रश्च एकैकस्यां नासागुहायां सुरङ्गाः— **ऊर्ध्वसुरङ्गा, मध्यसुरङ्गा, अधःसुरङ्गा** चेति। ताः बहिःप्राचीरवर्णनायामन्तर्भूताः। तत्र—

**नासागुहाच्छदिः**[४] नासागुहायाः पटलम्। तस्य निर्माणमग्रतो नासास्थिभ्यां, समूलेन च पुरःकपालस्याग्रकण्टकेन ; मध्ये झर्झरास्थ्नश्चालनी-पटलेन। पश्चिमतो जतूकास्थ्नः शरीरपिण्डेन। तत्र नासास्थितले नासानाड्योः, चालनीपटलस्थैश्छिद्रैश्च घ्राणनाडीप्रतानानां नासान्तःप्रवेशः।

**नासागुहाभूमिः**[५], **नासाभूमिर्वा** नाम स्वनामव्याख्याता ईषत्कोरो-दरा नासिकातलभूमिः। तस्या निर्माणं पूर्वार्द्धे ऊर्ध्वहन्वोस्तालुफलकाभ्यां, पश्चार्द्धे ताल्वस्थ्नोः ह्रस्वपत्रकाभ्याम्। द्रष्टव्यानि चात्र—नासाग्रकण्टकम्, अग्रतालुकखातस्थविवराणि, स्वस्तिकसन्धानिका[६] चेति सर्वाणि वर्णितपूर्वाणि। मध्ये च नासागुहाभूमौ सन्धीयते सीरिकास्थि नासामध्यप्राचीरभूतम्।

**अन्तःप्राचीरं**[७] तावदुभयोर्नासागुहयोरेकमेव मध्यप्राचीरापरपर्यायम्। तस्य निर्माणं तिर्यक्संहिताभ्यां झर्झरास्थ्नो मध्यफलकेन सीरिकास्थ्ना च।

---

१ Nasal fossæ. २ गलविलं नाम गलाभ्यन्तरं नासा-मुखकुहरयोः पश्चिमम्। ३ एकादशभि-रिति फलितार्थः। ४ Roof of Nose. ५ Floor of Nose, ६ सेयम् ऊर्ध्वहनोस्तालुफलकयोः ताल्वस्थ्नोः ह्रस्वपत्रकयोश्च सन्धानरेखा स्वस्तिकाकारा वर्णितपूर्वा। ७ Inner wall of Nasal passage.

# ५३श चित्रम्—वाम नासागुहाया अभ्यन्तरम् ।

( बहिःप्राचीरान्तर्दृश्या विशेषाः अस्थिच्छेदेन दर्शिताः )



किञ्चेदं मध्यप्राचीरं प्रायेण दक्षिणतो वामतो वा ईषदानतं[1] दृश्यते, करोटौ स्वभावात्। अस्थ्नोश्च तयोः सन्धानम्—अग्रतस्त्रिकोणतरुणास्थ्ना, पश्चिमतश्च जतूकास्थ्नो रसनिकया[2]। दृश्यश्चास्य नासामध्यप्राचीरस्य तलद्वयं वामदक्षिणभेदात्। तलद्वये च लक्षणीये सीरिकानुपूर्व्या नासातालुकाख्यनाड़ीद्वयधारिण्यौ परिखे, अनल्पानि च सूक्ष्मच्छिद्राणि नाड़ी-धमनीनां प्रतानधारणाय।

**वहिःप्राचीरं**[3] पुनर्नासागुहाया एकैकस्याः पृथगेव। तस्य निर्माणमग्रतः उर्ध्वहन्वोर्नासाकूटेनाश्रुपीठेन च, मध्ये झर्झरकपार्श्वपिण्डेनोर्ध्वहनुपिण्डेन शुक्तिकास्थ्ना च, पश्चिमतस्तात्वस्थ्नो दीर्घपत्रकेण जतूकास्थ्नश्चरणफलकेन चाऽन्तःसीमस्थेन।

तिस्रः खलु एकैकस्यां नासागुहायां सुरङ्गाः—ऊर्ध्वमध्याधःसंज्ञाः शुक्तिकापत्रकै विभक्ताः, क्रमात्—ऊर्ध्वसुरङ्गा, मध्यसुरङ्गा, अधःसुरङ्गा चेति। तत्र—

(१) **ऊर्ध्वसुरङ्गा**[4] नाम ऊर्ध्वतमो नासागुहामार्गो ह्रस्वतमश्च[5]। सा नासागुहायाः पश्चार्द्धमात्रे वर्त्तते झर्झरास्थ्न ऊर्ध्व-मध्यशुक्तिकाभागयोरन्तरालस्था। त्रीणि चात्र प्रकाशन्ते विवराणि, तद्यथा—पश्चात् तालुजातूकं नाम तदाख्यनाड़ी-धमनीनां प्रवेशाय, अग्रतो झर्झरकोटरद्वारं नाम झर्झरास्थिपश्चिमकोटरानुबन्धि, चूड़ायाञ्च[6] जतूकाद्वारं नाम यद् जतूकास्थिपिण्डान्तरीयेण कोटरेण सानुबन्धमिति। तत्र पुराणपीनसादिरोगेषु तयोः कोटरयोरन्तः पूयप्रवेशेण तत्तदस्थ्नां जर्जरीभावः काले मस्तिष्कविकृतिश्च दृश्यते बहुधा।

(२) **मध्यसुरङ्गा**[7] नाम मध्याधः-शुक्तिकयोरन्तरालस्थो मार्गो मध्यमाकारः। तत्रैकं विवरं झर्झरकोटरमार्गेण ललाटकोटरानुबन्धि। अपरमूर्ध्वहनुपिण्डमध्यस्थस्य हनुगर्भकोटरस्य[8] द्वारभूतम्। पुराणनासारोगेषु तयोरपि कोटरयोः प्रायः पूयसञ्चारो विकृतयश्च तत्कृता विविधाः।

(३) **अधःसुरङ्गा**[9] तावद् अधःशुक्तिकास्थ्नोऽधस्ताद् दृश्यो दीर्घतमो मार्गः समग्रस्य नासाबहिःप्राचीरस्यानुवृत्या वर्त्तमानः। तस्य पूर्वार्द्धे अश्रुवाहिकाया द्वारं, तदतिप्रवृत्तस्य अश्रुजलस्य नासागुहाप्रवेशाय।

**नासापुरोद्वारं**[10] नाम करोटौ नासागुहायाः पुरोभागस्थं सुमहत् द्वारं

---

१ विशेषादानतञ्चेत् रोग एव सः। २ सेयं जतूकास्थ्नः पुरस्तलस्था समुन्नता रेखा वर्णितपूर्वा। ३ Outer wall of Nasal passage. ४ Superior Meatus. ५ ऊर्ध्वभागे नासागुहायाः सङ्कुचितत्वात्। ६ नासागुहायाः शिखरोपान्ते। ७ Middle Meatus. ८ हनुगर्भकोटरञ्च ७८ पृष्ठे वर्णितम्। ९ Interior Meatus. १० Anterior Nares.

वाह्याभिमुखं ताम्वूलपत्राकारम् । दृश्यते च तत् समांसशरीरे तरुणास्थिसंयोगात् संकुचिततरं, द्विभागविभक्तश्च नासाग्रस्थत्रिकोणतरुणास्थिसहितेन नासामध्यप्राचीरेण वर्णितपूर्वेण । तस्योर्ध्वसीम्नि नासास्थिनी, पार्श्वयोरधःसीम्नि चोर्ध्वहन्वस्थिनी परस्परसंहिते ।

**नासापश्चिमद्वारं**[१] तावद् वृत्तप्रायं नासागुहायाः पश्चिमं द्वारं गलविलाभिमुखम् । तस्य पश्चिमतो गलविलच्छदिभूतं पश्चिमकपालस्य मूलपिण्डम् । ऊर्ध्वसीम्नि जतूकाशरीरम् । अधःसीम्नि ताल्वस्थनो ह्रस्वपत्रकद्वयम् । पार्श्वयोस्तु जतूकाचरणद्वयमान्तराख्यम् । द्विभागविभक्तश्च तत् सीरिकास्थना यथोक्तसन्धानेन ।

सेयं नासागुहा नातिविस्तरं व्याख्याता । तद्विस्तरस्तु इन्द्रियखण्डे घ्राणेन्द्रियवर्णनावसरे वक्तव्यः ।

## अथ समग्रकरोटिदृश्याः त्वाचभागाः ।

**त्वाचभागा**[२]स्तावत् त्वङ्मात्रावरणा अस्थिभागाः । तेषु केचित् करोटौ विशेषतो लक्षणीयाः । तैर्हि परिज्ञातैः साधु समुन्नीयन्ते शिरोगुहान्तरीयाणां मस्तिष्कादीनां विशेषा यथास्थानं वक्ष्यमाणाः ।

ते च सप्तविंशतिसंख्या वर्णितपूर्वाः । तद्यथा– द्वे भ्रूतोरणिके, द्वे गण्डचक्रे, द्वे गण्डकूटे, द्वे गोस्तनप्रवर्धने, एकं पश्चिमार्बुदम्, द्वे उत्तरतोरणिके ( तदुभयतः पश्चिमकपालस्थे ), द्वौ पार्श्वकुम्भौ, द्वे शङ्खतोरणिके, द्वौ पुरकुम्भौ, द्वौ नासास्थिनी, द्वौ नेत्रगुहापरिधी, द्वौ हनुकोणौ, एका हन्वधरीया धारा, एकं चिवुकपिण्डश्चेति ।

तदेतदस्थिखण्डं समाप्तम् । शिक्षणीयश्चेदमतियत्नादीक्षणोन्मेषाय ।

कीकसे[४] यदि कार्कश्यं तथाप्यादीयतामिदम् ।
ज्ञानगङ्गाम्बुसङ्गत्या दिव्या तनुरतो यतः[५] ॥

## इति चतुर्थोऽध्यायः ।

## इत्यस्थिखण्डम् समाप्तम् ।

---

१ Posterior Nares. २ एतदर्थे त्वक्शब्दात् शैषिकोऽण् प्रत्ययः । त्वाचभागाः = Subcutaneous Parts. ३ करोटेरुपरि रेखापातादिभिः मस्तुलुंगांशानां स्थानानि सम्यग् ज्ञायन्ते, तानि विस्तरभिया नेह लिखितानि, आकरेषु द्रष्टव्यानि । ४ अस्मिन् अस्थिखण्डे । ५ यतो हेतोः अस्मिन् ज्ञानरूपगङ्गाजलसम्पर्कात् दिव्यतनुलाभः तनुविषयकपूर्णज्ञानलाभ इति यावत्, भवितेति शेषः । यथा हि गङ्गाजलेऽस्थिनिःक्षेपात् तत्सङ्गतिमात्रेण दिव्यातनुर्भवति तद्वत् ।

# अथ सन्धि-स्नायुखण्डम् ।

## प्रथमोऽध्यायः ।

अथातः सन्धि-स्नायुसामान्यविज्ञानीयमध्यायं[1] व्याख्यास्यामः ।

इह खलु सन्धय इत्यस्थ्नामेव[2] सन्धयो वर्णनीयाः, इतरसन्धीनामसंख्येयत्वादप्रयोजनत्वाच्च । आहुश्च—

"अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्तिताः ।
पेशी-स्नायु-सिराणान्तु सन्धिसंख्या न विद्यते ॥" इति—
( सु० शा० ५ अ० ) ।

ते च सन्धयो द्विविधाः—"चेष्टावन्तः स्थिराश्च ।
शाखासु हन्वोः कट्यांश्च चेष्टावन्तस्तु सन्धयः ।
शेषास्तु सन्धयः सर्वे विज्ञेया हि स्थिरा बुधैः ॥" इति—

अन्ये तु मन्यन्ते—चेष्टावन्तः सन्धयो द्विविधाः, बहुचेष्टाः अल्पचेष्टाश्चेति । एवञ्च त्रिविधाः सन्धयः—बहुचेष्टाः[3], अल्पचेष्टाः[4] अचेष्टाश्चेति[5] । तत्र शाखासु अधोहनुकोट्योश्च बहुचेष्टाः । पृष्ठवंशादौ अल्पचेष्टाः । अन्यत्र पुनरचेष्टाः, त एव स्थिरसन्धि संज्ञाः ।

तत्र चेष्टावत्सु सन्धिषु सम्बध्यते अस्थिद्वयम् अस्थित्रयं वा सान्द्रमसृणशणगुच्छसमाभिः प्रतानवतीभिः स्नायुरज्जुभिः स्नायुकोषैश्च[6] । सन्ध्येयभागाश्च तत्रास्थ्नां तरुणास्थिपत्रकसमावृताः, सुसंश्लिष्टाश्च स्नायुभिः श्लेष्मधरकलापुट[7]-व्यवधानेन परस्परोपरि सम्यग्वर्त्तनाय । तदाहुः—

"स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्त्तते ।
सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा ॥" इति
( सु० शा० ५ अ० )

---

१ सामान्यतः सन्धि-स्नायुविज्ञानार्थोऽयमध्याय इत्यभिसन्धिः । २ सन्धयः=Joints or Articulations of Bones. ३ Diarthroses or Movable joints. ४ Amphiarthroses or Mixed Aritculations. ५ Synarthroses or Immovable Joints. ६ काश्चित् स्नायवो रज्ज्वाकाराः, काश्चिच्च कोषाकाराः—इति द्विधा निर्द्देशः । स्नायुरज्जवः, स्नायवः =Ligaments. स्नायुकोषाः=Articular Capsules. ७ श्लेष्मधरा कला=Synovial Membrane or Sac. श्लेष्मा त्विह श्लेषको नाम=Synovia.

अचेष्टाः पुनः सन्धयः प्रतनुस्नायुजालसंहताः दन्तुरधारादिभिर्निरन्तर-संश्लिष्टाश्च[१], तेषु हि प्रयोजनाभावात् श्लेष्मधरकलाया अभावः।

आकृतितः पुनरष्टविधाः सन्धयः प्राचाम्—"कोरोदूखल-सामुद्ग-प्रतर-तुन्न-सेवनी-वायस-तुण्ड-मण्डल-शङ्खावर्त्ताः। तेषामंगुलि-मणिबन्ध-गुल्फ-जानु-कूर्परेषु कोराः सन्धयः। कक्षा-वङ्क्षण-दशनेषु उदूखलाः। अंसकूट-गुद-भग-नितम्बेषु[२] सामुद्गाः। ग्रीवा-पृष्ठवंशयोः प्रतराः। शिरः-कटिकपालेषु तुन्नसेवनी। हन्वोरुभयतस्तु वायसतुण्डः। कण्ठ-( हृदय-नेत्र- ) क्लोमनाड़ीषु[३] मण्डलाः[४]। श्रोतश्शृङ्गाटकेषु शङ्खावर्त्ताः[५]।" ( सु० शा० ५ अ० )

विस्तरोऽत ऊर्ध्वम्।

तत्र **कोरा** नाम सन्धयो बहुचेष्टाः, कोरगर्भेष्वस्थिप्रान्तेषु उत्सेधवतामस्थिभागानां सन्धानरूपाः। ते चतुर्विधाः—खल्लकोरः, परस्परकोरः, चक्रकोरः, सन्दंशकोरश्चेति। तेषु—

(१) **खल्लकोरः**[६] मणिबन्धे गुल्फसन्धौ च स्वनामव्याख्यातः।

(२) **परस्परकोरः**[७] पर्याणकसदृशस्थालकयोः परस्परसन्धानरूपः, यथा—अंगुष्ठमूले[८]।

(३) **चक्रकोरः**[९] मध्यकीलमाश्रित्य चक्रस्येव विवर्त्तनप्रदः सन्धिः, यथा—चूड़ावलयासहितस्य शिरसो दन्तचूड़ाख्यकशेरुकया[१०]।

(४) **सन्दंशकोरः**[११] सन्दंशाकारस्यास्थिभागस्य सन्धाने यथा—कूर्परसन्धौ[१२]।

---

१ निरन्तरमव्यवधानेन परस्परानुप्रविष्टाः। २ अंसपीठेति क्वचित् पाठः, स प्रामादिक एव। कक्षायां पृथगेव कोरसन्धेरभिधानात्, अंसपीठस्य च तत्रैव सम्भवात्। अंसकूटेति पाठे तु अंसकूटाक्षकयोः सन्धिरुच्यते, तेन चांसचक्रनिर्माणात्, सामुद्गसन्धिता युज्यत एव। सामुद्गाः सम्पुटाः। ३ कण्ठनाड्यां ऊर्ध्वस्थ श्वासनाल्याम्। क्लोमनाड्यः फुस्फुसप्रवेशि श्वासमार्गाः। इहापि केषुचित् मुद्रितपुस्तकेषु कण्ठहृदयनेत्रे त्यादिपाठः प्रामादिक एव प्रतिभाति, हृदयादौ अस्थ्नामदर्शनात्। ४ मण्डलाकाराणां तरुणास्थ्नामुपर्युपरि निवेशादियं संज्ञा। दृश्यतां फुस्फुसवर्णने क्लोमनलिका वर्णनम्। ५ कर्णपाल्योः तरुणास्थ्नां शङ्खवृत्ताकारतो निवेशादियं संज्ञा। ६ Condyloid Articulations. ७ Reciprocal Reception ( Saddle Joints. ) ८ पर्याणकाख्यस्य कूर्चास्थ्नः अंगुष्ठमूलशलाकया सन्धाने इति भावः। ९ Trachoides ( Pivot-Joints. ) तत्र हि दन्तचूड़ास्थप्रवर्द्धनं मध्यकीलभूतमाश्रित्य विवर्त्तते चूड़ावलया नाम कशेरुका। ११ Ginglymus. १२ अन्तःप्रकोष्ठ-प्रगण्डास्थ्नोरूर्ध्वसन्धाने।

**उदूखला**[1] नाम सन्धयोऽपि बहुचेष्टाः उदूखलवद् गभीरप्रायेष्वस्थिभागेषु इतरास्थिमुण्डानां सन्धानरूपाः। तेषु हि स्वोदूखलानाश्रित्य सर्वतो[2] विवर्त्तन्ते तानि तान्यस्थीनि, यथा—कक्षा-वङ्क्षणसन्धिषु।

**दशनोदूखला**[3] पुनर्दृढ़स्थिरा सन्धयः पृथगेव मन्तव्याः।

सामुद्गाः[4] नाम समुद्गनिर्मापका इव सन्धयः स्वल्पचेष्टाः। ते श्रोणिचक्रांसचक्रादिषु द्रष्टव्याः।

**प्रतरा**[5] नाम प्रतरणशीलैरिव ईषच्चलैः समतलांशाभ्यां परस्परसंहितैरस्थिखण्डैर्निर्मिताः सन्धयः। ते त्रिविधाः सन्धानप्रकारवैशेष्यात्—चलप्रतरः, युक्तप्रतरः, दृढ़प्रतरश्चेति। तत्र—श्लेष्मधरकलापुटव्यवधानेन चलत्वबाहुल्ये सति चलप्रतराख्यः सन्धिः, यथा - करःचरणःकूर्चास्थ्नां परस्परसंयोगे। अन्तरालस्थया स्नायुरज्ज्वा दृढ़कलया वा संयोगे युक्तप्रतरः, यथा—प्रकोष्ठास्थ्नोर्जङ्घास्थ्नोश्च नलकयोः परस्परसन्धाने। अन्तरालस्थेन तरुणास्थिचक्रेण सजातीयानां दृढ़सन्धाने तु दृढ़प्रतरः यथा—पृष्ठवंशे परस्परं कशेरुकाणाम्।

**तुन्नसेवन्यः**[6] नाम परस्परप्रवेशिनीभिर्दन्तुरधारादिभिर्निर्मिताः शिरःकपालान्तरालाः सन्धयः। ते शिरःकपालेषु द्रष्टव्याः, कटिकपालेषु च प्राग् यौवनात्। ताश्च द्विविधाः—सीमन्तसेवनी, प्रस्तसेवनी चेति। तत्र शिरःकपालसन्धानेषु सीमन्तसेवन्यः सीमन्तनाम्ना प्रसिद्धाः। सीरिकास्थ्नो जदूकास्थ्ना सन्धाने तु प्रस्तसेवनी[7]।

वायसतुण्डाख्यस्तु सन्धिः अधोहनुमुण्डयोः शङ्खास्थिगताभ्यां हनुसन्धिस्थालकाभ्यां सन्धानान्मुखव्यादानादिसम्पादकः। स तु कोरसन्धेरेव खल्वकोराख्यो भेदो युग्मरूपः, तस्य कोरग्रहणेनैव ग्रहणात् न पृथग् विभागार्हतेति सूक्ष्मदृशः।

मण्डल-शङ्खावर्त्ताः पुनः क्रमात् श्वासपथ-कर्णपालिगताः तरुणास्थिसन्धयः स्वनामव्याख्याताः। तेषां नेह ग्रहणम्, तरुणास्थ्नामस्थि संख्याने अग्रहणात्।

एते च सन्धिसंग्रहस्मारकाः श्लोकाः—

> अचेष्टास्तुन्नसेवन्यः सीमन्त-प्रस्तभेदतः।
> शिरोऽस्थिषु समादिष्टा दशनोदूखलास्तथा॥
> अल्पचेष्टास्तु सामुद्गाः श्रोणिचक्रांसचक्रयोः।
> प्रतरास्त्रिविधास्त्वन्ये पृष्ठवंशादिषु स्थिताः॥

---

१ Enarthosis (Ball-and-socket Joints). २ ऊर्ध्वमधः पार्श्वयोश्चेति भावः। ३ Gomphosis. ४ समुद्गाः सम्पुटाः। ५ Arthrodia. ६ Sutures. ७ Schindylosis.

अथात्र बहुचेष्टाः स्युः कोराश्चोदूखलास्तथा।
आद्याश्चतुर्धा गुल्फादिष्वन्ये कक्षादिगोचराः॥
प्राचां वायसतुण्डो यो युग्मकोरः स एव हि।
शङ्खावर्त्ता मण्डलाश्च तरुणास्थिगताः स्मृताः॥

अथात्र चेष्टावत्सु सन्धिषु स्नायुसन्ततिनिबद्धेषु चत्वारो विशेषाः पृथग्द्रष्टव्याः—अस्थ्नां सन्धेयांशः, सन्ध्यन्तरीयतरुणास्थीनि, स्नायवः, श्लेष्मधरा कलाश्चेति। तत्र—

(१) अस्थ्नां सन्धेयांशाः दृढचिक्कणास्थिमयाः। ते चाऽच्छाद्यन्ते तरुणास्थिपत्रकैः सुकोमल-मसृणैः सन्धानकाले।

(२) तरुणास्थीनि तावद् द्विविधानि सन्धिसम्बन्धीनि—सन्धिवेष्टनानि सन्ध्यन्तरालस्थानि चेति। तत्र सन्धिवेष्टनानि सन्धेयानामस्थ्यंशानां छादकानि श्लक्ष्णतासम्पादनाय। इतराणि तेषामन्तरालेषु स्थितानि चक्र-त्रिकोणाद्याकाराणि। तत्र चक्राकाराणि कशेरुकान्तरालेषु, त्रिकोणाकाराणि तु मणिबन्धादौ। तेषु च कानिचित् स्थितिस्थापकानि तादृशस्नायुसूत्रभूयिष्ठानि च।

(३) स्नायवस्तावत् सन्धिबन्धनकारिण्यः शणसूत्राभदृढतन्तुभिर्निर्मिताः त्रिविधाः—रज्जुरूपाः कोषरूपाः, कलारूपाश्चेति। तत्र रज्जुरूपाः सन्धिमभितः पृथक् परस्पराश्लेषेणवाऽवस्थिताः। कोषरूपाः[२] कोषवत् सन्धिवेष्टनकारिण्यः। ता एता द्विविधा अपि जानुवंक्षणादिसन्धिषु दृश्यन्ते। कलापरूपास्तु[३] स्नायवः सुदृढकलामय्यो वर्णितपूर्वा जङ्घान्तरालाद्या अस्थिद्वयान्तरालच्छादनेन तत्संयोजन्यः।

प्राञ्चस्त्वाचक्षते--

"स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे।
प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा॥
प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ।
वृत्तास्तु कण्डराः सर्वाः विज्ञेयाः कुशलैरिह॥
आमपक्वाशयान्तेषु वस्तौ च शुषिराः[४] खलु।
पार्श्वोरसि तथा पृष्ठे पृथुलाश्च[५] शिरस्यथ[६]॥" (सु० शा० ५अ०)

---

१ Ligamentous bands. २ Capsular ligaments. ३ Inter-osseus-membranes.
४ आमाशयादिप्रान्तेषु स्नायुसूत्रमयानामंगुरीयकसदृशभागानां दर्शनादिति भावः। ५ पृथुलाः प्रच्छदवदायताः, ताश्च प्रच्छदाकारपेशीनां प्रान्तेषु दृश्याः (=Apponeurosis). ६ दृश्यतां ८म पृष्ठे "नौर्यथा" इत्यादि पाठोऽपि।

तत्र प्रतानवत्यस्तावद् गृह्यन्ते सन्ध्यध्याये। तदन्यास्तु पेश्यंशरूपाः पेशीवर्णने आशयवर्णने च वर्णनीयाः।

वर्णतश्च द्विविधाः स्नायवः—शुभ्राः पीताश्च। तत्र शुभ्राः सर्वत्र दृश्यन्ते अन्यत्र ग्रीवाधरायाः स्नायुरज्वाः, कशेरुचक्रान्तरालाभ्यश्च स्नायुभ्यः। सा च ताश्च स्नायवः पीताभाः स्थितिस्थापकतन्तुवहुलाश्चेति विशेषः।[1]

**श्लेष्मधरकलाः**[2] पुनः चेष्टावतां सन्धीनामन्तरावरण्यः कोषरूपाः समन्तात् सन्धेयांशेषु संसक्ताः। तदन्तश्च स्रवति श्लेषकः श्लेष्मा[3] नियतं, येन न क्षीयन्ते सन्धेयभागाः, सम्यक् प्रवर्त्तन्ते च सन्धिमाश्रिता विविधाश्चेष्टाः। आहुश्च—

> "स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्त्तते।
> सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा॥" (सु० शा० ४ अ०)

ताश्च त्रिविधाः—सन्ध्यन्तरीयाः, कण्डरानुगाः, त्वाचाश्च। तत्र सन्ध्यन्तरीयाः सन्ध्यन्तःस्थितेष्वस्थिभागेषु संसक्ताः निश्छिद्रकोषाः। सन्धयश्च तत्र स्नायुकोषसमावृताः। कण्डरानुगाः[4] गतागतशीलानां कण्डराणां वेष्टनभूताः। त्वाचाः[5] पुनः त्वङ्मात्रावरणानामस्थिभागानामुपरिष्ठाः त्वगस्थ्नोरन्तरालस्थाः कलापुटकरूपाः। तासु सन्ध्यन्तरीया एवेह सन्ध्यध्यायेऽधिकृताः।

अचेष्टेषु पुनः सन्धिषु प्रयोजनाभावात् श्लेष्मधरकलाभावः—इत्युक्तपूर्वम्। तदेतत् सन्धिसामान्यविज्ञानं व्याख्यातम्। विशेषोऽत ऊर्ध्वम्।

## अथ द्वितीयोऽध्यायः।

अथातः सन्धिविशेषविज्ञानीयमध्यायं व्याख्यास्यामः।

इह खलु सामान्यतः परिज्ञातेष्वपि सन्धिषु विशेषाः अवश्यं ज्ञातव्या भवन्ति, सन्धीनां स्थान-संस्थान-चेष्टादिविज्ञानार्थं सन्धिमुक्तादि[6]प्रतीकारार्थञ्च। तानेवेदानीं विशेषान् प्रविभज्य समासतो वक्ष्यामः।

वर्णनासौकर्याय चात्र शिरःपूर्वं वर्ण्यन्ते सन्धयः। शिरःसन्धिषु च अधोहनुसन्धानं शिरोग्रीवसन्धानञ्चेति द्वावेव चेष्टावन्तौ सन्धी व्याख्येयौ। इतरे

---

१ Yellow Elastic fibrous tissue. २ Synovial membrane. ३ Synovia. ४ Tendon-sheaths. ५ Bursæ. ६ सन्धिमुक्तं सन्धिच्युतिः ( Dislocation ).

तु शिरःसन्धयः सीमन्ताद्याः समग्रकरोटिवर्णने सन्धिसामान्यविज्ञाने च वर्णितपूर्वा इति नेह पुनरुच्यन्ते ।

शिरोऽनन्तरश्चात्र व्याकरणीयाः पृष्ठवंशोरःकटिशाखागताः सन्धयः—इति वर्णन क्रमोद्देशः ।

अथ शिरः-सन्धिषु

## अधोहनुसन्धानम् ।

अधोहनुस्तावत् सन्धीयते शङ्खास्थिगतयोः हनुसन्धिस्थालकयोः, कर्णोपकण्ठे स्वमुण्डाभ्याम् । ( ५४ चित्रम् ) । सन्धिश्चायं युग्माकोराख्यो[१] बहुचेष्टः, प्राचां वायसतुण्डाख्यः । आश्रित्य चेममधोहनोः सम्पद्यते ऊर्ध्वाधश्चलनं भूम्ना, स्तोकेन च पुरः-पश्चिमतः पार्श्वयोश्च । पुरश्च एकैकस्य हनुमुण्डस्य शङ्खास्थ्नो गण्डप्रवर्द्धनमूलस्थं सन्ध्यर्बुदम्, पश्चात् कर्णकूहरस्य पूर्वपरिधिः, उपरिष्टाच्च शङ्खालिकाख्या धारा । संयम्यते च हनुमुण्डमेकैकतः स्वकोये स्थालके तैरेवोत्सेधैः ।

### ५४श चित्रम्—अधोहनुसन्धानम् (दक्षिणम् )




[ दृश्यञ्चेह वामार्द्धस्य अभ्यन्तरतलमेव मध्यरेखाच्छेदेन ]

---

१ Double Condyloid Articulations.

एकैकतश्च हनुमुण्डसन्धौ लक्षणीया इमे विशेषाः—

(१) हनुमुण्डवेष्टनः स्नायुकोषः[१], तदन्तश्च तरुणास्थिचक्रं स्थालक-हनुमुण्डयोरन्तरालस्थम्, तदुभयतश्च श्लेष्मधरकलापुटकद्वयम्। सन्धेयभागाश्च तत्र तरुणास्थिसमावृताः।

(२) हनुमुण्डवाह्या स्नायुः[२], शङ्खास्थ्नः सन्ध्यर्वुदात् हनुमुण्डस्य मूलावधि तिर्यक् सम्बद्धा।

(३) हन्वन्तःपार्श्वगा स्नायुः[३], जतूकाबृहत्पक्षतेः कोणतः हनुकूटान्तरतले दन्तमूलविवरोपकण्ठं यावत् सङ्गता तिरश्चीना।

(४) शिफाहनुकोणिका स्नायुः[४], शङ्खास्थ्नः शिफाप्रवर्द्धनात् हनुकोणं यावत् सङ्गता। ता एताः पेशीसमन्विता अधोहनुसन्धेः सन्धारण्य एकैकतः।

## अथ शिरोग्रीवसन्धिः।

**शिरोग्रीव-सन्धिर्**[५]नाम शिरसः सन्धिः पृष्ठवंशस्य अनुग्रीवांशेन (५५।५६ चित्रयोः)। तत्र च पश्चिमकपालं सन्धीयते चूड़ावलयया, सा च पश्चिमकपालञ्च दन्तचूड़येति त्रिधा द्रष्टव्यं सन्धानम्। यथा—

(क) **पश्चिमकपाल-चूड़ावलययोः सन्धिः**[६] पश्चिमकपालमूलकोट्योः सन्धाने कोराख्यः, अवशिष्टांशे तु प्रतराख्यः। स्नायवश्चात्र षट् कपालमूलचूड़िकाख्याः। तद्यथा—

कपालमूलचूड़िका अग्रिमा[७]। सेयं पश्चिमकपालास्थ्नो मूलभागस्य महाविवर-पुरःपरिधिभूतस्य चूड़ावलयापूर्वार्द्धेन संयोजनी।

कपालमूलचूड़िका पश्चिमा[८]। सेयं पश्चिमकपालांशस्य महाविवरपश्चिमपरिधिभूतस्य चूड़ावलयापरार्द्धेन संयोजनी। ताञ्चोभयतो भित्वा सनाड्योर्मस्तिष्कमातृकाख्ययोर्धमन्योर्महाविवरे प्रवेशः।

कपालमूलचूड़िके पार्श्वगे[९]। तयोरेकैका पश्चिमकपालस्य मन्याप्रवर्द्धनस्य योजनी चूड़ावलयाया बाहुप्रवर्द्धनेन एकैकतः।

कपालमूलचूड़िकौ नाम स्नायुकोषौ[१०]। तौ च पश्चिमकपालमूलकोटिद्वयस्य चूड़ावलयोपरिस्थितयोः, स्थालकयोः संहितस्य धारकौ परितः सम्वेष्ट्य। तदन्तश्च दृश्येते श्लेष्मधरौ कलापुटकौ।

---

१ Capsular Ligament of the Temporo-mandibular Articulation. २ External Lateral Lig. ३ Internal Lateral Lig. ४ Stylo-mandibular Lig. ५ Cranio-vertebral Articulations. ६ Occipito-atlantal Articulation. ७ Anterior Occipito-atlantal Lig. ८ Same—Posterior. ९ Same—Lateral. १० Same—Capsular.

## ५५ चित्रम्—शिरोग्रीवसन्धिः ( सम्मुखतो दृष्टः )




† एतच्चिह्नं स्नायुसूचकम् ।

[ * अस्य सम्मुखांशः कर्त्तितोऽपसारितश्च ]

## ५६ चित्रम्—शिरोग्रीवसन्धिः ( पृष्ठतलम् )

( स चेह पश्चिमकपालोत्तरार्द्धस्य ग्रीवाकशेरुचक्राणाञ्चापसारणेन दर्शितः )




[ † एतच्चिह्नं स्नायुबोधकम् ]

(ख) **चूड़ावलया-दन्तचूड़योः सन्धिस्तु**[१] पुरोभागे चक्रकोराख्यः। दन्तचूड़ाया हि दन्तप्रवर्द्धनं मध्यकीलभूतमाश्रित्य विवर्त्तते चूड़ावलया शिरःसहितेति। अवशिष्टांशे तु स एव प्रतरसंज्ञः। स्नायवश्चात्र पञ्च। तद्यथा—

वलयदन्तिका पुरोगा[२],—कशेरुपिण्डयोः पुरःस्तात् सन्धानकरी।

वलयदन्तिका पश्चिमा[३] —कशेरुचक्रयोः पश्चिमतः सन्धानकरी।

वलयदन्तिकौ स्नायुकोषौ[४] चूड़ावलया-दन्तचूड़योः सन्धिप्रवर्द्धनकानां यथार्हं परस्पर सन्धानकरौ। तौ च अभ्यन्तरतः श्लेष्यधरकलापुटकसहितौ।

स्वस्तिकरज्जुकाख्या[५] स्नायुः उभयतः चूड़ावलयाया अन्तःकलायकयोः सम्बद्धा मूलाभ्याम्। सेयं दन्तचूड़ाया दन्तप्रवर्द्धनधारणी स्नायुरनुदैर्घ्यम् ऊर्ध्वाधःसंसक्ता क्रमात् पश्चात्कपालमूलेन दन्तचूड़ापिण्डेन च, दन्तप्रवर्द्धनस्य पुरस्तात् संयमनाय[६]। श्लेष्मधरौ चात्र कलापुटकौ दन्तप्रवर्द्धनस्य पुरःपश्चिमस्थौ।

---

१ Atlanto-axial Articulation. २ Anterior Atlanto-axial Lig. ३ Posterior Do. ४ Capsular Do. ५ Transverse Lig. ६ संयमनञ्च यथास्थानधारणरूपम् यदि हि दन्तप्रवर्द्धनं भग्नं स्थानच्युतञ्च स्यात् तदा सुषुम्नाशीर्षकसम्पीड़नात् सद्य एव मृत्युः यथा उद्बन्धनादौ प्रागपि श्वासरोधादिति निश्चयो विशेषविदाम्।

(ग) पश्चिमकपाल-दन्तचूड़योः सन्धौ[१] तु परस्परस्पर्शाभावेऽपि परस्पर सम्बन्धिन्यः स्नायवश्चतस्रो द्रष्टव्याः सुषुम्नाविवरान्तर्निगूढ़ाः। तद्यथा—

(१) कपालदन्तचूड़िका[२]—पश्चिमकपालमूलस्य दन्तचूड़ापिण्डेन सम्बन्धनी। सेयं दन्तप्रवर्द्धनस्य वक्ष्यमाण—मध्यरज्जुकाद्वयसंयतस्य च्छादनी पश्चिमतः, सुषुम्नाकाण्डस्य च पुरतः तद्विवरान्तः।

(२) दन्तशिखरिका[३]—दन्तचूड़ाया दन्तप्रवर्द्धनस्य शिखरसम्बद्धा ऊर्ध्वं पश्चिमकपालमूले संलग्ना।

(३।४) दन्तपक्षिके, मध्यरज्जुके[४] वा नाम द्वे दन्तप्रवर्द्धनमुभयतः पक्षवत् सम्बद्धे तेत्संयमनार्थं, पश्चिमकपालमूलकोस्थ्योर्मूलतश्च संसक्ते—इति।

ता एताः शिरोग्रीवसन्धायिन्यः स्नायवः। अस्ति चापरा ग्रीवाधराख्या महती स्नायुरज्जुः पश्चिमकपालस्य पश्चिमार्बुदतः पश्चिमालिकातश्च सम्भूय सप्तम्याः ग्रीवाकशेरुकायाः पृष्ठकण्टकान्तं संलग्ना। सा च स्थितिस्थापकगुणा धारयति प्रयत्नमन्तरेणैव ग्रीवावंशमृजुभावेन। सा साधारण्याः पृष्ठकण्टक-धराख्य स्नायोरंशरूपा।

## अथ पृष्ठवंशसन्धयः।

पृष्ठवंशः खलु कशेरुकाभिरुपर्युपरि संहिताभिर्निर्मीयते। सन्धिश्च[६] तासां परस्परं पञ्चस्ववयवेषु सजातीयेषु—(५५ चित्रम्)

(१) कशेरुपिण्डेषु, (२) कशेरुचक्रेषु, (३) सन्धिप्रवर्द्धनेषु, (४) पृष्ठकण्टकेषु, (५) बाहुप्रवर्द्धनेषु चेति।

तत्र कशेरुपिण्डानां परस्परसन्धयः अचेष्टप्रायाः। कशेरुचक्रादीनां परस्परसन्धयस्तु युक्तप्रतराख्या अल्पचेष्टाः, तेष्वपि चेष्टाधिक्यं ग्रीवा-कटि-कशेरुकासन्धिषु। चेष्टाश्च पृष्ठवंशे अन्तरायमनं[७] बहिरायमनं[८] पार्श्वविवर्त्तनञ्चेति[९]—त्रिविधा एव प्राधान्येन[१०] द्रष्टव्याः। तत्र—

---

१ Occipito-axial Articulation. २ Apparatus Ligamentus Colli. ३ Sus-sensory Ligament. ४ Check Ligaments. ५ Ligamentum Nuchæ. ६ Vertibral Articulations. ७ अन्तरायमनं नाम पुरस्तादवनमनम्। ८ बहिरायमनं पृष्ठतोऽवनमनम्। अपतानकरोगोक्तयोरन्तरायाम-बहिरायामसंज्ञयोर्दर्शनात् पदद्वयस्येदृशार्थे प्रयोगः। ९ वामतो दक्षिणतो वा विवर्त्तनमित्यर्थः। १० अपरासां मिश्रचेष्टानां त्रिविधेष्वेवान्तर्भावात्।

(१) कशेरुपिण्डानां परस्परसन्धानकारिण्यः स्नायवस्त्रिधा विभज्यन्ते—

(क) कशेरुपुरस्त्या साधारणी[१], सेयं सर्वासां कशेरुकानां पुरोवर्त्तिनी दृढ़स्थूलदीर्घपट्टिकाकारा समग्रपृष्ठवंशधारणी।

(ख) कशेरुपश्चिमा साधारणी[२], सेयं सर्वासां कशेरुकानां पृष्ठवर्त्तिनी पूर्ववदेव। दृश्यते चासौ कशेरुचक्राणामपसारणेन सुषुम्नाविवरस्यान्तः पुरःसीमभूता।

(ग) कशेरुपिण्डान्तरालाश्च[३], ताः कशेरुपिण्डानां संयोजन्यः, मध्यतः कोमलस्थितिस्थापकैस्तरुणास्थिप्रायैश्चक्रकैरुपलक्षिताश्च।

(२) कशेरुचक्राणां परस्परसन्धानकारिण्यस्तु स्नायवः स्थितिस्थापकगुणाः पीताभवस्तुप्रायाश्च। ताः कशेरुचक्रान्तराला[४] नाम।

(३) सन्धिप्रवर्धनानां परस्परसन्धानं तु तद्वेष्टनैः स्नायुकोषैः[५]। एकैकस्या हि कशेरुकायाश्चत्वारि सन्धिप्रवर्द्धनानि—द्वे ऊर्ध्वमुखे, द्वे चाधोमुखे। तत्रोर्ध्वमुखयोः सन्धिस्तदूर्ध्वस्थकशेरुकयोरधोमुखसन्धिप्रवर्द्धनाभ्याम्, अधोमुखयोस्त्वधःस्थकशेरुकाया ऊर्ध्वमुखसन्धिप्रवर्द्धनाभ्याम्। प्रतिस्नायुकोषान्तश्च दृश्यमेकैकं श्लेष्मधरकलापुटकम्।

(४) पृष्ठकण्टकसन्धायिन्यस्तु स्नायवो द्विविधाः—पृष्ठकण्टकधरा साधारणी, कण्टकान्तरालाश्चेति। तत्र—

(क) पृष्ठकण्टकधरा साधारणी[६] नाम स्नायुः दृढ़रज्जुप्रायाः सर्वासां कशेरुकाणां पृष्ठकण्टकसन्धायिनी, सा पश्चिमकपालपृष्ठस्थादर्बुदात् त्रिकास्थिपृष्ठकण्टकान्तं यावत् सम्बद्धा। तस्याश्चोर्ध्वभागस्य ग्रीवाधरा स्नायुरज्जुरिति संज्ञा उक्तपूर्वा।

(ख) कण्टकान्तरालास्तु स्नायवः[७] पृष्ठकण्टकानामन्तरालापूरण्यः प्रतनुकलानिर्मिताः पृष्ठ-कटिकशेरुकास्वेव विशेषतो दृश्याः।

(५) बाहुप्रवर्द्धनानां परस्परसन्धायिन्यः पुनः स्नायवो बाहुप्रवर्द्धनान्तराला[८] नाम। ता ग्रीवाकटिकशेरुकासु प्रतनुकलामध्यः, पृष्ठकशेरुकासु तु रज्जुप्रायाः।

---

१ Anterior Common Ligament. २ Posterior Common Lig. ३ Intervertebral Ligaments & Discs. ४ Ligamenta sub-flava. ५ Articular Capsules. ६ Supra-spinous Ligaments. ७ Inter-spinus Ligaments. ८ Inter-transverse Ligaments.

## अथ पर्शुकापृष्ठसन्धयः ।

पर्शुकापृष्ठसन्धयो नाम पर्शुकानां सन्धयः पृष्ठकशेरुकाभिः ( ५७ चित्रम् )। ते द्विविधाः—पर्शुकामुण्डानां कशेरुपिण्डैः सन्धयः, पर्शुकार्बुदानां कशेरुवाहुप्रवर्द्धनकैः सन्धयश्चेति । तत्र—

१। पर्शुकामुण्डानां कशेरुपिण्डैः सन्धयश्चलप्रतराख्याः[1] । तत्र प्रथम-दशमैकादशद्वादशीनां पर्शुकानामेकैकेन कशेरुपिण्डस्थालकेन सन्धानम्, अन्यासान्तु कशेरुद्वयपिण्डस्थाभ्यां स्थालकार्द्धाभ्याम् । सन्धायिन्यश्चात्र स्नायवस्त्रिविधाः । तद्यथा—

(क) पुरस्त्याः त्रिशूलकाराः[२], तासामेकैका ऊर्ध्वाधरीययोः कशेरुपिण्डयोस्तदन्तरालस्थे तरुणास्थिचक्रे च संसक्ता ।

(ख) कोषाकाराः[३] पर्शुकामुण्डवेष्टनभूताः स्थालकपरिधिमभितः संसक्ताः श्लेष्मधरकलासहिताः ।

(ग) सन्ध्यन्तरीयाः[४] ह्रस्वरज्जुप्रायाः पर्शुकामुण्डेष्वे संयुक्ताः ।

२। पर्शुकार्बुदानां कशेरुकावाहुप्रवर्द्धनैः[५] सन्धयस्तु युक्तप्रतराख्याः । तत्र सन्धायिन्यः स्नायवश्चतुर्विधाः । तद्यथा—

(क) पर्शुकावाहुका अग्रिमाः[६] । ताः पर्शुकाग्रीवाणां कशेरुवाहुप्रवर्द्धनैः संयोजन्यः । ताश्च निर्भिद्य पर्शुकानुगानां सिरा-धमनी-नाड़ीनामुरःपरिसारन्तः प्रसरः ।

(ख) पर्शुकावाहुका मध्यमाः[७] । ताः पर्शुकाकोणानां कशेरुवाहुप्रवर्द्धनाग्रैः संयोजन्यः ।

(ग) पर्शुकावाहुकाः पश्चिमाः[८] । ताः कशेरुवाहुप्रवर्द्धनाग्रतः पर्शुकार्बुदं यावत् संसक्ताः ।

(घ) अर्बुदकोषिकाः[९] । ताः पर्शुकावुदानां कशेरुवाहुप्रवर्द्धनस्थैः स्थालकैः सन्धानकारिण्यः समन्ताद्वेष्टनभूताः श्लेष्मधरकलासहिताः ।

---

१ Costo-vertebral Articulations. २ Anterior Costo-vertebral or Stellate Lig. ३ Capsular Lig. ४ Inter-articular Lig, ५ Costo-transverse Articulations. ६ Anterior Costo-transverse Lig. ७ Middle ( Do ). ८ Posterior ( Do ) ९ Capsular ( Do ).

## ५७ चित्रम्—पर्शुकापृष्ठसन्धयः ।




[ † एतच्चिह्नं स्नायुबोधकम् ]

## अथ पर्शुका-पूर्वसन्धयः ।

पर्शुकापूर्वसन्धयः[१] उरःपर्शुकासन्धयो वा नाम पर्शुकोपपर्शुकोरःफलकानां सन्धयः ( ५८ चित्रम् )। ते चतुर्विधाः, तद्यथा—

(१) पर्शुकानामुपपर्शुकाभिः,

(२) उपपर्शुकानामुरःफलकेनोभयतः,

(३) उपपर्शुकानां परस्परम्,

(४) उरःफलक-खण्डानां परस्परञ्चेति। तत्र--

(१) द्वादशसंख्यानां पर्शुकानां तत्संख्याभिरुपपर्शुकाभिः सन्धानानि स्थिराणि, पर्शुकाग्रस्थालकेषु उपपर्शुकामूलानां दृढ़सन्धानात्। तत्रास्थिधराख्यकलानुवृत्तिमात्रेण संयोगः।

(२) उपपर्शुकानामुरःफलकेन सन्धयस्तु सप्तसंख्या एकैकतः, प्रथमादीनां सप्तानामेव उपपर्शुकानामुरःफलकेन सन्धानात्। ते च सन्धयो युक्तप्रतराः अन्यत्र प्रथमोपपर्शुकासन्धेः, स हि सर्वथा निश्चल एव। एवञ्च प्रथमसन्धिवर्जमपरेषु षट्सु दृश्यन्ते तत्संख्यानि श्लेष्मधरकलापुटकानि।

स्नायवः पुनरेकैकं सन्धिं परितो दृश्यन्ते चतस्रः उपपर्शुकोरःसन्धायिन्यः, क्रमात्—अग्रिमा, पश्चिमा, कोशाकारा, सन्ध्यन्तरीया चेति स्वनामव्याख्याताः।

---

१ Articulations of the Cartilages of the ribs with the Sternum etc.

# ५८ चित्रम्—पर्शुकोरःसन्धयः ।




* उरःफलकान्तराला स्नायुः । उपपर्शुकान्तरालानि स्नायुसूत्राणि

(३) उपपर्शुकानां परस्परसन्धयस्तु सम्पद्यन्ते कतिचित्स्नायुसूत्रैरुपपर्शुकान्तरालाख्यैः। ते च दृश्याः पञ्चम्यादिदशम्यन्तासु उपपर्शुकास्वग्रतः। तत्र पञ्चमी उपपर्शुका संयुज्यते षष्ठ्या स्तोकमात्रेण, षष्ठ्याद्यास्तु दशम्यन्ताः दृढसम्बद्धाः परस्परम् प्रायेण सव्यवधानम्। श्लेष्मधरकलासहिताः चलप्रतराश्च ते केषुचित् सन्धिस्थानेषु।

एकादशी द्वादशी चेति द्वे पर्शुके अग्रतः उपपर्शुकासंहिते अपि न केनापि सम्बद्धे पुरस्तात्। अतएव तयोः विमुक्ताग्रसंज्ञेति प्रागवोचाम।

(४) उरःफलकान्तरीयसन्धयस्तु ग्रैवेयक-मध्यफलकाऽग्रपत्राख्यानां खण्डानां परस्परं दृढसन्धानात् सम्पन्नाः। तत्र स्नायवश्चतस्रः, यथा—पुरस्त्या उरःफलकसंयोजनी साधारणी, पश्चिमा उरःफलकसंयोजनी साधारणी चेति द्वे पूर्वापरे, एका उरःफलकान्तराला ग्रैवेयक-मध्यफलकयोरन्तरालस्था तरुणास्थिप्राया, अपरा अग्रपत्रसंयोजनी चेति।

## अथ अक्षकोरःसन्धानम्।

**अक्षकोरःसन्धानं**[1] तु (५८ चित्रम्) अक्षकास्थ्नः उरःफलकेन सन्धानमेकैकतः। तत् स्नायुकोषप्रतिबद्धं श्लेष्मधरकलासहितञ्च। तद्दृढीकरणाय चात्र स्नायुः प्रथमपर्शुकया तत्संयोजनी, अक्षकयोरन्तरालस्था चापरा परस्परसंयोजनी।

**अक्षकांससन्धानं** तु अंससन्धिवर्णने व्याख्येयम्।

## अथ श्रोणिचक्रसन्धयः।

श्रोणिचक्रसन्धयस्तावद् द्विधा वर्ण्यन्ते—श्रोणिचक्रास्थ्नां पृष्ठवंशेन, परस्परञ्च सन्धानात्। तत्र—

**श्रोणिचक्रस्य पृष्ठवंशेन सन्धिः** दृढप्रतराख्यः (५९ चित्रम्)। स च सम्पद्यते पञ्चम्या कटिकशेरुकया त्रिकास्थ्नः सन्धिमाश्रित्य। तयोः सन्धायिन्यः स्नायवः पृष्ठवंशस्नायुवत्, तासु काश्चित् तदनुबन्धिन्यः[2]। द्वे द्वे चात्राधिके स्नायू एकैकतः—कटिजघनिका, कटित्रिकान्तिका च नाम। तयोः—

---

१ Sterno-clavicular Articulation. २ यथा हि पृष्ठवंशसन्धिवर्णने वर्णिताः पञ्चविधाः स्नायवः तद्वदिहापि। काश्चित्त साधारणाख्यानां पृष्ठवंशस्नायूनामनुबन्धिन्य इति विशेषः।

कटिजघनिका[1] रज्जुगुच्छरूपा स्नायुश्चतुर्थ्याः पञ्चम्याश्च कटिकशेरुकायाः बाहुप्रबर्द्धनतो जघनधारान्तं सङ्गता। सा कटिनाड़ीप्रवेशाय मध्ये विवरान्विता।

कटित्रिकान्तिका[2] दृढ़त्रिकोणपट्टिकाप्राया स्नायुः पञ्चम्या कटिकशेरुकया त्रिकास्थ्नः, श्रोणिफलकस्य च त्रिकस्थालकपरिधिना संयोजनी।

**श्रोणिचक्रास्थ्नां परस्परसन्धयः** पुनश्चतुर्विधाभिः सम्पद्यन्ते स्नायुभिः (५६ चित्रम्)।

(१) त्रिकास्थ्नो जघनकपालाभ्याम्, (२) त्रिकास्थ्नः कुकुन्दरास्थ्ना एकैकतः, (३) त्रिकानुत्रिकयोः, (४) भगास्थ्नोश्च परस्परमिति चतुर्द्धा सन्धानात्। तत्र—

(१) त्रिक-जघन-सन्धानं[3] दृढ़प्रतराख्यम् त्रिकमुभयतो जघनकपालयोः सन्धानात्। तत्र हि सन्धीयते त्रिकास्थि पार्श्वमेकैकतो जघनकपालस्य त्रिकस्थालकेन तरुणास्थिपत्रकावृतेन, न च तत्र प्रायो दृश्यते श्लेष्मधरा कलेति विशेषः। गर्भिण्यास्तु त्रिकस्थालकयोः सम्भवतः श्लेष्मधरौ कलापुटकौ, गर्भाभिवृद्ध्या श्रोणिफलकयोरीषच्चलीभूतत्वात्। स्नायवश्चात्र त्रिकजघन-संयोजन्यश्चतस्रः दृढ़पट्टिकाकाराः—द्वे द्वे एकैकतः क्रमाद्– अग्रिमा पश्चिमा चेति त्रिकजघनिकाख्ये।

(२) त्रिक-कुकुन्दरास्थिसंयोजन्यश्च[4] स्नायवश्चतस्र एव,– द्वे द्वे एकैकतः क्रमात् लघ्वी गुर्वी च नामतः। ताभ्याञ्च यथादेशसंयुक्ताभ्यां परिणम्यते द्वारद्वय-मेकैकतः क्रमात्—गृध्रसीद्वारं कुकुन्दरद्वारञ्च। तत्र गृध्रसीविवरेण गृध्रस्याख्य-नाड्याः तदनुवर्त्तिनीनां सिराधमन्यादीनां शुण्डिकाख्यपेश्याश्च निर्गमः। कुकुन्द-द्वारेण पुनरन्तःस्थायाः श्रोणिगवाक्षिण्याः पेश्याः, तदनुचरीणां सिराधमनी-नाड़ीनाञ्च वस्तिगुहायां प्रवेशः। तत्र—

लघ्वी त्रिककुकुन्दरसंयोजनी[5] स्नायुः पुरःस्था तन्वी त्रिकोणप्राया च। सेयं त्रिकानुत्रिकयोः पार्श्वधारातः कुकुन्दरकण्टकान्तं सङ्गता।

गुर्वी त्रिककुकुन्दरसंयोजनी[6] स्नायुः पश्चिमस्था स्थूला त्रिकोणप्राया च। सेयं मूलतः सम्बध्यते जघनकपालस्य पश्चिमाधःकूटेन त्रिकास्थ्नोऽधरार्द्ध-पार्श्वेनाऽनुत्रिकास्थ्ना च, अग्रतस्तु कुकुन्दरपिण्डेन श्रोणिगवाक्षपुरःपरिधिना च।

१ Ilio-lumber Ligament. २ Lumbo-Sacral Ligament. ३ Sacro-iliac Articulation. ४ Sacro-ischiatic Ligament. ५ Lesser Sacro-Sciatic Ligament. ६ Great Sacro-Sciatic Ligament.

(३) त्रिकानुत्रिकसन्धायिन्यश्च[१] स्नायवश्चतस्रः क्षुद्राः—अग्रिमा, पश्चिमा पार्श्वगे द्वे चेति। सन्ध्यन्तराले चात्र दृश्यं तरुणास्थिचक्रम्।

## ५६ चित्रम्—श्रोणिचक्रसन्धयः।




[† एतच्चिह्नं स्नायुबोधकम्। १, २, कटिनाड़ीनिर्गमाय विवरद्वयम्। ४क।५क—४थ।५म कटिकशेरुकाद्वयम्। अत्र वामार्द्धे या याः स्नायवो यथा दर्शिताः, दक्षिणार्द्धेऽपि तास्तथैव ज्ञेयाः]

अनुत्रिकञ्च क्षुद्रकशेरुकाचतुष्टयसङ्घातमयमित्युक्तपूर्वम्। तत्कशेरुखण्डानाञ्चात्र पार्थक्यं दृश्यते नारीषु प्रायः प्रसवकाले श्रोणिद्वारस्य विकसनसौकर्यार्थम्।

(४) भगास्थ्नोः परस्परसन्धानं[२] तावत् स्वमुण्डाभ्यां मध्यरेखायाम्। संहितयोश्च तयोः भगास्थिसंज्ञेति प्राञ्चः, तत्र क्वचिद् भगपीठं लिङ्गपीठमिति वा संज्ञा। सन्धानञ्चेदं दृढ़प्रतरमपि गर्भिण्याः किञ्चिद्विकसनक्षममिति परीक्षकाः।

---

१ Sacro-coccygeal Ligaments. २ Symphysis Pubes.

सन्धायिन्यश्चात्र स्नायवश्चतस्रः, ताः भगास्थिसंयोजन्यो नाम क्रमात्—उत्तरा, अधरा, अग्रिमा, पश्चिमा चेति। सन्धानान्तराले चात्र तरुणास्थिचक्रम्, सर्वथा श्लेष्मधरकलाभावश्च।

**अंसचक्रसन्धयः** पुनरंससन्धिवर्णने वर्णनीयाः।

## अथ शाखासन्धयः।

शाखाश्चतस्रः—द्वौ बाहु ऊर्ध्वशाखे नाम, द्वे च सक्थिनी—अधःशाखे नाम। तत्र प्रतिबाहु सप्तसु देशेषु सन्निविष्टाः सन्धयः। तद्यथा—अंसे, कूर्परे, प्रकोष्ठान्तराले, मणिबन्धे, करकूर्चान्तः, करतले, कराङ्गुलिषु चेति। प्रतिसक्थि च तथैव क्रमात्—वंक्षणे, जानुनि, जङ्घान्तराले, पादसन्धौ, पादकूर्चान्तः, पादतले, पादाङ्गुलिषु चेति।

## अथ ऊर्ध्वशाखासन्धयः।

### तत्र अंससन्धयः।

**अंससन्धयः** खलु सम्पद्यन्ते अक्षकांसफलक-प्रगण्डास्थ्नां सन्धानात्। तत्र अक्षकांसयोः सन्धानम् अंसचक्रसन्धानं नाम। प्रगण्डांसफलकयोः सन्धानम् अंसोदूखलसन्धानं, कक्षासन्धानं वा नाम। बहवश्चानयोः सन्धानयोः संयोजन्यः स्नायवः। द्वे चापरे अंसकान्तरीये नाम अंसफलकावयवानां परस्पर-संयोजन्यौ। विशेषतस्तु—

**अंसचक्रसन्धानम्**[१] नाम अक्षकास्थिबहिःप्रान्तस्य अंसकूटाग्रेन सन्धिः (६० चित्रम्)। स चलप्रतराख्यः, क्वचित् सन्ध्यन्तःस्थितेन तरुणास्थि-चक्रेणोपलक्षितश्च। तत्सम्बन्धन्यश्च स्नायवश्चतस्रः—द्वे अंसाक्षकबन्धन्यौ,—उत्तरा अधरा[२] चेति, द्वे च तुण्डाक्षकबन्धन्यौ,—त्रिकोणिका, चतुरस्रिका[३] चेति। तासामाद्ये अंसचक्रसन्धायिन्यौ क्रमादूर्ध्वाधःस्थे, अन्त्ये अंसतुण्ड-पश्चार्द्धात् अक्षकास्थिबहिःप्रान्तस्य उर्ध्वाधस्तलं यावत् सन्नद्धे स्वनामव्याख्याते।

अंसफलकान्तरीये[४] तु स्नायू क्रमात् तुण्डमूलिका[५] तुण्डकूटिका[६] च नाम। तत्राद्या अंसतुण्डस्य मूले अंसशिरःकोटरोपरि संलग्ना विवरीकरोति कोटरम्, अन्त्या तु अंसतुण्डबाह्यार्द्धात् अंसकूटाग्रं यावत् सन्नद्धा।

---

१ Acromio-Clavicular Articulation. २ Superior and Inferior Acromic-clavicular Ligaments. ३ Coraco-clavicular Ligaments (Conoid and Trapezoid). ४ Ligaments of the Scapula. ५ Transverse. ६ Coraco-acromial.

## ६० चित्रम्—अंससन्धयः ।




[ † एतच्चिह्नं स्नायुबोधकम् ]

**अंसोदूखलसन्धानं कक्षासन्धानं**[१] वा नाम प्रगण्डास्थ्नो मुण्डस्योदूखलाकारे अंसपीठस्थे स्थालके सन्धानात् निष्पन्नम् (६० चित्रम्)। स्थालकञ्च तत्र परिधिसम्बद्धेन तरुणास्थिभूयिष्ठेन स्नायुचक्रेण[२] सम्पद्यते गभीरम्। अस्थिसम्बन्धन्यौ चात्र स्नायू द्वे एव—अंसोदूखलिकः स्नायुकोषः, तुण्डप्रगण्डिका चेति। तयोः—

अंसोदूखलिको नाम दीर्घशिथिलः स्नायुकोषः[३]—ऊर्ध्वमंसोदूखलमभितः, अधस्तात् प्रगण्डास्थ्नो ग्रीवां च परिष्वज्य सम्बद्धः। तत्र च त्रीणि विवराणि संध्यन्तरीयायाः श्लेष्मधरकलायाः तिसृणां शाखानां कण्डरानुगानां निर्गमाय। कण्डराश्च ताः—अंसान्तरिका[४], अधरा अंसपृष्ठिका[५] चेति पेश्योः प्रान्तभूते द्वे, द्विशिरस्काख्य पेश्या दीर्घशिखा[६] चेति। तासां चरमा सन्ध्यन्तःप्रविष्टा।

---

१ उदूखलाख्यः सन्धिः कक्षावङ्क्षणयोरिति व्याख्यातपूर्वम्। अंससन्धिश्च भूम्ना कक्षासन्धिरेव (Shoulder-Joint). २ Glenoid Ligament. ३ Capsular Ligament of Shoulder. ४ Sub-Scapularis. ५ Infraspinatus. ६ Long Tendon of Biceps.

तुण्डप्रगण्डिका[१] नाम स्नायुरंसतुण्डात् प्रगण्डास्थ्नो महापिण्डकान्तमागता स्नायुकोषैकदेशेन प्रतिबद्धा।

परितश्च कक्षासन्धानं सन्निविष्टा इमाः पेश्यः—ऊर्ध्वम् अंसपृष्ठिका उत्तरा। अधस्तात् त्रिशिरस्काया दीर्घशिखा। अन्तःपार्श्वे अंसान्तरिका। बहिःपार्श्वे अंसपृष्ठिका अधरा, अंसाधरिका लघ्वी च। स्नायुकोषाभ्यन्तरे द्विशिरस्काया दीर्घशिखा। समग्रमंससन्धिमंसचक्रञ्च सञ्छाद्य दृश्या अंसच्छदा।

**चेष्टाः** पुनरमुं सन्धिमाश्रित्य प्रवर्त्तन्ते नानाविधाः पुरः-पश्चादन्तर्बहिः-कर्षणाद्याः। विवर्त्तते चात्र सन्ध्यन्तः प्रगण्डास्थिमुण्डं यथेष्टमिति चेष्टावतां सन्धीनां प्रधानमाचक्षते कक्षासन्धिं सन्धिविदः।

## अथ कूर्परसन्धिः।

**कूर्परसन्धिः**[२] **कफोणिसन्धिर्वा** नाम प्रगण्डास्थ्नः प्रकोष्ठास्थिभ्यां सन्धानं सामान्यतः (६१ चित्रम्)। स च सन्दंशकोराख्यः, अन्तप्रकोष्ठास्थ्नः सन्दंशाकारकूटद्वयस्य मध्ये प्रगण्डास्थ्नो डमरुकभागस्य सन्धानात्। सन्धीयते च तत्रैव बहिःप्रकोष्ठास्थ्नः कोरमध्यं मुण्डं प्रगण्डास्थ्नः कन्दलीभागेन। बहिः-प्रकोष्ठास्थिनी चात्र परस्परसंहिते कूर्परसन्ध्यन्तः प्रविष्टे।

### ६१ चित्रम्—कूर्परसन्धिः (आन्तरतलम्)।




[† एतच्चिह्नं स्नायुबोधकम्।]

१ Coraco-humeral Ligament. २ Elbow-Joint.

चतस्रश्च कूर्परसन्धिबन्धन्य स्नायवः—अग्रिमा, पश्चिमा, बहिःपार्श्विका, अन्तःपार्श्विका चेति । प्रकोष्ठास्थ्नोरूर्ध्वप्रान्तसन्धायिनी तु स्नायुर्मुण्डवेष्टनिका नामाग्रे वक्ष्यते । अग्रिमादि स्नायुत्रयस्य परस्परसम्बन्धस्तु घनिष्ठः । तत्र—

अग्रिमा कूर्परसन्धिबन्धनी प्रगण्डास्थ्नः आन्तरार्बुदात् पुरस्तलाच्च सम्भूय अन्तःप्रकोष्ठास्थ्नश्चञ्चुप्रवर्द्धनपरिधौ सङ्गता मुण्डवेष्टनिकाख्यस्नायुसम्बद्धा च ।

पश्चिमा कूर्परसन्धिबन्धनी प्रगण्डास्थ्नः कूर्परखातोपकण्ठात् सम्भूय अन्तःप्रकोष्ठास्थ्नः कूर्परकूटपरिधौ संसक्ता ।

बहिःपार्श्विका प्रगण्डास्थ्नो बाह्यार्बुदात् सम्भूय मुण्डवेष्टनिकाख्यस्नायौ सम्बद्धा ।

अन्तःपार्श्विका प्रगण्डास्थ्नः आन्तरार्बुदात् सम्भूय अन्तःप्रकोष्ठास्थ्नः कूटद्वयान्तःपरिधौ संसक्ता ।

सर्वासाञ्चासां स्नायूनां परस्परसंयुक्तानां संसक्तभावात् स्नायुकोषवदवस्थितिः, अन्यत्र कूर्परकूटपृष्ठात् । तद्धि त्वङ्मात्रावरणमिति प्रागवोचाम ।

**चेष्टाः**—पुनरिह कूर्परसन्धौ संकोचः, प्रसारः, अन्तर्विवर्त्तनं, बहिर्विवर्त्तनञ्चेति चतुर्विधाः, तासां प्रसारस्तावद्बाहोर्दण्डीभावमात्रपर्यवसायीति[1] विशेषः ।

**श्लेष्मधरा** चात्र कला सन्ध्यन्तरीया प्रकोष्ठास्थ्नोरूर्ध्वसन्धानान्तःप्रसृतया शाखया सह लक्षणीया ।

## अथ प्रकोष्ठान्तरीयसन्धयः ।

**प्रकोष्ठास्थ्नोः परस्परसन्धानं**[2] तावदल्पचेष्टम् ऊर्ध्वाधःप्रान्तयोः कोरं, मध्ये प्रतराख्यञ्च । तद्धि त्रिषु देशेषु द्रष्टव्यम्—ऊर्ध्वमधो मध्ये चेति । तत्र **ऊर्ध्वसन्धाने** सन्धीयते बहिःप्रकोष्ठास्थ्नो मुण्डमन्तःप्रकोष्ठास्थ्नश्चक्रनेमिखातेन, तत्संवेष्टनी चात्र स्नायुः मुण्डवेष्टनिका नाम बहिःप्रकोष्ठमुण्डस्य विवर्त्तनप्रदा । अपरा चात्रैवाऽधस्तात् तिरश्चीना स्नायुः प्रकोष्ठतिरश्चीना नाम । **अधःसन्धाने** तु सन्धीयते अन्तःप्रकोष्ठास्थ्नो मणिमुण्डं बहिःप्रकोष्ठास्थ्नोऽधःप्रान्तपार्श्वतः । बन्धनञ्चानयोः प्रकोष्ठाधरीयाख्यपूर्वापरस्नायुद्वयेन त्रिकोणतरूणास्थ्ना च मणिबन्धसन्धिं प्रविष्टेन । **मध्यसन्धानं** पुनः प्रकोष्ठास्थिनलकयोसदूरवर्त्तिनोः मध्यस्थया प्रकोष्ठान्तरालाख्यया दृढ़कलया, नत्वत्र तयोः साक्षात् परस्परस्पर्शः ।

---

१ प्रसारितो हि बाहुर्दण्डवद्भवति, न त्वसौ ततःपरमवनम्यते धनुवत् । २ Radio-ulnar Articulations.

## अथ मणिबन्धसन्धिः ।

मणिबन्धसन्धिस्तावत्[१] खल्लकोराख्यः, वहिःप्रकोष्ठास्थ्नोऽधःप्रान्तस्थे ईषत्खल्लकोरभागे अर्द्धचन्द्र-नौनिभाख्योः कूर्चास्थ्नोर्नातिगभीरसन्धानात् ( ६२ चित्रम् )। अन्तःप्रकोष्ठाधःप्रान्तश्च नात्र सन्धीयते साक्षात्, तत्संहितत्रिकोण-तरुणास्थि व्यवधानेन उपलकाख्यकूर्चास्थ्नस्तत्र सन्धानात्[२] ।

### ६२ चित्रम्—मणिबन्धसन्धिः ( पुरस्तलम् ) ।




[ † एतच्चिह्नं स्नायुबोधकम् ]

---

१ Wrist-Joint. २ एवञ्च अर्द्धचन्द्र-नौनिभोपलकाख्यस्य कूर्चास्थित्रयस्य मणिबन्धसन्धौ प्रवेशः ।

मणिबन्धबन्धन्यस्त्विह स्नायवः पञ्च। चतस्रो रज्ज्वाकाराः—बहिःपार्श्विका, अन्तःपार्श्विका, अग्रिमा, पश्चिमा चेति। पञ्चमी कोषाकारा। तत्र (६२ चित्रम्)—

बहिःपार्श्विका बहिःप्रकोष्ठास्थ्नो बहिर्मणिकाख्यप्रवर्द्धनात् सम्भूय नौनिभाख्यकूर्चास्थ्नः, कङ्कणिकाख्यस्नाय्योश्च[1] पार्श्वतः सङ्गता।

अन्तःपार्श्विका अन्तःप्रकोष्ठास्थ्नः अन्तर्मणिकाख्यप्रवर्द्धनात् सम्भूय उपलक-वर्त्तुलकाख्ययोः कूर्चास्थ्नोः कङ्कणिकाख्यस्नाय्योश्च पार्श्वतः सङ्गता।

अग्रिमा तु प्रततपट्टिकाकारा प्रकोष्ठास्थ्नोरधःप्रान्तयोः पुरस्तलात् सम्भूय नौनिभार्द्धचन्द्रोपलकाख्यानां पुरस्तले सम्बद्धा।

पश्चिमा च तादृश्येव। सा केवलं बहिःप्रकोष्ठाधःप्रान्तस्य पश्चिमतलात् सम्भूय पूर्वोक्तकूर्चास्थित्रयस्य पृष्ठतः सम्बद्धा।

या तु पञ्चमी कोषाकारा स्नायुरुक्ता, सा सर्वसन्धिच्छादनी, तां दृढ़ीकरोति रज्ज्वाकाराः स्नायवः पूर्वोक्ताः।

**श्लेष्मधरा कला** च मणिबन्धसन्धौ विशेषतः शिथिला पुष्कलश्लेष्मवती च। अतएव मणिबन्धसन्धेः शैथिल्यम्।

**चेष्टाः** पुनरत्र सन्धौ प्रवर्त्तन्ते नानाविधाः पुरःपश्चादन्तर्बहिर्विवर्त्तनरूपाः। सन्धेश्चास्य शैथिल्यं स्थितिस्थापकता च भारधारणसौकर्याय।

## अथ करकूर्चान्तरीयसन्धयः[2]।

करकूर्चास्थीन्यष्टौ श्रेणीद्वयविन्यस्तानि,—एकैकस्यां श्रेण्यां चत्वारि चत्वारीति। तत्रोर्ध्वश्रेणीस्थानां चतुर्णां मध्ये नौनिभार्द्धचन्द्रोपलकाख्यानि त्रीणि मणिबन्धसन्धौ प्रविष्टानि, वर्त्तुलकाख्यन्तु बहिःसन्धितः, तद्धि कण्डरान्तरीयं चणकास्थीति केचिदित्युक्तपूर्वम्।

अथैषां कूर्चास्थ्नां परस्परसन्धानं तावत् प्रतराख्यम्, त्रेधा व्याख्येयश्च—ऊर्ध्वश्रेणीस्थानां परस्परम्, अधःश्रेणीस्थानां परस्परम्, ऊर्ध्वाधःश्रेण्योश्च परस्परमिति। तत्र—

**ऊर्ध्वश्रेण्यां** नौनिभार्द्धचन्द्रोपलकानां परस्परसम्बन्धन्यः स्नायवश्चतस्रः—

---

[1] कङ्कणिका नाम काण्डराधारिणी स्नायुः पेशीखण्डे वर्णनीया। [2] Carpal Articulations.

पुरोगा, पृष्ठगा, कूर्चान्तरीये द्वे चेति। वर्त्तुलकस्य तु बन्धनाय पृथगेव स्नायु-कोषः, द्वे च तत्पुरोगे स्नायू अंकुशक-कनिष्ठामूलशलाकयोर्मूलतः संसक्ते।

**अधःश्रेण्यां** पुनः कूर्चास्थिचतुष्टयं पञ्चभिः स्नायुभिः परस्परसम्बद्धम्—द्वाभ्यां पूर्वापराभ्यां, तिसृभिश्च कूर्चान्तरीयाभिरिति।

**ऊर्ध्वाधःश्रेण्योश्च** परस्परसन्धायिन्यश्चतस्रः स्नायवः—अग्रिमा, पश्चिमा, अन्तःपार्श्विका, बहिःपार्श्विका चेति।

सर्वासाञ्चासां परस्परानुप्रवेशात् स्नायुजालगवाक्षितः संहतस्वरूप इव च दृश्यते कूर्चास्थिसमुदायः। एवञ्च प्रतिकरमेकैकं शलाकाधिष्ठानमिति प्रचीना संज्ञा।

## अथ करतलसन्धयः।

**करतलसन्धयस्तावत्** प्रधानतः करतलनिर्मापिकाणां मूलशलाकानां सन्धयः कोराख्याः। सन्धानञ्च तासां त्रेधा द्रष्टव्यम्—ऊर्ध्वं पर्याणक-कूटक-मध्यकूट-फणधर-संज्ञैश्चतुर्भिः कूर्चास्थिभिः[१], अधस्ताद् अंगुलीपश्चिमनलकैः[२], मूलतः परस्परञ्चेति[३]। तत्सन्धानप्रकारास्तु अस्थिखण्डे वर्णितपूर्वाः।

अथेमाः करतले सन्धिबन्धन्यः स्नायवः—

एका पर्याणकांगुष्ठमूलशलाकयोर्मूलतः पृथक् श्लेष्मधरकलावती-कोषरूपा (सन्धिश्चायं परस्परकोर इति वर्णितपूर्वम्)। अन्याः अपरासां मूलशलाकानां तत्तत्कूर्चास्थिभिर्बन्धनाय—षट् पृष्ठगाः, अष्टौ पुरोगाः, द्वे च सन्ध्यन्तरीये—इति षोड़श[४] स्नायवः।

एकैव चात्र श्लेष्मधरा कला कनिष्ठादिमूलशलाकाचतुष्टयस्य मूलतः, सा कूर्चास्थ्नामन्तरालेषु शाखाभिः प्रविष्टा अन्यत्र वर्त्तुलकसन्धेः। तत्र तु पृथगेव श्लेष्मधरं कलापुटकम्।

अंगुलिपश्चिमनलकानां सन्धयस्तु अंगुलिसन्धिवत्।

मूलशलाकानां परस्परसन्धयः पुनरंगुष्ठवर्जमपरासामेव मूलतः[५]। तत्र

१ Carpo-Metacarpal Articulations. २ Metacarpo-phalangeal Articulations. ३ Inter-Metacarpal Articulations. ४ विस्तरस्त्वासां मृतके द्रष्टव्यः। ५ सन्धिप्रकारस्मरणार्थं श्लोकास्तु अस्थिखण्डे २० पृष्ठान्ते द्रष्टव्याः। ते च "सन्धीयन्ते करे मूलशलाका"—इति पाठपरिवृत्त्या पठनीयाः करविषये।

त्रिविधाः सन्धायिन्यः स्नायवः—पूर्वगाः, पृष्ठगाः, शलाकान्तरीयाश्चेति । तत्र मूल-शलाकानामन्तरालस्थाः दृढ़स्नायवः 'शलाकान्तरीया' नाम । शलाकानां परस्पर-स्पर्शाभावेऽपि ताभिः परस्परसम्बद्धानि मूलशलाकाग्राणि ।

## अथ करांगुलिसन्धयः ।

**करांगुलिसन्धयस्तु**[1] अंगुलिनलकानां चतुर्दशानां चतुर्दश—एकैकस्यामंगुल्यां त्रयस्त्रयः, द्वावंगुष्ठे चेति । ते च कोराख्याः ।

एकैकस्मिंश्च अंगुलिसन्धौ लघुस्नायवस्तिस्र एव—पुरोगा, अन्तःपार्श्विका, बहिःपार्श्विका चेति । पृष्ठगा तु स्नायुरत्र पृथग् न दृश्यते, करप्रसारण्याख्यपेशीनां कण्डराभिरेव तत्प्रयोजनसाधनात् ।

**चेष्टाः** पुनः करांगुलीनां सङ्कोच-प्रसाराऽन्तःकर्षण-बहिःकर्षणरूपाः, जपनं[2] चांगुष्ठस्य । तत्तत्प्रवर्त्तन्यः पेश्यस्तु अग्रे वर्णनीयाः ।

## अथ अधःशाखासन्धयः ।

अधःशाखासन्धयस्तावत् प्रायेणोर्ध्वशाखासन्धिवदेव, विशेषास्तु तत्र अव-स्थानभेदकृताः । तत्रादौ—

### वंक्षणसन्धिः ।

**वंक्षणसन्धिः**[3] नाम ( ६३ चित्रम् ) श्रोणिफलकस्थस्य वंक्षणोदूखलस्य तरुणास्थिवलयवेष्टितस्य ऊर्वस्थिमुण्डेन सन्धानमुदूखलाख्यम् । तत्र च महती श्लेष्मधरा कला सन्धिच्छादनस्य महास्नायुकोषस्य अन्तर्व्यापिनी । सन्धिप्रबन्धन-श्चात्र एक एव महान् स्नायुकोषः प्रधानभूतः—स च वंक्षणोदूखलपरिधेः सम्भूय ऊर्वस्थिग्रीवामभितः शिखरान्तरालाख्ययोश्च रेखयोः सम्बद्धः । स्नायुकोषश्चायं तिसृभिर्दृढस्नायुरज्जुभिः श्रोणिफलकावयवभूतादस्थित्रितयात् समुद्गताभि-र्दृढीकृतः—इत्यत्र विशेषः । चेष्टावांश्च सुदृढश्चायं सन्धिर्दृढपेशीभिः समन्तात् सुरक्षितः[4] ।

---

१ Phalangeal Articulations. २ जपनं जपकर्मणि व्यापृतस्यांगुष्ठस्य चेष्टाविशेषः, स च कराङ्गुष्ठस्यैव सम्भवति । ३ Hip-Joint. ४. अतएवात्र यदा सन्धिच्युतिर्भवति तदासौ महता बलेन सुनिपुणचिकित्सया च साध्यते ।

## ६३ चित्रम्—वंक्षणसन्धिः।

( स्नायुकोषच्छेदेन सन्धेरभ्यन्तरं दर्शितम् )




( ❀ एक एव स्नायुकोषोऽयं वंक्षणसन्धिच्छादनः )

महास्नायुकोषान्तश्चात्र द्रष्टव्या वंक्षणसन्ध्यन्तरीया[१] नाम दृढा स्नायुरज्जुः—सा वंक्षणोदूखलमध्यस्थाद् गभीरकोटरादुद्भूय ऊर्वस्थिमुण्डस्थे गर्त्ते सम्बद्धा वंक्षणसन्धेः शिथिलत्ववारणाय।

## अथ जानुसन्धिः।

**जानुसन्धिः**[२] नाम ऊरु-जानु-जङ्घास्थ्नां सन्धिर्बहुधासम्बद्धश्चेष्टावान् ( ६४ चित्रम् )। तत्र जानुकपालस्य ऊरुजङ्घास्थिभ्यां सन्धिः प्रतराख्यः, ऊरुजङ्घास्थ्नोः सन्धिः पुनः सुदृढः कोराख्यश्च। अनुजङ्घास्थ्नस्तु जानुसन्धौ न प्रवेशः, तत्सन्धानस्य तत्पार्श्वतः पृथगवस्थानात्।

---

१ Ligamentum Teres. २ Knee-Joint.

## ६४ चित्रम्—जानुसन्धिः

( ऊर्ध्वाधरच्छेदेन दर्शितः )




[ † एतच्चिह्नं स्नायुबोधकम् ]

तत्र ऊरुजानुजङ्घास्थ्नां त्रयाणामपि संवेष्टनः तनुरपि दृढप्रायः स्नायुकोषः एक एव । तद्दृढीकरणार्थं चतस्रः स्नायवस्तत्संसक्ताः सन्धिबाह्याः । तद्यथा—

( १ ) पुरोगा— जानुकपालबन्धनी[१] नाम, सेयं जानुकपालपरिधेः सम्भूता । तस्या अधरांशो जङ्घास्थ्नः ऊर्ध्वप्रान्तपुरस्तलस्थेऽर्बुदे सम्बद्धः, उत्तरांशः पुनरुर्ध्वगतया ऊरुप्रसारण्याख्यपेशीचतुष्टयस्य सम्मिलितकण्डरयामिलितः स्नायुकोषस्य पुरःप्रतिबद्धः ।

( २ ) पश्चिमगा— जानुपृष्ठिका नाम ऊर्वस्थ्नो महार्बुदद्वयस्य पृष्ठतो जङ्घास्थ्न ऊर्ध्वप्रान्तस्य पृष्ठतः सन्नद्धा कलाकलपाख्यपेश्याः कण्डरांतेन दृढ़संबद्धा ।

( ३ ) अन्तःपार्श्विका नाम—ऊर्वस्थ्न आन्तरमहार्बुदपार्श्वात् जङ्घास्थ्न आन्तरोत्सेधपार्श्वान्तं सन्नद्धा ।

( ४ ) बहिःपार्श्विका—नाम स्नायुरूर्वस्थ्नो बाह्यमहार्बुदपार्श्वादनुजङ्घास्थ्न ऊर्ध्वप्रान्ते संसक्ता । सा युग्मा—दीर्घ-ह्रस्व भेदात् ।

अपराश्चात्र दृश्यन्ते जानुसन्ध्यन्तः स्नायवः पञ्च, द्वे च तरुणास्थिनी अर्द्धचन्द्राकारे[२] योजकरज्जुसम्बद्धे । तत्र तरुणास्थिनी जङ्घास्थिशिरःस्थितेन द्विमुखेन कण्टकेन सम्बद्धप्रान्ते । स्नायुपञ्चकन्तु यथा—

## ६५ चित्रम्—जानुसन्धेरभ्यन्तरम्

( पूर्वापरच्छेदेन दर्शितः )




( † एतच्चिह्नं स्नायुबोधकम् )

१ Ligamentum Patellae. २ Semilunar Cartilages.

द्वे जानुस्वस्तिकाख्ये[१]—अग्रिमा पश्चिमा चेति स्नायू। ते जङ्घास्थि-शीर्षस्थद्विमुखकण्टकोपकण्ठात् समुत्थाय क्रमाद् ऊर्वस्थिवाह्यान्तःकन्दयोः स्वस्तिकवत् सम्बद्धे।

तिस्रश्च तत्र श्लेष्मधरकलाबन्धन्यः स्नायवः यथा—एका त्रिकोणाकारा पुरोगा, द्वे च पक्षतिप्राये पृष्ठतः अर्द्धचन्द्राकारतरुणास्थिप्रान्तेषु संसक्ते।

**श्लेष्मधरा कला** तु जानुसन्धौ द्विविधा—एका सन्ध्यन्तरीया महोर्ध्व-शाखावती विशाला च स्नायुत्रयनिबद्धा, द्वे च सन्धिवाह्ये कलापुटके इति। तत्र सन्धिवाह्यमेकं कलापुटकं त्वग्जानुकपालयोरन्तरालस्थम्, अपरं जानुकपालबन्धन्याः स्नायुरज्ज्वाः पश्चिमस्थं कण्डरानुगमिति। सन्ध्ययन्तश्चात्र द्रष्टव्यम् पुरस्तात् पृष्ठतश्च श्लेष्मधरकलाच्छन्नं मेदःपिण्डद्वयम्।

**चेष्टा** तु जानुसन्धौ द्विविधैव—सङ्कोचः प्रसारश्चेति। तत्र सङ्कोचः पुष्कलः, प्रसारस्तु दण्डीभावान्त इति विशेषः।

## अथ जङ्घान्तरीयसन्धयः।

**जङ्घानुजङ्घास्थ्नोः परस्परसन्धानं** तावत् त्रिषु प्रदेशेषु—ऊर्ध्वमधो मध्ये[२] चेति। तत्र **ऊर्ध्वसन्धाने** सन्धीयते अनुजङ्घास्थ्न ऊर्ध्वप्रान्तः जङ्घास्थ्न ऊर्ध्वप्रान्तस्थेन वाह्योत्सेधेन पश्चिमतः। सन्धिश्चायं प्रतराख्यः सर्वथा जानुसन्धिवहिर्भूतश्च—तदेतदस्य वैसादृश्यं कूर्परसन्धानात्। तत्र च स्नायुद्वयं (दीर्घं ह्रस्वञ्च) जानुसन्धेर्वहिःपार्श्विकाख्यम् ऊर्वस्थिसंसक्तं तत्सन्धिदार्ढ्यायेति विशेषः। तत्सन्धायिन्यश्चापराः स्नायवस्तिस्रः—अग्रिमा पश्चिमा कोषाकारा चेति। **अधःसन्धानं** तावत् कोराख्यं—तद्धि जङ्घास्थ्नः अधःप्रान्तवहिःसीमस्थे कोरत्रिकोणप्रदेशे सन्धीयते। अनुजङ्घास्थ्नोऽधःप्रान्तो वहिर्गुल्फनिष्पादकः; तत्र च सन्धायिन्यः स्नायवश्चतस्रः—अग्रिमा, पश्चिमा, वलयिका, सन्ध्यन्तरीया चेति। एवं संहिताभ्याञ्च जङ्घानुजङ्घास्थिभ्यां सन्धीयते कूर्चशिरः—सोऽयं गुल्फसन्धिः पादसन्धिर्वा अनुपदं व्याख्येयः। जङ्घानुजङ्घास्थ्नोरधःसन्धिबन्धन्यः स्नायवस्तु तिस्र एव—अग्रिमा, पश्चिमा, सन्ध्यन्तरीया चेति—स्वनामव्याख्याताः।

**मध्यसंधानं** तु जङ्घानुजङ्घास्थ्नोर्दृढकलयैव तदन्तरालस्थया; न त्वनयो-र्नलकयोः परस्परस्पर्शः।

---

१ Crucial Ligaments. २ Superior, Inferior and Middle Tibio-fibular Articulations.

## ६६ चित्रम्—जङ्घास्थिद्वयसन्धिः ।




( † एतच्चिह्नं स्नायुबोधकम् )

## अथ गुल्फसन्धिः ।

गुल्फसन्धिः[1] पादसन्धिर्वा नाम जङ्घानुजङ्घास्थ्नोरधःप्रान्तयोः कूर्चशिरसा सन्धिः खल्लकोराख्यः । तत्र हि जङ्घास्थिद्वयाधःप्रान्तस्थं खल्लवत्कोरं स्थालकमाश्रित्य विवर्त्तते समग्रः पादः पुरःपश्चादन्तर्बहिश्च कूर्चशिरोऽव्यवधानेन । अत एवास्य पादसन्धिरित्यपि संज्ञा ।

---

१ Ankle Joint.

गुल्फसन्धिसम्बन्धन्यः स्नायवस्तु चतस्रः ( ६६ चित्रम् ), तद्यथा—
अग्रिमा—जङ्घाधःप्रान्तस्य कूर्चशिरसश्च पुरःपरिधौ सम्बद्धा ।
पश्चिमा—प्रतनुगुच्छमयी तयोरेव पश्चिमपरिधौः सम्बद्धा ।

अन्तःपार्श्विका ( गुल्फत्रिकोणिका वा ) नाम । सेयं जङ्घाधःप्रान्तीयादन्तर्गुल्फाख्यभागात् सम्भूय नौनिभ-कूर्चशिरः-पार्ष्णि-संज्ञस्य कूर्चास्थित्रयस्य अन्तःसीम्नि सम्बद्धा ।

बहिःपार्श्विका—अनुजङ्घाधःप्रान्ताद् बहिर्गुल्फाख्यात् सम्भूय कूर्चशिरःपार्ष्णिसंज्ञयोः कूर्चास्थ्नोर्बहिःसीम्नि सन्नद्धा ।

## अथ पादकूर्चान्तरीयसन्धयः[1] ।

पादकूर्चास्थ्नां सन्धानप्रकारास्तावद् वर्णितपूर्वाः । तत्सन्धायिन्यः स्नायवः पुनर्बहवः ( ६६।६७ चित्रयोः ) । तासां परस्परानुप्रवेशात् स्नायुजालगवाक्षितो दृढसन्धानादेकीभूत इव च दृश्यते पादकूर्चास्थिसमुदायः करकूर्चास्थिसङ्घवत् । तथाच प्रतिपादमेकैकं कूर्चास्थिसङ्घं[2] शलाकाधिष्ठानं नामाहुः प्राञ्चः ।

तासाञ्च स्नायूनां मध्ये इमास्तावद् विशेषतो लक्षणीयाः—

( १ ) पार्ष्णि-कूर्चशिरसोः सन्धायिन्यस्तिस्रः स्नायवः—अन्तःपार्श्विका, बहिःपार्श्विका, पश्चिमा चेति ।

( २ ) घन-पार्ष्ण्योः सम्बन्धन्यश्चतस्रः । तद्यथा—द्वे पादतलिके—दीर्घा ह्रस्वा चेति, द्वे च पादपृष्ठिके इति । तत्र दीर्घा पादतलिका संसज्यते दीर्घायाः पादविवर्त्तन्याख्यपेश्याः कण्डरान्तेन ।

( ३ ) नौनिभ-पार्ष्ण्योः सन्धायिन्यौ द्वे—उत्तरा, अधरा चेति ।

---

१ Tarsal Articulations. २ Tarsus.

## ६७ चित्रम्—पादतलस्थाः स्नायवः ।




[ † एतच्चिह्नं स्नायुबोधकम् ]

**चित्रव्याख्या**—१ कूर्चशिरसस्तलस्था सीता दीर्घाङ्गुष्ठसङ्कोचन्याख्यपेश्याः कण्डरान्तधारणाय । २, २, दीर्घायाः पादविवर्तन्याख्यपेश्याः कण्डरान्तौ ।

(४) नौनिभ-कूर्चशिरसोः सम्बन्धन्यस्तिस्रः--पादतलगा, पादपृष्ठगा, सन्ध्यन्तरीया चेति ।

(५) कोणकाख्यानां त्रयाणां परस्परसम्बन्धन्यश्च तिस्रस्तथैव ।

(६) अन्तर्बहिःकोणकयोः सन्धायिन्यश्च तिस्रस्तथैवेति ।

## अथ पादतलसन्धयः।

पादतलस्य तावत् पश्चार्द्धमाश्रित्य स्थिताः सन्धयः कूर्चान्तरीयसन्धिवर्णने वर्णितपूर्वाः। तत्पूर्वार्द्धसन्धयस्तु पादमूलशलाकासन्धयो[1] नाम कोराख्याः। सन्धानञ्च तासां त्रेधा द्रष्टव्यम्—पुरस्तात् पादांगुलिपश्चिमनलकैः, पश्चात् कोणकत्रयेण घनाख्येन च कूर्चास्थ्ना, मूलपार्श्वतः परस्परञ्चेति (६७ चित्रम्)। तत्सन्धानप्रकारास्तु स्मारकपद्यैः वर्णितपूर्वाः[2]।

तत्र पुरस्तात् पादांगुलिपश्चिमनलकैः सन्धयः अंगुलिसन्धिवत्, पश्चात् कूर्चास्थिभिः सन्धयः पुनस्त्रिविधाभिः स्नायुभिः प्रतिबद्धाः ताश्च—पादतलगाः, पादपृष्ठगाः, सन्ध्यन्तरीयाश्चेति।

मूलशलाकानां परस्परसन्धयस्तु अंगुष्ठवर्जमपरासामेव मूलतः। तत्रापि त्रिविधाः स्नायवः पूर्ववत्। अग्रतस्तु मूलशलाकानामन्तरालस्था दृढ़स्नायवः शलाकान्तरीया नाम। तत्र शलाकानां परस्परस्पर्शभावेऽपि ताभिः परस्पर-सम्बद्धानि दृश्यन्ते मूलशलाकाग्राणि।

## अथ पादांगुलिसन्धयः।

**पादांगुलिसन्धयः**[3] करांगुलिसन्धिवत् पादांगुलिनलकानां चतुर्दशानां चदुदश,—एकैकस्यामंगुल्यां त्रयस्त्रयः, द्वावंगुष्ठे चेति। ते कोराख्याः।

स्नायवश्च तत्र करांगुलिसन्धिवदेव विज्ञेयाः।

**चेष्टास्तु** पादांगुलिषु स्वल्पतराः सङ्कोच-प्रसारान्तःकर्षण-वहिःकर्षणरूपाश्चतस्रः। पादांगुष्ठस्य तु करांगुष्ठवत् नास्ति जपादिसामर्थ्यमिति विशेषः।

तदेतत् सन्धिस्नायुखण्डं समाप्तम्।

---

१ Metatarsal Articulations. २ अस्थिखण्डस्य २० पृष्ठे। ३ Phalangeal Articulations.

इति

वङ्गाधिपतिश्रीमन्महाराजलक्ष्मणसेननरपतेः सभापण्डितस्य महाकविश्रीधोयीसेन-
कविराजस्य वंशधरेण श्रीमन्नारायणकरुणावतारश्रीकृष्णचैतन्यतनयीकृत-
धन्यजनिश्रीमद्रघुनन्दनगोस्वामिदौहित्रकुलोद्भवेन निखिलराढाभूमि-
सौरभप्रभवश्रीखण्डपुरवास्तव्य-विद्याकल्पद्रु मेत्यन्वर्थनामधेय-
सर्वतन्त्रस्वतन्त्रश्रीविश्वनाथोपमविश्वनाथकविराजात्मजेन
महामहोपाध्याय-श्रीगणनाथसेनशर्म-सरस्वती-
विद्यासागर-वैद्यावतंस-एम्-ए, एल्, एम्, एस्
इत्याद्युपाधिकेन प्राणाचार्येण विरचिते

## प्रत्यक्षशारीरे

## अस्थि-सन्धि-स्नायुवर्णनीयो नाम

## प्रथमो भागः

समाप्तः ।

॥ श्रीकृष्णचरणार्पणमस्तु ॥

"प्रत्यक्षशारीर"मधिकृत्य निखिलभारतीय-वैद्यशिरोमणीनां

# अप्रार्थितप्रशंसा-वचनानि

**मुम्बई वास्तव्यानां, भारतविश्रुतानां बहुवैद्यकग्रन्थसम्पादकानामायुर्वेदमार्त्तण्ड पं० श्रीयादवजीत्रिकमजी आचार्याणामभिप्रायः ( आयुर्वेदीयग्रन्थमालातः )—**

"कलिकातानगरवास्तव्यैः वैद्यावतंस-कविराज श्रीगणनाथसेन-महोदयः संस्कृतभाषया विरचितस्य 'प्रत्यक्षशारीरस्य' प्रथमभागमधिगम्य सत्यं सन्तोषमावहति चेतः। एतत्त्ववश्यं स्वीकरणीयम् यद्वर्तमानसमयेऽवशिष्टेषु चरकसुश्रुताद्यायुर्वेदग्रन्थेषु यच्छारीरज्ञानं वर्त्तते, न तच्छल्य-चिकित्सायां कायचिकित्सायां वा पर्याप्तम्। त्रुटिमेनां सम्यक् पूरयितुं कविराजमहोदयैः समारब्धोऽयं यत्नः। कृतकृत्याश्च ते खल्वस्मिन् यत्ने। एतत्कार्यं सम्पादयितुं श्रीगणनाथसेन व्यतिरिक्तो न कोऽपि पुरुषः सम्प्रति भारतवर्षमलङ्कुरुते। यतो ये प्राच्यायुर्वेदाभिज्ञा वैद्याः सन्ति न ते प्रत्यक्षीकृतशारीरतत्त्वाः, ये च प्रतीच्यायुर्वेदाभिज्ञा भिषजो डाक्टरपदवाच्याः, न ते प्राच्यायुर्वेद-मर्मज्ञाः, न वा संस्कृतभाषयेदृशग्रन्थरचनायां समर्थाः। श्रीगणनाथसेनास्तु प्राच्यप्रतीच्योभय-भिषग्विद्यामर्मज्ञाः, प्रत्यक्षीकृतशारीरतत्त्वाः, संस्कृतभाषया गद्यपद्यरचनायां चातीव प्रौढ़ाः। यदा खलु भारतवर्षे ईदृशग्रन्थानामध्यापनं, शारीरतत्त्वस्य प्रत्यक्षतः शिक्षणं च प्रचरिष्यति, स एवास्माकं मृतप्रायस्यायुर्वेदस्य पुनरुज्जीवनारम्भदिवसः।"

**मद्रासवास्तव्यानां वैद्यरत्नोपाधिक पं० डॉ० गोपालाचार्याणाम्—**

"एष ग्रन्थः सम्पूर्णतां प्राप्तः आयुर्वेदजलनिधेः कौस्तुभमिव भविष्यति। अवश्यपाठ्योऽयं छात्राणाम्। ईदृशं दुष्करं कर्म सम्पादयितुं साम्प्रतं भवानिव भवानेव दृश्यते।"

**कानपुर निवासिनां चिकित्सक-चूड़ामणि पं० श्रीरामेश्वरमिश्र वैद्यशास्त्रिणाम्—**

"अनेकविरुदावलीप्रोज्ज्वला आत्मीयैस्तेजोभिरिदानीं कलिकाताभिधां महानगरी-मलङ्कुर्वाणाः "सम्प्रति शल्यतन्त्रवञ्चितो ह्यायुर्वेद" इत्यभिसूयया तं परैर्विगर्हितप्रायमालोच्य प्रत्यक्षशारीराभिधं ग्रन्थरत्नं विरचयन्तो निखिलायुर्वेदोपजीविनां भिषजां लोकानाञ्च मनो रञ्जयन्तो धन्यवादाभिनन्दनार्हाः श्रीमन्तो गणनाथा विद्याचञ्चवो विपश्चिद्गुरवः समुल्लसन्तितराम्,—यदेते महानुभावा मिश्राणामप्यायुर्वेदं जगति प्रथयितुम् औरभ्र-पौष्कलावतादिमुनिगणानां नाथाः सुश्रुता इवाऽवातरन्निति।"

**रत्नमाला ( चम्पारन ) वास्तव्यानां सुप्रसिद्ध-विद्यावयोवृद्ध-वैद्यप्रवरानां पं० श्रीचन्द्रशेखरधरशर्मणाम्—**

"प्रत्यक्षशारीरं निर्मितवता भवता आयुर्वेदस्य विकलमङ्गं यथा पुनरपि सकलं व्यधायि, नाद्यावधि केनापि सुशकं तद्भूत्। सत्यमेव विश्वसिमि, यथा वेदोद्धाराय भगवतो व्यासस्य प्रादुर्भावः समभूद्, यथा च धर्मोद्धाराय श्रीशङ्कराचार्यपादानामवतारोऽभवत्, तथा आयुर्वेदो-द्धारार्थमेव भवतामाविर्भाव इति।"

**नेपालमहाराजान्तिकस्थ राजवैद्यानां श्रीमतां रामदास भिषक्प्रवराणाम्—**

"हन्त सनाथीकृतो लोकः। "प्रत्यक्षशारीर" तत्त्वामृतपानलोलुपा रमन्ते वैद्यलोकाः यतस्ते स्वीयविद्यायां शल्यतन्त्रस्य प्रचाराभावात् नानाविधशास्त्रनिपुणा अपि नखदन्तभग्ना इव भ्रमन्ति। तादृशानां महात्मनामन्येषाञ्च वैद्यविद्याजिज्ञासूनामुपकाराय प्रत्यक्षशारीराख्यो मार्गः प्रदर्शितो भवद्भिरेव प्रथमः"—इति।

कलिकातावास्तव्यानां कविरत्नोपाधिक-विद्वद्वर-कविराजवर्य श्रीराजेन्द्रनारायण सेन महोदयानामभिमतम्—

"प्रत्यक्षदृष्ट-नरदेहतत्त्ववर्णनपरं संस्कृतभाषया सङ्कलितं पुस्तकमिदं शारीरतत्त्वबोधकै-श्चित्रैस्तथा सुसिद्धान्तनिकरैरन्वर्थपरिभाषाप्रकटनैश्च अत्युपादेयतया प्रतिभाति। सफलश्रमोऽयं ग्रन्थकारः। अध्येतारश्च सर्वथा सिद्धार्थाः स्युरिति।"

वैद्यरत्नोपाधिधारिणां प्राच्यप्रतीच्यशास्त्रविदुषां कविराज श्रीयोगेन्द्रनाथ सेन विद्याभूषण, एम्, ए, महाशयानामभिप्रायः—

"प्रत्यक्षशारीरं" दृष्ट्वा नितरां ह्लादितोऽस्मि। अस्य भाषाया उत्कर्षो विषयस्य गौरवं संवदत्येव। अस्थिसंख्यानादि प्रस्तावेषु समधिकं वैदुष्यमत्र प्रकटीकृतम्। सिद्धान्तानां चमत्कारित्वं च सर्वैरङ्गीकर्त्तव्यम्। ग्रन्थोऽयं वैद्यानामुपादेयो भविष्यतीत्याशास्ते—योगीन्द्रनाथ सेनः।"

कलिकातास्थ भिषग्वराणां कविराज श्रीश्यामादास वाचस्पति महोदयानाम्—

"धान्वन्तरीय-निबन्ध-प्रतिसंस्कारमेनं वदतां कमपि धीविभ्रमं नावैमि। कालवशाद् विपरिणम्यमाने जगति विविधेषु खल्वपि विषयेष्ववश्यम्भावी प्रतिसंस्कारः। यो यो मनीषेशिता देशकालपात्राण्यनुसृत्य तमनुतिष्ठति, स तु नायकपदवीमलङ्कुर्वाणो धन्यवचनभाग् भवति। प्रणेता तावत् प्रत्यक्षशारीरस्य गणनाथो धन्यवचनभूमिः। नवीनतत्त्वजिज्ञासु-धान्वन्तरीयाणामन्येषा-ञ्चायमुपकर्त्ता, चेतश्चमत्कर्त्ता च सम्पत्स्यते।"

श्रीखण्डवास्तव्य-सर्वतन्त्रस्वतन्त्र-कविराज श्रीराधिकानाथ राय कविरत्नानाम्—

इतः प्राग् द्विसहस्रवर्षकालेनापि यत्कार्यं कर्त्तुमशक्यमासीदतीतैर्वर्त्तमानैश्च वैद्यवर्यैः, अधुना प्राच्यप्रतीच्योभयशास्त्रपारदर्शिना कुशाग्रधीसम्पन्नेन श्रीमता गणनाथसेन-विद्यानिधि महोदयेन तादृग् अतिदुरूहकार्यं लीलया सुष्ठु कृतमति तु महच्चित्रमेव। ग्रन्थस्य भाषासम्पद्वर्णना-वैचित्र्यञ्च मामिदं वक्तुं मुखरयति यद् अपि खलु चरकमुनिरेष उत वा भगवान् शङ्कराचार्यः, उत वा कोऽप्यन्यः प्राचीन ऋषिः योऽधुना पुनः पृथिव्यामाविर्भूय आयुर्वेदशास्त्रस्य चिरन्तनमभावं दूरीकर्त्तुमित्थं प्रयतते।"

कुचविहारराज्याधिपति-चिकित्सकानां सुप्रसिद्ध "वनौषधिदर्पण" ग्रन्थकृतां कविराज श्रीविरजाचरण काव्यतीर्थ कविभूषण महोदयानाम्—

"प्रत्यक्षदृष्टनिखिलार्थकमद्य शास्त्रमुद्द्योतयन्तं श्रीमद्गणनाथसेनं को नाम नार्हत्यभिनन्दितुं जनहितकामी। अस्तु निर्विघ्नपरिसमाप्तिः प्रत्यक्षशारीरस्य। वीजरूपं धन्वन्तरिप्रोक्तं शारीर-तत्त्वं महीरुहसदृशेन प्रत्यक्षशारीरेण प्रपञ्चयता श्रीमद्गणनाथेन "कुशलेनाभिपन्नं तद् बहुधा विप्ररोहति" इति धन्वन्तरिवाक्यम् सफलीकृतम्। पारिभाषिकसंज्ञारचनायामभिधेयवर्णने, चित्रव्याख्यायां, मुद्रणव्यापारे च ग्रन्थकर्त्तुर्या श्रमशीलता, कार्यपटुता, लिपिकुशलता, गभीर-दर्शिता च परिस्फुटा, कालेऽस्मिन् पाल्लविकोत्पातबहुले सुदुर्लभैव सा।"

---

# PRATYAKSHA-SHARIRAM

A TEXT-BOOK OF
HUMAN ANATOMY IN SANSKRIT
( Including History of Ayurveda, Classical Nomenclature
& Elements of Physiology )

## PART II.

BY
GANANATH SEN,
MAHAMAHOPADHYAYA ( Govt. of India ),
Vidyasagar, Pranacharya, Saraswati, M. A., L. M. S.,
DEAN of the Faculty of Medicine and Surgery ( Ayurveda ), Benares Hindu University; PRESIDENT, ALL-INDIA AYURVEDIC CONFERENCE ( Allahabad ) 1911, (Indore) 1920, (Mysore) 1930; Ex-President All-India Ayurveda Vidyapith; Ex-President, Astanga Ayurveda Vidyalaya; Late Principal, Superintendent & Physician-in-chief ASTANGA AYURVED COLLEGE & HOSPITAL; Founder-Principal, VISHWANATH AYURVED MAHAVIDYALAYA & HOSPITAL,
Author of SIDDHANTA-NIDANAM ( Text-Book of Pathology & Symptomatology in Sanskrit ), AYURVEDA-SAMHITA, etc. etc.

*NEW EDITION*

CALCUTTA
1941.

# प्रत्यक्षशारीरम्

नाम

समग्र-नरशरीरवर्णनात्मकः अभिनवशारीरग्रन्थः प्राचीन-
शारीरसंज्ञार्थादिविचारसमन्वितः शारीरक्रिया-
विज्ञानपरिचयोज्ज्वलश्च ।

काशी-हिन्दुविश्वविद्यालयस्थाऽयुर्वेदविभागसर्वाध्यक्षेण
महामहोपाध्याय श्रीगणनाथसेन-शर्म-सरस्वती-
विद्यासागर-वैद्यावतंस-प्राणाचार्य,
एम्. ए., एल्. एम्. एस्.—
महाशयेन विरचितः ।

## द्वितीयो भागः

( पेशी-धमनी-सिरा-रसायन्याशयादिवर्णनपरः )

नवीनसंस्करणम् ।

कलिकाता महानगर्याम्
प्राणाचार्य कविराज श्रीसुशीलकुमार सेनशर्मा,
कविरत्न, एम्, एस-सी—
—इत्याख्येन तदीयसूनुना प्रकाशितः ।

सं० १९९८ ।

# प्रत्यक्षशारीर-द्वितीयभागस्य
# विषयानुक्रमणिका

## सिराखण्डम्



## रसायनीखण्डम्

❋ पञ्चम-षष्ठाध्यायौ नवीनसंस्करणे सं १६६८ जन्माष्टम्यां योजितौ।

# प्रत्यक्षशारीर-द्वितीयभागस्य

## चित्रानुक्रमणिका

ओं नमो ब्रह्म-प्रजापत्यश्वि-वासव-धन्वन्तरि प्रभृतिभ्यः।

# प्रत्यक्षशारीरस्य
## द्वितीयभागारम्भे
## ग्रन्थकर्त्तुर्निवेदनम्।

श्रीकृष्णकरुणासिन्धु विन्दु-स्पर्शन-पुष्पिता।
मदीयधिषणावल्ली प्रसूतां फलमुत्तमम्॥ १॥

अध्यापयन्ति च विदन्ति च वेत्तुमर्थान्
वाञ्छन्ति चान्यकृतिनाञ्च गुणान् गृणन्ति।
सत्यं च नित्यमनुयान्ति लिखन्ति तत्वम्
ये तान् बुधैकशरणान् प्रणमामि विज्ञान्॥ २॥

अध्यापयन्ति न विदन्ति वदन्ति चार्था-
नुच्छृङ्खलं न तु लिखन्ति निबन्धपंक्तिम्।
निन्दन्ति शास्त्ररसिकान् कृतिनो द्विषन्ति
ये तान् सुविज्ञ-कपटान् प्रणमामि चाऽज्ञान्॥ ३॥

धान्वन्तरीयं शारीरं सत्यं प्रत्यक्षगोचरम्।
कालेन महता नष्टं प्रतिसंस्कर्त्तृ दूषितम्।
शवच्छेदविलोपेन कल्पनाऽकल्प संवृतम्।
स्वयं परीक्ष्य मृतकानुद्धरामि प्रयत्नतः॥ ४। ५॥

नार्थार्थं न यशोऽर्थं वा मयेदं तप्यते तपः ।
लब्धं तदुभयं प्राज्यं श्रमो लोकहिताय मे ॥ ६ ॥

चित्रेषु चाप्यथ शवेषु च वीक्ष्य सर्वं
शारीरवस्तु सुधियः सुधियं लभध्वम् ।
शारीररोगहरणे गुणसम्पदो हि
लभ्याः शरीर-रचनैषणयैव सम्यक् ॥ ७ ॥

स्थूणा-निखननन्यायात् पुनरुक्तं क्वचिन्मया ।
नातिविस्तरमुक्तश्च शिष्यबुद्धिं विजानता ॥ ८ ॥
अथाऽलस्यपरैः कैश्चित् संक्षेपोऽत्रापि मृग्यते ।
ते बीजरूपानध्यायान् ज्ञात्वा यान्तु कृतार्थताम् ॥ ६ ॥

दोषाश्च सन्ति यदि, सन्तु किमत्र चित्रम्
दोषाकरस्य मम सञ्चरतस्तमिस्रे ।
धीरा गुणाकरतया गुणमात्रतृप्ताः
युञ्जन्तु साधुसरणौ शरणार्थिनं माम् ॥ १० ॥

---

# प्रत्यक्षशारीरम्

## पेशीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातः पेशीसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

इह खलु **पेश्यो** नाम प्राणभृतां प्रधानानि चेष्टासाधनानि मांसमयानि । निखिलानां चेष्टानां तदाकुञ्चनप्रसारमूलत्वात् । चेष्टावेगाश्च मस्तिष्कतः, सुषुम्नाकाण्डात्, नाड़ीचक्रेभ्यो वा प्रवर्त्तन्ते चेष्टावहाभिर्नाड़ीभिः । नाड़ीनां च तासां चरमाः प्रशाखाः पेश्यन्तरनुप्रविष्टाः । ताश्च तत्तत्पेशीनां प्रचेष्टन्यः, अनुप्राणन्यो वा कथ्यन्ते । चेष्टावेगानाञ्च भगवान् वायुरचिन्त्यशक्तिरधिष्ठाता । "स हि प्रवर्त्तकश्चेष्टानामुच्चावचानाम्"—इति प्राञ्चः[1] । चेष्टाः पुनः पेशीनां बाहु-सक्थि-नेत्र-मुखाद्यवयवेष्वारोप्यमाणाः तेषामाकर्षणाऽपकर्षणोन्नमनाऽवनमन-संकोचन-प्रसारण-मुद्रण-विस्फारणादिसंज्ञा भवन्ति । तत्र आकर्षणं मध्यरेखां प्रति प्रवर्त्तनम् ; अपकर्षणं दूरान्मध्यरेखातः । उन्नमनमूर्ध्वकर्षणम् । तदेव क्वचिदुत्कर्षणं कर्षणं वा । अवनमनमधोनमनम् अधःकर्षणं वा । सङ्कोचनमंगुल्यादीनां करपादतलाभिमुख्येन प्रवर्त्तनम् । प्रसारणं तद्वैपरीत्येन । सङ्कोच-प्रसार-शब्दयोश्च क्वचित्साधारणार्थेऽपि प्रयोगः[2] ।

चेष्टाप्रवृत्तिश्च पेशीनां मृतकशरीरे यथा एकैकपेश्याकर्षणेन प्रदर्श्यंते, न सा तथैव प्रायेण जीवच्छरीरे । तत्र हि एकैकस्याश्चेष्टायाः प्रवृत्तिः पेशीपुञ्जद्वारेण, न त्वेकैकया पेश्या । यथा मणिबन्धसङ्कोचने क्रियमाणे युगपदेव सङ्कोचं भजन्ते त्रिचतुराः सङ्कोचनीसंज्ञाः पेश्यः प्रकोष्ठपुरःस्थाः, शिथिलीभवन्ति च तद्विपरीताः, स्थगयन्ति च प्रकोष्ठं काश्चिदपराः पेश्यः प्रगण्डीयाः—इति दिक् । एवञ्च सर्वत्र समुन्नेया युगपत्प्रवृत्तयः पेशीनाम् ।

द्विविधाश्च पेश्यः क्रियावैशेष्यात्, स्वतन्त्राः परतन्त्राश्चेत्युक्तपूर्वम् । तत्र **स्वतन्त्राः** स्वतःक्रियाशीलाः पुरुषेच्छां नापेक्षन्ते—यथा अन्त्र-हृदयाऽमाशयगताः

---

१ चरक० सूत्र० १२ अ० । २ यथा मांसतन्तूनामाकुञ्चनप्रसारणार्थयोः ।

पेश्यः[१]। **परतन्त्राः** पुनः पुरुषेच्छयैव क्रियाशीलाः, न स्वतः,—यथा कर-चरणादि-गताः पेश्यः[२]। अत एव ता इच्छानुगा अपि कथ्यन्ते। तत्र स्वतन्त्राः प्रायेण आभ्यन्तर्य्यः, परतन्त्रास्तु बाह्याः।

आकृतितः पुनरनेकविधाः पेश्यः। तत्र स्वतन्त्रास्त्रिविधाः—कोषाकाराः, नलकाकाराः, सूत्राकाराश्च। तत्र वस्ति-हृदयाऽमाशयादिषु कोषाकाराः, अन्त्रादिषु नलकाकाराः, प्लीहादिषु सूत्राकाराः। सूक्ष्मविभागतस्तु सर्वा अपि सूत्रमय्यः। परतन्त्रास्तु पेश्यः पञ्चविधाः प्रायेण। काश्चिद्दीर्घा रज्ज्वाकाराः, काश्चित्स्थूलमध्या वेमसमाकाराः[३], काश्चित्तालवृन्ताकाराः, अन्याः शरपुङ्खाकाराः, अपराः प्रच्छदाकाराः। संहति-परिमाणादिभिश्च बहुधा भिद्यन्ते पेश्यः। आहुश्च प्राञ्चः—"तासां बहल-पेलव-स्थूलाणु पृथु-वृत्त-ह्रस्व-दीर्घ-स्थिर-मृदु-श्लक्ष्ण-कर्कशभावाः सन्ध्यस्थिसिरा-स्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति"—इति (सु० शा० ५ अ०)।

तत्र इच्छानुगानां पेशीनामेकैकस्या द्वावन्तौ स्नायुभूयिष्ठौ स्नायुमयौ वा। तौ प्रायेण अस्थ्नोर्निबध्येते अस्थिधराख्यकलया संयोगेन। क्वचित् पुनर्निबन्धनं स्नायु-रज्ज्वां, मांसधरकलायां, त्वचि वा। तयोरूर्द्धगं निबन्धनं स्थिरतरं प्रभवसंज्ञम्, अधोगन्तु निवेशसंज्ञम्। पेशीनां शुभ्रमसृणदृढप्रान्ताश्च रज्ज्वाकाराः **कण्डराः**[४] इत्युच्यन्ते। प्रच्छदायताः पुनः कलाकण्डराः कण्डरा-वितानाः[५] वा नाम।

ताश्च पेश्य आदौ मांसधरकलया समावृताः। तामावृणोति मेदोधरा नाम कला स्थूला, मेदोभूयिष्ठत्वात्तथासंज्ञा, सा क्वचिद् बहिःप्रावरणी[६]-संज्ञाऽपि। ताञ्च संवृणोति शरीरत्वक्। मांसधरा कला तु पेशीनां सन्धारणी, सा क्वचित् आन्तरप्रावरणी[७], गम्भीरप्रावरणी वा कथ्यते। तस्याश्च प्रच्छदाकाराः शाखाः पेश्यन्तरालेषु प्रतताः पेश्यन्तरालाः[८] नाम। तासां बहुधा कञ्चुकरूपेण परिणामः पेशीवेष्टनाय। मांसधरायाः कलायाः केचिदंशाः पृथक्प्रदेशेषु पेशीप्रच्छद-रूपेण परिणताः पृथक्संज्ञका भवन्ति—यथा ग्रीवायां ग्रीवाप्रच्छदा, कट्यां कटिप्रच्छदा इति। क्वचिदपरविधाऽपि मांसधरा कला दृश्यते गुहान्तश्छादनी—यथा वस्तिगुहायां वस्तिगुहान्तश्छदा, उदरे उदरान्तश्छदा इति।

---

१। स्वतन्त्राः=Involuntary muscles. २। परतन्त्राः= Voluntary muscles. ३। वेमा=Spindle तन्तुवायानां सूत्रगतागतकारको यन्त्रबिशेषः। स च मध्ये स्थूलः प्रान्त-योस्तनुरिति तत्सादृश्यं कासाञ्चित् पेशीनाम्। ४। कण्डराः=Tendons. ५। कला-कण्डराः कण्डरावितानाः वा=Aponeuroses. ६। बहिः-प्रावरणी, मेदोधरा कला वा= Superficial Fascia. ७। आन्तरप्रावरणी, मांसधरा कला वा=Deep Fascia. ८। पेश्य-न्तरालाः कलाः=Inter-muscular Septa.

मेदोधरा कला पुनः स्वाभाविकशारीरसन्तापरक्षणी। सा क्वचित्तन्वी, क्वचित् स्थूला, क्वचित् स्तरद्वयविभक्ता च। तस्यां च कदाचित् सम्बध्यन्ते पेश्योऽपि तन्व्यः, पेश्यंशा वा—यथा मुखमण्डले, ग्रीवायाञ्च। प्रसरन्ति च तत्रैव त्वाच-शाखाः नाड़ी-सिरा-धमनी-रसायनीनाम्। मांसधरा कला तु प्रायो नाति-स्थूला, क्वचित् स्तरद्वयविभक्ता च। तस्याञ्च कदाचित् संबध्यन्ते पेशीनां प्रभवाः निवेशाश्च। प्रसरन्ति च तत्रैव प्रायो मांसगाः शाखाः नाड़ी-सिरा-धमनी-रसायनीनाम्।

अर्द्धञ्च प्रायेण शरीरभारस्य निष्पाद्यते पेशीभिरेव। शारीरबलञ्च पेशीनिष्ठं भूम्ना। सूपचित संहत-पेशीको हि पुरुषो बलवानित्युच्यते।

**निर्म्माणं** पुनः पेशीनां जलौकाशरीरवद् आकुञ्चन-प्रसरणशीलैर्मांसतन्तुभिः प्राधान्येन। न हि मांसं नाम पेशीतः पृथगस्ति किञ्चित्। प्रान्तास्तु पेशीनां प्रायः स्नायुमया एवेत्यवोचाम। तत्र मांसतन्तवः अनुप्रस्थरेखाङ्किता नातिघन-संघाता दीर्घाश्च परतन्त्रासु पेशीषु। अनुलम्बरेखाङ्किता घनसंघाता ह्रस्वाश्च स्वतन्त्रासु पेशीषु। उभयधर्म्मिणस्तु ते हृत्पेश्याम्।

पोषणं च सर्वासां पेशीनां तदन्तःप्रसृतेभ्यः सिराधमनीजालकेभ्यो निःस्नुतेन लसीकाख्यधातुना[१] सम्पद्यते। सोऽयं जीवतः पुरुषस्य पेशीषु संचरन् तन्मार्दवकरः पेशीरसो[२] नाम। स च यदा प्राणापगमे स्त्यानीभवति, तदा सुदृढं सङ्कोचमापद्यन्ते पेश्यः। सोऽयं मरणसङ्कोचः[३], मरणाक्षेपो वा नाम। तद्विरतिश्च कालेन मांसकोथारम्भात्।

सन्ति च संज्ञावहा अपि नाड्यः पेशीषु। ताभिश्चेष्टाकृतं पेशीसंज्ञानमूह्यते मस्तिष्काभिमुखम्। तञ्च संकोचप्रसारकृतं संज्ञाविशेषं पेशीसंज्ञेति[४] वर्णयन्ति विशेषज्ञाः, त्वाचसंज्ञापार्थक्यात्। द्रव्याणां गुरुत्व-लघुत्वादिज्ञानञ्च पेशीसंज्ञामूलम्।

नामानि तु पेशीनां क्वचिदवस्थानविशेषात्—यथा शङ्खच्छदेति। क्वचित् प्रभवनिवेशाभ्यां—यथा उरः-कर्णमूलिकेति। क्वचित् कार्यतः—यथा अंगुली-सङ्कोचनीति। क्वचिदाकृतिविशेषात्—यथा द्विशिरस्केति। क्वचिद् यदृच्छया—यथा काकलकिनीति। एष चात्र संग्राहकः श्लोकः—

अवस्थानान्निवेशादेः कार्यतश्चाकृतेस्तथा।
यदृच्छया च पेशीनां चित्राः संज्ञाः प्रकल्पिताः॥ इति

१। लसीका = Lymph. २। पेशीरसः = Muscle-Juice. ३। मरणसंकोचः = Rigor Mortis. ४। पेशीसंज्ञा = Muscle-sense.

अथ संख्यानम्। बहुधा खल्विह संचक्षते पेशीः शारीरविदः। पञ्चशतानि पेश्य इति प्राञ्चः। षट् शतानि न्यूनाधिकानीति प्रतीच्याः। संख्याभेदश्च प्रायेण संयोगविभागभेदेन ग्रहणात्। तथाहि अंगुलीसङ्कोचन्यादिपेशीनां पृथग् विभागादेव शाखासु संख्याधिक्यं प्राचां, संयोगेन संख्याल्पत्वमितरेषाम्। शिरसि पुनः संयोगतो वचनात् संख्याल्पत्वं प्राचाम्, विभागेन बाहुल्यं नव्यानामिति दिक्।

इह तु साशीतिश्चतुःशती पेशीनां वर्ण्यते, लाघवात्। संख्यानञ्च परतन्त्राणामेव। स्वतन्त्रास्तु पेश्यस्तत्तदाशयान्तर्गता नेह पृथग् गण्यन्ते।

तच्च संख्यानं स्थानप्रविभागत उच्यते। यथा द्व्यधिकाऽशीतिः शिरसि स-मुखमण्डले। एकाधिकाऽशीतिर्ग्रीवायाम्। एकादशोत्तरं शतं मध्यकाये। ऊर्ध्वशाखयोरष्टानवतिः। अष्टोत्तरशतम् अधःशाखयोरिति। तदेतत् पेशीविज्ञानं समासेनोक्तम्। विस्तरोऽत ऊर्ध्वम्।

स्मर्त्तव्यं चात्र—

अङ्गचेष्टा विवेकार्थं पेशीविज्ञानमुच्यते।
भग्न-विश्लिष्ट-सन्धान सौकर्यार्थं विशेषतः॥

इति प्रथमोऽध्यायः।

---

# द्वितीयोऽध्यायः।

अथातः शिरोग्रीवपेशीवर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु द्व्यधिकाऽशीतिः पेशीनां शिरसि समुखमण्डले निर्दिष्टा। तासां नवसु स्थानेषु विभागः। तद्यथा—करोटिपटले एका। प्रतिभ्रुवं द्वे। प्रतिनेत्रमभ्यन्तरतः सप्त। प्रतिनासापार्श्वं पञ्च। मुखं परित एका, तदेकैकतोऽष्टौ। हानव्या एकैकतश्चतस्रः। प्रतिकर्णं तिस्रो बहिः, द्वे चाभ्यन्तरतः। जिह्वायामेकैकार्द्धे चतस्रः, मध्ये चैका। गलतालुनि एकैकतश्चतस्रः, मध्ये चैकेति। तासु बाह्याः एक पेश्यो बहिःप्रावरण्यैव समावृताः। गम्भीरप्रावरण्या अपृथग्भूता तु शिरश्छदा नाम पेशी।

(१) तत्र करोटिपटले प्रच्छदायता पेशी एकैव **शिरश्छदा**[१] नाम (६८ चित्रम्)। सा पश्चात्कपालस्य उत्तरतोरणिकोपकण्ठात् संभूय पुरःकपालं

---

१। शिरश्छदा पेशी = Epicranius (Occipito-frontalis.)

( ६८ चित्रम् )

## बाह्याः शिरोग्रीवायाः पेश्यः (उत्तानाः)।




६८ चित्रस्य व्याख्या—१ नासामूलसंनमनी। २ नासोष्ठकर्षणी। ३ नासासंकोचनी। ४ नासाविस्फारणी अग्रिमा पश्चिमा च। ५ नासोष्ठकर्षणी। ६ सृक्कणीकर्षणी लघ्वी।

यावद् विस्तृता भ्रूमध्यमुभयतो निविशते। प्रभवनिवेशौ चास्याः शिरःप्रच्छादन्यां मेदोधरकलायामेव भूम्ना। अस्याः पुरः-पश्चिमौ भागौ मांसमयौ, मध्यभागस्तु कलावितानमयो गम्भीरप्रावरण्या अभिन्नश्च। अनुप्राणयति च तस्याः पुरोभागं वक्त्रनाड्याः शङ्खानुगा शाखा, पश्चिमभागं तु तस्या एव कर्णपश्चिमा शाखा। क्रिया चास्याः—ललाटसङ्कोचनं, भ्रुवोरुन्नमनं च।

(२) प्रतिभ्रुवं द्वे पेश्यौ(६८ चित्रम्)—एका नेत्रगुहाद्वारमभितो वृत्तप्राया **नेत्रनिमीलनी**[१] नाम। अपरा भ्रूमध्यपार्श्वतः क्षुद्रा—**भ्रूसंकोचनी**[२] नाम। उभे अपि पुरःकपालस्य भ्रूतोरणिकान्तःकोटितः सम्भूते। निविशते तु प्रथमा नेत्रपुटयोः, त्वचि च नासामूलपार्श्वतः। द्वितीया पुनस्त्वचि भ्रूमध्यपार्श्वतः, भ्रूसंकोचन्यां च तिरश्चीनभावेन। तदेतदेकैकतः पेशीद्वयं वक्त्रनाड्याः शङ्खगण्डानुगाभ्यां शाखाभ्यां प्रचेष्टितं भवति। चेष्टा च स्वनामव्याख्याता। प्रथमायाश्च क्षुद्रोंऽशः अश्रुवाहिकां परितः संवद्धः - सोऽश्रुविसर्जनकार्यः। पेशी चेयमश्रुविसर्जनीति केचित्।

(३) प्रतिनेत्रमभ्यन्तरतः सप्त पेश्यः। तासां षट् अक्षिगोलकस्य नानाविधचेष्टाप्रवर्त्तिन्यः, एका उत्तरनेत्रपुटस्य उन्मीलनी। तासां नामानि—**ऊर्ध्वदर्शिनी**[३], **अधोदर्शिनी**[४], **अन्तदर्शिनी**[५], **बहिर्दर्शिनी**,[६] **वक्रोर्ध्वदर्शिनी**[७], **वक्राधोदर्शिनी**[८], **नेत्रोन्मीलनी**[९] चेति। सर्वासां चासां नेत्रगुहान्तःप्राचीरास्थिभ्यः प्रभवः। निवेशस्तु षण्णां नेत्रगोलकमभितः, सप्तम्या उत्तरनेत्रपुटे। नाड्यश्च तासां प्रचेष्टन्यस्तिस्रः—तृतीया, चतुर्थी, षष्ठी चेति। तद्विस्तरो नेत्रवर्णनीयाध्याये वक्ष्यते। (चित्रञ्च तत्रैव)।

(४) नासापेश्यस्तु प्रतिनासापार्श्वं पञ्च तनुदीर्घाः—(६८।६६ चित्रम्) **नासामूलसंनमनी**,[१०] **नासासङ्कोचनी**,[११] **नासावनमनी**,[१२] **नासाविस्फारणी अग्रिमा**,[१३] **सैव पश्चिमा**,[१४] चेति। तत्राद्या नासास्थिमूलपार्श्वतः संभूय शिरश्छदया संवध्यते। अपरास्तु नासापुटं परितः तत्प्राचीरनिर्मापकतरुणास्थिभ्यां, त्वचा च संबद्धाः। तासां क्रियाः स्वनामव्याख्याताः। क्रियावत्त्वञ्च वक्त्रनाडीशाखाभिरेव।

---

१। **नेत्रनिमीलनी**=Orbicularis Oculi. २। **भ्रूसङ्कोचनी**=Corrugator Supercilii. ३। **ऊर्ध्वदर्शिनी**—Superior Rectus. ४। **अधोदर्शिनी**—Inferior Rectus. ५। **अन्तदर्शिनी**—Internal Rectus. ६। **बहिर्दर्शिनी**—External Rectus. ७। **वक्रोर्ध्वदर्शिनी**—Superior Oblique. ८। **वक्राधोदर्शिनी**—Inferior Oblique. ९। **नेत्रोन्मीलनी**—Lavator Palpabrae Super. १०। **नासामूलसंनमनी**—Procerus (Pyramidalis Nasi) इयमेव पूर्वमुद्रणेषु 'भ्रूसंनमनी' संज्ञासीत्। ११। **नासासङ्कोचनी**—Nasalis (Compressor Nares). १२। **नासावनमनी**—Depressor Septi. १३। **नासाविस्फारणी अग्रिमा**—Dilator Nares Anterior. १४। **नासाविस्फारणी पश्चिमा**—Dilator Nares Posterior.

[ ६६ चित्रम् ]

## बाह्याः शिरोग्रीवीयाः पेश्यः ( गम्भीराः ) ।




(५) मुखपेश्यस्तु एका मध्ये, अष्टौ उभयतः (६५ चित्रम्)। तत्र मध्यस्था वृत्तप्राया ओष्ठाधरं संवेष्ट्य स्थिता, सा अष्टानामपरासां निवेशभूमिः। सेयं **मुखमुद्रणी** नाम। अपरास्त्वष्टौ नासापार्श्वतो वहिःक्रमेण एकैकतः, यथा—नासोष्ठकर्षणी, सृक्कणीसमुन्नमनी, सृक्कणीकर्षणी ( लघ्वी गुर्वी च ), कपोलिका, प्रहासनी, सृक्कणीनमनी, अधरावनमनी, अधरोत्क्षेपणी चेति।

तत्र **मुखमुद्रणी**[१] ऊर्ध्वं नासामध्यप्राचीरमूले, अधस्ताद् अधोहनुमण्डले अग्रिमदन्तचतुष्टयमुभयतः संबद्धा। सेयमोष्ठाधरं मुकुलीकृत्य मुखविवरं मुद्रयति।

**नासोष्ठकर्षणी**[२] नाम पेशी मूलत्रयवती पूर्व-पश्चिमांशविभागेन युग्मा। तस्या एकं मूलमूर्ध्वहन्वस्थ्नो नासाकूटे, अन्यत् तस्यैव नेत्राधरीयविवराधः, अपरं गण्डास्थ्नो गण्डकूटे निबद्धम्। निवेशस्तु तेषां नासापार्श्वस्थे तरुणास्थ्नि, सृक्कणां यावत् मुखमुद्रण्यां, ओष्ठे च।

**सृक्वणीसमुन्नमनी**[३] नाम पेशी पूर्वोक्तायाः पृष्ठतः स्थिता। सा ऊर्ध्वहन्वस्थ्नो नेत्राधरीयविवराधःप्रदेशात् संभूय सृक्वण्यां संबद्धा।

**सृक्वणीकर्षणी**[४] गण्डास्थ्नः सम्भूय सृक्कण्यां निविशते। तस्या द्वौ भागौ, अग्रिमपश्चिमभेदात्। तत्राद्या लघ्वी नाम, अपरा गुर्वीति केचित्।

**कपोलिका**[५] नाम पेशी कपोलनिर्मापिका प्रततप्राया। सेयमूर्ध्वाधोहनुमण्डलयोः पार्श्वाभ्यां सम्भूय, अग्रतः सृक्वणीमूले मुखमुद्रण्यां च संबद्धा।

**प्रहासनी**[६] नाम तनुपेशी हनुसन्धिच्छादन्या मांसधरकलायाः सम्भूय सृक्कण्यां निविशते।

**सृक्वणीनमनी**[७] नाम त्रिकोणाकारा पेशी अधोहनुमण्डलस्य बाह्यतिरश्चीनाख्यरेखायाः संभूय अधरमूले सृक्कण्यां च संबद्धा।

**अधरावनमनी**[८] नाम चतुरस्रा पेशी पूर्वोक्तप्रदेशादेव सम्भूता, अधरमूले च सन्निविष्टा।

**अधरोत्क्षेपणी**[९] अधोहन्वस्थ्नश्चिबुकपिण्डात् सम्भूय अधराधः सन्निविष्टा।

क्रियाश्चासां स्वनामव्याख्याताः। विशेषतस्तु कपोलिका चर्वणसमये कपोलस्य सङ्कोचविस्फाराभ्यां तत्कर्मसहाया भवति। शंखाध्मानकाले च

---

१। **मुखमुद्रणी**—Orbicularis Oris. २। **नासोष्ठकर्षणी**—Quadratus Labii Superioris. ३। **सृक्वणीसमुन्नमनी**—Caninus (Lev. Anguli Oris.) ४। **सृक्वणी कर्षणी**—Zygomaticus (major & minor) **सृक्वणी सृक्कणीति उभयविधः पाठः साधुः।** ५। **कपोलिका**—Buccinator. ६। **प्रहासनी**—Risorus. ७। **सृक्वणीनमनी**—Triangularis (Depressor Anguli Oris.) ८। **अधरावनमनी**—Quadratus Labii Inferioris. ९। **अधरोत्क्षेपणी**—Mentalis (Lavator Menti.) **अधरपदं च निम्नोष्ठबाधि।**

फूत्कारिणी पेशी सैव । प्रहासनी तु सृक्कणीं वहिःकर्षन्ती हास्यसहाया सम्पद्यते । अधरोत्क्षेपणी चिबुकमुत्क्षिपति सहाऽधरेण युगपत् ।

अनुप्राणनन्तु सर्वासां मौखिकपेशीणां वक्त्रनाड्या मौखिकशाखया, अधोहानव्यशाखया च । तत्र मुखमुद्रणी एकैकार्द्धे उभाभ्यां शाखाभ्यां सक्रिया भवति । अपरासामूर्ध्वस्थं पञ्चकं मौखिकशाखया, अधःस्थं त्रितयमधोहानव्यशाखयेति विशेषः ।

( ९ ) हानव्यास्तु पेश्यश्चतस्र एकैकतः । तत्र—

**शंखच्छदा**[1] नाम प्रथमा पेशी ( ६९ चित्रम् ) करोटिपक्षस्थात् शंखखातात् संभूता तालवृन्ताकारा । सा अधोहनुकुन्तस्य अन्तर्बहिस्तलयोः सन्निविष्टा । छाद्यते च सा शंखतोरणिकाख्यरेखाविलग्नया शंखप्रच्छदाख्यया प्रावरण्या । सेयं मांसला पेशी हनुकुन्तम् ऊर्द्ध्वं कर्षन्ती अग्रदन्तानूर्द्ध्वाधःस्थान् संहत्य कर्तनकर्मसहाया भवति ।

[ ७० चित्रम् ]




1 । शंखच्छदा—Temporalis.

**हनुकूटकर्षणी**[१] नाम द्वितीया पेशी ( ६६ चित्रम् ) अस्थित्रितयात्मकस्य गण्डचक्रस्य आभ्यन्तरप्रदेशात् अधोधारातश्च संभूता अधोहनुकूटस्य वहिःसंलग्ना । सा कर्णमूलच्छदाख्यया प्रावरण्या प्रावृता । सेयं मांसला बलवती च पेशी विशेषात् चर्वणकर्मसहाया भवति । तत्पश्चिमतश्च महान् लालाग्रन्थिः कर्णमूलिको नाम * ।

**हनुमूलकर्षणी** संज्ञे द्वे पेश्यौ--**उत्तरा**[२] **अधरा**[३] चेति । ( ७० चित्रम् ) तयोरुत्तरा जतूकास्थ्नो वृहत्पक्षतेश्चरणस्य च बहिस्तलतो मूलद्वयेन संभूय अधोहनुमुण्डस्य मूले निविशते । अधरा तु जतूकास्थ्नश्चरणान्तरालात्, तालवस्थ्नः, ऊर्द्ध्व हन्वस्थिपिण्डस्य पश्चिमार्बुदाच्च संभूय अधोहनुकोणस्य आन्तरतले संलग्ना । उभे अप्येते चर्वणकर्मसहाये भवतः । प्रच्छन्ने च ते गण्डचक्र-हनुकुन्ताभ्याम् ।

प्रचेष्टन्यो नाड्यस्तु चतसृणामपि अधोहानव्याः शङ्खच्छदादीनां नाम पञ्चमनाड्याः शाखाप्रतानाः ।

( ७ ) प्रतिकर्णं तिस्रः पेश्यो बाह्याः । ताः कर्णपालीं परितः संबद्धाः—**कर्णपूर्विका, कर्णपश्चिमा, कर्णचूड़िका** चेति[४] ( ६८ चित्रम् ) । तासामाद्ययोः प्रभवः करोटिपार्श्ववर्त्तिनी मांसधरा कला, पश्चिमायास्तु शंखास्थ्नो गोस्तनप्रवर्द्धनकम् । तिस्रोऽपि ताः पेश्यो मानुषेषु विलुप्तक्रिया दृश्यन्ते प्रायः[५], पश्वादिषु तु कर्णसञ्चालनकार्याः । प्रचेष्टन्यो नाड्यस्त्वासां वक्त्रनाड्याः प्रशाखाः ।

अपराश्च पञ्चषाः[६] क्षुद्रपेश्यः कर्णपाल्यां दृश्यन्ते । ता अतिक्षुद्रा निष्क्रियाश्चेति नेह वर्ण्यन्ते ।

द्वे चापरे पेश्यौ अन्तःश्रवणेन्द्रियं दृश्येते एकैकतः—ते **पटहोत्तंसनी पर्याणिका** चेति । तद्विस्तरः श्रवणेन्द्रियवर्णने वक्ष्यते ।

( ८ ) जिह्वायां नव पेश्यः । एका मध्यतो जिह्वानिर्माणाय तन्तुगुच्छिका नाम । अपराश्चतस्र एकैकतो जिह्वापार्श्वे संबद्धाः । ताः चिबुकजिह्वाकण्ठिका,

---

१। हनुकूटकर्षणी—Masseter. [ * Parotid Gland ] २। हनुमूलकर्षणी उत्तरा—External Pterygoid, सैव अधरा—Internal Pterygoid. ४। कर्णपूर्विका—Auricularis Anterior ( Attrahens aurem ). । कर्णपश्चिमा—Auricularis Posterior (Retrahens aurem ). । कर्णचूड़िका—Auricularis Supererior (Attolens aurem). ५। क्वचित् मानुषेऽपि सक्रियाः। ६। पञ्च षड् वा परिमाणमासामिति पञ्चषाः।

शिफारसनिका, जिह्वाकण्ठिका, अनुजिह्वाकण्ठिका चेति। तद्विस्तरो रसनावर्णने वक्ष्यते।

(६) गलतालुनि नव पेश्यः। तत्र तालूत्तोलनी, तालूत्तंसनी, तालुजिह्विका, गलतालुका चेति चतस्रः पेश्यः एकैकस्मिन् पार्श्वे, मध्ये त्वेका काकलकिनी नाम। तद्विस्तरो गलतालुवर्णने वाच्यः।

सेयं द्व्यधिकाशीतिः पेशीनां शिरसि व्याख्याता।

अथ ग्रीवापेश्यः।

अशीतिरेकाधिका पेश्यो ग्रीवायाम्। तत्र गलबाह्याः षट्पञ्चाशत्। ताः पञ्चसु प्रदेशेषु विभज्य वर्ण्यन्ते—तद्यथा गलपार्श्वयोश्चतस्रः। गलमूलतः षोड़श। ग्रीवावंशस्य पुरस्तादष्टौ, पार्श्वयोश्चाष्टौ। शिरोग्रीवपृष्ठतो विंशतिरिति। तासु द्वयोः पृष्ठच्छदयोः पृष्ठपेशीषु संख्यानात् इह चतुःपञ्चाशदेव संख्यायन्ते। गलाभ्यन्तर्य्यः पेश्यस्तु स्वल्पाः सप्तविंशतिः। तद्यथा—अन्नमार्गं परितो दश, स्वरयन्त्रं परितश्च सप्तदशेति। एवमेकाधिकाशीतिः साकल्येन ग्रीवापेशीनाम्।

तत्र गलबाह्याः पेश्यः प्रावरणीद्वयेन प्रावृताः। तयोर्बाह्या प्रावरणी गलपार्श्वच्छदया नाम प्रच्छदाकारपेश्या मिलिता। आभ्यन्तरी तु प्रावरणी ग्रीवाप्रच्छदा[१] नाम।

[ सेयं पुरःपश्चिमग्रीवीयाः पेशीः साकल्येनावृणोति, विभजते च ताः पेश्यन्तरालप्रविष्टाभिः कलाभिः। तासाञ्च कलानां मध्ये ग्रीवापार्श्वगेन शाखाद्वयेन आरच्यते कञ्चुकं मातृकाकञ्चुकं[२] नाम। तद्‌ महामातृकाख्यधमन्याः, अनुमन्याख्यसिरायाः, प्राणदाख्यायाः नाड्याश्च एकत्र धारणार्थम्। अथापरं महाकञ्चुकं पुरस्तान्मध्यरेखायां दृश्यं ग्रीवामध्यकञ्चुकं[३] नाम, तत् श्वासान्ननलिकयोः ग्रैवेयग्रन्थेश्च एकत्र धारणाय। तस्य च ग्रीवामध्यकञ्चुकस्य पुरोभागः उर्ध्वहनुपश्चिमदेशात् कर्णमूलान्तं प्रसृतः, सेयं कर्णमूलच्छदा[४] नाम प्रावरणी। अधश्च उरोगुहायां श्वासनलिकायाः पुरस्तात्प्रसृतः स एव हृदयधराख्यकलाकोषस्य बाह्यस्तरेण संसज्यते हृदयस्य बन्धनीभूतः। तत्पश्चिमभागस्तु ग्रीवावंशपुरस्थानां गम्भीरपेशीनामाच्छादनः, सा वंशपुरस्त्या[५] नाम प्रावरणी। सेयमधस्तात्पृष्ठवंशपुरोभागे उरोगुहापश्चिमांशे प्रसृता। ] *

---

१। ग्रीवाप्रच्छदा—Fascia Colli (Deep Cervical fascia.) २। Carotid Sheath. ३। Mid. Cervical Sheath. ४। Parotideo-masscteric fascia. ५। Pre-vertebral fascia. * एते विभागाः शवव्यवच्छेदकाले सम्यग् द्रष्टव्याः।

अथ गलबाह्याः पेश्यः।

(क) गलपार्श्वे एकैकतो द्वे पेश्यौ गलपार्श्वच्छदा, उरःकर्णमूलिका चेति। तत्र—

**गलपार्श्वच्छदा**[1] नाम (६८ चित्रम्) तनुप्रच्छदायता ग्रीवार्धावरणी पेशी अंसोरश्छादिन्याः प्रावरण्याः संभूता, अधोहन्वस्थ्नो निम्नधारायां, सृक्कण्यां, त्वचि च संबद्धा। सेयं गलावरणत्वचः सङ्कोचनं किञ्चिन्मुखव्यादनसहायतां च विदधाति। तस्याः प्रचेष्टनी नाड़ी वक्त्रनाड्याः शाखा।

**उरःकर्णमूलिका**[2] नाम (६८।६६ चित्रम्) पेशी दृढ़पट्टिकासमाकारा स्थूलतिरश्चीना। सा उरःफलकशिखरादक्षकोरःसन्धानाच्च संभूय शङ्खास्थ्नो गोस्तनप्रवर्द्धने पश्चात्कपालस्य उत्तरतोरणिकाबहिरर्द्धे च सन्निविष्टा। सेयं शिरसः पार्श्वतोऽधश्च विवर्त्तनी बलवती पेशी, या दृढ़संकोचेन तिष्ठन्ती मन्यास्तम्भाख्यं रोगं जनयति। तस्याः प्रचेष्टनी नाड़ी नागिनी नाम (एकादशी), ग्रीवावंश-विनिर्गताः कतिचिदपराश्च नाड्यः। तदेतत् गलपार्श्वगं पेशीचतुष्टयं व्याख्यातम्।

(ख) गलमूले एकैकतोऽष्टौ पेश्यः। तद्यथा—(६६।७१।७२ चित्रेषु)

**द्विगुम्फिका**[3] नाम उभयतो गुम्फद्वयवती तनुमध्या पेशी। सा पश्चिम-गुम्फेन शङ्खास्थ्नो गोस्तनप्रवर्द्धनात्, अग्रिमगुम्फेन अधोहन्वस्थ्नश्चिबुकपिण्डाच्च समुत्थिता मध्यभागे कलामयबन्धन्या कण्ठिकास्थिपार्श्वतः संबद्धा। सेयं पाशवद् एकैकतो ग्रीवापार्श्वे लम्बमाना कदाचित् चिबुकमवनमयति, कदाचित् कण्ठिकास्थि-पार्श्वमूर्ध्वं कर्षति। तस्याः प्रचेष्टनी नाड़ी अग्रिमगुम्फं प्रति अधरदन्तिकायाः नाड्याः शाखा, पश्चिमगुम्फं प्रति तु वक्त्रनाड्याः शाखा।

**शिफाकण्ठिका**[4] नाम तन्वी पेशी शंखास्थ्नः शिफाप्रवर्द्धनात्संभूय कण्ठिकास्थ्नो मध्यपिण्डपार्श्वतः संबद्धा, संसज्यते चेयं स्वनाम्ना स्नाय्वा। साऽसौ कण्ठिकास्थ्नः ऊर्ध्वं पश्चाच्च कर्षणी। अनुप्राणिता चेयं वक्त्रनाड़ीशाखया।

**मुखभूमिकण्ठिका**[5] नाम त्रिकोणायता पेशी मुखभूमिनिर्मापिका।

---

१। गलपार्श्वच्छदा—Platysma. २। उरःकर्णमूलिका—Sterno-mastoid. ३। द्विगुम्फिका—Digastric. ४। शिफाकण्ठिका—Stylo-hyoid. ५। मुखभूमिकण्ठिका—Mylo-hyoid.

[ ७१ चित्रम् ]

# गलबाह्याः पेश्यः ( गम्भीराः ) ।




७१ चित्रस्य व्याख्या—१ पृष्ठच्छदा ( मूलम् ) । २ द्विगुम्फिका ( शेषांशः ) । ३ पर्शुकाकर्षणी पुरोगा । ४ पर्शुकाकर्षणी मध्यमा । ५ अंसकण्ठिका ( शेषांशः ) । ६ पृष्ठच्छदा मध्यांशः ।

[ अत्र प्रदर्शिताः काश्चन पेश्यः ६६।७२ संख्यक चित्रयोरपि द्रष्टव्याः ]

[ ७२ चित्रम् ]

# गलमूलपुरोगाः पेश्यः ।




७२ चित्रस्य व्याख्या—१ अंसकण्ठिका शेषांशः ।

सेयमेकैकतः अधोहनुमण्डलस्य आन्तरतिरश्चीनाख्यरेखातः संभूय कण्ठिकास्थि-पिण्डे संबद्धा। सा च अपरपार्श्वस्थया स्वनामिकया पेश्या चिबुकाधः संसक्ता मुखभूमिमध्ये सेवनीमारचयति। तस्याः कार्यं चिबुकानमनं, कण्ठिकास्थिकर्षणं वा। प्रचेष्टनी नाडी अधरदन्तिकायाः शाखा।

**चिबुककण्ठिका**[1] नाम तन्वी पेशी अधोहन्वस्थ्नश्चिबुकपिण्डस्थात् रसनाकलायकात् संभूय कण्ठिकास्थ्नः पुरोभागे संलग्ना इतरपार्श्वस्थया स्वनामिकया पेश्या संसज्यते। तस्याः कार्यं पूर्ववत्। प्रचेष्टनी तु नाडी प्रथमा अनुग्रीविका नाम, जिह्वामूलिन्याः शाखा च।

**उरःकण्ठिका**[2] नाम तन्वी पेशी उरःफलकपृष्ठतः संभूय कण्ठिकास्थ्नि संलग्ना। सा कण्ठिकास्थ्नः अधःकर्षणकार्या। तस्याः प्रचेष्टनी नाड़ी जिह्वामूलिन्याः शाखापाशोत्था प्रशाखा।

**उरोऽवटुका**[3] नाम ह्रस्वायता पेशी उरःफलकशिखरतः प्रथमद्वितीयोप-पर्शुकयोश्च संभूय अवटुसंज्ञकस्य ग्रीवामध्यगतरुणास्थ्नः पार्श्वसंलग्ना, इतरया स्वनामपेश्या संसज्यते। कार्यञ्चास्याः स्वरयन्त्रस्य अधः कर्षणम्। प्रचेष्टनी नाड़ी तु जिह्वामूलिन्याः शाखापाशोत्था प्रशाखा।

**अवटुकण्ठिका**[4] नाम ह्रस्वचतुरस्रा पेशी अवटुसंज्ञकतरुणास्थ्नः संभूय कण्ठिकास्थ्नो महाशृङ्गाधः संलग्ना। कार्यं चास्याः स्वरयन्त्रस्य ऊर्ध्वकर्षणं कण्ठिकास्थ्नः अधःकर्षणं वा। प्रचेष्टनी नाड़ी जिह्वामूलिन्याः शाखा।

**अंसकण्ठिका**[5] नाम दीर्घमांसला पेशी अंसकपालस्य शिरःकोटर-पार्श्वतः संभूय तिर्यग्गता स्तोकेन स्नायुबन्धनेन अक्षकास्थिसंसक्ता, सा तिर्यगूर्ध्वं गत्वा कण्ठिकास्थिपिण्डस्य अधोधारायां निविशते। तस्याः प्रचेष्टनं जिह्वामूलिन्याः नाड्या निम्नगशाखया।

ता एताः षोड़श गलमूलस्थाः पेश्यो व्याख्याताः।

(ग) अथ ग्रीवावंशस्य पुरस्तादेकैकतश्चतस्रः पेश्यो गम्भीराः। (७३ चित्रम्)

ता श्वासान्नमार्गयोः पृष्ठतो वर्त्तन्ते। तासु—

---

१। चिबुककण्ठिका—Genio-hyoid. २। उरःकण्ठिका—Sterno-hyoid. ३। उरोऽवटुका—Sterno-thyroid. ४। अवटुकण्ठिका—Thyro-hyoid. ५। अंसकण्ठिका—Omo-hyoid.

**दीर्घग्रीविका**[१] नाम धनुर्वक्रा मांसला पेशी ग्रीवावंशस्य पार्श्वतः स्थिता। तस्यास्त्रयो भागाः — ऊर्ध्वभागः, अधोभागः, मध्यभागश्चेति। तत्रोर्ध्वभागः तृतीय-चतुर्थ-पञ्चमग्रीवाकशेरुकाणां बाहुप्रवर्धनकेभ्यः संभूय चूड़ावलयाख्यग्रीवाकशेरुपिण्डे तिर्यक् संलग्नः। अधोभागः द्वित्राणां[२] आदिम-पृष्ठकशेरुकापिण्डानां पुरोभागात् संभूय पञ्चमषष्ठग्रीवाकशेरुकयोर्बाहुप्रवर्धनकेषु तिर्यक् संलग्नः। मध्यभागः स्फुटं धनुर्वक्रः चरमग्रीवाकशेरुकात्रयस्य अग्रिमपृष्ठकशेरुकात्रयस्य च पिण्डपुरोभागेभ्यः संभूय द्वितीय-तृतीय-चतुर्थग्रीवाकशेरुपिण्डेषु संलग्नः। सेयं पेशी ग्रीवावंशं पुरो नमयति, विवर्त्तयति च पार्श्वतः स्तोकेन। अस्याः प्रचेष्टनं द्वितीय-तृतीय-चतुर्थी-नामनुग्रीविकाख्यनाड़ीनां पुरःशाखाभिः संपद्यते।

**दीर्घशिरस्का**[३]—(शिरःपूर्वदण्डिका गुर्वी वा) नाम स्थूलमांसलशिरस्का पेशी अधस्तात् तनुशाखाचतुष्टये विभक्ता। सेयं तृतीयादि-षष्ठ्यन्तग्रीवाकशेरुकाणां बाहुप्रवर्धनकेभ्यः संभूय पश्चात्कपालस्य मूलभागे संलग्ना। अस्या अनुप्राणनं प्रथम-द्वितीयानुग्रीविकनाड्योः शाखाभ्यां।

**शिरःपूर्वदण्डिका**[४] —( तदाख्या लघ्वी वा ) नाम ह्रस्वायता पेशी चूड़ावलयाख्य-ग्रीवाकशेरुकापार्श्वतः संभूय पूर्ववदेव संलग्ना पूर्वोक्तायाः पेश्याः पश्चिमतस्तिष्ठति। कार्यं पुनरुभयोरपि शिरसः पुरस्तादवनमनं, किञ्चिद् विवर्त्तनं च। अस्या अप्यनुप्राणनं पूर्ववदेव।

**शिरःपार्श्वदण्डिका**[५]—नाम ह्रस्वायता पेशी चूड़ावलयाख्यग्रीवा-कशेरुकाया बाहुप्रवर्धनात् संभूय पश्चात्कपालस्य मन्याप्रवर्धने संलग्ना। सेयं शिरसः पार्श्वविवर्त्तनी। अनुप्राणिता च सा प्रथम-द्वितीय तृतीयानामनुग्रीविक-नाड़ीनां पुरःशाखाभिः।

(घ) ग्रीवावंशपार्श्वतोऽपि चतस्र एव पेश्य एकैकतः (७३ चित्रम्)। तत्र—

**पर्शुकाकर्षणी**[६]-संज्ञाः तिस्रः पेश्यः—पुरोगा, मध्यमा, पृष्ठगा चेति। सर्वा अपि ताः प्रायस्तृतीयादि-षष्ठ्यन्त-ग्रीवाकशेरुकाणां बाहुप्रवर्धनेभ्यः संभूताः। निविशते तु तासामाद्यपेशीद्वयं प्रथमायां पर्शुकायाम्, अन्त्या तु द्वितीयायाम्।

---

१। दीर्घग्रीविका—Longus colli. २। द्वौ त्रयो वा—इत्यर्थः। ३। दीर्घशिरस्का—Longus Capitis. ४। शिरःपूर्वदण्डिका—Rectus Capitis anterior. ५। शिरःपार्श्व-दण्डिका—Rectus Capitis Lateralis ( or Posterior ). ६। पर्शुकाकर्षणीसंज्ञाः पेश्यः—Scaleni muscles.

( ७३ चित्रम् )

## ग्रीवावंशपुरोगाः पेश्यः ( गम्भीराः )।




अत्र ग्रीवापुरोभागस्था विशेषाः पर्शुकापुरोभागाश्च अपसारिताः।
इह वामार्धे गम्भीरतरो व्यवच्छेदः।

**७३ चित्रस्य व्याख्या**—१। दीर्घग्रीविकाया ऊर्ध्वतिरश्चीनाः शाखाः। २। चूड़ावलयायाः पार्श्वप्रबद्धनम्। ३। पर्शुकाकर्षणी मध्यमा। ४। ग्रीवाकशेरुका ७मी। ५। दीर्घग्रीविकाया अधस्तिरश्चीनाः शाखाः। ६। पर्शुकाकर्षणी पश्चिमा। ७। प्रथमा पर्शुका।

तासां कार्यं स्वनामव्याख्यातम्। प्रचेष्टन्यो नाड्यः अनुग्रीविकाख्यनाडीनां पुरोगाः शाखाः।

**अंसोन्नमनी**[१] नाम पेशी (६९।७१।७८ चित्रेषु) ऊर्ध्वस्थग्रीवाकशेरुकाचतुष्टयस्य बाहुप्रवर्द्धनेभ्यः संभूय अंसफलकस्य वंशानुगधारायां संबद्धा। क्रिया चास्याः स्वनामव्याख्याता। प्रचेष्टनी नाड़ी च पूर्ववत्।

ता एताः षोड़श ग्रीवावंशपुरःपार्श्वगाः पेश्यो व्याख्याताः।

(ङ) शिरोग्रीवपृष्ठतस्तु एकैकतो दश पेश्यः (७४।७५ चित्रयोः)। तद्यथा—

**पृष्ठच्छदा**[२] नाम विपुलायता पृष्ठार्द्धच्छादिनी मांसला पेशी (७५ चित्रम्)। सा इतरया स्वनामिकया संसक्ता चतुरस्रमारचयति शिरोग्रीवांऽसपृष्ठपश्चिमतः। सेयं पेशी प्राधान्येन पृष्ठस्थेति पृष्ठपेशीष्वेव संख्याता। तद्विस्तरश्च तत्रैव वक्ष्यते।

**शिरोग्रीवविवर्त्तिन्यौ**[३] नाम द्वे पेश्यौ –**उत्तरा**[३] **अधरा**[४] चेति (७१ चित्रम्)। ते संमिलिते स्थूलमांसले शिरोग्रीवपृष्ठतो धनुराकारे च दृश्येते। तयोरुत्तरा सप्तमग्रीवाकशेरुकायाः, त्रिचतुराणामुत्तरपृष्ठकशेरुकाणाञ्च कण्टकेभ्यः संभूय ऊर्ध्वं पश्चात्कपालस्य उत्तरतोरणिकाख्य रेखायां, शंखास्थ्नो गोस्तनप्रवर्द्धने च संलग्ना। अधरा तु तृतीयादि-षष्ठ्यन्तपृष्ठकशेरुकण्टकेभ्यः संभूय ऊर्ध्वं द्वित्राणां ग्रीवाकशेरुकानां बाहुप्रवर्द्धनकेषु संलग्ना। उभे अपि ते इतरपार्श्वीयाभ्यां स्वनाम पेशीभ्यां संसक्ते।

कार्यन्तु तयोर्युगपत्प्रचेष्टमानयोः शिरोग्रीवविवर्त्तनम्। इतरपार्श्वीयाभ्यां स्वनामिकाभ्यां सह तु शिरोग्रीवस्य पश्चात्कर्षणम्। प्रचेष्टन्यौ नाड्यौ पुनरुभयोरपि मध्यमपश्चिमानुग्रीविकनाड़ीनां शाखे पार्श्वगे।

**पृष्ठदण्डिका शिरोयुजा**[५] नाम पेशी (७५ चित्रम्) ग्रीवाकशेरुकाणामाद्यपृष्ठकशेरुकाचतुष्टयस्य च बाहुप्रवर्द्धनकेभ्यः, चरमग्रीवाकशेरुकात्रितयस्य सन्धि-

---

१। अंसोन्नमनी—Levator Scapulae. २। पृष्ठच्छदा—Trapezius. ३। शिरोग्रीवविवर्त्तिनी उत्तरा—Splenius Capitis. ४। सैव अधरा—Splenius Cervicis. ५। पृष्ठदण्डिका शिरोयुजा—Longissimus Capitis (Trachelo-mastoid).

[ ७४ चित्रम् ]

# पृष्ठगाः पेश्यः (उत्तानाः)



प्रवर्द्धनकेभ्यश्च सम्भूता, शङ्खास्थ्नो गोस्तनप्रवर्द्धनकस्य पश्चिमतश्च सम्बद्धा । सेयं शिरोग्रीवस्य पश्चात्कर्षणी धारणी च । तस्याः प्रचेष्टनी नाडी अनुग्रीविकानाडीमण्डलस्य शाखा पश्चिमगा ।

**शिरोग्रीवपृष्ठिका**[1] नाम स्थूलशीर्षा तनुपुच्छा पेशी ( ७५ चित्रम् ) सप्तमग्रीवाकशेरुकायाः आद्यपृष्ठकशेरुकाषट्कस्य च बाहुप्रवर्द्धनेभ्यः चतुर्थ-पञ्चम-षष्ठग्रीवाकशेरुकाणां सन्धिप्रवर्द्धनेभ्यश्च सम्भूय पश्चात्कपालस्य तोरणिकाख्य-रेखयोरन्तराले संबद्धा । सेयं शिरोग्रीवस्य पश्चात्कर्षणी विवर्त्तनी च । तस्याः प्रचेष्टन्यो नाड्यः अनुग्रीविकाणामनुपृष्ठिकानाञ्च नाडीनां प्रशाखाः ।

**शिरःपृष्ठदण्डिकाख्ये** पेश्यौ द्वे[2]—**गुर्वी लघ्वी** च (७५ चित्रम्) । ते यथाक्रमं दन्तचूड़ा-चूड़ावलयाख्ययोः ग्रीवाकशेरुकयोः पृष्ठकण्टकाभ्यां सम्भूय क्रमशः स्थूलीभूते पश्चिमकपालस्य अधरतोरणिकोपकण्ठे संबद्धे । कार्यन्त्वनयोः शिरसः पश्चात्कर्षणं किञ्चिद्विवर्त्तनञ्च । प्रचेष्टनी नाड़ी पुनरुभयोरपि कपालमूलिका नाम ।

**उत्तरतिरश्चीना**[3] नाम ( ७५ चित्रम् ) ऊर्ध्वमायताग्रा अधश्च तनुमूला पेशी चूड़ावलयाख्यग्रीवाकशेरुकाया बाहुप्रवर्द्धनादुत्थिता पश्चात्कपालस्य तोरणि-कयोरन्तराले संबद्धा । तस्याः कार्यं प्रचेष्टनी नाड़ी च पूर्ववत् ।

**अधरतिरश्चीना**[4] तु (७५ चित्रम) दन्तचूड़ायाः पृष्ठकण्टकात्संभूय चूड़ा-वलयायाः बाहुप्रवर्द्धने संबद्धा । सेयं ग्रीवावंशोपरि शिरोमात्रस्य पार्श्वतो विवर्त्तनी । प्रचेष्टनी नाड़ी तु तस्या अपि पूर्ववत् ।

**ग्रीवार्द्धपृष्ठिका**[5] नाम ( ७५ चित्रम् ) गण्डूपदगुच्छाकारा चतुर्मूला पञ्चमुखी गम्भीरतमा पेशी ग्रीवावंशपृष्ठपार्श्वतो वर्त्तमाना । सेयम् ऊर्ध्वतनपृष्ठ-कशेरुकापञ्चकस्य बाहुप्रवर्द्धनकेभ्यः संभूय द्वितीयादिपञ्चम्यन्तग्रीवाकशेरुकाणां कण्टकेषु संबद्धा । सा ग्रीवावंशस्य पश्चात्कर्षणी किञ्चिद्विवर्त्तनी च । तस्याः प्रचेष्टनं अनुग्रीविकनाड़ीनां पश्चिमशाखाभिः सम्पद्यते ।

---

१ । शिरोग्रीवपृष्ठिका—Semi-spinalis Capitis (Complexus). २ । शिरःपृष्ठदण्डिका गुर्वी लघ्वी च—Rectus Capitis Posticus—major & minor. ३ । उत्तरतिरश्चीना—Obliquus Capitis Superior. ४ । अधरतिरश्चीना—Obliquus Capitis Inferior. ५ । ग्रीवार्द्धपृष्ठिका—Semispinalis Cervicis.

स्मर्त्तव्यं चास्मिन्प्रसङ्गे कपालमूलिकं[1] नाम त्रिकोणम्। तस्य हि उत्तरबाहुः शिरःपृष्ठदण्डिका गुर्वी। पार्श्वसीमा उत्तरतिरश्चीना। अधोबाहुः अधरतिरश्चीना।

अस्य च त्रिकोणस्य भूमिः आद्यग्रीवाकशेरुकयोरन्तरालस्था स्नायुपट्टिका दन्तचूड़ायाः पश्चिमाद्धश्च। तस्मिंश्च त्रिकोणे दृश्या--मस्तिष्कमातृका नाम धमनी प्रथमानुग्रीविका नाड़ी च। छाद्यते च तत् मेदःपुञ्जेन शिरोग्रीवपृष्ठिकया च पेश्या।

ता एताः शिरोग्रीवपृष्ठस्थाः पेश्य उभयतो विंशतिर्व्याख्याताः।

अथ गलाभ्यन्तरस्थाः पेश्यः।

ताः अन्नमार्गं परितः स्थिता दश, स्वरयन्त्रीयाश्च सप्तदशेति समष्ट्या सप्तविंशतिसंख्याः। तत्र अन्नमार्गं परितः एकैकतः पञ्च, यथा—कण्ठसङ्कोचनी[2] संज्ञाः ( अधरा, उत्तरा, मध्यमा चेति ) तिस्रः, शिफागलान्तरीया[3], पटहोत्तंसनी[4] चेति द्वे।

स्वरयन्त्रं परितः सप्तदश पेश्यः[5]। तासां श्वासमार्गद्वारिण्यो नव यथा—एका मध्ये घाटान्तरीया नाम, चतस्रश्च एकैकतः—कृकाटघाटिके द्वे ( पश्चिमा पार्श्वगा चेति ), स्वस्तिकघाटिका, गोजिह्वाघाटिका चेति एकैकेति। स्वरतन्त्रीपेश्यश्च अष्टौ। यथा—अवटुघाटिका, अवटुकृकाटिका, अवटुगोजिह्विका, अनुतन्त्रिका चेति एकैकतश्चतस्रः।

तासां विस्तरः अन्नमार्गप्रसङ्गे स्वरयन्त्रवर्णने च वक्ष्यते।

इति द्वितीयोऽध्यायः।

---

१। कपालमूलिकं त्रिकोणम्—Sub-occipital triangle. २। Constrictors of Pharynx—Superior, Middle & Inferior. ३। Stylo-pharyngeus ४। Tensor tympani. ५। आसां पेशीनां आंग्लभाषीय संज्ञाः स्वरयन्त्रवर्णने द्रष्टव्याः।

# अथ तृतीयोऽध्यायः ।

## अथातो मध्यकायपेशीवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु एकादशोत्तरं शतं पेश्यो मध्यकाये । तासां सप्तसु स्थानेषु विभागः । तद्यथा—विंशतिः पृष्ठे (तासु द्वादश उत्तानाः, अष्टौ गम्भीराः, ताश्च पृष्ठवंशमुभयतो द्रष्टव्याः)। षट् कटिमुभयतः । चतुःपञ्चाशदुरसि । द्वादश उदरे । दश श्रोणिचक्रेऽभ्यन्तरतः । सप्त उपस्थमूले । द्वे च गुदं परितः—इति ।

पृष्ठपेश्यश्चेह शिरोग्रीवपश्चिमपेशीवर्जं वर्ण्यन्ते । वहिःश्रोणिप्रभवाश्च पेश्यो नेह गृह्यन्ते, तासाम् अधःशाखोपयोगित्वाद् विशेषतस्तत्रैवोपदेशः ।

### अथ पृष्ठपेश्यः ।

तासाञ्चायं स्तरविभागः । प्रथमस्तरे द्वे द्वे पृष्ठार्धच्छादिन्यौ पेश्यौ एकैकतः—पृष्ठच्छदा, कटिपार्श्वच्छदा चेति । द्वितीयस्तरेऽपि द्वे द्वे—अंसापकर्षणी लघ्वी गुर्वी चेति । तृतीयस्तरेऽपि द्वे द्वे—पश्चिमारित्रा उत्तरा अधरा चेति । चतुर्थस्तरे एकैव एकैकतो बहुशाखा—त्रिकपृष्ठिका नाम । पञ्चम-स्तरे द्वे द्वे—अर्धपृष्ठिका, मेरुधारिणी चेति । षष्ठस्तरे पुनरेकैका बहुमूला—मेरुविवर्त्तनिका नाम । तत्र आद्यस्तरत्रयस्था उत्तानाः, अन्त्यस्तरत्रयस्थास्तु गम्भीराः इत्युच्यन्ते ।

तत्र उत्तानपृष्ठपेश्यो यथा—( ९४ चित्रम् )।

( प्रथमस्तरे ) **पृष्ठच्छदा**[१] नाम विशालायतमांसला पृष्ठदेशस्य उत्तरार्ध-च्छादनी पेशी त्रिकोणाकारा । सा इतरया स्वनामिकया संसक्ता चतुरस्राकारा दृश्यते ग्रीवांऽसपृष्ठपश्चिमतः । साऽसौ पश्चिमकपालस्य उत्तरतोरणिकातः, ग्रीवाधराख्यस्नायुरज्ज्वाः, सप्तमग्रीवाकशेरुकायाः सकलपृष्ठकशेरुकाणाञ्च पृष्ठ-कण्टकेभ्यः सम्भूय, परितः प्रसरन्ती अक्षकास्थ्नः पश्चिमधारार्धे अंसफलकस्य कूट-प्राचीर-पश्चिमधारासु च निविशते, विवर्त्तते च अंसप्राचीरमूले श्लेष्म-धरकलापुटकव्यवधानेन । कार्यञ्चास्या एकाकिन्याः शिरसोंऽसफलकस्य च पृष्ठवंशं प्रति कर्षणम्, स्वनामिकया मिलितायास्तु अंसशिरसोः पश्चात्

---

१ । पृष्ठच्छदा—Trapezius.

# शिरोग्रीव-पृष्ठगाः पेश्यः ( गम्भीराः )।




[वामार्धे गम्भीरव्यवच्छेदेन दर्शिताः गम्भीरपेश्यः ]

पश्चात्कर्षणम्। अस्याः प्रचेष्टनं नागिन्याख्यनाड्याः तृतीयचतुर्थ्यारनुग्रीविकयोः शाखाभ्याञ्च।

**कटिपार्श्वच्छदा**[1] नाम पेशी (७४ चित्रम्) विशालायतमांसला पृष्ठाऽधरार्धस्य कटिपार्श्वस्य च च्छादिनी। सा निम्नस्थपृष्ठकशेरुकाषट्कस्य कटिकशेरुकापञ्चकस्य त्रिकास्थनश्च पृष्ठकण्टकेभ्यः, श्रोणिफलकस्य जघनचूड़ातश्च कलामयैर्मूलैः संभूय तिर्यगूर्ध्वं गत्वा अंसफलकस्य अधःकोटौ त्रिचतुरनिम्नपर्शुकापार्श्वेषु च संबद्धा प्रगण्डास्थनः पिण्डकान्तरीयपरिखायाः अन्तस्तटे निविशते स्थूलायतेन कण्डराग्रेण। सेयमेकाकिनी संकुचिता स्वपार्श्वस्थबाहोः पश्चादधश्च कर्षणी, स्वसंज्ञया मिलिता तु उभयोरपि बाह्वोः पश्चादाकर्षणी उरोविस्तारणी च। वृक्षाद्यारोहणे स्थिरीकृतबाहोः पुरुषस्य शरीरनिम्नार्धकर्षणी च सैव। तस्याः प्रचेष्टनी नाड़ी द्वितीया अन्वंसिका नाम।

(द्वितीयस्तरे) **अंसापकर्षणी**[2] **लघ्वी गुर्वी** चेति एकैकतो द्वे पेश्यौ (७३ चित्रम्) पृष्ठवंशांऽसफलकयोरन्तरालस्थे चतुरस्राकारे। तयोर्लघ्वी ग्रीवाधराख्यस्नायुरज्ज्वाः, अन्तिमग्रीवाकशेरुकायाः प्रथमपृष्ठकशेरुकायाश्च पृष्ठकण्टकाभ्यां संभूय अंसफलकवंशानुगधाराया मध्यभागे संबद्धा। अंसापकर्षणी गुर्वी तु द्वितीयादिपञ्चम्यन्तपृष्ठकशेरुकाकण्टकेभ्यः संभूय अंसफलकस्य वंशानुगधारायाः निम्नार्धे संबद्धा। अनयोश्च कार्यम् अंसफलकस्य ऊर्ध्वं पश्चाच्च कर्षणम्। प्रचेष्टनी नाड़ी तु अनुग्रीविकायाः पञ्चम्याः शाखा अंसपृष्ठगा नाम।

[अन्याऽपि चात्र दृश्यते पेशी **अंसोन्नमनी**[3] नाम। सा प्राधान्याद् ग्रीवापेशीषु वर्णिता संख्याता चेति नेह पुनर्गण्यते।]

(तृतीयस्तरे) **पश्चिमारित्रा**[4] **उत्तरा, अधरा** चेति द्वे द्वे तनुचतुरस्रे गम्भीरपेश्यौ एकैकस्मिन् उरःपार्श्वे पश्चात्। तयोरुत्तरा ग्रीवाधराख्यस्नायुरज्ज्वाः, सप्तमग्रीवाकशेरुकायाः, द्वित्राणाम् उत्तरपृष्ठकशेरुकाणां च पृष्ठकण्टकेभ्यः संभूय २।३।४।५ पर्शुकाणां पश्चिमार्धेषु चतुर्भिर्मुखैः संबद्धा। अधरा तु अन्तिमपृष्ठकशेरुकाद्वयस्य आद्यकटिकशेरुकात्रयस्य च पृष्ठकण्टकेभ्यः संभूय अन्तिमपर्शुका-

---

१। कटिपार्श्वच्छदा—Latissimus Dorsi. २। अंसापकर्षणी लघ्वी गुर्वी च—Rhomboideus—minor and major. ३। अंसोन्नमनी—Levator Scapulae. सेयं १८ पृष्ठे वर्णिता ४। पश्चिमारित्रा उत्तरा अधरा च—Serratus Posticus—Superior and Inferior. अग्रिमारित्रा तु उरःपेशीषु वर्णनीया।

चतुष्टयस्य पश्चिमार्धेषु चतुर्भिर्मुखैः संबध्यते। कार्यं पुनरुत्तरायाः स्वसम्बद्धपर्शुकाणामूर्ध्वाकर्षणमुच्छ्वासकाले, अधरायास्तु स्वसंबद्धपर्शुकाणामवनमनं निःश्वासकाले। प्रचेष्टन्यो नाड्यस्तु उत्तरायाः उत्तरा, अधराया अधरा अनुपृष्ठिका नाम।

ता एताः एकैकतः षड़िति कृत्वा द्वादश उत्तानाः पृष्ठपेश्यो व्याख्याताः।

तासां च विभागकरी दृढशुभ्रा गम्भीरप्रावरणी अधःस्था कटिपृष्ठप्रच्छदा नाम। सा कटिपेशीव्याख्याने व्याख्येया।

( चतुर्थ स्तरे ) गम्भीरपृष्ठपेशीषु प्रधानभूता स्थूलमांसला पेशी एकैका **त्रिकपृष्ठिका**[1] नाम कटिपृष्ठधारिणी (७५ चित्रम्)। सेयं त्रिकास्थ्नः कटिकशेरुकापञ्चकस्य चरमपृष्ठकशेरुकाद्वयस्य च पृष्ठकण्टकेभ्यः, त्रिकास्थिपक्षतः, जघनचूड़ापश्चार्धाच्च स्थूलायतमूलैः संभूय ग्रीवाभिमुखं प्रसृता त्रिभिर्भागैः। तस्या (१) आद्यो भागो माध्यसीमानुगतः पृष्ठवंशानुक्रमेणा तिष्ठते धनुर्वक्रः, संबध्यते चासौ सकलपृष्ठकशेरुकाणां कटिकशेरुकाद्वयस्य च पृष्ठकण्टकेषु। सोऽयम् अनुवंशभागः[2] पृष्ठवंशानुगत्वात्। (२) मध्यो भागः क्रमेण हीयमानाग्रः सर्वासामपि कटिपृष्ठकशेरुकाणां बाहुप्रवर्धनेषु पर्शुकादशकमूलेषु च संबद्धः, स मध्यपृष्ठिको[3] नाम, तस्य द्वावंशौ— पृष्ठगो ग्रीवागश्चेति। (३) चरमस्तु भागो बाह्यतमः पार्श्वसीमानुगः, सर्वासामपि पर्शुकाणां कोणेषु संबद्धः, सोऽयम् अनुपार्श्विको[4] नाम। तस्य त्रयोंऽशाः,—कटिगः, पृष्ठगो ग्रीवागश्चेति।

कार्यं पुनस्त्रिकपृष्ठिकायाः पृष्ठवंशस्य धारणं पश्चात्कर्षणञ्च सर्वैर्भागैः। मध्यभागेन पुनः पर्शुकाकर्षणेन उच्छ्वास-सहायताकरणं च। अस्याः प्रचेष्टन्यो नाड्यः अनुपृष्ठिकानामनुकटिकानाञ्च नाड़ीनां शाखाः।

( पञ्चमस्तरे ) द्वे द्वे पेश्यौ एकैकतः—उत्तरार्धे पृष्ठार्धपृष्ठिका, अधरार्धे मेरुधारिणी चेति। तत्र—

**पृष्ठार्धपृष्ठिका**[5] नाम तन्वी पेशी ( ७५ चित्रम् ) पञ्चम्यादि-द्वादश्यन्तपृष्ठकशेरुकाणां बाहुप्रवर्धनेभ्यः संभूय चरमग्रीवाकशेरुकाद्वयस्य आदिमपृष्ठकशेरु-

---

१। त्रिकपृष्ठिका—Sacro-spinalis. २। तस्या अनुवंश-भागः—Spinalis Dorsi. ३। मध्यपृष्ठिक भागः ( ग्रीवागः, पृष्ठगश्च )—Longissimus Dorsi & Cervicis ; ४। अनुपार्श्विक भागः—( ग्रीवागः, पृष्ठगः, कटिगश्च )—Ileo-costalis—Lumborum, Dorsalis & Cervicis. ५। पृष्ठार्धपृष्ठिका—Semispinalis Dorsi.

चतुष्टयस्य च पृष्ठकण्टकेषु संलग्ना। इयमपि पूर्ववत्कार्या, अनुपृष्ठिकाख्यनाडीशाखाभिरनुप्राणिता च।

**मेरुधारिणी**[1] नाम बहुशाखा मांसला पेशी (७५ चित्रम्) त्रिकपृष्ठवंशयोः पृष्ठकण्टकश्रेण्या एकैकतो वर्त्तमाना तत्पार्श्वस्थखाताऽपूरणी। सेयं कशेरुकाणां पृष्ठकण्टकेषु, बाहुप्रवर्धनकेषु, तदन्तरालेषु, श्रोणिफलकस्य पश्चिमोर्ध्वकूटे च संबद्धा। तस्याश्च शाखाः अधोऽधःस्थित-द्वित्र-कशेरुकाणां पार्श्वतः संभूय उत्तरोत्तरत्रिचतुरकशेरुकाणां पृष्ठकण्टकेषु निविशन्ते इति विचित्राऽस्याः प्रभवनिवेशशृङ्खला। कार्यं चास्याः पृष्ठवंशस्य धारणं किञ्चिद्विवर्त्तनञ्च। प्रचेष्टन्यो नाड्यस्तु पूर्ववत्।

(षष्ठस्तरे) एकैका पेशी एकैकार्धे मेरुधारिण्याच्छादिता असंख्यप्रायशाखा, सेयं **मेरुविवर्त्तनिका**[2] नाम। तस्याः प्रधानाः शाखाः अधोऽधःकशेरुकाणां बाहुप्रवर्धनकेभ्यः संभूय उत्तरोत्तरकशेरुपत्रकेषु मीनशल्कवत् परस्पराच्छादनेन संबद्धाः सर्वास्वपि पृष्ठकशेरुकासु, नान्यत्र। अपराश्च शाखाः पृष्ठकण्टकान्तरालेषु बाहुप्रवर्द्धनान्तरालेषु च संबध्यन्ते। सेयं शाखाबाहुल्यदर्शनात् शाखासंख्याभिः संख्यायते कैश्चित्। इह तु लाघवादेकैवोच्यते। कार्यञ्चास्याः स्वनामव्याख्यातं, प्रचेष्टन्यो नाड्यस्तु पूर्ववदेव।

### अथ कटिपेश्यः।

कटिपेश्यस्तावत् तिस्र एकैकतः। कटिपार्श्वे—कटिचतुरस्रा, कटिवंशपुरस्तात् कटिलम्बिनी दीर्घा, ह्रस्वा चेति। कटिपार्श्वच्छदाख्या पेश्यपि कटिपृष्ठपार्श्वच्छादिनी, सा नेह गण्यते पृष्ठपेशीषु गणितत्वात्। द्रष्टव्या चात्र कटिपृष्ठार्द्धच्छादिनी दृढस्नायुमयी सुगम्भीरा प्रावरणी कटिपृष्ठप्रच्छदा[3] नाम। तस्यास्त्रयो भागाः—पुरोभागो, मध्यभागः, पश्चिमभागश्चेति। तत्र पुरोभागः कटिकशेरुकाबाहुप्रवर्द्धनानां मूलेषु संबद्धः, मध्यभागस्तदग्रेषु। ताभ्याञ्च निर्मीयते कटिचतुरस्राख्यपेश्याः कञ्चुकम्। पश्चिमभागः पुनर्गम्भीरः पृष्ठपेशीनां सन्धारणः, स कटिकशेरुकाणां पृष्ठकण्टकेषु संबद्धः। साऽसौ दृढप्रावरणी मध्यमचरमयोरुदरच्छदाख्यपेश्योः पश्चिममूलभूतेति विशेषेण स्मर्त्तव्या।

---

१। **मेरुधारिणी**—Multifidus Spinæ. २। **मेरुविवर्त्तनिका**—Rotatores—Inter-spinalis and Inter-transversalis. ३। **कटिपृष्ठप्रच्छदा प्रावरणी**—Lumbo-dorsal Fascia.

( ७६ चित्रम् )

## कटि-जघनोदरीयाः पेश्यः ।

( उदर्य्ययन्त्रादीनामपसारणेन दर्शिताः )




**७६ चित्रस्य व्याख्या**—१। कटिलम्बिनी दीर्घा। २। श्रोणिपक्षिणी। ३। शुण्डिका। ४। श्रोणिगवाक्षिणी वहिःस्था। ५। कटिलम्बिनी दीर्घा (कर्त्तितांशः)। ऊ० ऊर्वस्थि।

तत्र—**कटिचतुरस्रा**[१] नाम चतुरस्रप्राया मांसला पेशी (७६ चित्रम्) एकैकतः कटिपार्श्वे। सा पूर्वोक्तकटिजघनिकाख्यस्नायुरज्ज्वाः श्रोणिफलकस्य जघनचूडातश्च संभूय द्वादश्यां पर्शुकायाम्, आदिमकटिकशेरुकाचतुष्टयस्य बाहुप्रवर्द्धनेषु च सन्निविष्टा। सेयं बृहदन्त्रस्य वृक्कस्य च पश्चिमतोऽवस्थिता, महाप्राचीराख्यपेश्याः बहिस्तोरणोत्सङ्गनिर्गता कटिलम्बिन्याख्यपेश्याः बहिःसीम्नि दृश्या। अस्याः कार्यमुच्छ्वासकर्मणः सहायताकरणं, चरमपर्शुकाकर्षणेन महाप्राचीरामूलधारणेन च। प्रचेष्टन्यो नाड्यः द्वादश्या औरसनाड्याः प्रथमद्वितीययोरनुकटिकनाड्योश्च शाखाः।

**कटिलम्बिनी दीर्घा ह्रस्वा**[२] चेति द्वे पेश्यौ (७६ चित्रम्) करिशुण्डाकारे कटिवंशपार्श्वतः उदरगुहायाः पश्चिमसीम्नि वर्त्तेते। तयोः दीर्घा पेशी चरमपृष्ठकशेरुकायाः कटिकशेरुकापञ्चकस्य च पिण्डपुरोभागाद् बाहुप्रवर्द्धनेभ्यश्च संभूय तिर्यगधोगता महाप्राचीराया अन्तस्तोरणात् ततः श्रोणिपक्षिण्याख्यपेश्याः कण्डरया संमिलितमूला सा ऊर्वस्थ्नो लघुशिखरके निविशते। ह्रस्वा कटिलम्बिनी तु तदुत्सङ्गवर्त्तिनी तत्प्रभवैकदेशप्रभवा च। सा श्रोणिफलकस्य जघनकपालमूले वस्तिकण्ठिकैकदेशे निविष्टा। अनयोश्च कार्यं मध्यकायस्य अधोनमनमूर्ध्वकर्षणं वा। प्रचेष्टन्यौ नाड्यौ द्वितीया तृतीया च अनुकटिका नाम।

इदञ्च पेशीत्रितयं उदरगुहाव्यतिकरेण उदर्याख्यमहाकलयाच्छादितम् उदरगुहायाः बाह्यपश्चिमसीमभूतम्। कटिलम्बिन्याख्य पेश्योः पुरस्ताच्च दृश्या उदराभ्यन्तरत इमे विशेषा वामतः—वाम वृक्कः साधिवृक्कः, सिराधमन्यश्च तत्संबद्धाः, वामा गवीनी[३], ऊरुवृषणिका नाडी, अन्याश्च सिराधमन्यादयः। दक्षिणतस्तु ता एव, अधरा महासिरा च।

### अथ उरःपेश्यः।

उरःपेश्यस्तावत् चतुःपञ्चाशदित्युक्तम्। तत्र उरःपुरःस्था एकैकतस्तिस्रः—अक्षकाधरा, उरःप्रच्छदा गुर्वी लघ्वी चेति। उरःपार्श्वे च एकैका—अग्रिमारित्रा नाम। द्वादशानां पर्शुकानामन्तरालस्थिताश्च एकैकतः—एकादश बहिःस्थाः, एकादश चान्तःस्था इति साकल्येन द्वाविंशतिः। आसां समष्टिरुभयतः संख्यानेन

---

१। **कटिचतुरस्रा**—Quadratus Lamborum. २। **कटिलम्बिनी दीर्घा ह्रस्वा च**—Psoas magnus and parvus, ३। **गवीनी नाम मूत्रवहा नालिका, या वृक्काद्विनिर्गत्य वस्तिपार्श्वं प्रतिबद्धा**—Ureter.

द्व्यधिकपञ्चाशत् द्वे चापरे एकाकिन्यौ – उरःफलकपृष्ठेऽभ्यन्तरतः उरस्त्रिकोणिका, उदरोरसोर्मध्ये महाप्राचीरा चेति । ता एताश्चतुःपञ्चाशद् उरःपेश्यो निर्दिष्टाः । तत्र—

**अक्षकाधरा**[1] नाम तन्वी पेशी प्रथमपर्शुकोपपर्शुकयोः संधानस्थानात् संभूय तिर्यग्गता अक्षकास्थ्नोऽधस्तले संबद्धा । सेयं अंसफलकसंहितस्य अक्षकास्थ्नः अवनमनादंसावनमनकार्या । अस्याः प्रचेष्टनं पञ्चमषष्ठयोरनुग्रीविकयोः शाखाभ्याम् ।

( ७७ चित्रम् )

## उरःपेश्यः ( उत्ताना: )




---

१ । **अक्षकाधरा**—Sub-clavius.

**उरश्छदा गुर्वी**[1] नाम स्थूलमांसला तालवृन्ताकारा पेशी उरसः पुरोभागार्द्धच्छादिनी (७७ चित्रम् )। सेयमक्षकास्थ्नो माध्यार्द्धाद् उरःफलकपार्श्वाच्च पञ्चषेभ्य उपपर्शुकाभ्यः संभूय क्रमशः संव्यूढ़ा प्रगण्डास्थ्नः पिण्डकद्वयान्तरीय-परिखाया बहिस्तटे निविशते । तस्याः कार्यमालिङ्गनादौ बाह्वोः संव्यूहनं, वृक्षारोहणादौ तु स्थिरीकृतबाहोः पुरुषस्य मध्यकायोत्कर्षणञ्च । व्यायामोपचित-गात्रस्य च पुंसः इयमेव पेशी एकैकतो वक्षसि स्थूलोन्नतायता दृश्यते । प्रचेष्टनं त्वस्या 'औरसी' संज्ञाभ्यामग्रिम-मध्यमनाडीभ्याम् ।

**उरश्छदा लघ्वी**[2] नाम त्रिकोणाकारा स्थूलामांसला पेशी (७८ चित्रम् ) पूर्वोक्तायाः पश्चिमतो निगूढ़ा । सेयं तृतीय-चतुर्थ-पञ्चमीनां पर्शुकानां पुरोभागात् संभूय तिर्य्यग्गता अंसफलकस्य अंसतुण्डपुरोधारायां निविशते । अस्याः कार्यम् अंसावनमनं, स्थिरांसस्य पुंसो मध्यकायोत्कर्षणं वा । श्वासकष्टे सति स्थिरीकृत-बाहोः पुरुषस्य उभाभ्यामपि उरःश्छदाभ्यां उरःकर्षणादुच्छ्वासकर्मसहायता संपाद्यते ।

**अग्रिमारित्रा**[3] महारित्रा वा नाम ( ७७।७८ चित्रम् ) अरित्राकारमुखी प्रच्छदायता पेशी अंसफलकोरःपञ्जरयोन्तराले वर्त्तते । सेयं पार्श्वदेशे अष्टाभ्य अग्रिमपर्शुकाभ्य अरित्राकारैर्मूलैः संभूय तिर्य्यक् पश्चात्प्रसृता अंसफलकस्य वंशानुग-धारायाः पुरःसीम्नि संबद्धा । तस्याः कार्यमंसफलकस्य पश्चादूर्ध्वं च कर्षणम् । स्थिरांसस्य तु पुंसः पर्शुकोत्कर्षणम् । इयमेव पेशी पशूनां मध्यकायमग्रिम-पादयोर्मध्ये समवलम्बयते । अस्याः प्रचेष्टनी नाडी—दीर्घा औरसी नाम ।

**पर्शुकान्तरिकाः** नाम तनुह्रस्वायताः पेश्यो द्वादशानामपि पर्शुकानाम-न्तरालस्थाः ( ७७।८० चित्रयोः )। ता उरःपञ्जरस्य एकैकार्धे एकादश बहिःस्थाः, तावत्यश्च अन्तस्थाः इति समुच्चयेन द्वाविंशतिः । तत्र—

**बहिःस्थाः पर्शुकान्तरिकाः**[4] सर्वासां पर्शुकानामधोधारातः संभूय अधोऽधःस्थानां पर्शुकानामूर्ध्वधारासु निविशन्ते । तासां तन्तवः पुरस्तिरश्चीनाः ।

**अन्तःस्थाः पर्शुकान्तरिकाः**[5] पुनः पर्शुकानामधोधारास्थेभ्यः परिखा-न्तरतटेभ्यः उपपर्शुकाभ्यश्च संभूय अधोऽधः पर्शुकोपपर्शुकानामूर्ध्वधारासु संबद्धाः ।

---

१। उरश्छदा गुर्वी—Pectoralis major. २। उरश्छदा लघ्वी—Pectoralis minor.
३। अग्रिमारित्रा—Serratus Anterior ( Serratus magnus ). अरित्रं करपत्रम् ( Saw ).
४। पर्शुकान्तरिका बहिःस्था—Intercostal External. ५। पर्शुकान्तरिका अन्तःस्थाः—Intercostal Internal.

( ७८ चित्रम् )

## मध्यकायपुरःस्थाः पेश्यः ( गम्भीराः )।




[ १ गुर्व्या उरश्छदायाः कर्त्तित-कण्डरा, २ अंसाधरिका गुर्वी ]

तासां तन्तवः पश्चिमतिरश्चीनाः । अन्तर्बहिःस्थानां पर्शुकान्तरिकाख्य पेशीनामन्तरालस्थासु पर्शुकानुगाख्यपरिखासु च दृश्यन्ते तदाख्याः सिरा-धमनी-नाड्यः । संपद्यते च ताभिरेव पोषणं प्रचेष्टनं च पर्शुकान्तरिकाणां पेशीनाम् । कार्यन्तु तासामुरःपञ्जरस्य धारणम्, उच्छ्वासनिःश्वासकाले प्रचलन्तीनां पर्शुकोपपर्शुकानां संयमनञ्च । केचित्तु मन्यन्ते —ताभिर्बहिःस्थाभिः पर्शुकोत्कर्षणम्, अन्तःस्थाभिश्च पर्शुकावनमनं उच्छ्वास-निःश्वासकाले भवत्येव स्तोकेनेति ।

**उरस्त्रिकोणिका**[1] नाम एकाकिनी पेशी उरःफलकस्य पश्चादुभयतो निगूढ़ा त्रिकोणाकारा उरःफलकनिम्नार्धसंभवा । सा मध्यरेखामुभयतस्तिर्यक्प्रसृता द्वितीयादिषष्ठ्यन्तानामुपपर्शुकानां पृष्ठतो निविशते पञ्चषै[2]रग्रैः । साऽसौ सोपपर्शुकस्य उरःफलकस्य अन्तराकर्षणी निःश्वासकाले । अनुप्राण्यते च सा पर्शुकानुगाभिरेव नाड़ीभिः ।

**महाप्राचीरा**[3] नाम (७६ चित्रम्) उरोगुहाभूमिभूता उदरगुहाच्छदिभूता च विशालसर्पफणायता पेशी या मध्येकोष्ठमवतिष्ठते । सेयमूर्ध्वं कूर्मपृष्ठा, अधस्तात् कोरोदरा, मध्यभागे तु समतलप्राया । सा समन्तात् परिधौ मूलभागे च मांसमयी, अर्धचन्द्राकारेण त्रिपत्राकारेण दृढ़कलामयेन मध्यभागेनोपलक्षिता च । तत्र परिधिभागो मूलद्वयञ्चास्याः प्रभवस्थानम्, मध्यभागस्तु कलामयो निवेश इति वैचित्र्यम् । अतश्च परिधौ मूलयोश्च सङ्कोचं भजन्तीयं पेशी मध्यभागं परिधिञ्च बलादधः कर्षतीति क्रियावैशेष्यमस्याः ।

स चास्याः परिधिः पुरस्तादग्रपत्राख्ये उरःफलकनिम्नस्थे तरुणास्थिन तदेकैकतश्च षट्सु सप्तसु वा निम्नपर्शुकासु तदुपपर्शुकासु च संबद्धः । मूलद्वयं चास्याः मांसस्नायुभूयिष्ठं संबध्यते पश्चिमतस्त्रिषु अग्रिमकटिकशेरुकापिण्डेषु । तत्र वामं मूलं तनुह्रस्वं आद्यकटिकशेरुद्वये संलग्नं, दक्षिणं तु स्थूलदीर्घं कटिकशेरुकात्रये । एकैकतश्च मूलद्वयस्य द्वे द्वे तोरणे दृढ़स्नायुसूत्रमये, ते अपि महाप्राचीरायाः प्रभवभूते । तत्र पृष्ठवंशसंलग्नमन्तःसीम्नि अन्तस्तोरणं, बहिःसीम्नि बहिस्तोरणम् । तयोराद्यं अग्रिमकटिकशेरुकायाः पिण्डादारभ्य वक्रीभूय बाहुप्रवर्धनान्तं गतं, तेन निर्गच्छति दीर्घा कटिलम्बिनी नाम पेशी । अन्त्यं (बहि-

---

१। उरस्त्रिकोणिका—Transversus Thoracis ( Triangularis Sterni ). २। पञ्चः षट् वा परिमाणमेषामिति पञ्चषाः । बहुव्रीहिनिष्पन्नोयं प्रसिद्ध प्रयोगः । समासान्तोऽकारः । एवं द्वित्राः त्रिचतुराः इत्यादि प्रयोगाः । ३। महाप्राचीरा—Disphragm.

स्तोरणम् ) पूर्वोक्तबाहुप्रवर्धनाद् वक्रीभूय द्वादशपर्शुकान्तं यावत्प्रसृतं, तेन निर्गच्छति तत्पार्श्वगा कटिचतुरस्रा पेशी, महानाड़ी च ईड़ापिङ्गलयोरन्यतरा ( वामेन ईड़ा, दक्षिणेन पिङ्गला )।

( ७१ चित्रम् )

## महाप्राचीरा पेशी।




[ क—महाप्राचीराया दक्षिणांशः। ख—तस्या एव वामांशः ]

**महाच्छिद्राणि** चात्र पेश्यां त्रीण्येव पश्चिमतः। तद्यथा—किञ्चिद्-दक्षिणतो महासिराच्छिद्रम्, तद् अधरमहासिराया उरोगुहा प्रवेशाय। मध्यरेखायाम् ऊर्ध्वभागे अन्ननालविवरम्, तद् अन्ननालस्य आमाशयप्रवेशाय ; अधोभागे महाधमनोच्छिद्रम् मूलद्वयान्तरालस्थं, तद् महाधमन्या उदरगुहाप्रवेशाय।

अत्रेमे विशेषाः। आद्येन छिद्रेण अधरां महासिरामनुगच्छति अनुकोष्ठिकाख्य-नाड्याः शाखा। अन्त्येन महाधमन्याः पार्श्ववर्त्तिनी दक्षिणा पुरोवंशिका नाम सिरा, मुख्या रसकुल्या च। मूलद्वयं च महाप्राचीराया निर्भिद्य गताश्चतस्रो मणिपूरिकाख्या नाड्यः, वामा च पुरोवंशिकाख्या सिरा। परितश्च महाच्छिद्राणि दृश्यन्ते संदंशाकारास्तिरश्चीना मांसतन्तवः, ते अन्ननालादीनां दृढधारणाय।

व्यतिकरः[१] पुनर्महाप्राचीराया इत्थं दृश्यः। तस्या ऊर्ध्वतले उभयतः संसज्येते फुस्फुसधराख्य कलाकोषयोः[२] परिसरीयभागौ, मध्ये तु पेशीकेन्द्रस्थे कलामयपत्रके हृदयधराख्यकलाकोषस्य मूलम्। अधस्तलं पुनरस्याः उदरधराख्य-कलया भूम्ना समाच्छन्नम्। तदुत्सङ्गे दक्षिणतो यकृद्दक्षिणपिण्डं, दक्षिणवृक्क-शिखरञ्च साधिवृक्कम्। वामतो यकृद्वामपिण्डं, आमाशयशीर्षकं, प्लीहा, वामवृक्कस्य शिखरं च साधिवृक्कम्।

कार्यं तावन्महाप्राचीरायाः प्राधान्येन श्वासवायोराकर्षणसाधनम्। तच्चेत्थं संपद्यते—परिधिमूलसङ्कोचेन अधोऽवनमितेयं पेशी उरोगुहायतनं वर्धयति, तेन अवकाशलाभात् स्वतः प्रविशता श्वासवायुना स्फारीभवतः फुस्फुसाविति। दीर्घश्वासग्रहणे तु तत्सहायकीभवन्ति अपरा अपि औरस्यः पेश्यः। अन्यच्चास्याः कार्यं क्षुत्-कास-हास्य-रोदन-जृम्भण-वमनादौ मल-मूत्र-गर्भोत्सर्गार्थं प्रवाहणे च स्पष्टम्। सर्वाणि हि तानि कार्याणि उच्छ्वासपूर्वं प्रवर्त्तन्ते, परिणमन्ति च उदर्य-पेशीसङ्कोचसहायकेन महाप्राचीरायाः सङ्कोचेन। प्रचेष्टन्यो नाड्यस्तु महा-प्राचीरायाः—अनुकोष्ठिका नाड़ी दक्षिणा वामा च, पञ्चषाश्च पर्शुकानुगानां शाखाः।

इति चतुःपञ्चाशद् उरःपेश्यो व्याख्याताः।

अथ उदरपेश्यः।

**उदरपेश्यो** हि मध्यरेखाया एकैकतः पञ्च। तद्यथा—उदरच्छदास्तिस्रः—आदिमा मध्यमा चरमा चेति। मध्यरेखापार्श्वतश्च द्वे—उदरदण्डिका, वस्ति-चूड़िका चेति। मध्यरेखा च दृढशुभ्रतनुकण्डरामयी, सा उदरसीवनी[३] नाम। तत्र—

**उदरच्छदा आदिमा**[४], **उत्ताना** वा नाम (७८ चित्रम्[५]) बाह्यतमा पेशी प्रच्छदायतमांसला। सा निम्नस्थात् पर्शुकाष्टकादष्टाभिर्मांसलमूलैः अग्रिमा-

१। व्यतिकरः—सम्पर्कः, परस्पर सन्निधिः (Relations to one another). २। फुस्फुस-धराख्य कलाकोषौ—Pleural Sacs. ३। उदरसीवनी—Linea Alba. ४। उदरच्छदा आदिमा—Obliqus Externus. ५। ७८ चित्रे मध्यमेति या लिखिता सैव आदिमेति संशोधनीया।

( ८० चित्रम् )

## उदरपेश्यः ( गम्भीराः )।




अत्र ५।६।७।८।९।१०।११।१२ अङ्काः पर्शुकोपपर्शुकासन्धान सूचकाः। तदन्तरालेषु च दृश्याः पर्शुकान्तरिका अन्तःस्थाः नाम पेश्यः।

[ क—उदरदण्डिकायाः कञ्चुकम्। ख—मध्यरेखास्थिता उदरसीवनी। ग—उदरदण्डिका वामा ( कर्त्तितांशः )। घ—कटिपृष्ठप्रच्छदा ( प्रावरणी )। प० प० प०—पर्वलेखाः। ]

रिक्षोरश्छदयोः पेश्योर्मूलान्तरालनिबद्धैः संभूय, तिरश्चीनैर्निम्नान्तर्मुखैः मांसतन्तुभि-रुदरस्य पुरःपार्श्वयोः प्रसृता। निविशते च सा श्रोणिफलकस्य जघनधारावहिस्तटार्धे

मांसलभागेन; अग्रपत्राख्ये तरुणास्थिन, सेवनीकण्डरायां, भगास्थ्नो मुण्डे, वस्तिकण्ठिकायाश्च कलाकण्डराभागेन। कलाकण्डरा चेयमूर्ध्वं पुरस्तात् पर्शुका-मूलेषु सम्बद्धा गुर्व्या उरश्छदायाः कलाकण्डरया एकीभूता, अधस्ताद् भगास्थि-मुण्डोपकण्ठे त्रिकोणप्रायेण च्छिद्रेण उपलक्षिता च। तच्च च्छिद्रं बहिर्वंक्षणीयं[१] नाम त्वक्कलावृतं तत् पुंसो वृषणबन्धन्या निर्गमाय, स्त्रियास्तु गर्भाशयबन्धन्या धारणाय।

अथास्याः कलाकण्डरायाः अधोधारा जघनकपालस्य पुरःकूटाद् भगास्थि-कण्टकं यावत् संबद्धा, निम्नतोविमुक्ता, सा वंक्षणिका[२] स्नायुरज्जुरित्युच्यते। तदधःस्थश्च त्रिकोणं कुहरम्—वंक्षणदरीसंज्ञम् द्विभागविभक्तम्। तस्य बाह्यार्धेन विनिर्गता श्रोणिपक्षिणी, दीर्घा कटिलम्बिनी च पेशी। आन्तरार्धेन पुनः पुरः-सक्थिका नाम नाड़ी, और्वी धमनी सिरा च।

उदरच्छदाया आदिमायाः पश्चिमधारा तु विमुक्ताग्रा, कटित्रिकोणस्य संमुखीनभुजरूपा।

**उदरच्छदा मध्यमा**[३] नाम तन्वायता पेशी पूर्वोक्तया पेश्या समावृता। सेयमधस्तात् श्रोणिफलकस्य जघनधाराबहिस्तटात्, वंक्षणिकाख्यस्नायुरज्ज्वाः पश्चार्धाच्च संभूय पश्चात् कटिपृष्ठप्रच्छदाख्यया गम्भीरप्रावरण्या एकीभूता, ऊर्ध्वमधो मध्ये च तिरश्चीनतन्तुभिर्मध्यरेखां प्रति प्रसृता। निविशते तु सा धनुर्वक्रैः कतिचित्स्नायुसूत्रैः वक्ष्यमाणायाश्चरमोदरच्छदाया अधोवर्त्तिमूलैरेकतां गतैर्भगास्थिमुण्डे वस्तिकण्ठिकायाश्च। तैश्च निर्मीयते वंक्षणसुरङ्गायाश्छदिभागः पश्चिमभागश्च। मध्यरेखायां निवेशस्तु तस्याः उदरसेवन्याख्य तनुशुभ्रकण्डरायां स्तरद्वयविभक्तेन कलाकण्डराभागेन। तेन च निर्मीयते उदरदण्डिकाख्यपेश्याः कञ्चुकम्। ऊर्ध्वं निवेशस्तु तस्या अधःस्थे उपपर्शुकाचतुष्टये मांसलैर्मूलैः।

**उदरच्छदा चरमा**[४] **(गम्भीरा वा)** नाम (८० चित्रम्) गम्भीरतमा उदरच्छादिनी पेशी। सेयमधस्ताद् वंक्षणिकाख्यस्नायुरज्ज्वाः पश्चार्धतः, श्रोणि-फलकस्य जघनधारान्तस्तटाच्च संभूय पश्चात् कटिपृष्ठप्रच्छदाख्यया गम्भीरप्रावरण्या एकीभूता, मध्यरेखां प्रति अनुप्रस्थ ऋजुप्रायैस्तन्तुभिः प्रसृता च। ऊर्ध्वं चास्याः प्रभवः षड्भ्यः अधरोपपर्शुकाभ्यो महाप्राचीरापरिधिप्रविष्टैर्मांसलमूलैः। निविशते च सा मध्यरेखां प्रति उदरसेवन्याख्यकण्डरायाम्, अधश्च मध्यमोदरच्छदासाधारणै-

१। Ext. Abdominal Ring. २। Inguinal ligament (of Poupart).
३। उदरच्छदा मध्यमा—Internal Oblique. ४। उदरच्छदा चरमा—Transversalis.

मूलैः पूर्ववत् । छिद्रं तु तत्राधिकं भगमुण्डपार्श्वतः अन्तर्वंक्षणीयं[1] नाम, दृश्यते च तदाश्रित्य वंक्षणीयसुरङ्गां प्रविशन्ती पुंसो वृषणबन्धनी, स्त्रियास्तु गर्भाशयबन्धनी ।

वंक्षणसुरङ्गा[2] चेयमूर्ध्वं बहिःसीम्नि बहिर्वंक्षणीयच्छिद्रादारभ्य तिर्यगधस्ताद् वंक्षणिकाख्यस्नायुरज्ज्वा अनुक्रमेण मध्यरेखां प्रति प्रसृता—अन्तर्वंक्षणीयं छिद्रं यावत् । निर्मीयते च तस्याः पश्चिमभागः आदिमया उदरच्छदया, पुरोभागः चरमया उदरच्छदया, छदिभागः मध्यमाया उदरच्छदाया अधोधारया, भूमिभागश्च वंक्षणिकास्नायुरज्ज्वा—इति समासेन तस्याः सीमानिर्देशः । अन्त्रवृद्धिरोगे च अनेनैव सुरङ्गापथेन अवतरति द्विगुणीभूतमन्त्रमण्डकोषान्तः ।

**फलकोषकर्षणी**[3] नाम तनुसूत्रा पेशी गर्भस्थबालस्य वृषणावतरणकाले उदरच्छदाया आदिमायाः कतिचिन्मांसतन्तूनादाय निर्मिता । सा एकैकतो वृषणबन्धन्या पार्श्वानुक्रमेण पाशाकारैः मांसतन्तुभिः फलकोषेऽवतीर्णा । तस्याः कार्यं फलकोषस्य ऊर्ध्वकर्षणम् । प्रचेष्टनी नाडी ऊरुवृषणिका नाम ।

द्रष्टव्या चात्र प्रसङ्गे चरमाया उदरच्छदाया अभ्यन्तरतलच्छादनी कला उदरान्तश्छदा[4] नाम । सा उदर्याख्यमहाकलातो मेदःस्तरेण पृथक्कृता, निलीना च पश्चात् कटिवंशमुभयतो मेदःस्तरेषु । सेयमूर्ध्वं महाप्राचीरायास्तल-देशे प्रसृता, मिलिता च अधस्तात् श्रोणिगुहान्तरीयकलया ।

व्यतिकरस्तावद् उदरच्छदानां पेशीनां ८१ चित्रे द्रष्टव्यः ।

कार्यं तावदुदरच्छदानां पेशीनां सामान्यतः—उदर्याशयानां धारणम्, स्वमांससङ्कोचनेन उदरप्रपीडणं च । महाप्राचीराया उत्क्षेपणेन श्वासवायु-निरसनमपि तासां प्रधानं कर्म, प्रवाहणञ्च निरुद्धश्वासस्य । निःश्वासकर्म-सहायकत्वाच्च क्षुत्कास-हास्य-जृम्भणादि कर्मस्वपि स्फुटं तासां सहकारित्वम् ।

प्रचेष्टनं तु तिसृणामपि तासामधरौरसीनां नाडीनां शाखाभिः । शेष-द्वयस्य तु प्रथमानुकटिकायाः शाखाभिरपि ।

**उदरदण्डिका**[5] नाम दीर्घमांसला पेशी मध्यरेखापार्श्वे एकैकतोऽवतिष्ठते

---

१। अन्तर्वंक्षणीयं छिद्रं—Internal Abdominal Ring. २। वंक्षणसुरङ्गा—Inguinal Canal. ३। फलकोषकर्षणी—Cremaster muscle. ४। उदरान्तश्छदा—Transversalis Fascia. ५। उदरदण्डिका—Rectus Abdominis.

( ८१ चित्रम् )

## उदर्यपेशीनां व्यतिकरः

( अनुप्रस्थच्छेदेन दर्शितः )।




से० उदरसेवनी। × कटित्रिकोणीयोऽवकाशः।

(८० चित्रम्) सा संकोचकाले दण्डवद् अवतिष्ठते उदरसेवन्या एकैकतः--इति तथासंज्ञा। सेयमधस्ताद्भगास्थिसन्धाने द्वाभ्यां कण्डराभ्यां संभूय ऊर्ध्वं गता मध्यरेखायामुदरसेवनीकण्डराया एकैकतः संसज्यते, ऊर्ध्वञ्च पर्शुकातोरणार्धे। आच्छादयति च तां मध्यमाया उदरच्छदाख्यपेश्याः कलाकण्डरा, या द्विधात्मानं विभज्य पुरः पश्चाद्गमनेन तस्याः कञ्चुकीभूता। अनुप्रस्थश्चात्र दृश्यन्ते तिस्रो रेखाः स्नायुसूत्रमय्यः, ताः पर्वलेखाः[१] नाम। अथास्या उदरदण्डिकायाः कञ्चुकमध्ये तन्निम्नार्धपुरोभागे दृश्यते अपरा मन्दिरचूड़ाकारा क्षुद्रपेशी **वस्तिचूड़िका**[२] नाम (८० चित्रम्)। सेयं भगास्थिसन्धानात् संभूय उदरसेवन्यां संवद्धा।

---

१। पर्वलेखाः—Lineæ Tranversæ, २। वस्तिचूड़िका—Pyramidalis,

कार्यं पुनरुदरदण्डिकायाः उदरस्य संरक्षणमभिघाताद्, प्रवाहणं च। प्रचेष्टन्यो नाड्यस्तु उदरच्छदावत्। विशेषतश्च सङ्कोचमापद्यमाना सा मध्यकायं पुरो नमयति धनुर्वत्। वस्तिचूड़िकायास्तु कार्यमुदरसेवनीसंज्ञायाः कण्डराया उत्तंसनम्। प्रचेष्टनी नाड़ी द्वादश्याः औरसनाड्याः शाखा।

ता एताः एकैकतः पञ्चेति दश उदरपेश्यो व्याख्याताः।

इदञ्चात्र स्मर्तव्यम्। यः खलु कटिपार्श्वोदरपेशीमध्यवर्त्ती वर्णितः त्रिकोणाकारः अवकाशः, स कटित्रिकोणं[1] नाम। तस्य पुरःसीमा आदिमाया उदरच्छदायाः पश्चिमधारा, पश्चिमसीमा कटिपार्श्वच्छदायाः पार्श्विकी धारा। ते च धारे ऊर्ध्वं तिर्यक्संमिलन्त्यौ त्रिकोणं कल्पयतः, सहाधःसीमस्थेन श्रोणिफलकस्य जघनचूड़ाप्रदेशेन। तस्य भूमिस्तु अभ्यन्तरत उदरच्छदा मध्यमा। बाह्यावरणं त्वक्सहिताः प्रावरण्यः। अनेन च त्रिकोणेन तत्पार्श्वीयो वृक्कः, बृहदन्त्रांशश्च इति द्वयमपि स्पर्शेन परीक्षितुं शक्यम्—इति विशेषेण वृक्कादिरोगपरीक्षाद्वारमेतत्।

अथ श्रोणिचक्राभ्यन्तरीयाः पेश्यः।

ताः पञ्च पञ्च एकैकतः—श्रोणिचक्रान्तश्छादिन्या मांसधरया कलया समावृताः। साऽसौ कला श्रोणिगुहान्तरीया[2] प्रावरणी नाम। सा उपरिष्टात् उदरान्तश्छदया कलया, अधश्च वस्तिगुहान्तश्छदया मिलिता। संबध्यते चासौ ऊर्ध्वसीम्नि जघनधाराद्वयेन कटिवंशपुरोभागेन च, अधस्तात् वस्तिकण्ठिकायां त्रिकोष्ठेन च। एवञ्च प्रसृता प्रच्छादयति सा जघनोदरान्तः श्रोणिपक्षिण्यौ पेश्यौ, पृष्ठवंशपुरतश्च कटिलम्बिन्याख्यपेशीसहितं कटिवंशपुरोभागम्। धारयति च सा वस्तिकण्ठिकान्तःपार्श्वयोः श्रोणिगुहाप्रविष्टे अधिश्रोणिके बाह्ये नाम स्थूलेधमन्यौ सिरे च। वंक्षणदेशे च सैव वंक्षणदरीभूमिभूता ऊरुकञ्चुकया मिलिता। पेश्यश्च एकैकतो यथा—

**श्रोणिपक्षिणी**[3] नाम श्रोणिगुहायाः पक्षान्तःपूरणी मांसलायता पेशी (७९ चित्रम्)। सेयं श्रोणिफलकस्य जघनोदरात्, जघनचूड़ातः, त्रिकास्थिपक्षैकदेशात् कटिजघनिका-त्रिकजघनिकाख्यस्नाय्वोश्च संभूय दीर्घायाः कटिलम्बिन्याः कण्डरया एकीभूतमूला, वंक्षणिकाख्यस्नायुरज्ज्वोरधःस्थितया वंक्षणदर्या निर्गत्य ऊर्वस्थ्नो

---

१। कटित्रिकोणम्—Lumber Triangle ( of Petit ). २। श्रोणिगुहान्तरीया कला—Pelvic fascia. ३। श्रोणिपक्षिणी—Iliacus.

लघुशिखरके निविशते। तस्याः कार्यं मध्यकायस्य अवनमनम्, अथवा तत्-पार्श्विकस्य ऊरोरूर्ध्वकर्षणम्। प्रचेष्टनी नाड़ी तु और्वी नाम।

**श्रोणिगवाक्षिणी अन्तःस्था**[1] नाम मांसला पेशी श्रोणिगवाक्ष-विवराभ्यन्तरपरिधेः तदाच्छादिकलायाश्च संभूता। सेयं कुकुन्दरकूटान्तः-प्रदेशे संलग्नैकदेशा कुकुन्दरद्वारेण अधो विनिर्गत्य ऊर्वस्थ्नो महाशिखरके निविशते। एवञ्च वस्तिगुहायाः पुरःप्राचीरभूतेयं पेशी। तस्याः कार्यमूर्वस्थ्नो बहिर्विवर्त्तनम। प्रचेष्टनं तु पञ्चम्या अनुकटिकया नाड्या, प्रथमद्वितीयाभ्या-मनुत्रिकाख्यनाड़ीभ्याञ्च।

**शुण्डिका**[2] नाम करिशुण्डाकारा पेशी (९६ चित्रम्) त्रिकास्थ्नः पुरो-भागात् त्रिभिर्मूलैः संभूय श्रोणिफलकस्य गृध्रसीद्वारपरिधौ गुर्व्यां कुकुन्दरसंयोजन्यां स्नायौ च संसक्तमूला गृध्रसीद्वारेण विनिर्गत्य ऊर्वस्थ्नो महाशिखरके निविशते। तस्याः कार्यं ऊर्वस्थ्नो बहिर्विवर्त्तनम्, वस्तिगुहाभूमिधारणञ्च सह वक्ष्यमाणाभ्यां पेशीभ्याम्। प्रचेष्टनं तु प्रथमद्वितीययोरनुत्रिकनाड्योः शाखाभ्याम्।

**पायुधारणी**[3] नाम प्रसृतिनिभा पेशी पायोरेकैकतः ( ८२ चित्रम् )। सा इतरया स्वनामिकया मध्यरेखायां मिलित्वा अञ्जलिसमाकारा पायोर्वस्तेरुपस्थ-मूलस्य च यथास्थानं धारणाय कल्पते।

सेयं भगास्थ्नः पश्चिमप्रदेशात्, कुकुन्दरकण्टकात्, वस्तिगुहान्तरीयायाः कलायांश्च संभूय पायुं परितः ( स्त्रियास्तु योनिं परितोऽपि ) प्रसृता सीवन्या-मनुत्रिकाग्रे च संवद्धा। कार्यं त्वस्याः गुदोपस्थ-वस्तिधारणं, पायुकर्षणं च पायुसङ्कोचन्याख्यपेशी-साहाय्येन।

प्रचेष्टनं त्वस्याः चतुर्थ्या अनुत्रिकाख्यनाड्याः गुदोपस्थिकाख्यनाड्याश्च शाखाभ्याम्।

**अनुत्रिकिणी**[4] नाम पेशी तस्या एव सहकारिणी पश्चाद्वर्त्तिनी च। सेयं श्रोणिफलकस्य कुकुन्दरकण्टकात्, त्रिकानुत्रिकपुरःसन्धानात्, लघ्व्यास्त्रिक-कुकुन्दरिकायाः स्नायोश्च संभूय, अनुत्रिकास्थ्नः पुरोभागे, एकैकतः त्रिकास्थि-मूले च संबद्धा। सेयमनुत्रिकास्थ्नो धारणी वस्तिगुहाद्वारस्य प्रच्छादनो च।

---

१। श्रोणिगवाक्षिणी अन्तःस्था—Obturator Internus. २। शुण्डिका—Pyriformis.
३। पायुधारणी—Levator Ani. ४। अनुत्रिकिणी—Coccygeus.

( ८२ चित्रम् )

## शिश्न-गुद-मूलाधारपीठस्थाः पेश्यः।




८२ चित्रस्य व्याख्या—१। त्रिकोणप्रावरणी कला। २। उपस्थमूलच्छदा पश्चिमा। ३। गुदसङ्कोचनी बाह्या। ४। नितम्बपिण्डिका गरिष्ठा। ५। कुकुन्दरपिण्डम्। ६। अनुत्रिकास्थि।

अस्याः प्रचेष्टनं चतुर्थ-पञ्चमानुत्रिकनाड्योः शाखाभिः । ता एताः एकैकतः श्रोणिचक्राभ्यन्तरीयाः पञ्च पेश्यो व्याख्याताः । तासां मध्ये आद्य-त्रितयं बहिर्विनिर्गतं यथोक्तप्रकारेण ऊर्वस्थिसंबन्धाय । चरमद्वितयं तु बाह्यया गुदसङ्कोचन्याख्यपेश्या सहितं वस्तिगुहाद्वारस्य अधःपिधानभूतम् ।

द्रष्टव्या चात्र प्रसङ्गे वस्तिगुहान्तरीया[1] नाम कला वस्तिगुहान्तश्छादनी । सा ऊर्ध्वं वस्तिकण्ठिकाख्यरेखायाम्, अधश्च वस्तिगुहाद्वारं परितः संसक्ता । तस्यास्त्रयो भागाः—बाह्यो मध्यः आभ्यन्तरश्चेति । तत्र बाह्यो भागः—एकैकतः श्रोणिगवाक्षिणीमन्तःस्थां नाम पेशीं संछाद्य अधःप्रसृतः कुकुन्दरास्थ्नः पिण्ड-कूटयोः संसक्तः अनुकुकुन्दरिकां नाम सुरङ्गिकामारचयति, सा गुदोपस्थिकाख्यनाड़ी-सिरा-धमनीनां धारणाय । संसज्यते चासौ त्रिकोणप्रावरणी-संज्ञाया वस्तिगुहाद्वार-च्छादिन्याः कलाया उत्तरस्तरेण । मध्यो भागः—स्तरद्वयेन पायुधारण्याख्यपेशी-द्वयं छादयति धारयति च । आन्तरो भागः--पायुं वस्तिं पौरुषग्रन्थिं शुक्राधारिका-द्वयञ्च संवेष्ट्य धारयति ।

वस्तिगुहाद्वारस्य च तथापिहितस्य चतुरस्राकारस्तलदेशो मूलाधारपीठं मूलाधारचतुरस्रं[2] वा नाम । तस्यैताः सीमाः अस्थिस्नायुनिर्मिताः । पुरःसीमा कोणाकारा—भगतोरणं नाम, तद् भगास्थिसंधानस्याधस्त्रिकोणप्रायम् । तदेकैकतः पार्श्वसीमा—भग-कुकुन्दरास्थ्नोः अधरोत्तरशृङ्गे ( परस्परसंसक्ते ), कुकुन्दर-पिण्डम्, त्रिककुकुन्दरिका गुर्वी नाम स्नायुरज्जुश्च । पश्चिमसीमा अनुत्रिकाग्रम् । लौकिकदृष्ट्या तु मूलाधारपीठस्य त्वङ्मांसनिर्मिताः सीमाः– पुरस्तात् पुरुषस्य अण्डकोषः स्त्रियास्तु योनिः, उभयतो वंक्षणद्वयम्, पश्चिमतो नितम्बद्वयञ्चेति ।

इदञ्च मूलाधारचतुरस्रं कुकुन्दरपिण्डयोः संयोजन्या कल्पितरेखया त्रिकोणद्वये विभज्यते वर्णनासौकर्याय । तत्र पुरोवर्त्ति त्रिकोणं औपस्थिकं त्रिकोणं[3] नाम, तत् स्त्रीपुंसोरुपस्थधारणम् । पश्चिमत्रिकोणं पुनः पायव्यत्रिकोणं[4] नाम, तत् पायुधारणम् । पायूपस्थयोरन्तराले च मध्यरेखायां स्वाभाविकी स्नायुमयी संयोगरेखा त्वचि परिस्फुटा सेवनी[5] नाम । तदूर्ध्वस्था च तनुकण्डरा सेवनी-सूत्रिका संज्ञा ।

---

१। वस्तिगुहान्तरीया कला—Endo-pelvic part of Pelvic fascia. २। मूलाधारपीठं—Perinæum or Perineal Quadrangle. ३। औपस्थिकं त्रिकोणम्—Uro-genital Triangle. ४। पायव्य त्रिकोणम्—Anal Triangle. ५। Perineal Raphe.

अत्र च प्रसंगे स्मर्त्तव्यं भगन्दररोगायतनं खातं—गुदकौकुन्दरं[1] नाम। तत् खलु गुदस्य एकैकतः त्रिकोणविलप्रायं परितः कलावृतं मेदःपूर्णञ्च। तस्य मध्यरेखाभिमुखी सीमा—गुदसङ्कोचनी बाह्या नाम पेशी, गुदवेष्टनी कला च। पार्श्वसीमा—कुकुन्दरपिण्डं वस्तिगुहान्तरीया कला च। पश्चिमसीमा—त्रिककुकुन्दरिका गुर्वी नाम स्नायुरज्जुः, नितम्बपिण्डिका गुर्वी नाम पेशी च। तस्मिंश्च खातेऽवतिष्ठन्ते गुदोपस्थिका नाम नाड़ी, धमनी-सिराश्च गुदान्तिकाः। कुकुन्दरपिण्डोत्संगे च तत्रैव गुदोपस्थिका नाम नाड़ी, धमनीसिरे च स्नायुमयखातस्थे।

### अथ मूलाधारचतुरस्रस्थाः पेश्यः।

मूलाधारचतुरस्रे द्वश्या नव पेश्यः। यथा—पुरस्ताद्द औपस्थिकत्रिकोणे सप्त, पश्चिमतः पायव्यत्रिकोणे च द्वे इति। तद्यथा—औपस्थिकत्रिकोणे **उपस्थसंकोचन्यौ**[2] नाम उपस्थपार्श्वस्थे द्वे पेश्यौ (८२ चित्रम्)। ते पुंसः शिश्नमूलमुभयतः सेवनीसूत्रिकायां परस्पर-संसक्ते शिश्नमूलं संवेष्टयतः। तयोः कार्यं मूत्रप्रसेकस्य सङ्कोचनं यत् मूत्रणकर्मान्ते परिस्फुटम्। ते एव स्त्रियाः योनिद्वारपार्श्वस्थे तत्संकोचनकार्ये। अनयोः प्रचेष्टनं गुदोपस्थिकाख्यनाड्योः शाखाभ्याम्।

**शिश्नप्रहर्षिण्यौ**[3] नाम द्वे पेश्यौ (८२ चित्रम्) कुकुन्दरास्थ्नः पिण्डात्-कूटाच्च संभूय पुंसः शिश्नमूलमुभयतः संबद्धे। स्त्रियास्तु ते एव भगशीर्षके भगशिश्निकामुभयतः संसक्ते तनुतराकारे।

तयोः कार्यं स्वनामव्याख्यातम्। प्रचेष्टन्यौ नाड्यौ च पूर्ववत्।

**उपस्थमूलच्छदा अग्रिमा पश्चिमा**[4] चेति द्वे पेश्यौ (८२ चित्रम्)। तयोरग्रिमा उत्ताना कुकुन्दरपिण्डात् संभूय गुदपुरस्तात् सेवन्यां संबद्धा। पश्चिमा तु गम्भीरा कुकुन्दरास्थ्नोऽधरश्रृङ्गात् संभूय किञ्चिदग्रत उपस्थमूले सेवनीकण्डरायां मध्यरेखागतायां संबद्धा। मध्ये चानयोः स्तरद्वययुता दृढ़कला त्रिकोणप्रावरणी नाम नाड़ीसिरादिधरा वक्ष्यमाणा। कार्यन्तु तयोः सेवन्या उत्तंसनं

---

१। गुदकौकुन्दरं खातं—Ischio-rectal fossa. २। उपस्थसङ्कोचनी—Bulbo-cavernosus (Ejaculator Urinæ). ३। शिश्नप्रहर्षणी—Ischio-cavernosus ( Erector Penis ). आशयखण्डे शिश्नादिचित्राण्यपि द्रष्टव्यानि। ४। उपस्थमूलच्छदा अग्रिमा पश्चिमा च—Transversus Perinei—superficialis and profundus.

सेवनीसंबद्धानामितरपेशीनां क्रियासौकर्याय । प्रचेष्टनं पुनः गुदोपस्थिकयोर्नाड्योः शाखाभिः ।

**मूत्रद्वारसङ्कोचनी**[1] नाम पेशी मूत्रस्रोतसः कलामयभागमभितः संबद्धा । तस्याः बाह्यं मूलमेकैकतः कुकुन्दरकूटे संसक्तम् । क्रिया च स्वनामव्याख्याता । प्रचेष्टनी नाड़ी पूर्ववत् ।

स्मर्त्तव्या चात्र प्रसङ्गे औपस्थिकत्रिकोणच्छादिनी कला त्रिकोणप्रावरणी नाम ( ८२ चित्रम् ) । सा साधारण्या गम्भीरप्रावरण्या अंशभूता तत्प्रदेशे स्तरद्वये विभक्ता पश्चिमाम् उपस्थमूलच्छदां पेशीं मध्ये धारयति । दृश्यन्ते च तदन्तराले गम्भीरा उपस्थपृष्ठिका नाम सिरा नाड़ी च, मूत्रस्रोतसः कलामयो भागः, मूत्रद्वार-सङ्कोचनी पेशी, गुदोपस्थिकाख्याः मूत्रस्रोतोऽभिगाः सूक्ष्माः सिराधमन्यो ग्रन्थयश्च । तस्याश्च कलायाः उत्तरस्तरं वस्तिगुहान्तरीयकलाया बाह्यभागेन उभयोः पार्श्वयोर्मिलितम् ।

अथ पायव्यत्रिकोणस्थे पेश्यौ यथा —

**गुदसङ्कोचनी बाह्या आभ्यन्तरी**[2] चेति ( ८२ चित्रम् ) । तयोर्बाह्या गुदोष्ठमभितः अञ्जलिवदवस्थिता । सा पश्चिमतः अनुत्रिकाग्रात् संभूय गुदमुभयतः प्रसृता सेवनीसूत्रिकायां संबद्धा । तस्या एव त्वाचं भागं केचित् गुदत्वक्सङ्कोचनीं नाम पृथक् पेशीमाहुः ।

आभ्यन्तरी गुदसङ्कोचनी तु तत्रैव द्व्यङ्गुलादूर्ध्वमधरगुदं संवेष्ट्य स्थिता चक्राकारा । सा स्वतन्त्रमांसतन्तुभूयिष्ठा अनिच्छतोऽपि गुदसंवरणी ।

अनयोः कार्यं स्वनामव्याख्यातम् । नियतसंकुचितावस्था तु विशेषः । प्रचेष्टन्यौ नाड्यौ तु बाह्यायाः पेश्याः गुदोपस्थिकयोः शाखे । आभ्यन्तर्यास्तु गुदवत् । प्राचां संमतं गुदवलित्रयं तु गुदवर्णने व्याख्यास्यामः ।

तदेतदेकादशोत्तरं शतं पेशीनां मध्यकाये व्याख्यातम् ।

इति तृतीयोऽध्यायः ।

---

१ । मूत्रद्वारसङ्कोचनी—Sphincter Urethræ membranacæ. २ । मूत्रसङ्कोचनी बाह्या आभ्यन्तरी च—Sphincter Ani—Externus and Internus.

# चतुर्थोऽध्यायः ।

अथात ऊर्ध्वशाखीयपेशीवर्णनीयं नामाध्यायं व्याख्यास्यामः ।

इह खलु अक्षकास्थिसहितमंसफलकम् अंसचक्रं नाम । तच्च दृढ़-स्नायुभिः सन्नद्धं परस्परं, प्रगण्डास्थ्ना चेत्यवोचाम । तस्य च अंसचक्रस्य समग्रबाहुसहितस्य ऊर्ध्वशाखेति संज्ञा वर्णनासौकर्याय पेश्यध्याये । अंसचक्रेण बाहुसम्बन्धस्य घनिष्ठत्वात्, अंसपेशीनां भुम्ना बाहुपेशीष्वनुप्रवेशात् प्रगण्डास्थ्नि निवेशाच्च । दशानाञ्च ग्रीवोरःपृष्ठपेशीनामिहैव ग्रहणं, संयोगसम्बन्धात् । संख्याने तु नेह ता अधिक्रियन्ते, तासाम् उक्तचरत्वात्, प्राधान्येन मध्यकायनिष्ठत्वाच्च । प्रधाना अंसपेश्यस्तु संख्यायन्त इहैव, तासामनुक्तचरत्वात्, प्राधान्येन बाहु-सम्बन्धाच्च । एवञ्च साकल्येन एकोनषष्टिरिह पेशीनामेकैकस्यामूर्ध्वशाखायां द्रष्टव्या । संख्यानकाले तु ग्रीवोरःपृष्ठपेशीदशकस्य वर्जनादेकोनपञ्चाशदेकैकतः इति उभयोरष्टानवतिः पेश्यः संख्यायन्ते ।

अथासामेकोनषष्टिपेशीनां सप्तधा विभागः । तद्यथा—

ऊर्ध्वशाखायाः पृष्ठेन संयोजन्यश्चतस्रः, उरसा च चतस्रः । ग्रीवांस संयोजन्यौ द्वे । अंस-बाहुसंयोजन्यः सप्त । प्रगण्डीयास्तिस्रः । प्रकोष्ठीया विंशतिः । पाणौ एकोनविंशतिरिति । तत्र—

( १ ) ऊर्ध्वशाखायाः पृष्ठेन संयोजन्यश्चतस्रः पेश्यो यथा—पृष्ठच्छदा, कटिपार्श्वच्छदा, अंसापकर्षणो गुर्वी, लघ्वी चेति । तासामाद्ये बाहु-पृष्ठसंयोजन्यौ, अन्त्ये तु अंसपृष्ठसंयोजन्यौ । सर्वाश्च ताः पृष्ठपेशीवर्णने वर्णितपूर्वाः ।

( २ ) ऊर्ध्वशाखाया उरसा संयोजन्यश्चतस्रः पेश्यो यथा—उरश्छदा गुर्वी लघ्वी च, अक्षकाधरा, अग्रिमारिता चेति । तासामाद्ये उरोबाहुसंयोजन्यौ, तृतीया अक्षकोरःसंयोजनी, चतुर्थी अंसफलकोरःसंयोजनी । सर्वाश्च ता उरः-पेशीवर्णने वर्णितचराः ।

( ३ ) ग्रीवांऽससंयोजन्यौ पेश्यौ यथा—अंसोन्नमनो अंसकण्ठिका चेति । ते यथाक्रमं पुरः पश्चाच्च अंसफलकमूर्ध्वमाकृष्य धारयतः । वर्णिते च ते ग्रीवापेशीषु ।

( तदेतत् पेशीदशकं न गृह्यते समष्टिसंख्याने, पूर्वोहेतोः । )

( ८३ चित्रम् )

## अंस-प्रगण्डीयाः पेश्यः ।




**८३ चित्रस्य व्याख्या**—१। उरश्छदा लघ्वी ( कर्त्तितकण्डरा मात्रम् )। २। त्रिशिरस्काया दीर्घशिरः। ३। प्रगण्डास्थि। ४। मणिबन्धापकर्षणी दीर्घा।

अथ प्रधाना अंसपेश्यः ।

इह खलु सप्त अंस-बाहु संयोजन्यः पेश्यः । तद्यथा—

**अंसच्छदा**[1] ( अंसपिण्डिका वा ) नाम बाहुमूलच्छादिनी स्थूलमांसला पेशी अंससन्धिं बहिरावृत्य अवतिष्ठते ( ८३ चित्रम् )। सा बाहुकञ्चुकाख्यया दृढ़प्रावरण्या सुरक्षिता । सेयमक्षकास्थ्नः पार्श्विकार्धात् अंसफलकस्य कूट-प्राचीराभ्याञ्च संभूय तिर्यक् प्रसृता प्रगण्डास्थ्नो मध्यनलकपार्श्वं निविशते स्थूल-कण्डरामूलेन । तस्याः कार्यं बाहोरुन्नमनं मध्यकायसामकोण्येन[2], अपकर्षणं च स्तोकेन । प्रचेष्टनन्तु तस्याः पञ्चम्या, षष्ठ्या चानुग्रीविकया'अनुकक्षाख्यनाड़ी-प्रवेणीद्वारेण ।

**अंसान्तरिका**[3] नाम पेशी (७८ चित्रम्) अंसफलकस्य अंसकपालिकोदरात् सम्भूय प्रगण्डास्थ्नो लघुपिण्डके निविशते, तस्याः कार्यं प्रगण्डास्थिमुण्डस्य मध्यरेखां प्रति पृष्ठतश्च विवर्त्तनम् । प्रचेष्टनी तु नाड़ी अन्वंसिका नाम ।

**अंसपृष्ठिका उत्तरा, अधरा**[4] चेति पेश्यौ ( ८४ चित्रम् ) अंस-फलकप्राचीरस्य उत्तराधरप्रदेशस्थे । ते अंसकपालिकापृष्ठात् संभूय प्रगण्डास्थ्नो महापिण्डके निविशेते । तयोराद्या बाहोरुत्तोलनी, अन्त्या तस्या बहिर्विवर्त्तनी । प्रचेष्टनी तु नाड़ी उभयोरपि अध्यंसिका नाम ।

**अंसाधरिका गुर्वी, लघ्वी**[5] चेति द्वे पेश्यौ (८४ चित्रम्) अंसफलकस्य कक्षानुगधाराया उत्तराधरार्धाभ्यां सम्भूय प्रगण्डास्थ्नो महापिण्डके निविशेते । तयोः कार्यं प्रगण्डास्थ्नो बहिर्विवर्त्तनम्, पृष्ठतः कर्षणं च । प्रचेष्टनी तु नाड़ी प्रथमाया अन्वंसिका, द्वितीयायाः पञ्चमी अनुग्रीविका नाम ।

**काकोष्ठिका**[6] नाम ( ८३ चित्रम् ) पेशी अंसफलकस्य तुण्डात् सम्भूय प्रगण्डास्थ्नो मध्यनलकान्तःसीम्नि संबद्धा । सेयं बाहोः पुरोविवर्त्तनी, उरोदेशं प्रति कर्षणी च । तस्याः प्रचेष्टनी नाड़ी पेशीत्वगन्तिका बाहवी नाम ।

---

१। अंसच्छदा—Deltoid. २। बाहुं प्रति समकोणं रचयित्वा ( At Right Angle ). ३। अंसान्तरिका—Subscapularis. ४। अंसपृष्ठिका उत्तरा अधरा च—Supra-spinatus and Infra-spinatus. ५। अंसाधरिका गुर्वी लघ्वी च—Teres major and minor. ६। काकोष्ठिका—Coraco-brachialis.

( ८४ चित्रम् )

## अंस-बाहु-पृष्ठगाः पेश्यः।




१। प्रगण्डास्थिमुण्डस्य पुरोभागः
२। अंसफलकस्य प्राचीरिका
३। अंसफलकस्य कोणः
४। कटिपार्श्वच्छदायाः कण्डरा
५। कूर्परदेशः

### अथ कक्षादरी।

स्मर्तव्यं चात्र प्रसङ्गे कक्षान्तःस्थितं मन्दिरचूड़ाकारं कुहरं **कक्षादरी कक्षाकुहरं**[१] वा नाम। तस्याः शिखरभागो ग्रीवामूलाभिमुखः स अक्षकांऽस-

१। Axillary fossa,

फलक-प्रथमपर्शुकानामन्तरालस्थः। तमाश्रित्य प्रवर्त्तेते 'कक्षाधरा' नाम धमनी सिरा च, नाड़ीप्रवेणी च 'कक्षानुगा' नाम। तस्यास्तलदेशः त्रिकोणाकारः, स उरःपार्श्वे समायतः, बाहुपार्श्वे तनूकृतः कोणाकारश्च। स कक्षाप्रच्छदाख्यया गम्भीर-प्रावरण्या प्रावृतः। तस्याः पुरःप्राचीरमुरश्छदाभ्यां पेशीभ्यां निर्मीयते। पश्चिमप्राचीरम्—अंसान्तरिका, अंसाधरिका, कटिपार्श्वच्छदेति पेशीत्रयेण। तस्या अन्तःसीम्नि दृश्याः प्रथमाद्याश्चतस्रः पर्शुकाः, तदन्तरालस्थपेशीभिरग्रिमा-रित्राख्यपेश्या च सहिताः। बहिःसीम्नि तु दृश्यः प्रगण्डास्थ्न ऊर्ध्वभागः, द्विशिरस्कया काकोष्ठिकया चेति पेशीभ्यां सहितः।

अत्र च कक्षादर्यां दृश्याः—कक्षाधराख्ये सिराधमन्यौ, कक्षानुगाख्या नाड़ी-प्रवेणी सशाखा, लसीकाग्रन्थयो बहवः, मेदोराशिश्च तदन्तरालाऽपूरणः।

अथ प्रगण्डीयाः पेश्यः।

तास्तिस्र एव। तद्यथा—

**द्विशिरस्का बाहवी**[1] नाम प्रगण्डपुरःस्था पेशी (८३ चित्रम्) द्वाभ्यां शिखाभ्यामुपलक्षिता। सैव प्राचां बाहुपिण्डिका नाम। तस्याः दृढ़कण्डरामयी दीर्घशिखा अंसफलकस्य अंसकूटशिखरात् सम्भूय अंसोदूखलिकाख्यं स्नायुकोषं निर्भिद्य अधःप्रसृता। ह्रस्वशिखा तु अंसतुण्डात् काकोष्ठिकया सह सम्भूय दीर्घ-शिखामनुवर्त्तते बाहुमध्यपुरस्तात्। शिखाद्वयं च क्रमेण कूर्परान्तं यावन्मांसलीभूय मिलितमेकीभूतकण्डरान्तेन बहिःप्रकोष्ठास्थ्नः ऊर्ध्वप्रान्तपुरःस्थे अर्बुदाख्ये उत्सेधे निविशते। तद्बन्धनश्चात्र तिरश्चीनः प्रावरणीभागः दृढ़स्नायुमयो द्वयङ्गुलायतः, कूर्परपट्टिका नाम। तयाऽच्छाद्यते बाहवी नाम धमनी, तदग्रशाखासहिता। कार्यं तु द्विशिरस्कायाः बाहोः संकोचनं कूर्परसन्धौ। प्रचेष्टनं पुनः पञ्चम्या षष्ठ्या च अनुग्रीविकया नाड्या, पेशीत्वगन्तिकां बाहवीं नाम नाड़ीमाश्रित्य।

**कूर्परद्वारिका**[2] नाम मांसला पेशी (८३ चित्रम्) द्विशिरस्कायाः पश्चादन्तःसीम्नि चावस्थिता। सेयं प्रगण्डास्थ्नो निम्नार्धपुरोभागात् सम्भूय कूर्परसन्धिमाच्छादयन्ती अन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्धने निविशते। तस्याः कार्यं पूर्ववत्। प्रचेष्टनं तु बहिर्बाहुकया नाड्या पेशीत्वगन्तिकया च।

---

१। द्विशिरस्का बाहवी—Biceps Brachialis. २। कूर्परद्वारिका—Brachialis.

( ८५ चित्रम् )

## वामप्रकोष्ठपुरःस्थाः पेश्यः ( उत्तानाः ) ।



**त्रिशिरस्का**[१] नाम दीर्घमांसला पेशी प्रगण्डपृष्ठतो वर्त्तते ( ८४ चित्रम् )। तस्यास्त्रीणि शिरांसि मांसलप्रायाणि। तेषां बाह्यान्तःसीमस्थं शिरोद्वयं प्रगण्डास्थ्नो मध्यनलकपश्चिमस्थायाः सीतायास्तटद्वयात् सम्भवति, मध्यस्थं तु शिरो दीर्घतमम्, तद् अंसफलकस्य अंसपीठाधःप्रदेशात् प्रभवति। तेषां च त्रयाणां संयोगेन एकीभावो बाहुपृष्ठे, निवेशश्च कलाकण्डरामयः अन्तःप्रकोष्ठास्थ्नः कूर्पर-कूटपृष्ठे। कार्यं पुनरस्याः संकुचितस्य बाहोः प्रसारणं कूर्परसन्धौ। प्रचेष्टनी नाड़ी बहिर्बाहुका नाम।

अथ प्रकोष्ठीयाः पेश्यः।

तासां पुरोवर्त्तिन्यः अष्टौ, पश्चिमस्थाश्च द्वादशेति विंशतिरेकैकस्मिन् प्रकोष्ठे। तास्वपि पुरःस्थाः—उत्तानाः पञ्च, गम्भीरास्तिस्रः। पश्चिमस्थाः—उत्तानाः सप्त, गम्भीराः पञ्च।

तत्र प्रकोष्ठपुरःस्था उत्तानाः यथा—

**करविवर्त्तनी दीर्घा**[२] नाम पेशी ( ८५ चित्रम् ) प्रगण्डास्थ्नः अधः-प्रान्तीयाद् आन्तरार्बुदात् अन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्धनान्तःसीमतश्च मूलद्वयेन सम्भूय तिर्यग्गता बहिःप्रकोष्ठास्थ्नो मध्यभागे पश्चिमतो निविशते। अस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनो नाड़ी तु मध्यप्रकोष्ठिका नाम, साऽस्याः मूलद्वयान्तराले प्रविष्टा।

**मणिबन्धसङ्कोचनी बहिःस्था**[३] नाम पेशी (८५ चित्रम्) तस्या एव अन्तःसीम्नि वर्त्तते। सा प्रगण्डास्थ्नः अधःप्रान्तीयादान्तरार्बुदात् पेशीपञ्चक-साधारणेन कण्डरामूलेन सम्भूय तर्जनीमूलशलाकाया मूलपुरोभागे निविशते। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी तु नाड़ी मध्यप्रकोष्ठिका नाम।

**करतलप्रसारणी**[४] नाम तनुदीर्घा पेशी ( ८५ चित्रम् ) तस्या अप्यन्तःसीम्नि दृश्यते। तस्याः प्रभवः पूर्ववत्, निवेशस्तु कङ्कणिकाख्यस्नायौ करतलिकाख्यस्नायौ च। कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

---

१। त्रिशिरस्का—Triceps Brachii. २। करविवर्त्तनी दीर्घा—Pronator Teres. ३। मणिबन्धसंकोचनी बहिःस्था—Flexor Carpi Radialis ४। करतलप्रसारणी—Palmaris Longus.

( ८६ चित्रम् )

## वामप्रकोष्ठपुरःस्थाः पेश्यः ( गम्भीराः )।




[ अङ्गुलीसङ्कोचन्या अग्रपर्विकायाः कण्डरा चतुष्टयम् अङ्गुलीचतुष्टये दृश्यम्। ]

**मणिबन्धसङ्कोचनी अन्तःस्था**[1] नाम दीर्घमांसला पेशी (८५ चित्रम्) प्रकोष्ठस्य चरमान्तःसीमस्था। तस्याः प्रभवः—एकेन मूलेन पूर्ववत्, अपरेण अन्तःप्रकोष्ठास्थ्नः कूर्परकूटान्तर्देशात् ऊर्ध्वप्रान्तपश्चिमधारार्धाच्च। निवेशस्तु अंकुशक-वर्तुलकाख्ययोः कूर्चास्थ्नोः, पञ्चममूलशलाकायाम्, कङ्कणिकाख्यस्नायौ च। कार्यं पुनरस्याः स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी तु अन्तःप्रकोष्ठिका नाम।

**अंगुलीसङ्कोचनी मध्यपर्विका**[2] नाम पृथुला पेशी (८५ चित्रम्) पूर्वोक्तपेशीचतुष्टयेनाऽऽवृता। तस्याः प्रभवस्त्रिभिर्मूलैरूर्ध्वशः। तत्रैकं मूलं पूर्वोक्तपेशीचतुष्टयसाधारणं प्रगण्डास्थ्नोऽधःप्रान्ते सम्बद्धम्, अपरं मूलद्वयं अन्तर्बहिः प्रकोष्ठास्थ्नोरूर्ध्वप्रान्तपार्श्वयोः। निवेशस्तु तस्याश्चतुर्भिः कण्डराग्रैरंगुलीचतुष्टयस्य मध्यपर्वपार्श्वयोः। तानि च कण्डराग्राणि निर्भिद्य अधः प्रसृताः अंगुलीसङ्कोचन्या अग्रपर्विकायाः कण्डराः। अस्याः कार्यमंगुलीचतुष्टयस्य मध्यपर्वाकर्षणेन सङ्कोचनम्। प्रचेष्टनी नाड़ी तु मध्यप्रकोष्ठिका नाम।

अथ प्रकोष्ठपुरःस्था गम्भीराः पेश्यः। यथा—

**अंगुलीसङ्कोचनी अग्रपर्विका**[3] नाम पृथुमूला पेशी (८६ चित्रम्) पूर्वोक्तपेशीपञ्चकेनावृता प्रकोष्ठान्तःसीम्नि वर्त्तते। सेयमन्तःप्रकोष्ठास्थ्नः चञ्चुप्रवर्धनमूलात्, मध्यनलकस्य पादोनसमग्रपुरोभागात्, प्रकोष्ठान्तरालायाः कलायाश्च सम्भूय अधः प्रसृता कण्डराचतुष्टये विभज्यते। निविशते च सा अंगुलीसङ्कोचन्या मध्यपर्विकायाः कण्डराचतुष्टयं स्वकण्डराभिः निर्भिद्य अंगुलीनामग्रपर्वसु। अस्याः कार्यमंगुल्यग्रपर्वाकर्षणेन अंगुलिसङ्कोचनम्। प्रचेष्टनं तु अन्तःप्रकोष्ठिकया नाड्या, अग्रिमप्रकोष्ठान्तरालाया मध्यप्रकोष्ठिकाख्य-शाखया च।

**अंगुष्ठसङ्कोचनी दीर्घा**[4] नाम पेशी (८५।८६ चित्रयोः) पूर्वोक्तायाः सहकारिणी प्रकोष्ठबहिःसीमस्था। सा बहिःप्रकोष्ठास्थ्नः उत्तरार्धपुरोभागात् प्रकोष्ठान्तरालायाः कलायाश्च स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी तु मध्यप्रकोष्ठिकाया अग्रिमप्रकोष्ठान्तराला नाम शाखा।

---

१। **मणिबन्धसंकोचनी अन्तःस्था**—Flexor Carpli Ulnaris. २। **अंगुलीसङ्कोचनी मध्यपर्विका**—Flexor Sublimis Digitorum. ३। **अंगुलीसङ्कोचनी अग्रपर्विका**—Flexor Profundus Digitorum. ४। **अंगुष्ठसंकोचनी दीर्घा**—Flexor Pollicis Longus.

( ८७ चित्रम् )

## प्रकोष्ठपश्चिमाः पेश्यः ।



**करविवर्त्तनी चतुरस्रा**[1] नाम (८६ चित्रम्) प्रकोष्ठाधोभागपुरस्तादायता ह्रस्वा गम्भीरतमा च पेशी। सा उभयोरपि प्रकोष्ठास्थ्नोऽधःप्रान्तयोः तिर्यक् प्रतिबद्धा। तस्याः कार्यं करतलस्य पश्चाद्विवर्त्तनम्। प्रचेष्टनी नाड़ी मध्यप्रकोष्ठिकायाः अग्रिमा प्रकोष्ठान्तराला नाम शाखा।

ता एता अष्टौ प्रकोष्ठपुरःस्थाः पेश्यः।

अथ प्रकोष्ठपश्चिमाः पेश्यः। तत्र उत्तानाः यथा—

**करोत्ताननी दीर्घा**[2] नाम स्थूलमांसलमध्या वेमसमाकारा पेशी (८७ चित्रम्)। सा प्रकोष्ठपश्चिमप्रभवाऽपि तद्बहिःसीम्नि स्फुटतरं दृश्या, सेयं प्रगण्डास्थ्नो वाह्यार्बुदात् संभूय वहिःप्रकोष्ठास्थ्नो वहिर्मणिकमूले दीर्घकण्डरया सम्बद्धा। सा स्वनामोद्दिष्टकार्याऽपि कूर्परद्वारिकया सह प्रचेष्टमाना वाहोरपि सङ्कोचनी। तस्याः प्रचेष्टनी नाड़ी वहिःप्रकोष्ठिका नाम।

**मणिबन्धापकर्षणी दीर्घा**[3] **ह्रस्वा**[4] चेति द्वे पेश्यौ (८७ चित्रम्) प्रगण्डास्थ्नोऽधःप्रान्तीयाद् वाह्यार्बुदात्, वहिःस्थायाः कूर्परसन्धिबन्धन्याः स्नायोश्च समानकण्डरामूलेन सम्भवतः। निवेशस्तु दीर्घायाः तर्जनीमूलशलाकामूले, ह्रस्वायाः पुनः मध्यमामूलशलाकामूले। क्रिया तावदुभयोरपि मणिबन्धस्य पश्चात् कर्षणम्। प्रचेष्टनी नाड़ी दीर्घाया वहिःप्रकोष्ठिका नाम, ह्रस्वायाः पुनः प्रकोष्ठान्तराला पश्चिमा।

**अंगुलीप्रसारणी साधारणी**[5] नाम प्रकोष्ठपश्चिमपेशीषु (८७ चित्रम्) कूर्परसन्धिमध्यवर्त्तिनी पेशी प्रगण्डास्थ्नोऽधःप्रान्तीयाद् वाह्यार्बुदात्वहिःस्थायाः कूर्परसन्धिबन्धन्याः स्नायोश्च साधारणकण्डरामूलेन सम्भूय मणिबन्धातूर्ध्वं कण्डराचतुष्टये विभज्यमाना अंगुलीचतुष्टयस्य अग्र-मध्यपर्वणां पृष्ठतः सम्बद्धा। ताश्च कण्डराः अंगुलिसन्धीनां पृष्ठगस्नायुकार्यं साधयन्तीति विशेषः। तस्याः क्रिया स्वनामव्याख्याता। प्रचेष्टनी नाड़ी प्रकोष्ठान्तराला पश्चिमा नाम।

---

१। करविवर्त्तनी चतुरस्रा—Pronator quadratus. २। करोत्ताननी दीर्घा—Brachio-radialis. ३। मणिबन्धापकर्षणी दीर्घा—Extensor Carpi Radialis Longus. ४। सैव ह्रस्वा—Extensor Carpi Radialis Brevis. ५। अंगुलीप्रसारणी साधारणी—Extensor Digitorum Communis.

**कनिष्ठाप्रसारणी**[1] नाम तन्वी पेशी ( ८७ चित्रम् ) पूर्वस्याः सहचरी पूर्ववन्मूलेन सम्भूय कनिष्ठांगुल्या मध्याग्रपर्वपृष्ठतः पूर्ववत् सम्बद्धा, पूर्वस्याः पेश्याः कनिष्ठान्तिककण्डरया मिलिता च । क्रिया त्वस्याः स्वनामव्याख्याता । प्रचेष्टनी नाड़ी पूर्ववत् ।

**मणिबन्धापकर्षणी करभिका**[2] नाम स्थूलमांसला पेशी ( ८७ चित्रम् ) प्रगण्डास्थ्नः आन्तरार्बुदोपकण्ठतः अन्तःप्रकोष्ठास्थ्नो मध्यनलकपश्चिमधारार्धाच्च सम्भूय अन्तर्मणिकपश्चिमसीतामार्गेण मणिबन्धादधः प्रसृता कनिष्ठामूलशलाकामूले ( करभदेशे ) सम्बद्धा च । अस्याः कार्यं स्वनामव्याख्यातम्, मणिबन्धस्य मध्यरेखां प्रति कर्षणञ्चापरम् । प्रचेष्टनी तु नाड़ी प्रकोष्ठान्तराला पश्चिमा नाम ।

**कूर्परपृष्ठिका**[3] नाम ह्रस्वत्रिकोणप्राया पेशी ( ८७ चित्रम् ) प्रगण्डास्थ्नो बाह्यार्बुदात् सम्भूय अन्तःप्रकोष्ठास्थ्नः कूर्परकूटपृष्ठे स्तोकेन मध्यनलकपृष्ठे च तिर्यक् सम्बद्धा । सा त्रिशिरस्कायाः सहकारिणी कूर्परसन्धेः प्रसारणकार्या । तस्याः प्रचेष्टनी नाड़ी बहिर्बाहुकायाः शाखा ।

अथ प्रकोष्ठपश्चिमा गम्भीराः पेश्यः । यथा—

**करोत्ताननी ह्रस्वा**[4] नाम पेशी (८६ चित्रम् ) प्रगण्डास्थ्नो बाह्यार्बुदात्, कूर्परसन्धिबन्धन्या मुण्डवेष्टनिकाख्यस्नायोः बहिःपार्श्विकाख्यस्नायोः, कूर्परकूटबहिर्धारातश्च सम्भूय तिर्यक् प्रसृता बहिःप्रकोष्ठास्थ्नो ग्रीवायां सम्बद्धा । अस्याः कार्यं करस्य उत्तानीकरणं स्तोकेन, प्रकोष्ठास्थ्नो बहिर्विवर्त्तनात् । प्रचेष्टनी नाड़ी प्रकोष्ठान्तराला पश्चिमा नाम, सा च पेशीं निर्भिद्य प्रसृतेति विशेषः ।

**अंगुष्ठापकर्षणी दीर्घा**[5] नाम सुमांसला पेशी ( ८७ चित्रम् ) पूर्वोक्तपेश्याच्छादिता प्रकोष्ठास्थ्नो मध्यनलकपश्चिमदेशात् प्रकोष्ठान्तरालायाः कलायाश्च सम्भूता । सेयं मणिबन्धादूर्ध्वं कण्डरीभूयांऽगुष्ठमूलशलाकामूले निविशते । तस्याः कार्यमंगुष्ठस्य बहिर्मुखं कर्षणम् । प्रचेष्टनी नाड़ी प्रकोष्ठान्तराला पश्चिमा नाम ।

---

१ । कनिष्ठाप्रसारणी—Extensor Digiti Quinti Proprius. २ । मणिबन्धापकर्षणी करभिका—Extensor Carpi Ulnaris. ३ । कूर्परपृष्ठिका—Anconeus. ४ । करोत्ताननी ह्रस्वा —Supinator. ५ । अंगुष्ठापकर्षणी दीर्घा—Abductor Policis Longus.

**अंगुष्ठप्रसारणी ह्रस्वा**[1] नाम पेशी ( ८७ चित्रम् ) पूर्वस्या उत्सङ्गे स्थिता। सेयं बहिःप्रकोष्ठास्थ्नो मध्यनलकपश्चिमभागात् प्रकोष्ठान्तरालकलायाश्च सम्भूय अंगुष्ठपश्चिमपर्वमूले सम्बद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**अंगुष्ठप्रसारणी दीर्घा**[2] नाम पेशी ( ८७ चित्रम् ) पूर्वोक्तपेश्या अन्तः-सीम्नि दृश्यते। सेयमन्तःप्रकोष्ठास्थ्नो मध्यनलकपश्चिमतः सम्भूय अंगुष्ठाग्रिम-पर्वमूले निविशते। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**तर्जनीप्रसारणी**[3] नाम तनुदीर्घा पेशी ( ८७ चित्रम् ) पूर्ववत् सम्भूय तर्जन्या मध्यमपश्चिमपर्वणोर्निविशते। सेयमंगुलीप्रसारणीपेश्याः तर्जनीगत-कण्डरायाः सहचरीभूता। तस्या अपि कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

अथ मणिबन्धीयाः स्नायुपट्टिकाः।

मणिबन्धव्यतिकरेण प्रसरन्तीनां कण्डराणां, सिरा-धमनी-नाड़ीनां, श्लेष्म-धरकलानाञ्च कण्डरानुगानां सन्धारण्यः स्नायुपट्टिकाश्चात्र तिस्रो द्रष्टव्याः। ताः गम्भीरायाः प्रकोष्ठप्रावरण्याः सान्द्रीभूता विभागा एवेति सुवचम्। ताश्च प्रकोष्ठाधरीया अग्रिमा, प्रकोष्ठाधरीया पश्चिमा, कङ्कणिका चेति। तत्र—

**प्रकोष्ठाधरीया अग्रिमा**[4] नाम स्नायुपट्टिका ( ८५ चित्रम् )† प्रकोष्ठास्थ्नोरधःप्रान्तयोरनुप्रस्थं सम्बद्धा मणिबन्धादूर्ध्वम् पुरस्तात्। सा अंगुली-सङ्कोचन्यादिपेशीनां कण्डराधारणी।

**प्रकोष्ठाधरीया पश्चिमा**[5] नाम स्नायुपट्टिका ( ८७ चित्रम् )† प्रकोष्ठास्थ्नोरधःप्रान्तयोरनुप्रस्थं सम्बद्धा पश्चिमतः। तस्याः प्रतानाः वर्त्तुलको-पलकयोः कूर्चास्थ्नोरपि पृष्ठतः सन्नद्धाः। सेयं प्रसारण्याख्यपेशीनां कण्डरा-धारणी। ते चैते स्नायुपट्टिके उत्ताने।

---

१। अंगुष्ठप्रसारणी ह्रस्वा—Extensor Pollicis Brevis. २। अंगुष्ठप्रसारणी दीर्घा—Extensor Pollicis Longus. ३। तर्जनीप्रसारणी—Extensor Indicis Proprius. ४। प्रकोष्ठाधरीया अग्रिमा—Volar Carpal Ligament. ५। प्रकोष्ठाधरीया पश्चिमा—Dorsal Carpal Ligament. † ८५। ८७ चित्रयोः प्रमादात् कङ्कणिकेति लिखितं पट्टिकाद्वयं क्रमेण प्रकोष्ठाधरीया अग्रिमा, पश्चिमा चेति अवगन्तव्यम्। प्रमादश्च क्षन्तव्यः।

( ८८ चित्रम् )

## दक्षिणकरतलीयाः स्नायुपट्टिकाः कण्डराश्च।




८८ चित्रस्य व्याख्या—१। अंगुलिपोषणी धमनी। २-३। अनुकण्डरिकाख्यं पेशीद्वयम्। ४। अंगुष्ठमूलकषणी पेशी। ५। मणिबन्धसङ्कोचन्या अन्तःस्थायाः कण्डरा।

❀ अन्तःप्रकोष्ठिकाया नाड्याः शाखाद्वयं कनिष्ठाऽनामिकापार्श्वप्रवेशि।

**कङ्कणिका**[१] नाम गम्भीरा स्नायुपट्टिका ( ८८ चित्रम् ) कूर्चास्थ्नां पुरतो मणिबन्धानुप्रस्थं प्रतता। सेयमन्तःसीम्नि फणधर-वर्त्तुलकाभ्यां, बहिःसीम्नि च नौनिभ-पर्याणकाभ्यां सम्बद्धा। सा च कूर्चास्थिसंघातकृतं कोरोदरं स्थानमाच्छादयन्ती गभीरां कण्डरासुरङ्गामारचयति यामाश्रित्य करतले प्रसरन्ति अंगुलीसङ्कोचन्याख्यपेशीद्वयस्य अष्टौ कण्डराः, दीर्घाया अंगुष्ठ-सङ्कोचन्याः कण्डरा, मध्यप्रकोष्ठिका नाम नाड़ी च। मणिबन्धसङ्कोचन्या बहिःस्थायाश्च कण्डरा कङ्कणिकां निर्भिद्य पर्याणकमध्यवर्त्तिन्या सीतया विवर्त्तते। कङ्कणिकापुरस्तलमाश्रित्य तु प्रसृता अन्तःप्रकोष्ठिका नाम सिरा-धमनी-नाड्यः, अन्तर्मध्यप्रकोष्ठिकयोर्नाड्योस्त्वाचशाखाश्च। सम्बध्येते चात्र करतलप्रसारण्या दीर्घायाः, मणिबन्धसङ्कोचन्या अन्तःस्थायाश्च कण्डरे। एषा च कङ्कणिका स्नायुः क्षुद्राणामंगुष्ठ-कनिष्ठापेशीनां प्रभवभूता, करतलिकाख्य-प्रावरण्या वक्ष्यमाणया संसक्ता। सर्वाश्च ताः कण्डराः वेष्टयन्ति कण्डरानुगा नाम दीर्घकञ्चुकाकाराः श्लेष्मधराः कलाः, कण्डराणां तथावेष्टितानां साधुप्रवर्त्तनाय।

## अथ करपेश्यः।

ता एकोनविंशतिः। तद्यथा—करतले अंगुष्ठमूलं परितश्चतस्रः, कनिष्ठा-मूलं परितश्च चतस्र—इत्यष्टौ; अंगुलीमूलशलाकान्तरालेषु—अग्रिमाः सप्त, पश्चिमाश्चतस्रः—इत्येकादश।

करपृष्ठे तु प्रसरन्तः प्रसारणी-पेशीनां कण्डराप्रतानाः कूर्चकाकारेण सन्नि-विष्टाः अंगुलीसन्धीन् द्रढ़यन्ति (८७ चित्रम्)। मांसला तु पेशी तत्र नास्त्येव।

आदौ चेह द्रष्टव्या सर्वासां करपेशीनां करतलीयसिराधमन्यादीनां च समाच्छादनी सुदृढ़ा प्रावरणी **करतलिका**[२] नाम स्नायुः (८८ चित्रम्)। तस्याः मूलभागः कङ्कणिकाख्यस्नायौ सम्बद्धः, करतलप्रसारण्या दीर्घायाः कण्डरान्ते च। सेयं प्रायः समग्रं करतलमाच्छादयन्ती मध्ये दृढ़तरत्रिकोणांशेन उपलक्षिता, पार्श्वयोश्च दृढ़शाखाद्वयेन। विभज्यते च सा पञ्चांगुली-मूलगतासु पञ्चसु प्रशाखासु। तत्र अंगुष्ठमूलगा प्रशाखा तनुतमा, अपरास्तु दृढाः परस्परसंसक्ताश्च अंगुलीमूलगैः स्नायुप्रतानैः। तैराच्छाद्यन्ते अंगुली-सङ्कोचन्याख्यपेश्याः कण्डरान्ताः।

---

१। कङ्कणिका—Transverse Carpal Ligament. २। करतलिका—Palmer apponeurosis.

( ८९ चित्रम् )

# वामकरतलस्थाः पेश्यः ।




**८९ चित्रस्य व्याख्या**—१। अंगुलिसंकोचन्या मध्यपर्विकायाः कञ्चुकीभूता कण्डरा। २। अंगुलिसंकोचन्या अग्रपर्विकायाः कण्डरा। ३। मणिबन्धसंकोचनी बहिःस्था। ४। करतल-प्रसारणी। ५। अंगुष्ठजापिनी। ६। अंगुष्ठापकर्षणी ह्रस्वा। ७। अंगुष्ठसंकोचनी ह्रस्वा। ८। अंगुष्ठमूलकर्षणी। ९। प्रथमा पश्चिमशलाकान्तरीया। १०। अंगुष्ठसंकोचनी दीर्घा।

अथ अंगुष्ठमूलगाः पेश्यः।

**अंगुष्ठापकर्षणी ह्रस्वा**[1] नाम ह्रस्वमांसला पेशी (८६ चित्रम्) नौनिभपर्याणकयोर्मूलतः कङ्कणिकाख्यस्नायोश्च सम्भूय अंगुष्ठपश्चिमपर्वमूले सम्बद्धा। सेयमंगुष्ठस्य बहिःकर्षणी। तस्याः प्रचेष्टनी नाड़ी मध्यप्रकोष्ठिका नाम।

**अंगुष्ठजापिनी**[2] नाम पेशी (८६ चित्रम्) अंगुष्ठमूलबहिःसीम्नि वर्त्तते। सा पर्याणकाख्यकूर्चास्थ्नः पुरोभागात् कङ्कणिकाख्यस्नायोश्च सम्भूय अंगुष्ठमूलशलाकाया बहिःसीम्नि सम्बद्धा। सेयमंगुष्ठसङ्कोचनाऽकर्षणाभ्यां जपकर्मसाधनी। तस्याः प्रचेष्टनी नाड़ी पूर्ववत्।

**अंगुष्ठसङ्कोचनी ह्रस्वा**[3] नाम पेशी (८६।८६ चित्रम्) कङ्कणिकाख्य-स्नायोः सम्भूय अंगुष्ठपश्चिमपर्वणः पार्श्वयोः चणकास्थियुतेन कण्डराद्वयेन सम्बद्धा। अस्याश्च पेश्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टन्यौ नाड्यौ मध्यप्रकोष्ठिका अन्तःप्रकोष्ठिका चेति।

**अंगुष्ठमूलकर्षणी**[4] नाम द्विधा विभक्ता पेशी (८६ चित्रम्) मध्यकूटाख्यकूर्चास्थ्नः, तर्जनी-मध्यमामूलशलाकयोः मूलपार्श्वाभ्यां, कङ्कणिकाख्य-स्नायोश्च सम्भूय अंगुष्ठपश्चिमपर्वान्तःसीम्नि चणकास्थियुतया कण्डरया सम्बद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी तु नाड़ी अन्तः-प्रकोष्ठिका नाम।

ता एताश्चतस्रः पेश्यः कोमलामुत्सेधवतीं मांसपिण्डकामारचयन्ति अंगुष्ठ-मूले पुरतः। सेयमंगुष्ठपिण्डिका नाम।

अथ कनिष्ठामूलगाः पेश्यः।

**करभसङ्कोचनी**[5] नाम तिरश्चीना पेशी (८८ चित्रम्) कङ्कणिकाख्य-स्नायोः करतलिकाख्यस्नायोश्च सम्भूय करभदेशे[6] मणिबन्धाधःस्थायां त्वचि संबद्धा। तस्याः क्रिया स्वनामव्याख्याता। प्रचेष्टनी नाड़ी तु अन्तः-प्रकोष्ठिका नाम।

---

१। अंगुष्ठापकर्षणी ह्रस्वा—Abductor Pollicis Brevis. २। अंगुष्ठजापिनी—Opponens Pollicis. ३। अंगुष्ठसंकोचनी ह्रस्वा—Flexor Pollicis Brevis. दीर्घा तु ५३ पृष्ठे वर्णिता। ४। अंगुष्ठमूलकर्षणी—Adductor Pollicis. ५। करभसंकोचनी—Palmaris Brevis. ६। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः'—इत्यमरः।

**कनिष्ठापकर्षणी**[१] नाम पेशी (८६ चित्रम्) वर्त्तुलकाख्यकूर्चास्थ्नः मणिबन्धसङ्कोचन्या अन्तःस्थायाः कण्डरातश्च संभूय कनिष्ठांगुल्याः पश्चिमपर्वमूले सम्बद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**कनिष्ठासङ्कोचनी**[२] (करगा) नाम पेशी (८६ चित्रम्) फणधराख्य-कूर्चास्थ्नः फणाग्रात् कङ्कणिकाख्यस्नायोश्च संभूय कनिष्ठापश्चिमपर्वमूले कनिष्ठा-पकर्षण्या पेश्या संबद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**कनिष्ठामूलकर्षणी**[३] नाम पेशी (८६ चित्रम्) पूर्ववत्प्रभवा कनिष्ठा-मूलशलाकाया अन्तःसीम्नि सम्बद्धा, स्वनामव्याख्यातकार्या। तस्याः प्रचेष्टनी नाड़ी पूर्ववत्।

एताश्चतस्रः पेश्यः कनिष्ठामूले करभपिण्डिकां नाम पेशीसङ्घातं निष्पादयन्ति।

अथ करांगुलिमूलशलाकाऽन्तरालस्थाः पेश्यः।

ता एकादश यथा—करानुकण्डरिकाश्चतस्रः। शलाकान्तरीया अग्रिमाः तिस्रः, पश्चिमाः चतस्र इति। तत्र—

**करानुकण्डरिका**[४] नाम दीर्घजलौकाकाराः पेश्यः (८६ चित्रम्) करां-गुलीसङ्कोचन्या अग्रपर्विकायाः कण्डराचतुष्टयात् सम्भूय अंगुलीमूलमाश्लिष्य करपृष्ठतो गताभिः स्वकण्डराभिः अंगुलीप्रसारण्याः साधारण्याः कण्डरासु सम्बद्धाः। तासां कार्यमंगुलीपश्चिमनलकानामाकर्षणम्। प्रचेष्टन्यो नाड्यस्तु अन्तःप्रकोष्ठिकाया मध्यप्रकोष्ठिकायाश्च शाखाः।

**अग्रिमाः शलाकान्तरीयाः**[५] नाम तिस्रः पेश्यः अंगुष्ठेतराणामंगुलीनां मूलशलाकान्तरालेषु वर्त्तन्ते। ताः मध्यमावर्जमपरासां मूलशलाकानां पार्श्वेभ्यः सम्भूय तत्तदंगुलीनां पश्चिमनलकमूलेषु सम्बद्धाः। तासां कार्यम्—अंगुलीनां संव्यूहनम्। प्रचेष्टनी नाड़ी अन्तःप्रकोष्ठिका नाम।

---

१। कनिष्ठापकर्षणी—Abductor Digiti Quinti. २। कनिष्ठासंकोचनी—Flexor Digiti Quinti Brevis. ३। कनिष्ठामूलकर्षणी—Opponens Digiti Quinti. ४। करानु-कण्डरिकाः—Lumbricales. ५। अग्रिमाः शलाकान्तरीयाः—Volar Inter-ossei.

**पश्चिमाः शलाकान्तरीयाः**[1] नाम चतस्रः पेश्यः शरपुंखाकाराः, ताः पञ्चानामपि अंगुलीमूलशलाकानां पार्श्वेभ्यः सम्भूताः। तासामेकैकस्या मूलद्वयं मूलशलाकयोः स्वपार्श्वस्थयोः पार्श्वाभ्यां सम्भवति। निविशन्ते च तासां कण्डराः इत्थम्—मध्यमांगुल्याः पश्चिमनलकमुभयतो द्वे, तर्जन्यनामिकयोर्बहिरन्तःसीम्नोश्च द्वे इति। तासां कार्यम्—अंगुलीनां विस्फारणम्। प्रचेष्टनी नाड़ी पूर्ववत्।

ता एताः करपेश्यो व्याख्याताः। समाप्यन्ते चैतावता ऊर्ध्वशाखापेश्यः।

इति चतुर्थोऽध्यायः।

---

## पञ्चमोऽध्यायः।

अथातः अधःशाखीयपेशीवर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु अष्टपञ्चाशत् पेश्यः अधःशाखायामेकैकस्यां सम्बध्यन्ते। ताः स्थानप्राधान्येन पञ्चधा विभज्यन्ते। तद्यथा - जघनोदरीये द्वे। नितम्बीया नव। और्व्यः पञ्चदश। जङ्घागताः त्रयोदश। पादगता ऊनविंशतिरिति।

तत्र जघनोदरीये द्वे वस्तिगुहान्तःसम्भूते, नितम्बमूलगे च द्वे — प्राधान्येन श्रोणिचक्राभ्यन्तरस्थे। ताश्चतस्रो मध्यकाये संख्यातपूर्वाः। तस्मात् समष्टिसंख्याने चतुःपञ्चाशद् अधःशाखीया पेश्यः इहोच्यन्ते।

सर्वाश्च ताः सुदृढ़या उत्तानप्रावरण्या, गम्भीरप्रावरण्या च समावृताः। तत्र गम्भीरप्रावरण्या जघनोरुनितम्बच्छादनो दृढ़कञ्चुकाकारो भागः ऊरुकञ्चुका नाम (६० चित्रम्)। सा ऊर्ध्वसीम्नि—त्रिकानुत्रिकयोः, बहिःपार्श्वे—जघनधारायां, पुरस्ताद् — वंक्षणिकाख्यस्नायुरज्वां भगास्थ्न उत्तरशृङ्गे च, अन्तःपार्श्वे—श्रोणिगवाक्षपुरःपरिधौ, कुकुन्दरपिण्डे, त्रिककुकुन्दरिकाख्यस्नायुरज्वां च सम्बद्धा। सेयमूरुनितम्बपेशीसङ्घमाच्छादयन्ती अधःसीम्नि जानुसन्धिं परितो दृढ़संसक्ता। मिलिता च साऽधस्ताद् जङ्घाच्छादन्या प्रावरण्या। तस्याश्च

---

१। पश्चिमाः शलाकान्तरीयाः—Dorsal Inter-ossei.

( ६० चित्रम् )

ऊरूदरपार्श्विकाः पेश्यः ( उत्तानाः ) ।



ऊरुकञ्चुकायाः नितम्बच्छादनो भागः क्वचित् नितम्बप्रावरणीति नाम्ना निर्दिश्यते। ऊरुकञ्चुकां च बहिःसीम्नि कर्षति, दृढं धारयति चाग्रे वक्ष्यमाणा ऊरुकञ्चुकाकर्षणी नाम पेशी। पुरस्ताच्च कञ्चुकायां वंक्षणाधः सुमहत् छिद्रं तिरश्चीन-ठकाराकारं, तत् अनुवंक्षणच्छिद्रं नाम। तेन प्रविशति अनुवंक्षणिकाख्या स्थूलोत्ताना सिरा ऊर्वन्तः। पश्चाच्च ऊरुकञ्चुकाया अन्तःप्रविष्टे पेश्यन्तरालगते स्थूलकले, ते ऊर्वस्थिपृष्ठस्थायां चतुर्भुजप्राकारिकाख्यरेखायां संसक्ते।

जघनोदरीये पेश्यौ तु—कटिलम्बिनी दीर्घा श्रोणिपक्षिणी चेति। ते वर्णितपूर्वे।

अथ नितम्बीयाः पेश्यः।

**नितम्बपिण्डिका गरिष्ठा**[1] नाम स्थूलमांसला तालवृन्तायतना पेशी नितम्बनिर्माणो (६०।६१ चित्रयोः)। सेयं श्रोणिफलकस्य जघनपृष्ठधारातः, त्रिकानुत्रिकपार्श्वाभ्यां, गुर्व्याः त्रिक-कुकुन्दराख्यस्नायोः, सन्निहितमांसधरकलातश्च विशालायतैः मांसलमूलैः सम्भूय क्रमेण दृढस्थूलायतकण्डरारूपेण परिणमति, निविशते च ऊर्वस्थिपृष्ठे प्राकारिकाख्यरेखायाः पश्चिमोर्ध्वधारायाम्। सम्बध्यते च सा ऊरुकञ्चुकाख्यप्रावरण्या स्तोकेन। विवर्त्तते च तस्याः कण्डरा ऊर्वस्थ्नो महाशिखरकपार्श्वे श्लेष्मधरकलापुटक-व्यवधानेन। तस्याः कार्यं त्रिविधम्। ऊर्वस्थ्नः प्रसारणं, बहिर्विवर्त्तनं चेति प्रथमम्। दण्डाकारेण तिष्ठतः पुरुषस्य मध्यकायानुपूर्व्या सक्थ्नो धारणं द्वितीयम्। पुरोऽवनमितमध्यस्य पुरुषस्य मध्यकायोत्कर्षणेन शरीरस्य सरलीकरणं तृतीयम्। प्रचेष्टनी तु नाड़ी अधरा जाघनी नाम।

**नितम्बपिण्डिका मध्यमा**[2] नाम तादृश्येव पेशी (६१ चित्रम्) पूर्वोक्तपेश्या भूम्ना समावृता। सेयं जघनपृष्ठधाराभ्यां सन्निहितमांसधरकलातश्च आयतमांसलैर्मूलैः सम्भूय क्रमेन कण्डरारूपेण परिणमन्ती ऊर्वस्थ्नो महाशिखरक-पृष्ठे निविशते। विवर्त्तते च तस्या अपि कण्डरा श्लेष्मधरकलापुटकव्यवधानेन तदुपकण्ठे। तस्याः कार्यम्—ऊर्वस्थ्नो विवर्त्तनम्, शरीरस्य ऋजुभावेन धारणञ्च। प्रचेष्टनी तु नाड़ी उत्तरा जाघनी नाम।

---

१। नितम्बपिण्डिका गरिष्ठा—Gluteus Maximus. २। नितम्बपिण्डिका मध्यमा—Gluteus Medius.

( ६१ चित्रम् )

## वामसक्थि-पश्चिमाः पेश्यः ( उत्तानाः )।



**नितम्बपिण्डिका लघिष्ठा**[1] नाम (६२ चित्रम्) तादृश्येव स्वल्पतरायतना पेशी पूर्वोक्तपेशीभ्यां समावृता। सेयं जघनपृष्ठतः सम्भूय ऊर्वस्थ्नो महाशिखरकपुरोभागे निविशते। तस्याः कार्यं पूर्ववत्। प्रचेष्टनी नाड़ी अधरा जाघनी नाम।

**शुण्डिका**[2] नाम शुण्डाकारा पेशी (६३ चित्रम्) गरिष्ठया नितम्बपिण्डिकयाच्छादिता मध्यकाये वर्णितपूर्वा संख्यातपूर्वा च।

**श्रोणिगवाक्षिणी अन्तःस्था**[3] नाम पेशी (६३ चित्रम्) वक्ष्यमाणाभ्यां यमलाख्यपेशीभ्यां मध्ये धृता पूर्वं वर्णितस्वरूपा संख्यातपूर्वा च।

**यमलाख्ये पेश्यौ—उत्तरा, अधरा** चेति (६३ चित्रम्)। ते क्रमेण श्रोणिफलकस्य कुकुन्दरकण्टक-पिण्डाभ्यां सम्भूय अन्तःस्थायाः श्रोणिगवाक्षिण्याः पेश्या ऊर्ध्वाधःप्रान्ताभ्यां सम्मिलितप्राये ऊर्वस्थ्नो महाशिखरके निविशेते। तयोः कार्यम् ऊर्वस्थ्नो बहिर्विवर्त्तनम्। प्रचेष्टनं तु पञ्चम्या अनुकटिकया नाड्या आद्याभ्यां अनुत्रिकाभ्यां च।

**ऊरुचतुरस्रा**[4] नाम चतुरस्रप्राया ह्रस्वमांसला पेशी (६३ चित्रम्) श्रोणिफलकस्य कुकुन्दरपिण्डात् सम्भूय ऊर्वस्थ्नो महाशिखरमूलपृष्ठे अनुप्रस्थं सम्बद्धा। तस्याः कार्यम् ऊर्वस्थ्नो बहिर्विवर्त्तनम्। प्रचेष्टनं पञ्चमानुकटिकया नाड्या प्रथमानुत्रिकया च।

**श्रोणिगवाक्षिणी बहिःस्था**[5] नाम त्रिकोणप्राया पेशी श्रोणिफलकस्य पुरोभागच्छादनी। सेयं श्रोणिगवाक्षपरिधिबहिर्देशात् तद्गवाक्षप्रावरण्याः कलायाश्च सम्भूय ऊर्वस्थ्नो महाशिखरपृष्ठस्थे कोटरे सम्बद्धा। तस्याः कार्यं पूर्ववत्। प्रचेष्टनी तु नाड़ी वंक्षणिका नाम।

### अथ ऊरुपेश्यः।

ऊरुपेश्यः खलु पञ्चदश, त्रिधा विभक्ताः। यथा—अग्रिमाः और्व्यः सप्त, अन्तःसीमस्थाः पञ्च, पश्चिमाः तिस्र इति।

---

१। नितम्बपिण्डिका लघिष्ठा—Gluteus Minimus. २। शुण्डिका—Pyriformis. ३। श्रोणिगवाक्षिणी अन्तःस्था—Obturator internus. ४। ऊरुचतुरस्रा—Quadratus Femoris. ५। श्रोणिगवाक्षिणी बहिःस्था—Obturator Externus.

( ६२ चित्रम् )

# वामजघनोरुपुरःस्थाः पेश्यः ।



अथ अग्रिमा ऊरुपेश्यः। यथा—

**ऊरुकञ्चुकाकर्षणी**[1] नाम तन्वी मांसला पेशी (६० चित्रम्) या श्रोणिफलकस्य जघनधारातः अग्रिमोर्ध्वजघनकूटतश्च सम्भूय ऊरुकञ्चुकाख्य प्रावरण्यां तिर्यक् सम्बद्धा। तस्याः कार्यम् ऊरुप्रसारणेन शिथिलीभूताया ऊरुकञ्चुकाया ऊर्ध्वकर्षणम्। प्रचेष्टनी तु नाड़ी—उत्तरा जाघनी नाम।

**दीर्घायामा**[2] नाम तन्वी पेशी (६२ चित्रम्) दीर्घतमा शरीरे। सा श्रोणिफलकस्य अग्रिमोर्ध्वस्थाद् जघनकूटात् तदधःस्थात् खातार्धाच्च सम्भूय तिर्यग्गता जङ्घास्थ्न ऊर्ध्वप्रान्तस्य अन्तःसीम्नि निविशते। तस्याः कार्यं ऊरोर्बहिर्विवर्त्तनम्, जङ्घायास्तिर्यगाकर्षणञ्च। प्रचेष्टनी नाड़ी—अग्रिमा और्वी नाम।

**ऊरुदण्डिका**[3] नाम स्थूलमध्या सुमांसला पेशी (६२ चित्रम्) ऊरुमध्ये पुरस्तादवतिष्ठते। सेयं श्रोणिफलकस्य अग्रिमाधःस्थजघनकूटात् वंक्षणोदूखलपरिधेरूर्ध्वदेशाच्च कण्डरामूलाभ्यां सम्भूय जानुकपालिकाया बहिर्धारायां ऊरुपिण्डिकासाधारण्या कण्डरया निविशते। तस्याः कार्यं जङ्घाप्रसारणम्। प्रचेष्टनी तु नाड़ी—अग्रिमा और्वी नाम।

**ऊरुप्रसारणी बाह्या**[4] नाम पेशी (६३ चित्रम्) ऊरुप्रसारणीषु स्थूलतमा। सा ऊरोः पुरस्ताद् बहिःसीम्नि च दृश्यते। सेयमूर्वस्थ्नो महाशिखरस्य अग्रिमधारातः प्राकारिकाख्यरेखातश्च सम्भूय जानुकपालिकाया बहिर्धारायां सम्बध्यते ऊरुपिण्डिकासाधारण्या कण्डरया। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी—अग्रिमा और्वी नाम।

**ऊरुप्रसारणी अन्तःस्था**[5] नाम पेशी (६२ चित्रम्) ऊर्वस्थ्नः अग्रिम-शिखरान्तरालाख्यरेखातः, प्राकारिकाख्य चतुर्भुजरेखायाः अन्तःसीमस्थभुजद्वयाच्च सम्भूय गरिष्ठाया ऊरुसंव्यूहन्याःपेश्याः कलाकण्डरातो लब्धावयवा ऊरुपिण्डिकासाधारण्या कण्डरया जानुकपालिकाया बहिर्धारायां निविशते। तस्याः कार्यादिकं पूर्ववत्।

---

१। ऊरुकञ्चुकाकर्षणी—Tensor Vaginæ Femoris. २। दीर्घायामा—Sartorius, ३। ऊरुदण्डिका—Rectus Femoris. ४। ऊरुप्रसारणी बाह्या—Vastus Externus. ५। ऊरुप्रसारणी अन्तःस्था—Vastus Internus.

( ६३ चित्रम् )

## वामनितम्बोरु-पश्चिमाः पेश्यः ( गम्भीराः )



**ऊरुप्रसारणी मध्यस्था**[1] नाम पेशी ( ६३ चित्रम् ) उभयोर्मध्यतः पुरस्तादवतिष्ठते ऊरुदण्डिकया समावृता। सेयम् ऊर्वस्थिनलकस्य अग्रिमोत्तरार्धात् सम्भूय पूर्ववत् ऊरुपिण्डिकासाधारण्या कण्डरया निविशते। तस्याः कार्यादिकं पूर्ववत्।

एवं च ऊरुप्रसारण्याख्यस्य पेशीचतुष्टयस्य निवेशकण्डरा पूर्वोक्तदिशा 'प्रसारणी'पेशीनां साधारणी, सेयम् ऊरुपिण्डिकाकण्डरा नाम। केचित्तु जानुकपालबन्धनीं नाम स्नायुरज्जुमेव जङ्घास्थिपुरोभागसंसक्ताम् उरुप्रसारणीनां साधारणीं कण्डरां मन्यन्ते, जानुकपालिकाञ्च तत्कण्डरोद्भवं सुबृहत् चणकास्थीति ( द्रश्यतां जानुसन्धिचित्रम् १४१ पृष्ठे )।

**जानुकोषकर्षणी**[2] नाम गम्भीरा तन्वी च पेशी ऊर्वस्थिनलकस्य अग्रिमाधःप्रदेशात् सम्भूय जानुसन्धिकोषस्य शिरसि सम्बद्धा। तस्याः कार्यं जानुप्रसारणे सति शिथिलीभूतस्य सन्धिकोषस्य ऊर्ध्वकर्षणम्। प्रचेष्टनी तु नाड़ी अग्रिमा औवीं नाम।

अथ अन्तःसीमस्था ऊरुपेश्यः। यथा —

**ऊर्वन्तःपट्टिका**[3] नाम तनुमांसला दीर्घात्ताभा पेशी ( ६३ चित्रम् ) ऊरोरन्तःसीम्नि वर्त्तते। सेयं भगास्थिसन्धानपार्श्वतः सम्भूय जानुसन्धिमुल्लङ्घयन्ती जङ्घास्थ्न ऊर्ध्वप्रान्तस्यान्तःसीम्नि निविशते, दीर्घायामायाः कण्डरया मिलिता। अस्याः कार्यं जङ्घास्थ्नः अन्तर्विवर्त्तनं सङ्कोचनञ्च। प्रचेष्टनी नाड़ी वंक्षणिका नाम।

**कङ्कतिका**[4] नाम आयतचतुरस्रा ह्रस्वपेशी ( ६२ चित्रम् ) श्रोणिफलकस्य वस्तिकण्ठिकाख्यरेखातः सम्भूय तिरश्चीनगत्या ऊर्वस्थिपृष्ठे लघुशिखरकाधः सन्निविष्टा। तस्याः कार्यं ऊर्वस्थ्नः संव्यूहनं वहिर्विवर्त्तनं च। प्रचेष्टनं नाड़ीद्वयम्—अनुवंक्षणिका, अग्रिमा औवीं च।

---

१। ऊरुप्रसारणी मध्यस्था—Vastus Medius. २। जानुकोषकर्षणी—Articularis Genu ( Sub-crureus. ) ३। ऊर्वन्तःपट्टिका—Gracilis. ४। कङ्कतिका—Pectineus.

( ६४ चित्रम् )




जंघापुरःपार्श्विकाः पेश्यः ।

**ऊरुसंव्यूहनी दीर्घा**[१] नाम त्रिकोणायतमांसला पेशी ( ६२ चित्रम् ) भगास्थिपुरोभागात् कण्डरामूलेन सम्भूय क्रमेणायतीभूता ऊर्वस्थिपृष्ठे प्राकारिकाख्यरेखाया मध्यभागे सम्बद्धा। तस्याः कार्यम् ऊर्वस्थ्नो मध्यरेखां प्रति आकर्षणं ( संव्यूहनम् ), वंक्षणसन्धिसंकोचनम्, बहिर्विवर्त्तनञ्च। प्रचेष्टनी तु नाड़ी वंक्षणिका नाम।

**ऊरुसंव्यूहनी ह्रस्वा**[२] नाम तादृश्येव पेशी ( ६२ चित्रम् ) पूर्वोक्ताया ऊर्ध्वं वर्त्तते। सा भगास्थ्नो मुण्डादधरशृङ्गाच्च कण्डरामूलेन समुत्थिता क्रमेण मांसला ऊर्वस्थ्नः प्राकारिकाख्यरेखाया ऊर्ध्वभागे सम्बद्धा। तस्याः कार्यादिकं पूर्ववत्। ताञ्च निर्भिद्य गता गम्भीरोरुकाख्यधमन्याः शाखा शाखाद्वयं वा।

**ऊरुसंव्यूहनी गरिष्ठा**[३] नाम विशालायतमांसला त्रिकोणप्राया पेशी ( ६२ चित्रम् ) पूर्वोक्तयोः पेश्योः पृष्ठतोऽधस्ताद्व वर्त्तते। सेयं श्रोणिगवाक्षस्य पुरःपरिधेः कुकुन्दरपिण्डाच्च कण्डरामूलेन सम्भूय क्रमेण मांसलायता ऊर्वस्थ्नः पृष्ठे प्रायः समग्रायां प्राकारिकाख्यरेखायां तदधःप्रान्तस्थे आन्तरोपार्वुदे च सम्बद्धा। चत्वारि चास्यां पेश्यां छिद्राणि द्रष्टव्यानि। तत्रोर्ध्वतनं छिद्रत्रयं गम्भीरोरुकाया धमन्याः शाखात्रयस्य पश्चाद्व गमनाय। अधस्तनं तु छिद्रं बृहत्तमम्, और्व्या धमन्याः सिरायाश्च निर्गमाय। तस्याः कार्यं ऊरुसंव्यूहनम्। प्रचेष्टन्यौ तु नाड्यौ—महागृध्रसी वंक्षणिका चेति।

अथ पश्चिमा ऊरुपेश्यः।

**द्विशिरस्का और्वी**[४] नाम स्थूलमांसला पेशी ( ६१।६३ चित्रयोः ) ऊरुपश्चिमतः पिण्डिकाकारा। तस्या द्वे शिरसी शिखे वा कण्डरात्मिके। तत्र दीर्घा शिखा श्रोणिफलकस्य कुकुन्दरपिण्डात् सम्भूता जानुकर्षण्याः कण्डराकलायाः मूलेन मिलितप्राया। ह्रस्वा शिखा प्राकारिकाख्यरेखाया बहिस्तटात् पेश्यन्तरालायाः कलायाश्च सम्भूता। शिखाद्वयं च ऊरुमध्यपृष्ठत एकीभूय अनुजङ्घास्थ्नो बहिःसोम्नि निविशते। तस्याः कार्यं जङ्घायाः सङ्कोचनम्, बहिर्विवर्त्तनञ्च। प्रचेष्टनी नाड़ी—महागृध्रसी नाम।

---

१। ऊरुसंव्यूहनी दीर्घा—Adductor Longus. २। ऊरुसंव्यूहनी ह्रस्वा—Adductor Brevis. ३। ऊरुसंव्यूहनी गरिष्ठा—Adductor Magnus. ४। द्विशिरस्का और्वी—Biceps Femoris.

**जानुकर्षणी कण्डराकल्पा**[1] नाम स्वल्पमांसला दीर्घा पेशी (६१ चित्रम्) श्रोणिफलकस्य कुकुन्दरपिण्डादेव सम्भूय जङ्घास्थ्न ऊर्ध्व-प्रान्ताऽन्तःसीम्नि सम्बद्धा। तस्याश्च निवेशकण्डरा स्नायुमयीभिः शाखाभि-र्द्ढीकरोति जानुसन्धिबन्धनीं स्नायुराजिम्। तस्याः कार्यं जङ्घायाः सङ्कोचन-मन्तर्विवर्त्तनञ्च।

**जानुकर्षणी कलाकल्पा**[2] नाम पेशी (६१ चित्रम्) पूर्ववत्-प्रभवनिवेशा ऊरुपृष्ठे तदन्तःसीम्नि च वर्त्तते। तस्याः कलाकल्पेति संज्ञा दृढकलामयप्रभवत्वात्। तस्याश्च निवेशकण्डरायाः पूर्ववत् प्रसरन्ति शाखाः जानुसन्धिदार्ढ्याय, तास्वेका शाखा जानुसन्धेः पश्चात् तिर्यक् सम्बद्धा जङ्घा-पश्चिमां सिरां धमनीञ्चावृणोति। कार्यादिकञ्च पूर्ववत्।

अथ जङ्घागताः पेश्यः।

तास्त्रयोदश, जङ्घास्थिद्वयेन तदन्तरालस्थया कलया च इत्थं विभक्ताः—अग्रिमाश्चतस्रः, पश्चिमाः सप्त, बहिःपार्श्वगे द्वे चेति। अन्तःपार्श्वं पुरोधारा च जङ्घास्थ्नः त्वचोऽधस्तादनुभूयेते, तत्र सर्वथा पेश्यभावः। अथाऽसु पेशीषु—

**जङ्घापुरोगा**[3] नाम मांसला पेशी (६४ चित्रम्) जङ्घायाः पुरस्ताद् बहिःपार्श्वे च वर्त्तते। सेयं जङ्घास्थ्नो बहिःकन्दात् मध्यनलकबहिःपार्श्वतः जङ्घान्तरालायाः कलायाश्च सम्भूय मध्ये स्थूलमांसला, अन्ते च कण्डरीभूता, पादतले, अन्तःकोणकाख्यकूर्चास्थ्नि पादांगुष्ठमूलशलाकामूले च तिर्यङ् निविशते। प्राक् च निवेशात् वक्ष्यमाणयोरूर्ध्वगुल्फिका-गुल्फस्वस्तिकाख्ययोः स्नायु-पट्टिकयोरधःस्थेन अन्तःसुरङ्गापथेन पादतलाभिमुखं प्रसृताऽसौ कण्डरा। कार्यन्तु पेश्याः—पादस्य अन्तर्विवर्त्तनं गुल्फसन्धिसङ्कोचनं च। अस्याः प्रचेष्टनी नाड़ी—पुरोजङ्घिका गम्भीरा नाम।

**पादांगुष्ठप्रसारणी दीर्घा**[4] नाम तनु पेशी (६४ चित्रम्) पूर्वोक्तया पेश्या प्रच्छन्ना अनुजङ्घास्थ्नो मध्यार्धात् जङ्घान्तरालाख्यकलायाश्च सम्भूय

---

१। जानुकर्षणी कण्डराकल्पा—Semi-tendinosus. २। जानुकर्षणी कलाकल्पा—Semi-membranosus. ३। जंघापुरोगा—Tibialis Anterior. ४। पादाङ्गुष्ठप्रसारणी दीर्घा—Extensor Hallucis Longus.

शेषार्धे कण्डरामयी पूर्वोक्तस्नायुपट्टिकाद्वयाधःस्थेन मध्यसुरङ्गापथेन निर्गता पादांगुष्ठस्य अग्रिमपर्वपृष्ठे निविशते। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**पादांगुलीप्रसारणी दीर्घा**[1] नाम पेशी (६४ चित्रम्) जङ्घास्थ्नो वहिःकन्दात्, अनुजङ्घास्थ्नो मध्यनलकात् जङ्घान्तरालाख्यकलायाश्च सम्भूय पूर्ववत् स्नायुपट्टिकाद्वयाधःस्थेन वहिःसुरङ्गापथेन निष्क्रान्ता पादांगुलीचतुष्टयस्य अग्रिम-मध्यमपर्वपृष्ठतो निविशते, पादपृष्ठे चतुर्धा विभक्ताभिः कण्डराभिः। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी च पूर्ववत्।

**पादविवर्त्तनी तृतीया**[2] नाम पेशी (६४ चित्रम्) पूर्वोक्तया मिलितमूला जङ्घाबहिःपार्श्वतो वर्त्तते। सा अनुजङ्घास्थ्नो निम्नपादांशवहिस्तलात् जङ्घान्तरालकलायाश्च सम्भूय पूर्वोक्तायाः सहचरीभूय तथैव निष्क्रान्ता, पाद-कनिष्ठामूलशलाकामूले निविशते कण्डराग्रेण। तस्याः कार्यं पादस्य वहिर्विवर्त्तनं, गुल्फसन्धेः सङ्कोचनं च। प्रचेष्टनी नाड़ी तु पूर्ववत्।

जङ्घापश्चिमाः पेश्यः पुनः सप्त, जङ्घान्तरालायाः कलायाः पृष्ठतः। तासु पिण्डिकाख्यास्तिस्र उत्तानाः, अपरास्तु चतस्रो गम्भीराः। तद्यथा--

**जङ्घापिण्डिका गुर्वी**[3] नाम स्थूलमांसला पेशी (६१।६३ चित्रयोः) प्राधान्येन जंघापिण्डिकानिर्मापणी। सा द्वाभ्यां स्थूलमूलाभ्यां ऊर्वस्थ्नो महार्बुदद्वयस्य पृष्ठतः सम्भूय साधारण्या पिण्डिकाकण्डरया पार्ष्णिमूलपृष्ठे निविशते। तस्याः कार्यं पार्ष्णिमूलकर्षणम्। प्रचेष्टनी नाड़ी-- अधिजङ्घिका नाम।

**जङ्घापिण्डिका लघ्वी**[4] नाम स्वल्पमांसला पेशी (६१ चित्रम्) पूर्वोक्तयाच्छादिता, अनुजङ्घास्थ्नः ऊर्ध्वप्रान्तात्, मध्यनलकोर्ध्वांशात्, जङ्घास्थि-काण्डपृष्ठस्थायास्तिरश्चीनरेखायाश्च सम्भूय पूर्ववत् साधारण्या पिण्डिकाकण्डरया पार्ष्णिमूलपृष्ठे निविशते। तस्याः कार्यं पूर्ववत्। प्रचेष्टनी नाड़ी--अधिजङ्घिका अनुजङ्घिका च।

---

१। पादाङ्गुलीप्रसारणी दीर्घा—Extensor Digitorum Longus. २। पादविवर्त्तनी तृतीया—Peroneus Tertius. ३। जंघापिण्डिका गुर्वी—Gastrocnemius. ४। जंघा-पिण्डिका लघ्वी—Soleus.

**जङ्घापिण्डिका तृतीया**[1] नाम दीर्घकण्डराप्राया पेशी ( ६१ चित्रम् ) पूर्वस्याः सहकारिणी। सा ऊर्वस्थ्नो बाह्यमहार्बुदोपकण्ठात् सम्भूय पूर्ववत् साधारण्या कण्डरया मिलिता। तस्याः कार्यं पूर्ववत्। प्रचेष्टनी नाड़ी अधिजङ्घिकैव। इदं च पेशीत्रयं जंघापिण्डिकेति पिण्डिकेति वा कथ्यते।

अथ गम्भीरा जंघापश्चिमाः पेश्यः।

**जानुपृष्ठिका**[2] नाम स्वल्पमांसा त्रिकोणप्राया पेशी ( ६४ चित्रम् ) जानुसन्धिपृष्ठतः तिरश्चीनभावेन वर्त्तते। सा ऊर्वस्थ्नो बाह्यमहार्बुदपार्श्वतः स्वनामस्नायोश्च सम्भूय जंघास्थ्नो मध्यनलकपृष्ठे तिरश्चीनरेखोर्ध्वं निविशते। तस्याः कार्यं जानुसन्धिसङ्कोचनम्, जंघास्थ्नः किञ्चिदन्तर्विवर्त्तनेन सहितम्। प्रचेष्टनो नाड़ी अधिजंघिका नाम।

**पादांगुष्ठसङ्कोचनी दीर्घा**[3] नाम पेशी ( ६६ चित्रम् ) जंघा-पृष्ठतोऽन्तःसीम्नि वर्त्तते। सा अनुजंघास्थ्नो मध्यनलकपृष्ठतो जंघान्तरालकलायाश्च सम्भूय क्रमेण कण्डरीभूता, जंघास्थ्नः अन्तर्गुल्फपश्चिमया सीतया प्रसृता वक्ष्यमाणया अन्तर्गुल्फिकया स्नायुपट्टिकया च्छाद्यते। ततः पार्ष्णिकूर्चशिरसोः सीताभ्यां निष्क्रान्ता पादतलमतिक्रम्य पादाङ्गुष्ठस्य अग्रिमपर्वमूले निविशते। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी अनुजंघिका नाम।

**पादांगुलिसङ्कोचनी दीर्घा**[4] नाम पेशी ( ६१।६६ चित्रयोः ) जंघास्थ्नः पृष्ठतो वर्त्तते, तन्मध्यनलकपृष्ठात् सम्भूता। तस्याः कण्डरा अन्तर्गुल्फ-पश्चिमया सीतया जंघानुगाख्यपेश्याः कण्डरासहचरी पूर्ववत् स्नायुपट्टि-कयाऽच्छादिता। ततः पादतले पूर्वोक्तां पेशीं तिर्यगुल्लंघ्य कण्डराचतुष्टये विभक्ता। निविशन्ते च तानि कण्डरामुखानि पादांगुलिसङ्कोचन्या ह्रस्वायाः कण्डराचतुष्टयं निर्भिद्य पादांगुलिचतुष्टयस्य अग्रिमपर्वमूलेषु। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी अनुजंघिका नाम।

---

१। जंघापिण्डिका तृतीया—Plantaris. २। जानुपृष्ठिका—Popliteus. ३। पादाङ्गुष्ठ-सङ्कोचनी दीर्घा—Flexor Hallucis Longus. ४। पादाङ्गुलिसंकोचनी दीर्घा—Flexor Digitorum Longus.

**जङ्घानुगा**[1] नाम पेशी ( ६७ चित्रम् ) पूर्वोक्तपेश्योर्मध्ये गम्भीरमवस्थिता शरपंखाकारा मांसला च। सेयं द्वाभ्यां मूलाभ्यां जंघानुजंघास्थ्नोः काण्डोत्तरार्ध-पृष्ठतः सम्भवति, मूलद्वयान्तराले च तस्याः पुरस्ताद्विनिर्गता अग्रजंघिका नाम धमनी सिरा च। ततो मिलितमूलायाश्च तस्या अधस्तादपरोऽपि प्रभवो जंघानुजंघान्तरालाख्यायां कलायाम्। तस्याश्च पेश्याः कण्डरा अन्तर्गुल्फपश्चिमया सीतया प्रसृता पूर्ववत् स्नायुपट्टिकयाऽच्छादिता नौनिभान्तःकोणकयोर्निविशते। सन्ति चापरे अपि तत्कण्डरायाः शाखानिवेशा ये कोणकद्वये पार्ष्णि-घन-नौनिभेषु द्वितीय-तृतीय-चतुर्थमूलशलाकामूलेषु च सम्बध्यन्ते। तस्याः कार्यं गुल्फसन्धि-प्रसारणं, पादस्य अन्तर्विवर्त्तनञ्च। धारयति च सा पादान्तरीयसीमां धनुर्वक्र-भावेन शरीरभारस्य सम्यग् ग्रहणाय। तस्याः प्रचेष्टनी नाड़ी अनुजंघिका नाम।

अथ जंघाबहिःसीमस्थे पेश्यौ।

**पादविवर्त्तनी दीर्घा**[2] नाम पेशी ( ६४ चित्रम् ) अनुजंघास्थ्नः ऊर्ध्वप्रान्तात् मध्यनलकपार्श्वाच्च सम्भूता। सा जंघान्तरालकलायामपि प्रतिबद्ध-मूला बहिर्गुल्फपश्चिमया सीतया घनाख्यकूर्चास्थिगतया सीतया च प्रसृत्य, पादतलं तिर्यगुल्लंघ्य अन्तःकोणके अंगुष्ठमूलशलाकामूले च निविशते। तस्याः कार्यं पादतलसङ्कोचनम्, पादस्य बहिर्विवर्त्तनञ्च। प्रचेष्टनी नाड़ी—पुरो-जंघिका उत्ताना नाम।

**पादविवर्त्तनी ह्रस्वा**[3] नाम तनुपेशी ( ६४ चित्रम् ) अनुजंघास्थ्नः काण्डबहिस्तलात् सम्भूय पूर्ववत् सीतया प्रसृता पादकनिष्ठामूलशलाकाया मूलपृष्ठे सम्बद्धा। तस्याः कार्यं पादतलस्य सङ्कोचनं बहिर्विवर्त्तनं च स्तोकेन। प्रचेष्टनी नाड़ी पूर्ववत्।

अत्र च प्रसङ्गे द्रष्टव्यास्तिस्रः स्नायुपट्टिकाः ( गम्भीरप्रावरण्याः घनीभूतभागाः )। ताः जंघायाः पुरःस्थानामन्तर्बहिःसीमस्थानाञ्च कण्डराणां सन्धारण्यः। ताः—ऊर्ध्वगुल्फिका, गुल्फस्वस्तिका, अन्तर्गुल्फिका चेति

---

१। जंघानुगा—Tibialis Posterior. २। पादविवर्त्तनी दीर्घा—Peroneus Longus.
३। पादविवर्त्तनी ह्रस्वा—Peroneus Brevis.

संज्ञायन्ते। तासामाद्या गुल्फयोरूर्ध्वं स्थिता जङ्घाऽनुजङ्घास्थ्नोरनुप्रस्थं सम्बद्धा, सा पूर्वोक्तानां जङ्घापुरोगानां कण्डराणां पृथक्सुरङ्गासु प्रविष्टानामाच्छादनी सन्धारणी च। द्वितीया गुल्फस्वस्तिका नाम स्नायुपट्टिका स्वस्तिकाकारा सन्दंशाकारा वा, सा गुल्फसन्धेः पुरो बहिश्च संसक्ता। साऽसौ पूर्वोक्तपेशीनां सिराधमनीनाडीनाञ्च पुरस्तात् सन्धारणी। तृतीया अन्तर्गुल्फिका नाम स्नायुपट्टिका पार्ष्णिगुल्फयोरन्तराले संसक्ता। सा तदधःस्थामस्थिभूमिकं सुरङ्गामपरासु सुरङ्गासु विभजते स्नायुमय पत्रिकाभिः। ताभिश्च सुरङ्गाभिः दीर्घायाः पादांगुष्ठसंकोचन्याः पादाङ्गुलीसङ्कोचन्या जंघानुगायाश्चेति पेशीत्रयस्य कण्डरान्तानां, पश्चिमजंघिकाख्यसिरा-धमनी-नाड़ीनाञ्च प्रसरः।

## अथ पादपेश्यः।

ता एकोनविंशतिरित्थम्। पादपृष्ठे एका, पादतले स्तरचतुष्टये सन्निविष्टा अष्टादशेति।

तत्र पादपृष्ठे—

**पादांगुलिप्रसारणी ह्रस्वा**[1] नाम पेशी (६४ चित्रम्) दीर्घायाः पादांगुलीप्रसारण्याः कण्डराभिराच्छादिता। सा पार्ष्णिसंज्ञस्य कूर्चास्थ्नः पुरःपार्श्वभागाभ्यां पार्ष्णि-कूर्चशिरःसन्धायिन्याः बाह्यस्नायोश्च सम्भूय कण्डरान्तेन तिर्यक् पादपृष्ठे प्रसृता, चतुर्षु कण्डरामुखेषु विभक्ता। तेषाञ्च कण्डरामुखानां प्रथममंगुष्ठपश्चिमपर्वपृष्ठे सम्बद्धम्, अपरत्रयं तु पादांगुलीप्रसारण्या दीर्घायाः तिसृषु कण्डरासु। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पुरोजंघिका नाम।

पादतलस्थास्तु सर्वाः पेश्यः पादतलिकाख्यया गम्भीरप्रावरण्याऽच्छाद्य धार्यन्ते। सा पार्ष्णेरान्तरार्बुदे सम्बद्धमूला शाखात्रयवती च। तत्र मध्यमा शाखा दृढ़तमा, मूले रज्वाकारा, अग्रे च पत्रकाकारा। सा पञ्चभिः प्रशाखाभिः पञ्चसु अंगुलिमूलेषु संसक्ता। पार्श्विके तु शाखे पार्श्विकपादपेशीनां संरक्षिण्यौ, पादपृष्ठिकाख्यगम्भीरप्रावरण्या मिलिते च।

---

१। पादाङ्गुलिप्रसारणी ह्रस्वा—Extensor Digitorum Brevis.

अथ पादतले प्रथमस्तरे तिस्रः पेश्यः । यथा—

**पादांगुष्ठापकर्षणी**[1] नाम पेशी ( ९५ चित्रम् ) पादान्तरसीम्नि वर्त्तते शरपुंखाकारा । सेयं पार्ष्णीरान्तरार्बुदात् आन्तरवलयिकाख्यस्नायोः पादतलिकाख्यप्रावरण्याश्च सम्भूय पादांगुष्ठपश्चिमपर्वणः आन्तरसीम्नि सम्बद्धा । तस्याः कार्यं स्वनामव्याख्यातम् । प्रचेष्टनी नाड़ी आन्तरा पादतलीया नाम ।

( ९५ चित्रम् )

## पादतले प्रथमस्तरस्थाः पेश्यः ।




१ । पादाङ्गुष्ठापकर्षणी—Abductor Hallucis.

**पादांगुलिसङ्कोचनी ह्रस्वा**[१] नाम स्थूलमांसलोदरा पेशी (६५ चित्रम्) पादतलमध्ये पादतलिकाख्यप्रावरण्या संसक्ता वर्त्तते। सेयं कण्डरासूत्रेण पार्ष्णितलस्य पुरोभागादुत्थिता अग्रे कण्डराचतुष्टयेन पादांगुलि-चतुष्टयस्य मध्यमपर्वसु सम्बध्यते। ताश्च कण्डराः मध्ये निर्भिद्य प्रसृताः पादांगुलि-सङ्कोचन्या दीर्घायाः कण्डराः। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

**पादकनिष्ठापकर्षणी**[२] नाम तन्वी मांसला च पेशी (६५ चित्रम्) पाद-तलस्य बहिःसीम्नि वर्त्तते। सेयं पार्ष्णिमूलपार्श्वात्, पादतलिकाख्यप्रावरण्याश्च सम्भूय पादकनिष्ठापश्चिमपर्वणि सम्बद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी—बाह्या पादतलीया नाम।

पादतले द्वितीयस्तरे पञ्च पेश्यः। तद्यथा—

**पादतलचतुरस्रा**[३] नाम चतुरस्रप्राया मांसला पेशी (६६ चित्रम्) पार्ष्णितलान्मूलद्वयेन दीर्घपादतलिकाख्यस्नायोश्च सम्भूय दीर्घायाः पादांगुलि-सङ्कोचन्याः कण्डरायां सम्बद्धा। तस्याः कार्यं दीर्घायाः पादांगुलि-सङ्कोचन्याः तिर्यगाकृष्टायाः सरलीकरणम्। प्रचेष्टनी नाड़ी—बाह्या पाद-तलीया नाम।

**पादानुकण्डरिकाः**[४] नाम चतस्रो जलौकाकाराः पेश्यः (६६ चित्रम्), याः दीर्घायाः पादांगुलिसङ्कोचन्याश्चतुर्भ्यः कण्डरान्तेभ्यः सम्भूय पादांगुलि-मूलानि तिर्यगुल्लंघ्य कण्डराग्रैः अंगुलिपश्चिमपर्वपृष्ठेषु पादांगुलिप्रसारण्या दीर्घायाः कण्डरान्तैः सह सम्बद्धाः। तासां कार्यं पादांगुलीपश्चिमपर्वणा-माकर्षणम्, अंगुलिसङ्कोचनकाले प्रसारणीकण्डरान्तानां शिथिलीकरणं च। तासां प्रचेष्टनं आन्तरपादतलीयनाड्योः शाखाभिः।

---

१। पादांगुष्ठसङ्कोचनी ह्रस्वा—Flexor Digitorum. २। पादकनिष्ठापकर्षणी—Abductor Minimi Digiti. ३। पादतलचतुरस्रा—Quadratus Plantæ. ४। पादानुकण्डरिकाः—Lumbricales.

( ६६ चित्रम् )

## पादतले द्वितीयस्तरस्थाः पेश्यः।



पादतले तृतीयस्तरे तिस्रः पेश्यः। यथा—

**पादांगुष्ठसङ्कोचनी ह्रस्वा**[1] नाम पेशी ( ६७ चित्रम् ) पादांगुष्ठाऽनुक्रमेण वर्त्तते शरपुङ्खाकारा। सेयं घन-बाह्यकोणकाभ्यां, जंघानुगाख्यपेश्याः कण्डरायाश्च सम्भूय पादांगुष्ठपश्चिमपर्वणो मूलपार्श्वयोः कण्डराद्वयेन सम्बद्धा। तयोश्च कण्डरयोरेका पादांगुष्ठप्रकर्षण्याः कण्डरया मिलिता, अपरा पादांगुष्ठाऽपकर्षण्याः कण्डरया। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी आन्तरा पादतलीया नाम।

**पादांगुष्ठप्रकर्षणी**[2] नाम ह्रस्वाकारा पेशी ( ६७ चित्रम् ) द्वाभ्यां भागाभ्यामुपलक्षिता। तयोरेको भागो दीर्घतिरश्चीनः, स मध्यममूलशलाकात्रयस्य मूलेभ्यः पादविवर्त्तन्या दीर्घायाः कण्डराकञ्चुकतश्च सम्भूय पादांगुष्ठपश्चिमपर्वमूलस्य बहिःपार्श्वे निविशते। अपरो भागः अंगुलीमूलेषु अनुप्रस्थभावेन वर्त्तते तनुतरः। स मूलशलाकाग्रसन्धायिस्नायोः सम्भूय पूर्ववत् निविशते। तस्याः कार्यं पादांगुष्ठस्य मध्यरेखां प्रति प्रकर्षणम्। प्रचेष्टनी नाड़ी बाह्या पादतलीया नाम।

**कनिष्ठासङ्कोचनी ह्रस्वा**[3] नाम पेशी ( ६७ चित्रम् ) कनिष्ठामूलशलाकामूलात् सम्भूय पादकनिष्ठापश्चिमपर्वणो मूले सम्बद्धा। तस्याः कार्यं स्वनामव्याख्यातम्। प्रचेष्टनी नाड़ी पूर्ववत्।

पादतले चतुर्थस्तरे तु सप्त पेश्यः शलाकान्तरीया नाम करवत्। तासु विशेषः—अधरास्तिस्रः, उत्तराश्चतस्रः—इति। तत्र—

**उत्तराः शलाकान्तरीयाः**[4] नाम पादपृष्ठाभिगाः चतस्रः तनुपेश्यः पञ्चानां मूलशलाकानामन्तरालस्थाः। तासां चतसृणामपि एकैकस्या द्वे द्वे मूले स्वपार्श्वद्वयवर्त्तिमूलशलाकयोः पार्श्वसंसक्ते। ताश्च पेश्यः शरपुंखाकारेणोभयतः प्रसृतैर्मांसतन्तुभिरारचिता अग्रे कण्डरीभूय इत्थं सन्निविष्टाः। तर्जनीपश्चिम-

---

१। पादांगुष्ठसङ्कोचनी ह्रस्वा—Flexor Hallucis Brevis. २। पादांगुष्ठप्रकर्षणी—Adductor Hallucis. प्रकर्षणं नाम मध्यरेखां प्रति अतिसान्निध्येनाकर्षणम्। ३। कनिष्ठासङ्कोचनी ह्रस्वा—Flexor Minimi Digiti Brevis. ४। उत्तराः शलाकान्तरीयाः—Dorsal Inter-ossei.

( ६७ चित्रम् )

## पादतले तृतीयस्तरस्थाः पेश्यः ।



पर्वपार्श्वयोर्द्वे । मध्यमानामिकापश्चिमपर्वणोरान्तरपार्श्वयोः एकैका इति । तासां कार्यं पादांगुलिचतुष्टयस्य अपकर्षणम्[१] । प्रचेष्टनी नाड़ी पूर्ववत् ।

**अधराः शलाकान्तरीयाः**[२] नाम पादतलाभिगाः त्रयस्तनुपेश्यः । ताः कनिष्ठादि मूलशलाकात्रयस्य आन्तरपार्श्वेभ्यः सम्भूय तत्तदंगुलिपश्चिमनलकानां तत्पार्श्वेष्वेव सम्बद्धाः । तासां कार्यं कनिष्ठाद्यङ्गुलित्रयस्य मध्यरेखां प्रति कर्षणम् । प्रचेष्टनी नाड़ी—बाह्या पादतलीया नाम ।

ता एता अधःशाखीयाः पेश्यः सविस्तरं व्याख्याताः ।

कर्कशं कीकसं[३] येन
मांसलीभूय शोभते ।
बलमूलं क्रियामूलं
पेशीजालं तदीरितम् ॥

समाप्तं चैतावता पेशीखण्डम् ।

---

१ । अपकर्षणं नाम मध्यरेखातो दूरे कर्षणम् । २ । अधराः शलाकान्तरीयाः—Planter Inter-ossei. ३ । कङ्कालम् ।

# प्रत्यक्षशारीरम्

## धमनीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातो रस-रक्तसंवहनसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

रक्तं नाम सकलधातुप्रीणनः सारः शरीरस्य, रस एव रञ्जकाख्येन पित्तेन तथा विपरिणमितः—इत्यवोचाम । तद्भारश्च शारीरभारस्य द्वादशांशः, त्रयोदशांशो वेति केचित् । पञ्चदशांश इत्यपरे ।

तस्य च रक्तस्य पाञ्चभौतिकस्यापि द्विविधमुपादानं प्राधान्येन, आप्यं पार्थिवञ्च । तयोराप्यं जलवदच्छतरलं—लसीका[1] नाम । स्त्यानीभूतस्य रक्तस्य तु तदेव किञ्चिद्विपरिवर्त्तितं पृथग्भूतञ्च रक्तमस्तु[2] नाम । पार्थिवे तु भागे रक्तस्य त्रिविधा विशेषाः अणुवीक्षणसहायेन चक्षुषा दृश्याः—रक्तकणिकाः[3], श्वेतकणिकाः,[4] अणुचक्रिकाः[5] चेति । तत्र रक्तकणिकाः सूक्ष्मगुलिकाकाराः संख्यया श्वेतकणिकानां पञ्चशतगुणिताः प्रायेण, ताः एव लोहितवर्णाधाराः । श्वेतकणिकाः नियतपरिवर्त्तमानाकृतयस्तूलखण्डवद्‌ भासन्ते, ताः रक्तकणिकानां संरक्षिण्यः, अनिष्टवस्तुग्रसनशीलाः । अणुचक्रिकास्तु प्रविरलसंख्याः सूक्ष्मतमाश्चिपिटाकारचक्रिकाकाराश्च ।

तच्च रक्तं धमनीषु जालकेषु सिरासु च क्रमेण प्रवहति हृदयं केन्द्रीकृत्य । हृदयेन हि धमनीषु विक्षिप्यते रक्तं, धमनीभिश्च जालकेषु । संगृह्यते च तद्‌ जालकेभ्यो हृदयेनैव सिराभिः सर्वकायगाभिः । स्यन्दते च जालकेभ्यः कोऽपि तन्वच्छभागः शोणितस्य लसीकासंज्ञः सर्वत्र शरीरे धातुपोषणाय ।

**धमन्यः**[6] नाम हृदयाद्‌ बहिर्मुखं रक्तवहाः प्रणालिकाः स्थूलाः सूक्ष्माश्च । ता जीवच्छरीरे अरुणाभाः रक्तपूर्णाश्च । मृतके तु पाण्डुवर्णाः, शून्यगर्भाश्च । तासां निर्मापण्यः प्राचीरिकाः, दृढस्थूलाः कठिनस्पर्शाश्च । तासु सर्वत्र उज्वल-

---

१। लसीका—Lymph. २। रक्तमस्तु—Serum. ३। रक्तकणिकाः—Red Corpuscles. ४। श्वेतकणिका—White Corpuscles. ५। अनुचक्रिका—Blood Platelets. ६। धमन्यः—Arteries.

लोहितं रक्तं प्रवहति, अन्यत्र फुस्फुसाभिगाया धमन्यास्तच्छाखाप्रशाखाभ्यश्च। फुस्फुसाभिगा हि स्थूलधमनी सिराभिरानीतमविशुद्धं रक्तं प्राणवायुसंयोगाय फुस्फुसौ प्रापयति स्वशाखा-प्रशाखाभिरिति विशेषः।

**सिराः**[1] नाम हृदयाभिमुखरक्तवहाः प्रणालिकाः। ता नीलाभास्तनुप्राचीरिकाः कोमलस्पर्शाश्च। तासु सर्वत्र श्यामाभं रक्तं प्रवहति, अन्यत्र फुस्फुसीयाभ्यः सिराभ्यः। ता हि फुस्फुसविशोधितमुज्ज्वलारुणमेव रक्तमभिवहन्ति हृदयाभिमुखमिति विशेषः *।

संज्ञास्तावद्धमनीनां क्वचिदवस्थानविशेषाद्—यथा अक्षकाधरेति। क्वचित् पोषणीयावयवनामतः—यथा अनुमस्तिष्केति। क्वचिद् यदृच्छया यथा—महामातृकेति। सिरासंज्ञाश्च तादृशहेतुसमुत्थाः।

निर्माणं पुनर्धमनीनां सिराणाञ्च तिसृभिस्तिसृभिः प्राचीरिकाभिः। तत्र बाह्या प्राचीरिका[2] स्नायुसूत्रनिर्मितनलिकाकृतिः, सा इतरप्राचीरिकयोः सन्धारणी। मध्यप्राचीरिका[3] तु स्वतन्त्रपेशीतन्तुनिर्मितनलिकाकृतिराकुञ्चनप्रसरणशीला। आभ्यन्तरी पुनः प्राचीरिका[4] तनुकलामयी, सा प्राचां रक्तधरा कला[5] नाम। सेयं स्थितिस्थापकगुणैः सूक्ष्मस्नायुसूत्रैः संवेष्टिता। तासां बाह्या, मध्यमा च प्राचीरिका सिरासु तन्वी धमनीषु स्थूला, विशेषतश्च परिस्फुटं स्थूलत्वं मध्यमाकृतिधमनीषु। सन्ति च मध्यमायामपि प्राचीरिकायां स्थितिस्थापकगुणानि स्नायुसूत्राणि प्राचुर्येण। दृश्यन्ते च बहिरपि सिराधमनीसंवेष्टनानि शिथिलप्रायाणि स्नायुमयानि कञ्चुकान्यपराणि स्थूलसिराधमनीनां सन्धारणाय, तानि सिराकञ्चुकानि धमनीकञ्चुकानि[6] चेति नामधराणि।

लक्षणीयाश्च सिरासु विशेषेण अन्तरान्तरा रक्तमार्गे स्वयम्पतिष्णवः कपाटिकाः, ता हृदयाभिमुखं प्रवर्त्तमानस्य रक्तस्य पश्चान्मुखीं गतिं रुन्धन्ति निर्माणकौशलेन। ताः सिराकपाटिकाः[7] नाम।

---

१। सिराः—Veins. * सिरा-धमनीसंज्ञयोर्निरुक्तिस्तु—हृदयाद् बहिःप्रवाहिन्यो धमन्यः, हृदयाभिमुखं प्रवाहिन्यः सिराः—इति स्मर्त्तव्यम्। शुद्धाशुद्धरक्तप्रवहणं तु तटस्थलक्षणं, फुस्फुसीयसिराधमनीषु अन्यथा दर्शनात्। २। बाह्या प्राचीरिका—External Coat or *Tunica Adventitia*. ३। मध्यप्राचीरिका—Middle Coat or *Tunica Media*. ४। आभ्यन्तरी प्राचीरिका—Internal Coat or *Tunica Intima*. ५। Endothelial Membrane. ६। Sheaths of Arteries. ७। सिराकपाटिकाः—Valves of Veins.

**जालकानि**[1] पुनः सूक्ष्मानुसूक्ष्मसिराधमनीजालनिर्मितानि स्रोतांसि सर्वत्र शरीरे द्रुमपत्रसूक्ष्मप्रतानवत् प्रततानि। तानि क्रमशो विभज्यमानानां धमनीनां सूक्ष्मतमशाखाभिः सूक्ष्मतमसिराजालैश्चोतप्रोतभावेन जालवदारचितानि रक्तधर-कलागर्भाणि। तेभ्यः कणशः स्यन्दमानः शोणितस्य तन्वच्छभागो लसीकासंज्ञां लभते। सैव सर्वमपि शरीरमाप्याययति। निःस्रुतावशिष्टञ्च जालकेषु शोणितं क्रमेण शरीरप्रचारान्मलिनीभूतं सूक्ष्मैः सिरामार्गैः स्थूलस्थूलतरसिरासु प्रविशति हृदयाभिमुखप्रसरणाय। धातुपोषणावशिष्टा लसीका तु रसायनीमार्गैः सिरापथ-मेवान्ते प्रविशतीत्यग्रे रसायनीखण्डे प्रतिपादयिष्यामः।

उक्तञ्च—"धमानाद्धमन्यः स्रवणात् स्रोतांसि सरणात् सिराः" इति (चरक०-सूत्र ३० अ)। अत्र धमानं रक्तस्य वलाद् विक्षेपणं, स्रवणं स्यन्दनम्, सरणं मृदुगत्या हृदयाभिमुखं चलनमिति प्राचामभिसन्धिः सुस्पष्टः। स्रोतःपदं चात्र जालकपरम्।

रसायन्यस्तु जालकेभ्यो निःस्रुताया लसीकाया संग्राहिण्यः। ताः तद्-वर्णनीयाध्याये पृथग् व्याख्येयाः।

**हृदयं**[2] पुनः रक्तस्य युगपत् संग्रहण-प्रेरणयन्त्रमुरोगुहास्थम्। तत् पेशी-कोषमयं चतुःप्रकोष्ठञ्चेति अग्रे वक्ष्यते। तच्च प्रतिनियतसङ्कोच-विस्फाराभ्यां विक्षिपति रक्तमाकर्षति च तत् पृथक् प्रकोष्ठैः। तद् दक्षिणार्धे सार्वकायिकं सिरा-रक्तमाकर्षति उत्तराऽधरमहासिराभ्याम्, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठसङ्कोचेन फुस्फुसयोः फुस्फुसाभिगया धमन्या, रक्तस्य वायुसंयोगेन विशोधनाय। तस्य वामार्धन्तु फुस्फुसविशोधितं रक्तमाकर्षति उत्तरप्रकोष्ठे फुस्फुसप्रभवेन सिरा-चतुष्टयेन, प्रेरयति चाकृष्टं रक्तमधरप्रकोष्ठस्य सङ्कोचेन सर्वत्र शरीरे महाधमनी-द्वारेण। महाधमनी च क्रमेण शाखाप्रशाखाप्रविभागेन जालकेषु पर्यवस्यति सर्व-शरीरपोषणाय। जालकेषु निःस्रवावशिष्टं रक्तं तु सूक्ष्मसिरामार्गेषु प्रविशति, अनुपद्यते च उत्तरोत्तरस्थूलाभिः सिराभिर्महासिराद्वयं, तन्मार्गेण च हृदयम्। तदेतद्रक्तस्य निरन्तरगतागतं **रक्तसंवहनं**[3] नाम।

तच्च रक्तसंवहनं द्वेधा विभजन्ते शारीरविदः — सामान्यकायिकं फौस्फुसञ्चेति। तत्र सामान्यतः कायिकस्य रक्तस्य हृदये प्रवेशः, हृदयात् सर्वकाय-गमनञ्च धमनीद्वारेणेति सामान्यकायिकम्[4] रक्तसंवहनम्। रक्तस्य हृदयदक्षिणार्धात्

१। जालकानि—Capillary Networks. २। हृदयं—Heart. ३ रक्तसंवहनं—Circulation of blood. ४। सामान्यकायिकम् —General Circulation.

फुस्फुसगमनं, तत्र वायुकोषान् परितः स्थितेषु जालकेषु प्रसरणम्, तत्र वायुसंयोगेन विशुद्धिः, तथा विशुद्धस्य रक्तस्य पुनर्हृदयवामार्धे समागमश्चेति फौस्फुसम्[१] रक्तसंवहनम्। तदुभयञ्च परस्परापेक्षम्।

याकृतं[२] च रक्तसंवहनं केचिदामनन्ति पृथगेव। तद्धि रसरक्तयोर्मिश्रीभूतयोः संवहनं, सार्वकायिकस्य रक्तसंवहनस्य पोषणद्वारमित्यनुपदं वक्ष्यामः।

### अथ रससंवहनम्।

रससंवहनं द्विविधं—भुक्तरससंवहनं, लसीका-संवहनञ्चेति। तत्र—

**भुक्तरससंवहनं** द्विविधम्। भुक्तरसस्य सौम्याग्नेयभेदेन द्वैविध्यात्। आहारो हि द्विविधः सौम्यश्चाग्नेयश्च। स तद्गुणप्राधान्याद् द्विविधं रसं जनयति। तत्र सौम्यानां दुग्धादीनां यो रसः सौम्यस्तनुमण्डाकारः, सोऽन्त्रेभ्यः सूक्ष्मैः रसस्रोतोभिराकृष्यमाणः पृष्ठवंशपुरःस्थां रसप्रपां प्रविशति, नीयते च ततो वामया रसकुल्यया गलमूलिकां सिराम्, तया चोत्तरां महासिराम्, तन्मार्गेण च हृदयम्। तदेतत् सौम्यं रससंवहनं नाम। अथापरो मांसाद्याहारसम्भवो यो रस आग्नेयः, स आमाशय-पक्वाशयं परितः प्रसृतैः सूक्ष्मसिराभिराकृष्यमाणः प्लीहाद्यागतेन रक्तेन मिश्रीभूय यकृत् प्रविशति प्रतीहारिण्याख्यया महासिरया। यकृत्प्रविष्टश्च स विपच्यते निर्विषीक्रियते च तत्रस्थैः सूक्ष्मैः सिराजालकैर्निर्माणकौशलविशेषात् याकृतक्रियाविशेषप्रभावाच्च। ततश्चापराभिः सूक्ष्मसिराभिः संगृह्यमाणस्य तस्य याकृतीभिः सिराभिरधरमहासिरायां, ततश्च हृदये प्रवेशः। तदेतद् आग्नेयं याकृतं वा रससंवहनम् नाम। एवञ्च रसरक्तयोर्मिश्रीभावाद्रसस्य रक्तपरिणामदर्शनाच्च याकृतं रक्तसंवहनं पृथगेव सामान्यकायिकरक्तसंवहनादिति सूक्ष्मदृशः।

**लसीकासंवहनं**[३] तु जालकेभ्यः स्यन्दमानस्य शोणिततन्वच्छभागस्य धातुपोषणानन्तरमवशिष्टस्य लसीकास्रोतोभिः रसायनीसंज्ञैः पुनरपि रक्तस्रोतसि प्रतिनिवर्त्तनम्। तदित्थं संपद्यते। शिरोग्रीवदक्षिणार्धस्य दक्षिणबाहोश्च लसीका दक्षिणां रसकुल्यां प्रविशति, तया च दक्षिणजत्रु[४]मूलस्थं सिरासन्धिम्। सिरापरम्परया रक्तेन मिश्रीभूतस्य च तस्य हृदये प्रवेशः। शिरोग्रीववामार्धस्य वामबाहोश्च लसीका वामया रसकुल्यया प्रविशति वामजत्रुमूलस्थं सिरासन्धिम्,

१। फौस्फुसम्—Pulmonary Circulation. २। याकृतं रससंवहनं—Portal Circulation.
३। लसीकासंवहनम्—Lymph-circulation. ४। जत्रुपदमक्षकास्थिपरम्।

ततश्च सिरापरम्परया हृदयम् । अधोजत्रुस्थस्य समग्रशरीरभागस्य लसीका तु प्रविशति रसप्रपामेव पूर्वोक्ताम् । अन्त्रेभ्यः समागताः दुग्धाभ-सौम्यरसवाहिन्यः प्रणालिकास्तु पयस्विनी[1] संज्ञाः, ता अपि रसप्रपां प्रविष्टाः ।

एवं रसायनीमार्गेषु प्रसरन्त्याश्च लसीकाया दृश्यन्ते मार्गरक्षिभूता ग्रन्थयो गुञ्जा-निम्बफलाद्याकाराः । ते ग्रीवा-कक्षा-वंक्षणादिप्रदेशेषु उदरोरसोरभ्यन्तरे पृष्ठवंशपुरस्ताच्च संलक्ष्या विशेषेण । ते रसायनीखण्डे वर्णनीयाः ।

तदेतद् द्विविधमपि रससंवहनं रक्तसंवहनेन घनिष्ठसम्बन्धं, परिणामे तदन्तर्भूतञ्च । तस्मात् क्वचिद् रसवहस्रोतसां क्वचिद् रक्तवहस्रोतसाञ्च हृदयमेव मूलमुपदिशन्ति प्राञ्चः । रसपदं हि रक्तार्थपरं बहुधा तेषु तेषु प्राचां वचनेषु ।

गर्भस्थशिशोः रक्तसंवहनं तु उरोहृदयवर्णनीयाध्याये पृथग् वक्ष्यामः ।

तदेतद् रस-रक्तसंवहन सामान्यविज्ञानमभिहितं बीजरूपेण । विस्तरोऽत ऊर्ध्वम् ।

---

# द्वितीयोऽध्यायः ।

अथात उरोहृदयवर्णनीयमध्यायं व्याख्यास्यामः ।

उरःपञ्जरं नाम उरोगुहाया आधारभूतं व्याख्यातपूर्वम्, तस्य च आभ्यन्तरायतनं न सर्वथा बाह्यायतनमनुसरति । न्युब्जपृष्ठेन महाप्राचीराविनिर्मितेन तदीयतलदेशेन तदधोभागस्य ह्रस्वीभावात्, फुस्फुसशिखरयोरागलमूलं प्रसृतत्वाच्च । नियतपरिवृत्तिशीलञ्च तद् उच्छ्वासनिःश्वासकालयोः, महाप्राचीरायाः पर्शुकोपपर्शुकानाञ्च प्रतिनियतमूर्ध्वाधःप्रचलनशीलत्वात् ।

तस्याञ्च उरोगुहायां चतुष्टयं प्रधानम्—मध्ये हृदयम् महाधमन्यादिसहितम्, उभयतश्च फुस्फुसौ, श्वासनलिकासहितौ, अन्ननलिका च पृष्ठतः—इति ।

फुस्फुसान्तरालं[2] नाम—उरःफलकपृष्ठात् पृष्ठवंशपुरोभागं यावदुपलक्षितोऽवकाशः तं वर्णनासौकर्याय चतुर्धा विभजन्ते शारीरविदः (कल्पनामात्रेण)। तत्रादौ द्वेधा विभागः, उत्तराऽधरप्रदेशभेदात् । ततः अधरस्य फुस्फुसान्तरालस्य अग्रिम-मध्यम-पश्चिमाख्यप्रदेशेषु पुनस्त्रिधा विभागः । एवं

---

१ । पयस्विन्यः—Lacteals. २ । फुस्फुसान्तरालं—Mediastinum.

चेह वर्ण्यन्ते—उत्तरम्, अधराग्रिमं, अधरमध्यमं अधरपश्चिमञ्चेति चत्वारि फुस्फुसान्तरालानि। तेषु शेषाणां त्रयाणामग्रिम-मध्यम-पश्चिमसंज्ञाभिः व्यपदेशः।

तत्र उत्तरे फुस्फुसान्तराले[1] दृश्याः—प्रधानशाखात्रयेण सहिता तोरणी महाधमनी, उत्तरमहासिराया उत्तरार्धम्, गलमूलिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, अनुकोष्ठिकाख्ये नाड्यौ, क्लोमनलिका, अन्ननलिका, रसकुल्या, बालग्रैवेयका[2]ख्यग्रन्थेरवशेषः, लसीकाग्रन्थयः, अपराश्च पेशीनाड्यादयो विशेषाः।

अग्रिमं फुस्फुसान्तरालं[3] पुनः उरःफलकपृष्ठात् हृत्कोषपुरोभागान्तं स्थानम्। तत्र दृश्याः—अन्तस्तलिकाख्ये धमन्यौ, उरःस्था लसीकाग्रन्थयः, उरस्त्रिकोणिका नाम पेशी च।

मध्यमे फुस्फुसान्तराले[4] तु दृश्यन्ते हृत्कोषप्रावृतं हृदयम्, आरोहिणी महाधमनी, उत्तरमहासिराया अधरार्धम्, श्वासनालस्य विभागकाण्डद्वयम्, फुस्फुसाभिगा धमनी (द्विधाविभक्ता), फुस्फुसीयाः सिराः, अनुकोष्ठिके नाड्यौ, उरोमध्यस्था लसीकाग्रन्थयश्च।

पश्चिमे फुस्फुसान्तराले[5] पुनर्दृश्याः—अवरोहिणी महाधमनी, अन्ननलिका, रसकुल्या, पुरोवंशिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, ईडा-पिङ्गलाख्य-महानाड्योरौरस्यभागौ, लसीकाग्रन्थयश्च पश्चिमोरस्काः।

अथाऽस्या उरोगुहाया ऊर्ध्वद्वारे दृश्यन्ते मध्यरेखायां—पेशीपरिवृतो बालग्रैवेयकग्रन्थिशेषः, क्लोमनलिका[6], अन्ननलिका च पूर्वापरक्रमेण। तदुभयतश्च स्थूले महामातृकाख्ये धमन्यौ, गलमूलिकाख्ये सिरे, प्राणदाख्ये नाड्यौ, इडा-पिङ्गलाख्ये महानाड्यौ, रसकुल्या, काश्चिद् ग्रीवावंशपुरःस्थाः पेश्यश्च। तत्पार्श्वयोश्च समुत्थिते फुस्फुसयोः शिखरे फुस्फुसधरया कलया फुस्फुस-शीर्षण्याख्य गम्भीरप्रावरण्या च प्रावृते।

सेयमुरोगुहा फुस्फुसधरायाः कलायाः परिसरीयभागेन अन्तःपरिवृता। सा च यथास्थानं वर्णनीया। उरोगुहातलं च महाप्राचीराख्यपेश्या निर्मितं,

---

१। उत्तरं फुस्फुसान्तरालं—Superior mediastinum. २। बालग्रैवेयकं—Thymus Gland. ३। अग्रिमं फुस्फुसान्तरालं—Anterior mediastinum ४। मध्यमं फुस्फुसान्तरालं—Middle mediastinum. ५। पश्चिमं फुस्फुसान्तरालं—Posterior mediastinum. ६। क्लोमनलिका—श्वासमार्गः।

छिद्रत्रयोपलक्षितं, तयैव कलया प्रावृतश्च । तद्विवरणं महाप्राचीरावर्णने सविस्तरमवोचाम ।

अथ हृत्कोषः ।

**हृद्यं** तावद् उरःफलकस्य पश्चाद्वामतश्च भूम्ना वर्त्तते अधर-मध्यम-फुस्फुसान्तरालस्थम् । प्रावृतं च तत् स्थूलसिरा-धमनीमूलनिवहसहितं हृदय-धराख्येन कलाकोषेण ।

**हृद्यधरः कलाकोषः**, हृदावरणकोषो वा नाम अतनुस्तरद्वयेन निर्मितः कोषः । तस्य बाह्यस्तरः दृढ़स्नायुमयो शिथिलश्च, स न संसक्तः हृदयेन । संसक्तस्तु स उत्तरमहासिरावर्जमन्यासां स्थूलसिराधमनीनां मूलेषु प्रतिबद्धश्चोपरिष्टात् ग्रीवामध्यकञ्चुकस्य पुरोभागेन । अधस्ताच्च सम्बद्धस्तस्य तलभागो महाप्राचीराया मध्यपत्रकेण । तस्य आभ्यन्तरस्तरः तनुमसृणकलामयः । स साक्षाद् हृदयेन संसक्तः एकतः, बाह्यस्तरैकदेशेन मिलितश्च सोमासु । स्तरद्वयान्तराले च स्वभावतो वर्त्तते स्वल्पमात्रा लसीका, तया च अभ्यक्तं हृदयं नियतमुद्रणविस्फारशीलमपि स्वकोषस्पर्शतो नावघृष्यते । सैव लसीका प्रवृद्धा स्त्यानीभूता च रोगाय कल्पते । अमुष्य च कलाकोषस्य पोषणम् अन्तस्तलिकायाः धमन्या महाधमन्याश्च तनुशाखाभिः सम्पद्यते । तत्-संज्ञावहा नाड्यस्तु प्राणदाख्ययोः, अनुकोष्ठिकयोः, ईड़ा-पिङ्गलयोश्च सूक्ष्माः प्रतानाः ।

अथ हृदयम् ।

**हृद्यं**[१] नाम स्वतन्त्रपेशीनिर्मितं शून्योदरं यन्त्रम् । ( ६८ चित्रम् ) तद् अधोमुखबृहत्पद्ममुकुलाकारं, मध्यमे फुस्फुसान्तराले पुरस्ताद्वामत-स्तिर्यगवस्थितम्, हृदयधराख्येन कलाकोषेण प्रावृतं च । तस्य मूलदेशः दक्षिणतृतीयोपपर्शुकाया उरःफलकसन्धानादारभ्य वामद्वितीयोपपर्शुकाया उरः-फलकसन्धानोपकण्ठं यावद्विस्तृतः । अग्रं तु तस्य वामतः पञ्चमषष्ठपर्शुकयो-रन्तराले मध्यरेखाया बहिश्चतुरङ्गुलाद् दृश्यते, स्पर्शेनानुभूयते च नियत-माहन्यमानम् ।

गुरुत्वपरिमाणं तावद् यूनो हृदयस्य पञ्चविंशतितोलकेभ्य आरभ्य त्रिंशत्तोलकान्तं मानतः । स्त्रियास्तु हृदयं लघुतरं, प्रायेण विंशतितोलकं

---

१ । हृदयम्—Heart.

किञ्चिदधिकं वा। दैर्घ्य-प्रस्थ-वेधास्तु हृदयस्य क्रमेण षडंगुल-चतुरंगुल-त्र्यंगुल प्रमाणाः प्रायः।

तदेतद् हृदयं मध्यवर्त्तिना अनुदैर्घ्यमवस्थितेन मांसमयान्तःप्राचीरकेण द्विधाविभक्तं, दक्षिणार्धं वामार्धं च। तत्र दक्षिणार्धं भूम्ना पुरस्ताद् वर्त्तते, वामार्धन्तु पृष्ठतः। एकैकं चार्धं हृदयस्य अनुप्रस्थम् विभज्यते अभ्यन्तरस्थितेन प्राचीरकेण उत्तराधरप्रकोष्ठयोः। तत्र उत्तरप्रकोष्ठस्य अलिन्द[1] इति संज्ञा, अधरप्रकोष्ठस्य निलय[2] इति। तथा च दक्षिणालिन्दो, दक्षिणनिलयः, वामालिन्दः, वामनिलयश्चेति हृदयस्य चत्वारो भागाः।

बहिर्देशस्तावद् हृदयस्य हृत्कोषीयतनुकलावृत इत्युक्तपूर्वम्। तत्र च अनुदैर्घ्यं बहिर्दृश्ये निलययोर्मध्यस्थे अगम्भीरे सीते पुरः पश्चाच्च, ते अधि-निलयिके नाम। ताभ्यां बहिर्देशतोऽपि निलयद्वयाभ्यन्तरस्थं प्राचीरमुन्नीयते। अपरे च तत्र अनुप्रस्थं गते सीते अलिन्दनिलययोर्विभागं सूचयतः पुरः पश्चाच्च। ते अलिन्दनिलयान्तरिके नाम। तत्र अधिनिलयिके सीते संश्रित्य प्रसृते वामदक्षिणे हार्दिकसंज्ञे धमन्यौ हार्दिकसिरासहिते। अपरयोः सीतयोरन्तरालेषु तु प्रसृतास्तच्छाखाः।

इमे चात्र विशेषा आदावेव संलक्ष्याः ( ९८ चित्रम् )

दक्षिणालिन्दे—ऊर्ध्वसंसक्ता उत्तरा महासिरा, अधःसंसक्ता च अधरा महासिरा। दक्षिणनिलयादूर्ध्वं प्रसृता फुस्फुसाभिगा धमनी। वामालिन्दे प्रविष्टाश्चतस्रः सिराः फुस्फुसप्रभवाः। वामनिलयादूर्ध्वं प्रसृता महाधमनी।

आसां च सिराधमनीनां मध्ये हृदयस्य बहिर्देशे पुरोदृश्या दक्षिणतो महाधमनी, वामतश्च फुस्फुसाभिगा धमनी। तयोराद्या अपरां क्रोडीकृत्य स्थिता स्वकीय तोरणभागेन। पश्चिमतो दृश्याः पुनः—उत्तराधरे महासिरे, चतस्रश्च फुस्फुसप्रभवाः सिराः हृदयं प्रविशन्त्यः।

सर्वे च ते हृदयाभ्यन्तरीया विशेषाः सम्यग् व्यवच्छेदेन दृश्याः। कृत्स्नश्च हृदभ्यन्तरभागो हृदन्तरीयाख्यया सुसूक्ष्मया रक्तधरकलया प्रावृतः। सा च सिराधमनीनामभ्यन्तरस्थायाः रक्तधरकलाया हृदभ्यन्तरेऽनुवृत्तिरूपा।

---

१। अलिन्दः—Auricle. २। निलयः—Ventricle.

[ ६८ चित्रम् ]

# हृदयम्

( महासिरा-धमन्यादि सहितम् )




क—क्लोमनलिका ( श्वासमार्गः )। ख—तस्या एव विभागस्थानम्। ग—ग्रैवेयक ग्रन्थिः। १। फुस्फुसाभिग-महासिरायाः विभागस्थानम्। २। फुस्फुसाभिगा महासिरा।

[ To face page 92 ]

अथ विस्तरः ।

**दक्षिणालिन्दः**[1] तनुमांसलप्राचीरो वामालिन्दात् किञ्चिदधिकायतनः। तदन्तःस्था गुहा प्रायेण पञ्चतोलकप्रमाणं रक्तं धारयति । तस्य च द्वौ भागौ— अलिन्दशीर्षकम्, अलिन्दोदरञ्च । तत्र आद्यमुपरिष्टादवस्थितं कङ्कतिकाख्य-क्षुद्रपेशीगुच्छेन दृढीकृतं च । अलिन्दोदरन्तु हृदयप्रवेशिनः सिरारक्तस्य मुख्याय-तनम् । तत्र च ऊर्ध्वाधो दृश्ये विशाले च्छिद्रे उत्तराधरमहासिरयोर्द्वारभूते । ते उत्तराधरे नाम महासिराच्छिद्रे नाम । तत्र अधरमहासिराच्छिद्रमुखे दृश्यं स्वयं-पतिष्णु सिराकपाटं, तद् गर्भस्थशिशोर्विशेषेण कार्यकरम् । अनयोश्च छिद्रयो-र्मध्यतः अलिन्दान्तरीयप्राचीरके क्षुद्रशुक्तिकाकारं खातम्, शुक्तिखातं नाम । तद् गर्भस्थस्य शिशोर्हृदये अलिन्दद्वयान्तराले छिद्रभूतमवतिष्ठते, प्रसूते तु शिशौ दशभिर्दिनैरवरुध्यते । क्वचिदनवरुद्धं च तद्विशुद्धाऽविशुद्धरक्तयोर्मिश्रीभावाद्रोग-करं भवति आ बाल्यात् ।

अस्य च शुक्तिखातस्य वामतो दृश्यं हार्दिकं नाम सिराविवरं, तद् हार्दिक्याः सिरायाः द्वारभूतम् । (हार्दिको हि सिरा हृदभितः स्थिताभिः सिराभिरापूरिता दक्षिणालिन्दमेव प्रविशति ।) तत्र च क्षुद्रा सिराकपाटिका हार्दिकसिरारक्तस्य प्रतिनिवर्त्तनवारिणी । अपरञ्चेह दृश्यं दक्षिणालिन्दनिलययो-र्मध्यस्थं महाद्वारम्, दक्षिणालिन्दद्वारं नाम । तद् वृत्तप्रायं द्व्यंगुलायतं प्रतनुस्नायुचक्ररक्षितं, त्रिपत्रकेण कपाटकेन युक्तं च ।

**दक्षिणानिलयः**[2] त्रिकोणप्रायस्तनुप्राचीरको दक्षिणालिन्दद्वारात् हृदग्रो-पकण्ठं यावदायतश्च । तस्य पुरःप्राचीरं किञ्चित् न्युब्जपृष्ठं हृदयस्य पुरोभाग-निष्पादकम्, तलदेशो महाप्राचीरोपरिस्थः । तस्य गुहा प्रायेन सार्धसप्ततोलक-रक्तधारणक्षमा । तत्रैतानि लक्षणीयानि—

त्रिपत्रकपाटम्[3]—त्रिभिः स्वयंपतिष्णुभिः पत्रकैरारचितम् । तच्च पत्रक-त्रयम् अलिन्दतो निलयाभिमुखं प्रसरद्रक्तं नावरुणद्धि, रुणद्धि तु निलयात् पराङ्मुखीं गतिं रक्तस्येति विचित्रं तस्य निर्माणकौशलम् । तानि च पत्रकाणि-त्रिकोणप्रायाणि ऊर्ध्वमुखैर्मूलभागैरलिन्दद्वारं परितः संसक्तानि । तदग्राणि तु

---

१ । दक्षिणालिन्दः—Right Auricle. २ । दक्षिणानिलयः—Right Ventricle.
३ । त्रिपत्रकपाटम्—Tricuspid Valve.

अधोमुखानि धार्यन्ते निलयप्राचीरलग्नाभिर्मांसमयीभिः स्तम्भिकाभिः प्रतनुस्नायु-रज्जुकासहिताभिः। ताश्च स्तम्भिकाः कपाटस्तम्भिका[१] नाम क्षुद्रपेश्यः, प्रतनु-स्नायुतन्तुभिः कपाटपत्रकेषु सम्बद्धाः। ताश्च स्नायुतन्तवः सूत्रकण्डरिका[२] नाम।

फुस्फुसधमनीद्वारम्[३] तु दक्षिणनिलयस्य ऊर्ध्वान्तःकोणस्थं वृत्तप्रायं स्नायुचक्रारक्षितं च। सन्ति च तदवरोधाय तिस्रः अर्धचन्द्राकाराः स्वयंपतिष्णवः कपाटिकाः परस्परसंसक्ता ऊर्ध्वं कोरोदराश्च। ताः फुस्फुसाभिगायां धमन्यां दक्षिणनिलयादूर्ध्वं प्रवर्त्तमानं रक्तं नावरुन्धन्ति, रुन्धन्ति तु रक्तस्य धमनीतः पराङ्-मुखीं गतिमित्यहो निर्माणकौशलं तासाम्। ता एता अर्धेन्दु-कपाटिका[४] नाम।

**वामालिन्दः**[५] दक्षिणालिन्दात् स्तोकेनाल्पायतनः किन्तु विशेषेण स्थूलप्राचीरकः। तस्य गुहा प्रायेण पञ्चतोलकरक्तधारणक्षमा। तस्यापि द्वौ भागौ—अलिन्दशीर्षकं, अलिन्दोदरञ्चेति। तत्र अलिन्दोदरे दृश्यानि चत्वारि छिद्राणि, द्वे दक्षिणतो द्वे च वामतः, तानि फुस्फुसोत्थ-सिरा[६]-चतुष्टयस्य प्रवेशद्वाराणि। अधश्चास्य द्वारं वामालिन्द-निलययोर्मध्यस्थम्, द्व्यङ्गुलायतम्, स्नायुचक्रवेष्टितं द्विपत्रकपाटयुक्तं च। तद् वामालिन्दद्वारं नाम।

**वामनिलयः**[७] त्रिकोणाकारः दक्षिणालिन्दात् त्रिगुणस्थूलप्राचीरकः वामालिन्दद्वाराद् हृदयाग्रं यावदायतश्च। तस्य गुहाऽपि सार्धसप्ततोलकरक्त-धारणक्षमा। तत् पश्चिमप्राचीरस्याधस्ताद् हृदयाग्रनिर्मापकम्। तत्र च विशेषाः—

द्विपत्रकपाटं[८] नाम स्वयंपतिष्णुना पत्रकद्वयेन निर्मितं कपाटमलिन्दद्वार-रोधनम्। तत्कार्यञ्च त्रिपत्रकपाटवत्।

महाधमनीद्वारम्[९] वामनिलयस्य ऊर्ध्वान्तःकोणस्थं फुस्फुसाभिग-धमनी-द्वारेण तुल्यायतनम्, तिसृभिः अर्धेन्दुकपाटिकाभिरवरुद्धं च। महाधमनी च पुरस्तात् तिर्यग्वक्रेति तदेतद्द्वारमपि फुस्फुसाभिगधमनीपृष्ठमुल्लंघ्य तिर्यक्-पुरोऽभिमुखं वर्त्तते इति विशेषः। तदेतद् हृदयनिर्माणं व्याख्यातम्।

---

१। कपाटस्तम्भिका—Masculæ Papillares. २। सूत्रकण्डरिका—Chordæ Tendinæ. ३। फुस्फुसधमनीद्वारम्—Opening of Pulmonary Artery. ४। अर्धेन्दु कपाटिकाः—Semilunar Valves. ५। वामालिन्दः—Left Auricle. ६। फुस्फुसोत्थ-सिरा—Pulmonary Veins. ७। वामनिलयः—Left Ventricle. ८। द्विपत्रकपाटं—Bicuspid or Mitral Valve. ९। महाधमनीद्वारम्—Aortic Opening.

## अथ हृत्कार्यचक्रम्।

रक्तसंवहनं हि हृत्कार्यमपेक्षते। हृत्कार्यञ्चेह स्पष्टतरं व्याख्यायते शिष्य-बुद्धिवैशद्याय। तत्र हृत्पेश्याः सङ्कोचः उत्तराधरमहासिराद्वाराभ्यामारभ्य क्रमेण समग्रयोरलिन्दयोः प्रवर्त्तते[१], ततश्च निलययोः। तेनादौ अलिन्दयोः सङ्कोचेन दक्षिणालिन्दस्थं कायिकसिरारक्तं दक्षिणनिलयं प्रति, वामालिन्दस्थं फुस्फुसाभ्या-गतं सिरारक्तं च वामनिलयं प्रति प्रणुद्यते युगपदेव। तदा च सिराद्वाराणि कपाट-रहितान्यपि दृढ़ाकुञ्चनमात्रेण पिहितानि भवन्ति, अलिन्दद्वारद्वयं च निलयद्वारद्वयं प्रति सममेव सर्वथा उन्मुच्यते, कपाटपत्रकाणामधःपतनात्। एवमापूर्यते निलयद्वयं रक्तेन। सोऽयं प्रथमः कार्यक्रमः। अथ क्रमेण निलययोः प्रसर्पति सङ्कोचे[२], दक्षिण-निलयस्थं रक्तं फुस्फुसाभिगधमनीपथेन, वामनिलयस्थं च रक्तं महाधमनीपथेन ऊर्ध्वं प्रणुद्यते। न च तत् प्रतिनिवर्त्तते अलिन्दयोः, रक्तवेगात् स्वयमुत्पतिष्णुभिः कपाटपत्रकैस्तद्द्वारयोरवरोधात्। सोऽयं द्वितीयः कार्यक्रमः। अथ क्रमेण व्यपगच्छति सङ्कोचे हृत्पेश्याः विस्फारणं प्रवर्त्तते पुनरलिन्दाभ्यामेव[३]। तदा चाकृष्यते सिरारक्तमुभयोरलिन्दयोः, ततश्च निलययोरपि स्फारीभूतयोः[४]। न च पुनस्तदा प्रतिनिवर्त्तते रक्तम् निलयाभ्यां महाधमन्यां फुस्फुसाभिगधमन्यां वा, धमनीसंकोचकृतरक्तप्रतिघातेन अधःपतिष्णूनामर्धेन्दुकपाटिकानां क्रियया धमनीद्वारयोरवरोधात्। सोऽयं तृतीयः कार्यक्रमः, विश्रामावस्था वा हृत्पेश्याः। एवं च आद्यकार्यक्रमयोः संकुचितावस्था, शेषे तु विस्फारितावस्था हृदयस्य स्मर्त्तव्या। तत्र सङ्कोचकालो विस्फारकालस्य तुल्यः प्रायेण। विपलद्वयेन[५] च प्रवर्त्तते हृत्कार्यचक्रं[६] षड्वारं[७] स्वभावेन—इति परीक्षकाणां सिद्धान्तः। एष च कार्यकालो बाल-वृद्ध-श्रान्त-दुर्बल-ज्वरितादिषु त्वरितः, विलम्बितो वा क्वचिद् भवति। इदं चास्य हृत्कार्यचक्रस्य सुखस्मरणाय सर्वार्थसंग्राहकं श्लोकद्वयम्—

---

१। अलिन्दसङ्कोचः—Auricular Systole. २। निलयसङ्कोचः—Ventricular Systole. ३। अलिन्दविस्फारः—Auricular Diastole. ४। निलयविस्फारः—Ventricular Diastole. स्थूलतस्तु सङ्कोचः—Systole. विस्फारः—Diastole. ५। विपलद्वयं—Five Seconds. एवञ्च प्रतिमिनिटं (per minute) द्विसप्ततिवारमित्यवगन्तव्यम्। वस्तुतस्तु ७०।८० वार पर्यन्तं स्वाभाविकी गतिरिति गण्यते। ६। हृत्कार्यचक्रं—Cardiac Cycle. ७। षड्वारमिति प्रायिको नियमो यूनाम्। बालानान्तु सप्तवारमष्टवारं वा। दशवारं त्वेकद्विवर्षीय-बालानाम्। वयोवृद्धौ तु क्रमशो वेगह्रासः, येन वृद्धानां पञ्चवार मपि विपलद्वये हृत्कार्यचक्रं प्रवर्त्तते।

आदावलिन्दसङ्कोचो निलयद्वयपूरणः।
ततो निलयसङ्कोचो धमनीद्वयपूरणः॥
शेषे तु स्फारता, तेन सिराभिः पूर्यते हि हृत्।
क्रियाचक्रप्रवृत्तिश्च षड्वारं विपलद्वये॥

अथ हृत्कार्यचक्रस्य बाह्यचिह्नानि।

त्रिविधानि खलु संभवन्ति चिह्नानि हृत्कार्यस्य बहिःशरीरे—हृच्छब्दः, हृत्प्रतीघातः, धमनीप्रतीघातश्चेति। तत्र—

**हृच्छब्दः**[१] हृत्प्रदेशे पुरस्तादाकर्णनेन स्पष्टं श्रूयते—धग् टग् इति ध्वनिद्वयात्मकः। तत्र आद्यो धगिति मन्द्रध्वनिः निलयद्वयसङ्कोचे प्रवर्त्तमाने श्रूयते, स द्विपत्र-त्रिपत्राख्यकपाटद्वयेन अलिन्दद्वारयोर्युगपदवरोधात्। द्वितीयस्तु टगिति तीव्रध्वनिः निलययोर्विस्फारारम्भे श्रूयते, स अर्धेन्दुकपाटिकाभिर्धमनी-द्वारयोर्युगपदवरोधात्। तत्र त्रिपत्रकपाटावरोधध्वनिः उरःफलकस्याधःप्रान्तो-परिष्टाद् अग्रपत्रसन्धाने स्फुटतमः। द्विपत्रकपाटावरोधध्वनिस्तु वामचूचुकाधः पञ्चमपर्शुकान्तराले। अर्धेन्दुकपाटिकाभिर्महाधमनीद्वारावरोधस्य ध्वनिस्तु उरःफलकस्य दक्षिणतः द्वितीयपर्शुकोपपर्शुकयोः सन्धानदेशे। फुस्फुसाभिगधमन्या द्वारावरोधध्वनिस्तु तादृश एव वामतः।

**हृत्प्रतीघातः**[२] हृदग्रप्रतीघातो वा—दृश्यते, स्पर्शनानुभयते च अस्थूल-देहस्योरसि पञ्चम-षष्ठपर्शुकान्तराले वामचूचुकानुलम्बरेखाऽन्तःसीम्नि द्व्यंगुल-मात्रेण सार्धांगुलेन वा। तदेतत् स्वाभाविकं स्थानं हृत्प्रतीघातस्य, तत्-स्थानच्युतिस्तु रोगलिङ्गम्। हृत्प्रतीघातश्च प्राप्तसङ्कोचस्य हृदयस्य धमनीमूलं प्रति किञ्चित् पुरोविवर्त्तनात् सम्पद्यते—इति परीक्षकाः।

**धमनीप्रतीघातः**[३] पुनः हृत्स्पन्दनजन्यः, स स्पर्शसंवेद्यः (क्वचिद्-दृश्योऽपि) सर्वत्र नातिगम्भीर धमनीषु, विशेषतश्च मणिबन्धादिस्थानेषु। अंगुष्ठ-मूलादिषु तु स्पर्शानुभूतोऽसौ हृत्स्पन्दनप्रकारं सूचयति। अतएव—"धमनी जीवसाक्षिणी"—इत्युच्यते। तत्प्रतीघातस्य वैचित्र्यविशेषानुभवाच्च हृत्कार्य-विज्ञानं धमनीस्पर्शविज्ञान[४]मुखेन, ततश्च वातादिदोषक्षयवृद्धिविज्ञानमपि।

---

१। हृच्छब्दः—Heart-Sound. २। हृत्प्रतीघातः—Cardiac Impulse. ३। धमनी-प्रतीघातः—Pulse-beat. (which as usually 70 to 80 per minute.) ४। धमनी-स्पर्शविज्ञानमेव लोके नाड़ीविज्ञानमित्युच्यते। तत्र नाड़ीशब्दो धमन्यर्थे दुष्प्रयुक्तः।

[ ९९ चित्रम् ]

## गर्भस्थबालकस्य रक्तसंवहनम् ।




( To face page 96 )

### अथ गर्भस्थबालकस्य रक्तसंवहनम्[1] ।

इतरविलक्षणं तावद् रक्तसंवहनं गर्भस्थ शिशोः ( ९९ चित्रम् ), तस्य मातृपरतन्त्रत्वात्, गर्भस्थदशायां हृदयादिनिर्माणवैलक्षण्याच्च । स हि न स्वयमाहारमादत्ते श्वासानिलं वा, मातुरेवाहाररसेन नाभिनालमाश्रित्य तच्छरीरप्रवेशिना तत्तत्कार्यसाधनात् । आहुश्च प्राञ्चः—"मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्यमभिवहति । तेनोपस्नेहेनास्याभिवृद्धिर्भवति"—इति ( सुश्रुत० शारीर० ३ अ० ) । "नाभ्यां ह्यस्य नाड़ी[2] प्रसक्ता, नाड्याञ्चामरा[3] । अमरा चास्य मातुः प्रसक्ता हृदये । मातृहृदयं ह्यस्यताममरामभिसंप्लवते सिराभिः स्यन्दमानाभिः"[4]—इति ( च० शा० ६ अ० ) ।

निर्माणवैलक्षण्यं पुनरीदृशं तस्य पञ्चभिर्विशेषैः । यथा—

**संवाहिनी** नाम **महासिरा**[5] मातुरमरातो रक्तमभिवहन्ती बालस्य नाभिमार्गेण यकृत्तलदेशे प्रसृता । सा द्वाभ्यां शाखाभ्यां यकृत्पिण्डद्वयं पुष्णाति । अग्रे च प्रसृत्य द्वयोरग्रशाखयोर्विभज्यते ( ९९ चित्रम् ) ।

तयोश्च अग्रशाखयोरेका **सेतुसिरा**[6] नाम, सा सेतुवद् योजयति संवाहिनीं महासिरामधरया महासिरया । अपरा धनुर्वक्रा "प्रतीहारिणी" संज्ञया याकृतस्थूलसिरया मिलिता याकृतं रक्तसंवहनं साधयति ।

**सेतुधमनी**[7] नाम धमनी फुस्फुसाभिगां धमनीं महाधमन्या योजयति उभयोर्मध्यस्था ।

**संवाहिन्यौ**[8] नाम **धमन्यौ** भ्रूणस्य आभ्यन्तरीभ्यामधिश्रोणिकाख्यधमनीभ्यां निर्गत्य वस्तिमुभयतः प्रसृते नाभिमार्गेण बहिर्गच्छतः । ते भ्रूणस्य नाभिनालमाश्रित्य मातुरमरायां रक्तमभिवहतः । प्रसूतस्य तु बालस्याचिरेण शुष्कप्राये ते "वस्तिरज्जुका"संज्ञे भवतः ।

---

१ । गर्भस्थशिशोः रक्तसंवहनम्—Foetal Circulation. २ । गर्भनाड़ी, नाभिनाड़ी, नाभिनालं वा—Umbilical Cord. ३ । अमरा, अपरा वा—Placenta. ४ । तथा च भोजः—"सा नाड़ी गर्भमाप्नोति तया गर्भस्य वर्त्तनम् । यद्यदश्नाति माताऽस्य भोजनं हि चतुर्विधम् ॥ तस्मादन्नाद्रसीभूतं वीर्यं त्रेधा प्रवर्त्तते । भागः शरीरं पुष्णाति स्तन्यं भागेन वर्धते ॥ गर्भः पुष्यति भागेन वर्धते च यथाक्रमम् । गर्भं कुल्येव केदारं नाड़ी प्रीणाति तर्पिता"—इति डल्वनटीकायाम् । ५ । संवाहिनी महासिरा—Umbilical Vein. ६ । सेतुसिरा—Ductus Venosus. ७ । सेतुधमनी—Ductus Arteriosus. ८ । संवाहिन्यौ—Hypogastric Arteries.

शुक्तिच्छिद्रं[1] नाम विवरं गर्भस्थशिशोर्हृदयस्य अलिन्दद्वयान्तरस्थ-प्राचीरे दृश्यते। अधरमहासिरयानीतस्य रक्तस्य दक्षिणालिन्दाद् वामालिन्दगमनं सम्पाद्यते तेन मार्गेण।

ता एताः सिरा धमन्यश्च प्रसूतस्य बालकस्य पञ्चभिर्दिनैरवरुध्यन्ते, तिष्ठन्ति च ततः परं नीरन्ध्रसूत्राकाराः शरीरे। शुक्तिच्छिद्रस्य तु दशभिर्दिनैर्विलोपः, तच्चिह्नञ्च शुक्तिखातमुक्तपूर्वम्। कदाचित्तु कस्यचिद् अविलुप्तं शुक्तिच्छिद्रम् आ बाल्याद् हृद्रोगकरं सम्पद्यते, अलिन्दयोः शुद्धाशुद्धरक्तमिश्रणात्।

रक्तसंवहनप्रकारश्च गर्भस्थबालस्यैदृशः। तस्य हि मातुरमरातः समागतं रक्तं नाभिनालपथेन प्रविशति शरीरं संवाहिन्या महासिरया। सा च महासिरा पूर्वोक्तदिशा स्वशाखाभिः यकृत् पुष्णन्ती सेतुसिराद्वारेण अधर-महासिरया मिलिता। एवञ्च तद्रक्तं सिरारक्तेन मिश्रीभूतमूर्ध्वं प्रवर्त्तते अधर-महासिरया हृदयाभिमुखम्। ततो हृदयस्य दक्षिणालिन्दे प्रविष्टं तद् दक्षिण-निलयमगत्वैव शुक्तिच्छिद्रमार्गेण प्रसरति वामालिन्दे, ततश्च वामनिलये, ततश्च महाधमन्यामिति विलक्षणोऽयमाद्यः क्रमः। अथ ऊर्ध्वकायात् प्रत्यागतं उत्तरमहा-सिरागतं रक्तमपि दक्षिणालिन्दे प्रविशति, ततश्च दक्षिणनिलयमेव, पूर्वोक्तं रक्तस्रोत उल्लङ्घ्य - इति विचित्रं निर्माणकौशलं विधातुः। दक्षिणनिलयतश्च फुस्फुसाभिगां धमनीं प्रविश्य तद्रक्तं स्वल्पेन भागेन फुस्फुसद्वयं पुष्णाति, न तु तत्र विशोध्यते, फुस्फुसयोस्तदा निष्क्रियत्वात्। अधिकेन तु भागेन तत् सेतुधमनी-द्वारेण प्रविशति महाधमनीमेव। फुस्फुसाभ्यामागतं च कियन्मात्रं रक्तं साधारण-क्रमेण प्रविशति वामालिन्दं फुस्फुसप्रभवाभिः सिराभिः, ततश्च वामनिलयं, ततश्च महाधमनीम्। सोऽयं द्वितीयः क्रमः। अथ महाधमनीप्रविष्टं रक्तं सर्वत्र शरीरे साधारणक्रमेण प्रसरति स्वशाखाभिः, प्रतिनिवर्त्तते च उत्तराधराभ्यां महासिराभ्याम्। एष तु तत्र विशेषः—तस्य भूयिष्ठो भागः संवाहिनीभ्यां धमनीभ्यां नाभिनालमार्गेण प्रविशति पुनः मातुरमरामेव इति तृतीयः क्रमः।

सैषा गर्भस्थबालस्य रक्तसंवहनशैली व्याख्याता।

---

१। शुक्तिच्छिद्रं—Foramen Ovale.

# तृतीयोऽध्यायः।

अथातो मूलधमनीवर्णनीयमध्यायं व्याख्यास्यामः।

सर्वासां हि धमनीनां मूलं हृदयम्—इत्युक्तपूर्वम्। ततश्च निर्गते द्वे धमन्यौ प्रधानभूते—फुस्फुसाभिगा धमनी, महाधमनी चेति। तयोराद्या फुस्फुसीयरक्तसंवहनस्य द्वारभूता, अन्त्या तु सामान्यकायिकरक्तसंवहनस्य ( ९८ चित्रम् )।

तत्र **फुस्फुसाभिगा धमनी**[1] अविशुद्धरक्तवहा स्थूलधमनी शरीरे। सा हृदयस्य दक्षिणनिलयात् सम्भूता पञ्चांगुलपरिणाहा द्व्यंगुलमात्रदीर्घा च। दृश्यते चासावूर्ध्वं हृन्मूले वामतो महाधमन्याः, आच्छाद्यते च हृदयधरेण कलाकोषेण। महाधमन्यास्तोरणोत्सङ्गे प्रविष्टायाश्च तस्या दक्षिणवामयोः फुस्फुसाभिगयोर्महाशाखयोर्विभागः। ते च महाशाखे नानाविधशाखा-प्रशाखाऽनुशाखासु विभज्यते फुस्फुसद्वयान्तः। तासां चरमाः सूक्ष्मशाखाः फुस्फुसीयवायुकोषानभितो जालकाकारेण प्रसृताः। जालकान्तरीयं च रक्तं श्वासवायुना विशोध्यते।

**महाधमनी**[2] नाम विशुद्धरक्तवहा स्थूलतमा मूलधमनी शरीरे। सा हृदयस्य वामनिलयात् सम्भूता, मूले पञ्चांगुलपरिणाहा, शेषे तदर्धपरिणाहा, प्रायेण स्वहस्तप्रमाणदीर्घा च। दृश्यते चासौ हृन्मूले दक्षिणतः, पुरस्तात् फुस्फुसाभिगायाः धमन्याः, आच्छाद्यते च मूलभागे हृदयधराख्येन कलाकोषेण सिराधमनीकञ्चुकैर्मिलितेन। सेयमधोमुखमरालग्रीवावद् वक्रीभूय पृष्ठवंशाभिमुखं गत्वा तत्सम्मुखतो वामपार्श्वानुक्रमेण अधःप्रसृता चतुर्थकटिकशेरुकायाः पुरस्ताद् द्वयोर्महाशाखयोर्विभज्यते। तस्याश्च तथाविधायाः त्रयो भागाः कल्प्यन्ते वर्णनसौकर्याय—आरोहिभागः, तोरणभागः, अवरोहिभागश्चेति। तेषामारोहिणी, तोरणी, अवरोहिणी चेति विशेषणसंज्ञाः लाघवार्थमुद्दिष्टाः।

अथ महाधमन्याः शाखाप्रविभागः।

महाधमन्याः, तदन्तिममहाशाखयोः, काण्डमूलाख्यधमन्याश्च काण्डोत्थिताः शाखाः काण्डशाखा नाम। तासां शाखाः केवलं शाखाशब्देन व्यपदिश्यन्ते। तच्छाखानां प्रशाखेति संज्ञा, तच्छाखानाञ्च अनुशाखेति। ततः परं धमनीप्रतानाः जालकानि च सर्वकायगतानीति चरमो विभागः।

---

१। फुस्फुसाभिगा धमनी—Pulmonary Artery. २। महाधमनी—Aorta.

यदा पुनः काचित् काण्डशाखा अन्ते द्वेधा विभज्यते, तदा विभागद्वयस्य अग्रशाखेति संज्ञा। एवं शाखायाश्चरमप्रशाखे अग्रप्रशाखे नाम। यदा तावत् काचित् काण्डशाखा शाखा वा अक्षशाखाणां त्रिचतुराणां धमनीनां मूलभूता, तदासौ अक्षशाखा नाम।

धमनीचक्राणि नाम धमनीनां शाखाप्रशाखाभिः परस्परानुप्रविष्टाभिरारचितानि चक्राणि। तानि च सन्धीनाशयान् इन्द्रियाधिष्ठानादीनि च विशेषादभिव्याप्य तिष्ठन्ति। एवं च सत्यपि कस्याश्चिद् धमन्याः अवरोधे नावरुध्यते रक्तसंवहनं तत्तद्देशेषु, न च शीर्यन्ते प्रकुथ्यन्ते वा तद्देशस्था विशेषाः, तद्देशीयानां धमनीचक्राणामितरधमनीप्रशाखाभिरभितर्पणात्।

प्रभव-प्रसरौ शाखाप्रविभागश्च धमनीनां बहुधा विलक्षणरूपा दृश्यन्ते केषुचित् कायेषु। तस्मादिह सर्वत्रापि तद्वर्णनेन भूयोदर्शनमूलं प्रायिकमेव मन्तव्यम्। भिन्नक्रमविभागस्यापि बहुशो दर्शनात्।

सिराश्च प्रायेण सर्वत्र धमनीरनुसरन्ति, एकाकिन्यो युग्मा वा। तत्र स्थूलधमन्यनुसारिण्य एकाकिन्यः, तनुधमन्यनुसारिण्यश्च युग्माः प्रायशः। ताः सहचर्यो[1] नाम सिराः।

### अथ आरोहिणी महाधमनी ( ६८ चित्रम् )।

महाधमन्या आरोहिभागो द्व्यंगुलमात्रदीर्घः पञ्चांगुलपरिणाहश्च—तस्य **आरोहिणी महाधमनी**[2]—इति संज्ञा। सेयम् हृदयस्य वामनिलयात् सम्भूय ऊर्ध्वमुखमीषद्वक्रञ्च प्रसृत्य महाधमन्यास्तोरणभागे मिलिता।

तस्या हृदयसम्बद्धं मूलमभितस्त्रय उत्सेधाः, पूर्वोक्तानामर्धेन्दुकपाटिकानां तदन्तःस्थानां सूचकाः। तेषां चाभ्यन्तरतस्त्रीणि कोरोदराणि कोटरकाणि। तदुपरिष्टाच्चोभयतः सम्भूते द्वे काण्डशाखे तनुपरिणाहे हृदयं पुष्णीतः। ते **हार्दिकधमन्यौ** नाम। तयोर्वामा हृदयबहिर्भागे पुरःस्थायां निलयान्तरिकाख्यसीतायां प्रसृता, दक्षिणा तु तस्यामेव पश्चिमस्थायाम्। एकैकस्याश्च हार्दिकधमन्या अग्रशाखे द्वे—अनुलम्बा, अनुप्रस्था चेति। तयोरनुलम्बा शाखा तत्रैव सीतायां हृदयाग्रं यावद् गत्वा अपरया अनुलम्बशाखया मिलिता। अनुप्रस्था तु शाखा अलिन्द-निलयान्तरिकायां सीतायां प्रसृता अपरया अनुप्रस्थया मिलिता।

---

१। सहचर्यः—Venæ Comites. २। आरोहिणी महाधमनी—Ascending Aorta.

तासां च शाखानां प्रशाखाऽनुशाखाभिरारचितं धमनीचक्रं हृदयं परितो दृश्यते, तद् हृन्मांसं पुष्णाति।

व्यतिकरः पुनरारोहिण्या महाधमन्या ईदृशः। सा पुरस्ताद् दक्षिण-फुस्फुसैकदेशेन हृत्कोषांशेन च संवृतप्राया। तस्याः पश्चिमतः—हृदयस्य वामालिन्दः, फुस्फुसाभिगधमन्या दक्षिणमहाशाखा, दक्षिणक्लोमकाण्डिका च। तस्या दक्षिणतः—उत्तरा महासिरा, हृदयस्य वामालिन्दश्च। वामतस्तु फुस्फुसाभिगा धमनी।

अथ तोरणी महाधमनी ( ६८ चित्रम् )।

**तोरणी महाधमनी**[1] नाम महाधमन्यास्तोरणभागः। सा स्थूल-परिणाहा चतुरंगुलदीर्घा च। सेयं महाधमन्या आरोहिभागस्य अवरोहिभागेन संयोजनी। सा उरःफलकस्य पृष्ठतो दक्षिणद्वितीयोपपर्शुकासन्धानदेशादारभ्य तिर्यक् चतुर्थपृष्ठकशेरुकायाः पुरोभागं यावत् शरगत्या[2] प्रसृता। दृश्यते चासौ आदौ क्लोमनलिकायाः पुरस्तात्, ततश्च तद्वामतः। तदुत्सङ्गे च फुस्फुसाभिगा नाम धमनी महाशाखाद्वये विभक्तरूपा, वामा क्लोमकाण्डिका च। मध्ये च महाधमनी-फुस्फुसाभिगधमन्योः योजनी शुष्कधमनी सेतुबन्धनिका नाम, सा गर्भस्थस्य बालस्य सेतुधमन्या अवशेषभूता।

तोरण्याश्च महाधमन्याः शिखरदेशात् सम्भूता **काण्डमूला**[3] नाम स्थूलधमनी दक्षिणतः। वामतस्तु वामा महामातृका, अक्षाधरा चेति द्वे कांडशाखे। सा च काण्डमूला धमनी दक्षिणाक्षकेण उरःफलकसन्धानस्य पृष्ठतो विभज्यते द्वयोः काण्डशाखयोः। ते दक्षिणामहामातृका, अक्षाधरा चेति प्रसिद्धे। एवं चतस्र उत्तराः काण्डशाखाः महाधमनीतोरणात् साक्षात् परम्परया वा सम्भूताः।

तासां महामातृकाद्वयं ऊर्ध्वं प्रसृत्य मातृकाधमनीचतुष्टये विभक्तं प्राधान्येन शिरोग्रीवं पुष्णाति शाखाप्रशाखाभिः। अक्षाधरे तु तिर्यग् बहिःप्रसृते मध्येपथं कतिचिद्भिः शाखाप्रशाखाभिः शिरोग्रीवांशोरःस्थलादीन् तर्पयतः। ततः कक्षयोः कक्षाधरे नाम धमन्यौ भूत्वा बाह्वोः प्रविष्टे बाहुधमन्यौ भवतः। एकैका च बाहुधमनी कूर्परसन्धेः पुरस्ताद् द्वेधा विभज्यते प्रकोष्ठस्यान्तर्बहिःसीम्नोः, तत्प्रशाखाऽनुशाखाभिश्च तर्प्यन्ते बाहुस्थाः विशेषाः।

---

१। तोरणी महाधमनी—Aortic Arch. २। शरो यथा पुरस्ताद् ऋजुगत्या धावति तद्वद् गत्या। ३। काण्डमूला—Innominate Artery.

( व्यतिकरः ) तोरणी महाधमनी पुरस्तात् फुस्फुसधरयोः कलाकोषयोरंशाभ्यां वालग्रैवेयकाख्यग्रन्थिशेषेण च संवृता । तद्वामतो दृश्यन्ते वामफुस्फुसांशः कलाकोषसहितः, वामा अनुकोष्ठिका नाम नाड़ी, वामा प्राणदाख्या नाड़ी, तच्छाखाश्च । तद्दक्षिणतो दृश्यम् अनाहतचक्रं, अन्ननलिका, रसकुल्या च । क्लोमनलिका तु तद्दक्षिणपश्चिमतः । ऊर्ध्वं पुनस्तोरण्या महाधमन्याः तिस्रो धमन्यः—काण्डमूला धमनी, वामा महामातृका, अक्षाधरा चेति । ताः पुरोवर्त्तिन्या वामगलमूलिकाख्यसिरया तिर्यगुल्लंघिताः । तोरणाधस्तु पूर्वोक्ताः तोरणोत्संगस्था विशेषाः—इति तोरण्या महाधमन्या व्यतिकरो व्याख्यातः ।

अथ अवरोहिणी महाधमनी ( ६८ चित्रम् ) ।

महाधमन्या अवरोहिभागः—**अवरोहिणी महाधमनी**[1]—इत्युच्यते । सा चतुर्थपृष्ठकशेरुकायाः पुरोदेशादारभ्य चतुर्थकटिकशेरुकां यावत् प्रसृता पृष्ठवंशस्य पुरस्ताद् वामपार्श्वे । द्वेधा विभज्यते चासौ वर्णनासौकर्याय—उरस्य भागः, उदर्यभागश्चेति । तत्र महाप्राचीरास्थं महाधमनीच्छिद्रमाश्रित्य यावदियं नाधः प्रवर्त्तते, तावदस्या **औरसी महाधमनी**[2]ति संज्ञा । अधःप्रवृत्ता तु सैव **औदरी** (उदर्या वा) **महाधमनी**[3] नाम । तयोश्च विभागयोस्तन्ध्यः काण्डशाखाः स्वशाखा-प्रशाखाभिरुरस्यानुदर्यांश्च विशेषानभिव्याप्य तर्पयन्ति ।

( व्यतिकरः ) औरस्या महाधमन्या व्यतिकरस्तावदीदृशः । तस्याः पुरस्तात्—वामफुस्फुसस्य मूलदेशः, हृत्कोषः, अन्ननलिका, महाप्राचीरा च । पश्चात्—पृष्ठवंशः, वामा पुरोवंशिकाख्या सिरा च । दक्षिणतः—रसकुल्या, दक्षिणा पुरोवंशिका सिरा च । वामतः—वामफुस्फुसधरा कला, वामफुस्फुसश्चेति । एवं च पश्चिमे फुस्फुसान्तराले दृश्योऽयं महाधमनीभागः ।

औदर्या महाधमन्याः व्यतिकर इत्थंभूतः । तस्याः पुरस्ताद्—आमाशयः, अग्न्याशयः, वामा वृक्कागता सिरा, ग्रहणीसंज्ञः क्षुद्रान्त्रस्याद्यभागः, अन्त्रबन्धनीमूलञ्च । तस्याः पश्चात् कटिकशेरुकाचतुष्टयम् । दक्षिणतः—रसाधारिका, रसकुल्या, दक्षिणा पुरोवंशिका नाम सिरा, महाप्राचीराया दक्षिणमूलम्, अधरा महासिरा च । वामतः—महाप्राचीराया वाममूलं, ग्रहण्याः पूर्वभागः, क्षुद्रान्त्राणि, इड़ा नाम महानाड़ी, वामा गवीनी चेति ।

---

१। अवरोहिणी महाधमनी—Descending Aorta. २। औरसी महाधमनी—Thoracic Aorta. ३। औदरी महाधमनी—Abdominal Aorta.

( अन्तिमविभागः ) सा च महाधमनी अन्ते चतुर्थकटिकशेरुकायाः पुरस्ताद् महत्योरग्रशाखयोर्विभक्ता। ते च महाशाखे त्रिकास्थिशिखरं प्राप्य पुनरग्रशाखाचतुष्टये विभज्येते। ताः महाधमन्याः प्रधानशाखाः—तासां द्वे बाह्ये काण्डशाखे – **अधिश्रोणिके बाह्ये**[1] नाम। ते वंक्षण-दरीमार्गेण बहिर्गते और्व्यौ नाम धमन्यौ भवतः। एकैका च और्वी धमनी जानुसन्धिपृष्ठे द्वयोः शाखयोर्विभक्ता जङ्घायाः पुरः पश्चाच्च प्रसृताः नानाविधाभिः प्रशाखाऽनुशाखादिभिः। ताभिरपराभिश्च प्रशाखादिभिः सन्तर्प्यन्ते अधःशाखागता विशेषाः।

अथापरे महाधमन्याः काण्डशाखे वस्तिगुहान्तः **अधिश्रोणिके आभ्यन्तर्यौ**[2] नाम। ते स्वशाखा-प्रशाखादिभिः वस्तिगुहास्थितानाशयान् तत्परिसरगतांश्च बाह्याभ्यन्तरविशेषान् पुष्णीतः।

सोऽयं समासेन महाधमनीप्रविभागो बीजरूपो व्याख्यातः। विस्तरोऽत ऊर्ध्वम्।

---

## चतुर्थोऽध्यायः।

अथातः शिरोग्रीवीयधमनीवर्णनीयमध्यायं व्याख्यास्यामः।

द्वे तावत् महामातृकाख्ये स्थूलधमन्यौ शिरोग्रीवं पुष्णीतः, परःशताभिः शाखा-प्रशाखाऽनुशाखादिभिः। तत्सहकारिण्यौ च अक्षकाधराख्यधमन्योः शाखे मस्तिष्कमातृके नाम, अपराश्च सन्ति तच्छाखा-प्रशाखादयस्ताद्दृश्यः। तासां सूक्ष्मानुसूक्ष्मप्रतानैरभिव्याप्ता निखिला अपि शिरोग्रीवस्था विशेषाः, बाह्या आभ्यन्तर्य्यश्च।

अथ महामातृके नाम मूलधमन्यौ ( ९८।१०० चित्रयोः )।

तत्र **वामा महामातृका**[3] ( अक्षाधरा च ) साक्षादेव महा-धमनीसम्भवा पृथगभावेन। **दक्षिणा महामातृका**[4] अक्षाधरा चेति द्वे

---

१। अधिश्रोणिके बाह्ये—Ext. Iliac Arteries. २। अधिश्रोणिके आभ्यन्तरे—Internal Iliac Arteries. ३। वामा महामातृका—Left Common Carotid. ४। दक्षिणा महामातृका—Right Common Carotid.

महाधमनीप्रभवायाः काण्डमूलाख्यधमन्या विभागसम्भूते। विभागश्च तस्या अक्षकोरःफलकसन्धानस्य दक्षिणतः पृष्ठतश्च।

ते च **महामातृके** नाम धमन्यौ कनिष्ठांगुल्यग्रपरिणाहे, अक्षकोरःसन्धानयोः पश्चिमत आरभ्य तिर्यगूर्ध्वं च ग्रीवायां प्रसृते अवटुद्वयस्य ऊर्ध्वधारां यावत्। तत्र एकैका महामातृका द्वयोरग्रशाखयोर्विभज्यते। ते **बहिर्मातृका**, **अन्तर्मातृका** च नाम। तयोराद्या पुरःस्था उत्तानतरा सा प्रायेण बहिर्ग्रीवीयानां विशेषाणां पोषणी, अन्त्या पश्चिमा गम्भीरा च। सा अन्तर्ग्रीवं प्रविष्टा घ्राण-नेत्र-श्रवणेन्द्रियाधिष्ठानानि शाखाप्रतानैः पुष्णन्ती मस्तिष्कमभिप्रसृता।

(व्यतिकरः) उभे च महामातृके पुरस्तादुरःकर्णमूलिकाभ्यां पेशीभ्यां संवृते तदनुक्रमेण प्रसृते च। धार्यते च एकैका महामातृका ग्रीवाप्रच्छदांशनिर्मितेन मातृकाकञ्चुकेन, दृश्यते च सा तदन्तः सह प्राणदाख्य-नाड्या अनुमन्याख्यसिरया च। तत्र च कञ्चुकाभ्यन्तरे बहिःसीम्नि सिरा, मध्ये नाड़ी, अन्तःसीम्नि च धमनीति तासामवस्थानक्रमः। कञ्चुकपुरस्ताच्च दृश्या जिह्वामूलिन्या नाड्या निम्नगा शाखा। अन्तराले च महामातृकयोर्दृश्या--ग्रीवामूले क्लोमनलिकैव, ऊर्ध्वभागे तु ग्रैवेयग्रन्थिः स्वरयन्त्रम्, अन्ननलिकाया आद्यभागश्च पूर्वापरक्रमेण। पश्चात्तु तयोः दीर्घग्रीविका, दीर्घशिरस्का चेति पेशीद्वयं ग्रीवावंशपुरःस्थम्। पेशी-धमन्योरन्तराले च वामतः इड़ा, दक्षिणतश्च पिङ्गलेति महानाड्यौ नाड़ीकन्दैः सहिते।

### अथ बहिर्मातृका धमनी।

**बहिर्मातृका**[1] नाम धमनी (१०० चित्रम्) महामातृकाया उत्ताना अग्रशाखा। सा अवटुसंज्ञस्य कण्ठस्थतरुणास्थ्नः ऊर्ध्वधारात आरभ्य कर्णमूलं यावत्तिर्यगूर्ध्वं च प्रसृता एकैकतो ग्रीवापार्श्वे। तस्या अष्टौ प्रशाखाः। तासां चतस्रः पुरोमुख्यः, तिस्रः पश्चान्मुख्यः, एका ऊर्ध्वगा। तद्यथा— (मूलदेशादारभ्य ऊर्ध्वोर्ध्वक्रमेण) पुरोमुख्यः—उत्तरग्रीविका, अनुजिह्विका,

---

१। बहिर्मातृका—External Carotid.

[ १०० चित्रम् ]

दक्षिणगलपार्श्वस्था धमन्यः ( व्यवच्छेदेन दर्शिताः )।




चित्रव्याख्या—† एतच्चिह्नं धमनी वाचकम्। द—द्विगुम्फिका पेशी। ट-ट—उरःकर्णमूलिकाख्यपेश्याः कर्त्तित प्रान्तद्वयम्। पृ—पृष्ठच्छदा पेशी। ब—बहिर्मातृका धमनी।

( To face page 104 )

बहिर्हानव्या ( वक्त्रधमनी वा ), अन्तर्हानव्या चेति प्रसिद्धाः । पश्चान्मुख्यः—अन्नद्वारिणी ऊर्ध्वगा, कपालमूलिनी, पश्चिमकर्णिका चेति तिस्रः । ऊर्ध्वगा तु—एकैव अनुशंखा उत्ताना नाम । विस्तरोऽत ऊर्ध्वम् ।

तत्र बहिर्मातृकायाः पुरोमुख्यः प्रशाखाः । यथा—

(१) **उत्तरग्रीविका**[1] नाम धमनी ( १०० चित्रम् ) कण्ठिकास्थ्नो महाशृङ्गाधो बहिर्मातृकायाः पुरोभागात् सम्भूय ग्रैवेयकग्रन्थिं प्रविष्टा । सा इतरपार्श्ववर्त्तिन्या स्वनामिकाया धमन्या मध्यरेखायामनुशाखाभिर्मिलिता, सूक्ष्मप्रतानैः तदुपकण्ठस्थान् पेश्यादीन् पुष्णाति । सन्ति चापरा अपि तस्याः प्रधानानुशाखाश्चतस्रः । ताः अनुकण्ठिका, अधिस्वरा उत्तरा, अनुकृकाटिका, मन्याऽभिगा चेति प्रसिद्धाः । तासामाद्यास्तिस्रः क्रमेण कण्ठिकास्थि-स्वरयन्त्र-कृकाटिकास्वनुप्रविष्टाः । चतुर्थी तु मन्याख्यां पेशीं तर्पयति ।

(२) **अनुजिह्विका**[2] नाम धमनी बहिर्मातृकायाः पुरोदेशात् सम्भूय कण्ठिकास्थ्नोऽधःशृङ्गं प्रति तिर्यग् जिह्वाधः प्रसृता । अस्याश्चतस्रः अनुशाखाः—अनुकण्ठिका, रसनोत्तरिका, रसनाधरिका, गम्भीररसनिका चेति स्वनामव्याख्याताः ( १०१ चित्रम् ) ।

(३) **बहिर्हानव्या धमनी**[3] **वक्त्रधमनी वा** ( १०० चित्रम् ) बहिर्मातृकाया उत्ताना प्रशाखा अधोहनुपार्श्वस्थया वक्त्रधमनीपरिखयोर्ध्वं प्रसृता चिवुकोष्ठ-नासापार्श्वेषु कुटिलगत्या सङ्गता । तस्या अष्टौ अनुशाखाः क्रमेण धमनीपरिखाप्रवेशादधः ऊर्ध्वश्च—चतस्रो गलानुगाः, चतस्रश्च वक्त्रानुगा इति । तत्र गलानुगाः—आरोहिणी तालुगा, उपजिह्वानुगा, चिवुकाधरीया ग्रन्थिगा, चिवुकाधरिका चेति । वक्त्रानुगास्तु—अधराभिगा, ओष्ठाभिगा, नासापार्श्विका, नासामूलिका चेति । ताः स्वनामव्याख्याताः ।

(४) **अन्तर्हानव्या**[4] नाम (१००।१०१ चित्रयोः) बहिर्मातृकायाः स्थूलगम्भीरा प्रशाखा, या कर्णमूलाधः सम्भूय अधोहनुकूटस्य अन्तस्तलमाश्रित्य हनुसन्धेरधस्तात् तिर्यगन्तःप्रविष्टा । सा च पञ्चदशभिरनुशाखाभिः हनुः-कर्ण-कपोल-ताल्वादीन्, बाह्यां मस्तिष्कवृतिकां कलाञ्च पुष्णाति । तस्यास्त्रयो भागाः

---

१। उत्तरग्रीविका धमनी—Superior Thyroid Artery. २। अनुजिह्विका धमनी—Lingual Artery. ३। बहिर्हानव्या धमनी—External Maxillary or Facial Artery. ४। अन्तर्हानव्या धमनी—Internal Maxillary Artery.

कल्प्यन्ते वर्णनासौकर्याय। तद्यथा—आद्यो भागः कर्णमूलादारभ्य उत्तराया हनुमूलकर्षण्याः पेश्या अधोधारामनुसरति। मध्यो भागः—धनुर्वक्रः तामेव पेशीं तिर्यगधिशेते, स च शंखच्छदया पेश्याच्छादितः। अन्त्यो भागस्तु गम्भीरतरः, हनुमूलकर्षण्याः पेश्याः मूलद्वयान्तरालेन करोटिपक्षस्थं हनुजातूकखातं प्रविश्य अनुशाखासु विभक्तः। तत्र—

आद्यभागस्य पञ्च अनुशाखाः। तासां द्वे कर्णगे—गम्भीरकर्णिका, पटहपुरस्का चेति। द्वे मस्तिष्कवृतिगे—मध्यमा, तदनुचरी चेति। एका अधो-हनुमण्डलगा—अधरदन्तिका नाम। मध्यभागस्य चतस्रः अनुशाखाः—शाखानुगा गम्भीरा, हनुमूलिका, हनुकूटिका, अनुकपालिका चेति। अन्त्यभागस्य षट् अनुशाखाः—पश्चिमदन्तिका, नेत्राधरीया, अवरोहिणी तालुगा, अनुग्रसनिका, जतूका-पादिका, जतूकातालुका चेति। तासां नेत्राधरीया द्वयोस्तनुशाखयो-र्विभक्ता--नेत्रगुहानुगा, उत्तरदन्तिका चेति। अनुग्रसनिका जतूकापादिका च ग्रासनीं पेशीं श्रुतिसुरङ्गाञ्च अभिप्रसृते। सर्वासां चासां प्रायेण नामभिरेव पोषणीयस्थानानि समुन्नेयानीति विस्तरो नाभिहितः। ता एताः बहिर्मातृकायाः पुरोमुख्यः प्रशाखाः व्याख्याताः।

अथ बहिर्मातृकायाः पश्चान्मुख्यः प्रशाखाः। यथा—

(१) अन्नद्वारिणी ऊर्ध्वगा[1] नाम बहिर्मातृकायाः पश्चिमदेशप्रभवा तनुदीर्घा प्रशाखा, या अन्तर्मातृकायाः पार्श्वे ऊर्ध्वमुखी दृश्यते। तस्यास्तिस्रोऽनुशाखाः—अनुग्रसनी, पटहाधरीया, मस्तिष्कवृतिगा पश्चिमा चेति। ताः क्रमेण अन्नद्वार-कर्णपटह-मस्तिष्कवृतीनां पर्यन्तेषु प्रसृताः।

(२) कपालमूलिनी[2] नाम (१०० चित्रम्) प्रशाखा कपालमूलस्थपेशीः निर्भिद्य प्रसृता। तस्या अनुशाखाः षट्—मन्यानुगा, गोस्तनिका, कर्णपालिगा, मांसगा, मस्तिष्कवृतिगा, पश्चिमकपालिका चेति। तासामाद्या मन्याख्यां पेशीमनुप्रविष्टा। द्वितीया शंखास्थ्नो गोस्तनप्रवर्धनं, तृतीया कर्णपालिं, चतुर्थी ग्रीवापृष्ठस्थाः दीर्घपेशीः, पञ्चमी शिरोगुहान्तःप्रसृतां मस्तिष्कवृतिम्, षष्ठी शिरश्छदाख्यपेश्याः पश्चार्धम्, शिरस्त्वचश्च इति तासां पोषणीयस्थानसमुद्देशः।

---

१। अन्नद्वारिणी ऊर्ध्वगा धमनी—Ascending Pharyngeal Artery, २। कपालमूलिनी धमनी—Occipital Artery.

[ १०१ चित्रम् ]

## अन्तर्हानव्याख्यधमन्याः शाखा-विस्तारः

( अधोहन्वस्थ्नो दक्षिणार्धापसारणेन दर्शितः )




चित्रव्याख्या—क—हनुमूलकर्षणी उत्तरा पेशी। ख--हनुमूलकर्षणी अधरा पेशी।
अ०—अन्तर्हानव्याख्यधमन्याः नेत्राधरीया शाखा।

( To face page 106 )

(३) पश्चिमकर्णिका[1] नाम (१०० चित्रम्) धमनी कर्णमूलस्य पश्चिमदेशे बहिर्मातृकातः समुत्थाय द्विगुम्फिकायाः पेश्याः मूलोपरिष्टात् कर्णमूलिकग्रन्थेश्च पश्चिमतः प्रसृता। सा शंखास्थ्नो गोस्तन-कर्णविवरयोरन्तरालं प्रविष्टा कतिचिदनुशाखाभिः द्विगुम्फिकाद्याः पेशीः, कर्णमूलिकग्रन्थिं च पुष्णाति। अपराश्च तस्यास्तिस्रोऽनुशाखाः—कर्णान्तरीया, कर्णपृष्ठगा, पश्चिमकपालिका चेति। ता एताः पश्चान्मुख्यः प्रशाखाः व्याख्याताः।

अथ बहिर्मातृकाया ऊर्ध्वंगा प्रशाखा—

सेयम् अनुशंखा उत्ताना[2] नाम (१०० चित्रम्) कर्णमूलग्रन्थिं निर्भिद्य तिर्यक् कर्णपुरतः प्रसृता शङ्खदेशे द्वयोरनुशाखयोर्विभक्ता। ते चानुशाखे पुरःकपालिका पार्श्वकपालिका चेति-संज्ञे। अपराश्च तस्या अनुशाखाः कर्णमूलिकग्रन्थिं, हनुसन्धिं, हनुकूटकर्षणीं पेशीं च पुष्णन्ति। अन्याश्च चतस्रोऽनुशाखाः कर्णपुरस्ताद् दृश्याः—अनुवक्त्रिका, पुरःकर्णिका, गण्ड-नेत्रिका, मध्यमशङ्खिका चेति। सर्वास्ताः स्वनामव्याख्याताः।

अथ अन्तर्मातृका धमनी।

**अन्तर्मातृका**[3] नाम (१०२ चित्रम्) एकैकतो ग्रीवापार्श्वे अवटुसंज्ञस्य तरुणास्थ्न ऊर्ध्वधारोपकण्ठे विभज्यमानाया महामातृकाया गम्भीरा शाखा, या प्राधान्येन करोटिगुहान्तरीयविशेषान् नेत्रद्वयं च पुष्णाति।

तस्याश्चत्वारो भागाः कल्प्यन्ते वर्णनासौकर्याय। यथा—(१) यावदसौ तिसृणामुत्तरग्रीवाकशेरुकाणां बाहुप्रवर्धनकपुरस्तादूर्ध्वंगता गलविलस्य उपजिह्विकायाश्च पार्श्वतः सन्निहिता भवति, सोऽयमस्या गलपार्श्विको भागः आद्यः। (२) अत ऊर्ध्वं यावदसौ शङ्खास्थ्नः अश्मतटिकांशस्थायां मातृकासुरङ्गायां प्रविष्टा करोटेरभ्यन्तरं प्रविशति, सोऽयमस्या आश्मतटिको भागः द्वितीयः। (३) अथ करोटेरभ्यन्तरं प्राप्ताऽसौ मस्तिष्कवृतिकां कलां निर्भिद्य यावदसौ जतूकास्थ्नः शरीरपार्श्वस्थां मातृकापरिखामधिशेते लुप्ताकारचिह्नवद् (ऽ) वक्रीभूय, सोऽयमस्या जातूकपार्श्विको भागस्तृतीयः। (४) अतश्चोर्ध्वमेषा धमनी मस्तिष्कतलदेशमधिष्ठाय शाखाचतुष्टये विभज्यते। सोऽयमस्या मास्तिष्कमूलिको भागश्चतुर्थः।

---

१। पश्चिमकर्णिका ध०—Posterior Auricular Artery. २। अनुशङ्खा उत्ताना ध०—Superficial Temporal Artery. ३। अन्तर्मातृका ध०—Internal Carotid Artery.

विशेषतश्च तृतीयभागे त्रिकोणिकाख्यां सिरासरितं निर्भिद्य गतासौ धमनी, तत्परितश्च दृश्यास्तृतीयादिषष्ठ्यन्ताश्चतस्रः शीर्षण्य नाड्यः—इति स्मर्त्तव्यम्।

अथास्याः अन्तर्मातृकायाः प्रशाखाविस्तारः। तत्र—

(१) गलपार्श्विके भागे सर्वथा प्रशाखाऽभावः।

(२) आश्मतटिके भागे द्वे प्रशाखे—अनुपट्टिका, जतूका-पादिका चेति। ते स्वनामव्याख्याते।

(३) जातूकपार्श्विके भागे पञ्चविधाः प्रशाखाः। जतूकापार्श्विकाः, अनुपोषणिका, त्रिधारकन्दिकाः, अग्रिमा मस्तिष्कवृतिगा, चाक्षुषी चेति। तत्र जतूकापार्श्विकाः नाम असंख्यप्रायाः प्रशाखाः जतूकास्थिशरीरोपकण्ठस्थान् मास्तिष्कविशेषान् पुष्णन्ति। अनुपोषणिका नाम प्रायशो युग्मा प्रशाखा पोषणकाख्यं ग्रन्थिं तर्पयति। त्रिधारकन्दिकाः नाम तनुप्रशाखाः पञ्चमनाड्यास्त्रिधारकन्दमाप्याययन्ति विशेषेण। अग्रिमा मस्तिष्कवृतिगा नाम तनुप्रशाखा मस्तिष्कवृतिं पुष्णाति। चाक्षुषी नाम प्रशाखा जतूकास्थ्नः पक्षान्तरालेन नेत्रगुहां प्रविष्टा दशभिरनुशाखाभिश्चाक्षुषान् विशेषानभिप्रीणाति, अपराभिश्च तिसृभिर्मस्तिष्कवृतिं ललाटं नासामूलं च। सा नेत्राध्याये सविस्तरं वर्णनीया।

(४) मास्तिष्कमूलिके तु भागे अन्तर्मातृकायाश्चतस्रः प्रशाखाः मस्तिष्कतले प्रसृताः मस्तिष्कपोषणाय। ताश्च मस्तिष्काभिगा अग्रिमा, सैव मध्यमा, पश्चिमा मूलयोजनिका, अग्रिमा अनुशृङ्खलिका चेति प्रसिद्धाः। ताः इतरपार्श्विकाया अन्तर्मातृकायास्तथाविधेन शाखाचतुष्टयेन सह मिलिताः, मस्तिष्कमातृकाख्ययोर्धमन्योरग्रमूलिकया सह संयुज्यन्ते। ताभिर्हि निर्मीयते वक्ष्यमाणं मस्तिष्कमूलीयं धमनीचक्रम्।

प्रधाना चात्र शाखाचतुष्टये मध्यमा मस्तिष्काभिगैव। सा हि स्थूलतमा अग्रप्रशाखा, या स्वपार्श्वीयमस्तिष्कार्धस्य मध्यभागान्तः प्रविष्टा।

अथ मस्तिष्कमातृके।

**मस्तिष्कमातृके**[१] नाम (१०२ चित्रम्) धमन्यौ अक्षाधराख्यधमन्योः शाखे ग्रीवामुभयतः ऊर्ध्वमुखं प्रसृते। ते प्राधान्येन मस्तिष्कं पुष्णीतः। ते

१। मस्तिष्कमातृके धमन्यौ—Vertebral Arteries.

[ १०२ चित्रम् ]

# दक्षिणान्तर्मातृकाख्यधमन्याः शाखाविभागः।




चित्रव्याख्या—( क ) कपोलिका पेशी। ( ख ) गलसङ्कोचनी उत्तरा पेशी। ( ज ) जिह्वाकण्ठिका पेशी। ( म ) चिवुकजिह्वाकण्ठिका पेशी। १। जिह्वामूलाधरीया ग्रन्थिः।

† एतच्चिह्नं धमनीवाचकम्।

[ To face page 108 ]

ग्रीवाकशेरुकाणां वाहुप्रवर्धनान्तरीयेण मातृकाच्छिद्रमार्गेण पश्चिमकपालमूलं सम्प्राप्य पश्चिमकपालमूलस्थेन महाविवरेण शिरोऽभ्यन्तरं प्रविशतः सह सुषुम्नाकाण्डेन। तदग्रे च मस्तिष्काधस्ताद् उभयोर्मिलनेन एकैव सम्पद्यते धमनी, सा अग्रमूलिका, मस्तिष्कमूलिका वा नाम। सेयं पुनर्विभज्य मास्तिष्कमूलिके धमनीचक्रे प्रविष्टा।

अथ एकैकस्या मस्तिष्कमातृकाया द्विविधाः शाखाः—ग्रीवागताः, शिरोऽभ्यन्तरीयाश्च। तत्र ग्रीवागताः द्विविधाः—मांसगाः, सुषुम्नाकाण्डीयाश्च। तासां मांसगाः शाखाः पश्चिमकपालमूले विनिर्गताः पश्चिमग्रीवीया गम्भीरपेशीः पुष्णन्ति। सुषुम्नाकाण्डीयास्तु कशेरुचक्रान्तरीयाणि च्छिद्राणि समाश्रित्य सुषुम्नाकाण्डमनुप्रविष्टास्तदाप्यायनाय। शिरोऽभ्यन्तरीयाः पुनः शाखाः मस्तिष्क-मूलिकानिर्माणात् प्राक् चतुर्विधाः—मस्तिष्कवृतिगाः, पृष्ठवंशान्तरीयाः, अनुमस्तिष्कीयाः, सुषुम्नाशीर्षगाश्चेति।

मस्तिष्कमातृकाद्वयस्य मेलकेन निर्मिताया मस्तिष्कमूलिकायास्तु पञ्चविधाः शाखा उभयतो निर्गताः—अनुमस्तिष्कीया उत्तरा, सैव अग्रिमाधरा, अनुधम्मिल्लकाः, अन्तःश्रुतिगा, मस्तिष्काभिगा पश्चिमा चेति। ताभिश्च पार्श्वोद्गताभिः शाखाभिराप्याय्यन्ते—अनुमस्तिष्कम्, धम्मिल्लकम्, अन्तः-श्रवणीया विशेषाः, मस्तिष्कपश्चिमभागश्च। अन्ते हि मस्तिष्कमूलिकायाः पुनर्द्वेधा विभागः पश्चिममस्तिष्काभिगयोः धमन्योः। ते वक्रीभूय पश्चिमाभिमुखं गत्वा पुनरनुशाखासु विभज्येते—इति विचित्रमनयोर्निर्माणम्।

अथ मस्तिष्कमूलिकं नाम धमनीचक्रम्[1]।

**मस्तिष्कमूलिकं धमनीचक्रम् —** संन्यासादिरोगसंपरिज्ञानाय सप्रयोजनमिति विशदं व्याख्यायते।

मस्तिष्कस्य भूयिष्ठो भागो मस्तिष्कमातृकाभ्यामन्तर्मातृकाभ्यां च संतर्प्यते। ता हि धमन्यः स्वशाखानां परस्परसंमेलनेन मस्तिष्कमूले दृष्टिनाड़ीस्वस्तिकं पोषणकग्रन्थिश्च परितो विचित्रं धमनीचक्रमारचयन्ति (१०३ चित्रम्)। तच्चानेन क्रमेण निर्मीयते। पुरोभागे अन्तर्मातृकायाः अन्तर्मुख्यौ प्रशाखे अग्रिमे मस्तिष्काभिगे नाम धमन्यौ, ते अग्रयोजनिकाख्यधमन्या मूलमात्रेण योजिते—ततो युग्मरूपेण पुरस्तात् प्रसृते। मध्ये अन्तर्मातृकायाश्चरमप्रशाखे बहिर्मुख्यौ स्थूलतरे, ते

१। मस्तिष्कमूलिकं धमनीचक्रम्—The Arterial Circle of Willis,

( १०३ चित्रम् )

## मस्तिष्कमूलिकं धमनीचक्रम्।




[ † एतत् चिह्नं धमनीवाचकम्। च—इति धमनीचक्रस्य केन्द्रम्। तदुभयतः पुरतश्च योजनिकाख्याधमन्यः तदनुशाखाश्च। ]

मध्यमे मस्तिष्काभिगे नाम। पश्चिमभागे मध्यतः मस्तिष्कमातृकयोर्मेलकसम्भूता अग्रमूलिका, मस्तिष्कमूलिका वा नाम धमनी, या पार्श्वगयोः पश्चिम-मस्तिष्काभिगाख्यशाखाधमन्योर्विभक्ता। ते च शाखाधमन्यौ अन्तर्मातृकायाः पश्चिमयोजनिकाख्यशाखाभ्यां मूलयोर्मिलिते। सर्वासां चासामन्तर्मस्तिष्कं शाखाप्रतानैर्विस्तारः।

सन्ति च ग्रीवायामपरा अपि अक्षाधराधमनीप्रभवाः शाखाः याः ग्रीवागतान् कांश्चिद् विशेषानभितर्पयन्ति। तासामेकैकतो ग्रीवायाम् अक्षाधरायाः शाखाद्वयं मूलम्। ते च शाखे—गलग्रैवेयकी, ग्रैवपार्शुकी चेति प्रसिद्धे अग्रे वर्णनीये।

सर्वासाञ्चासां धमनीनां नामभिरेव स्थान-संस्थानादयो व्याख्याताः।

इति शिरोग्रीवाया धमन्यः।

# पञ्चमोऽध्यायः।

अथातो मध्यकायधमनीवर्णनीयमध्यायं व्याख्यास्यामः।

सार्वकायिकधमनीषु महाधमनी मुख्यतमा। सा च सविभागा सव्यतिकरा सकाण्डशाखा सूचितपूर्वा। तस्या आरोहिभागस्तोरणभागश्च व्याख्यातौ। अवरोहिभागस्तु तस्याः—उरसि औरसी महाधमनीति, उदरे च औदरी महाधमनीति अभिधीयते। तच्छाखाप्रशाखादिभिरेव हि भूम्ना सन्तर्प्यन्ते मध्याऽधःकायस्था विशेषाः।

सन्ति चापरा अपि महाधमन्यास्तोरणभागप्रभवयोरक्षाधरयोर्धमन्योः शाखा-प्रशाखादयो ये मध्यकाये ऊर्ध्वशाखयोश्च प्रसृताः। ताः सहकारिण्यः पूर्वोक्तानाम्। फुस्फुसाभिगा धमनी तु सार्वकायिकस्य अविशुद्धरक्तस्य फुस्फुस-प्रापणीति तद्वैलक्षण्यं व्याख्यातपूर्वम्।

अथ औरस्यः धमन्यः।

औरस्यः[1] नाम धमन्यो द्विविधाः। औरस्या महाधमन्याः शाखाः, अक्षाधरयोः शाखाश्च। उभयविधा अपि ताः पुनर्द्विविधाः, तर्पणीयदेशभेदात्। यथा—आशयानुगाः, परिसरीयाश्चेति। तत्र—

आशयानुगाः त्रेधा विभज्यन्ते—हृत्कोषानुगाः, क्लोमकाण्डानुगाः, अन्न-नलिकानुगाश्चेति। परिसरीयाश्च त्रेधैव—फुस्फुसान्तरालीयाः, महाप्राचीरोत्तराः, फुस्फुसानुगाश्चेति। ताः प्राधान्येन महाधमन्याः पार्श्वाभ्यां पृष्ठतो वा सम्भूताः। यथा—

हृत्कोषानुगा नाम त्रिचतुराः तनुशाखाः हृत्कोषस्य पश्चात् प्रसृताः। हार्दिकधमन्यौ तु आरोहि-महाधमनीप्रभवौ पृथगेव हृद्वर्णने वर्णितपूर्वे।

क्लोमकाण्डानुगाः नाम द्वित्राः शाखाः क्लोमकाण्डशाखानामनुगामिन्यः, ताः प्रशाखानुशाखाभिः शतशो विभक्ताः सक्लोमफुस्फुसयोः परिपोषण्यः।

फुस्फुसान्तरालीयाः नाम काश्चन तन्व्यः शाखाः पश्चिमफुस्फुसान्त-रालस्थान् लसीकाग्रन्थीन् पुष्णन्ति।

---

१। औरसी, उरस्या वा—इति द्विविधमपि रूपं साधु, न तु औरस्या इति। तस्मात् क्वचित् लिपिकरप्रमाददर्शनात् न भ्रमितव्यम्। उरस्यापदन्तु विशेषेण फुस्फुसधरकलार्थे निरूढमत्र शास्त्रे। अतः सिराधमन्यर्थे औरसीति विशेषणमेवेह प्रयोक्तव्यम्। (औरसी = Thoracic.)

अन्ननलिकानुगाः नाम चतस्रः पञ्च वा धमन्यः अन्ननलिकां परितः शाखाप्रतानैः प्रसृताः ।

महाप्राचीरोत्तराः नाम तनुशाखाः महाप्राचीराख्यपेश्याः ऊर्ध्वतलपश्चिमार्धे प्रसृताः ।

पर्शुकानुगाः नाम एकैकतो दश शाखाः, प्रथमादि पर्शुकादशकस्य अधोधारानुवर्त्तिन्यः । ताः पर्शुकान्तरालाख्याः पेशीरभिप्रीणयन्ति । तासां काश्चन ता एव पेशीर्निर्भिद्य पुरस्ताद् बहिर्गताः उरःपुरस्थाः पेशीस्त्वचः स्तनद्वयञ्च तर्पयन्ति ।

अक्षाधरयोर्धमन्योरौरस्यः शाखास्तु अनुपदं वक्ष्यन्ते ।

अथ अक्षाधरे धमन्यौ ।

**अक्षाधरे**[1] नाम स्थूलधमन्यौ दक्षिणतः काण्डमूलाख्यधमन्या विभागेन, वामतस्तु साक्षादेव, महाधमनीतोरणात् सम्भूय अक्षकास्थ्नोरधस्तात् प्रथमपर्शुकयोरूर्ध्वतलमाश्रित्य उभयतो धनुर्वक्रे दृश्येते । उभयतः प्रथमपर्शुकासीमातिक्रान्तयोश्च तयोः **कक्षाधरा**-संज्ञा, कक्षापोषकत्वात् । एकैकस्याश्च अक्षाधरायाश्चतस्रः शाखाः—मस्तिष्कमातृका, गलग्रैवेयकी, ग्रैवपार्शुकी, अन्तःस्तनिका चेति ।

तासामाद्या शाखा मस्तिष्कमातृका नाम, सा वर्णितपूर्वा ।

गलग्रैवेयकी नाम द्वितीया अक्षशाखा ग्रीवामूलदेशे सम्भूता । तस्याश्च चक्राक्षाद् अरा इव तिस्रः प्रशाखाः प्रसरन्ति । ताः—अधरग्रीविका षण्मुखी, अधिग्रीविका, अध्यंसिका च नाम । तासामाद्या षड्भिरनुशाखाभिः प्रसृता—द्वाभ्यां क्लोमान्ननलिके पुष्णाति, चतुर्भिश्च ग्रैवेयकग्रन्थिं, स्वरयन्त्रं, ग्रीवापेशीश्च । द्वितीया ( अधिग्रीविका ) ग्रीवापृष्ठपेशोरेव काश्चित् । तृतीया (अध्यंसिका) अंसफलकोर्ध्वं प्रसृता काश्चिदंसपेशीर्ग्रीवापेशीश्च ।

ग्रैवपार्शुकी नाम अक्षाधरायाः या शाखा, तस्या द्वे प्रशाखे—गम्भीरग्रीविका, प्रथमा पर्शुकानुगा चेति । तयोराद्यैव ग्रीवाधमनीषु दृश्यते, सा गम्भीरग्रीवापेशीष्वनुप्रविष्टा शाखाप्रतानैः ।

**अन्तःस्तनिका**[2] नाम अक्षाधरायाः शाखा उरःपञ्जराभ्यन्तरे एकैकतः उरःफलकस्य पार्श्वसन्धानरेखानुक्रमेण अधोमुखं प्रसृता, षष्ठोपपर्शुकासन्धिं यावत् । साऽसौ द्वयोरग्रप्रशाखयोर्विभक्ता । तयोरेका मध्यरेखापार्श्वगा सरलाऽधोमुखी च,

१ । अक्षाधरे धमन्यौ—Subclavian Arteries. २ । अन्तःस्तनिका धमनी—Internal Mammary Artery.

सा उत्तरा औदरिकी नाम, उदर्यपेशीनां पोषणी। अपरा तिर्यगभ्यन्तरगता हृत्कोषं, महाप्राचीराम्, उदर्यपेशीश्च अनुशाखाभिः पुष्णाति। तस्याः तिरश्चीना औदरिकीति संज्ञा। तस्याः पार्श्विक्यः प्रशाखाः उरःप्राचीरान्तःस्थाः पेशीः, स्तनौ च पुष्णन्ति।

प्राक् च विभागात् तस्याः षट् प्रशाखाः सम्भवन्ति। तासामग्रिम-फुस्फुसान्तराले, हृत्कोषे, महाप्राचीरायाम्, उरःफलके, फुस्फुसधरायां कलायां, पर्शुकान्तरालेषु च अनुशाखाभिर्विस्तारः।

सर्वे च अन्तःस्तनिकाया धमन्याः शाखाप्रताना औरसधमनीनां पूर्वोक्तानां शाखाप्रतानैः परस्परं मिलिता उरसि वहिरन्तश्च धमनीचक्राण्यारचयन्ति बहुधा। ता एता औरस्यो धमन्यो व्याख्याताः।

अथ औदर्यो धमन्यः।

औदर्यो[1] धमन्यः औदर्या महाधमन्याः काण्डशाखासमुत्थाः प्राधान्येन। सन्ति चापरा अपि काश्चन परिसरीयाः धमन्यस्तत्रापि याः अन्तस्तनिकायाः, अक्षाधरायाः, बाह्याया अधिश्रोणिकायाः, और्व्याश्च धमन्याः सम्भूय उदर्य-पेशीत्वगादिषु प्रसृताः।

तत्र औदर्या महाधमन्याः काण्डशाखास्त्रिविधाः—आशयानुगाः, परिसरीयाः, चरमशाखाश्चेति। तासामाशयानुगास्तिस्र एकाकिन्यः, तिस्रश्च युग्माः—इति साकल्येन नव। परिसरीयाः पुनः पञ्च युग्माः, एका चैकाकिनी—इत्येकादश। चरमशाखास्तु प्रधानाश्चतस्रः। ताः महाधमनीविभागसम्भूतयोः महाशाखयोः पुनर्विभागसमुत्थाः। तच्छाखाप्रशाखादिभिश्चाऽऽप्याय्यन्ते सक्थि-द्वयस्थाः वस्तिदेशस्थाश्च विशेषाः।

तत्र आशयानुगाः नाम औदर्यो धमन्यः। यथा—

(१) अर्धौदरिका[2] नाम तासामाद्या अक्षशाखा (१०४।१०५ चित्रयोः)। सा हि अक्ष[3] इवाऽराणां तिसृणां शाखानां प्रभवभूता उदरस्यो-त्तरार्धस्थान् आशयान् पुष्णातीति तथासंज्ञा। ताश्च शाखाः—दक्षिणतः अभियाकृती, वामतः अभिप्लीहिका, मध्ये च आमाशयक्रोड़िका वामा नाम। तत्र—

---

१। औदर्यः धमन्यः—Abdominal Arteries. औदरीति उदर्येति च उभयमपि पदं साधु, न तु औदर्येति। २। अर्धौदरिका धमनी—Coeliac Axis. ३। अक्षो नाम चक्रस्य नाभिभागः यत्र संयुज्यन्ते दण्डवद् अराः।

(क) अभियाकृती[१] नाम धमनी यकृदभिमुखं प्रसरन्ती मध्येपथं द्वे प्रशाखे अर्पयतः, ते आमाशयस्य ऊर्ध्वाधःपरिधिस्थे।

तयोराद्या आमाशयस्य धनुर्वक्रमूर्ध्वस्थं क्रोड़मनुगता आमाशयक्रोड़िका दक्षिणा नाम। द्वितीया तु आमाशयतलमनुगता तादृश्येव आमाशयतलिका दक्षिणा नाम। सा आमाशयतलीयां सीमामभिव्याप्य स्थिता वामया स्वनामिकया (वक्ष्यमाणया) मिलिता वपासहितमामाशयं तर्पयति। तस्याश्च एका अनुशाखा ग्रहणीं प्रतिगता उत्तरा अनुग्रहणिका नाम।

अथासौ अभियाकृती नाम धमनी यकृत्तलदेशे दक्षिणवामयोः प्रशाखयोः विभज्यमाना यकृत्पिण्डयोः प्रसरति। तयोः दक्षिणप्रशाखातः सम्भूता पित्तकोषानुगा नाम धमनी।

(ख) अभिप्लोहिका[२] नाम धमनी सर्पवत् कुटिलगत्या प्लीहाभिमुखं प्रसरन्ती मध्ये पञ्चषाभिः प्रशाखाभिरग्न्याशयस्य ऊर्ध्वदेशं प्रीणाति। ततः प्लीह-मूलगतायास्तस्याः सम्भवति स्थूला प्रशाखा आमाशयतलिका वामा नाम। सा धनुर्वक्रमामाशयतलमाश्रित्य स्थिता पूर्वोक्तया दक्षिणया स्वनामिकया संमिलिता। सन्ति च अभिप्लीहिकायास्तद्देशत एव समुत्थिता अपरा अपि ह्रस्वाः प्रशाखाः आमाशयपादिकाः नाम, ताः सहकारिण्यः आमाशयतलिकयोः।

प्लीहानञ्च प्रविष्टाऽसौ अभिप्लीहिका नाम धमनी बहुभिः प्रशाखानु-शाखादिभिः प्लीहान्तरीयवस्तुनि प्रसृता।

(ग) आमाशयक्रोड़िका[३] वामा नाम अर्धोदरिकायाः मध्यगा शाखा तु आमाशयस्य क्रोड़देशे प्रसृता, पूर्वोक्तया स्वनामिकया दक्षिणया मिलिता आमाशयस्यार्धं भागं तर्पयति। आमाशयक्रोड़िकयोः आमाशयतलिकयोश्च शाखाप्रतानैरारचय्यन्ते आमाशयस्य अन्तर्बहिःस्थितानि शतशो धमनीजालकानि यैस्तर्प्यन्ते सर्वेऽपि आमाशयगता विशेषाः।

(२) **उत्तराऽन्त्रिकी**[४] नाम औदर्या महाधमन्याः द्वितीया काण्डशाखा (१०६ चित्रम्)। या अग्न्याशयस्य[५] पृष्ठस्थात् महाधमनीभागात् प्रायः

---

१। **अभियाकृती धमनी**—Hepatic Artery. २। **अभिप्लीहिका धमनी**—Splenic or Lienal Artery. ३। **आमाशयक्रोड़िका धमनी**—Left Gastric Artery. ४। **उत्तराऽन्त्रिकी धमनी**—Superior Mesenteric Artery. ५। **अग्न्याशयः**—Pancreas.

[ १०४ चित्रम् ]

## अवरोहिणी महाधमनी ( सशाखा )।




† एतच्चिह्नं धमनीवाचकम्।

चित्रव्याख्या--१। अधरा महाप्राचीरिका धमनी। २। अधिवृक्कः। ३। महाधमनी। ४। आमाशयक्रोडिका वामा धमनी। ५। अभिप्लीहिका धमनी। ६। वृक्कप्रभवाः सिराः वृक्कद्वारस्थाः। ७। गवीनीप्रभवः। ८। वामा गवीनी। ९। अधरान्त्रिकी धमनी।

( To face page 114 )

कङ्कतिकाकाराभिः शाखाभिः सम्भूय समग्राणि क्षुद्रान्त्राणि बृहदन्त्रं च भूम्ना तर्पयति अन्त्रबन्धनीषु तालवृन्ताकारेण प्रसृतैः शाखाप्रतानैः।

तस्याश्चतस्रः पार्श्वशाखाः मुख्याः। यथा—

(क) अधरा अनुग्रहणिका, या पूर्वोक्तया उत्तरानुग्रहणिकया मिलिता शाखाप्रतानैः ग्रहणीमग्न्याशयञ्च तर्पयति। (ख) मध्यमा बृहदन्त्रिका, (ग) दक्षिणा बृहदन्त्रिका च। ते बृहदन्त्रस्य भूयिष्ठं भागमभिव्याप्नुतः। (घ) उण्डुकान्त्रिका, या बृहदन्त्रस्य उण्डुकाख्यमाद्यभागं सन्निहितं क्षुद्रान्त्र-भागञ्च तर्पयति।

चरमशाखास्तु उत्तरान्त्रिक्याः क्षुद्रान्त्रेषु बहुभिरनुशाखाभिः प्रसृताः। ताः क्षुद्रान्त्रिकाः नाम।

(३) अथ तृतीया काण्डशाखा **अधराऽन्त्रिकी**[1] नाम (१०६ चित्रम्)। सा उत्तरान्त्रिक्यास्तनुतरा बृहदन्त्रस्य शेषार्धं गुदसहितमाप्याययति। तस्याः (क) आद्यशाखा वामा बृहदन्त्रिका नाम, सा मध्यमया बृहदन्त्रिकया धनुर्वद् वक्रीभूय मिलिता बृहदन्त्रबन्धन्यां प्रसृतैः शाखाप्रतानैः बृहदन्त्रस्य मध्यान्तरभागौ पुष्णाति। तस्याः (ख) मध्यशाखास्तु द्वित्रसंख्याः गुदकुण्डलिकायां प्रसृताः। (ग) अन्त्यशाखा पुनः उत्तरगुदान्तिका नाम, सा उत्तरगुदमभिप्रीणाति।

सर्वाश्च आन्त्रिक्यो धमन्यो यथासम्भवं शाखाप्रतानैः परस्परं मिलिता अन्त्रमूलेषु धमनीचक्राणि रचयन्ति बहुशः।

(ता एतास्तिस्र एकाकिन्य आशयानुगाः धमन्यः)। अथ युग्मधमन्यः।

(४) मध्यमे अधिवृक्किन्यौ[2] नाम काण्डशाखे महाधमन्याः पार्श्वाभ्यां सम्भूय वृक्कशिखरस्थौ अधिवृक्कौ[3] प्रति प्रसृते। ते उत्तराभ्यामधराभ्यां च अधिवृक्किनीभ्यां धमनीभ्यां सङ्गत्य धमनीचक्रमारचयन्ति अधिवृक्कपोषणाय।

(५) द्वे चापरे तदधस्तात् तादृश्यौ एव धमन्यौ वृक्कौ संप्राप्ते। तयोश्च शाखे अधिवृक्कौ प्रसृते—ते अधरे अधिवृक्किन्यौ[4] नाम।

---

१। अधराऽन्त्रिकी धमनी—Inferior Mesenteric Artery. २। मध्यमे अधिवृक्किन्यौ धमन्यौ—Middle Supra-renal Arteries. ३। अधिवृक्कौ—Suprarenal Bodies. ४। अधरे अधिवृक्किन्यौ धमन्यौ—Side-Branches of Suprarenal Arteries.

(६) अन्ये द्वे महाधमन्यास्तनुदीर्घे काण्डशाखे तिर्यगधो गत्वा पुंसो वृषणौ संप्राप्ते, अनुवृषणिके[1] नाम। स्त्रियास्तु त एव वीजकोषौ तर्पयतः-- अनुवीजकोषिके नाम।

अथ परिसरीयाः काण्डशाखाः।

ताश्च—द्वे अधरे महाप्राचीरिके, अष्टौ अनुकटिकाः, एका त्रिकमध्या चेति एकादश (१०४ चित्रम्)। यथा—

(१) अधरे महाप्राचीरिके[2] महाधमन्याः महाप्राचीराधःप्रसृते ऊर्ध्वतमे शाखे। ते क्वचित् अर्ध्वोदरिकाया अधःशाखातः सम्भवतः। तयोः पूर्वोक्ताभ्यां महाप्राचीरोत्तराख्य-धमनीभ्यां शाखाप्रतानैः परस्परसम्बन्धो महा-प्राचीरायाः सम्यक्पोषणाय।

द्वे चानयोः पार्श्वोत्थिते शाखे अधिवृक्कौ अनुगते, ते उत्तरे अधिवृक्किन्यौ नाम।

(२) अनुकटिकाः[3] नाम एकैकतश्चतस्रः काण्डशाखाः कटिकशेरुकानां पुरतः प्रसृताः कटिपेशीरुदर्यपेशीश्च पुष्णन्ति। ताश्च उदरमुभयतः समागत्य मध्यरेखोपकण्ठे परस्परमनुसङ्गताः शाखाप्रतानैः।

(३) त्रिकमध्या[4] नाम एकाकिनी धमनी महाधमन्याः पृष्ठतः सम्भूय त्रिकानुत्रिकयोरुत्सङ्गे मध्यरेखायां प्रसृता अनुत्रिकपुरःस्थं क्षुद्रखगाण्डाकारं (इड़ापिङ्गलयोर्मूलस्थं) नाड़ीकन्दं गुदञ्च पुष्णाति। सेयं महाधमन्या विभाग-स्थानात् पूर्वं सम्भूता अधस्तमा शाखा।

ता एता एकादश परिसरीया धमन्यो महाधमनीप्रभवा व्याख्याताः।

अथ औदर्या महाधमन्याः चरमशाखाविस्तारः।

औदर्या महाधमन्या विभागसमुत्थे महाशाखे द्वे--**अधिश्रोणिके साधारण्यौ**[5] नाम (१०४ चित्रम्)। विभागश्च चतुर्थकटिकशेरुकायाः पुरस्ताद्वामतश्चेत्यवोचाम। दक्षिणपश्चिमतश्च तयोर्द्वयोरेते अधरमहासिरायाः काण्डसिरे समानसंज्ञे। पुरश्च तयोर्द्वयोरे वृक्काभ्यां विनिर्गते मूत्रवहे स्रोतसी गवीन्यौ नाम, क्षुद्रान्त्राणि च।

---

१। अनुवृषणिके धमन्यौ—Testicular Arteries. २। अधरे महाप्राचीरिके (ध०)—Inf. Phrenic Arteries. ३। अनुकटिका (ध०)—Lumber Arteries. ४। त्रिकमध्या (ध०)—Middle Sacral Artery. ५। अधिश्रोणिके साधारण्यौ (ध०)—Common Iliac Arteries.

[ १०५ चित्रम् ]

# अर्धोदरिका धमनी तच्छाखाश्च।

( अत्र यकृत्—रज्जुबन्धेन समुन्नमितम्, तदावृतभागानां प्रदर्शनाय )




चित्रव्याख्या—अ—अग्न्याशयः। अ० म०—अधरा महासिरा। आ० आ०—आमाशयः। य १—यकृत् ( बामपिण्डम् )। य २—यकृत् ( दक्षिणपिण्डम् )। य ३—यकृत् ( पश्चिमपिण्डम् )। पि—पित्तकोषः। मः—महाधमनी। प्र—प्रतीहारिणी महासिरा। व-व-व—वपा ( उत्तरांशः—कर्त्तितावशेषः )। १—अर्धोदरिका धमनी (अन्नशाखा)। २—अभियाकृती धमनी। ३—पित्तस्रोतः। ४।५—आमाशयक्रोड़िका धमनी। ६—अभिप्लीहिका धमनी। ७।८—आमाशयतलिकाख्ये धमन्यौ ( मिलिते )।

( To face page 116 )

एते च महाशाखे त्रिकपृष्ठवंशीयसन्धानमुभयतो द्वयोर्द्वयोरप्रशाखयोः विभज्येते । तयोर्बहिर्मुखं प्रसृते शाखे अधिश्रोणिके बाह्ये नाम । अधो वस्ति-गुहान्तःप्रसृते शाखे तु अधिश्रोणिके आभ्यन्तर्यौ नाम । तासां चतसृणां मूलधमनीनां काण्डशाखेति संज्ञा पारिभाषिकी । तत्र—

(१) **अधिश्रोणिका बाह्या**[1] नाम महाधमन्याः एकैका काण्डशाखा (१०७ चित्रम्) तद्विभागदेशादारभ्य जघनोदरे वहिस्तिर्यक् प्रसृता वंक्षणिकाख्य-स्नायुरज्जुं यावत् । ततश्च वंक्षणदरीविनिर्गता सैव **और्वी धमनी** —इत्युच्यते । सेयं त्रिक-पृष्ठवंशोपकण्ठे कटिलम्बिन्यादिपेशीः लसीकाग्रन्थींश्च तनुशाखाभिः पुष्णन्ती वंक्षणदरीमूले स्थूलतरं शाखाद्वयमर्पयति । तयोः अधरा औदरिकी, गम्भीरजघनिका चेति संज्ञे ।

तयोराद्या अधरा औदरिकी नाम धमनी तिरश्चीनगत्या उदरपरिसरं निर्भिद्य उदरदण्डिकाख्यपेश्याः कञ्चुकान्तःप्रविष्टा पूर्वोक्ताया उत्तरौदरिक्या धमन्याः शाखाप्रतानैः सह धमनीचक्रमारचयति, प्रेरयति च फलकोषगामिनीं प्रशाखाम् । अन्त्या गम्भीरजघनिका नाम धमनी पुनस्तिरश्चीनगत्या जघनचूड़ां प्रतिगता, सा उदरच्छदां चरमां नाम पेशीं निर्भिद्य पश्चात् प्रसृता क्रमेण कटि-नितम्बोदरीयैः शाखाप्रतानैस्तत्तद्देशीय-धमनीभिः सह चक्राण्यारचयति ।

(२) **अधिश्रोणिका आभ्यन्तरी**[2] नाम अपरा काण्डशाखा तु (१०७ चित्रम्) महाधमन्या विभागदेशादारभ्य जघनकपालस्याधस्ताद् गृध्रसीद्वारं यावत् प्रसृता वस्तिगुहायामङ्गुलमात्रेण दृश्या । विभज्यते च सा तत्र द्वयोः शाखयोः पुरः-पश्चिमयोः ।

तयोश्च पुरःशाखातः प्रसूताः प्रशाखाः पुंसः षट्, स्त्रियास्तु सप्त । तद्यथा—उत्तरा वस्तिगा, अधरा वस्तिगा (स्त्रियास्तु सैव अनुयोनिका), मध्यमा गुदान्तिका, गुदोपस्थिका, श्रोणिवंक्षणिका, अधरा नितम्बिनीति । स्त्रियास्तु अनुगर्भाशया चेति । तासामनुशाखाभिराप्याय्यन्ते वस्तिगुहान्तरीयाः मूलाधारचतुरस्रस्थाश्च विशेषाः ।

पश्चिमशाखातः पुनः प्रसूताः—कटिश्रोणिका, त्रिकपार्श्विकी, उत्तरा

---

१। **अधिश्रोणिका बाह्या धमनी**—External Iliac Artery. २। **अधिश्रोणिका आभ्यन्तरी धमनी**—Internal Iliac or Hypogastric Artery.

नितम्बिनी चेति तिस्रः प्रशाखाः, तासां चानेकाभिरनुशाखाभिराप्याय्यन्ते कटित्रिक-नितम्बसम्बद्धाः पेश्यः प्राधान्येन।

इदं चात्र स्मर्त्तव्यम्। इयमेव अधिश्रोणिका आभ्यन्तरी नाम धमनी गर्भस्थशिशोः शरीरे स्वशाखाभ्यां संवाहिनी-संज्ञाभ्यां धमनीभ्यां मातुरमरां प्रति रक्तमभिवहति, द्विगुणस्थूला च सा तदानीं तत एव हेतोः। प्रसूतस्य तु त एव धमन्यौ शुष्कप्राये संवाहिन्यौ नाम वस्तिरज्जुके भवतः— इति सूचितपूर्वम्।

अथासां प्रशाखाधमनीनां विस्तारः। यथा—(१०७ चित्रम्)

(क) उत्तरा वस्तिगा[1] नाम धमनी वस्तिं, शुक्रवहे स्रोतसी, गवीन्यौ च पुष्णाति अनुशाखाप्रतानैः।

(ख) अधरा वस्तिगा[2] नाम धमनी पुंसो वस्तिं, पौरुषग्रन्थिं, शुक्राधारिके च पुष्णाति। सैव—स्त्रिया अनुयोनिकाख्या वस्तिं योनिं च तर्पयति अनुशाखाभिः।

(ग) मध्यमा गुदान्तिका[3] नाम धमनी मध्यगुदं पायुं च प्रीणाति।

(घ) गुदोपस्थिका[4] नाम गुदोपस्थादिपोषणी चरमप्रशाखाभूता धमनी गृध्रसीद्वारेण निर्गत्य कुकुन्दरपिण्डोत्सङ्गस्थेन स्नायुमयमार्गेण, स्वनामिकया नाड्या सिरया च सह मूलाधारचतुरस्रं प्रविष्टा। तस्याः काश्चन अनुशाखाः तद्देशस्थासु पेशीषु प्रविष्टाः। अपरास्तु—अधरा गुदान्तिका, मूलाधारिणी, मूत्रस्रोतोमूलिका, मूत्रस्रोतोऽनुगा, शिश्नपृष्ठिका, शिश्नमांसगा चेति षट् स्वनामव्याख्याताः। स्त्रियास्तु ता एव तथा, किन्तु मूलाधारिणी भगोष्ठयोः, शिश्नगे च भगशिश्निकां प्रविष्टे—इति विशेषः। तासां च षण्णामाद्ये अनुशाखे उत्ताने, चरमास्तु चतस्रो गम्भीराः। सर्वाश्च ताः त्रिकोणप्रावरण्याः (पूर्वोक्तायाः) स्तरद्वयान्तराले प्रसृताः—इति स्मर्त्तव्यम्।

(ङ) अनुगर्भाशया[5] नाम धमनी स्त्रिया एव। सा गर्भाशयस्य एकैकतः कूर्चाकाराभिरनुशाखाभिः प्रसृता। सेयं तत्पार्श्वीयाया अनुवीजकोषिकाख्यधमन्याः[6]

---

१। उत्तरा वस्तिगा धमनी—Superior Vesical Artery. २। अधरा वस्तिगा धमनी—Inferior Vesical Artery. ३। मध्यमा गुदान्तिका धमनी—Middle Hæmorrhoidal Artery. ४। गुदोपस्थिका धमनी—Internal Pudendal Artery. ५। अनुगर्भाशया धमनी—Uterine Artery. ६। अनुवीजकोषिका धमनी—Ovarian Artery.

[ १०६ चित्रम् ]

## अन्त्राभिगा धमन्यः सशाखाः ।




म—महाधमनी। बृ १—बृहदन्त्रम् ( आरोहिभागः )। बृ २—बृहदन्त्रम् ( मध्यभागः )। बृ ३ - बृहदन्त्रम् ( अवरोहिभागः )। उ० आ०—अधरान्त्रिकी धमनी। १क। २क। ३क—उत्तरान्त्रिक्या धमन्या अन्त्रगाः शाखाः। अ १। अ २। अ ३ — अधरान्त्रिक्या धमन्या गुदान्तिकाः शाखाः।

( To face page 118 )

[ १०७ चित्रम् ]

## महाधमन्याः श्रोणिगुहान्तरीयाः शाखाः ।




चित्रव्याख्या । गु—गुदम् । क ५—पञ्चमी कटिकशेरुका । द—उदरदण्डिका पेशी । १—अधिश्रोणिका साधारणी धमनी । २—अधिश्रोणिका बाह्या धमनी । ३—अधिश्रोणिका आभ्यन्तरी धमनी । ४—तस्याः पुरःशाखा । ५—तस्याः पश्चिमशाखाः । ६।७।८।९—वस्तिगुदगा धमन्यः । × ×—कटित्रिकिणीसंज्ञं स्थूलनाडीद्वयम् । १०—श्रोणिवंक्षणिका, अधरा नितम्बिनी चेति अग्रशाखा धमन्यौ । व—वस्तिः ।

अनुयोनिकायाः, स्वनामिकयोरपरयोश्च धमन्योः प्रशाखानुशाखाभिर्धमनीचक्रमारचयति परितो योनिं गर्भाशयं बीजकोषौ च। तासां च धमनीनां सर्वासामपि विशेषेण स्थूलतावृद्धिर्दृश्यते धृतगर्भायां नार्यामिति विशेषः।

(च) श्रोणिवंक्षणिका[1] नाम धमनी श्रोणिगवाक्षेण निर्गत्य वंक्षणसन्धिं प्रतिगता। सा वस्तिगुहान्तः—वस्तिं, जघनोदरं, भगास्थिसन्धानं चानुशाखाभिः पुष्णाति। वहिश्च वस्तिगुहातः— वंक्षणदेशस्थाः पेशीः, वंक्षणसन्धिञ्च।

(छ) अधरा नितम्बिनी[2] नाम धमनी अधिश्रोणिकाया आभ्यन्तर्याः पुरःशाखाप्रभवा चरमप्रशाखा। सा श्रोणिगुहान्तः गुदवस्त्यादीन्, पार्श्वपृष्ठस्थाः पेशीश्च पुष्णाति प्राधान्येन। सेयं वस्तिगुहान्तः कतिचिदनुशाखाभिः वस्तिं, गुदं, शुण्डिकाद्याः पेशीश्च सन्तर्प्य गृध्रसीद्वारेण विनिर्गता नितम्बपिण्डिकां गुर्वीं ऊरुप्रसारण्याद्याः पेशीश्च अभिव्याप्नोति शाखाप्रतानैः।

ता एता आभ्यन्तर्या अधिश्रोणिकायाः पुरःशाखाभवा धमन्यः। तस्याः पश्चिमशाखाप्रभवा धमन्यस्तु तिस्र एव (१०७ चित्रम्)। यथा—

कटिश्रोणिका[3] नाम धमनी वस्तिगुहान्तरेव तिष्ठन्ती दीर्घां कटिलम्बिनीं, कटिचतुरस्रां, श्रोणिपक्षिणीं चेति पेशीत्रयं पुष्णाति अनुशाखाभिः। तर्पयति च तस्या अनुशाखा पृष्ठवंशान्तःप्रविष्टा 'सुषुम्नाचामर'[4] संज्ञं सुषुम्नाकाण्डशेषम्।

त्रिकपार्श्विका[5] नाम धमनी उत्तराधराभ्यामनुशाखाभ्यां त्रिकास्थिविवराणि अनुप्रविश्य तदन्तःस्था नाड़ीः शाखाप्रतानैः सन्तर्प्य त्रिकपृष्ठे वहिर्गता तद्देशीयाः पेशीस्त्वचश्च पुष्णाति।

उत्तरा नितम्बिनी[6] नाम धमनी आभ्यन्तर्या अधिश्रोणिकायाः चरमप्रशाखाभूता उत्तानगम्भीराभ्यामनुशाखाभ्यां नितम्बपिण्डिकाख्यं पेशीत्रयं, त्रिकपृष्ठदेशं, वंक्षणसन्धिञ्च तर्पयति। तस्या अपरा अनुशाखा जघनकपालमनुप्रविष्टा।

ता एता मध्यकायधमन्यः सविस्तरं व्याख्याताः।

इति पञ्चमोऽध्यायः।

---

१। श्रोणिवंक्षणिका धमनी—Obturator Artery. २। अधरा नितम्बिनी ध०—Inferior Gluteal Artery. ३। कटिश्रोणिका ध०—Ileo-Lumbar Artery. ४। सुषुम्नाचामरः—Cauda Equina. ५। त्रिकपार्श्विका ध०—Lateral Sacral Artery. ६। उत्तरा नितम्बिनी ध०—Superior Gluteal Artery.

# षष्ठोऽध्यायः ।

अथातः ऊर्ध्वाधःशाखाधमनीवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु ऊर्ध्वाधःशाखागतानां धमनीनां सत्यपि बहुधा सादृश्ये न सर्वथा सारूप्यं मन्तव्यम्, ऊर्ध्वाधःशाखयोर्निर्माणभेदात्, सन्निवेशवैलक्षण्याच्च। तस्मात् ताः पृथग् विभज्य वर्णनीयाः ।

## अथ ऊर्ध्वशाखाधमन्यः ।

सर्वा एव ऊर्ध्वशाखाधमन्यः अक्षाधराख्यस्थूलधमन्योः सम्भूताः । ते च महाधमन्याः साक्षात् परम्परया वा सम्भूय प्रथमपर्शुकयोः बहिर्धारां यावत्तथासंज्ञे । अग्रतश्च कक्षाद्वयगते त एव कक्षाधरे नाम इत्यवोचाम । एकैका च कक्षाधरा एकैकस्मिन् बाहौ प्रविष्टा बाहवी नाम धमनी भवति । मूलं च सा सर्वासां बाहुधमनीनाम् ।

## अथ कक्षाधरा ।

या खल्वेकैकतो ग्रीवामूले अक्षाधरा नाम महाधमन्याः काण्डशाखा, सैव वक्रीभूय कक्षादरीं प्रविष्टा प्रथमपर्शुकाया बहिःसीमामतिक्रम्य गुर्व्या अंसाधरिकाख्यपेश्या अधःसीमां यावत् कक्षाधरा[१]-संज्ञां लभते (१०८ चित्रम्)। सा कक्षादर्याम् उरश्छदाख्यपेश्योः कण्डराभ्यां पुरश्छादिता, स्वनामिकायाः सिरायाः पार्श्वस्था कक्षानुगां नाडीप्रवेणीं निभिद्य बाहुमूले प्रसृता। तस्याः षट् प्रशाखाः ऊर्ध्वाधःक्रमेण अंससन्धिमुरःपार्श्वं च प्रतिगताः। ताः ऊर्ध्वोरस्का, अंसोरस्का, दीर्घोरस्का, अंसकपालिनी, अंसवेष्टनिका अग्रिमा, सैव पश्चिमा चेति प्रसिद्धाः । तत्र –

ऊर्ध्वोरस्का[२] नाम धमनी कक्षाधराया ऊर्ध्वतमा प्रशाखा ह्रस्वा तन्वी च, सा उरश्छदाख्यपेशीद्वयस्य पोषणी ।

अंसोरस्का[३] नाम धमनी कक्षाधराया ह्रस्वस्थूला अक्षशाखा, या द्वाभ्यामंसगताभ्यां प्रशाखाभ्याम् अंसकूटमंसच्छदां पेशीञ्च पुष्णाति, द्वाभ्यां च उरोगताभ्यामक्षाधरिकाख्यां पेशीम्, अक्षकोरःसन्धानम्, उरश्छदाख्यं पेशीद्वयञ्च। अपराश्च तस्याः प्रशाखाः कक्षादरीस्थानां लसीकाग्रन्थ्यादीनां पोषण्यः ।

---

१। कक्षाधरा (ध०)—Axillary Artery. २। ऊर्ध्वोरस्का (ध०)—Superior Thoracic Artery. ३। अंसोरस्का (ध०)—Thoraco-acrominal Artery.

[ १०८ चित्रम् ]

## कक्षाधरा, बाहवी च धमनी सशाखा ।




द०—द्विशिरस्का पेशी । १। गम्भीरप्रगण्डिका धमनी । २। मध्यबाहुका नाड़ी । ३। अन्तःप्रकोष्ठिका नाड़ी। ४। रेखोर्ध्वम् उरःकर्णमूलिका पेशी कर्त्तिता, रेखाधः अक्षकाधरा पेशी । ५। ऊर्ध्वोरस्का धमनी। ६। उरश्छदा पेशी गुर्वी ( कर्त्तिता )। ७। सैव लघ्वी। ८। दीर्घोरस्का धमनी। ९। अंसाधरिका पेशी। क—कटिपार्श्वच्छदा पेशी। × चिह्नादूर्ध्वं निर्गता अंसोरस्का धमनी ( द्विमुखी )।

[ To face page 120 ]

दीर्घोरस्का[1] नाम धमनी कक्षाधरायाः दीर्घतमा शाखा उरोगामिनी। सा उरश्छदाख्यं पेशीद्वयमग्रिमारित्राञ्च पेशीं प्रशाखाभिः पुष्णन्ती उरःपार्श्वे अन्तःस्तनिकादिधमनीभिः सह चक्रमारचयति, अंस-कक्षयोश्च अंसाभिगाभिर्धमनीभिः। स्त्रियान्तु तस्या एव प्रशाखा बहिःस्तनिका नाम स्तनपोषणाय प्रसृता, अन्तःस्तनिकया सह धमनीचक्रमारचयति स्तनं परितः ( १०८ चित्रम् )।

अंसकपालिनी[2] नाम धमनी कक्षाधरायाः स्थूलतमा शाखा, या कक्षापथेन अंसफलकस्य अधःकोटिं प्रति प्रसृता। सा अंसोरस्कादिभिरंसधमनीभिश्चक्रमारचयति अंसकपालिकां परितः। तस्या अंसपृष्ठिका नाम प्रशाखा अंसकपालिकायाः पृष्ठे प्रसृता ( १०८ चित्रम् )।

अंसवेष्टनिका अग्रिमा पश्चिमा[3] चेति धमन्यौ कक्षाधरायाः शेषांशतः सम्भूय प्रगण्डास्थिग्रीवायाः पुरः पश्चाच्च वक्रीभूय प्रसृते, अंससन्धिमंसच्छदां पेशीं च प्रविशतः। ताभ्यां परस्परं, गम्भीरप्रगण्डिकाख्यधमन्याः शाखाप्रतानैश्च मिलिताभ्यामारच्यते धमनीचक्रमंसचक्रं परितः।

दृश्यते च क्वचिदपरापि क्षुद्रशाखा कक्षाधरायाः अन्तःपार्श्वे—पार्श्वोरस्का नाम, सा उरःपेशीनां पोषणो अनिश्चितावस्थाना।

ता एताः कक्षाधरायाः धमन्याः प्रशाखा व्याख्याताः।

अथ बाहवी धमनी।

इह खलु कक्षाधरैव धमनी गुर्व्या अंसाधरिकाख्यपेश्याः अधोधारामतिक्रम्य बाहुं प्रविष्टा **बाहवी[4] नाम धमनी** भवति, कूर्परसन्धिं यावत् ( १०८।१०६। ११० चित्रेषु )। सेयं कक्षायां काकोष्ठिकायाः पेश्याः, बाहौ च द्विशिरस्कायाः पेश्याः, अन्तःसीम्नि वर्त्तते, सह सहचरीभ्यां सिराभ्याम्। तस्या अन्तःसीम्नि दृश्याः—अन्तर्बाहुका[5] नाम सिरा, तिस्रश्च प्रकोष्ठिकाख्या नाड्यः। तासां मध्यप्रकोष्ठिका[6] नाम नाड़ी ऊर्ध्वभागे धमन्या बहिःसीम्नि स्थिताऽपि क्रमेण तामुल्लंघ्य अधरार्धे तदन्तःसीम्नि दृश्या। पश्चिमतश्च धमन्याः तच्छाखैव गम्भीरप्रगण्डिका नाम धमनी बहिःप्रकोष्ठिकाख्यनाड़ीसहिता, त्रिशिरस्का नाम

१। दीर्घोरस्का धमनी—Lateral Thoracic Artery. २। अंसकपालिनी धमनी—Subscapular Artery. ३। अंसवेष्टनिका अग्रिमा पश्चिमा च ( धमन्यौ )—Anterior and Posterior Circumflex Arteries. ४। बाहवी धमनी—Axillary Artery. ५। अन्तर्बाहुका सिरा—Basilic Vein. ६। मध्यप्रकोष्ठिका नाड़ी—Median Nerve.

पेशी च। कूपरसन्धेः पुरस्तु तिर्यग्गताऽसौ धमनी कूर्परपट्टिकाख्यया स्नायुबन्धन्या सन्धार्यते, विभज्यते च तदग्रे द्वयोरग्रशाखयोर्वक्ष्यमाणयोः।

अथास्याः पार्श्वोत्थिताः शाखाः सप्त, अष्टौ वा (१०६ चित्रम्)। यथा—

(१) गम्भीरप्रगण्डिका[1] नाम स्थूलदीर्घा आद्यशाखा बहिःप्रकोष्ठिकाख्यनाड्याः सहचरीभूय प्रगण्डास्थ्नः पश्चिमस्थां तिरश्चीनसीतामाश्रित्य सर्पगत्या प्रगण्डास्थिनलकं वेष्टयन्ती तद्बहिःसीम्नि प्रसृता। सेयं शाखाद्वयेनाऽऽत्मानं विभज्य पुरः पश्चाच्च कूर्परसन्धेः धमनीचक्रमारचयति सह आरोहिण्या बहिःकूर्परिकाख्यधमन्या। अपरं चास्याः शाखाद्वयं त्रिशिरस्कां पेशीं प्रगण्डास्थिनलकं च पुष्णाति।

(२) प्रगण्डास्थिपोषणी[2] नाम द्वितीया शाखा प्रगण्डास्थ्नः पोषणी।

(३) कूर्परगा उत्तरान्तरा[3] नाम शाखा बाहुधमन्याः ऊर्ध्वभागसम्भूता कूर्परसन्धेः पश्चादन्तःसीम्नि प्रसृता। सा अन्तःप्रकोष्ठीयधमन्याः कूर्परान्तरां पृष्ठारुहां नाम प्रशाखामभिगच्छति धमनीचक्रारचनाय कूर्परं परितः।

(४) कूर्परगा अधरान्तरा[4] नाम शाखा कूर्परसन्धेः पृष्ठतः तिर्यक्प्रसृता धमनीचक्रारचनाय। तया च पुरस्तान्मिलिता कूर्परान्तरा अग्रारुहा नाम अन्तःप्रकोष्ठीयधमन्याः प्रशाखा।

(५-७) सन्ति च पेशीगाः नाम बाहुधमन्यास्त्रिचतुराः शाखाः, याः काकोष्ठिकां द्विशिरस्कां कूर्परद्वारिकां चेति पेशीत्रयं पुष्णन्ति।

## अथ प्रकोष्ठधमन्यौ।

अग्रशाखे पुनर्बाहुधमन्या द्वे—बहिःप्रकोष्ठीया, अन्तःप्रकोष्ठीया चेति। बाहुधमनी हि कूर्परसन्धेः पुरस्ताद् गम्भीरं प्रविष्टा विभज्यते तयोः शाखयोः।

## अथ बहिःप्रकोष्ठीया धमनी।

**बहिःप्रकोष्ठीया**[5] नाम धमनी (११०।१११ चित्रयोः) बाहुधमन्या बाह्यशाखा, या दीर्घायाः करोत्तानन्याख्यपेश्या अन्तःसीमामनुवर्त्तते अङ्गुष्ठमूलं यावत्।

---

१। गम्भीरप्रगण्डिका (ध०)—Arteria Profunda Brachii. २। प्रगण्डास्थिपोषणी (ध०)—Nutrient Artery. ३। कूर्परगा उत्तरान्तरा (ध०)—Superior Ulnar Collateral Artery. ४। कूर्परगा अधरान्तरा (ध०)—Inferior Ulnar Collateral Artery. ५। बहिः-प्रकोष्ठीया धमनी—Radial Artery.

[ १०६ चित्रम् ]

## बाहवी धमनी, तच्छाखाश्च ।




( To face page 122 )

ततोऽसौ मणिबन्धबहिःसीम्नि तिर्यक् पृष्ठतः प्रसृता अंगुष्ठमूले दीर्घाया अंगुष्ठापकर्षण्याख्यपेश्याः अंगुष्ठप्रसारण्योः पेश्योश्च कण्डराभिश्छादिता। सा अंगुष्ठतर्जनीमूलशलाकयोरन्तराले पश्चिमशलाकान्तरालाख्यां पेशीं निर्भिद्य करतलं प्रविष्टा। करतले तु सैव करतलधानुषीं गम्भीरां नाम धनुर्वक्रां धमनीं निर्मिमीते।

अथास्याः मुख्याः प्रशाखाः पञ्च, पेशीगाश्च पञ्चषाः (१११ चित्रम्)। तद्यथा—

आरोहिणी बहिःकूर्परिका[1] नाम आद्यप्रशाखा कूर्परसन्धेर्बहिःसीम्नि समुत्थिता। सा गम्भीरप्रगण्डिकाख्यधमन्याः बहिःकूर्परगया अनुशाखया सह मिलिता धमनीचक्रमारचयति बहिःसीम्नि कूर्परसन्धेः।

बहिर्मणिबन्धीया अग्रिमा, पश्चिमा[2] चेति प्रशाखे ऊर्ध्वं मणिबन्धात्तद्बहिःसीम्नि समुत्थिते। ते मणिबन्धस्य पुरःपश्चाच्च धमनीचक्रमारचयतः, सह तादृशीभ्यामन्तर्मणिबन्धीयाख्यधमनीभ्याम्।

धानुषीयोजनी उत्ताना[3] नाम धमनी मणिबन्धपुरोभागे समुत्थाय अधःप्रसृता। सा करतले उत्तानया करतलधानुष्या संयुज्यते।

शलाकापृष्ठिका प्रथमा[4] नाम धमनी बहिःप्रकोष्ठीयधमन्या अंगुष्ठमूलपृष्ठभागात् समुत्थिता। सा अंगुष्ठपृष्ठिका-तर्जनीपृष्ठिकाख्ययोरनुशाखयोरात्मानं विभज्य प्रसृता।

पेशीगास्तु पञ्चषाः प्रशाखाः प्रकोष्ठबहिःसीमस्थासु पेशीषु प्रसृताः।

करतलधानुषी गम्भीरा[5] पुनर्बहिःप्रकोष्ठीयधमन्याश्चरमो भागः करतलं प्रविष्टः। सा करधमनीवर्णने पुनर्वर्णनीया।

### अथ अन्तःप्रकोष्ठीया धमनी।

**अन्तःप्रकोष्ठीया**[6] नाम बाहव्या धमन्याः शाखा अन्तःप्रकोष्ठीयपेशीभिः परिवृता पूर्वार्धे (११०।१११ चित्रयोः)। सा कूर्परसन्धेरधस्तात् पुरश्च बाहव्या धमन्याः विभागस्थानादारभ्य प्रकोष्ठान्तःसीमानुक्रमेण मणिबन्धान्तं गत्वा

---

१। आरोहिणी बहिःकूर्परिका (ध०)—Radial Recurrent Artery. २। बहिर्मणिबन्धीया अग्रिमा पश्चिमा च (ध०)—Volar Radial Carpal and Dorsal Radial Carpal Arteries. ३। धानुषीयोजनी उत्ताना (ध०)—Superficial Volar Artery. ४। शलाकापृष्ठिका प्रथमा (ध०)—Dorsal Metacarpal Artery. ५। करतलधानुषी गम्भीरा (ध०)—Deep Volar Arch (Arterial). ६। अन्तःप्रकोष्ठीया धमनी—Ulnar Artery.

करतलं प्रविष्टा। तत्र च धनुर्वद्वक्रीभूय सैव करतलधानुषी उत्ताना नाम धमनी सम्पद्यते। मिलति च स बहिःप्रकोष्ठीयायाः धानुषीयोजन्याख्यया शाखया।

अस्याः षट् प्रशाखाः मुख्याः, पञ्चषाश्च पेशीगाः (१११ चित्रम्)। यथा—

(१-२) कूर्परान्तरिके[१] नाम आरोहिण्यौ धमन्यौ द्वे—कूर्परान्तःसीम्नि पुरः पश्चाच्चोर्ध्वमुखं प्रसृते। तयोराद्या अग्रारुहा, द्वितीया च पृष्ठारुहा नाम। ते बाहव्या धमन्याः कूर्परगाभ्यां शाखाभ्यां धमनीचक्रमारचयतः कूर्परसन्धिं परितः।

(३) अरत्निमध्या साधारणी[२] नाम स्थूलतमा प्रशाखा बाहव्या धमन्या विभागस्थानादर्धांगुलमात्रेण सम्भूता। सा अंगुलीसङ्कोचन्योः पेश्योर्मध्ये गम्भीरतरं प्रविश्य प्रकोष्ठास्थ्नोरन्तराले प्रसृता द्वयोः शाखयोर्विभज्यते। तयोरेका प्रकोष्ठान्तरालाख्यकलायाः पुरस्तान्मणिबन्धं प्रति मध्यरेखायां प्रसृता, सा अरत्निमध्या अग्रिमा नाम। अपरा तां कलां निर्भिद्य पश्चिमतो मणिबन्धं प्रति-गता, सा अरत्निमध्या पश्चिमा नाम। तयोरेकैकस्यास्त्रिविधा अनुशाखाः—सन्धिगाः मांसगाः, अस्थिगाश्चेति।

(४-५) अन्तर्मणिबन्धीये[३] नाम द्वे प्रशाखे मणिबन्धस्य पुरः पश्चाच्च प्रसृते तदन्तःसीमगे। ते तादृशीभ्यां बहिःप्रकोष्ठीयायाः शाखाभ्यां धमनी-चक्रमारचयतः।

(६) धानुषी योजनी गम्भीरा[४] नाम प्रशाखा करमूलान्तःसीम्नि गम्भीरं प्रविष्टा गम्भीरया करतलधानुष्या संयुज्यते।

करतलधानुषी उत्ताना नाम धमनी तु अन्तःप्रकोष्ठीयायाश्चरमो भागः करतलं प्रविष्टः (११० चित्रम्)।

## अथ करधमन्यः।

करधमन्यो हि द्विविधाः करतलीयाः, करपृष्ठीयाश्च। तत्र करतलीयानां धमनीनां मूलभूते धमन्यौ द्वे—**करतलधानुषी उत्ताना, गम्भीरा** चेति (११०।१११ चित्रयोः)। तत्र—

---

१। कूर्परान्तरिके (ध०)—Anterior and Posterior Ulnar Recurrent Arteries. २। अरत्निमध्या साधारणी (ध०)—Common Interosseus Artery. ३। अन्तर्मणिबन्धीये (ध०)—Volar & Dorsal Ulnar Carpal Arteries. ४। धानुषी योजनी गम्भीरा (ध०)—Deep Volar Communicating Artery.

[ ११० चित्रम् ]

# अन्तःप्रकोष्ठीया, बहिःप्रकोष्ठीया च धमनी।

( दक्षिण प्रकोष्ठस्य उत्तानव्यवच्छेदेन दर्शिता )




( To facc page 124 )

**करतलधानुषी उत्ताना**[1] (११० चित्रम्) नाम धमनी अन्तःप्रकोष्ठीयधमन्याः धनुर्वक्रेण प्रान्तभागेन बहिःप्रकोष्ठीयधमन्या धानुषीयोजन्याख्यया शाखया मिलितेन निर्मीयते। सा करतलस्य मध्यभागे दृश्या करतलिकाख्यया कलाकण्डरयाऽच्छादिता। ततश्च सम्भूताश्चतस्रः प्रशाखाः, यास्तर्जन्यादीनां चतसृणामंगुलीनां मूलशलाकान्तरालेषु प्रसृताः। तासामेकैका अंगुलीमूले शाखाद्वये विभक्ता एकैकतः सन्निहितांगुलिद्वयपार्श्वयोरित्थं प्रसरति—यथा प्रथमा तर्जनी-मध्यमापार्श्वयोः, द्वितीया—मध्यमाऽनामिकापार्श्वयोः। तृतीया अनामिका-कनिष्ठा पार्श्वयोः। चतुर्थी कनिष्ठाया आन्तरपार्श्वे—इति। तर्जन्या बहिःपार्श्वे, अंगुष्ठस्य पार्श्वयोश्च प्रसृतास्तु करतलधानुष्याः गम्भीरायाः शाखाः। अस्ति च उत्तानायाः करतलधानुष्याः अपराऽपि शाखा करभदेशं प्रतिगता।

**करतलधानुषी गम्भीरा**[2] नाम धमनी तु (१११ चित्रम्) कूर्चास्थ्नां पुरस्ताद् बहिःप्रकोष्ठीयधमन्याश्चरमेण धनुर्वक्रभागेन अन्तःप्रकोष्ठीयधमन्या धानुषीयोजनीसंज्ञयाशाखया मिलितेन निर्मिता। तस्या अंगुलिमूलगाः शाखाः पञ्च। तासु प्रथमा अंगुष्ठमूलगा नाम, सा द्विधा विभज्याऽत्मानं अंगुष्ठपार्श्वयोः प्रसृता। द्वितीया तर्जनीमूलगा नाम, सा तर्जन्या बहिःपार्श्वमात्रे प्रसृता। अपरास्तु तिस्रः उत्तानायाः करतलधानुष्यास्तिसृभिः शाखाभिः तर्जन्याद्यंगुलीचतुष्टयस्य अन्तरालमूलेषु संयुज्यन्ते। तेभ्यश्च संयोगस्थानेभ्यः करतलमांसं निर्भिद्य पृष्ठतः प्रसृतास्तिस्रः प्रशाखाः योजन्याख्याः, ताभिर्मूलशलाकापृष्ठस्थं धमनीत्रयमारच्यते।

द्वित्राश्चाऽस्याः शाखाः मणिबन्धसन्धेः पुरःस्थे धमनीचक्रे प्रविष्टाः।

**करपृष्ठीयाः धमन्यः** पुनश्चतस्रो मुख्याः—शलाकापृष्ठिकाः[3] नाम। तासां प्रथमा बहिःप्रकोष्ठीयधमनीप्रभवा वर्णितपूर्वा, सा अंगुष्ठपृष्ठे, तर्जनीपृष्ठे तद्बहिःपार्श्वे च त्रिभिः शाखाभिः प्रसृता। द्वितीया, तृतीया, चतुर्थी चेति शलाकापृष्ठिकाः मणिबन्धपश्चिमस्थाद् धमनीचक्रात् प्रभवन्ति, तास्तर्जन्याद्यंगुलीचतुष्टयस्य अन्तरालेषु दृश्याः। तासामेकैका द्वयोर्द्वयोः शाखयोरात्मानं विभज्य सन्निहितांगुलिपृष्ठ-पार्श्वयोः प्रसरति।

---

१। करतलधानुषी उत्ताना धमनी—Superficial Volar Arch. २। करतलधानुषी गम्भीरा (ध०)—Deep Volar Arch. ३। शलाकापृष्ठिकाः धमन्यः—Dorsal Metacarpal Arteries.

एवञ्च अंगुष्ठं प्रति एका धमनी ( द्वे वा ) पृष्ठतः, द्वे च तलपार्श्वयोः । अपरासामंगुलीनान्तु एकैकां प्रति चतस्रो धमन्यः—द्वे तलपार्श्वयोः, द्वे च पृष्ठपार्श्वयोः । तासां तलपार्श्वगं धमनीद्वयमंगुल्यग्रे पुरस्तात् स्वल्पं धमनीचक्रमारचयति, पृष्ठपार्श्वगं धमनीद्वयं तु नखभूमौ । करस्थाः पेश्यादयश्च करतल-धानुष्योर्मणिबन्धीयधमनीनां च शाखाप्रतानैराप्याय्यन्ते ।

ता एता ऊर्ध्वशाखीया धमन्यो व्याख्याताः ।

अथ अधःशाखाधमन्यः ।

अधःशाखीयधमनीनां तावत् मूलम्—औवीं नाम धमनी । नितम्बीयास्तु धमन्यः अधिश्रोणिकाया आभ्यन्तर्या धमन्याः प्रशाखानुशाखाः । ताः प्रायेण और्व्या धमन्या जघनाभिगैः शाखाप्रतानैः सह धमनीचक्रमारचयन्ति नितम्ब-जघनं परितः । ता व्याख्यातपूर्वाः ।

अथ औवीं धमनी ।

या तावन्मध्यकाये औदर्या महाधमन्याः विभागसम्भूता काण्डशाखा अधिश्रोणिका बाह्या नाम स्थूला धमनी सैव वंक्षणदरीमुखाद् विनिर्गता **औवीं**[1] **नाम धमनी** सम्पद्यते ( ११२ चित्रम् ) । सा वंक्षणदेशस्यान्तः-सीम्नि और्व्या सिरया, बहिःसीम्नि च और्व्या नाड्या परिवारिता, प्रच्छादिता च ऊरुमध्ये ऊरुकञ्चुकया । सिराधमन्यौ च तत्र समानसंज्ञे एकस्मिन्नेव सिराकञ्चुके तिष्ठतः । तदन्तःसीम्नि वंक्षणान्तर्द्रश्यम् अन्तर्वंक्षणीयं नाम छिद्रं वृषणबन्धनीधरम् । तच्च वर्णितचरं पेश्यध्याये ।

सेयं कनिष्ठांगुलीपरिणाहा स्थूलधमनी ऊरुपुरोभागे वंक्षणस्य मध्यविन्दुत आरभ्य तिर्यगन्तःसीम्नि प्रसृता । ऊरोरर्धाऽधिकं दैर्घ्यमतिक्रम्य तु सैव ऊरुसंव्यूहनीं गरिष्ठां पेशीं निर्भिद्य ऊरुपश्चिमतो निर्गता **ऊरु-जानुपृष्ठिका**-संज्ञां लभते ।

अथास्याः षट् प्रशाखा मुख्याः । पञ्चषाश्च गौण्यः पेशीगाः । तत्र—

( १ ) उत्ताना औदरिकी[2] नाम और्व्या धमन्याः शाखा ऊर्वन्तःसीम्नि-स्थितेन ऊरुकञ्चुकाया अनुवंक्षणीयछिद्रेण बहिर्गत्य तलोदरमधिरोहति नाभिदेशं

१। औवीं धमनी—Femoral Artery. २। उत्ताना औदरिकी धमनी—Superficial Epigastric Artery.

[ १११ चित्रम् ]

# अन्तःप्रकोष्ठीया बहिःप्रकोष्ठीया च धमनी।

( दक्षिणप्रकोष्ठस्य गभीरव्यवच्छेदेन दर्शिता )




( To face page 126 )

यावत् । तस्याः अनुशाखास्त्वचि, मेदोधरकलायां, लसीकाग्रन्थिषु च वंक्षणस्थेषु प्रसृताः ।

( २ ) उत्तानजघनिका वेष्टनी[1] नाम और्व्या धमन्याः शाखा जघनधारां प्रतिगता शाखाप्रतानैः जघनं संवेष्ट्य जघन-वंक्षणस्थां त्वचं, वहिःप्रावरणीं, लसीकाग्रन्थींश्च वंक्षणस्थान् पुष्णाति ।

( ३-४ ) वहिरौपस्थिक्यौ[2] नाम धमन्यौ द्वे – उत्ताना, गम्भीरा चेति । ते ऊर्वन्तःसीम्नि और्व्या धमन्याः सम्भूय उपस्थस्य वहिर्देशं प्रति तिर्यक् प्रसृते । तयोरुत्ताना पुरस्ताद् ऊरुकञ्चुकां निर्भिद्य अनुवंक्षणीयछिद्रेण वहिर्गता, भगास्थि-सन्धानं प्रति प्रसृता । सेयं वस्तिदेशस्य शिश्नाण्डकोषयोश्च त्वचि ( स्त्रियास्तु भगोष्ठे ) गम्भीरशाखाप्रतानैः प्रसृता । गम्भीरा वहिरौपस्थिकी तु तदधस्तात् तथैव तिरश्चीनं गत्वा तेष्वेव भागेषु, विशेषतश्च औपस्थिकत्रिकोणे, गम्भीरतरं प्रसृता ।

( ४ ) **गम्भीरोरुका**[3] नाम स्थूला धमनी ( ११२ चित्रम् ) और्व्या धमन्याः मूलदेशाद् द्वित्रांगुलेन सम्भूय पश्चिमतः ऊर्वन्तःसीम्नि तामेव धमनी-मनुवर्त्तते, निर्भिनत्ति च सा ऊरुसंव्यूहनीं गरिष्ठां नाम पेशीं तद्वत् । तस्याः द्वे प्रशाखे ऊरोरन्तर्वहिःसीम्नोः प्रसृते—ऊरुवेष्टन्यौ नाम । तयोरेकैका तिसृषु प्रशाखासु विभक्ता ऊर्ध्वाधःस्थाभिर्धमनीभिः सह धमनीचक्राणि रचयति जघन-नितम्ब-वंक्षणसन्धीन् परितः, पुष्णाति च प्रशाखाभिः काश्चन ऊरुसम्बद्धाः पेशीः । सन्ति च गम्भीरोरुकायाः अपरा अपि प्रशाखाः मांसगाः, तासामपि त्रिचतुराः ऊरुसंव्यूहन्याख्यपेशीं निर्भिद्य पश्चात् प्रसृताः ।

( ५ ) महाजानुका[4] नाम शाखा और्व्या धमन्याः शेषतः सम्भूय जान्वन्तःसीम्नि प्रसृता । सा एकया प्रशाखया जान्वन्तःसीमस्थाः पेशीः, जानुसन्धिं च पुष्णाति, प्रविशति च शाखाप्रतानैः पुरःस्थैर्धमनीचक्रम् । अपरा तु तस्याः प्रशाखा जान्वन्तरीयां त्वाचनाड़ीमनुवर्त्तते ।

और्व्या धमन्याः पेशीगाः शाखास्तु पञ्चषाः ऊर्वन्तःसीम्नि दृश्याः, ता अपि सन्निहितपेशीर्विशेषेण पुष्णन्ति ।

---

१ उत्तानजघनिका वेष्टनी ( ध० )—Superficial Iliac Circumflex Artery.
२। वहिरौपस्थिक्यौ ( ध० )—External Pudendal Arteries—Superficial and Deep.
३। गम्भीरोरुका (ध०)—Profunda Femoris Artery. ४। महाजानुका (ध०)—Highest Genicular ( Anastomotica Magna ) Artery.

### अथ ऊरुजानुपृष्ठिका धमनी ।

**ऊरुजानुपृष्ठिका**[१] नाम धमनी ऊरुसंव्यूहनीं गरिष्ठां नाम पेशीं निर्भिद्य पश्चात् जानुपृष्ठखाते प्रसृता और्व्या धमन्या अनुवृत्तिरूपा। सा जानुपृष्ठिकाख्य-पेश्या अधोधारां यावत् ऊरुजानुपृष्ठिकेति संज्ञां लभते (११३ चित्रम्)। सेयं जानुसन्धेः पश्चात् किञ्चिन्निम्नतश्च पुरः-पश्चिमजङ्घिकयोर्धमन्योः विभज्यते । तस्याः पश्चिमतो दृश्या जानुपृष्ठिका नाम सिरा, जङ्घानुगा नाम नाड़ी च जानुपृष्ठपट्टिकया रक्षिता। तत् पुरःस्थं च ऊर्वस्थ्नोऽधःप्रान्तपृष्ठं जानुसन्धिपृष्ठं च मेदःपिण्डपरिवृतम्। तदुभयतश्च जङ्घापिण्डिकाख्यपेश्योर्मूलप्रभवौ।

अथाऽस्या ऊरुजानुपृष्ठिकाया स्त्रिविधाः शाखाः — त्वाचशाखाः, पेशीगाः, जानुगाश्चेति ।

तत्र त्वाचशाखाः जानुजङ्घयोः पृष्ठतः प्रसृताः। पेशीगाः शाखास्तु द्वि-त्रसंख्याः ऊर्वन्तःसीम्नि पेशीषु प्रविष्टाः, अपरे च द्वे शाखे जङ्घापिण्डिकां प्रविष्टे।

जानुगाः पुनः शाखाः पञ्च। द्वे उत्तरजानुगे, द्वे च अधरजानुगे इति, ताः जानुसन्धेर्बाह्यान्तरसीम्नोः प्रसृताः। एका च मध्यजानुगा, सा जानुसन्धिकोषं निर्भिद्य जानुसन्धिं प्रविष्टा। ताभिश्च जानुसन्धिं परितो विरच्यते धमनीचक्रम्।

### अथ पुरोजङ्घिका धमनी ।

**पुरोजङ्घिका**[२] नाम धमनी (११५ चित्रम्) ऊरुजानुपृष्ठिकाया धमन्या अग्रिमा शाखा, या जङ्घाऽनुजङ्घास्थ्नोरूर्ध्वप्रान्तयोरन्तराले पुरस्तात् प्रसृता। सेयमस्थ्यन्तरालीयकलायाः सम्मुखीना जङ्घान्तःसीम्नि गुल्फयो-र्मध्यं यावत् तन्नाम्ना प्रसिद्धा। तदधस्तात् पादपृष्ठे प्रसृता तु सैव पादपृष्ठिकेति संज्ञां लभते।

एषा च पुरोजङ्घिका नाम धमनी जङ्घास्थ्नः अन्तःसीम्नि जङ्घापुरोगाख्य-पेश्या भूम्ना समाच्छादिता। तदधःप्रान्तोपकण्ठे तु त्वक्कलामात्राऽवृता सा गुल्फयोर्मध्ये गुल्फस्वस्तिकाख्यस्नायोरधस्तात् अंगुष्ठांऽगुलीप्रसारणीपेशीनां

---

१। ऊरुजानुपृष्ठिका (ध०)—Popliteal Artery. २। पुरोजङ्घिका (ध०)—Anterior Tibial Artery.

[ ११२ चित्रम् ]

## श्रौर्वी धमनी सशाखा ।




( To face page 128 )

[ ११३ चित्रम् ]

## ऊरुजानुपृष्ठिका धमनी, पश्चिमजङ्घिका च सशाखा ।



कण्डरान्तराले स्पर्शनयोग्या। अनुवर्त्तते च तां पुरोजङ्घिका गम्भीरा नाम नाड़ी सह सहचरीभ्यां सिराभ्याम् (११४ चित्रम्)।

अथास्याः मुख्याः प्रशाखाश्चतस्रः, पेशीगाश्च बहवः। यथा—

(१-२) जानुगा अग्रारुहा, पृष्ठारुहा[१] चेति द्वे आरोहिण्यौ प्रशाखे जानुसन्धिं परितः स्थिते धमनीचक्रे पुरः पश्चाच्च मिलिते।

(३-४) गुल्फयोः पुरस्ताच्च द्वे प्रशाखे—अग्रिमा अन्तर्गुल्फिका[२], अग्रिमा बहिर्गुल्फिका[३] च नाम। ते अन्तर्गुल्फं बहिर्गुल्फं चाभितो धमनीचक्रद्वयमारचयतः सह बहिर्जङ्घिकाया धमन्याश्चरमैः शाखाप्रतानैः।

पेशीगास्तु शाखाः—पुरोजङ्घिकाया धमन्याः पार्श्वाभ्यां सम्भूय परितो जङ्घापेशीषु त्वचि च प्रसृताः।

### अथ पश्चिमजङ्घिका।

**पश्चिमजङ्घिका**[४] नाम धमनी (११३ चित्रम्) जानुसन्धिपृष्ठस्थे खाते ऊरुजानुपृष्ठिकायाः धमन्याः विभागसम्भूता। सा जङ्घास्थिपृष्ठे जङ्घापिण्डिकयाऽच्छादिता तदन्तःसीमानुक्रमेण अधोमुखं प्रसृता, अन्तर्गुल्फ-पार्ष्ण्योरन्तरालं यावत्। तदधश्च विभज्यतेऽसौ द्वयोरग्रप्रशाखयोः। सेयम् अन्तर्गुल्फस्य पश्चात् त्वङ् मात्रावृता स्पर्शनपरीक्षायोग्या अंगुष्ठमूलस्थधमनीवत्।

अथास्या मुख्याः प्रशाखाः सप्त अष्टौ वा। तासु प्रधानतमा बहिर्जङ्घिका नाम धमनी या जङ्घापृष्ठे बहिःसीम्नि प्रसृता। मांसगाश्च[५] प्रशाखाः पञ्चषाः। तत्र—

**बहिर्जङ्घिका**[६] नाम स्थूला धमनी (११३ चित्रम्) पश्चिमजङ्घिकायाः मूलदेशात् द्व्यङ्गुलाधः सम्भूता, सा किञ्चिद्वक्रीभूय जङ्घापिण्डिकायाः बहिःसीमानुक्रमेण बहिर्गुल्फान्तं गत्वा तत्रैव शाखाप्रतानैरास्तृता। तस्या अनुशाखाः—अनुजङ्घास्थिपोषणी, कलानिर्भेदिनी, पार्ष्णिपृष्ठगा योजनी, बहिःपार्ष्णिगा, पेशीगाश्च। तासु कलानिर्भेदिनो जङ्घास्थ्नोरन्तरालगां कलां निर्भिद्य पुरो निर्गता

---

१। जानुगा अग्रारुहा, पृष्ठारुहा च (ध०)—Tibial Recurrent—Anterior & Posterior Arteries. २। अग्रिमा अन्तर्गुल्फिका (ध०)—Anterior Internal Malleolar Artery. ३। अग्रिमा बहिर्गुल्फिका (ध०)—Anterior External Malleclar Artery. ४। पश्चिमजङ्घिका (ध०)—Posterior Tibial Artery. ५। पेशीगाः मांसगाश्चेति पदद्वयं तुल्यार्थम्। ६। बहिर्जङ्घिका (ध०)—Peroneal Artery.

अग्रिमा बहिर्जंघिका[1] नाम कदाचित् । पार्ष्णिपृष्ठगा योजनी तु पार्ष्णिपृष्ठोर्ध्वदेशे पिण्डिकाकण्डरायाः पुरस्ताद् वक्रीभूय प्रविष्टा । पेशीगाश्च अनुशाखाः पञ्चषाः जङ्घापृष्ठस्थाः पेशीः पुष्णन्ति ।

पश्चिमजङ्घिकायास्तनुप्रशाखास्तु षट् सप्त वा । तासां जङ्घास्थिपोषणी जङ्घास्थ्नि प्रविष्टा । पार्ष्णिपृष्ठगा योजनी पूर्ववत् पिण्डिकाकण्डरायाः पुरस्ताद् वक्रीभूय प्रविष्टा, स्वनामिकया पूर्वोक्तया धमन्या चक्रारचनी । अन्तर्गुल्फिका पश्चिमा[2] अन्तर्गुल्फपृष्ठे प्रसृता स्वनामिकया अग्रिमधमन्या चक्रमारचयति । अन्तःपार्ष्णिगा नाम त्रिचतुराः प्रशाखाः पुनः पार्ष्णेरन्तःसीम्नि, पार्ष्णिपृष्ठतः, पादतलमूले च स्वनामिकाभिर्धमनीभिः धमनीचक्राणि रचयन्ति ।

अन्ते तु पश्चिमजङ्घिकायाः विभागजे अग्रप्रशाखे द्वे—पादतलीया आन्तरी, बाह्या चेति । तयोराद्या तन्वी पादान्तःसीम्नि पेशीषु त्वगादिषु च शाखाप्रतानैः प्रसृता । पादतलीया बाह्या धमनी तु पादान्तःसीम्नि पार्ष्णि-पार्श्वतः सम्भूय तिर्यक् प्रसृता पादतलमुल्लंघ्य पादतलधानुषीं धमनीं रचयति ।

अथ पादधमन्यः ।

ता द्विविधाः—पादपृष्ठगाः, पादतलगाश्च । तत्र पादपृष्ठगासु प्रधाना पादपृष्ठिका नाम धमनी । पादतलगासु तु पादतलीयाख्ये धमन्यौ पूर्वोक्ते, पादतलीया धानुषी च । तत्र –

**पादपृष्ठिका**[3] नाम धमनी ( ११४ चित्रम् ) पुरोजङ्घिकाया अनुवृत्तिरूपा । पुरोजङ्घिका हि धमनी गुल्फसन्धेः पुरस्ताद् गुल्फस्वस्तिकाख्यस्नायुपट्टिकया-च्छादिता तदन्तःस्थेन स्नायुमयसुरङ्गापथेन पादपृष्ठे विनिर्गता पादांगुष्ठमूल-शलाकामूले पादपृष्ठिकेति संज्ञां लभते । प्रथमामुत्तरशलाकान्तरालं पेशीं निर्भिद्य पादतलं प्रविष्टा तु सैव पादतलगा गम्भीरा नाम धमनी भवति ।

पादपृष्ठिकायाः सहचरी च तत्र पुरोजङ्घिका गम्भीरा नाम नाड़ी, सिराद्वयी च ।

अथास्याश्चतस्रः प्रशाखाः पादपृष्ठे दृश्याः—बहिःकूर्चिका, अन्तःकूर्चिका, पादपृष्ठगा धानुषी, अंगुष्ठपृष्ठिका चेति । तासां बहिःकूर्चिका नाम धमनी नौनिभास्थ्नः पुरोभागं तिर्यगुल्लंघ्य बहिःसीम्नि प्रसृता बहिर्गुल्फीयेन धमनीचक्रेण, पादपृष्ठगाया धानुष्याः शाखाप्रतानैश्च मिलिता । अन्तःकूर्चिका तु प्रायेण युग्मरूपा

---

१ । अग्रिमा बहिर्जङ्घिका ध०—Anterior Peroneal Artery. २ । अन्तर्गुल्फिका पश्चिमा ध० —Posterior Internal Malleolar Artery. ३ । पादपृष्ठिका धमनी—Dorsalis Pedis Artery.

[ ११४ चित्रम् ]

# पुरोजंघिका धमनी ( सशाखा )।




( To face page 130 )

(११५ चित्रम्)—पादतलधमन्यः उत्तानाः ।




(११६ चित्रम्)—पादतलधमन्यः गम्भीराः ।



गुल्फ-पादान्तःसीम्नोः शाखाप्रतानैः प्रसृता। पादपृष्ठगा धानुषी नाम धनुर्वक्रा ह्रस्वप्रशाखा तु पादबहिःसीम्नि धनुर्वत् प्रसृता, पूर्वोक्तशाखया मिलिता च। तस्याश्चतस्रः अनुशाखाः पश्चानामंगुलीमूलशलाकानाम् अन्तरालेषु प्रसृताः। तासां पादांगुष्ठ-कनिष्ठाभिगे अनुशाखे प्रत्येकं तिसृषु तनुशाखासु विभज्येते। अपरे च द्वे द्वयोर्द्वयोस्तनुशाखयोः। ताश्च तनुशाखाः पादांगुलीनां पृष्ठेषु पार्श्वेषु च प्रसृताः—अंगुलीपार्श्विक्यः पृष्ठगाः नाम। ताः नखभूमिषु प्रसृतैः सूक्ष्मप्रतानैः धमनीचक्राणि रचयन्ति।

**पादतलीये धमन्यौ**[1] द्वे—आन्तरी, बाह्या चेति। ते पश्चिमजङ्घिकाया अन्तिमविभागतः सम्भूते वर्णितपूर्वे।

**पादतलधानुषी**[2] नाम धमनी तु (११६ चित्रम्) पश्चिमजंघिकाया अग्रप्रशाखयोर्बाह्या प्रशाखा, या पादान्तःसीम्नि पार्ष्णि-नौनिभाख्ययोः कूर्चास्थ्नोः सन्धानाधस्तात् सम्भूय, तिर्यक् पुरस्ताद्बहिश्च कनिष्ठामूलशलाकामूलं यावत् प्रसृता पादतलमुल्लंघ्य पुनरन्तर्मुखं पुरश्च धनुर्वक्रभावेन प्रसृता। मिलिता च सा अंगुष्ठमूलशलाकामूले पादतलगम्भीराख्यया धमन्या।

तस्या बहवोऽनुशाखाः पादतले त्वगादिषु च प्रसृताः। तासां षट् पुरोगाः अंगुलिपार्श्विक्यस्तलगाः नाम, पश्चिमगास्तु तिस्रः निर्भेदिनी संज्ञाः।

तत्र पुरोगस्य अनुशाखाषट्कस्य मध्यस्थाश्चतस्रोऽनुशाखाः पश्चानामंगुलीमूलशलाकानामन्तरालेषु प्रसृताः अंगुलीमूलान्तरालेषु द्वयोर्द्वयोस्तनुशाखयोर्विभज्यन्ते। ताः अंगुलीनां सन्निहितपार्श्वेषु प्रसरन्ति। द्वे च पुरोगे अनुशाखे अविभक्ते एव क्रमेण अंगुष्ठ-कनिष्ठयोरन्तर्बहिःसीम्नोः प्रसृते। ता एता अंगुलीपार्श्विक्यः तलगाः नाम दश धमन्यः अंगुल्यग्रेषु धमनीचक्राणि विरचयन्ति।

तिस्रश्च निर्भेदिनीसंज्ञाः पश्चिमानुशाखाः पादतलपेशीः निर्भिद्य पादपृष्ठं गताः पादपृष्ठिकायाः अंगुलीमूलपृष्ठस्थाभिरनुशाखाभिः संयुज्यन्ते।

ता एता अधःशाखीया धमन्यो व्याख्याताः।

समाप्तञ्च धमनीखण्डम्।

---

१। पादतलीया आन्तरी, बाह्या च (ध०)—Medial & Lateral Planter Arteries,

२। पादतलधानुषी (ध०)—Planter Arch (Artery).

# प्रत्यक्षशारीरम्

## सिराखण्डम् ।

### प्रथमोऽध्यायः ।

अथातः सोपक्रमशाखासिरावर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु सर्वासां सिराणामाशयो हृदयं समुद्र इवाऽपगानाम् । अतश्च सर्वा अपि सिराः हृदयाभिमुख्यः * । अविशुद्धरक्तवहाश्च ताः, अन्यत्र फुफ्फुस-प्रभवाभ्यः सिराभ्यः । फुफ्फुसप्रभवा हि ताः फुफ्फुसान्तर्विष्णुपदामृत[1]स्पर्शेन विशोधितं रक्तं हृदयं प्रापयन्तीत्युक्तपूर्वम् । सर्वासां च सिराणामारम्भो जालकेभ्यः । तेभ्यो हि संगृह्यते जालकान्तरीयं रक्तं सूक्ष्मैः सिराप्रतानैः । तैश्च मिलितैः सम्भवन्ति सिरास्तन्व्यः । तासां परस्परसंमेलनेन क्रमशः परिणाम उत्तरोत्तरस्थूलासु सिरासु । स्थूलसिराणां च काण्डसिरासु प्रवेशः । काण्ड-सिराणां च उत्तराऽधरमहासिरयोः । तयोश्च हृदयस्य दक्षिणालिन्दे । हार्दिकी मूलसिराऽपि तत्रैव प्रविष्टा । सोऽयं सिरापरिणामक्रमो व्याख्यातः । विपरीतश्च तद्वर्णनक्रमो धमनीवर्णनक्रमस्य, सिराधमन्योर्यथाक्रमं संयोगविभागाभ्यां[2] परिणामात् ।

सन्ति च शिरःकपालानामभ्यन्तरतः मस्तिष्कबहिर्वृतेः स्तरद्वयान्तरालेषु अस्थिपरिखाश्रिताः आयतसिरामार्गाः तेषां **सिरासरित्, सिराकुल्या**[3] —इति वा संज्ञा । सिराप्राचीरिकाः[4], सिराकपाटिकाः[5], सिराकञ्चुकानि[6] च व्याख्यातपूर्वाणि धमनीखण्डादौ । न च सन्ति सिराकपाटिकाः सर्वासु सिरासु । उत्तराऽधरमहासिरयोः, प्रतीहारिण्यां सिरायां, मस्तिष्क-यकृद्-वृक्क-गर्भाशयादिप्रभवासु सिरासु, गर्भस्थशिशोः संवाहिन्यां महासिरायां च कपाटिका-नामदर्शनात् । सिराकञ्चुकानि च धमनीकञ्चुकेभ्योऽभिन्नानि बहुशः ।

---

* सिरापदं प्रत्यक्षशारीरे पारिभाषिकार्थविशेषे रूढम् । वैद्यके तु क्वचिद् धमन्यर्थेऽपि तत्-प्रयोगः । विवेचितञ्चैतदस्मदीये "संज्ञापञ्चकविमर्शे" । १ । विष्णुपदामृतं—Oxygen. २ । उत्तरोत्तरसंयोगपुष्टा हि सिराः स्थूल-स्थूलतराकृतयः, उत्तरोत्तरविभागमूलास्तु धमन्यः क्रमशस्तनूभूताः । ३ । Cranial Sinuses. ४ । सिराप्राचीरिकाः—Media or Walls of Veins. ५ । सिराकपाटिकाः—Valves of Veins. ६ । सिराकञ्चुकानि—Sheaths of Veins.

द्विविधाश्च सिराः– उत्तानाः गम्भीराश्च । तत्र उत्तानाः त्वचोऽधस्ताद् बाह्यप्रावरण्याः स्तरद्वयान्तरालेषु तिष्ठन्ति, ताश्च न धमनीनामनुचर्यः—इति पृथक्संज्ञाः । दृश्यन्ते च ता अस्थूल-गौरदेहानां त्वगधस्तात् सर्वत्रैव प्रायः, विशेषतश्च शाखासु । परिणामे तु ता अपि गम्भीरसिराः प्रविशन्ति । गम्भीर-सिराः पुनः प्रायेण धमनीसहचर्यः, तत्संज्ञाश्च । तासां स्थूल-गम्भीरधमनीनां सहचर्यः स्थूलाः, प्रायेण एकाकिन्यश्च । शाखाधमनीनां सहचर्यस्तु तन्व्यो युग्मरूपाश्च प्रायशः । ❊

सिराचक्राणि च सर्वकायेषु संख्याधिकानि धमनीचक्रेभ्यः ।

बहवश्च सिराः प्रतिपुरुषं भिन्नक्रमेण संयोगमापद्यन्ते, विभिद्यन्ते च बहुधा अवस्थानभेदात् । तस्मादिहोक्तं सिरासंयोगावस्थानवर्णनं प्रायिकमवगन्तव्यम् ।

वर्णनीयाश्चातःपरमादौ शाखासिराः, ततः शिरोग्रीवायाः सिराः, ततश्च मध्यकायसिराः । शाखा-शिरोग्रीवीयाभिः सिराभिर्मध्यकायसिराणामापूरणात् ।

अथ ऊर्ध्वशाखीयाः सिराः ।

तत्राऽदौ **उत्तानसिराः** । ताश्च एकैकस्यामूर्ध्वशाखायाम् बहवः । तासु द्वे प्रधानभूते--बहिःसीम्नि बहिर्बाहुका, अन्तःसीम्नि अन्तर्बाहुका चेति । तत्सह-कारिण्यौ च मुख्यसिरे द्वे—मध्यप्रकोष्ठिका, मध्यबाहुका योजनी चेति । तत्र—

**बहिर्बाहुका**[१] नाम सिरा ( ११७ चित्रम् ) प्रायेण अंगुष्ठमूलादारभ्य प्रकोष्ठबहिःसीमानुक्रमेण गत्वा कूर्परसन्धेः पुरस्तादधश्च दृश्या । ततश्चोर्ध्वं प्रगण्डबहिःसीम्नि दृश्याऽसौ क्रमेण अंसमूलपुरोभागमुल्लंघ्य तदन्तःसीमानुक्रमेण अक्षकाऽस्थ्नोऽधस्तले प्रसृता, क्रमेण अंसच्छदोरश्छदयोः पेश्योरन्तराले गम्भीरं प्रविष्टा च । अन्ते चाऽसौ कक्षाधराख्यस्थूलसिरायां मिलिता ।

**अन्तर्बाहुका**[२] नाम सिरा ( ११७ चित्रम् ) कनिष्ठामूलादारभ्य तिर्यक् प्रकोष्ठपृष्ठान्तःसीमानुक्रमेण गत्वा कूर्परान्तःसीम्नि पुरस्ताद् दृश्या । ततः सा प्रगण्डान्तःसीम्नि प्रसृता प्रगण्डमध्यभागे बाहुकञ्चुकां निर्भिद्य गम्भीरप्रविष्टा बाहवी-संज्ञाया धमन्याः सहचरीभ्यां सिराभ्यां मिलिता । कक्षायां तु ते एव सिरे कक्षाधरा नाम एकाकिनीं स्थूलसिरां सम्पादयतः ।

---

❊ यथा बाहवी-धमन्याः तत्स्थूलशाखानाञ्च सहचर्यः । १ । बहिर्बाहुका सिरा—Cephalic Vein. २ । अन्तर्बाहुका सिरा—Basilic Vein.

अनयोश्च सिरयोः परस्परसंयोगाः प्रकोष्ठस्य पुरस्तात् पृष्ठतश्च बहुभिः सिराभिस्तिर्यक्प्रसृताभिर्दर्शनीयाः । विशेषतश्च—

**मध्यबाहुका योजनी**[१] नाम स्थूलतिरश्चीना ह्रस्वसिरा कूर्परसन्धेः पुरस्तात् पूर्वोक्तसिरयोः संयोजनी ।

**मध्यप्रकोष्ठिका**[२] नाम सिरा तु ( ११७ चित्रम् ) प्रकोष्ठपुरस्तादन्तर्बहिर्बाहुकयोः सिरयोर्मध्ये ऋजुप्रायं प्रसृता । सा कूर्परसन्धेरधोभागे अन्तर्बाहुकां सिरां प्रविष्टा । संयुक्ता चाऽसौ प्रकोष्ठपुरस्तादन्तर्बहिर्बाहुकाभ्यां सिराभ्याम् ।

अथामीषां सिराणामापूरणमित्थं सम्पद्यते । करपृष्ठे अङ्गुलीपृष्ठिकादिसिराभिरापूरितानि सिराजालानि करपृष्ठिकानि नाम । करतले च अंगुलीतलिकादिसिरारचितानि सिराजालानि करतलिकानि नाम । अस्ति च तद्योजनं सिराजालमंगुलीमूलानामन्तरालस्थम् । तत्र करपृष्ठिकानि उत्तानसिराजालानि मणिबन्धोपकण्ठे स्वल्पसंख्यासु सिरासु परिणम्य बाहुल्येन बहिर्बाहुकायां सिरायां प्रविशन्ति । अन्तःसीमस्थानि तु कानिचिदन्तर्बाहुकायाम् । करतलिकानां पुनः सिराजालानामन्तर्बाहुकायामेव भूम्ना प्रवेशः, मध्यप्रकोष्ठिकायां च । बहिःसीमस्थानां च कासाञ्चित् सिराणां बहिर्बाहुकायाम् ।

सर्वासाञ्च प्रकोष्ठ-प्रगण्डीयानामुत्तानसिराणाम् अन्तर्बाहुका-बहिर्बाहुकयोः सिरयोर्यथासम्भवं प्रवेशः । अंसपृष्ठोद्गतानां तु कासाञ्चिद् बहिर्बाहुकायामंसोपकण्ठे ।

इदञ्चात्र स्मर्त्तव्यम् । रक्तमोक्षणार्थम् अन्तर्बाहुका-बहिर्बाहुका-मध्यबाहुकेति सिराणामेकतमाया व्यधो विशेषेण सुकरः । तयाऽन्यया वा सिरया कालातिसारादौ म्रियमाणस्य रोगिणो रक्तस्याऽप्यभागपूरणाय लवणजलं प्रस्थमानमधिकं वा लीलयैव रक्तस्रोतसि निःक्षिपन्ति कुशलाः, जीवयन्ति च तेन सपदि मुमूर्षूमपि रोगिणमिति । भेषजप्रवेशनमपि क्रियते तत्पथेनैव बहुशः[३] ।

अथ **गम्भीरसिराः** । सर्वा अप्यूर्ध्वशाखीया गम्भीरसिराः प्रायेण धमनीनां सहचर्यः, युग्मरूपाश्च । तासां द्वे द्वे एकैकस्या धमन्याः पार्श्वयोर्द्वयोः, ते च अनुप्रस्थगाभिर्योजन्याख्यसिराभिः यतस्ततः संयोजिते परस्परम् ।

---

१ । मध्यबाहुका योजनी सिरा—Median Cubital Vein. २ । मध्यप्रकोष्ठिका सिरा—Median Ante-brachial Vein. ३ । यथा फिरङ्गरोगादिषु ।

[ ११७ चित्रम् ] उत्ताना बाह्वयाः सिराः।




( To face page 134 )

[ ११८ चित्रम् ]

(क) अधःशाखीया उत्तानसिराः ।




(क)—समग्रं दक्षिणसक्थि ( सम्मुखतो दृष्टम् ) । (ख)—दक्षिणजङ्घा ( पश्चिमतो दृष्टा ) ।
( द—द—दीर्घोत्ताना सिरा )

संज्ञाश्च तासां धमनीवदेव। यथा – अंगुलीपार्श्विक्यः[1], करतलधानुषी उत्ताना, सैव गम्भीरा[2], अरत्निमध्या[3] चेति। तासां करसिराणां प्रकोष्ठसिरासु, प्रकोष्ठसिराणाञ्च बाहवी-सिरान्तः प्रवेशः। तत्र बाहव्या धमन्याः पार्श्ववर्त्तिन्यौ द्वे सिरे सम्मिलिते कक्षाधरासंज्ञामेकाकिनीं स्थूलसिरां सम्पादयतः।

भवति च गम्भीरसिराणामुत्तानसिराभिरपि संयोगः संयोजनीभिः सिराभिः बहुशः। विशेषतश्च अन्तर्बाहुका नाम उत्तानसिरा बाहव्या धमन्याः पार्श्वे गम्भीरं प्रविष्टा तत्सहचरीभ्यां सिराभ्यां मिलिता।

**कक्षाधरा**[4] नाम स्थूलसिरा तु तत्संज्ञाया धमन्याः पार्श्ववर्त्तिनी एकाकिनी च। सा अक्षकास्थ्नोऽधस्तात् प्रथमपर्शुकाया बहिःसीमानं यावत् तथासंज्ञा। तस्याञ्च प्रविशन्ति तदाख्यधमन्याः शाखासहचर्यः सिराः, अंसकपालिन्यंसवेष्टनिकाद्याः। सिराश्च ताः परस्परमेलनेन त्रिचतुरासु सिरासु परिणमन्ति। अक्षकास्थ्नोऽधश्च कक्षाधरायां प्रविष्टा बहिर्बाहुका नाम उत्तान-सिराऽपि। सेयं कक्षाधरा नाम सिरा प्रथमपर्शुकामधिरूढा अक्षाधरेति संज्ञां लभते। सा च—

**अक्षाधरा**[5] नाम स्थूलसिरा (१२३ चित्रम्) अक्षकास्थ्नोऽधस्तात् तिर्यग् वक्रीभूय अक्षकोरःफलकयोः सन्धानपृष्ठं यावत् प्रसृता अनुमन्याख्यया काण्डसिरया ग्रीवागतया मिलित्वा **गलमूलिका** नाम अधोमुखी स्थूलसिरा सम्पद्यते। सा उरस्यसिराणां वर्णने पुनर्वर्णनीया।

अक्षाधरां च सिरां प्रविशतः--पुरोग्रीविका, अधिमन्या चेति ग्रीवादेशतः समागते द्वे सिरे प्राधान्यतः। अधिमन्याख्यसिरासंयोगस्थले च तां प्रविशति दक्षिणतो लसीकाकुल्या, वामतश्च रसकुल्येति विशेषः स्मर्त्तव्यः।

ता एता ऊर्ध्वशाखीयाः सिरा व्याख्याताः।

अथ अधःशाखीयाः सिराः।

तत्रादौ **उत्तानसिराः**। एकैकस्यामधःशाखायामुत्तानसिरासु द्वे प्रधान-भूते—दीर्घोत्ताना, ह्रस्वोत्ताना चेति (११८ चित्रम्)। तत्र—

---

१। अङ्गुलीपार्श्विक्यः सिराः—Digital Veins. २। करतलधानुषी सिरा—उत्ताना, गम्भीरा च Superficial & Deep Palmar Arches (Venous). ३। अरत्निमध्या सिरा—Inter-osseous Vein. ४। कक्षाधरा सिरा—Axillary Vein. ५। अक्षाधरा सिरा—Subclavian Vein.

**दीर्घोत्ताना**[1] नाम सिरा ( ११८ चित्रम् ) दीर्घतमा सक्थिसिरासु। सा पादान्तःसीम्न आरभ्य जङ्घान्तःसीमां यावत् प्रसृता, ततो जानुसन्धिपृष्ठान्तःसीमां संस्पृश्य पुनरूरौ तिर्यगूर्ध्वं पुरस्तादागता क्रमशः स्थूलीभूता अनुवंक्षणीयेन ठकारच्छिद्रेण औवीं सिरां प्रविष्टा। सेयं क्वचिद् युग्मरूपा निम्नार्धे।

**ह्रस्वोत्ताना**[2] नाम सिरा ( ११८ चित्रम् ) बहिर्गुल्फस्य पश्चिमदेशादारभ्य तिर्यग् जानुसन्धिपृष्ठं गता सन्धिपृष्ठखातस्याच्छादनीं गम्भीरप्रावरणीं निर्भिद्य ऊरुजानुपृष्ठिकां नाम गम्भीरसिरां प्रविष्टा। सा तत्रैव गम्भीरप्रवेशात् पूर्वम् ऊर्ध्वमुखीम् उत्तानयोजनी-संज्ञां सिरां द्वारीकृत्य दीर्घोत्तानया मिलिता।

अनयोश्च सिरयोरापूरणमित्थं सम्पद्यते। पादपृष्ठे धानुष उत्तानं सिराजालं पादांगुलीपृष्ठिकादिसिराभिरारब्धं पादपृष्ठिकं नाम। पादतले च तादृशं तत् पादांगुल्यादिगतसिराभिरारब्धं पादतलिकं नाम। तयोश्च परस्परसंयोजनं सिराजालमंगुलोमूलानामन्तरालस्थं तदन्तर्बहिःसीम्नोरवस्थितम्। तत्र पादपृष्ठीयानां पादबहिःसोमस्थानाञ्च सिराणां प्रवेशो ह्रस्वोत्तानायाम्। अपरासान्तु दीर्घोत्तानायाम्। जङ्घायामूरौ च अन्या अपि उत्तानसिराः परस्परसंयोजनैः सिराजालैर्वर्धमानाकृतयो ह्रस्व-दीर्घयोरुत्तानसिरयोरापूरण्यो भवन्ति। दीर्घोत्तानां प्रविष्टाश्च काश्चिदुदर-जघनोपस्थगता उत्तानसिराः उत्तानौदरिकी-प्रभृतयः। अस्ति चात्रैका दीर्घसिरा उत्तानौदरिक्याः उरःपार्श्विकसिराभिः सह संयोजनी— औदरौरसी नाम, सा दीर्घोत्तानां नाम सक्थिसिरां परम्परया कक्षाधराख्यसिरया संयोजयतीति वैचित्र्यम्।

अथ **गम्भीरसिराः**। गम्भीरसिरास्तावदधःशाखाया ऊर्ध्वशाखावदेव भूम्ना, प्रायेण युग्मरूपाः, धमनीसहचर्यः, तत्संज्ञाश्च। तासु पादतलगानां संग्रहः पश्चिमजंघिकयोः सिरयोः। पादपृष्ठिकानान्तु पुरोजंघिकयोः। पुरः-पश्चिमजंघिकानां सिराणां पुनः प्रवेशः ऊरुजानुपृष्ठिकाख्यायां गम्भीरसिरायाम्।

ऊरुजानुपृष्ठिका च मांसं निर्भिद्य पुरोगता **और्वी** नाम एकाकिनी स्थूलसिरा सम्पद्यते। ऊर्ध्वं च वंक्षणाद् उरोगुहां प्रविष्टा तु सैव **अधिश्रोणिका**[3] **बाह्या** नाम सिरा भवति तदाख्यधमन्याः पार्श्ववर्त्तिनी ( ११२।१२३ चित्रयोः )।

---

१। दीर्घोत्ताना सिरा—Long Sapheneus Vein. २। ह्रस्वोत्ताना सिरा—Short Sapheneus Vein. ३। अधिश्रोणिका सिरा—The External Iliac Vein.

# द्वितीयोऽध्यायः।

अथातः शिरोग्रीवीयसिरावर्णनीयमध्यायं व्याख्यास्यामः।

शिरोग्रीवीयाः सिराश्चतुर्धा विभज्य व्याख्येया वर्णनासौकर्याय। तद्-यथा—स-मुखमण्डलीयाः शिरोबाह्याः सिराः, ग्रीवासिराः, शिरोऽभ्यन्तरीयाः सिराः, नेत्रगुहान्तरीयाः सिराश्चेति।

## अथ समुखमण्डलीयाः शिरोबाह्याः सिराः।

एतासु बाह्यसिरासु—शिरस एकैकार्धे नव मुख्याः (११६ चित्रम्)। ताश्च ललाटिका, अधिभ्रुवा, नासामूलिका, अग्रिमवक्त्रिका, अनुशङ्खा, अन्तर्हानव्या, पश्चिमकर्णिका, पश्चिमवक्त्रिका, कपालमूलिका चेति-संज्ञाः। ताभिर्यथासम्भवं परस्परसंयुक्ताभिः स-मुखमण्डलस्य शिरसो वहिःस्थानां सिरावलीनां रक्तमभि-प्रवर्त्तते ग्रीवासिरासु। तासां—ललाटिका, अधिभ्रुवा चेति सिराद्वयं एकैकतो ललाटस्य नासामूलस्य च पार्श्वस्थं केषाञ्चित् ललाटे दीर्घोर्ध्वपुण्ड्रवद् दृश्यते।

**नासामूलिका**[1] नाम सिरा पूर्वोक्तयोः संयोगसम्भवा नासामूलात् तिर्यगधः प्रसृता।

सैव गण्डकूटाऽधस्ताद् **अग्रिमवक्त्रिका**[2] नाम सिरा सम्पद्यते। तदापूरणं च नेत्राधरप्रदेश-नासापार्श्व-गण्डाऽधरोष्ठादिस्थानेभ्यः समागताभिः सिराभिः। सा हनुकोणाऽधःप्रदेशे पश्चिमवक्त्रिकाख्यसिराया अग्रिमशाखया मिलिता, ततो ग्रीवायामनुमन्यां नाम स्थूलसिरां प्रविष्टा।

**अनुशंखा**[3] नाम सिरा शङ्खदेशस्थैः सिराजालैरापूरिता कर्णपालि-पुरस्ताद् दृश्या। सा कर्णमूलाऽधो गम्भीरं प्रविश्य अन्तर्हानव्यया सिरया मिलिता।

**अन्तर्हानव्या**[4] नाम सिरा स्वसंज्ञाया धमन्याः सहचरी अन्तर्हानव्यैः सिराजालैरापूरिता। सा अधोहनुसन्धानाधस्ताद् अनुशङ्खया सिरया मिलिता।

**पश्चिमकर्णिका**[5] नाम सिरा कर्णपश्चिमदेशाधः पश्चिमवक्त्रिकां सिरां प्रविशति।

---

१। नासामूलिका सिरा—Angular Vein. २। अग्रिमवक्त्रिका सिरा—Anterior Facial Vein. ३। अनुशङ्खा सिरा—Superficial Temporal Vein. ४। अन्तर्हानव्या सिरा—Internal Maxillary Vein. ५। पश्चिमकर्णिका सिरा—Posterior Auricular Vein.

**पश्चिमवक्त्रिका**[1] नाम सिरा तु (११६ चित्रम्) कर्णमूले अनुशङ्खाऽन्तर्हानव्याख्ययोः सिरयोर्मेलकसम्भवा हनुकोणपृष्ठस्था, सा पुरस्ताद् अग्रिमवक्त्रिकया सिरया मिलिता। ग्रीवायामधःप्रसृता तु सैव अधिमन्या नाम सिरा सम्पद्यते।

**कपालमूलिका**[2] नाम सिरा (११६ चित्रम्) करोटिपश्चिमस्थस्य सिराजालस्य मेलकेनाऽरचिता पश्चिमकपालमूले निबद्धं पृष्ठच्छदाख्यपेशीमूलं निर्भिद्य एकैकतः कपालमूलिकाख्ये त्रिकोणे प्रविष्टा। सा गम्भीरग्रीवीयाभिः सिराभिः संयुज्यते, प्रविशति वा अनुमन्याख्यां स्थूलसिराम्।

अथ ग्रीवासिराः।

पञ्च पञ्च हि सिरा एकैकार्धे ग्रीवाया मुख्याः—पुरोग्रीविका, अनुमन्या, अधिमन्या, पश्चिमग्रीविका, मस्तिष्कमातृका चेति (११६ चित्रम्)। तासु अनुमन्या स्थूलतमा, मुख्यतमा च। तत्र—

**पुरोग्रीविका**[3] नाम सिरा जिह्वामूलस्थस्य सिराजालस्य सम्मेलनसम्भवा ग्रीवामध्यरेखायाः एकैकपार्श्वतोऽधस्तात् प्रसृता गलमूले अधिमन्याम्, अक्षाधरां सिरां वा प्रविष्टा।

**अनुमन्या**[4] नाम स्थूला सिरा (१००।११६ चित्रयोः) ग्रीवापार्श्वे मन्याख्यपेश्या प्रावृता प्रायस्तदनुक्रमेणाधःप्रसृता च। सा आदौ अन्तर्मातृकायाः, ततश्च महामातृकाया धमन्याः पार्श्ववर्त्तिनी प्राधान्येन मस्तिष्काऽभ्यन्तरीयं सिरारक्तं संगृह्णाति। मुखमण्डलार्धीयस्य उत्तानसिराजालस्य तत्पार्श्वीयग्रीवासिराणां च भूम्ना तत्रैव प्रवेशः। सेयं शिरोऽन्तरीयायाः अनुपार्श्विकाख्यसिरासरितोऽनुवृत्तिरूपा करोटिमूले (१२२ चित्रम्)। सा हि पश्चिमकपालमूलपार्श्वस्थेन मन्याखाताख्यसिरामार्गेण ग्रीवां प्रविष्टा वक्त्र-जिह्वा-गलविलादिभ्य आगताभिः सिराभिः, कपालमूलिकादिसिराभिश्चाऽपूर्यते। संयुज्यते चेयमधस्ताद् गलमूले अक्षाधराख्यया सिरया, गलमूलिकाख्य-काण्डसिराया निर्माणाय।

**अधिमन्या**[5] नाम सिरा भूम्ना शिरोग्रीवबाह्यानां सिराणां, विशेषतश्च मुखमण्डलीयगम्भीरसिराणां, रक्तसंग्राहिणी। सा ग्रीवाया एकैकपार्श्वे मन्याख्यां

---

१। पश्चिमवक्त्रिका सिरा—Posterior Facial Vein. २। कपालमूलिका सिरा—Occipital Vein. ३। पुरोग्रीविका सिरा—Anterior Jugular Vein. ४। अनुमन्या सिरा—Internal Jugular Vein. ५। अधिमन्या सिरा—External Jugular Vein.

[ ११६ चित्रम् ]

## स-मुखमण्डलीयाः शिरोबाह्याः सिराः।




[ † —एतच्चिह्नं सिरावाचकम्। च—चिबुकाधरीयो ग्रन्थिः। ग—ग्रीवाप्रच्छदा प्रावरणी। पृ—पृष्ठच्छदा पेशी। एतान्यक्षराणि चित्रान्तर्दृश्यानि। ]

चित्रव्याख्या—१। ललाटिका सिरा। २। अधिभ्रुवा सिरा। ३। नासामूलिका सिरा। ४। ततुप्रभवाः सिराः। ५। ओष्ठप्रभवाः सिराः। ६। अग्रिमवक्त्रिका सिरा। ७। रासनी सिरा। ८। गलबिलागताः सिराः। ९। पुरोग्रीविका सिरा। १०। उत्तरग्रैवेयकी सिरा। ११। ग्रीवाप्रभवाः सिराः। ×—एतच्चिह्नं पश्चिमवक्त्रिका सिरान्तर्दृश्यम्।

( To face page 138 )

( १२० चित्रम् )

## कपालपत्रान्तरिकाः सिराः ।

[ अत्र कपालास्थ्नां निर्मापकं बाह्यपत्रकमपसारितम्, अभ्यन्तरसिराजालप्रदर्शनाय ]




चित्रव्याख्या—१। अग्रिमकपालिकाः सिराः। २। शङ्खपूर्वाः सिराः। ३। पार्श्वकपालिकाः सिराः। ४-४। पश्चिमकपालिकाः सिराः।

पेशीमधिरुढ़ा कर्णमूलाद् अक्षकास्थिमध्यविन्दुं यावत् तिर्यक् प्रसृता। सेयं पुरःपश्चिमग्रीविकाभ्यां सिराभ्याम्, अंस-ग्रीवीय-तिरश्चीनसिराभ्यां चाऽपूरिता ग्रीवामूले अक्षाधरां सिरां प्रविशति ( ११९ चित्रम् )।

**पश्चिमग्रीविका**[1] नाम सिरा करोटिपश्चिमस्थाभिरुत्तानसिराभिरापूरिता पश्चिमकपालमूलादारभ्य तिर्यग् ग्रीवापार्श्वे अधिमन्यां सिरां प्रविष्टा।

**मस्तिष्कमातृका**[2] नाम सिरा तत्संज्ञाया धमन्याः पार्श्ववर्त्तिनी, सा मस्तिष्कमूलिकसिराजालस्य ग्रीवाकशेरुकीयसिराजालस्य च रक्तसंग्राहिणी। सेयं ग्रीवाकशेरुकाणां बाहुप्रवर्धनेषु स्थितेन ऋजुरन्ध्रपथेन गत्वा अन्ते गलमूलिकां नाम सिरां प्रविशति।

अथ शिरोऽभ्यन्तरीयाः सिराः।

करोटिसम्पुटाभ्यन्तरीयास्तावत् सिरास्त्रिविधाः — कपाल-पत्रान्तरिकाः, मस्तिष्कीयाः, सिरासरितश्चेति। तत्र--

१। **कपालपत्रान्तरिकाः**[3] नाम ( १२० चित्रम् ) स्थूलसिराः कपालास्थ्नां निर्मापकस्य पत्रकद्वयस्यान्तरालेषु प्रसृताः। ता मस्तिष्कवृातगाभिः सिराभिः, सिरासरिद्भिः, करोटिबाह्याभिः सिराभिश्च सम्बन्धवत्यः सूक्ष्मसिराभिः कपालास्थिच्छिद्रगाभिः। चतुर्विधाश्च ताः—अग्रिमकपालिकाः, शङ्खपूर्वाः, शङ्खपश्चिमाः, पश्चिमकपालिकाश्चेति। तासां परस्परं शाखाप्रतानैः संयोगः, पुरः-पार्श्व-पश्चिमकपालानां पत्रकद्वयान्तरालेषु।

२। **मस्तिष्कीयाः सिराः** पुनस्त्रिविधाः—मस्तिष्कप्रभवाः, अनुमस्तिष्कप्रभवाः, सुषुम्नाशीर्षकप्रभवाश्चेति।

तासामिमे विशेषाः। (क) तासु सिराप्राचीरिका अतीव तनवः, मांसतन्तुहीनाः, सिराकपाटिकारहिताश्च। (ख) न च ताः धमनीसहचर्यः। (ग) सर्वं च तासां रक्तं सिरासरित्सु सिराकुल्यासु वा प्रविशति।

तत्र मस्तिष्कप्रभवाः सिराः द्वेधा विभज्यन्ते— मस्तिष्कबाह्याः, मस्तिष्काभ्यन्तरीयाश्चेति। तासां बाह्याः प्रायेण मस्तिष्कपिण्डकानामन्तरालस्थासु सीतासु प्रसृताः। ताः स्थानभेदेन उत्तराऽधर-मध्यम-तलगाख्यासु चतुर्विधसिरासु विभक्ताः।

---

१। पश्चिमग्रीविका सिरा—Posterior External Jugular Vein. २। मस्तिष्कमातृका सिरा—Vertebral Vein. ३। कपालपत्रान्तरिकाः सिराः—Diploic Veins.

मस्तिष्काभ्यन्तरीयाः सिरास्तु मस्तिष्कस्याभ्यन्तरभागेभ्यः सम्भूय स्थूलसिरयोः परिणमन्ति। ते च स्थूलसिरे मस्तिष्काभ्यन्तरीयसिरामञ्जरीद्वयस्य रक्तसंग्राहिण्यौ मस्तिष्कसेतोरधस्तात् पश्चिमतो निर्गते। तयोः संयोगसमुत्था **महती मस्तिष्कमूलिका**[१] नाम सिरा मस्तिष्कमूले दीर्घिकायोजनीं नाम सिराकुल्यां प्रविष्टा। सन्ति चापरे अप्यत्र गम्भीरसिरे—अन्तर्मस्तिष्कीये नाम।

अनुमस्तिष्कप्रभवाः[२] सिराः पुनरनुमस्तिष्कीयरक्तसंग्राहिण्यः, ता उत्तराधरयोः सिरावल्योर्विभज्यन्ते। तत्र उत्तराः सिरावल्यः संघीभूय दीर्घिकायोजनीं नाम सिराकुल्यां, महतीं मस्तिष्कमूलिकां सिरां वा प्रविशन्ति। अधरास्तु अनुपार्श्विकाख्ये सिरासरितौ पश्चिमाधरिकां सिराकुल्याञ्च।

सुषुम्नाशीर्षकप्रभवाः सिरास्तु उष्णीषकप्रभवाभिः सिराभिः सह मस्तिष्कमूलिकाख्यं सिराचक्रं प्रविशन्ति, अधरे वा सिराकुल्ये अश्मतटिनीसंज्ञे। सम्बन्धश्च तासां प्रायेण सुषुम्नाकाण्डीयसिराभिरप्यधस्तात्। अन्ते च तासां शोणितं मस्तिष्कमातृकयोः सिरयोरभिविशन्ति। ते च वर्णितपूर्वे।

३। **सिरासरितः, सिराकुल्या**[३] वा नाम (१२१।१२२ चित्रयोः) तत्र तत्र स्तरद्वये विभक्ताया मस्तिष्कबहिर्वृतेरन्तरालस्थाः सिरामार्गाः शिरःसम्पुटस्य अभ्यन्तरगाः। ताः कपालास्थ्नां जतूका-शङ्खास्थ्नोश्च सिरापरिखासु वर्णितचरासु प्रवहन्ति, आपूर्यन्ते च मस्तिष्कीयाभिः सिराभिः प्राधान्येन। स्वयञ्चापूरयन्ति ताः अनुपार्श्विकाभ्यां सिरासरिद्भ्याम् अनुमन्याख्ये ग्रीवासिरे। तेषाञ्च सिरामार्गाणां स्थूलदीर्घाः सिरासरित्संज्ञाः, तनुह्रस्वास्तु सिराकुल्याः नाम। साधारणी वा संज्ञा सर्वासां सिरासरिदिति।

ताश्च द्विविधाः। पश्चिमोत्तराः पश्चिमाधराश्चेति। तासां पश्चिमोत्तराः पञ्च। यथा—

(१) **दीर्घिका उत्तरा**[४] नाम सिरासरित् पश्चिमोत्तरासु सिरासरित्सु प्रधाना दीर्घतमा च। सा करोटिपटलान्तः मध्यरेखावस्थितां दीर्घिकां नाम सिरापरिखामाश्रित्य प्रवहति। धार्यते च सा दात्रिकाख्यकलाया ऊर्ध्वधारया

---

१। महती मस्तिष्कमूलिका सिरा—Great Cerebral Vein. २। अनुमस्तिष्कपदेन धम्मिल्लकोष्णीषकयोर्ग्रहणेऽपि अत्र प्रधानतो धम्मिल्लकवाचकमेतत्। उष्णीषकप्रभवानां सिराणामग्रे पृथगभिधानात्। ३। सिरासरितः, सिराकुल्याः वा—Venous Sinuses. ४। दीर्घिका उत्तरा सिरासरित्—Superior Sagittal Sinus.

( १२१ चित्रम् )

## शिरोऽभ्यन्तरीयाः सिरासरितः सिराकुल्याश्च ।

[ करोटेरनुलम्बच्छेदेन दर्शिताः ]




म—मस्तिष्कवृतिस्थाः सिराः। पश्चिमकपालिका स—सिरासरिदापूरणयः।

[ १२२ चित्रम् ]

( ता एव करोटेरनुप्रस्थच्छेदेन करोटिभूमौ दर्शिताः )




महासिरावर्त्तः

( To face page 140 )

स्तरद्वयविभक्तया। स्तरद्वयं च तत् सिरापरिखातटयोः संसक्तम्। सेयं सिरासरित् पुरस्ताद् झर्झरास्थ्नः शिखरकण्टकादारभ्य पश्चिमकपालस्य पुरस्तलस्थं महावर्त्तं यावद् गत्वा तत्रैव अनुपार्श्विकाभ्यां सिरासरिद्भ्यां, क्वचिद् दक्षिणपार्श्विकया वा सिरासरिता मिलिता। तदुभयतश्च करोटिपटले क्वचित् क्वचिद् दृश्यानि त्रिचतुराणि सिराविस्फारस्थानानि सिरापल्वलानि[1] नाम येषु प्रविशन्ति काश्चिन्मस्तिष्कीया सिराः।

दीर्घिकामुत्तरां नाम सिरासरितं च प्रविशन्ति उत्तरा मस्तिष्काभ्यन्तरीयाः, कपालान्तरिकाः, मस्तिष्कवृतिगाश्च सिराः।

(२) **दीर्घिका अधरा**[2] नाम सिराकुल्या दात्रिकाख्यस्य मस्तिष्क-गोलार्धद्वयविभाजकस्य कलाभागस्य अधोधारायां पश्चिमार्धानुक्रमेण प्रसृता नातिस्थूला सिरा तत्स्तरद्वयान्तराले आलम्बते। सा दीर्घिकायोजन्याख्यया पश्चिमस्थया सिराकुल्यया मिलिता।

(३) **दीर्घिकायोजनी**[3] नाम सिराकुल्या मस्तिष्कवहिर्वृतिभूतायाः कलायाः मध्यरेखास्थिता पूर्वोक्तया सिराकुल्यया पुरः संयुज्यते, पश्चिमतश्च महावर्त्तेन।

(४) **अनुपार्श्विके**[4] नाम द्वे स्थूलतमे सिरासरितौ पश्चिमकपालस्य आभ्यन्तरसिराकेन्द्रं महावर्त्तमुभयतो बाहुवदवस्थितयोः पार्श्विकाख्यसिरापरिखयोः प्रवहतः। धार्यते च ते अनुप्रस्थमवस्थितस्य पक्षपुटसंज्ञस्य मस्तिष्क-वृतिभागस्य पश्चिमधारया स्तरद्वयविभक्तया। स्तरद्वयं च तत् पार्श्विकसिरा-परिखातटयोः संसक्तम्। तयोर्मध्यस्थो महावर्त्तः पुरस्तादूर्ध्वं दीर्घिकया, अधश्च अनुदीर्घिकया सिरासरिता संयुक्तः। तत्रायं विशेषः—दक्षिणानुपार्श्विकाख्या सिरासरित् कदाचिद् उत्तरदीर्घिकाया अनुवृत्तिरूपा, वामपार्श्विका च अनु-दीर्घिकायाः, तदा न दृश्यते तयोः परस्परसंयोगो महावर्त्ते। ते च अनुपार्श्विकाख्ये सिरासरितौ बहिःसीम्नोर्वक्रीभूय अर्धचन्द्रिकाख्ययोः सिरापरिखयोः (पूर्वोक्तयोः) प्रवहतः। सङ्गते च ते बहिःप्रान्तयोः अनुमन्याख्यस्थूलसिराभ्याम्।

(५) **पश्चिमकपालिका**[5] नाम ह्रस्वा सिराकुल्या पश्चिमकपाल-मूलादूर्ध्वं मध्यरेखानुक्रमेण गत्वा महासिरावर्त्तं प्रविष्टा।

---

१। सिरापल्वलानि—Venous Lacunæ. २। दीर्घिका अधरा—Inferior Sagittal Sinus. ३। दीर्घिकायोजनी—Straight Sinus. ४। अनुपार्श्विके—Transverse Sinuses. ५। पश्चिमकपालिका—Occipital Sinus.

**महासिरावर्त्तः**[1], **महावर्त्तो वा** नाम पूर्वोक्तानां पञ्चानामपि सिरासरितां सन्धिसन्निपातः पश्चिमकपालस्य आभ्यन्तरतलकेन्द्रस्थः । तमेव अधिपतिसंज्ञं सद्योमारकं सिराममेंति वर्णयन्ति प्राञ्चः ।

पश्चिमाधरास्तावत् सिरासरितश्चतस्रो युग्मरूपाः । अस्ति चावैकं सिराकुल्याचक्रम्, अपराश्च तनवः सिराकुल्यास्तदुभयतो मस्तिष्कमूले । तद्यथा—

(१) **त्रिकोणिके**[2] नाम सिरासरितौ ( १२२ चित्रम् ) युग्मासु सिरासरित्सु प्रधानभूते । ते जतूकास्थ्नः शरीरमुभयतो मातृकापरिखयोरवतिष्ठेते । तत्परिसरस्य त्रिकोणप्रायत्वाच्च तयोस्त्रिकोणिकेति संज्ञा । एकैका च त्रिकोणिका अग्रे जतूकापक्षान्तरालादारभ्य शङ्खास्थ्नः अश्मभागाग्रं यावत् प्रसृता । ताञ्च निर्भिद्य प्रवर्त्तते अन्तर्मातृका नाम धमनीति तद्वैचित्र्यम् । तत्परिसरे च दृश्यन्ते कलावृतास्तृतीयादिषष्ठ्यन्ता नाड्यः, कलांशाश्च तन्तुजालाकाराः ।

आपूरणञ्च त्रिकोणिकयोः सिरासरितोः सम्पद्यते सिराभिश्चाक्षुषीभिः, मस्तिष्कीयाभिश्च । आपतति च तद्रक्तं पश्चिमतः अनुपार्श्विकयोः सिरासरितोः अश्मतटिन्याख्यसिराकुल्याद्वारेण ।

(२) **त्रिकोणिकायोजन्यौ**[3] नाम द्वे ह्रस्वे सिराकुल्ये—अग्रिमा पश्चिमा चेति । ते जतूकास्थ्नः पोषणकखातस्य पुरः पश्चाच्च अनुप्रस्थमवस्थिते त्रिकोणिकाख्ये सिरासरितौ परस्परं योजयतः । पोषणकग्रन्थिं परिवेष्ट्य स्थितत्वाच्च तयोर्मिलितयोः कदाचित् <u>परिपोषणकं सिराचक्रम्</u>—इति संज्ञा ।

(३) **अश्मतटिन्यौ**[4] नाम एकैकतो द्वे द्वे तनुदीर्घे सिराकुल्ये उत्तराधरे शङ्खास्थ्नः अश्मतटभागमधितिष्ठतः । तासां चतसृणामुत्तरे सिराकुल्ये दीर्घतरे अनुपार्श्विकाभ्यां सिरासरिद्भ्यां त्रिकोणिकयोः संयोजन्यौ । अधरे तु सिराकुल्ये त्रिकोणिकागतं रक्तांशं, सुषुम्नाशीर्षक-धम्मिल्लकोष्णोषकस्थसिराणां रक्तं च संगृह्य अनुमन्याख्ये ग्रीवासिरे प्रापयतः ।

(४) **मस्तिष्कमूलिकं**[5] नाम सिराकुल्याचक्रं मस्तिष्कमूलभागे पश्चिमकपालमूलमधिशेते । तद्द अधरयोरश्मतटिन्योरनुप्रस्थं संयोजनम् ।

---

१ । **महासिरावर्त्तः**—Confluence of Sinuses. २ । **त्रिकोणिके**—Cavernous Sinuses. ३ । **त्रिकोणिकायोजन्यौ**—Inter-cavernous Sinuses. ४ । **अश्मतटिन्यौ**—Petrosal ( Sup. & Inf. ) Sinuses. ५ । **मस्तिष्कमूलिकं सिराचक्रम्**—Basilar Plexus.

तद्रक्तं च पृष्ठवंशान्तः कशेरुकान्तरीयमग्रिमसिराजालं प्रविशति महाविवरस्य परिसरमाश्रित्य । मस्तिष्कमूलिके नाम ग्रीवासिरे च पूर्वोक्ते तद्रक्तं संगृह्णीतः ।

सन्ति चापराः सूक्ष्माः सिराकुल्याः पार्श्वकपालयोः शङ्खास्थ्नश्च धमनी-प्रतानाङ्केषु संन्यस्ताः । ता मध्यममस्तिष्कवृतिगयोर्धमन्योः शाखासहचर्यः । तासां रक्तं भूम्ना दीर्घिकायां सिरासरिति, तत्संयुक्तपल्वलेषु वा प्रविशति ।

स्मर्त्तव्यञ्चेदमत्र प्रसङ्गे । सिरासरितां रक्ताधिक्ये सति तत्परीवाह-भूताभिः सिराभिः सप्ताग्रसंख्याभिः मस्तिष्कान्तरीयरक्तस्य बहिर्निर्गमः । ताः हि करोटिच्छिद्रपथैः पार्श्वकपालादिस्थितैर्विनिर्गत्य ग्रीवासिरासु रक्त-मभिवहन्ति । ताः **सिरापरीवाहिका**[१]-संज्ञाः ।

### अथ नेत्रगुहान्तरीयाः सिराः ।

द्विविधाः खलु सिराः नेत्रसम्बन्धिन्यः । ताश्चाक्षुषीसंज्ञाया धमन्याः शाखाप्रतानसहचर्यः । द्विविधाश्च ताः—नेत्रगोलकीयास्तत्परिसरोत्थाश्च । तत्राद्याः—सिरागुल्मिकाः नाम नेत्रगोलकस्य शुक्लकर्बुरवृत्योरन्तराले तृणगुल्मवद् दृश्याः, चतस्रः पञ्च वा प्रतिनेत्रम् । ताः सम्मिलिता उत्तराधर चाक्षुष्योः सिरयोः परिणमन्ति । ते च सिरे एकैकतस्त्रिकोणिकां नाम सिरासरितं प्रविशतः । विस्तरस्तु तासामिन्द्रियखण्डे द्रष्टव्यः ।

---

## तृतीयोऽध्यायः ।

### अथातो मध्यकायसिरावर्णनीयमध्यायं व्याख्यास्यामः ।

प्रायेण सार्वकायिकसिराणां रक्तसंग्राहिण्यौ द्वे महासिरे उत्तराधरे नाम, ते हृदयस्य दक्षिणालिन्दं प्रविशतः । सन्ति च पृथगेव ताभ्यामुरसि फुस्फुसागताः सिराः, हार्दिक्यः सिराश्च । उदरे च प्रतीहारिणी नाम स्थूलसिरा यकृदभि-गामिनी । नास्ति तासां साक्षात् सम्बन्धो महासिराभ्याम् ।

तत्र भूम्ना ऊर्ध्वशाखासिराणां, कासांचिद् ग्रीवासिराणां च, संग्रहः अक्षाधराभ्यां सिराभ्याम् । शिरोग्रीवीयाणां च अनुमन्याभ्याम् । अक्षाधरानु-मन्ययोश्च मेलकसंभूता एकैकतो गलमूलिका नाम काण्डसिरा,—सा कासांचित् शिरोग्रीवीयसिराणामपि साक्षाद् रक्तसंग्राहिणी । उभाभ्यां च गलमूलिकाभ्यां

---

१ । सिरापरीवाहिकाः—Emissary Veins.

सम्भवति उत्तरा महासिरा। सा अपराभिः औरसीभिः सिराभिर्बाह्याभ्यन्तरीयाभिरापूरिता प्रविशति हृदयदक्षिणालिन्दमूर्ध्वदेशात्। फुफ्फुसागताः सिराः पुनः विशुद्धरक्तवहाः हृदयस्य वामालिन्दप्रवेशिन्यः। हार्दिक्यस्तु हृदयदक्षिणालिन्दप्रवेशिन्यः। ता एता औरसीसंज्ञाः सिराः समासेन व्याख्याताः।

अधःशाखीयसिराणां पुनः संग्रहो भूम्ना और्वीभ्यां सिराभ्याम्। ते च वंक्षणदरीप्रविष्टे अधिश्रोणिके बाह्ये नाम स्थूलसिरे भवतः। गुदोपस्थ-वस्तिगुहादिसिराणां संग्रहस्तु भूम्ना अधिश्रोणिकाभ्यामाभ्यन्तरीभ्याम्। अधिश्रोणिकयोश्च बाह्याभ्यन्तर्योः संयोगेन एकैकतः सम्भूता अधिश्रोणिका साधारणी नाम स्थूलसिरा, सा संग्राहिणी कटि-त्रिकीयसिराणां च कासाञ्चित्। उभयोश्च साधारण्योरधिश्रोणिकयोर्मेलनेन सम्भवति अधरा महासिरा। सा अपराभिरुदर्यसिराभिर्बाह्याभ्यन्तरीयाभिरापूरिता प्रविशति हृदयदक्षिणालिन्दमधोदेशात्।

प्रतीहारिणी सिरा तु आमाशय-पक्काशय-प्लीहादिरक्तसंग्राहिणी यकृदेव प्रविशति। संगृह्यते च तद्रक्तमधरायां महासिरायां याकृतीभिः सिराभिः।

पृष्ठवंशीयसिराणां पुनर्ग्रीवा-पृष्ठ-कटिगतानां क्रमेण ग्रीवा-पृष्ठ-कटिदेशीयसिरासु पूर्वोक्तासु प्रवेशः। ताः पृथगेव वक्ष्यामः शिष्यबुद्धिवैशद्याय।

## अथ औरस्यः सिराः।

औरसीसंज्ञासु सिरासु द्वादश मुख्याः—द्वे गलमूलिके, एका उत्तरा महासिरा, फुफ्फुसीयसिराश्चतस्रः, हार्दिक्यश्च सिराः पञ्च षड् वा।

**गलमूलिके**[1] नाम स्थूले काण्डसिरे (१२३ चित्रम्) गलमूलाभ्यां तिर्यगधो गत्वा महाधमन्यास्तोरणभागादूर्ध्वं परस्परं मिलिते। ताभ्यां ग्रीवांसबाहुसिराणामखिलानां संग्रहः। तयोः—

**दक्षिणा गलमूलिका**[2] सार्धाङ्गुलमात्रदीर्घा दक्षिणाक्षकोरःफलकसन्धानपृष्ठे दक्षिणयोरक्षाधरानुमन्ययोः संयोगसमुत्था। सा ऋजुप्रायगत्या अधःप्रसृता तिरश्चीनागतया वामगलमूलिकया मिलिता प्रथमदक्षिणोपपर्शुकापृष्ठतः। सा काण्डमूलाया धमन्याः पुरस्ताद् दक्षिणतश्च द्रष्टव्या। तदापूरण्यश्च सिराश्चतस्रः। यथा—दक्षिणा मस्तिष्कमातृका, अन्तःस्तनिका

१। गलमूलिके—Innominate Veins. २। दक्षिणा गलमूलिका—Right Innominate Vein.

अधरग्रैवेयकी, प्रथमा पर्शुकानुगा चेति *। उत्तरा पर्शुकानुगामेलनी दक्षिणा च तामेव प्रविशति प्रायः।

**वामा गलमूलिका**[1] सार्धाङ्गुलदीर्घा वामाऽक्षकोरःसन्धानपृष्ठे दृश्या वामयोरक्षाधराऽनुमन्ययोः सिरयोः संयोगसमुत्था। सा अत्यन्ततिरश्चीनगत्या पूर्वोक्तप्रदेशे दक्षिणगलमूलिकया सिरया मिलिता उत्तरां महासिरां सम्पादयति। उल्लङ्घयति च सा तिरश्चीनगत्या पश्चाद्वर्त्तिनीं वामामक्षाधरां धमनीम्, अन्तःस्तनिकाञ्च, वामामनुकोष्ठिकां प्राणदाञ्च नाड़ीं, क्लोमनलिकां, काण्डमूलाख्यां धमनीञ्च। आपूरयन्ति च तां पूर्ववदेव सिराः वामाः, वामा प्रथमपर्शुकानुगामेलनी उत्तरा च सिरा कदाचित् ( ६८ चित्रमपि द्रष्टव्यम् )।

**अन्तःस्तनिके**[2] नाम सिरे ( १२३ चित्रम् ) स्वसंज्ञयोर्धमन्योः सहचर्यौ। ते उरःपरिसरान्तः उरःफलकपार्श्वसन्धानरेखानुक्रमेणोभयत ऊर्ध्वं प्रसृते। तयोर्दक्षिणा दक्षिणां, वामा च वामां गलमूलिकां प्रविष्टा। ते उरःपरिसरीयाणां बह्वनां बाह्याभ्यन्तरसिराणां रक्तसंग्राहिण्यौ।

**अधरग्रैवेयक्यौ**[3] नाम सिरे ( १२३ चित्रम् ) ग्रैवेयकग्रन्थिमूलस्थात् सिराचक्रात् सम्भूय अधोमुखं गत्वा गलमूलिकयोः सिरयोः प्रविष्टे पूर्ववत्। तच्च सिराचक्रमापूर्यते श्वासाऽन्ननलिकादिसमुत्थाभिरनेकाभिः सिराभिः।

**पर्शुकानुगाः**[4] नाम सिराः स्वसंज्ञानां धमनीनां सहचर्यः एकैकत एकादशसंख्याः (१२३ चित्रम्)। तासां प्रथमपर्शुकानुगे पृष्ठवंश-पर्शुकासन्धानदेशाभ्यामूर्ध्वं गत्वा गलमूलिकयोः सिरयोः प्रविष्टे—वामा वामां, दक्षिणा च दक्षिणामिति क्रमेण। द्वितीय-तृतीय-चतुर्थीनान्तु पर्शुकानुगसिराणां संयोगेन एकैकतः सम्भूता उत्तरा पर्शुकानुगामेलनी[5] नाम सिरा। तयोर्वामा वामां गलमूलिकां प्रविष्टा, दक्षिणा तु दक्षिणां गलमूलिकां, दक्षिणपुरोवंशिकां वा। अपरासां तु पर्शुकानुगानां सिराणां प्रवेशः पुरोवंशिकाख्यासु सिरासु वक्ष्यमाणासु। सर्वाश्च पर्शुकानुगा उरःपरिसरस्य पृष्ठस्थानां सिराणां पार्श्वीयसिराणां च संग्राहिण्यः।

---

* दक्षिणेति विशेषणं सर्वत्र योजनीयम्। एवमग्रे वामेति विशेषणमपि। १। वामा गलमूलिका सिरा—Left Innominate Vein. २। अन्तःस्तनिके सिरे—Internal Mammary Veins. ३। अधरग्रैवेयक्यौ सिरे—Inferior Thyreoid Veins. ४। पर्शुकानुगाः सिराः—Intercostal Veins. ५। उत्तरा पर्शुकानुगामेलनी सिरा—Superior Intercostal Vein.

## अथ उत्तरा महासिरा ।

**उत्तरा महासिरा**[1] उत्तरशरीरार्धस्य सिरारक्तसंग्राहिणी (१२३ चित्रम्) स्थूलतमसिराणामन्यतमा पञ्चाङ्गुलदीर्घा च। सा गलमूलिकयोः सिरयोः संयोगेन निर्मिता दक्षिणप्रथमोपपर्शुकापृष्ठादारभ्य उरःफलकस्य दक्षिणसीमानुक्रमेणाधः प्रसृता, दक्षिणतस्तृतीयोपपर्शुकां यावद् गत्वा हृदयस्य दक्षिणालिन्दं प्रविष्टा। सेयमधरार्धे हृदयधरस्य कलाकोषस्य दक्षिणांशेनाच्छाद्यते।

व्यतिक्रमश्च तावदस्या इत्थंभूतः। तस्याः पुरस्ताद्—दक्षिणफुस्फुसस्य पुरोधारा तदाच्छादिकलासहिता। पश्चिमतो दक्षिणफुस्फुसस्य वृन्तदेशः, प्राणदा च नाड़ी दक्षिणा। दक्षिणतो—दक्षिणा अनुकोष्ठिका नाड़ी, दक्षिणफुस्फुसश्च तच्छादिकलासहितः। वामतश्च आरोहिणी महाधमनी।

अथास्या आपूरण्यः सिराः यथा—पुरोवंशिका दक्षिणा, हृत्कोषीयाः सिराः, अपराश्च फुस्फुसान्तरालीय-रसग्रन्थ्यादिप्रभवाः। सेयम्—

<u>पुरोवंशिका दक्षिणा</u>[2] नाम सिरा (१२३ चित्रम्) पृष्ठवंशस्य पुरस्ताद् दक्षिणपार्श्वानुक्रमेण दृश्या, सा पुरोवंशिकाख्यसिरासु दीर्घतमा। साऽसौ उदरगुहायां दक्षिणानुकटिकायाः सिरायाः (अधरमहासिरायाः वा) आपूरणीरूपेण प्रथमकटिकशेरुकायाः पुरोभागादारभ्य ऊर्ध्वं गता महाप्राचीरास्थमहाधमनीच्छिद्रपथेन उरोगुहां प्रविष्टा। उरोगुहायाञ्च चतुर्थपृष्ठकशेरुकान्तं गत्वा अग्रतो धनुर्वक्राऽसौ सिरा दक्षिणं फुस्फुसवृन्तमुल्लंघ्य उत्तरां महासिरां प्रविष्टा। तदापूरण्यश्च सिराः बहवः। तद्यथा—दश दक्षिणपर्शुकानुगाः, वामे पुरोवंशिके, दक्षिणाः क्लोमसिराः, हृत्कोषीयसिराः, फुस्फुसान्तरालीयसिराश्चेति।

<u>पुरोवंशिका वामोत्तरा</u>[3] <u>वामाधरा</u>[4] चेति द्वे सिरे पृष्ठवंशवामतः (१२३ चित्रम्)। तयोराद्या चतुर्थ्यादिषष्ठ्यन्ताभिः पर्शुकानुगाख्यसिराभिः, प्रायेण वामाभिः क्लोमसिराभिश्च आपूरिता सप्तमपृष्ठवंशमुल्लंघ्य दक्षिणां

---

१। **उत्तरा महासिरा**—Superior Vena Cava. २। **पुरोवंशिका दक्षिणा सिरा**—Azygos Vein. ३। **पुरोवंशिका वामोत्तरा सिरा**—Hemi-azygos Vein. ४। **पुरोवंशिका वामाधरा सिरा**—Accessory Hemi-azygos Vein.

[ १२३ चित्रम् ] मध्यकायसिराः ।

( गलकोष्ठयोः सम्मुखभागापसारणेन दर्शिताः )




वृ० वृ०—वृक्कौ ।

[ To face page 146 ]

पुरोवंशिकां प्रविष्टा। अपरा कटिवंशपुरोभागादारभ्य दक्षिणपुरोवंशिकाव-न्महाप्राचीरां निर्भिद्य ऊर्ध्वं गता अष्टमपृष्ठकशेरुकामुल्लंघ्य तामेव सिरां प्रविशति। सा चतुर्भिः पञ्चभिर्वा निम्नतमाभिः पर्शुकानुगाख्यसिराभिरापूर्यते। कदाचित्तु वामोत्तरायाः पुरोवंशिकायाः सर्वथाऽभावः। तदा वामोत्तरा पर्शुकानुगामेलनी नाम सिरा तत्कार्यकरी।

अथ फुस्फुसीयाः सिराः।

**फुस्फुसीयाः**[1] फुस्फुसोत्था वा नाम सिराः खलु संज्ञामात्रेण सिराः, हृदयाभिगत्वात्। वस्तुतस्तु ताः फुस्फुसविशोधितं धमनीरक्तमभिवहन्त्यः फौस्फुसरक्तसंवहनस्य साधनभूताः धमनीवत् कार्यतः। फुस्फुसाभिगा धमनी तु सिरारक्तं वहन्त्यपि, हृदयाद् बहिःप्रसराद् धमनीसंज्ञा—इत्यवोचाम (९८।९९ चित्रयोः)।

ताश्च एकैकफुस्फुसादागते द्वे द्वे इति चतस्रः। तासामारम्भः फुस्फुसीय-वायुकोषानभितः स्थितेभ्यो जालकेभ्यः सूक्ष्मैः सिराप्रतानैः। तैर्हि मिलितै-रारच्यन्ते सूक्ष्माः सिराः, तासाञ्च क्रमेण परस्परसंयोगेन एकैकफुस्फुसपिण्डादुद्-भवति परिणामे एकैका सिरा। तत्र दक्षिणफुस्फुसस्य पिण्डत्रयविभक्तत्वात्, ततः सम्भवन्ति तिस्रः सिराः। ताश्च फुस्फुसवृन्तोपकण्ठे द्वयोः सिरयोः परिणमन्ति। वामफुस्फुसात्त पिण्डद्वयविभक्तादादित एव द्वे सिरे सम्भवतः।

तासां च फुस्फुसीयसिराणां हृदयवामालिन्दं पृष्ठभागे निर्भिद्य प्रवेशः, तस्य वामदक्षिणपार्श्वस्थितैश्चतुर्भिश्छिद्रैः। कदाचित्तु वामं सिराद्वयं मिलित-मेकेनैव च्छिद्रपथेन प्रविशति, तदा त्रीण्येव दृश्यानि छिद्राणि। क्लोमसिरास्तु सिरारक्ताभिवाहिन्यो दक्षिणां वामां वा पुरोवंशिकां सिरां प्रविशन्तीत्युक्तपूर्वम्।

**हार्दिक्यः**[2] सिरास्तु प्रायेण हार्दिकधमनीनां सहचर्यः। ता हृदयस्य बहिःप्राचीरस्थासु सीतासु दृश्याः पुरः, पश्चात्, पार्श्वतश्च। तासां मूलायतनभूता हृदयपृष्ठस्था वालमूलिकाकारा सिरा, हार्दिकी मूलसिरा[3] नाम। तस्यां पञ्चषाणां हार्दिकसिराणां प्रवेशः। प्रविशति च सा हृदयदक्षिणालिन्दम् (१२४ चित्रम्)।

सन्ति चापरा अपि क्षुद्राः सिरा इतस्ततो हृदयपरिसरे दृश्याः, ताः साक्षादेव सूक्ष्मैश्छिद्रपथैर्हृदयस्य दक्षिणालिन्दे दक्षिणनिलये वा प्रविष्टाः।

---

१। फुस्फुसीयाः सिराः—Pulmonary Veins. २। हार्दिक्यः सिराः—Cardiac Veins.
३। हार्दिकी मूलसिरा—Coronary Sinus.

## अथ उदर्यसिराः।

उदर्यसिरासु अष्टौ मुख्याः। द्वे अधिश्रोणिके बाह्ये, द्वे अधिश्रोणिके आभ्यन्तर्यौ चेति। तासां द्वयोर्द्वयोः संयोगेन सम्भूते द्वे अधिश्रोणिके साधारण्यौ। तयोर्मेलकेन एका अधरा महासिरा। तदतिरिक्ता च आमाशय-पक्वाशयादि-रक्तसंग्राहिणी एका महासिरा प्रतीहारिणी नाम।

**अधिश्रोणिके बाह्ये**[१] नाम सिरे (१२३ चित्रम्) और्व्योः सिरयोरनुवृत्तिरूपे वंक्षणदरीमुखात् त्रिकपृष्ठवंशसन्धिं यावत् स्वसंज्ञयोर्धमन्योरन्तःपार्श्वगे। तयोरेकैका अधिश्रोणिकया आभ्यन्तर्या मिलिता अधिश्रोणिकां साधारणीं निर्मिमीते। तदापूरण्यश्च सिरास्तिस्रः एकैकतो धमनीशाखासहचर्यः। यथा— अधरा औदरिकी[२], जघनवेष्टनिका गम्भीरा[३], भगानुगा[४] चेति। तासां स्थान-संस्थानादि तत्संज्ञकधमनीवद् विज्ञेयम्।

**अधिश्रोणिके आभ्यन्तर्यौ**[५] नाम सिरे (१२३ चित्रम्) वस्ति-गुहान्तरीय सिरासु प्रधानभूते स्वसंज्ञयोर्धमन्योः पार्श्ववर्त्तिन्यौ। एकैका च आभ्यन्तर्यधिश्रोणिका त्रिकपृष्ठवंशसन्धानस्य पुरस्तादेकैकतो बाह्यया अधि-श्रोणिकाख्यसिरया मिलिता अधिश्रोणिकां साधारणीं नाम सिरां रचयति।

एकैकस्या अधिश्रोणिकाया आभ्यन्तर्याः आपूरण्यः सिरास्तु प्रायेण धमनीसहचर्यः, ताः इत्थं वेदितव्याः। श्रोणिबहिर्देशतस्तत्प्रविष्टाः—उत्तराधर-नितम्बिन्यः सिराः[६], श्रोणिवंक्षणिका सिरा[७], गुदोपस्थिकाः सिराश्च[८]। त्रिकपार्श्वतः,—त्रिकपार्श्विक्यः सिराः[९] त्रिकास्थ्नः पुरोभागे मिलिताः। गुदोपस्थान्तःसीम्नि,—मध्यमा गुदान्तिका[१०], वस्ति-योनि-गर्भाशयादिसमुत्थाः सिराश्च वक्ष्यमाणसिराचक्रेभ्यः सम्भूताः।

---

१। अधिश्रोणिके बाह्ये सिरे—External Iliac Veins. २। अधरा औदरिकी सिरा—Inferior Epigastric Vein. ३। जघनवेष्टनिका गम्भीरा सिरा—Deep Iliac Circumflex Vein. ४। भगानुगा सिरा—Pubic Vein. ५। अधिश्रोणिके आभ्यन्तर्यौ सिरे—Internal Iliac or HypogastricVeins. ६। उत्तराधरनितम्बिन्यः सिराः—Superior and Inferior Gluteal Veins. ७। श्रोणिवंक्षणिका सिरा—Obturator Vein. ८। गुदोपस्थिकाः सिराः—Inferior Pudendal Veins, ९। त्रिकपार्श्विक्यः सिराः—Lateral Sacral Veins. १०। मध्यमा गुदान्तिका सिरा—Middle Hæmorrhoidal Vein.

[ १२४ चित्रम् ]

## हार्दिक्यः सिराः ( हृदयपृष्ठस्थाः ) ।




( To face page 148 )

[ १२५ चित्रम् ]

## श्रोणि-वस्ति-गुदोपस्थिकाः सिराः ।




[ १ । अनुकटिकाः सिराः । २ । अधिश्रोणिका साधारणी सिरा । ३ । अधिश्रोणिका आभ्यन्तरी सिरा ( दक्षिणा वामा च ) । ४ । उत्तरगुदान्तिका सिरा । ५ । गुदवेष्टनं सिराचक्रम् । ६ । शिश्नपृष्ठिका सिरा । ७ । पौरुषग्रन्थिवेष्टनं सिराचक्रम् । ८ । वीर्यवाहिनी । ९ । श्रोणिवंक्षणिका सिरा । १० । अधिश्रोणिका बाह्या सिरा । ११ । गवीन्या उत्तरकर्त्तितांशः । १२ । अनुवृषणिका सिरा धमनी च । ग—गुदनलिका । ]

चत्वारि च सिराचक्राणि वस्तिगुहान्तर्द्रष्टव्यानि। तद्यथा—

(क) **गुदवेष्टनं सिराचक्रम्**[1] (१२५ चित्रम्)। तत् पुञ्जीभूतैः सिराप्रतानैस्तित्सृषु सिरासु परिणतैः साक्षात् परम्परया वा पूरयति अधिश्रोणिकामाभ्यन्तरीं नाम सिराम्। ताश्च सिरा उत्तर-मध्यमाऽधरगुदान्तिकासंज्ञाः[2]। तासामान्त्रिकीभिः सिराभिरपि सम्बन्धः, परम्परया च प्रतीहारिण्या सिरया। सम्बध्यते च तत् सिराचक्रमनुवस्तिकसिराचक्रेण, स्त्रियास्तु अनुयोनि-गर्भाशयिकेणापि। तच्चेदं गुदवेष्टनं सिराचक्रं बाह्यमाभ्यन्तरञ्चेति द्विविधम्। तयोराभ्यन्तरं सिराचक्रमायतप्रायाभिः सिराभिः परस्परसंयुक्ताभिर्निर्मितम् अपानद्वारमावेष्ट्य प्रसृतम्। तत् प्रतीहारिण्या सिरया विशेषेण सम्बध्यते सिराप्रतानैरान्त्रिकीषु सिरासु प्रविष्टैः। तेनात्र सिराचक्रे ऊर्ध्वमुखं रक्तप्रसरणं चेदवरुध्यते (याकृतरक्तसंवहनस्य बाधितत्वाद्), तदा पुरीषोत्सर्गकाले निर्भिन्नैः सिरामुखैरपानस्थैः प्रवर्त्तते शोणितनिःस्रवो बहुशः। तानि हि सिरामुखानि त्वक्कलावृतानि रक्तार्शसामायतनानि।

(ख) **औपस्थिकं सिराचक्रम्**[3] (१२५ चित्रम्) भगास्थि-सन्धानाधस्तादुपस्थमूलस्थम्। निर्मीयते च तत् शिश्नपृष्ठिकाभ्यां सिराभ्यां (स्त्रियास्तु भगपृष्ठिकाभिः सिराभिः), वस्तिद्वारस्थं पौरुषग्रन्थिं परितः स्थिताभिः सिराभिश्च। सम्बन्धश्चास्य सिराचक्रस्य सिराप्रतानैरनुवस्तिकेन सिराचक्रेण।

(ग) **अनुवस्तिकं सिराचक्रं**[4] वस्तिसंवेष्टनम (१२५ चित्रम्), तस्य सम्बन्धः स्त्रिया अनुयोनिकसिराचक्रेण, पुंसस्तु पूर्वोक्ताभ्यां सिराचक्राभ्याम्।

(घ) **अनुयोनि-गर्भाशयिकं**[5] नाम सिराचक्रम् योनि-गर्भाशययोः संवेष्टनभूतम्। तद् अनुयोनिकमनुगर्भाशयिकं चेति द्वेधा विभज्यते। तयोः पूर्वोक्तैः सर्वैरपि सिराचक्रैः सम्बन्धः। परिणामे च अनुयोनिकसिराचक्रीयं रक्तं द्वाभ्यामनुयोनिकाभ्यां सिराभ्यामधिश्रोणिकामाभ्यन्तरीं सिरां प्रविशति। अनुगर्भाशयिकसिराचक्रस्य रक्तमपि द्वाभ्यामनुगर्भाशयिकोभ्यां सिराभ्याम् तामेव सिराम्।

---

१। गुदवेष्टनं सिराचक्रम्—Hæmorrhoidal Plexus of Veins. २। उत्तर-मध्यमाऽधर-गुदान्तिकाः सिराः—Superior, Middle & Inferior Hæmorrhoidal Veins. ३। औपस्थिकं सिराचक्रम्—Pudendal Plexus of Veins. ४। अनुवस्तिकं सिराचक्रम्—Vesical Plexus of Veins. ५। अनुयोनि-गर्भाशयिकं सिराचक्रम्—Utero-vaginal Plexus of Veins.

**अधिश्रोणिके साधारण्यौ**[१] नाम महत्यौ काण्डसिरे ( १२५ चित्रम् ) त्रिकपृष्ठवंशसन्धानस्य पुरोभागात्तिर्यगन्तर्मुखं गत्वा चतुर्थ-पञ्चमकटिकशेरुकासन्धेः पुरस्ताद् दक्षिणतो मिलिते अधरां महासिरां रचयतः। तयोरेकैका स्वसंज्ञयो-र्बाह्याभ्यन्तरसिरयोः संयोगेन सम्भूता। तयोः दक्षिणा ह्रस्वा सरलप्राया च, सा स्वसंज्ञाया धमन्याः पृष्ठे पार्श्वतश्च दृश्या। वामा दीर्घा तिरश्चीना च, सा आदौ स्वसंज्ञायाः धमन्याः अन्तःसीम्नि, ततश्च तत्पृष्ठतो वर्त्तते। एकैका च सा कटिश्रोणिकां[२] नाम सिरां संगृह्णाति, त्रिकपार्श्विकां[३] च कदाचित्। वामा तु त्रिकमध्याम्[४] अपीति विशेषः।

अथ अधरा महासिरा।

**अधरा महासिरा**[५] अधरशरीरार्धस्य रक्तसंग्राहिणी ( १२३।१२५ चित्रयोः )। सा साधारण्योरधिश्रोणिकासिरयोः संयोगेन निर्मिता, चतुर्थ-पञ्चमकटिकशेरुकासन्धेरूर्ध्वं पुरश्च महाधमन्या दक्षिणपार्श्वानुक्रमेणोर्ध्वं प्रसृता यकृत्पृष्ठस्थायां गम्भीरपरिखायां धार्यते। ततश्चोर्ध्वम् महाप्राचीरां निर्भिद्य पूर्वोक्तेन महासिराच्छिद्रपथेन उरोगुहां प्रविष्टाऽसौ हृदयस्य दक्षिणालिन्दमधो-देशात् प्रविशति हृदयधरेण कलाकोषेण संवृतमुखी। अस्ति च तन्मुखे सिराकपाटिका रक्तस्य अधःप्रतिनिवर्त्तनवारणी, सा गर्भस्थशिशोरेव विशेषतः कार्यकरी स्फुटतरा च।

एष चास्या व्यतिकरः उदरगुहायामधरोर्ध्वक्रमेण। अस्याः पुरस्ताद्—अन्त्रबन्धनीनां मूलदेशः, दक्षिणानुवृषणिका धमनी, ग्रहण्याः अधरभागः, अग्न्याशयस्य शीर्षदेशः, पित्तवहा नलिका, प्रतीहारिणी सिरा, अभियाकृती धमनी, यकृत्पृष्ठं च। पश्चिमतः—पृष्ठवंशः, दक्षिणा कटिलम्बिनी दीर्घा नाम पेशी, महाप्राचीरायाः दक्षिणमूलं, धमन्यश्च दक्षिणाः सप्त ( अधरमहाप्राचीरिका, अनुवृक्का, अधिवृक्किणी, अनुकटिकाश्चतस्रश्चेति ), पिङ्गलाख्या स्वतन्त्रनाड़ी, दक्षिणाधिवृक्कश्च। अस्या दक्षिणतः—दक्षिणवृक्कः, गवीनी[६] च दक्षिणा। वामतस्तु महाधमनी, महाप्राचीराया दक्षिणमूलम्, यकृदेकदेशश्चेति।

---

१। अधिश्रोणिके साधारण्यौ काण्डसिरे—Common Iliac Veins. २। कटिश्रोणिका सिरा—Ilio-lumber Vein. ३। त्रिकपार्श्विका सिरा--Lateral Sacral Vein. ४। त्रिक-मध्या सिरा—Middle Sacral Vein. ५। अधरा महासिरा—Inferior Vena Cava. ६। गवीनी—Ureter.

सेयमधरा महासिरा अधिश्रोणिकाभ्यां साधारणीभ्यामपराभिश्च सिराभिरापूर्यते। ताश्च सिराः यथा--अनुकटिकाः (अष्टौ), दक्षिणा अनुवृषणिका (स्त्रियास्तु अनुबीजकोषिका), अनुवृक्का, दक्षिणा अधिवृक्किणी, दक्षिणा अधरप्राचीरिका, याकृतसिराश्चेति षड्विधाः। तत्र --

अनुकटिकाः[1] नाम सिराः पृष्ठवंशस्य एकैकतश्चतस्रः स्वसंज्ञकधमनीसहचर्यः (१२३ चित्रम्)। ताः कटिपृष्ठोदरीयाणां विशेषतश्च पृष्ठवंशीयानां सिराणां रक्तसंग्राहिण्यः। अस्ति च तासां पुरोवंशिकाद्याभिः सिराभिर्योजनी सिरा आरोहिणी अनुकटिका[2] नाम पृष्ठवंशपुरस्तादूर्ध्वगा।

अनुवृषणिके[3] नाम सिरे तदाख्यधमनीसहचर्यौ वृषणपृष्ठस्थयोः सिराजालयोर्वृषणबन्धनीद्वये पुञ्जीभूतयोः रक्तसंग्राहिण्यौ। एकैकतश्च सिराजालात् सम्भूतास्त्रिचतुराः सिराः वंक्षणसुरङ्गापथेनोर्ध्वं प्रसृताः क्रमेण द्वयोः सिरयोः स्वसंज्ञकधमनीसहचर्योः परिणमन्ति। तत्र दक्षिणा अनुवृषणिका अधरमहासिरां प्रविशति, वामा तु वामामनुवृक्कामिति विशेषः। स्त्रियास्तु ते एव अनुबीजकोषिके[4] नाम बीजकोषाभ्यामागते सिरे भवतः।

अनुवृक्के[5] नाम स्थूलसिरे वृक्काभ्यां विनिर्गते स्वसंज्ञयोर्धमन्योः पुरःस्थे (१२३ चित्रम्)। तयोर्वामा दक्षिणायास्त्रिगुणदीर्घा महाधमन्याः पुरोभागमुल्लंघ्य प्रसृता, सा वामामनुवृक्काम् अधरमहाप्राचीरिकामधिवृक्किणीञ्च सिरां संगृह्णाति। दक्षिणा च प्रायस्ता एव सिराः उभयोश्च तयोरधरमहासिरायां प्रवेशः।

अधिवृक्किण्यौ[6] नाम सिरे द्वे अधिवृक्काभ्यां विनिर्गते (१२३ चित्रम्) तदाख्यधमनीसख्यौ। तयोर्दक्षिणा अधरां महासिरां, वामा च वामामनुवृक्कां प्रविशति।

अधरमहाप्राचीरिका[7] नाम द्वित्राः सिराः महाप्राचीरायास्तलदेशसम्भूताः धमनीसख्यः। तासां दक्षिणा एकैव प्रायः, सा अधरमहासिरां प्रविष्टा। वामा तु सिराद्वयी अनुवृक्काम् अधिवृक्किणीमधरमहासिरां वा।

---

१। अनुकटिकाः सिराः—Lumbar Veins. २। आरोहिणी अनुकटिका सिरा—Ascending Lumbar Vein. ३। अनुवृषणिके सिरे—Testicular Veins. ४। अनुबीजकोषिके सिरे—Ovarian Veins. ५। अनुवृक्के सिरे—Renal Veins. ६। अधिवृक्किण्यौ सिरे—Supra-renal Veins. ७। अधरमहाप्राचीरिकाः सिराः—Inferior Phrenic Veins.

**याकृतसिराः**[1] पुनर्याकृतरक्तस्य संग्राहिण्यः। ताः प्रतीहारिण्याः सिरायाः शाखाप्रतानैर्यकृति विकीर्णं रसमिश्रं रक्तं तत्र निर्विषीकृतं सूक्ष्माभिः सिराभिः समूह्य क्रमशः परिणामेण स्थूलीभूताः तिसृषु स्थूलसिरासु, कासुचित् तनुसिरासु च यकृत्पृष्ठनिगूढ़ासु परिणमन्ति। प्रविशन्ति च ताः अधरां महासिरां तस्या यकृत्पृष्ठसंसक्तं भागमाश्रित्य।

### अथ प्रतीहारिणी सिरा।

**प्रतीहारिणी महासिरा**[2] (१२६ चित्रम्) आमाशय-पक्वाशययोः अन्नरसमिश्रं सिरारक्तं, प्लीहाऽग्न्याशय-पित्तकोषीयं सिरारक्तञ्च समूह्य यकृदन्तः प्रापयति। सा अन्नरसस्य अविशोधितस्य साक्षान्महासिरागमनं वारयतीति[3] तथासंज्ञा। सेयं सिरा यकृति अभियाकृतधमन्या सह स्वयमपि धमनीवच्छाखा-प्रशाखादिभिः प्रसृता याकृतपिण्डाणुकानि[4] परितः कन्दिकान्तरालाः सिरा-स्तज्जालकानि च रचयति। पिण्डाणुकेषु प्राप्तपाकस्य च तद्रक्तस्य संग्रहो याकृतीभिः सूक्ष्मसिराभिः पिण्डाणुकानां केन्द्रेभ्यो निर्गताभिः। याकृतसिरास्तु वर्णितपूर्वाः।

साऽसौ प्रतीहारिणी सिरा प्रायश्चतुरंगुलदीर्घा द्वितीयकटिकशेरुका-पुरोदेशादारभ्य तिरश्चीनगत्या यकृदभिगता। तथाविधायाश्च तस्याः पुरस्ताद् द्रश्या अग्न्याशयस्य ग्रीवा, पश्चिमतश्च अधरा महासिरा। यकृत्प्रवेशात् पूर्वञ्च सा द्वयोः शाखयोर्विभज्यते। तयोर्दक्षिणा शाखा पित्तकोषप्रभवया सिरया मिलिता, यकृद्दक्षिणपिण्डं प्रविशति। वामा तु दीर्घतरा अग्रिम पश्चिम-मध्यमयकृत्पिण्डेषु प्रशाखाद्वयं प्रेरयन्ती यकृद्वामपिण्डं प्रविष्टा। तस्यां च यकृत्प्रवेशात् पूर्वमेव प्रविष्टाः परिनाभिका योजन्यो नाम सिरा वक्ष्यमाणाः। पूर्यते च तया गर्भस्थशिशोः संवाहिन्यौ नाम महासिरे पूर्वपश्चिमदेशयोः।

एनां च प्रतीहारिणीसंज्ञां महासिरामापूरयन्ति पञ्च मुख्याः सिराः यथा — प्लैहिकी, उत्तरान्त्रिकी, आमाशयक्रोड़िका, अनुग्रहणिका, पित्तकोषिणी चेति, परिनाभिका योजन्यो नाम तनुसिराश्च परिसरीयाः। तत्र —

**प्लैहिकी**[5] नाम स्थूलसिरा (१२६ चित्रम्) प्लीहवृन्तात् पञ्चषाभिर्मूल-सिराभिः सम्भूय एकीभूता अग्न्याशयस्य ऊर्ध्वधारानुक्रमेण दक्षिणतः अनुप्रस्थं

---

१। याकृतसिराः—Hepatic Veins. २। प्रतिहारिणी महासिरा—Portal Vein. ३। तादृशस्य अविशुद्धरक्तस्य विषवन्मारकत्वात्। ४। याकृतपिण्डाणुकसमष्टयस्तु कन्दिकासंज्ञाः। तद्वर्णनं यकृद्वर्णने द्रष्टव्यम्। ५। प्लैहिकी सिरा—Splenic or Lienal Vein.

[ १२६ चित्रम् ]

# प्रतीहारिणी महासिरा

( आशयव्यतिकरेण दर्शिता )




चित्रव्याख्या—क—पित्ताशयः। ख—प्रतीहारिणी महासिरा। ग—पित्तस्रोतः। घ—बृहदन्त्रम् ( आरोहिभागः )। ङ—उण्डुकम्। आ—आमाशयः। य-य—यकृत्।

१। अग्न्याशयः। २। ग्रहण्याः कर्त्तितांशः। ३। अधरान्त्रिकी सिरा। ४। उत्तरान्त्रिकी सिरा। ५। क्षुद्रान्त्रप्रभवाः सिराः।

❀ बृहदन्त्रस्य मध्यभागस्तु चित्रे कर्त्तितः अपसारितश्च अग्न्याशयादिप्रदर्शनाय।

( To face page 152 )

प्रसृता। सेयं मध्येपथमग्न्याशयप्रभवाभिः सिराभिरापूरिता शेषभागे आमाशयोत्थाभिर्ह्रस्वसिराभिः, दक्षिणया आमशयतलिका[1]ख्यया सिरया वा मिलिता विशेषेण स्थूलत्वमापद्यते। संयुज्यते चेयमधरान्त्रिक्या सिरया अग्न्याशयशिरसि प्रतीहारिण्या महासिरया संयोगाय।

**उत्तरान्त्रिकी**[2] नाम स्थूलसिरा (१२६ चित्रम्) स्वनामधमनीसहचरी क्षुद्रान्त्रेभ्यो बृहदन्त्रस्य आरोहिभागात्, मध्यमभागाच्च सम्भूतैः सिराप्रतानैः परस्परमिलितैरापूर्यते। सा अन्त्रमूलबन्धन्यामूर्ध्वमुखं प्रसृता क्रमशः स्थूला अग्न्याशयक्रोड़देशमाश्रित्य तत्पृष्ठतः प्लैहिक्या सिरया संमिलिता प्रतिहारिणीं निर्मिमीते। वपाऽमाशयिकाद्याः सिराश्च उत्तरान्त्रिकीमेव सिरां प्रविष्टाः।

**अधरान्त्रिकी**[3] नाम सिरा तु तद्वद् बृहदन्त्रस्य अवरोहिभागाद् रक्तसंग्राहिणी (१२६ चित्रम्), अग्न्याशयपृष्ठे प्लैहिक्या सिरया मिलिता।

**आमाशयक्रोड़िका**[4] नाम सिरा (१२६ चित्रम्) आमाशयस्य कोरोदरपरिधौ दृश्यते तत्पूर्वपश्चिमदेशस्थानां सिराणां संग्राहिणी। सा यकृद्वृन्तदेशे ग्रहणीपृष्ठतः प्रतीहारिणीं महासिरां प्रविष्टा।

**अनुग्रहणिका**[5] नाम ह्रस्वासिरा (१२६ चित्रम्) ग्रहणीपार्श्विकाभिस्तनुसिराभिरापूरिता तदुपकण्ठ एव प्रतीहारिणीं महासिरां प्रविशति वामतः।

**पित्तकोषिणी**[6] सिरा च तादृगेव पित्तकोषपरिसरादागता प्रतीहारिण्याः सिराया दक्षिणशाखां विशति पित्तस्रोतसः पार्श्वतः।

**परिनाभिका योजन्यः**[7] नाम सिराः पुनरुदरपुरःपरिसरे शुष्कसंबाहिनीमनुवर्त्तमाना नाभित ऊर्ध्वम् प्रसृताः प्रतीहारिण्या वामशाखां प्रविष्टाः। ताश्च उदरपरिसरीयाभिः सिराभिरधिश्रोणिकाख्यसिराभिश्च सम्बन्धवत्यः।

इदमत्रावधेयम्। जलोदरादौ याकृतवस्तुनः क्रमशः शुष्कीभावाद् याकृतरक्तसंवहनस्य अवरोधे शनैः प्रवर्त्तमाने ताभिरेव सिराभिः आमाशय-पक्काशयादिभ्य आगतस्य सिरारक्तस्य कथमपि सार्वकायिकसिरासु एकांशेन प्रवेशः, अपरांशेन उदरगुहान्तर्जलसञ्चयः। तेन उदर्याणामुत्तानसिराणां तदा स्फुटतरत्वमिति विशेषः।

---

१। आमाशयतलिका सिरा—Right Gastro-epoploic Vein. २। उत्तरान्त्रिकी सिरा—Superior Mesenteric Vein. ३। अधरान्त्रिकी सिरा—Inferior Mesenteric Vein. ४। आमाशयक्रोड़िका सिरा—Coronary Gastric Vein. ५। अनुग्रहणिका सिरा—Pyloric Vein. ६। पित्तकोषिणी सिरा—Cystic Vein. ७। Par-umbilical Veins.

**पृष्ठवंशीयाः सिराः** पुनरसंख्याः विचित्रसन्निवेशाश्च (१२७ चित्रम्)। ताः कशेरुकाः संवेष्ट्य बहिरन्तः अस्थ्यन्तश्च सर्वतस्तिष्ठन्ति परस्परयोजनीभिः सिराभिः सहिताः। तासां चतुर्धा विभागो वर्णनासौकर्याय। तद्यथा—

(१) काशेरुकसिराचक्रं बाह्यं[1] कशेरुकाणां बहिःपरिधिसंवेष्टनम्। तच्च अग्रिम-पश्चिमयोः सिराचक्रयोः स्फुटतरं विभक्तम्। तत्र अग्रिमं कशेरुपिण्डानां पुरःस्थम्, पिण्डान्तरीयसिराभिरापूर्यते विशेषेण। पश्चिमं काशेरुकसिराचक्रं पृष्ठस्थम्, तस्याः पूरणं प्रायेण गम्भीरपृष्ठपेशीप्रभवाभिः सिराभिः।

(२) काशेरुकसिराचक्रमाभ्यन्तरं[2] सुषुम्नाविवरस्य संवेष्टनम् (चित्रे २ सु २)। तत् सुषुम्नाकाण्डवृतिषु अस्थिमयस्य विवरपरिधेश्चान्तराले वर्त्तते, स्थूलतराभिः सिराभिः कशेरुपिण्डपृष्ठस्थाभिरुपचितं विशेषात्।

(३) कशेरुपिण्डान्तरीयाः सिराः[3] कशेरुकापिण्डानि निर्भिद्य शरगत्या बहिर्गताः बाह्याभ्यन्तरयोः सिराचक्रयोः प्रविष्टाः। सिराचक्रयोजन्यः सिराश्च तेषु सर्वतः प्रसृताः परस्परसम्बन्धिन्यः।

(४) कशेरुचक्रान्तरीयाः सिराः[4] कशेरुचक्रान्तरालस्थितैश्छिद्रैर्नाड़ीभिः सह निर्गताः। ताः बाह्याभ्यन्तरसिराचक्रयोः शोणितं संगृह्य ग्रीवा-मध्यकायाभ्यन्तरीयासु सिरासु इत्थमर्पयन्ति। ग्रीवागताः मस्तिष्कमातृकयोः सिरयोः, पृष्ठभागीयाः पर्शुकानुगासु, कटिगताः अनुकटिकासु त्रिकपार्श्विकासु चेति।

[ १२७ चित्रम् ]




१।१ कशेरुकावेष्टनं सिराजालम्।

**समाप्यते चैतावता सिराखण्डम्।**

---

१। काशेरुकसिराचक्रं बाह्यम्—External Vertebral Venous Plexuses. २। काशेरुकसिराचक्रमाभ्यन्तरम्—Internal Vertebral Venous Plexuses. ३। कशेरुपिण्डान्तरीयाः सिराः—Inter-vertebral Veins. ४। कशेरुचक्रान्तरीयाः सिराः—Basi-vertebral Veins.

# प्रत्यक्षशारीरम्

## रसायनीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातो रसायनीसामान्यवर्णनीयमध्यायं व्याख्यास्यामः ।

रसायन्यः[1] नाम सूक्ष्माः रसवाहिन्यः प्रणालिकाः सर्वत्र शरीरे प्रसृताः, अन्यत्र नख-रोम-बहिस्त्वक्-तरुणास्थिभ्यः । तासां सूक्ष्मतरास्तनुस्वच्छेन प्राचीरिकाद्वयेन निर्मिताः, अन्यास्तु प्राचीरिकात्रयेण । आकृतितश्च सर्वा अपि ताः सूक्ष्ममुक्तामालिकाकाराः शिथिलकार्पाससूत्राकारा वा ।

रसश्च द्विविधः—शुद्धो मिश्रश्चेति । तत्र यः शोणितस्य तन्वच्छभागो लसीकाख्यो जालकेभ्यः स्यन्दमानो धातून् पुष्णाति, धातुपोषणावशिष्टश्च रसायनीभिः प्रतिनिवर्त्तते, स शुद्धः[2] । यः पुनरन्त्रेभ्यो दुग्धघृतादीनां स्नेहबहुलः सारो लसीकामिश्रः पयस्विनीसंज्ञैः स्रोतोभिराकृष्यमाणो रसप्रपां प्रविशति, स मिश्रः । तस्य पायस[3] इति संज्ञा, तत्सादृश्यात् । सोऽसौ द्विविधोऽपि रसो रसकुल्याभ्यां गलमूलिकयोः सिरयोः प्रविशति, ततश्चोत्तरमहासिराम् ।

असंख्याश्च ता रसायन्यः कक्षावंक्षणोदरादिप्रदेशेष्ववस्थितान् रसग्रन्थीन् प्रविशन्ति, समर्पयन्ति च स्वरसं तदभ्यन्तरतः । स च रसस्तेषु संचरन् सम्यग्विशोधितो बहिरभिप्रवर्त्तते नवीनाभिः रसायनीभिः । ताश्चाग्रे प्रसरन्त्यो मध्येपथमपराभिरपि रसायनीभिर्मिलिताः पुनरपि तादृशान् ग्रन्थीन् प्रविशन्ति । एवञ्चोत्तरोत्तरं परस्पर-संमेलनेन स्थूलस्थूलाः स्वल्पतरसंख्याश्च ताः रसप्रपां रसकुल्ये वा प्रविशन्ति । सन्ति च तासु कपाटिकाः सिराकपाटिकावत्, लसीकायाः प्रतिनिवर्त्तनवारणाय । ताश्च कपाटिकाः रसकुल्ययोः स्फुटतमाः ।

कार्यं तावद्‌ रसायनीनां न केवलं रससंवहनं किन्तु शोषणमपि अभ्यङ्गादीनाम् । सविषकण्टकादिवेधे श्लीपदादौ च रसायनीनां व्रणशोथः स्थूलीभावश्च ।

---

१। रसायन्यः—Lymphatic Vessels or Lymphatics. २। शुद्धो रसः (लसीका वा)—Lymph (Pure). ३। पायसरसः—Chyle. यस्तु आग्नेयरसः आमाशय-पक्वाशयाभ्यामुद्भूतः सिरामार्गमाश्रित्य रक्तेन मिश्रीभूय प्रविशति प्रतीहारिणीं महासिराम्, स पृथगेव। वैद्यके तु उभयमपि रसपदाभिधेयम्।

**रसग्रन्थयः[1], लसीकाग्रन्थयो** वा नाम (१२८।१२९ चित्रयोः) गुञ्जा-निम्बफल-शिम्बीबीजाद्याकारा मृदुस्पर्शा ग्रन्थयः, ये कक्षा-वंक्षण-ग्रीवा-कर्णमूलादि-बाह्यप्रदेशेषु, उदरोरसोरभ्यन्तरतश्च दृश्याः। ते रसायनीमार्गेषु मुस्ताकन्दवत् पुञ्जीभूताः पृथक् चाऽवतिष्ठन्ते। ते बहिर्भागे तनुस्नायुसूत्रमयैः कोषैः[2] प्रावृताः, क्रोडदेशेषु खाताङ्किताश्च। तैश्च खातैः[3] तदन्तः प्रविशन्ति नाड़ी-धमनी-रसायनीनां सूत्राकाराः प्रतानाः। एकैकग्रन्थिपरिधेश्च विनिर्गताः नवीना रसायन्यः सिराश्च, तास्तदभ्यन्तरविशोधितं रक्तं संगृह्णन्ति। एवञ्च द्विविधा रसायन्यः—अन्तर्मुख्यः[4], बहिर्मुख्य[5]श्चेति।

रसग्रन्थिनिर्माणं त्वणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यते बीजपूरवत्। सन्ति हि ग्रन्थीनां बहिरावरणकोषाः, अभ्यन्तरतश्च स्नायुप्राचीरिकाः[6], तदन्तरालेषु च रसजालिकाः[7] प्रत्यग्रश्वेतकणिकासंकुलाः, यासु अन्तर्मुख रसायनीभिरानीतो रसो निर्विषत्वमापद्यते, आपूर्यते च श्वेतकणिकाभिस्तद्रक्षिभूताभिः, निर्गच्छति च बहिर्मुखीभिः रसायनीभिस्तत्परिधिनिर्गताभिः।

(१२८ चित्रम्—पञ्चाशद्गुणवर्धितायतनम्)

**रसग्रन्थिनिर्माणप्रदर्शकम्।**




[❀ तच्छाखाश्च रसजालिकाप्रविशिन्योऽत्र लक्षणीयाः। प्राचीरिकाश्च रसजालिकान्तरालेषु।]

---

१। रसग्रन्थयः—Lymphatic Glands. २। ग्रन्थिकोषः—Capsule of gland. ३। Hilus of gland. ४। Afferent Lymphatics. ५। Efferent Lymphatics. ६। Trabeculæ. ७। Lymphatic tissue.

यदा पुनः शरीरे कस्यापि विषस्य संक्रमणं रसायनीमार्गैः, तदा लसीकाग्रन्थिष्वेवादौ तदवरोधः तद्विध्वंसनप्रयत्नश्च श्वेतकणिकाभिः तस्मात् शरीररक्षिभूताः खल्विमे लसीकाग्रन्थयः। प्रवर्त्तमाने च विषविध्वंसनप्रयत्ने रुजाशोथौ, काठिन्यं बृहत्त्वञ्च ग्रन्थीनां प्रादुर्भवन्ति रसायनीनाञ्च, विषजीवाणुभिः युद्धारम्भात्। विषस्य तीव्रत्वे तु विपच्यन्ते ग्रन्थयः, क्वचिद् रसायन्यश्च, व्रणवत्।

**रसकुल्ये**[1] नाम (१२६ चित्रम्) समग्रस्य शरीरस्य रससंग्राहिण्यौ प्रणाल्यौ। तयोर्वामा अतिदीर्घा महाप्राचीरां निर्भिद्य ऊर्ध्वं गता, समग्रस्य शरीराधरार्धस्य वामोत्तरार्धस्य च रससंग्राहिणी, सा मुख्या रसकुल्येति कथ्यते।

सेयं **मुख्या रसकुल्या**[2] (वामा वा—१२६ चित्रम्) प्रायो वितस्तिप्रमाणदैर्घ्या, शरेषीकापरिणाहा, ऊर्ध्वं क्रमशः संकुचितमुखी, कटिवंशपुरःस्थाया रसप्रपाया निर्गत्य महाप्राचीरामध्यस्थेन महाधमनीच्छिद्रपथेन उरसि प्रविशति, प्रसरति च पृष्ठवंशपुरस्तात्तदनुक्रमेणोर्ध्वं सर्पवत्। सा सप्तमग्रीवाकशेरुकायाः पुरस्ताद् वक्रीभूय अक्षाधरां धमनीमुल्लंघ्य अनुमन्याऽक्षाधरयोः सिरयोः संयोगस्थले गलमूलिकां सिरां प्रविष्टा। उरसि च पश्चिमफुस्फुसाऽन्तराले वर्त्तमानायास्तस्या वामतो दृश्या महाधमनी, दक्षिणतो दक्षिणा पुरोवंशिका सिरा, पुरो दक्षिणतश्च अन्ननलिका, पश्चिमतश्च पृष्ठवंशः।

**दक्षिणा रसकुल्या**[3] तु (१२६ चित्रम्) क्षुद्रा, अर्धांगुलमात्रदीर्घा शरेषीकापरिणाहा केवलं ग्रीवामूले दृश्या। सा दक्षिणयोरनुमन्याऽक्षाधरयोः सिरयोः संयोगस्थले ग्रीवामूलिकां सिरां प्रविष्टा। तस्या निर्माणं तिसृभिः स्थूलरसायनीभिः। तासामेका दक्षिणबाहोः रसायनीनां संग्राहिणी, अपरा शिरोग्रीवदक्षिणार्धगतानाम्, अन्या उरोदक्षिणार्धस्थानामाशयादिगतानाञ्च। ताश्च रसायन्यः क्वचित् पृथगपि पूर्वोक्तसिरासन्धिं प्रविशन्ति, तदा दक्षिणरसकुल्याऽभावः।

**रसप्रपा**[4] नाम (१२६ चित्रम्) रसाधारिका प्रथमद्वितीयकटिकशेरुकयोः पुरस्तान्महाधमनीपृष्ठतो वर्त्तते। सा चतुरंगुलदीर्घा द्व्यंगुलायता, निम्नतः स्थूला लघुपटोलफलसमाकारा च प्रायः। प्रविशन्ति च तां तिस्रः स्थूलरसायन्यः—द्वे कटिमूलिके, एका च आन्त्रिकीति। ताश्च सर्वा अपि

---

१। रसकुल्ये—Lymph Ducts. २। मुख्या रसकुल्या—Thoracic Duct. ३। दक्षिणा रसकुल्या—Right Lymph Duct. ४। रसप्रपा—Cisterna Chyli.

[ १२६ चित्रम् ]

## रसप्रपादिसंस्थानम् ।




१।१ अन्नाधरा सिरा, तदन्तःसीम्नि धमनी। २।२ अनुमन्या सिरा। ३। दक्षिणानुमन्याऽन्नाधरयोः सिरयोः सन्धिप्रवेशिनी दक्षिणा रसकुल्या। ४। तादृशी वामा रसकुल्या।

महाधमनीं परितः स्थितेभ्यो रसग्रन्थिभ्यो विनिर्गताः। तासां कटिमूलिके अधरशरीरार्धस्य वस्तिवृक्कादेश्च लसीकामभिवहतः, आन्त्रिकी तु आमाशय-पक्काशय-यकृत्-प्लीहादेः। ग्रन्थिषु च तेषु प्रविष्टास्तास्ता रसायन्यः, पयस्विन्यश्चान्त्रेभ्यो दुग्धसदृशं पायसाख्यं रसमभिवहन्ति।

सेयं रसप्रपा ऊर्ध्वं क्रमशः संकुचितमुखी मुख्यायां रसकुल्यायां परिणमति महाप्राचीराधस्तले। युज्यन्ते च तया तत्रैव महाप्राचीरोर्ध्वञ्च काश्चन रसायन्यः पश्चिमपर्शुकान्तरालीयेभ्यो लसीकाग्रन्थिभ्यः समागताः, फुस्फुसान्तरालीय-ग्रन्थिभ्यश्च। ग्रीवामूलं प्राप्तां च तां प्रविशन्ति तिस्रः स्थूलतररसायन्यः। ताश्च — वामा ग्रीवामूलगा या शिरोग्रीववामार्धीयरसायनीनां संग्राहिणी, वामा बाहुमूलगा, वामा उरोमूलगा चेति।

---

## द्वितीयोऽध्यायः।

अथातो रसायनीविशेषवर्णनीयमध्यायं व्याख्यास्यामः।

सत्यपि सामान्यतो रसायनीविज्ञाने विशेषा अवश्यं ज्ञातव्याः, स्थान-सम्बन्धपरिज्ञानार्थम्, वीसर्पगतिनिर्णयार्थञ्च। तस्मादिहाधुना रसग्रन्थीन् रसायनीश्च नातिसंक्षेपविस्तरं ब्रूमः।

ते पञ्चसु प्रदेशेषु दृश्याः—शिरोग्रीवे, ऊर्ध्वाधःशाखासु, उदरोरसोश्चेति।

अथ शिरोग्रीवीया रसग्रन्थयो रसायन्यश्च।

तत्र शिरसि रसग्रन्थयः सप्तसु बाह्यप्रदेशेषु दृश्याः। तद्यथा—

(१) **कपालमूलिकाः**[1] नाम द्वित्रा ग्रन्थयः (१३० चित्रम्) शिरोग्रीव-सन्धिपृष्ठे एकैकतः पश्चिमकपालमूले। तान् प्रविशन्ति करोटिपश्चिमाः रसायन्यः।

(२) **पश्चिमकर्णिकाः**[2] नाम (१३० चित्रम्) तावन्त एव ग्रन्थयः कर्णपृष्ठे एकैकतः। तान् प्रविशन्ति शंखदेशीयाः कर्णपश्चिमाश्च रसायन्यः।

(३) **अग्रिमकर्णिकाः**[3] नाम च तावन्तो ग्रन्थयः कर्णपालीपुरस्ता-दूर्ध्वभागे। तेषु प्रविष्टाः कर्णपालीप्रभवाः काश्चन रसायन्यः।

---

१। कपालमूलिकाः ग्रन्थयः—Occipital Glands. २। पश्चिमकर्णिकाः ग्रन्थयः—Posterior Auricular Glands. ३। अग्रिमकर्णिकाः ग्रन्थयः—Anterior Auricular Glands.

(४) **पुरःकर्णमूलिकाः**[१] नाम रसग्रन्थयः ( १३० चित्रम् ) कर्णमूले पुरस्तादेकैकतः । ते द्वयोः ग्रन्थिपुञ्जयोर्विभक्ताः । तयोराद्यो ग्रन्थिपुञ्ज उत्तानः, स त्वगधस्तात् कर्णमूलिकाख्यस्य महतो लालाग्रन्थेः पिण्डान्तरेषु च वर्त्तते, तं प्रविशन्ति शिरोऽपाङ्ग-कर्ण-ललाटाऽगता रसायन्यः । द्वितीयो ग्रन्थिपुञ्जो गम्भीरो गलविलपार्श्वस्थः, तस्मिन् नासा-तालु-गल-विलप्रभवाणां रसायनीनां प्रवेशः ।

(५) **मौखिकाः**[२] नाम मुखसम्बन्धिनः सप्त अष्टौ वा क्षुद्रा रसग्रन्थयो मुखस्य एकैकपार्श्वे त्रिधा सन्निविष्टाः । नेत्राऽधरप्रदेशे नेत्राऽधरीया नाम द्वित्राः, कपोले सृक्कणीबहिर्देशे तावन्तः कपोलिका नाम तदधश्चाधोहनुपार्श्वतोऽपि द्वित्रा हनुपार्श्विका नाम इति । तेषु नेत्रपुट-नेत्रवर्त्मप्रभवाणां गण्ड-नासा-मुखोत्थानाञ्च रसायनीनां प्रवेशः । सन्ति च गभीरग्रन्थयोऽपि द्वित्रास्तत्रैव हनुकुन्त-कूटयो-रन्तराले, ते मुख-नासा-गलविलरसायनीनां रससंग्राहकाः ।

(६) **जिह्वामूलिकाः**[३] नाम द्वित्रा ग्रन्थयः, तेषु मुख्यो ग्रन्थिरेको जिह्वामूले चिवुकजिह्वाकण्ठिकयोः पेश्योर्मध्यस्थः । जिह्वामूलस्थरसायनीनां तत्र प्रवेशः ।

(७) **गलबिलपश्चिमाः**[४] नाम ग्रन्थयो ग्रसनिकायाः पश्चिमतो निगूढाः । ते नासा-गलविलागतानां कासाश्छिद्रसायनीनां रसं शोधयन्ति । सर्वेभ्यश्चैतेभ्यो विनिर्गता रसायन्यो गम्भीरग्रीविकेषु ग्रन्थिषु प्रविष्टाः ।

ग्रीवायान्तु द्विविधा रसग्रन्थयः—उत्ताना गम्भीराश्च । तत्र—

(१) **उत्तानग्रीविकाः**[५] नाम ग्रन्थयस्त्रेधा विभज्यन्ते—हन्वधरीयाः, कण्ठिकोत्तराः, पुरोग्रीविकाश्चेति । तेषु—( १३० चित्रम् )

(क) **हन्वधरीयाः**[६] नाम पञ्चषा रसग्रन्थयो हनुकोणाधस्ताद् वर्त्तन्ते, तन्नामक-लालाग्रन्थेः पुरःस्थाः । तेषु प्रविशन्ति भ्रूमध्य-नासापार्श्व-गण्ड-जिह्वा-ऽधरोष्ठ-दन्तवेष्टाद्यागता रसायन्यः ।

(ख) **कण्ठिकोत्तराः**[७] नाम द्वित्रा रसग्रन्थयः कण्ठिकास्थ्नः उपरिष्टा-न्मध्यरेखामुभयतः । ते जिह्वाग्र-मुखभूमिप्रभवाणां रसायनीनां लसीकामाददते ।

---

१। पुरःकर्णमूलिकाः रसग्रन्थयः—Parotid Lymph-Glands. २। मौखिकाः रसग्रन्थयः—Buccinator Lymph-glands. ३। जिह्वामूलिकाः रसग्रन्थयः—Lingual Lymph-glands. ४। गलविलपश्चिमाः रसग्रन्थयः—Retro-pharyngeal Lymph-glands. ५। उत्तान-ग्रीविकाः रसग्रन्थयः—Superficial Cervical Lymph-glands. ६। हन्वधरीयाः रसग्रन्थयः—Sub-maxillary Lymph-glands. ७। Sub-mental or Supra-hyoid Lymph-glands.

(ग) **पुरोग्रीविका**[१] नाम मन्यापुरःस्था बहवो रसग्रन्थयो (१३० चित्रम्) मन्याख्यपेश्याः पुरस्ताद् अधिमन्याख्यसिरामुभयतः, अन्तरा च मन्ययोः, क्लोमनलिकामुभयतश्च वर्त्तन्ते। तेषु पूर्वोक्तानां कर्णमूल-कपोलाद्यागतानां ग्रीवागतानाञ्च कासाञ्चिद् रसायनीनां प्रवेशः।

(२) **गम्भीरग्रीविका**[२] नाम रसग्रन्थयः (१३० चित्रम्) प्रायो विंशतिः पञ्चविंशतिर्वा दृश्यन्ते। ते मन्याख्यपेश्या गम्भीरप्रावरण्या च प्रावृता

[ १३० चित्रम् ] शिरोग्रीवीया रसग्रन्थयो रसायन्यश्च ।




क—कर्णमूलिकाख्यो लालाग्रन्थिः, तत्पृष्ठतश्च अग्रिमकर्णिका रसग्रन्थयः।

---

१। पुरोग्रीविकाः रसग्रन्थयः—Anterior Cervical Lymph-glands. २। गम्भीर-ग्रीविका रसग्रन्थयः—Deep Cirvical Lymp-glands.

ग्रीवापार्श्वयोरवतिष्ठन्ते, अनुवर्त्तन्ते च प्रायेण अन्तर्मातृकां धमनीमनुमन्याख्यां सिराञ्च आ गलमूलादुभयतः। सर्वासाञ्च करोटिबाह्यानां, करोटिगुहान्तरीयाणां, गम्भीरग्रीविकाणाञ्च रसायनीनां तैरेव चरमः सम्बन्धः।

तेभ्यो विनिर्गताश्च सर्वा अपि रसायन्यः क्रमशः परस्परं मिलिताः द्वित्राः स्थूलरसायनीरारचयन्ति ग्रीवामूलयोरेकैकतः। तासां दक्षिणवामयोः रसकुल्ययोर्यथासम्भवं प्रवेशः।

[ १३१ चित्रम् ]

## ऊर्ध्वशाखीया रसग्रन्थयो रसायन्यश्च।




उ—उरःपरिसरीया रसग्रन्थयो रसायन्यश्च।

अथ ऊर्ध्वशाखीया रसग्रन्थयो रसायन्यश्च।

एकैकस्यामूर्ध्वशाखायां द्विविधा रसग्रन्थयः, रसायन्यश्च — उत्तानाः, गम्भीराश्चेति (१३१ चित्रम्)। तेषु—

उत्ताना रसग्रन्थयः कूर्परान्तःसीम्नि, अंसपुरस्ताच्च वर्त्तन्ते। तेषां कूर्परान्तरिको[1] नाम ग्रन्थिरेको (द्वौ वा) कूर्परसन्धेरुपरिष्टादन्तर्बाहुकायाः सिरायाः पार्श्वतः। तस्मिन् कासाञ्चिदुत्तानरसायनीनां कर-प्रकोष्ठान्तःसीमस्थानां प्रवेशः। अंसान्तरिकस्तु ग्रन्थिरेको (द्वौ वा) अंसच्छदायाः पेश्या अन्तःसीम्नि पुरश्च दृश्यः। तत्र कासाञ्चिदंसगतानामुत्तानरसायनीनाम् प्रवेशः।

**कक्षान्तरीयाः**[2] नाम गम्भीराः रसग्रन्थयः एकैकतः कक्षादर्यां तदुपकण्ठे पुरः पश्चाच्च वर्त्तन्ते। तेषां संख्या आ विंशतेः त्रिंशत्पर्यन्ता। ते प्रायेण कक्षाधरे सिराधमन्यौ अनुवर्त्तन्ते, छाद्यन्ते च उरश्छदाभ्यां पेशीभ्याम्। सन्ति च तत्सम्बन्धिनो ग्रन्थयः अक्षकास्थ्नोऽधस्तादपि पेशीच्छादिताः, तेषु विशेषेण उरःपुरःस्थानां स्तनप्रभवाणाञ्च कासाञ्चिद् रसायनीनां प्रवेशः। सन्ति च तत्सम्बन्धिनः त्रिचतुरा ग्रन्थयः पृष्ठतोऽपि, अंसफलकाच्छादिताः। सर्वासां च बाह्वंसीयानां, बह्वनामुरःपुरःस्थानाञ्च रसायनीनां कक्षान्तरीयेषु ग्रन्थिषु प्रवेशः।

कक्षान्तरीयग्रन्थिभ्यो विनिर्गताः रसायन्यस्तु क्रमेण परस्परमिलिताः ग्रीवामूले एकैकतो द्वित्रासु स्थूलरसायनीषु परिणमन्ति। तासां पूर्वोक्तदिशा शिरोग्रीवीयस्थूलरसायनीभिर्मिलितानां रसकुल्ययोः प्रवेशः। क्वचित् पृथगपि वा पूर्वोक्तसिरासन्धौ।

अथ अधःशाखीया रसग्रन्थयो रसायन्यश्च।

एकैकस्यामधःशाखायां द्विविधा रसग्रन्थयः, रसायन्यश्च — उत्तानाः, गम्भीराश्चेति। तत्र रसग्रन्थीनां त्रिषु प्रदेशेषु विभागः — जानुपृष्ठिके खाते, अनुवंक्षणीयच्छिद्रं परितः, वंक्षणदेशे च। तत्र—

जानुपृष्ठिकाः[3] नाम क्षुद्रा रसग्रन्थयः षट् सप्त वा साकल्येन। तेषां चत्वारः पञ्च वा उत्तानाः, ते जानुपृष्ठस्थे खाते मेदःपुञ्जानुविद्धाः, जङ्घापश्चिमानां रसायनीनां संग्राहिणः। अवशिष्टो ग्रन्थिः (ग्रन्थिद्वयं वा) जानुसन्धिकोषस्य

---

१। कूर्परान्तरिको रसग्रन्थिः—Supra-trochlear Lymph-gland. २। कक्षान्तरीया रसग्रन्थयः—Axillary Lymph-glands. ३। जानुपृष्ठिका रसग्रन्थयः—Popliteal Lymph-glands.

[ १३२ चित्रम् ]

## अधःशाखीया रसग्रन्थयः रसायन्यश्च ।




[ उ—उदरपरिसरीया रसायन्यः ]

पृष्ठस्थः, तत्र जानुसन्धिवेष्टनीनां रसायनीनां प्रवेशः। तेभ्यो निर्गताश्च रसायन्यः प्रायेण और्वीसंज्ञे सिराधमन्यौ अनुवर्त्तमाना गम्भीरवंक्षणीयान् ग्रन्थीन् प्रविशन्ति।

**अनुवंक्षणीयाः**[1] नाम सप्त अष्टौ वा ग्रन्थयो वंक्षणाधस्तादूरुमूलपुरस्ताद् वर्त्तन्ते (१३२ चित्रम्), अनुवंक्षणीयं 'ठकारच्छिद्रं' † परितः। तेषां पञ्चषा उत्तानाः, त्रिचतुरा गम्भीराः। तेषु प्राधान्येन शिश्न-वृषण-नितम्बीयानामधः-शाखीयानाञ्च कासांचिद् रसायनीनां प्रवेशः।

**वंक्षणीयाः**[2] नाम रसग्रन्थयो वंक्षणिकाख्यस्नायुरज्ज्वा अनुक्रमेण तिर्यगास्तृताः--उत्ताना गम्भीराश्च (१३२ चित्रम्)। तेषां संख्या दशकादारभ्य विंशतिपर्यन्ता। ते गुदोपस्थ-वृषण-नितम्बीयानाम् अधःशाखीयानाञ्च रसायनीनां पूर्वोक्तग्रन्थिभ्यो विनिर्गतानां लसीकां पुनर्विशोधयन्ति। उदरनिम्नार्धपरिसरीया अपि रसायन्यस्तानेव प्रविष्टाः। चरणक्षतादिसम्भूतं हि वीसर्पादिविषं, फिरङ्गादिविषं च शिश्नक्षतादिप्रभवं वंक्षणग्रन्थिष्वेव प्रसर्पतीति तेषां रुजाशोथौ पाकश्च प्रायः।

दृश्यते च क्वचिद् गृध्रसीद्वारेऽपि रसग्रन्थिरेको (द्वौ वा), गृध्रसीद्वारिको नाम। स अनिश्चितावस्थानः।

वंक्षणीयग्रन्थिभ्यो विनिर्गता रसायन्यस्तु वंक्षणदरीपथेन और्व्याख्ये सिराधमन्यौ अनुवर्त्तमाना उदरगुहान्तरधिश्रोणिकान् रसग्रन्थीन् प्रविशन्ति।

### अथ उदर्या रसग्रन्थयो रसायन्यश्च।

**उदर्या रसग्रन्थयः**[3] खलु असंख्यप्रायाः आभ्यन्तराश्च। द्विविधाश्च ते—परिसरीयाः आशयिकाश्चेति। सर्वेऽपि ते महाधमन्याः, तत्काण्डशाखानाञ्च अनुक्रमेण तदुभयतः, तत्पुरस्ताच्च वर्त्तन्ते। आशयिकास्तु आशयानभितः सज्जिताः आशयसंज्ञानुसारेण संज्ञायन्ते। तेषु चेह मुख्या एव रसग्रन्थयो वर्ण्यन्ते, केषांचिदुदर्यरोगाणां संप्राप्तिपरिज्ञानाय। तत्र—

(१) परिसरीयाः रसग्रन्थयः पुनश्चतुर्धा विभज्यन्ते। तद्यथा—श्रोणिगुहायां अधिश्रोणिका उत्तराः, अधिश्रोणिका अधराः, त्रिकपूर्विकाश्चेति। कटिवंशस्य पुरस्तात् अनुकटिकाश्च। तत्र—

---

१। अनुवंक्षणीया रसग्रन्थयः—Sub-inguinal Lymph-glands. २। वंक्षणीया रसग्रन्थयः—Inguinal Lymph-glands, ३। उदर्या रसग्रन्थयः—Abdominal Lymph-glands. † तच्च २य भागस्य ६५ पृष्ठे वर्णितम्।

[ १३३ चित्रम् ]

## अधिश्रोणिका रसग्रन्थयः ।




१।१ अधिश्रोणिका उत्तरा नाम रसग्रन्थयः। २।२।२ त एव अधराः।
३।३ अधिश्रोणिका साधारणी धमनी। ४। बस्तिसमुत्था रसायन्यः।

**अधिश्रोणिका उत्तराः**[1] नाम एकैकतः अष्टौ दश वा पृथुतरा रसग्रन्थयो जघनोदरे महाधमनीमधरमहासिरां चोभयतोऽनुवर्त्तन्ते तत्पुरश्च ( १३३ चित्रम् )। तान् प्रविशन्ति अधःशाखीया वंक्षणोदरपरिसरीयाश्च रसायन्यः। उपस्थ-मूल-बस्तिप्रभवाणां योनि-गर्भाशयिकानाञ्च कासाञ्चिद्रसायनीनां तेषु प्रवेशः।

**अधिश्रोणिका अधराः**[2] नाम बहवो ग्रन्थयो बस्तिगुहाभ्यन्तरे पश्चिमतो दृश्याः। बस्तिगुहापरिसरीयाः, गुद-बस्ति-मूलाधाराद्यागताश्च रसायन्यः प्राधान्येन तानेव प्रविशन्ति।

---

१। अधिश्रोणिका उत्तरा रसग्रन्थयः—Upper Pelvic Lymph-glands. २। अधिश्रोणिका अधरा रसग्रन्थयः—Lower Pelvic Lymph-glands.

केचित्तु अधिश्रोणिकाख्यानां धमनीनां संज्ञानुसारेण पञ्चविधान्[1] अधिश्रोणिकान् रसग्रन्थीनाचक्षते । सर्वेऽपि ते इहैवान्तर्भूताः ।

**त्रिकपूर्विकाः**[2] नाम रसग्रन्थयः त्रिकास्थ्नः पुरस्तात् कोरोदरे भागे त्रिकमध्या-त्रिकपार्श्विकाख्य-धमनीद्वयानुक्रमेण सन्निविष्टाः । तेषु प्रविशन्ति गुदसम्भवाः वस्तिगुहायाः पश्चिमप्राचीरोत्थाश्च रसायन्यः । तेभ्यो विनिर्गतानां रसायनीनामधिश्रोणिकाख्यग्रन्थिषु प्रवेशः ।

**अनुकटिकाः**[3] नाम असंख्यकल्पा ग्रन्थयः ( १२६ चित्रम् ) कटिवंशस्य पुरस्ताद् महाधमनीं परिवृत्य समन्ताद् वर्त्तन्ते । तेषु पूर्वोक्तग्रन्थिप्रभवाणां रसायनीनां प्रवेशः । ग्रन्थिविनिर्गतानान्तु रसप्रपायाम् ।

( २ ) **आशयिका रसग्रन्थयः** पुनरधोंदरिकां नाम महाधमन्याः अक्षशाखाम्, उत्तरान्त्रिकीमधरान्त्रिकोञ्च नाम धमनीद्वयमनुवर्त्तन्ते । तत्र अधोंदरिकायाः प्रधानशाखात्रयसंज्ञानुसारेण ग्रन्थयोऽपि — यकृन्मूलिकाः पर्यामाशयिकाः, पर्यग्न्याशयप्लोहिकाश्चेति त्रिधा संज्ञिताः । आन्त्रिक्योर्धमन्योरनुवृत्त्या अवस्थिता ग्रन्थयस्तु अन्त्रमूलबन्धनीनां स्तरद्वयान्तःस्थाः, ता अन्त्रमूलिका उत्तराः, अधराश्चेति अभिधीयन्ते । तत्र—

**यकृन्मूलिकाः**[4] नाम रसग्रन्थयः यकृन्मूले तिष्ठन्ति । ते द्विविधाः— (१) याकृतधमनीसहचराः, (२) ग्रहणीद्वारिकाश्चेति । तत्राद्याः उदर्याख्य-महाकलायाः लघुकोषस्य स्तरद्वयान्तरालस्थाः आयकृद्द्वारम् । तेष्वेको ग्रन्थिः पित्तकोषग्रीवोपकण्ठे दृश्यो नियमेन । अपरे ग्रन्थयः, संख्यया चत्वारः पञ्च वा । ते ग्रहण्यामाशययोः सन्धिं परिवृत्य तिष्ठन्ति । त एते यकृन्मूलिकाः रसग्रन्थय आमाशय-ग्रहणी-यकृत्-पित्तकोषाऽग्न्याशयोत्थानां रसायनीनां रससंग्राहिणः । तेभ्यो विनिर्गताः रसायन्यस्तु महाधमनीपुरःस्थान् उदर्यरसग्रन्थीन् प्रविशन्ति ।

**पर्यामाशयिका**[5] नाम बहवः क्षुद्रग्रन्थयः आमाशय-ग्रहण्योः उत्तराधर-सीम्नोरास्तृताः मालाकारेण । आमाशयप्रभवाणां रसायनीनां, ग्रहणीप्रभवाणाञ्च कासाञ्चित् तेषु प्रवेशः ।

---

१ । पञ्चविधाः रसग्रन्थयः—(a) External Iliac Lymph-glands. (b) Common Iliac Lymph-glands. (c) Inferior Epigastric Lymph-glands. (d) Iliac Circumflex Lymph-glands. (e) Hypogastric Lymph-glands. २ । त्रिकपूर्विकाः रसग्रन्थयः—Sacral Lymph-glands. ३ । अनुकटिकाः रसग्रन्थयः—Lumbar Lymph-glands. ४ । यकृन्मूलिकाः रसग्रन्थयः—Hepatic Lymph-glands. ५ । Gastric Lymph-glands.

**पर्यग्न्याशयप्लीहिका**[1] नाम ग्रन्थयः अग्न्याशयस्य ऊर्ध्वधारायामभिप्लीहिकां धमनीमनुसरन्ति, आ प्लीहमूलात्। ते आमाशय-प्लीहाऽग्न्याशयोत्थानां कासाञ्चिद् रसायनीनां रसं संगृह्णन्ति।

**अन्त्रमूलिकाः**[2] नाम रसग्रन्थयः पुनः सार्धशतावधिसंख्याः प्रायः। ते अन्त्रबन्धनीनां स्तरद्वयान्तरालेषु विन्यस्ताः। तान् अन्त्रेभ्यः सौम्यरसाकर्षिण्यः पयस्विन्यो नाम रसायन्यः प्रविशन्ति। तद्विनिर्गतानां तु रसायनीनां प्रवेशो उदर्यमहाधमन्याः पुरोवर्त्तिषु रसग्रन्थिषु, तेभ्यश्च रसप्रपायाम्।

तेषां च ग्रन्थीनां रुजाशोथौ कठिनीभावश्च उदर्यक्षयरोगे विशेषात्, आन्त्रिकज्वरादौ च स्तोकेन भवन्तीति विशेषेण स्मर्त्तव्यम्।

उदर्या रसायन्यः पुनस्त्रिविधाः — बहिःपरिसरीयाः, अन्तःपरिसरीयाः, आशयिकाश्चेति। तत्र—(१) बहिःपरिसरीया नाभेरधःस्थाः वंक्षणीयग्रन्थिषु प्रविष्टाः, नाभेरुर्ध्वस्थास्तु उरोऽन्तःपरिसरीयग्रन्थिषु। कटिपृष्ठस्थाः पुनः उदरान्तःस्थेषु अनुकटिकाख्येषु ग्रन्थिषु प्रविशन्ति। (२) अन्तःपरिसरीयाः पुनर्यथासम्भवम् अन्तःपरिसरीयग्रन्थीनधिश्रोणिकादीन् प्रविशन्ति। (३) आशयिकास्तु आशयान् परिवृत्य वर्त्तमाना आशयिकग्रन्थीन् पूर्वोक्तान् प्रविशन्ति।

अथ उरस्या रसग्रन्थयो रसायन्यश्च।

ते ताश्च द्विविधाः—परिसरीया आशयिकाश्चेति। तत्र परिसरीयाः पुनर्द्विविधाः—बाह्या आभ्यन्तराश्च। आशयिकास्तु आभ्यन्तरा एव। तत्र—

(१) बाह्याः परिसरीय रसग्रन्थयः स्वल्पतरा उरःपुरोभागे दृश्याः (१३१ चित्रम्)। सन्ति च कक्षान्तरीयाः अक्षकाधरीयाश्च ग्रन्थयः उरोबाहुसन्धौ, ते वर्णितपूर्वाः। उरःपूर्विकानां बाह्यरसायनीनां भूम्ना तेषु प्रवेशः, आभ्यन्तरीणाञ्च कासाञ्चित्। प्रविशन्ति च प्रायस्तानेव स्त्रीणां स्तनपरिसरीयाः स्थूलरसायन्यः। अन्तःपरिसरीयाणां तु रसायनीनामाभ्यन्तरेष्वेव रसग्रन्थिषु प्रवेशः।

(२) आभ्यन्तराः परिसरीयरसग्रन्थयः पुनरुरसि त्रिविधाः। तद्यथा—

(क) उरःफलकपार्श्वगाः[3] (उपपर्शुकान्तरालीया वा) ग्रन्थयः उरःफलकपार्श्वगयोरन्तःस्तनिकाख्यधमन्योरनुसारिणः। ते एकैकतः पञ्चषाः, उपपर्शुका-

---

१। पर्यग्न्याशयप्लीहिकाः रसग्रन्थयः—Pancreatico-lienal Lymph-glands. २। अन्त्रमूलिका रसग्रन्थयः—Masenteric Lymph-glands. ३। उरःफलकपार्श्वगाः रसग्रन्थयः—Sternal or Internal Mammary Lymph-glands.

न्तरालेषु द्वश्याः । तेषु क्वासाञ्चित् स्तनोत्थानां रसायनीनां, नाभेरूर्ध्वस्थाना-मुदरपरिसरीयाणां, उरःपूर्विकाणाञ्च गम्भीराणां प्रवेशः । तद्विनिर्गता रसायन्यस्तु द्वयोः स्थूलतररसायन्योः परिणमन्ति । ते रसकुल्ययोः प्रविशतः ।

पृष्ठवंशपार्श्वगाः[1] ( पर्शुकान्तरालीया वा ) नाम ग्रन्थयः पृष्ठवंशमुभयतो वर्त्तन्ते पर्शुकान्तरालेषु । ते एकैकतो दश द्वादश वा संख्यया । पृष्ठस्थानां

[ १३४ चित्रम् ] अधिक्लोमका रसग्रन्थयः ।




[ चित्रव्याख्या—१।१।१ क्लोमनलिकामुभयतोऽवस्थिता रसग्रन्थयः । २।२ क्लोम परितः स्थिताः रसग्रन्थयः । ३।३ क्लोमकाण्डिकाः, परितः स्थिताः ग्रन्थयश्च । ४ फुल्फुसान्तरीया रसग्रन्थयः । ५।५ फुल्फुसाभिगे महाधमन्यौ । ]

---

१ । पृष्ठवंशपार्श्वगाः रसग्रन्थयः— Intercostal Lymph-glands

रसायनीनां पृष्ठपेश्यादीन् निर्भिद्याऽन्तःप्रविष्टानां तेषु प्रसरः। तन्निर्गतानान्तु स्थूलतररसायनीषु परिणतानां रसप्रपायां, रसकुल्ययोर्वा प्रवेशः।

महाप्राचीरोत्तराः[1] नाम रसग्रन्थयो महाप्राचीराख्यपेश्याः समन्ताद् वर्त्तन्ते। तेषु कासाञ्चित् पेशीसमुत्थानां यकृत्पृष्ठादिप्रभवाणां च रसायनीनां प्रवेशः। तन्निर्गतानान्तु पूर्वोक्तेषु ग्रन्थिषु यथासम्भवम्।

**आशयिकाः** पुनर्ग्रन्थयः उरोगुहायां त्रिविधाः—अग्रिमफुस्फुसान्तरीयाः, पश्चिमफुस्फुसान्तरीयाः, अधिक्लोमकाश्चेति। तत्र—

**अग्रिमफुस्फुसान्तरीयाः**[2] नाम रसग्रन्थयः पुरस्तादुत्तरे फुस्फुसान्तराले वर्त्तन्ते तोरण्या महाधमन्याः ऊर्ध्वं काण्डसिराधमनीरभितश्च। तेषु बालग्रैवेयकग्रन्थेः, हृत्कोषतश्च समुत्थितानां रसायनीनां प्रवेशः। तेभ्यो विनिर्गतानान्तु अधिक्लोमकाख्येषु रसग्रन्थिषु।

**पश्चिमफुस्फुसान्तरीयाः**[3] नाम रसग्रन्थयः हृत्कोषस्य पश्चिमस्थाः। ते अवरोहिणीं महाधमनीमन्ननालिकाञ्च परितो वर्त्तन्ते। तत्प्रवेशिन्यो रसायन्यः, हृत्कोषान्ननलिकादिप्रभवाः। तन्निर्यायिण्यश्च प्रायो दीर्घां रसकुल्यां प्रविशन्ति।

**अधिक्लोमका**[4] नाम बहवो रसग्रन्थयो नानाविधाकृतयः (१३४ चित्रम्) क्लोमनलिकामुभयतः, तत्काण्डयोः शाखा-प्रशाखादीनाञ्च समन्ताद् दृश्यन्ते श्रेणीबद्धाः। तेषु क्षुद्रतमाः क्लोमकाण्डिकाभिः क्षुद्राभिः सह फुस्फुसान्तरनुप्रविष्टाः। सर्वे च ते क्लोम-फुस्फुस-हृदयप्रभवाणां रसायनीनां विशोधनकर्माणः। तद्विनिर्गताश्च रसायन्यो द्वयोः स्थूलरसायन्योः परिणमन्ति। ते चोर्ध्वं गत्वा गलमूलमुभयतो रसकुल्ययोः प्रविशन्ति, क्वचिद् वा गलमूलिकयोः सिरयोः पृथगेव।

एते चाऽधिक्लोमका ग्रन्थयः संकुलजनपदनिवासिनां श्यामाभाः कठिनीभूताश्च दृश्यन्ते, श्वासवायुवाहितस्य रजोधूमादेः सम्पर्कात्। राजयक्ष्मादौ च विशेषेण शोथवन्तस्ते कृच्छ्रकासादीन् जनयन्तीति स्मर्त्तव्यम्।

रसायन्यश्च उरस्याः सर्वत्र उरःपरिसरे, आशयिकधमनीः स्रोतांसि च संवेष्ट्य तिष्ठन्ति। तासां प्रवेश-निर्गमादिकं व्याख्यातपूर्वम्।

इति समाप्तं रसायनीखण्डम्।

---

१। महाप्राचीरोत्तरा रसग्रन्थयः—Diaphramatic Lymph-glands. २। अग्रिमफुस्फुसान्तरीयाः रसग्रन्थयः—Anterior Mediastinal Lymph-glands. ३। पश्चिमफुस्फुसान्तरीया रसग्रन्थयः—Posterior Mediastinal Lymph-glands. ४। अधिक्लोमका रसग्रन्थयः—Tracheo-bronchial Lymph-glands.

# प्रत्यक्षशारीरम्

## आशयखण्डम् ।

### प्रथमोऽध्यायः ।

अथात आशयसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

इह खलु आशेरते दोषधातुमलादय एष्विति कृत्वा अन्न-मल-मूत्रादीनां मुख्याधारा आशया इत्युच्यन्ते । तैरेव साधनभूतैः शारीरकार्याणां प्रवर्त्तनात् नियमनात् च । शारीरयन्त्राणीति तु तेषां सानुबन्धानां साधारणी संज्ञा ।

ते चाशया द्विविधाः—सगर्भा[1] अगर्भाश्च । त्रिविधा वा—महागर्भाः, ईषद्गर्भाः, अगर्भाश्चेति । तत्र महागर्भाः—आमाशय-पक्वाशय-मूत्राशय-गर्भाशयाद्याः । ईषद्गर्भाः—मस्तिष्कादयः, फुस्फुसद्वयञ्च बहुक्षुद्रगर्भत्वात् । अगर्भाः यकृत्प्लीहाद्याः । तेषु महागर्भाणामेव आधेय[2]संज्ञाभिर्व्यवहारः प्रायेण, अन्येषान्तु विलक्षणसंज्ञाविशेषैः । निःस्रोतस्का ग्रन्थिविशेषास्तु अगर्भाशयेष्वन्तर्भवन्ति । अथवा द्विविधा एव आशयाः—कोषरूपाः, पिण्डरूपाश्च ।

निर्माणं पुनराशयानां द्विविधम्—स्वतन्त्रपेशीप्रधानं, विलक्षणवस्तुप्रधानञ्च । तत्र महागर्भाणां पूर्वं, परमितरेषाम् । सिराधमनीजालकैरभिव्याप्तानि च सर्वत्र आशयनिर्माणवस्तूनि, तानि विशिष्टकार्यकराणि ।

सर्वेषाञ्चाशयानां बहिरावरणं कलामयम् । अन्तरावरणञ्च तादृशमेव कोषाकाराणां, सूक्ष्मतरञ्च । उभयमपि तनुश्लेष्मस्रावि, विशेषतश्चाभ्यन्तरावरणम् ।

निर्माणवैचित्र्यविशेषांश्च तेषां प्रत्याशयं विभज्य यथास्थानमुपदेक्ष्यामः ।

आशयप्रसंगेषु चेह तत्तदाशयसम्बन्धिनां लालाग्रन्थ्यादीनां संग्रहः, ते ह्यनुबन्धास्तुल्यप्रयोजनाः । आशयानां च सानुबन्धानां तन्त्रमितिसंज्ञा[3] ।

तांश्च तथा तथा कार्यविभागेन षोढ़ा प्रविभज्य व्याचक्षते शारीरविदः । तद्यथा—संज्ञाचेष्टायतनयन्त्राणि, रक्तसंवहनयन्त्राणि, श्वसनयन्त्राणि, अन्नपचन-

---

१। गर्भपदमिह कुक्षिस्थावकाशार्थे। २। आधेयानि—आम-पक्व-गर्भ-मूत्रादीनि, तेषामाधारत्वात्। ३। क्वचित् सानुबन्धानां नाड्यादीनामपि तन्त्रसंज्ञया निर्देशः—यथा नाडीतन्त्रम्।

यन्त्राणि, मूत्रयन्त्राणि, प्रजननयन्त्राणि चेति। तेषां तिसृषु गुहास्ववस्थानमित्युक्तपूर्वम्। तदनुबन्धानां तु बहिरपि गुहाभ्यः।

शिरोगुहाद्यन्तरीयाणां संज्ञाचेष्टायतनयन्त्राणां मस्तिष्कादीनां नाड़ीतन्त्रेष्वन्तर्भावः, विस्तरश्च तत्रैव वाच्यः। उरोगुहान्तरीयेषु रक्तसंवहनयन्त्राणि विवृतपूर्वाणि। श्वासयन्त्रतन्त्रं[1] तावदिह व्याख्यास्यते, उदरगुहान्तरीयाणि यन्त्राणि च। उदरोरसोरवस्थितानां यन्त्राणां संग्रहाय च 'कोष्ठ' इति संज्ञा प्राचाम्। तदुक्तम्—

"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च।
हृदुण्डुकः फुस्फुसश्च कोष्ठ इत्यभिधीयते॥"

सर्वेषाञ्च यन्त्राणां सारथिभूतास्त्रयो धातवः सूक्ष्म-स्थूलरूपैरवस्थिताः—वायुः, पित्तं, कफश्चेति वैद्यकविदः। तैर्हि प्रकृतिस्थैः सम्यक् प्रवर्त्यन्तेऽनुगृह्यन्ते प्रगृह्यन्ते च शारीरक्रियाः स्वाभाविक्यः। विकृताश्च ते ता एवोच्छृङ्खलं प्रवर्त्तयन्तस्तांस्तान् रोगान् जनयन्ति।

तत्र वायुः सर्वयन्त्रतन्त्रधरः, तदनुगौ च सर्वथा पित्तश्लेष्माणौ। ते च सर्वशरीरचरा अपि केषुचिदाशयेषु धात्वादिषु च परिस्फुटकार्याः। तद्यथा—संज्ञाचेष्टायतनयन्त्रेषु वायुः, अन्नविपचनयन्त्रेषु पित्तं, श्वसनयन्त्रादिषु श्लेष्मा। तद्विस्तरस्त्वाकरेषु सिद्धान्तनिदाने च द्रष्टव्यः।

तदेतदाशयसामान्यविज्ञानमभिहितं बीजरूपेण। विस्तरोऽत ऊर्ध्वम्।

भवन्ति चात्र—

"नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
विकृताः प्रकृतिस्था वा तान् बुभुत्सेत पण्डितः॥
उत्साहोच्छ्वासनिःश्वासचेष्टा धातुगतिः समा।
समो मोक्षो गतिमतां वायोः कर्माऽविकारजम्॥
दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम्।
प्रभा प्रसादो मेधा च पित्तकर्माऽविकारजम्॥
स्नेहो बन्धः स्थिरत्वं च गौरवं वृषता बलम्।
क्षमा धृतिरलोभश्च कफकर्माऽविकारजम्॥"

(चरक० सूत्र० १८ अ०)

इति प्रथमोऽध्यायः।

---

१। यन्त्रतन्त्र पदेन सानुबन्धानां यन्त्राणां ग्रहणं सुप्रसिद्धम्।

# द्वितीयोऽध्यायः ।

अथातः श्वासयन्त्रवर्णनीयमध्यायं व्याख्यास्यामः ।

उरोगुहायां फुस्फुसौ, श्वासनलिका, अन्ननलिका, हृदयञ्च सानुबन्ध[1]मिति कथितपूर्वम् । तत्र फुस्फुसयोः स्वरयन्त्र-श्वासनलिकादिसहितयोः श्वास-यन्त्रमिति संज्ञा । अन्ननलिका तु उरोगताऽपि अन्नपचनयन्त्रवर्णने वर्णनीया, तदनुबन्धभूतत्वात् । हृदयं तु व्याख्यातचरं धमनीखण्डे ।

सेयमुरोगुहा समन्तादुरःपञ्जरवेष्टिता सूचितपूर्वा, सह तदन्तःस्थैर्विशेषैः । धार्यते च सा—अधस्ताद् महाप्राचीरोर्ध्वतलेन कूर्मपृष्ठाकारेण, पार्श्वयो-र्धनुर्वक्राभिः पर्शुकाभिः, पुरस्तात् सोपपर्शुकेन उरःफलकेन, पश्चिमतः पृष्ठवंशपुरोभागेन । अन्तरालेषु च पर्शुकोपपर्शुकानां तदापूरण्यः पेश्यः पर्शुकान्तरिका नाम । उभयतश्चोरःफलकं तत्पृष्ठस्थे पेश्यौ उरस्त्रिकोणिका-संज्ञे । सन्ति चापरा अपि पेश्यः उरश्छदाद्या वाह्याः ये उरःफलक-पर्शुको-पपर्शुकादिषु संलग्नाः श्वासकर्मसहायाः ।

सेयमुरोगुहा अभ्यन्तरतो दृढकलावृता । कला चासौ उरस्या, फुस्फुसधरा वा नाम अग्रे वक्ष्यमाणा ।

उरोगुहायतनञ्च स्फारोदरकलशाकारम् अधःसमायतमूर्ध्वं संकुचितम्, विशेषतश्च पार्श्वयोरधिकायतम् । तलदेशे तु मध्ये पुरश्चाऽगभीरं, गभीरं च पश्चात् पार्श्वयोश्च । नियतपरिवृत्तिशीलञ्च तत् प्रश्वास-निःश्वासकालयोः, उरःपञ्जरस्य विस्फारसङ्कोचाभ्याम् फुस्फुसयोर्वायुपूरण-रेचनकृताभ्याम् ।

## अथ स्वरयन्त्रम् ।

**स्वरयन्त्रं**[2] नाम ( १३५।१३७ चित्रयोः ) विविधस्वरोत्पादनसाधनम् तरुणास्थिमयं सम्पुटमुभयतश्छिद्रं, यत् श्वासनलिकायाः शिखरेऽवतिष्ठते जिह्वा-मूलेन सम्बद्धम् । तदेतत् कण्ठिकास्थिमूलादारभ्य अवटुसंज्ञस्य ग्रीवापुरोवर्त्तिन उत्सेधस्याधःसीमां यावदनुभूयते दृश्यते च मध्यरेखायां त्वगधस्तात् पेशी-प्रच्छदावृतम् कण्टकवत् । तस्योर्ध्वच्छिद्रम् श्वासवायुप्रवेशद्वारभूतम्, श्वास-वायुनैव स्वरयन्त्रप्रविष्टेन विविधस्वरोत्पादनात् । तच्च छिद्रम् अधिजिह्विकाख्य-तरुणास्थिकपाटकेन संरक्षितम् । कपाटकञ्च तत् सदैवोर्ध्वमुखं श्वासद्वारमपावृत्य

---

१ । महासिराधमन्यादि सहितमित्यर्थः । २ । स्वरयन्त्रम्—Larynx.

तिष्ठति, संवृणोति च तत् अन्नजलादिनिगिरणकाले—इत्यस्य नैसर्गिको नियमः । अधश्छिद्रं तु स्वरयन्त्रस्य श्वासनलिकान्तरीयवायुमार्गेण सानुबन्धम् ।

संयोगश्च स्वरयन्त्रस्य ऊर्ध्वं कण्ठिकास्थ्ना, अधश्च श्वासनलिकया । निर्मीयते च तत् नवभिस्तरुणास्थिभिः । तेषां त्रीणि बृहन्ति एकाकीनि च । तानि—अवटुकं, कृकाटकम्, अधिजिह्वकं चेति-संज्ञानि । त्रीणि क्षुद्राणि युग्मरूपाणि च । तानि—घाटिके, कोणिके, कर्णिके चेति प्रत्येकं द्वे द्वे इति षट् । एवं साकल्येन नव ।

तत्र **अवटुकं**[1] नाम (१३५।१३६ चित्रयोः) किञ्चिदायतपक्षद्वयात्मकं प्रधानं तरुणास्थि स्वरयन्त्रसम्पुटनिर्मापकम् । तयोः संयोगजः कण्टकवदुत्सेधो यूनां दृश्यः, विशेषतश्च पुंसाम्, ग्रीवापुरस्तात् । पक्षद्वयञ्चास्य मध्यरेखायां कोणमारच्य्य पश्चात् प्रसृतम् तदन्तरालस्थया अवटुपट्टिकाख्यया स्नायुबन्धन्या पश्चिमतः संयोजितम् । तस्य च द्वे द्वे शृङ्गे ऊर्ध्वमधश्च, तत्र ऊर्ध्वशृङ्गयोः सम्बध्येते कण्ठिकावटुशृङ्गिके नाम स्नायुरज्जू, कण्ठिकास्थिपार्श्वाभ्यां तत्-सन्धानाय । अधःशृङ्गद्वयस्य तु सन्धानं कृकाटकपार्श्वाभ्याम् अवटुकृकाटिकाख्य-स्नायुभ्याम् । पक्षद्वयसन्धानकोणस्य चोर्ध्वभागे त्रिकोणं खातम्, अधिजिह्वक-मूलेन सन्धानाय । ऊर्ध्वधारा चास्य संयुज्यते कण्ठिकास्थ्ना स्थूलकला-पट्टिकामन्तरीकृत्य — सेयं कला कण्ठिकाऽवटुयोजनी[2] नाम । अधोधारा तु तादृशीमेव कलापट्टिकामन्तरीकृत्य कृकाटकेन—सेयं कला अवटुकृकाटिका[3] नाम ।

एकैकस्य च अवटुपक्षस्य बहिःपृष्ठे संयुज्यन्ते तिस्रः पेश्यः—उरोऽवटुका, अवटुकण्ठिका, कण्ठसङ्कोचनी अधरा चेति । आभ्यन्तरपृष्ठे तु पक्षद्वयस्य संलग्नाः पञ्च विशेषाः । तद्यथा—मध्ये स्नायुबन्धनीसंबद्धा अधिजिह्विका, उभयतश्च स्वर-यन्त्रोदरे परिघवदवस्थितं स्वरतन्त्रीचतुष्टयं द्वे मुख्ये, द्वे च गौण्यौ । तिस्रश्च पेश्य एकैकतस्तत्रैव—अवटुघाटिका, अवटुगोजिह्विका, अनुतन्त्रिका चेति ।

**कृकाटकं**[4] नाम (१३५—१३७ चित्रेषु) अङ्गुरीयकाकारं तरुणास्थि स्वर-यन्त्रस्याधरावयवभूतम् । तस्य द्वौ भागौ—तनुवृत्तार्धः पुरस्तात्, स्थूलायतार्धश्च पश्चात् । तत्र पुरोऽर्धे पार्श्वयोरूर्ध्वं सम्बद्धा अवटुकस्याधोधारा, अधस्तात् श्वास-नलिकाया ऊर्ध्वधारा संयोजनकलाव्यवधानेन । पश्चिमार्धस्तावत् सार्धाङ्गुला-

---

१ । अवटुकं—Thyreoid Cartilage. २ । कण्ठिकाऽवटुयोजनी—Hyo-thyreoid Membrane. ३ । अवटुकृकाटिका—Crico-thyreoid Membrane. ४ । Cricoid Cartilage.

[ १३५ चित्रम् ] स्वरयन्त्रं क्लोमनलिका च।




[ अ० कृ०—अवटुकृकाटकान्तरीया कला ]

यतः। तस्य पृष्ठतो मध्यरेखायां सम्बद्धः अन्ननलिकायाः पुरोदेशः। तदेकैकतश्च पेशी कृकाटघाटिका पश्चिमा नाम। तद्बहिश्च स्थालके अवटुकपक्षयोरधःश्रृङ्ग-सन्धायिनो। ऊर्ध्वधारावस्थिताभ्यां स्थालकभ्यान्तु संघोयेते तरुणास्थिनी घाटिके नाम। अधोधारा तु तस्य श्वासनलिकाशिखरेण संवद्धा कलामयपट्टिकया।

**अधिजिह्वकं**[1] ( **अधिजिह्विका** वा ) नाम स्वरयन्त्रस्योर्ध्वद्वार-पिधानभूतम् तरुणास्थि क्षुद्रसर्पफणाकारम्, यत् स्वरयन्त्रस्योर्ध्वप्रान्ते पुरःसीम्नि

१। अधिजिह्वकम्—Epiglottis.

मध्यरेखायां वृन्तमात्रेण सम्बद्धम् (१३६।१३७ चित्रयोः) । तदन्नजलादिनिगिरणकाले स्वरयन्त्रद्वारं सपदि संछादयति । तच्च सर्वतः श्लेष्मलकलावृतम् पुरस्तादुभयतश्च तनुस्थितिस्थापकस्नायुभ्याम् जिह्वामूलेन पुरः सम्बद्धम्, घाटिकाख्यतरुणास्थिभ्याञ्च पश्चात् । श्वासमार्गसंरक्षिकपाटभूतञ्च तद्—इति विशेषेण स्मर्त्तव्यम् । तद्धि जिह्वामूले सर्पफणवत् सदा समुन्नतं पश्चादभिमुखं तिष्ठति । अंगुल्या स्पर्शनयोग्यं दर्शनयोग्यञ्च तद् जिह्वामूलावनमनेन । स्वरयन्त्रद्वारं तदन्तरञ्च मुकुरादिसहायेन चक्षुषा द्रष्टव्यम् कृतयोग्येन वैद्येन ।

**घाटिके**[1] नाम त्रिकोणप्राये तरुणास्थिनी (१३६।१३७ चित्रयोः) कृकाटक-शिरसि स्वरयन्त्रपश्चिमभागे सम्बद्धे । तयोश्चूड़ाद्वयमंकुशवद् विवृत्ताग्रम् । पृष्ठतश्च एकैकस्य अंकुशस्य संयुज्यते स्वरतन्त्रीचतुष्टयम् । तेषां द्वे मुख्ये, द्वे च गौण्यौ । उभयोश्च संव्यूहनी पेशी एकैव चूड़ाद्वयस्य मूले पश्चिमतः परिघवदवस्थिता— सा घाटान्तरीया नाम । अपरा स्वस्तिकाकारैर्मांससूत्रैरुभयोः संव्यूहनी पश्चात्, सा स्वस्तिक-घाटान्तरीया नाम । एकैकस्या घाटिकायाः पृष्ठतश्चैकैकतः पेशी-द्वयं—कृकाटघाटिका पश्चिमा, पार्श्वगा चेति ।

**कोणिके**[2], **कर्णिके**[3] चेति नाम (१३६ चित्रम्) द्वे द्वे क्षुद्रतरुणास्थिनी घाटिकयोः चूड़ाद्वयसंयोजन्याः स्नायुसूत्रिकाया अन्तर्निविष्टे तद्दृढीकरणाय चणकास्थिवत् । तासामाद्ये क्षुद्रवर्त्तुलाग्रे तनु-वक्रदण्डिकाकारे पार्श्वस्थे, अन्त्ये क्षुद्रपुष्पमुकुलाकारे मध्यरेखामुभयतः । स्नायुसूत्रिका चासौ तद्धारिणी अर्ध-चन्द्राकारमास्थाय अधिजिह्विकापार्श्वयोर्मिलिता ।

अथास्य तरुणास्थिसंघातमयस्य स्वरयन्त्रस्य अभ्यन्तरं स्वरयन्त्रोदरं (१३६।१३७ चित्रयोः) नाम । तदन्तःपरिधिस्तनुश्लेष्मस्राविण्या सूक्ष्मकलया सर्वत्र समावृतः । तस्योर्ध्वद्वारं गलबिलसंयोगि, तदभिरक्ष्यते नियतमूर्ध्वमुख्या गोजिह्विकया । सेयमन्नादिनिगिरणकाले स्वयमेव पिदधाति स्वरयन्त्रद्वारं साकल्येन । अधोद्वारं पुनः स्वरयन्त्रस्य श्वासनलिकानुबन्धि ।

अथ स्वरतन्त्रयः ।

**स्वरतन्त्रयः**[4] (१३८ चित्रम्) स्वरयन्त्रोदरे शरगत्या पुरः-पश्चादायतं तन्त्रीचतुष्टयं कलावृतस्नायुसूत्रमयम् । तस्य उत्तरतन्त्रीद्वयं गौणीसंज्ञम्, अधरं पुनः

---

१। घाटिके—Arytenoid Cartilages. २। कोणिके—Cuneiform Cartilages. ३। कर्णिके—Corniculate Cartilages. ४। स्वरतन्त्रयः—Vocal Cords.

( १३६ चित्रम् )

## कण्ठिकास्थिसहित-स्वरयन्त्रस्य विशेषदर्शकं चित्रम् ।




चित्रव्याख्या—१। कण्ठिकास्थ्नो महाश्रृङ्गम्। २। तस्यैव मध्यपिण्डार्धम्। ३। पार्श्वस्था अवटु-कण्ठिका स्नायुः। ४। तन्मध्यस्थं चणकास्थि। ५। कण्ठिकाऽवटुसंयोजनी कलाबन्धनी (मध्यस्था)। ६। उत्तरमवटुश्रृङ्गम्। ७। अवटुमध्यस्थः उत्तरकोणः। ८। अवटुपत्रः। ९। तिरश्चीन रेखा (अवटुपार्श्वस्था)। १०। अवटु-कृकाटक योजनी कलाबन्धनी मध्यस्था। ११। अधरम् अवटुश्रृङ्गम्। १२। अवटु-कृकाटिकयोः सन्धिः पार्श्वस्थः। १३। कृकाटकेन श्वासनलिकाया बन्धनी। १४। श्वासनलिका (क्लोमनलिका वा)। ध०—स्वरयन्त्रपोषण्या धमन्याः प्रवेशद्वारम्।

( To face page 176 )

( १३७ चित्रम् )

## स्वरयन्त्रीयतरुणास्थ्नां प्रदर्शकम् ।

( पृष्ठतो दृष्टम् )




[ १३८ चित्रम् ] स्वरयन्त्रस्य ऊर्ध्वमुखम् ।



मुख्यसंज्ञम्। चतसृणामपि तासां संयोगः पुरस्तादवटुशिखरस्थे कोणे, पश्चाच्च घाटिकयोरंकुशाग्रद्वयस्य पुरस्तले, ऊर्ध्वाधःक्रमेण। तासां चान्तरालं त्रिकोणं तन्त्रीद्वारं[१] नाम। तस्य विकास-मुद्रणाभ्यां स्वरतन्त्रीणां ह्रस्वदीर्घीकरणाच्च नानाविधविचित्रस्वरनिष्पत्तिः। तच्चोभयं घाटिकास्थनोराकर्षणाऽपकर्षणाभ्यां सम्पाद्यते। स्वरयन्त्रद्वारं[२] तु पृथगेवोर्ध्वम्, तदेव श्वासमार्गद्वारमपि।

तत्र स्वरतन्त्रीणामुत्तंसनाय द्वे पेश्यौ मुख्ये—अवटुकृकाटिके[३] नाम। द्वे च तत्सहायभूते—कृकाटघाटिके पश्चिमे[४] नाम। तासामेव श्लथीकरणाय द्वे—अवटुघाटिके[५] नाम। ता एताः षट् स्वरतन्त्रीपेश्यः[६], अष्टौ वा गोजिह्वाघाटिकयोर्ग्रहणात्। अथ तन्त्रीद्वारस्य मुद्रणाय नव पेश्यः। तासु मध्ये घाटान्तरीया[७] एकाकिनी, अष्टौ त्वपराः—एकैकतश्चतस्र इति। तद्यथा—स्वस्तिकघाटिका[८], गोजिह्वाघाटिका[९], कृकाटघाटिका पार्श्वगा[१०], अनुतन्त्रीका[११] चेति। अवटु-गोजिह्विके[१२] नाम पेश्यौ तु गोजिह्विकावनमनेन श्वासमार्गद्वारं छादयतः अन्नादि-निगरणकाले। ता एताः स्वरयन्त्रपेश्यो व्याख्याताः, तत्कार्याणि च। समग्रस्य स्वरयन्त्रस्य ऊर्ध्वाधःकर्षणन्तु क्रमेण अवटुकण्ठिकया उरोऽवटुकाख्यया च पेश्या। ते ग्रीवापेशीषु व्याख्याते।

अथास्य स्वरयन्त्रस्य पोषण्यो धमन्यः—उत्तरग्रीविकाऽधरग्रीविकयोर्धमन्योः प्रशाखाः, बहिर्मातृकायाश्च। तासां सहचर्यः सिरास्तु अनुमन्याख्यसिराद्वयं गलमूलिकाञ्च प्रविशन्ति। नाड्यः पुनः स्वरयन्त्रस्य—प्राणदयोः शाखाश्चतस्रः प्राधान्येन—द्वे स्वरयन्त्रारोहिण्यौ, द्वे च उत्तरस्वरिण्यौ नाम।

तदेतत् स्वरयन्त्रं समासेन व्याख्यातम्। एतानि च तत्स्मरणाय पद्यानि -

श्वासमार्गप्रतीहार-भूमिः स्यात् स्वरयन्त्रकम्।<br>
घटितं सम्पुटं चारु नवभिस्तरुणास्थिभिः॥<br>
गोजिह्विकाऽवटु-कृकाटक-घाटिकेति, मुख्यानि तेषु गिलने तु पिधानमाद्यम्।<br>
सत्स्नायुजालकलितं ललितस्वरं तद्, यन्त्रं नियन्त्रितमुखं स्वरतन्त्रिकाभिः॥<br>
विकास-मुद्रणाभ्याञ्च तस्य स्वरशतोद्भवः।<br>
तत्साधनाय चेष्टन्ते सप्त पेश्यो दशाधिकाः॥

---

१। Rima Glottidis. २। Aditus or Entrance to Larynx. ३। Crico-thyreoideus Muscle. ४। Crico-arytaenoideus Posterior M. ५। Thyreo-arytaenoideus M. ६। Muscles of the Vocal Cords. ७। Arytaenoideus Transverses M. ८। Arytenoideus Obliqus M. ९। Arytenc-epiglotticus M. १०। Crico-arytaenoideus Lateralis M. ११। Ventricularis M. १२। Thyreo-epiglotticus M.

## अथ श्वासनलिका।

**श्वासनलिका, क्लोमनलिका**[1] वा नाम (१३५ चित्रम्) प्रायः षडङ्गुलदीर्घा स्वांगुष्ठपरिणाहा नलिका, या ग्रीवापुरस्तादवटुदेशाऽधःसीमत आरभ्य उरोमध्यं प्रविष्टा विभक्ता च। सेयमुपर्युपरि संहितैः पश्चादसम्पूर्णैस्तरुणास्थिमण्डलैः स्नायुवृतिसंबद्धैरारचिता कण्ठकूपे त्वगधस्तादनुभवनीया द्वित्रांगुलमात्रेण। ततश्च उरोगुहान्तःप्रविष्टाऽसौ पञ्चमपृष्ठकशेरुकासन्धेः पुरस्ताद् द्वयोः शाखानलिकयोर्विभक्ता फुस्फुसद्वयप्रवेशाय। एकैका च सा शाखानलिका पुनः शाखा-प्रशाखाऽनुशाखासु विभज्यमाना चरमैः शाखाप्रतानैरणून् वायुकोषान् प्रविशति। सेयं शाखाप्रशाखादिवती श्वासनलिका सर्वत्राप्याभ्यन्तरपरिधौ अवलंबकाख्यतनुश्लेष्मस्राविण्या सूक्ष्मकलया परिवृता। सोऽसौ श्वासवायोर्गतागतमार्गः। समग्रायाश्च शाखाद्वयविभक्तायाः श्वासनलिकायाः क्लोमेति[2] संज्ञा वेदविदाम्।

व्यतिकरः पुनः श्वासनलिकाया ईदृशः। ग्रीवायामस्याः पुरस्ताद् ग्रैवेयकग्रन्थिः, अधरग्रैवेयक्यौ नाम सिरे, उरोग्रैवेयक्यौ उरःकण्ठिके चेति पेश्यश्च। पश्चादन्ननलिका। तदाच्छादनी च ग्रीवाप्रच्छदाख्या प्रावरणी सिराधमन्यादिसहिता। उरसि तु—उत्तरे फुस्फुसान्तराले क्लोमनलिकायाः पुरस्तात् दृश्यानि (सम्मुखत आरभ्य) एतानि—उरःफलकं, बालग्रैवेयकग्रन्थिशेषः, वामा गलमूलिकाख्या सिरा, महाधमन्यास्तोरणभागः, काण्डमूला धमनी, वामा महामातृका धमनी, नाड़ीचक्रं च अनाहतसंज्ञम्। पश्चिमतश्च क्लोमनलिकायाः—अन्ननलिका तत्पृष्ठसंलग्ना। दक्षिणतः काण्डमूला धमनी, प्राणदाख्या नाड़ी च दक्षिणा। वामतः पुनर्महाधमन्यास्तोरणांशः, महामातृका धमनी अक्षाधरा च।

इह तु मुख्यायाः श्वासनलिकायाः क्लोमनलिकेति संज्ञा, प्रधानशाखाद्वयस्य पुनर्दक्षिणवामे क्लोमशाखे इति, तच्छाखाप्रशाखानान्तु क्लोमकाण्डिकाः इति। तत्र—

---

१। क्लोमनलिका—Trachea. २। क्लोमपदार्थनिर्णये बहुधा विवदन्ते वैद्याः। तद्विवरणमुपोद्घातस्य ७२ पृष्ठे द्रष्टव्यम्। तत्र क्लोम नाम गलबिलवेष्टनोऽवयवः (ग्रसनिका Pharynx) इति प० कृष्णशास्त्रिकवडे महाशयानां मतं नोपेक्ष्यम्, केषाञ्चित् लक्षणानां तत्र समन्वयात्। तथापि "क्लोम स्याद् गलनाड़िका" इति कर्काचार्यमतमुव्वटमहीधराभ्यां समर्थितम् याज्ञिकानां च समादृतं साधीयः प्रतिभाति। याज्ञिका हि गुरुपरम्परालब्धज्ञानेन यज्ञे क्लोम्नि हवनीये गलनाड़ीमेव क्षिपन्ति। सा च कण्ठे चोरसि चावतिष्ठते, सुश्रुतोक्तमर्मसन्धयश्च तस्यामेव। अथ ग्रसनिकासम्बद्धा श्वासनलिका क्लोमेति चेत् कल्प्यते, तर्हि सर्वलक्षणसमन्वयः सम्भवति ग्रसनिकाया विद्रधिस्थानत्वात् (Retropharyngeal Abscess), पिपासास्थानत्वेन प्रसिद्धेश्च। परं ग्रसनिका अन्ननलिकानुबन्धिनी विशेषादिति क्लोम्नि तदन्तर्भावो न युज्यते।

**दक्षिणा क्लोमशाखा**[1] स्थूलतरा सार्धांगुलायता हृदयस्योत्तरमहासिरायाश्च पश्चाद्दक्षिणतोऽवस्थिता। सा षड्भिरष्टभिर्वा तरुणास्थिमण्डलैः स्नायुजालनिबद्धैर्विनिर्मिता। तस्या द्वयोः क्लोमकाण्डकयोर्विभागः। ते फुस्फुसाभिगाया धमन्या उत्तराधरदेशावधितिष्ठतः। तयोरुत्तरा दक्षिणफुस्फुसस्य उत्तरं पिण्डं प्रविशति। अधरा तु पुनर्द्विधाविभक्ता अधरम्।

**वामा क्लोमशाखा**[2] षडंगुलायता प्रायो दशभिर्द्वादशभिर्वा तरुणास्थिमण्डलैर्निर्मिता। सा महाधमनीतोरणस्याधस्तात् प्रविश्य अन्ननलिकाया रसकुल्यायाश्च पुरस्तात् फुस्फुसाभिगधमन्याश्च पश्चादवतिष्ठते, विभज्यते च तिसृषु शाखासु वामफुस्फुसस्य पिण्डत्रयप्रवेशाय।

अथेमाः सशाखायाः श्वासनलिकायास्तर्पण्यो धमन्यः। श्वासनलिकायाः अधरग्रीविका नाम धमनी अक्षाधरोत्था। क्लोमकाण्डकानान्तु क्लोमकाण्डानुगाः। सिराश्च धमनीभिस्तुल्यसंज्ञाः। नाड्यः पुनः प्राणदयोरेव शाखाः प्राधान्येन।

अथ उरस्या, फुस्फुसधरा वा कला।

**उरस्या**[3], **फुस्फुसधरा** वा नाम विशालायतना तनुमसृना कला स्तरद्वयवती उरोगुहाया एकैकार्धे एकैकं फुस्फुसं प्रावृत्य धारयति एकेन स्तरेण, संसज्यते च उरःपञ्जरार्धस्य प्राचीरान्तःपरिधौ ऊर्ध्वाधस्तलयोश्च अपरेण स्तरेण (१४१ चित्रम्) सेयमेकैका कला दीर्घायतमुद्रितकोषरुपा। स्तरद्वयान्तश्च तस्या दृश्यते स्तोकमात्रा तनुलसीका, स्तरयोः परस्परसंघर्षणवारणाय। तयोर्बाह्यभागस्य "परिसरीयभाग" इति संज्ञा, उरःपरिसरान्तर्वेष्टनभूतत्वात्। आभ्यन्तरस्य तु "पर्याशयभाग" इति संज्ञा, आशयं परितः संसञ्जनात्। न च फुस्फुसः कलायाः स्तरद्वयाभ्यन्तरे, स्तरद्वयस्य परिसरसीमासु नीरन्ध्रमिलनात्।

सोऽसौ परिसरीयभागः[4] पार्श्वयोः पुरः पश्चाच्च क्रमात् पर्शुकामयप्राचीरान्तः, उरःफलकपृष्ठे, पृष्ठवंशपुरोभागे च संसक्तः। ऊर्ध्वभागे तु तत्संस्पर्शः फुस्फुसशीर्षण्याख्याया गम्भीरप्रावरण्यास्तलदेशेन, अधोभागे महाप्राचीरोर्ध्वतलेन। सोऽयम् उत्तरांशेन मध्यरेखां प्रति प्रसृतः क्लोमनलिकापार्श्वं

---

१। दक्षिणा क्लोमशाखा—Right Bronchus. २। वामा क्लोमशाखा—Left Bronchus. ३। उरस्या कला—Pleura (प्लुरा)। ४। परिसरीयभागः—Parietal Layer.

स्पृष्ट्वा फुस्फुसवृन्तं वेष्टयति। अधरांशेन च हृत्कोषपार्श्वं संस्पृश्य ऊर्ध्वं मध्यरेखां प्रति प्रस्थितः तद्वदेव फुस्फुसवृन्तं स्पृशति। तत्परितश्च उभाभ्यामंशाभ्यां मिलितोऽसौ फुसफुसावरणेन "पर्याशयभागेन" अनुबध्यते।

त्रिकोणाकारो द्विगुणीभूतः परिसरीयभागस्तु पश्चिमतोऽधश्च प्रसृतः, स फुस्फुसस्य महाप्राचीरामूलेन सम्बन्धनाय। तस्य फुस्फुसबन्धनीति संज्ञा।

पर्याशयभागः[1] पुनरेकैकं फुस्फुसं प्रावृत्य फुस्फुसवृन्तं परितः संव्यूहितः परिसरीयभागेन अनुबध्यते। सेयं विचित्रनिर्माणा उरस्या, फुस्फुसधरा वा नाम कला, फुस्फुसमङ्के धारयन्त्यपि नाभ्यन्तरे गृह्णाति।

अथास्याः कलायाः स्तरद्वयसान्निध्यं प्रश्वासकाले, फुस्फुसस्य वायुपूर्णत्वेन विस्फारात्। व्यवधानाधिक्यञ्च निःश्वासकाले, फुस्फुसस्य वायुरेचनेन सङ्कोचात्। शीतवर्षादिबाधावशाच्च कदाचिद् व्रणशोथः उरस्याया एकदेशे, तदा प्रश्वासकाले स्तरद्वयसंघर्षणात् तीव्ररुजाप्रादुर्भावः। कालेन प्रायो जलसञ्चयश्च उरस्यायाः स्तरद्वयान्तःस्थावकाशे, स क्रमेण प्रवर्धमानः 'उरस्तोय'[2] संज्ञः। ततश्च फुस्फुसस्य क्रमेण दृढसङ्कोचः क्रियालोपश्च प्रतीकारविरहे।

## अथ फुस्फुसौ।

**फुस्फुसौ**[3] नाम (१३६।१४१ चित्रयोः) श्वसनकर्मणः प्रधानसाधनं यन्त्रद्वयम् उरोगुहान्तरवस्थितम्। तयोरेकैक एकैकार्धे उरसः। तदन्तराले च हृदयं, क्लोमनलिका, सिराधमनीनाड्यादयश्च विशेषाः। चतुर्धा विभक्तं च तत् फुस्फुसान्तरालं सविशेषं वर्णितपूर्वम्[4]।

तौ च फुस्फुसौ फुस्फुसधराभ्यां कलाभ्यां सर्वतः प्रावृतौ मसृण-कोमलस्पर्शौ वायुकोषबहुलत्वाल्लघुभारौ जलप्रतरणार्हौ च। तौ क्लोमनलिकया फूत्कारेण वातापूरणाद् विचित्रविशालाकारौ भवतः, अंगुल्या पीड़नाद् मृदुमर्मरशब्दौ च। तत्र पुंसो दक्षिणफुस्फुसः प्रायेण पञ्चपञ्चाशत्तोलकपरिमाणः, वामस्तु पञ्चाशत्तोलकमितः। स्त्रियास्तु यथाक्रमं तोलकपञ्चकेन न्यूनः। तौ च जातमात्रस्य बालस्य पद्मदलवर्णौ, प्राप्तवयसस्तु क्रमात् श्यामकर्बुरच्छायौ।

---

१। पर्याशयभागः—Visceral layer. २। उरस्तोयः—Pleurisy with Effision.
३। फुस्फुसौ —Lungs. फुस्फुसपदं सुश्रुते एकवचनान्तं दृश्यते, तद् लिपिकरप्रमादकृतं प्रतिभाति। चरके तु फुस्फुसयोः श्लेष्मभुवौ इति संज्ञा द्विवचनान्तैव। ४। द्वितीयभागस्य ८९।९० पृष्ठयोः।

[ १३६ चित्रम् ]

## फुस्फुसद्वयम्, हृदयञ्च ( महासिरा-धमन्यादि सहितम् ) ।




( To face page 180 )

आकृतितस्तु—एकैकस्य फुस्फुसस्य परिणाह ऊर्ध्वं संकुचितः, अधस्तात् आयतः। स बहिःपार्श्वे वृत्तप्रायः, अन्तःपार्श्वे कोरोदरश्च। तस्य पुरोधारा तन्वी शिथिला स्तोकेन हृदयावरणी चोभयतः। तत्र पञ्च विशेषा लक्षणीयाः। तद्यथा—फुस्फुसचूड़ा, फुस्फुसतलं, फुस्फुसखातम्, फुस्फुसवृन्तम्, पिण्डविभागश्चेति। तत्र—फुस्फुसचूड़ा[1] वृत्तशिखराकारा गलमूले अक्षकास्थ्न ऊर्ध्वं द्व्यङ्गुलमात्रेणोद्गता उरःकर्णमूलिकायाः प्रभवकण्डराद्वयेन प्रच्छादिता।

फुस्फुसतलं[2] नाम फुस्फुसस्य तलभागो महाप्राचीरापृष्ठमधिष्ठाय वर्त्तमानः। तत् कोरोदरमायतं तनुपत्राकारेण पश्चिमांशेनोपलक्षितश्च। सोऽयं पश्चिमपत्रकांशः फुस्फुसस्य वातपूर्णत्वे सति महाप्राचीरापृष्ठपश्चिमस्थे खाते प्रविशति।

फुस्फुसखातानि[3] तावदनेकानि– उत्तानानि गभीराणि च। तेषु त्रीणि प्रधानानि– वृन्तखातद्वयं, हृदयखातश्च। तत्र वृन्तखातमेकैकस्य फुस्फुसस्य मध्यदेशे आन्तरसीम्नि वर्त्तते, यदाश्रित्य प्रविशति फुस्फुसवृन्तम्। हृदयखातं तावद् वामफुस्फुसान्तःसीम्नि विशेषेण दृश्यं, हृद्वामांशधारणम्, तद् दक्षिणफुस्फुसान्तःसीम्नि स्तोकेन लक्ष्यम्। अपराणि खातानि तु अधरमहासिरामहाधमन्योरन्ननलिकादीनाञ्च स्पर्शकृतानि नातिगभीराणि यथास्थानं दृश्यानि।

फुस्फुसवृन्तं[4] नाम फुस्फुसस्य अन्तःपार्श्वखातप्रवेशी फुस्फुसीयनाड़ी-सिरा-धमनी-क्लोमशाखादिसङ्घातः—स च फुस्फुसधराख्यकलांशेन द्विगुणीभूतेन संवेष्टितः। (१४१ चित्रम्) तस्य पुरस्तादवस्थिताऽनुकोष्ठिकाख्या नाड़ी, पश्चिमतश्च प्राणदा। फुस्फुसवृन्तान्तश्च सिरादीनामित्थम्भूता स्थितिः—पुरस्तात् फुस्फुसीयसिराद्वयं, मध्ये फुस्फुसाभिगधमन्याः शाखा, पश्चात् सकाण्डशाखा क्लोमनलिकेति।

अथ फुस्फुसयोः पिण्डविभागः। दक्षिणफुस्फुसे त्रीणि पिण्डानि[5], वामे द्वे एकैकस्मिंश्च पिण्डे पृथग्भूते प्रविशति एकैका क्लोमकाण्डिका, प्रसरति च स प्रशाखानुशाखादिभिः क्रमशो विभज्यमाना द्राक्षाफलगुच्छसदृशेषु वायुकोषसंघेषु (१४० चित्रम्) चरमैः शाखाप्रतानैः। एकैकश्च कोषसङ्घः अंगुलीषोड़शांशमानः प्रायः तस्मिन् पञ्चशः वायुकोषाः क्वचिदधिकसंख्या वा। तत्सङ्घातनिर्मितश्च फुस्फुसः।

---

१। फुस्फुसचूड़ा—Apex of Lung. २। फुस्फुसतलं—Base of Lung. ३। फुस्फुसखातानि—Depressions on Lungs. ४। फुस्फुसवृन्तं—Root of Lung. ५। फुस्फुसपिण्डानि— Lobes of Lungs.

[ १४० चित्रम् ]

## क्लोमकाण्डिका, वायुकोषपुञ्जौ च।




क—क्लोमकाण्डिका। ख—सैव द्विविभक्ता। १।२ वायुकोषपुञ्जौ। ३। उरस्या कला।

वायुकोषनिर्माणं तत्कार्यञ्च संक्षेपेणोच्यते। एकैको वायुकोषः[१] स्थितिस्थापकगुणैः स्नायुसुत्रैर्वेष्टितत्वाद् विस्फारशीलः, अभ्यन्तरे प्रतनुश्लेष्मलकलासंवृतश्च। सूक्ष्मसिरा-धमनीमयानि जालकानि कोषं परिवृत्य स्थितानि। तेषु समानीयते सिरारक्तं फुस्फुसाभिगधमन्याश्चरमैः शाखाप्रतानैः। तत्र च श्वासवायुसम्पर्केण वाष्पविनिमयाद् विशोधितं तद्रक्तं प्रतिनिवर्त्तते सूक्ष्माभिः फुस्फुसीयसिराभिर्हृदयाभिमुखम्।

सिरारक्तं हि सर्वकायप्रचाराद् धात्वग्निपरिपक्वधातूनां मलभूतेन आङ्गारिक[२] वाष्पेण सम्पद्यते मलिनम्। स च वाष्पो वायुकोषान्तर्वेष्टनेषु सिराजालकेषु प्रविष्टेन रक्तेन परित्यज्यते। अतएव निःश्वासवायोस्तद्वाष्पपूर्णत्वाद् मलिनीभावः। अथ प्रश्वासाकृष्टवायुसमानीतस्य विशुद्धवायोः सम्पर्कात् तदीय "विष्णुपदामृत"[३] ग्रहणेन तद्रक्तस्य तत्क्षण एव विशुद्धिरुज्ज्वलीभावश्च। तस्य च फुस्फुसीयसिराभिः हृदयागतस्य विशुद्धरक्तस्य महाधमनीपथेन सर्वकाये प्रचारः।

तदेतत् फुस्फुसीयरक्तसंवहनं समासेन व्याख्यातम्।

इति द्वितीयोऽध्यायः।

---

१। वायुकोषः—Alveolus. २। आङ्गारिक वाष्पः—Carbon Dioxide gas. ३। विष्णुपदामृतम्—Oxygen. तच्च "ओषजनम्"—इति केचिद्। सोऽयं वाष्पविनिमयः प्राकृतिकनियमेन सम्पद्यते।

# तृतीयोऽध्यायः।

अथातः अन्नपचनयन्त्रवर्णनीयमध्यायं व्याख्यास्यामः।

अन्नपचनयन्त्राणि द्विविधानि—मुख्य-गौणभेदात्। तेषु आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रञ्चेति मुख्यानि, तेषां साक्षादन्नविपचनादिकार्यत्वात्[१]। अपराणि दन्त-जिह्वा-लालाग्रन्थि-ग्रसनिकाऽन्ननलिकादीनि गौणानि, तेषामादान-चर्वण क्लेदन-निगरणादिसाधनत्वात्।

तत्र मुखं, ग्रसनिका, अन्ननलिका, आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रं चेत्येतेषां मिलितानां **महास्रोतः**[२] इति संज्ञा प्राचाम् (१४१ चित्रम्)। सर्वेषामेषामेकस्यैव महतः स्रोतसोऽङ्गभूतत्वात्, गर्भस्याद्यावस्थायां—केषुचित् प्राणिषु च यावज्जीवं—तस्य नलकरूपेणावस्थानदर्शनाच्च।

तदेतत् महास्रोतः क्वचित् क्वचित् स्फारीभूतमपि एकमेव प्रायेण विंशतिहस्तदीर्घं स्वतन्त्रपेशीनिर्मितं नलकमिति शारीरविदः। तत्राद्या स्फारता मुखकुहरे, ग्रसनिकायाञ्च, अन्नादीनां धारण क्लेदन-चर्वण-निगरणार्थम्। ततः स्फुटनलकाकृतिरन्ननलिकायाम्। ततो द्वितीया स्फारता आमाशये, अपक्वस्य प्रचुरान्नपानस्य धारणाय, तत्पाकारम्भाय च। ततः पुनः सुदीर्घनलिका-कृतिरन्त्रेषु, अर्धपक्वस्य अन्नस्य शनैः सम्यक् पाकाय रसाकर्षणाय च। बृहदन्त्रस्य तु स्थूलतरनलकाकृतिः, मलभूतस्यान्नस्य धारण शोषण-निःसारणसौकर्याय। तदेतद् विचित्रनिर्माणं स्रोतः आ मुखकुहरादपानदेशान्तं महास्रोतः संज्ञया व्यपदिश्यते महायतनत्वात्, निखिलस्रोतसां तदधीनत्वाच्च। अन्नरसो हि मूलं धातूनां, स चाकृष्यते महास्रोतोगताभिः सूक्ष्माभिः रसांकुरिकाभिः रसायनीभिश्च।

तस्य च महास्रोतसः षोढ़ा प्रविभागो वर्णनासौकर्याय - मुखकुहरं, ग्रसनिका, अन्ननलिका, आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रञ्चेति। तत्सहायकाश्च जिह्वा दन्त-लालाग्रन्थि-यकृदग्न्याशयाः तत्प्रसङ्गेनैव वर्णनीयाः। तत्र आमाशय-क्षुद्रान्त्र-बृहदन्त्र यकृदग्न्याशयाः उदरगुहान्तर्दृश्याः। अपराणि मुखकुहरादीनि तद्बाह्यानि। तान्यादौ वर्णनीयानि द्वारभूतत्वात्।

---

१। आदि पदेन मलनिर्माणादि। २। महास्रोतः—Alimentary Canal.

[ १४१ चित्रम् ]

## कोष्ठाङ्गानां प्रदर्शकं कल्पित चित्रम् ।

( अत्र हृदयं न प्रदर्श्यते उरस्याख्यकलाकोषयोः सम्यक् प्रदर्शनाय )



अथ मुखकुहरम्।

**मुखकुहरं**[1] नाम ( १४२ चित्रम् ) मुखाभ्यन्तरस्था क्षुद्रनारिकेलफलाकारा गुहा जिह्वा-दन्तादिमती। तस्याश्छदिः कठिन-कोमलतालुभ्यां निर्मिता, भूमिस्तु ऊर्ध्वाधोहनुमण्डलान्तरालं सवृन्तजिह्वापूरितं प्राधान्येन। तस्य द्वारमोष्ठयोर्मध्ये मुखद्वारं नाम। ओष्ठाभ्यन्तरतश्च मुखालिन्दो दन्तपंक्त्योः पुरःस्थः अर्धचन्द्राकारः। दन्तपंक्त्योः पश्चाद् आ-गलबिलद्वारं मुखान्तर्गुहा, ततः परं गलबिलम्। मुखकुहरसम्बन्धेन च लक्षणीयास्तदन्तः, तत्परिसरे चाऽवस्थिता दश विशेषाः— ओष्ठद्वयं, कपोलद्वयं, दन्तवेष्टौ, दन्ताः, जिह्वा, तालुपटलं, गलतोरणिके, उपजिह्विके, अधिजिह्वा, लालाग्रन्थयश्चेति। ते च मुखकुहरान्तःस्थाः सर्वेऽपि भागास्तनु-श्लेष्मस्राविण्या सूक्ष्मकलया संवृताः, अन्यत्र दन्तेभ्यः। तत्र—

( १ ) **ओष्ठद्वयं**[2] मुखद्वारकपाटभूतं मुखमुद्रण्याख्यपेश्या निर्मितम्। तद् विशेषेण मेदोमृदुलं सूक्ष्मसिरा-धमनी-रसायनी-नाडीबहुलञ्च। परिवृतञ्च तद् बहिर्भागे त्वचा, अन्तश्च तनुश्लेष्मस्राविण्या सूक्ष्मकलया। संवृतञ्च त्वक्कला-सन्धानस्थानेऽतितनुत्वचा सर्पकञ्चुकवत् स्वभावतः परिवर्त्तनशीलया। तयोरधरोष्ठस्य अधर इति, उत्तरोष्ठस्य च ओष्ठ इति प्रसिद्धं संज्ञाद्वयं लोके, उभयोर्वा ओष्ठाविति संज्ञा। तत्सन्धिकोणयोश्च सृक्कणीति सृक्कण्याविति[3] वा। एकैकस्य चौष्ठस्याभ्यन्तरतो मध्यरेखायां स्नायुसूत्रनिर्मिता सेवनी दन्तवेष्टपुरोभागेण तस्य प्रबन्धनाय, सा ओष्ठसेवनी[4] नाम ( उत्तरा अधरा च )।

( २ ) **कपोलद्वयं**[5] कपोलिकाख्यपेशीभ्यां मेदोजालबहुलाभ्यां निर्मितम्। तद् बहिर्भागे त्वचा, अन्तश्च श्लेष्मस्राविण्या सूक्ष्मकलया परिवृतम्, पुरस्ता-दोष्ठद्वयेन मिलितमूर्ध्वाधःसीम्नोश्च आ-दन्तवेष्टं संसक्तम्। तत्र उत्तरदन्त-वेष्टमुभयतो द्वितीयपश्चिमचर्वणकदन्तमूलयोर्द्वयं श्ये कर्णमूलिकग्रन्थ्योः स्रोतोनलिके।

( ३ ) **दन्तवेष्टौ**[6] नाम दन्तोदूखलमण्डलयोरस्थिधरकलासंसक्तौ दृढ-स्नायुसूत्रनिर्मितौ वेष्टनकौ, श्लेष्मलकलापरिवृतौ। तौ दन्तमूलानां तदुदूखलेषु सम्यक् प्रबन्धनाय। तयोश्च स्पर्शज्ञानं मन्दम्, संज्ञावहनाडीसूत्राणां तत्र विरलत्वात्। दन्तानां सम्यगधावनाच्च प्रायः सम्भवन्ति दन्तवेष्टगता रोगा बहवः, शिथिलीभावश्च दन्तानाम्।

---

१। मुखकुहरम्—Buccal Cavity. २। ओष्ठद्वयं—Lips (Labii). ३। सृक्कणी, सृक्विणी, सृक्कण्यौ—इत्यादि नानारूपमिदं पदं दृश्यते। सृक्कण्यौ = Angles of the mouth. ४। ओष्ठ-सेवनी—Frænum of Lip. ५। कपोलद्वयं—Cheeks. ६। दन्तवेष्टौ—Gums (Gingyvi).

[ १४२ चित्रम् ]

## मुखकुहरं लालाग्रन्थयश्च ।

( मुखपार्श्वभागापसारणेन दर्शिताः )




[ क-क—कर्णमूलिको नाम लालाग्रन्थिः । अनु०—अनुशङ्खा उत्ताना धमनी ]

१—गोस्तनप्रवर्धनम् । २—हनुकूटकपंणी पेशी ।

३—द्विगुम्फिका पेशी । ४—जिह्वामूलिनी नाड़ी ।

५—अन्तर्मातृका धमनी, अनुमन्या सिरा च वामतः ।

६—कपोलिकाख्यपेश्याः कर्त्तितावशेषोंऽशः ।

(४) **दन्ताः**[१] खलु द्वात्रिंशदुक्तपूर्वाः। तेषां भेदाः, कर्त्तनकादिसंज्ञाश्च व्याख्यातचराः सह दन्तोदूखलमण्डलेन[२]। तन्निर्माणं तु सूक्ष्मशारीरे व्याख्येयम्।

(५) **जिह्वा**[३] तावत् स्वादग्रहण-चर्वण-ग्रसनादिसाधनम्। सा प्रधानतः पेशीमयी, तनुश्लेष्मस्राविण्या कलया परिवृता, स्वादांकुरैरनुविद्धा च। नद्धा च सा मुखभूमितले कण्ठिकास्थ्ना पश्चात्, सेवन्याश्च पुरतः। पश्चिमतः पुनस्तया संलग्ना मध्ये अधिजिह्विका, एकैकतश्च गलस्तम्भिका पूर्वा। जिह्वा-निर्माणविस्तरस्तु रसनेन्द्रियवर्णने वर्णनीयः।

(६) **तालुमण्डलं**[४] नाम मुखान्तश्छदिभूतं तालुपटलमेवास्थिमय-मुक्तपूर्वम्। मांसल-तालुयुतं श्लेष्मलकलावृतश्च तत् तालुमण्डलमुच्यते। तस्य पूर्वपश्चिमक्रमेण द्वौ भागौ—कठिनतालु, कोमलतालु चेति। तत्र—

(क) **कठिनतालु**[५] तावत् कठिनास्थिपत्रकमयं मुखान्तगुहायाः कोरोदरं पटलम् कोमलतालुपुरःस्थं श्लेष्मलकलावृतम्। तच्च निर्मीयते परस्पर-संहिताभ्यामूर्ध्वहनुमण्डलस्य तालुपत्रकाभ्यामग्रतः, तालूस्थ्नोः ह्रस्वपत्रकाभ्यां च पश्चिमतः।

(ख) **कोमलतालु**[६] पुनः (१४३।१४४ चित्रयोः) कठिनतालुनः पश्चिमधारासंलग्ना उत्पतिष्णुः जवनिका श्लेष्मलकलावृता मांसस्नायुतन्तुमयी च। सा गलबिलमध्ये अर्धचन्द्रवदालम्बते। अन्ननिगरणकाले तु सैव पश्चादूर्ध्वं चोत्पत्य गलबिलायतनं विस्फारयति, वारयति चान्नस्य नासापश्चिमद्वारगमनम्। कोमलतालुनः पश्चिमसीम्नि च मध्यरेखायां दृश्या ताल्वस्थिकण्टकालम्बिनी क्षुद्रा शुण्डिकाकारा पेशी गलशुण्डिका, काकलकं[७] वा नाम। सा कोमलतालुनः उत्पतनसहायभूता।

पेश्यश्च तालुसम्बन्धिन्यो नव। तालूत्तोलनी[८], तालूत्तंसनी[९], तालु-जिह्विका[१०], गलतालुका[११] चेति चतस्र एकैकतः मध्ये च काकलकिनीति। तासामाद्या समग्रस्य कोमलतालुन उत्कर्षणी,—सा शङ्खास्थ्नोऽश्मकूटात् सम्भूय

---

१। दन्ताः—Teeth. २। अस्थिखण्डे १०० पृष्ठे। ३। जिह्वा—Tongue. ४। तालुमण्डलं—Palate. तालुपटलवर्णनन्तु अस्थिखण्डे १०१ पृष्ठे द्रष्टव्यम्। ५। कठिनतालु—Hard Palate. ६। कोमलताल—Soft Palate. ७। गलशुण्डिका, काकलकं वा—Uvula (Azygos Uvulæ Muscle). ८। तालूत्तोलनी—Levator Palati Muscle. ९। तालूत्तंसनी—Tensor Vele Palati Muscle. १०। तालुजिह्विका—Glosso-palatine Muscle. ११। गलतालुका—Pharyngc-palatinus Muscle.

[ १४३ चित्रम् ]

## गलविलद्वारम् ( सम्मुखतो दृष्टम् )।




चित्रव्याख्या—१।२—स्वादाङ्कुराः महान्तः क्षुद्राश्च यथाक्रमम्। ३—गलविलम्। क-क—कपोलिका पेशी कर्त्तितावशेषा। म—तदन्तःस्थो मेदःपुञ्जः।

मध्यरेखायां स्वनामिकया संसज्यते। द्वितीया जतूकास्थनश्चरणफलकात् सम्भूय तदग्रस्थमंकुशमाश्रित्य विवर्त्तमाना तालूत्तंसनं † करोति। अपरे द्वे स्वनामव्याख्यातप्रभवनिवेशे, ते जिह्वामूलपार्श्वयोः गलविलपार्श्वयोश्चाकर्षणं कोमलतालुनः कुरुतः, गलद्वारविस्फारणेन निगरणकर्मसहायतार्थम्। काकलकिनी तु काकलकस्य उत्तोलनी ताल्वस्थ्नोर्मध्यरेखासन्धानस्थे कण्टके सम्बद्धा।

† उत्तंसनं तीव्राकर्षणेन तान्तीकरणम् ( Making taut ), वीणातन्त्रीणामिव।

(७) **गलतोरणिके**[१] नाम (१४३ चित्रम्) गलबिलद्वारमुभयतो वर्त्तमानौ तोरणाकारौ गलावयवौ ऊर्ध्वसीम्नि मिलितौ। ते हि काकलकादारभ्य एकैकतो द्विधाविभक्ते अधस्तादवतीर्य द्वयोर्द्वयोः गलस्तम्भिकयोः परिणमतः, धारयतश्चोत्सङ्गे उपजिह्विकाम्। तयोः पुरःस्तम्भिका[२], पश्चिमस्तम्भिका[३] चेति संज्ञाद्वयम्। तत्र पुरःस्तम्भिकाद्वयं जिह्वामूलमुभयतः सङ्गतमधस्तात्। निर्मितञ्च तद् जिह्वातालुकाभ्यां पेशीभ्याम्। पश्चिमस्तम्भिकाद्वयं तु गलतालुकाभ्याम्।

(८) **उपजिह्विके**[४] (१४३ चित्रम्) नाम गलबिलद्वारमुभयतः पुरः-पश्चिमस्तम्भिकयोर्मध्यस्थे क्षुद्रकोलफलास्थिप्रमाणे ग्रन्थिपिण्डिके। तयोः निर्माणवस्तु प्रायेण लसीकाग्रन्थिसदृशम्। ते च बालानां कफाधिक्यादिहेतोः विषजीवाणुदूषणाच्च भृशं प्रवृद्धे शुष्ककासादिकं स्वास्थ्यभङ्गञ्च जनयतः। स्वभावतस्तु गलबिलद्वारस्य प्रतिहारिभूते ते—इति शारीरक्रियाविदः।

(९) **अधिजिह्विका**[५] तु (१४४ चित्रम्) स्वरयन्त्रद्वारस्था वर्णितपूर्वा[६]। सा रसनामूलेन संलग्नवृन्ता सदैवोर्ध्वमुखी तिष्ठति, निरुणद्धि च द्राक् श्वासमार्गद्वारम् अन्नादिनिगरणकाले। तत्पुरश्चोभयतः खातद्वयम् अधिजिह्वखातं नाम, मध्ये चाधिजिह्विकायाः सीवनी।

---

(१०) **लालाग्रन्थयः**[७] खलु चत्वारः—कर्णमूलिकाख्यौ द्वौ, हन्वधरीय एकः, जिह्वाधरीयश्चापरः। तेभ्यः प्रवृत्ता हि तनुपिच्छिला लाला मुख-कुहरान्तः स्रवन्ती अन्नस्य क्लेदन-चर्वणादिकर्मसहाया भवति। तत्संक्लिन्नं चान्नं शीघ्रमेव मधुरविपाकं भजते—इति परीक्षकाः। तत्र—

**कर्णमूलिकः**[८] नाम (१४२ चित्रम्) तूलपिण्डनिभो महान् लालाग्रन्थिः द्वित्रतोलकपरिमाणः। स कर्णमूलस्य पुरस्तादधश्च हनुमुण्डसन्धिं समावृत्य वर्त्तते एकैकतो मुखपार्श्वे। तत्पुरतश्च दृश्या हनुकूटकर्षणी पेशी, या संकोच-मापद्यमाना ग्रन्थिमेनं निष्पीड्य लालां स्रावयति चर्वणकर्मसौकर्याय। अस्य च ग्रन्थेः स्रोतोनलिके कपोलिकाख्यां पेशीं निर्भिद्य मुखान्तःप्रसृते कर्णमूलिकस्रोतसी[९]

---

१। गलतोरणिके—The Palatine Arches or Fauces. २। पुरःस्तम्भिका—Anterior Pillar of the Fauces. ३। पश्चिमस्तम्भिका—Posterior Pillar of the Fauces. ४। उपजिह्विके—Tonsils (Palatine). ५। अधिजिह्विका—Epiglottis. ६। स्वरयन्त्रद्वारमेव श्वासमार्गद्वारम्। दृश्यतां स्वरयन्त्रवर्णनमपि (२य भागस्य १७५ पृष्ठे) ७। लालाग्रन्थयः—Salivary glands. ८। कर्णमूलिकग्रन्थिः—Parotid gland. ९। तत्-स्रोतसी—Parotid ducts.

नाम। तयोरेकैकं त्र्यंगुलदीर्घं कुशेषीकापरिणाहश्च। तन्मुखश्च मुखालिन्दस्य एकैकतो हनुमण्डलस्य द्वितीयपश्चिमचर्वणकदन्तमूलस्थं शलाकाप्रवेशार्हश्च।

[ १४४ चित्रम् ]

## ग्रसनिकाभ्यन्तरम्।

[ तस्याः पश्चिमप्राचीरं विदार्य पृष्ठतो दृष्टम् ]




चित्रव्याख्या—१। पश्चिमं नासागुहाद्वारम्। २। श्रुतिछिद्रङ्गास्थितं तरुणास्थि। ३। तालूत्तोलनी पेशी। उ०—उत्तरा कण्ठसङ्कोचनी पेशी। म०—मध्यमा कण्ठसङ्कोचनी पेशी। का०—काकलकं कोमलतालुमध्यस्थम्।

इदञ्चात्र विशेषेण स्मर्त्तव्यं— कर्णमूलपाके सति शस्त्रकर्मणो निर्विघ्नतार्थम्। इमं दि खलु ग्रन्थिं निर्भिद्योर्ध्वं प्रसृता वहिर्मातृका नाम धमनी, अन्तर्हानव्यायाः शाखाद्वयेन सहिता। वक्त्रनाड़ी च श्रुतिनाड़ीशाखासहिता तमेव ग्रन्थिं निर्भिनत्ति। एवञ्च शल्यतान्त्रिकेण भ्रमवशाद् धमनीच्छेदने रक्तातिप्रवृत्तिः, प्राणहानिश्चाऽप्रतीकारे। वक्त्रनाड़ीच्छेदनात्तु अर्दितरोग[1]प्रादुर्भावः। दृश्यते च सन्निपातज्वरादिषु मुखकुहरस्य सम्यगशोधनात् प्रायः कर्णमूलिकग्रन्थिपाकः, स शक्यः प्रतिषेद्धुं काले सम्यङ् मुखशोधनेन, वहिःप्रलेपादिना च।

**हन्वधरीयः**[2] नाम लालाग्रन्थिरधोहनुमण्डलस्याधस्तद्युत्सङ्गे च वर्त्तते (१४२ चित्रम्) अक्षोटफलमज्जाकारः। तं पश्चिमतो निर्भिद्य प्रसृता वहिर्हानव्या नाम धमनी (वक्त्रधमनी)। वर्त्तते चासौ मुखभूमिनिर्मापिकाणां पेशीनामधस्ताद् गलप्रच्छदाख्यया प्रावरण्या दृढ़माच्छादितः। तस्यापि स्रोतोनलिका द्व्यंगुलदीर्घा प्रायेण। सा जिह्वाधरीयसेवन्याः पार्श्वस्थेन जिह्वाधरीयग्रन्थेः स्रोतोमुखेन मिलिता प्रायः।

**जिह्वाधरीयः**[3] नाम (१४२ चित्रम्) तत्सदृश एव लालाग्रन्थिःजिह्वा-सेवन्या अधस्तात् कलावृतो वर्त्तते, अधोहनुमण्डलमध्यस्थे खाते निगूढः। तस्य दश द्वादश वा (क्वचिद् विंशतिर्वा) स्रोतांसि। तेषामनेकानि मुखानि हन्वधरीयग्रन्थेः स्रोतसा मिलित्वा, पृथग् वा, जिह्वासेवन्याः पार्श्वत उन्मुच्यन्ते।

तदेतत् सानुबन्धं मुखकुहरं व्याख्यातम्।

अथ ग्रसनिका।

**ग्रसनिका**[4] नाम (१४४।१४५ चित्रयोः) अन्नादिनिगरणद्वारभूता आयतोदरा मांसावृतकलामयी नलिका, या अन्ननलिकायाः स्वरयन्त्रस्य च शिखरमधि-तिष्ठति। सा उत्तरग्रीवाकशेरुकाणां पुरस्ताद् वर्त्तते, पश्चिमतश्च मुखनासागुहयोः स्वरयन्त्रस्य च। तस्या आकृतिः धुस्तूरपुष्पसदृशी— ऊर्ध्वमायता, अधः-संकुचिता। निर्मिता च सा भूम्ना कण्ठसङ्कोचन्याख्य-पेशीत्रयेण अन्तः श्लेष्मल-कलावृतेन।

---

१। अर्दितं नाम मुखमण्डलार्धस्य पेशीक्रियालोपकरो वातव्याधिविशेषः (Facial Paralysis). २। हन्वधरीयो ग्रन्थिः—Sub-maxillary gland. ३। जिह्वाधरीयो ग्रन्थिः—Sub-lingual gland, ४। ग्रसनिका—Pharynx. सैव क्लोमेति केचित्। तच्चिन्त्यम्। दृश्यतां क्लोमबिचारः १७८ पृष्ठे (पादटीकायाम्)।

[ १४५ चित्रम् ]

## ग्रसनिकापेश्यः, अन्ननलिका च ( पृष्ठतो दृष्टाः )।




तस्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्याय—ऊर्ध्वं नासागुहापश्चिमांशः, मध्ये गलबिलांशः, अधस्तात् स्वरयन्त्रपश्चिमांशश्चेति। तेषां क्रमेण उत्तर-मध्यमाऽधरग्रसनिका-संज्ञाभिर्व्यपदेशः। तत्र—

( क ) **नासागुहापश्चिमांशे**[1] पुरस्ताद् दृश्यानि मध्ये नासामध्य-प्राचीरं, तदुभयतः पश्चिमं नासागुहाद्वारयुगलं[2] च। तदुभयतश्च द्वे च्छिद्रे श्रुतिसुरङ्गाद्वारे[3] नाम, ते तद्वेष्टनाभ्यां त्रिकोणतरुणास्थिभ्या[4]मुपलक्षिते। पश्चिमतश्च ग्रसमिकाप्राचीरे संलग्नस्तूलपिण्डकाकारो ग्रन्थिः ग्रसनिकाग्रन्थिः[5]

१। नासागुहापश्चिमांशः—Naso-pharynx. २। नासागुहाद्वारयुगलम्—Choanœ. ३। श्रुतिसुरङ्गाद्वारद्वयम्—Openings of Auditory tubes. ४। तत्रत्यं त्रिकोणतरुणास्थि—Torus. ५। ग्रसनिकाग्रन्थिः—Pharyngeal Tonsil (of Luschka).

नाम। तस्य निर्माणमुपजिह्विकावद् रसग्रन्थिप्रायम्। नासागुहापश्चिमांशस्य अधोभागस्तु गलविलानुबन्धी। स च अन्नादिनिगरणकाले पुरःस्थेन कोमलतालुना किञ्चिदुत्पतिष्णुना सर्वथाऽवरुध्यते, अन्नादीनां नासागुहाप्रवेशवारणाय।

(ख) **गलविलांशः**[१] नाम ग्रसनिकामध्यभागो **गलविल**-संज्ञः (१४४।१४६ चित्रयोः)। स ऊर्ध्वं नासागुहापश्चिमांशेन अनुबध्यते, अधश्च स्वरयन्त्रपश्चिमांशेन, आ कण्ठिकास्थिपृष्ठात्। तस्य पुरस्तात् संकुचितप्रायं गलविलद्वारं, गलतोरणिकाभ्यामुपलक्षितम्। पश्चिमतो द्वितीय-तृतीयग्रीवा-कशेरुकयोः पिण्डद्वयं। तदुभयतश्च उत्तर-मध्यमयोः कण्ठसङ्कोचन्योः पेश्योः पक्षांशौ कलावृतौ।

(ग) **स्वरयन्त्रपश्चिमांशः**[२] नाम स्वरयन्त्रस्य पृष्ठस्थो ग्रसनिका-ऽधरांशः, स कण्ठिकास्थिपृष्ठादारभ्य कृकाटिकापृष्ठान्तमायतः, कलावृतयाऽधरकण्ठ-सङ्कोचन्याख्यपेश्या परिवृतश्च (१४६ चित्रम्)। स चोर्ध्व गलविलेन, अधश्च अन्ननलिकयाऽनुबध्यते। तत्रैव पुरस्ताद् दृश्यं स्वरयन्त्रद्वारम्।

सप्त च विवराणि ग्रसनिकान्तर्दृश्यानि - द्वे नासागुहापश्चिमद्वारे, द्वे श्रुति-सुरङ्गाद्वारे, एकं गलविलद्वारम्, एकं स्वरयन्त्रद्वारम्, एकमन्ननलिकाद्वारञ्चेति।

पेश्यः पुनर्ग्रसनिकां परितोऽवस्थिताः एकैकतः पञ्च—कण्ठसङ्कोचनी[३]-संज्ञास्तिस्रः, शिफागलान्तरीया[४], श्रुतिसुरङ्गाद्वारिका[५] चेति। (१४४।१४५ चित्रयोः) तत्र—कण्ठसङ्कोचन्याख्यं पेशीत्रयम् उत्तर-मध्यमाऽधरसंज्ञम् उत्तरोत्तरा-श्लेषेण ग्रसनिकां परिवृत्य तिष्ठति इतरपार्श्वस्थेण पेशीत्रयेण मिलितम्। तस्य क्वचिद् "ग्रासनी" पेशीति साधारणी संज्ञा। तत्प्रावरणी च दृढस्नायु-सूत्रमयी प्रच्छदाकृतिः, या पश्चिमतो ग्रीवावंशपुरोभागेण संबद्धा। तत्रैव च मध्यरेखायां दृश्या पेशीत्रिकयोः सन्धानरेखा ग्रसनिकासेवनी[६] नाम। तत्रोत्तरायाः कण्ठसङ्कोचन्याः प्रभवः एकैकतो जतूकाचरणफलकम्, अधोहनु-मण्डलीयं पश्चिमदन्तोदूखलमूलञ्च। मध्यमायाः प्रभवः कण्ठिकास्थ्नः श्रृङ्गद्वयं सान्तरालं, शिफाकण्ठिकास्नायुश्च। अधरायास्तु स्थूलप्रच्छदाकृतेः प्रभवः अवटु-कृकाटिकाख्यतरुणास्थ्नोः पार्श्वद्वयम्। निवेशः पुनस्तिसृणामपि ग्रसनिका-सेवनी दृढस्नायुसूत्रमयी। शिफागलान्तरीयादिपेशीद्वयन्तु ग्रसनिकामूर्ध्वं कर्षति।

---

१। Oral part of Pharynx (or Cavity of Throat). २। Laryngeal part of Pharynx. ३। Constrictor muscles of the Pharynx. ४। Stylo-pharyngeus Muscle. ५। Salpingo-pharyngeus Muscle. ६। Pharyngeal Raphe.

[ १४६ चित्रम् ]

## शिरोग्रीवार्धस्य अभ्यन्तरम् ।

( मुख-नासा-गल-तालवादिप्रदर्शनाय मध्यरेखायामूर्ध्वाधश्छेदेन दर्शितम् )




[ १। नासासुरङ्गा उत्तरा। २। ऊर्ध्वशुक्तिका। ३। नासासुरङ्गा मध्यमा। ४। नासाछिन्द्रः ५। नासासुरङ्गा अधरा। ६। चिवुकजिह्वाकण्ठिका पेशी। ७। चिवुककण्ठिका पेशी। पृ०—पृष्ठवंशः ]

## अथ अन्ननलिका

अन्ननलिका[1] नाम (१४७ चित्रम्) प्रायेण वितस्तिप्रमाणदैर्घ्या द्वयंगुलायता मांसमयी नलिका, या ग्रसनिकया निगीर्णमन्नपानमामाशये प्रवेशयति। तस्या ऊर्ध्वमुखं ग्रसनिकयाऽनुबध्यते, अधोमुखमामाशयेन।

सेयं षष्ठ्या ग्रीवाकशेरुकाया आरभ्य एकादशीं पृष्ठकशेरुकां यावत् पृष्ठवंश-पुरस्तात् किञ्चिद्वामभागमास्थाय तदनुक्रमेण आलम्बते। त्रयश्च तस्या अंशाः कल्प्यन्ते वर्णनासौकर्याय--ग्रीवागतांशः, उरोगतांशः, उदरगतांशश्चेति। तेषामाद्यन्त-भागौ ह्रस्वौ त्रि-चतुरांगुलमात्रौ च। मध्यभागो दीर्घः, सप्ताष्टांगुलप्रमाणश्च।

(व्यतिकरः) अथास्या आदिमभागस्य ग्रीवागतस्य पुरस्ताद् दृश्यानि—क्लोमनलिका, ग्रैवेयकग्रन्थेर्वामपिण्डम्, अधरग्रैवेयक्यौ सिराधमन्यौ, नाड्यादयश्च। पश्चात् पृष्ठवंशः। दक्षिणतो दक्षिणा महामातृका धमनी, अनुमन्या सिरा, आरोहिणी स्वरयन्त्रनाड़ी च। वामतः—ता एव वामाः, मुख्या रसकुल्या च।

मध्यभागस्य तु उरोगुहाप्रविष्टस्य पुरस्ताद् उत्तरफुस्फुसान्तराले दृश्याः—क्लोमनलिका, अनाहताख्यं नाड़ीचक्रम्, वामा अक्षाधरा धमनी महामातृका च। महाधमन्यास्तोरणभागश्च अन्ननलिकां तिर्यगुल्लंघ्य पश्चात् प्रसृतः। वामतश्च अन्ननलिकायाः तदेव धमनीद्वयं महाधमन्यास्तोरणान्तश्च। दक्षिणतः दक्षिणा फुस्फुसधरा कला, आरोहिणी स्वरयन्त्रनाड़ी च। पश्चिमतः पृष्ठवंशो रसकुल्या च।

अथ क्रमात् क्लोमनलिकाविभागस्थानमतिक्रम्य पश्चिमाधरं फुस्फुसान्तरालं प्रविशन्त्या अन्ननलिकायाः पुरस्ताद् आदौ वामा क्लोमशाखा, दक्षिणा फुस्फुसाभिगा धमनी च। तदधस्तात् पुरो हृदयधरः कलाकोषः, पश्चादवरोहिणी महाधमनी, मुख्या रसकुल्या, पुरोवंशिकाः सिराश्च। उभयतश्च फुस्फुसधरौ कलाकोषौ, प्राणदे नाड्यौ च, तच्छाखाप्रताननिर्मितं नाड़ीचक्रञ्च परितः।

अथ महाप्राचीरां निर्भिद्य उदरगुहायां प्रविष्टायास्तस्याश्चरमो भागो वामतस्तिर्यग्भूय आमाशयमुखेन संबद्धः। तत्र च पुरस्ताद् यकृद्वामपिण्डम्।

---

१। अन्ननलिका—Oesophagus or Gullet.

वामतश्च तदेव आमाशयस्कन्धश्च । दक्षिणतो यकृत्पिण्डिका दीर्घा । पश्चिमतो महाप्राचीरा ।

निर्माणं पुनरन्ननलिकाया बहिर्भागे स्वतन्त्रपेशीतन्तुभिरनुदैर्घ्यमनुप्रस्थश्चावस्थितैः, तेषामनुदैर्घ्या बाह्यतमाः । अभ्यन्तरतश्च तदावेष्टनी स्थूलकला, या तत्परितः स्थितेभ्यः श्लेष्मस्रावि-सूक्ष्मग्रन्थिभ्यः स्रुतेन श्लेष्मणा नियतमार्द्रीक्रियते । परितश्च तां नाड़ीजालकानि, सिराधमनीजालकानि च । तत्र नाड्यः— नागिन्योः नाड्योः शाखाप्रशाखाः, प्राणदयोश्च । धमन्यः पुनरधरग्रैवेयकयोः पर्शुकानुगानामन्ननलिकानुगानाञ्च धमनीनां शाखाप्रतानाः ।

## अथ उदरगुहा ।

**उदरगुहा**[1] नाम ( १४६ चित्रम् ) उदराभ्यन्तरस्था महती गुहा अलाबुफलायतना, या मध्यप्राचीरया उरोगुहातः प्रविभक्ता, अधश्च श्रोणिगुहानुबन्धिनी । तस्याः पश्चिमसीमा पृष्ठवंशः, कटिलम्बिनीसंज्ञं पेशीचतुष्टयं[2], कटिचतुरस्रे पेश्यौ च, तानि च सर्वाणि महाप्राचीराया मूलद्वयमुभयतः स्थितानि गम्भीरप्रावरणीच्छादितानि । पुरःसीम्नि पार्श्वयोश्च उदरगुहायाः—उदरान्तश्छदा नाम गम्भीरप्रावरणी वर्णितपूर्वा[3], निम्नस्थाः पर्शुकोपपर्शुकाः, जघनकपालद्वयञ्च । समग्रायाश्च उदरगुहाया अन्तःपरिधेर्यन्त्रतन्त्राणां च छादिनी तन्वी कला—उदर्या नाम । तामग्रे वक्ष्यामः ।

सेयमुदरगुहा बहूनां यन्त्र-तन्त्राणां धारणी । तानि च – आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रम्, यकृत्, प्लीहा, अग्न्याशयः, बृक्कौ, गवीन्यौ, वस्तिः अवरोहिणी महाधमनी, अधरा महासिरा, रसप्रपा रसकुल्यासहिता, मणिपूराख्यं नाड़ीचक्रं चेत्यादीनि ।

उदरबहिर्भागश्च नवसु प्रदेशेषु विभज्यते वर्णनासौकर्याय ( १४८ चित्रम् ) । तद्विभाजन्यश्च रेखाश्चतस्रः कल्प्यन्ते—द्वे अनुलम्बे, द्वे च अनुप्रस्थे । तयोरनुलम्बे मध्यरेखामुभयतः ऊर्ध्वाधः प्रसृते । एकैका च तयोः अष्टमोपपर्शुकामध्यभागानुक्रमेण स्तनचूचुकाद् वंक्षणरज्जुमध्यविन्दुं यावद् द्रष्टव्या । अथ अनुप्रस्थयो

१ । उदरगुहा—Abdominal Cavity. २ । कटिलम्बिनी ह्रस्वा दीर्घा च एकैकत इत्यर्थः । ३ । पेशीखण्डे ३५ पृष्ठे ।

[ १४७ चित्रम् ]

# अन्ननलिका

( कोष्ठयन्त्राणामपसारणेन दर्शिता )




( To face page 196 )

रेखयोरुत्तरा उत्तरनाभिका नाम, सा नाभेरुपरिष्टात् नवमोपपर्शुकाग्रद्वयं स्पृष्ट्वा प्रसृता। अधरा तु अधरनाभिका नाम जघनकपालशिखरद्वयमाक्रामति। इत्थञ्च विभक्ता नव प्रदेशा यथा - ऊर्ध्वभागे उभयतो दक्षिणवामौ अनुपार्श्विकौ प्रदेशौ, मध्ये हृदयाधरिकः। मध्यभागे कटिपुरस्ताद् उभयतः कुक्षिद्वयं कटि-पार्श्विकप्रदेशौ वा, मध्ये नाभिं परितः परिनाभिकः। अधोभागे उभयतो वंक्षणोत्तरिकौ प्रदेशौ, मध्ये अधिवस्तिकः वस्तिप्रदेशो वा इति।

एतेषु च प्रदेशेष्ववस्थिताः शारीरभागा नियतं स्मर्त्तव्याः। तद्यथा—

(१) दक्षिणे अनुपार्श्विकप्रदेशे[1] यकृद्दक्षिणपिण्डम्, बृहदन्त्रस्य याकृतकोणः, दक्षिणवृक्कांशश्च। हृदयाधरिकप्रदेशे[2] अग्न्याशयस्य दक्षिणार्धः, यकृतो वामपिण्डं दक्षिणपिण्डांशः, पित्तकोषश्च, ग्रहणिका, अग्न्याशयः, अधि-वृक्कसहितौ वृक्कांशौ, अधरा महासिरा, प्रतीहारिणी सिरा, अवरोहिणी महाधमनी, मणिपूराख्यं नाड़ीचक्रम्, रसकुल्यादयश्च। वामे अनुपार्श्विकप्रदेशे[3] आमाशय-स्कन्धः, प्लीहा, अग्न्याशयपुच्छम्, बृहदन्त्रस्य प्लैहिककोणः, वामवृक्कांशश्च।

(२) दक्षिणे कटिपार्श्विकप्रदेशे[4] बृहदन्त्रस्य आरोहिभागः, दक्षिण-वृक्कस्य अधरार्धः, क्षुद्रान्त्रैकप्रदेशश्च। परिनाभिकप्रदेशे[5] बृहदन्त्रस्य अनुप्रस्थभागः, ग्रहणिकांशः, वपामध्यभागः, अन्त्रबन्धनिकांशः, क्षुद्रान्त्राणि च भूम्ना। वामे कटिपार्श्विकप्रदेशे[6] बृहदन्त्रस्य अवरोहिभागः, वामवृक्कस्य अधरार्धः, क्षुद्रान्त्रैकप्रदेशश्च।

(३) दक्षिणे वंक्षणोत्तरिकप्रदेशे[7] दक्षिणा गवीनी, उण्डुकम्, उण्डुक-पुच्छम्, वृषणधमन्यादयश्च। अधिवस्तिकप्रदेशे[8]—क्षुद्रान्त्रैकदेशः, बालानां वस्तिः (यूनां च मूत्रपूर्णा), गर्भाशयश्च गर्भिणीनाम्। वामे वंक्षणोत्तरिकप्रदेशे[9] वामा गवीनी, बृहदन्त्रस्य कुण्डलिका, वृषणधमन्यादयश्च।

---

१। दक्षिणः अनुपार्श्विकप्रदेशः—Right Hypocondriac Region. २। हृदयाधरिकप्रदेशः—Epigastric Region. ३। वामः अनुपार्श्विकप्रदेशः—Left Hypocondriac Region. ४। दक्षिणः कटिपार्श्विकप्रदेशः—Right Lumbar Region. ५। परिनाभिकप्रदेशः—Umbilical Region. ६। वामः कटिपार्श्विकप्रदेशः—Left Lumbar Region. ७। दक्षिणो वंक्षणोत्तरिकप्रदेशः—Right Inguinal Region. ८। अधिवस्तिकप्रदेशः—Hypogastrtc Region. ९। वामो वंक्षणोत्तरिकप्रदेशः—Left Inguinal Region.

[ १४८ चित्रम् ]

## उदरोरसोः पुरस्ताद् बहिर्भागस्थाः काल्पनिकरेखाः तत्कृतः प्रदेशविभागश्च ।




[ १। हृदयाधरिकः प्रदेशः । २। परिनाभिकः । ३। अधिवस्तिकः ( वस्तिप्रदेशो वा ) ]
अनु०—अनुपार्श्विक प्रदेशः (दक्षिणः) । कु०—दक्षिणः कुक्षिदेशः । व०—वंक्षणोत्तरिक प्रदेशः (दक्षिणः)

[ १४६ चित्रम् ] कोष्ठाङ्गानां यथायोग्य स्थाननिर्देशकम् ।

( उरःपञ्जर श्रोणिचक्रसहितं, त्वङ्मांसापसारणेन दर्शितम् )



अष्टौ च तावद् उदरगुहां परितश्छिद्राणि। तद्यथा--महाधमनीच्छिद्रम्, अधरमहासिराच्छिद्रम्, अन्ननालविवरञ्चेति त्रयं महाप्राचीरायां गुहाच्छदिभूतायाम्। द्वे अन्तर्वंक्षणीयसंज्ञे वंक्षणप्रदेशयोः, द्वे च वंक्षणदर्यौ नाम वंक्षणिकाख्यस्नायुरज्ज्वोरधस्ताद् वर्णितपूर्वे।

अथ उदर्या कला।

**उदर्या**[1] नाम तनुस्वच्छमसृणा महाकला (१४६ चित्रम्), या एकेन स्तरेण समग्रमपि उदरगुहापरिसरम्, अपरेण च स्तरेण तदन्तःस्थानि यन्त्राणि समावृणोति। सेयम् उरस्याख्यकलेव निश्छिद्रा महाकोषरूपा। महाकोषस्य स्तरद्वयान्तश्च दृश्या तनुपिच्छिला लसीका स्तोकमात्रा, या यन्त्राणां परस्परघर्षणकृतं क्षयं वारयति पैच्छिल्यगुणेन। सा च लसीका रोगवशाद् विकृता प्रवृद्धा च जलोदरं जनयति।

अस्याश्च कलायाः द्वावंशौ कोषरूपौ—बाह्यो महाकोषः, आभ्यन्तरो लघुकोषश्चेति। तत्र बाह्यकोषस्य बहिःस्तरेणावृत उदरगुहापरिधिः सर्वत्रैव प्रायः। अन्तःस्तरेण पुनरावृतानि—यकृत्, प्लीहा, आमाशयः, ग्रहणी, बृहदन्त्रम्, क्षुद्रान्त्राणि, वस्तिशिखरम्, स्त्रीणां गर्भाशयश्च सपरिकरः। एतेषां च यन्त्राणां प्रबन्धनाय यत्र यत्र द्विगुणीभावः कलायाः, तत्र तत्र निर्मीयन्ते यकृदादीनां बन्धन्यः। तेषु च मुख्या बन्धन्यो यकृत्-प्लीहामाशय-क्षुद्रान्त्र-बृहदन्त्र-वस्ति-गर्भाशय-गुदादिधारिण्यः। तद्विस्तरं तत्तदाशयप्रकरणे वक्ष्यामः।

आभ्यन्तरस्य लघुकोषस्य पुनः संस्थानं यकृदामाशययोरन्तराले तदधः, पृष्ठतश्च। तस्य चाधरांशो दीर्घाकृतिः वपाख्ये स्थूलकलामये प्रच्छदे प्रविष्टः (१४६ चित्रम)। यकृद्वृन्तस्य चाधस्ताद् उभयोः कलाकोषयोः संयोजनं छिद्रम् उदर्यान्तरिकं नाम। तत्पथेन हि कलाकोषद्वयस्य अभ्यन्तरस्था लसीका परस्परसम्बन्धं भजते।

**वपा**[2] नाम उदर्यायाः कलायाः स्तरचतुष्टयात्मको भाग आम्नाय[3]-प्रसिद्धो (१५० चित्रम्), येन स्थूलजवनिकारूपेण पुरस्तात् संच्छाद्यन्तेऽन्त्राणि। सा चामाशयस्याऽधोधारातो लम्बमाना बृहदन्त्रस्य अनुप्रस्थभागं क्षुद्रान्त्राणि च

---

१। उदर्या कला—Peritoneum. २। वपा—Great Omentum. ३। आम्नायो वेदः। याज्ञिका हि पशोर्वपां यज्ञे निर्वपन्ति।

[ १५० चित्रम् ]

## उदर्याख्य-महाकलायाः सन्निवेशप्रदर्शनाय उदरगुहाया ऊर्ध्वाधश्छेदः ( स्त्रीशरीरस्य )।




१। उदर्याविरहितो यकृत्पृष्ठांशः। २। योनिगुदान्तरीयं कलामयं स्थालीपुटम्। ३। वस्ति-गर्भाशयान्तरीयं कलामयं स्थालीपुटम्। पृ०—पृष्ठवंशः।

[ चित्रे बाणाग्रफलकचिह्नाङ्कितम् उदर्याख्यकलायाः कोषद्वयान्तरिकं छिद्रम्। कोषद्वयञ्चात्र विशेषेण लक्षणीयम्—यथा महाकोषो घनश्यामवर्णाङ्कितः, लघुकोषः किञ्चिद्धूसरवर्णाङ्कितः। ]

[ १५१ चित्रम् ] वपा, अन्त्रबन्धनानि च।

( वपा चेह बृहदन्त्रेण सह ऊर्ध्वं परावृत्य दर्शिता )




[ १। बृहदन्त्रीया मेदःपुष्पिकाः। २। बृहदन्त्रस्य आरोहिभागः। ३। उदर्याख्यकलायाः परिसरीय-भागः। ४। उण्डुकबन्धनी। ५। उण्डुकपुच्छम्। ६। उण्डुकखातम्। ७। अनुप्रस्थ-बृहदन्त्रस्य कलामयी बन्धनी। ८। बृहदन्त्रस्य प्लीहान्तकोणः। ९। क्षुद्रान्त्रम् ( वामत आकृष्य पातितम् )। १०। उण्डुकम् ( कर्त्तितं रज्जुबन्धनाकृष्टञ्च )। ११। क्षुद्रान्त्रबन्धनी। ]

संरक्षति। अधोधारा त्वस्या विमुक्ताग्रा। मेदस्विनामुदरे मेदःसञ्चयश्च वपास्तरान्तरेव विशेषेण दृश्यः।

अथैतानि उदर्याकलायाः तत्र तत्र द्विगुणीभावादारचितानि स्थालीपुटानि (१५०।१५१ चित्रयोः)। तत्र गुद-वस्ति-योनि-गर्भाशयादिव्यतिकरेण स्त्रीणां द्वे स्थालीपुटे स्वनामव्याख्याते—वस्ति-गर्भाशयान्तरीयं[1], योनि-गुदान्तरीयं[2] चेति। पुंसान्तु वस्तिगुदान्तरीयम्[3]—एकमेव। बन्धन्यश्च द्विगुणीभूतकलारचिता वहुधा दृश्याः (स्त्रीपुंसयोः)। तद्यथा—ग्रहणीमभितः पञ्चषाः, उण्डुकं परितस्तिस्रः, क्षुद्रान्त्रबन्धन्यस्तालवृन्ताकाराः, अपराश्च प्लीहामाशय-बृहदन्त्रादिसम्बद्धाः।

एते पुनराशयभागाः सर्वत उदर्याकलाच्छादिता द्रष्टव्याः।—यकृत्, आमाशयः, ग्रहण्या उत्तरांशः, प्लीहा, क्षुद्रान्त्राणि, बृहदन्त्रस्य अनुप्रस्थभागः, कुण्डलिका, उत्तरगुदश्च। स्त्रीणां तु बीजकोषौ, बीजस्रोतसी, गर्भाशयश्च। बीजस्रोतसोः पुष्पितमुखे तु उदर्यामहाकोषान्तरुन्मुक्ते[4] इति विशेषः।

इमे पुनरंशमात्रेषु उदर्याख्यकलाच्छादिताः—ग्रहण्या अनुप्रस्थभागः अधरभागश्च, उण्डुकम्, बृहदन्त्रस्य आरोहिभागः अवरोहिभागश्च, मध्यगुदम्, योनेरुत्तरांशः, वस्तिपृष्ठञ्चेति। एतान् पुनः स्तोकेन स्पृशति उदर्या कला पुरस्तादेव—अग्न्याशयः, वृक्कौ, अधिवृक्कौ चेति।

### अथ आमाशयः।

**आमाशयः**[5] नाम भुक्तपीतस्य प्रथमाधारो मृदुमांसमयः दृतिसमाकारः। स च स्फारतमो भागो महास्रोतसः, यो वामानुपार्श्विकभागं हृदयाधरिकभागं चोदरस्याऽधिकृत्य तिर्यगधिशेते (१४६।१५२।१५३ चित्रेषु)। परिवर्त्तते च तस्याकृतिरवस्थानञ्च भुक्तपीतपरिमाणानुसारतः स्थान-शयनादितश्च। तस्य ऊर्ध्वमुखं महाप्राचीरां निर्भिद्य विनिर्गतेन अन्ननलिकाप्रान्तेन अनुबध्यते, अधोमुखं ग्रहणीमुखेन दक्षिणतः।

तस्य दैर्घ्यं रिक्तावस्थायां प्रायेण षोड़शांगुलप्रमाणं किञ्चिदधिकं वा पूर्णवयसः। प्रस्थन्तु अष्टांगुलमात्रमधिकं वा बहुभोजिनाम्। तस्योर्ध्वं वामतश्च

---

१। Vesico-uterine Pouch. २। Recto-uterine Pouch. ३। Recto-vesical Pouch. ४। अतः क्वचित्तत्रापि गर्भसम्भवः। ५। आमाशयः—Stomach. आमस्य अपक्वस्यान्नस्याशयः—इत्यामाशयः। सेयं चरकसुश्रुतादिसम्मता संज्ञा। यत्तु केचिद् वङ्गीयाः पाकस्थलीति नवीनां संज्ञामस्मिन्नर्थे व्यवहरन्ति, तदसङ्गतम्। न हि सत्यां प्राचीनसंज्ञायामसंदिग्धायां यादृच्छिक-नवीनसंज्ञाकरणं युज्यते।

[ १५२ चित्रम् ]

## आमाशयस्य स्वरूपं निर्माणञ्च।

( अत्र बाह्यवृतिमध्येऽपसारिता )




[ क-क-क—आमाशयकोड़िका धारा। पृ-पृ-पृ—आमाशयपृष्ठिका धारा। १—हार्दिकद्वारम्। २—अनुदैर्घ्यास्तिरश्चीनाश्च मांसतन्तवः। ३—अनुप्रस्थाः संवेष्टनशीला मांसतन्तवः। ]

महाप्राचीरा। अधस्ताद् बृहदन्त्रस्य अनुप्रस्थांशो वपाच्छादितः ( वपा हि तस्य अधोधारासंलग्ना )। दक्षिणतो यकृत्। वामतः प्लीहा। पृष्ठतः अग्न्याशयः।

सोऽयम् प्रचुरान्नपानस्य निषेवणात् स्फारीभूय दीर्घायतो जलपूर्ण-दृतिसदृशः किञ्चिद्विवृत्तकायश्च भवति। अधिकरोति च तदा मध्योदरम्, आ-नाभिविलम्बितः। स्फारीभूतश्च स शरावत्रयं शरावचतुष्टयं[1] वा भुक्तपीतं धारयति भारतीयानाम्, अर्धशरावन्यूनमपरेषाम्। औदरिकाणान्तु स एव कालेन नियतस्फारीभूतस्तिष्ठति, जनयति च क्रमाद् आमाशयविस्फारं[2] नाम दुःखदं रोगम् यत्र चिराय तिष्ठत्यन्न-पानमामाशये, प्रच्छर्द्यते वा चिरेण।

अथात्र लक्षणीया नव विशेषाः—द्वारद्वयं, धाराद्वयं, तलद्वयम्, आमाशय-स्कन्धः, आमाशयमध्यम्, आमाशयप्रणालिका चेति। तत्रास्य—

---

१। शरावो नाम अष्टपलपरिमाणः ( चतुःषष्टितोलकात्मकः )। २। आमाशयविस्फारः—Dilatation of Stomach. औदरिका हि शरावदशकमपि भुञ्जते।

(१) **द्वारद्वयम्** प्रान्तद्वयस्थम् । तत्रोर्ध्वद्वारम् अन्ननलिका-प्रान्तानुबन्धि—तस्य हार्दिकद्वार[१]मिति संज्ञा, हृदयसान्निध्यात् । तद् आमाशय-स्कन्धादधो दक्षिणतश्च दशमपृष्ठकशेरुपिण्डस्य पुरस्ताद् वर्त्तते । अधोद्वारन्तु ग्रहणीमुखानुबन्धि—मुद्रिकाद्वारं[२] नाम मुद्रिकाकारत्वात् । तत् संकोचविस्फार-शीलया मांसमयकपाटिकया सुरक्षितम । सा च कपाटिका मुद्राकपाटिका[३] नाम । स्थानञ्च मुद्रिकाद्वारस्य प्रथमकटिकशेरुपिण्डस्य पुरस्तात् ।

(२) **धाराद्वयम्**—तावदामाशयस्य ऊर्ध्वधारा अधोधारा चेति । ते द्वारद्वयस्य मध्ये ऊर्ध्वमधश्च द्रष्टव्ये, रिक्तस्य तु तस्य त एव पूर्व-पश्चिमधारे भवतः । तयोरुर्ध्वधारा अन्ननलिकाया दक्षिणधारानुबन्धिनी ह्रस्वा दक्षिणाभिमुखी च । सेयम् आमाशयक्रोड़िका[४] नाम । तस्यां सम्बद्धा आमाशयबन्धनी ( लघुवपा[५] वा ) उदर्याकलायाः स्तरद्वयनिर्मिता । अधोधारा तु सुदीर्घा, या आमाशयस्कन्धं वामतः संवेष्ट्य आमाशयतलं प्राप्नोति, सा आमाशयपृष्ठिका[६] आमाशयतलिका वा नाम । तस्यां संलग्ना वपाख्या स्थूलकला वर्णितपूर्वा ।

(३) **तलद्वयं** नाम आमाशयस्य बाह्यप्रदेशौ धाराद्वयान्तरालस्थौ । तयोः पुरस्तलं पश्चिमतलञ्चेति संज्ञे । रिक्तस्य तु आमाशयस्य संकोचकृत-विवर्त्तनात् तयोरेव ऊर्ध्वाधस्तलयोः परिणामः ।

(४) **आमाशयस्कन्धः**[७] नाम आमाशयस्य कुब्जाकार ऊर्ध्वप्रान्तः, यो वामानुपार्श्विकप्रदेशे वर्त्तते महाप्राचीराया उत्सङ्गस्थः । सोऽयं स्फारतमो भाग आमाशयस्य । स च कलाबन्धन्या संबध्यते वामतः ।

(५) **आमाशयमध्यं**[८] नाम आमाशयस्य मध्यभागः स्फारोदरः, स हि धारयति अन्नपानं प्राधान्येन ।

(६) **आमाशयप्रणालिका**[९] नाम आमाशयस्य चरमो भागो नातिस्थूलनलकाकारः । सा पित्तकोषस्य समीपस्था ग्रहण्याऽनुबध्यते, तदन्ते चान्तर्द्दृश्ये मुद्राकपाटिका, मुद्रिकाद्वारञ्च ।

---

१ । हार्दिकद्वारं—Cardiac Orifice. आमाशयरुजायां हृदि व्यथेति व्यपदेशः एतदपेक्षयैव । २ । मुद्रिकाद्वारं—Pyloric Orifice. ३ । मुद्राकपाटिका—Pyloric Valve. ४ । आमाशय-क्रोड़िका धारा—Lesser Curvature. ५ । लघुवपा—Lesser Omentum or Omental Bursa. ६ । आमाशयपृष्ठिका धारा—Greater Curvature. ७ । आमाशयस्कन्धः—Fundus. ८ । आमाशयमध्यं—Body of Stomach. ९ । आमाशयप्रणालिका—Pylorus.

[ १५३ चित्रम् ]

आमाशयस्य अभ्यन्तरम् ( विदार्य दर्शितम् ) ।




[ १। आमाशयस्य हार्दिकद्वारम् । २। आमाशयक्रोडस्थः कोणः । ३। ग्रहणीमुखम् ।
ब-ब-ब ब—अन्त्रान्तर्दृश्या उच्चावचा बलीराजयः श्लेष्मलकलावृताः । ]

निर्माणं पुनरामाशयस्य वृतिचतुष्टयेन सम्पद्यते । तद्यथा—बहिर्भागे वृतिरुदर्याकलामयी, तदन्तर्मांसमयी, तदन्तः योजकतन्तुमयी, तदन्तश्च आभ्यन्तरी वृतिः स्थूलकलामयीति । तत्र विशेषाः ( १५२।१५३ चित्रयोः )—

( क ) बहिर्वृतिः — उदर्याख्यकलायाः स्तरद्वयेन पूर्वापरदेशप्रसृतेन आरच्यते । सा सर्वमपि आमाशयस्य बहिर्देशमावृणोति, अन्यत्र प्रबन्धनस्थानेभ्यः । तेषु हि द्विगुणीभूता उदर्याकलांशाः यकृत्-प्लीह-महाप्राचीरादिभिः सह संबध्नन्ति आमाशयं कलामयीभिर्बन्धनीभिः । बृहदन्त्रस्यानुप्रस्थांशेन च सम्बद्धा आमाशयस्य अधोधारा वपाबन्धनाख्येन[1] वपांशेन ।

( ख ) मांसमयी वृतिस्तावत् त्रिविधैः स्वतन्त्रपेशीतन्तुभिरनुदैर्घ्यमनुप्रस्थं तिर्यक् च सन्निविष्टैरारच्यते । तत्र अनुदैर्घ्यास्तन्तवो बाह्यतमाः, तदन्तरनुप्रस्थास्ताः समग्रमामाशयं संवेष्ट्य स्थिताः, तदन्तश्च तिरश्चीनाः । त्रिविधैश्च तैः स्थितिस्थापकगुणैः मांसतन्तुभिर्दृढीकृतानि आमाशयगात्राणि ।

१ वपाबन्धनम्—Gastro-colic Ligament ( Part of the Greater Omentum ),

(ग) योजकतन्तुमयी वृतिस्तु आभ्यन्तरकलायाः सम्यक् प्रबन्धनार्था। योजकतन्तवश्च ऊर्णनाभसूत्रवत् सूक्ष्माणि सूत्राणि। तस्यां च वृत्यां प्रसृतानि सिरा-धमनी-रसायनीजालकानि, अणुग्रन्थयश्च पाचकाम्लरसस्राविणः।

(घ) आभ्यन्तरी वृतिः पुनः स्थूलकलामयी। सेयं कला आमाशयस्य रिक्तावस्थायां वृद्धजनस्य लुलितगात्रचर्मवद् वलीराजिभिः[1] उपलक्षिता प्रशिथिला च तिष्ठति। तस्यां च उन्मुच्यन्ते पाचकाम्लरसस्राविणः क्लेदकश्लेष्मस्राविणश्च अणुग्रन्थयः[2]। तेष्वसंख्येयाः पाचकरसस्राविणो ग्रन्थयः (अंगुलमात्रे स्थाने शताधिकसंख्याः) इति परीक्षकाः। भोजनकाले कियत्कालानन्तरं च ते यथा-प्रयोजनमम्लरसं क्षरन्ति, विशेषतो दुग्धमांसादिविपाकाय।

**पोषणं** तावदामाशयस्य सम्पद्यते आमशयकौड़िकयोरामाशयतलिकयोश्च धमन्योः शाखाप्रतानैः। सर्वाश्च ता धमन्यो महाधमन्या अधोदरिकाख्यशाखा-प्रभवाः। सिराश्च तत्संज्ञा भुक्तरसभूयिष्ठं रक्तमभिवहन्त्यः प्रतीहारिणीं महासिरां प्रविशन्ति। रसग्रन्थयो रसायन्यश्च आमाशयस्य धाराद्वयोपकण्ठस्थाः।

नाड़ीप्रतानास्तु तत्र प्राणदयोर्वनाड्योः शाखाप्रशाखाऽनुशाखाः, मणिपूरचक्र-प्रभवाश्च। तत्रेदं स्मर्त्तव्यम्—प्राणदयोः शाखाप्रताना आमाशयेऽजीर्णादि हेतोरुत्तेजिताः हृदय-फुस्फुसादिप्रसृतांस्तच्छाखाप्रतानानपरान् कोपयन्ति। ततो वातिकहृद्रोगस्य तमकश्वास-कासयोश्च सम्भवो बहुशः।

## अथ क्षुद्रान्त्रम्।

**क्षुद्रान्त्रम्**[3] (क्षुद्रान्त्राणि वा) नाम मृदुमांसमयी सुदीर्घा नलिका (१४६।१५१ चित्रयोः), या नाभिं परितो रज्जुराशिरिव समूह्य रक्षिता। आमाशये किञ्चित्पक्वमन्नं हि तत्रैव, विशेषतश्च तदाद्यभागे ग्रहण्याख्ये, शनैः सम्यक् पच्यते। अतएवास्य पच्यमानाशय इति संज्ञा। पक्वाशय इति वा बृहदन्त्रसहितस्य। तस्योर्ध्व-मुखमामाशयेन सम्बद्धम्, अधोमुखं बृहदन्त्रस्योण्डुकभागेन। क्षुद्रान्त्राणि च दैर्घ्येण सार्धत्रिव्यामानि[4] पुंसां, स्त्रीणां तु अर्धव्यामहीनानि – इति प्राञ्चः। तदेतत् प्रायिकम्, बहुधा अल्पाधिकदैर्घ्यदर्शनात्। परिणाहस्तु तेषां करांगुष्ठवत्।

---

१। वलीराजयः—Rugæ. २। अणुग्रन्थयः—Peptic & Mucous glands. ३। क्षुद्रान्त्रम् क्षुद्रान्त्राणि वा—Sm. Intestine or Intestines or guts. ४। 'व्यामो बाह्वोः सकरयोस्ततयो-स्तिर्यगन्तरम्' इत्यमरः। स च किञ्चिन्न्यून चतुर्हस्तप्रमाणः (5 ft. 9 in.), एवञ्च सार्ध-त्रिव्यामदैर्घ्यम् किञ्चिन्न्यून चतुर्दशहस्तप्रमाणम्=20 ft. 1 1/2 inches. According to Potter, the length of the small intestine is 20 ft. but acc. to others, it is 23 ft.

संवध्यन्ते च तानि उदर्याकलारचिताभिर्बन्धनीभिः पृष्ठवंशपुरोभागेण। तासाम् अन्त्रबन्धनी'ति संज्ञा (१५०।१५१ चित्रयोः)।

संरक्ष्यन्ते च बृहदन्त्रानुप्रस्थभागसहितानि क्षुद्रान्त्राणि वपाख्यया स्थूलकलया पुरस्तात्तदाच्छादन्या। अभितश्च क्षुद्रान्त्राणि दृश्यं बृहदन्त्रम्।

अथ क्षुद्रान्त्रस्य त्रयो विभागाः कल्प्यन्ते वर्णनासौकर्याय— ग्रहणी, मध्यान्त्रकं, शेषान्त्रकं चेति। तत्र—

**ग्रहणी**[2] नाम क्षुद्रान्त्रस्य आद्यभागो द्वादशांगुलमानः (१५४।१५५ चित्रयोः)। तत्र पित्तकोषादागतं पाचकपित्तम्, अग्न्याशयादागत आग्नेयरसश्च पृथक् स्रोतोद्वयेनान्ते सम्मिलितमुखेन प्रसिच्येते, अर्धपक्वस्य अन्नस्य सम्यग् विपाकाय। मध्ये च आमाशय-ग्रहणीमुखयोर्द्वारं मुद्रिकाद्वारं नाम वर्णितपूर्वम्।

सोऽयमन्त्रभागः कुटिलगत्या अग्न्याशयस्य शीर्षभागं क्रोडीकृत्य निम्नतः प्रसृतः अनुप्रस्थबृहदन्त्रस्य पश्चिमतोऽवतिष्ठते, ततो वामाभिमुखः पृष्ठवंशमुल्लंघ्य द्वितीयकटिकशेरुकाया वामपार्श्व यावत् प्रसर्पति। ततः पुनर्वक्रीभूय अधः प्रसर्पति—इति तस्याः संस्थानवैचित्र्यम्। विदारितायाश्च ग्रहण्यां दृश्यते आभ्यन्तरवृतौ पूर्वोक्तस्य स्रोतोद्वयस्य सम्मिलितं मुखं शलाकाप्रवेशार्हम्, वलीराज्यश्च रसांकुरिकाधारिण्यः (१५५ चित्रम्)।

अत्रेदं स्मर्त्तव्यम्। ग्रहण्या मार्दवात् क्रियालाघवाच्च प्रायेण ग्रहणीरोग-सम्भवः। सा हि अर्धपक्वमन्नं गृह्णाति, पचति च तत् तत्र निरुध्य।

**मध्यान्त्रकं**[3] नाम पञ्चषहस्तदीर्घः क्षुद्रान्त्रभागो ग्रहण्या अनुबन्धी। तत् नाभिं परितोऽवस्थितं भूम्ना, अन्त्रबन्धनीभिर्दृढं प्रतिबद्धश्च पृष्ठतः।

**शेषान्त्रकं**[4] नाम तत्परवर्त्ती क्षुद्रान्त्रभागश्चरमः। स अधिवस्तिक-देशस्थो भूम्ना। तस्याधःप्रान्तः बृहदन्त्रस्याद्यभागेन उण्डुकाख्येन दक्षिण-वंक्षणोत्तरिकप्रदेशे सम्बद्धः खातद्वयाङ्कितया बन्धन्या।

**निर्माणं** पुनः क्षुद्रान्त्राणां चतसृभिरेव वृतिभिरामाशयवत्। ताश्च यथा—

(क) उदर्या वृतिः—उदर्यया कलया निर्मिता, ग्रहणीवर्जं सर्वत्र सर्वान्त्रच्छादनी। सेयमन्त्रनलिकां सर्वतः संवेष्ट्य द्विगुणीभूता दीर्घाभिरन्त्र-

---

१। क्षुद्रान्त्रबन्धन्यः—Masenteries. २। ग्रहणी—Duodenum. ग्रहणीपदं क्वचित् समग्रक्षुद्रान्त्राभ्यन्तरीयां कलामपि लक्षयति वैद्यकग्रन्थेषु, साऽसौ 'पित्तधरा'-कलासंज्ञा सुश्रुतमतेन। ३। मध्यान्त्रकम्—Jejunum. ४। शेषान्त्रकम्—Ileum.

[ १५४ चित्रम् ] ग्रहण्यग्न्याशययोरवस्थानदर्शकम् ।

( अत्र यकृद् ऊर्ध्वमाकृष्य परावृत्य च प्रतिबद्धम् । आमाशयः, ग्रहणीवर्जं क्षुद्रान्त्रम्, बृहदन्त्रञ्च भूम्ना—इति त्रयमपसारितम्, अवशिष्टांशाः शुभ्ररेखाभिः पृथग् दर्शिताः ) ।




[ अ०—अग्न्याशयपुच्छम् । आ०—आमाशयस्कन्धः ( कर्त्तितः ) । म० ध०—महाधमनी । अ० म०—अधरा महासिरा । उ०—उण्डुकः । बृ० अ०—बृहदन्त्रस्य अवरोहिभागः । उ० ध०—उत्तरान्त्रिकी धमनी । १—प्रतीहारिणी महासिरा । २—याकृतं पित्तस्रोतः । ३—यकृत्पिण्डविभाजकः कलांशः । ४ । अभियाकृती धमनी । ५।५—महाप्राचीराया मूलद्वयम् । ६—अभिप्लीहिका धमनी । ]

[ १५५ चित्रम् ]

## ग्रहणी, अग्न्याशयश्च ।




१। पित्तस्रोतोनलिका। २। प्रतीहारिणी महासिरा। ३। याकृती धमनी। तासां पुरस्ताद् ग्रहणीमुखम्। ४। उत्तरान्त्रिकी सिरा धमनी च। ५। ग्रहण्या अभ्यन्तरम् (अंशतो विदार्य दर्शितम्)। अग्न्याशयोऽपीह मध्ये विदारितः, तन्मध्यस्थस्रोतोनलिकयोः प्रदर्शनाय। न—अग्न्याशयस्य मुख्या स्रोतोनलिका, तदूर्ध्वं तिर्यगवस्थिता पित्तनलिका तया मिलिता।

बन्धनीभिः स्वकीयस्तरद्वयारचिताभिः सन्धारयति अन्त्राणि। ग्रहणी तु पुरस्ताद् उदर्याकलया स्तोकेनावृता अन्त्रबन्धनीविरहितैव पश्चात्।

(ख) पेशीमयी वृतिः—स्वतन्त्रपेशीतन्तुभिरारचिता। पेशीतन्तवश्च बहिरनुदैर्घ्यं प्रसृताः, तदन्तश्च अनुप्रस्थमन्त्रनलिकां संवेष्ट्य।

(ग) योजनी वृतिः—ऊर्णनाभतन्तुवत् सूक्ष्मसंयोजकतन्तुभिरारचिता आभ्यन्तरकलासंधारणी। सा श्लेष्मस्राविणामान्त्ररसस्राविणां च अणुग्रन्थिकानामधिष्ठानभूमिः।

(घ) आभ्यन्तरी वृतिः—मृदुमसृणश्लेष्मलकलामयी पूर्वोक्तानामणुग्रन्थिकानां स्रोतोमुखधारणी (१५६ चित्रम्)। सेयं कला कदम्बकेशरसदृशीभिः रसाकर्षणीभिरंकुरिकाभिरन्तराचिता, अनुप्रस्थाभिर्वलीराजीभिरुपलक्षिता च रस-

शोषकस्थानपरिमाणवर्धनार्थम्। ताश्च रसांकुरिकाः[1] क्षुद्रान्त्राणामभ्यन्तरे लक्षशो दृश्याः। एकैकस्यां च अंकुरिकायामेकैका सूक्ष्मा रसायनीजालिका मध्यतः (१५६ चित्रम्), सा सिरा-धमनीजालकेन परिवृता, सुरक्षिता च मूले मांसतन्तुभिः। संख्यातश्च अर्धकोटिसंख्या रसांकुरिकाः क्षुद्रान्त्रेषु—इति परीक्षकाः। तासु रसायनीजालिकाभिराकृष्टो दुग्धनिभः स्नेहबहुलोऽन्नरसः पयस्विनीसंज्ञासु रसायनीषु सञ्चरन्, अन्त्रमूलिकैः रसग्रन्थिभिर्मध्येपथं विशोधितः, क्रमाद् रसप्रपां प्रविशति, ततश्चान्ते गलमूलिकां सिराम्। अवशिष्टस्त्वन्नरसो रसांकुरिका-परिवारिभिस्तदन्तरालस्थैश्च सिराजालकैराकृष्टः क्रमशः सिरापथैः प्रतीहारिणीं महासिरां प्रविशति, ततश्च यकृदभ्यन्तरमिति रसस्य द्विविधो मार्गः स्मर्तव्यः।

अन्त्रपोषण्यस्तावद् धमन्यः—उत्तरान्त्रिक्या अधरान्त्रिक्याश्च धमन्याः शाखाप्रताना वर्णितपूर्वाः। सिरास्तु तत्सहचर्यः प्रतीहारिणीं महासिरां प्रविशन्ति, अभिवहन्ति च आग्नेयमन्नरसं रक्तमिश्रम्—इति विशेषः।

नाड्यः पुनरन्त्राणां मणिपूराख्यात् नाड़ीचक्रात् प्राधान्येन प्रभवन्ति। ताः समानवायोः क्रियासाधनभूताः। ताश्च क्रियाः उभयविधरसादानाऽन्त्रसङ्कोचन[2]-प्रसारणाद्याः शरीरपोषण-मलनिःसारणादिकर्मसहायाः।

## अथ बृहदन्त्रम्।

**बृहदन्त्रं**[3] नाम क्षुद्रान्त्रविपक्वस्यान्नस्य मलीभूतस्याऽधारभूतं स्थूल-नलकम् (१४६।१५१ चित्रयोः)। तस्य दैर्घ्यं प्रायः सार्धहस्तत्रयप्रमाणं, परिणाहः पादांगुष्ठवत् स्थूलतरो वा। तच्च उदरगुहायां दक्षिणवंक्षणोत्तरिकप्रदेशादुत्थाय, ऋजुगत्या दक्षिणकुक्षौ यकृत्तलावधि गच्छति, ततोऽनुप्रस्थमवस्थिता वामतः प्लीहतलं संस्पृश्य वामकुक्षौ अवतीर्णं वामं वंक्षणोत्तरिकप्रदेशं प्राप्नोति, ततश्च तत्र कुण्डलिकामारचय्य पश्चान्मध्यरेखानुक्रमेण सरलीभूयाऽवतरति, परिणमति च गुदनलिकायां पृष्ठवंशपुरस्तात्।

तस्य च बृहदन्त्रस्य पक्वाशय[4] इति मलाशय इति वा संज्ञा प्राचाम्। अन्नस्य खलु विपक्वस्य आप्यभागशोषणात् तत्रैव हि सर्वथा शुष्कमलभावपरिणामः।

---

१। रसाङ्कुरिकाः—Villi. २। सङ्कोचनं चान्त्राणां किञ्चुलुकगात्रसङ्कोचवत्। ३। बृहदन्त्रम्—Large Intestine. सेयं प्राचीना संज्ञा। ४। पक्वाशयपदं क्वचित् सामान्यतः सर्वान्त्र-वाचकमपि। 'मलाशय'-पदं तु बृहदन्त्रार्थं रूढम्। पक्वाशयान्तर्गतस्य क्षुद्रान्त्रस्य तु 'पच्यमानाशय'-संज्ञा समीचीना।

[ १५६ चित्रम् ]

## क्षुद्रान्त्राभ्यन्तरस्था वलिराज्यः, रसांकुरिकाश्च।

( क )



( ख )




[ (क) चित्रे वलिराज्यः ( अन्त्रविदारणेन दृश्याः )। १। सूक्ष्मसिरा-धमनीरचितं जालकं ( बाह्यम् )। २। मध्यस्था रसायनी। (ख) चित्रस्थाः सूक्ष्मपदार्थाः अणुवीक्षणसहायेन चक्षुषा दृश्याः ]

तस्य निर्माणं क्षुद्रान्त्रवत्, केवलमत्र रसांकुरिकाणामभावः। एष चात्रान्यो विशेषः — पेशीमयी वृतिः तिसृभिस्तनुदीर्घपट्टिकाभिस्तदंशान् सङ्कोच्य सन्नद्धा तद्दार्ढ्याय। ताभिश्च संग्रथितं बृहदन्त्रनलकं क्षुद्रस्थालिकामालावत् लक्ष्यते।

अथास्य षोढ़ा प्रविभागो वर्णनासौकर्याय—उण्डुकः, आरोहिभागः, अनुप्रस्थभागः, अवरोहिभागः, कुण्डलिका, गुदनलिका चेति। तत्र--

**उण्डुकः पुरीषोण्डुकः**[1] वा नाम बृहदन्त्रस्य आद्यभागश्चतुरंगुलायतः स्थालिकाकारो दक्षिणवंक्षणोत्तरिकप्रदेशस्थः (१५४।१५७।१५८ चित्रेषु)। तं वाम-पार्श्वतः प्रविशति क्षुद्रान्त्रभागश्चरमः, स स्वबन्धन्यां खातद्वयोपलक्षितः। प्रवेश-द्वारञ्च उण्डुकान्तः सन्दंशाकाराभ्यां कलावृतपेशीमयीभ्यां कपाटिकाभ्यामुप-लक्षितम्, मलस्य विपरीतगतिवारणाय। तयोः सन्दंशकपाटिके[2] इति संज्ञा। निम्नतश्चोण्डुके संलग्ना प्रायस्त्रिचतुरंगुलदीर्घा शरनलिकाकारा नलिका, उण्डुकपुच्छं[3] नाम। सा गर्भस्थबालस्य अन्त्रनिर्माणावशेषभूता निष्क्रियप्राया च। तस्याञ्च कदाचिद् जम्बीरबीजादिदुर्जरवस्तुप्रवेशादन्यथाऽपि वा विद्रधि[4] सम्भवः।

---

१। उण्डुकः (उण्डुकं वा)—Cæcum. सेयं प्राचीना संज्ञा। अस्यैव क्वचित् पोट्टलक—इति संज्ञाऽपि प्राचीना। २। सन्दंशकपाटिके—Ileo-cæcal Valve. ३। उण्डुकपुच्छं—Appendix. ४। उण्डुक-विद्रधिः—Appendicitis. ताञ्च सति विद्रधौ, अन्यथाऽपि वा, विद्रधिक्षेत्रभूतेयमिति छित्वा निष्कासयन्ति केचिदाधुनिकाः शल्यतान्त्रिकाः।

[ १५७ चित्रम् ]--उराडुकस्य बाह्यभागः।




[ १५८ चित्रम् ]—उराडुकस्य अभ्यन्तरभागः (विदार्य दर्शितः)।




सं० क०—सन्दंशकपाटिकाद्वयम्। श०—उराडुकपुच्छान्तःप्रवेशिता शलाका।

**आरोहि बृहदन्त्रं**[१] नाम उण्डुकादूर्ध्वस्थो बृहदन्त्रस्य आरोहिभागो दक्षिणकुक्षिदेशस्थः। स यकृत्तलं यावद् गत्वा वक्रीभूय अनुप्रस्थभागेन मिलितः। तथाऽरचितस्य च बृहदन्त्रकोणस्य याकृतकोण[२] इति संज्ञा।

**अनुप्रस्थ बृहदन्त्रं**[३] तु यकृत्तलदेशात् प्लीहतलं यावदनुप्रस्थमवस्थितो बृहदन्त्रभागः, स नाभेरुपरिष्टाद् आमाशयतलानुक्रमेण किञ्चिदिव धनुर्वक्रस्तिष्ठति। तेन संसक्ता चावलम्बते उदर्याख्यमहाकलाया वपा नाम स्थूलतमो भागः क्षुद्रान्त्राणामाच्छादनः।

**अवरोहि बृहदन्त्रं**[४] नाम अनुप्रस्थबृहदन्त्रस्य प्लीहतले किञ्चिद् वक्रीभूयावस्थितस्य अनुबन्धी बृहदन्त्रभागो वामकुक्षिदेशे लम्बमानः। तथाऽरचितस्य च कोणस्य प्लैहिककोण[५] इति संज्ञा। अधःप्रान्तश्च अवरोहिबृहदन्त्रस्य वामे वंक्षणोत्तरिकप्रदेशे किञ्चिद् वक्रीभूय कुण्डलिकयाऽनुबध्यते।

**बृहदन्त्र-कुण्डलिका**[६] नाम लुप्ताकारचिह्नवद् ( ऽ ) वक्रीभूय नाभेरधस्तान्मध्येऽवतीर्णो बृहदन्त्रप्रान्तः ( १५९ चित्रम् )। सा अधिवस्तिकप्रदेशं वस्तिगुहाञ्चाक्रम्य तिष्ठति, अनुबध्यते चाऽधस्तात् गुदनलिकया।

**गुदनलिका**[७] नाम बृहदन्त्रस्य अधःप्रान्तः प्रायेण वितस्तिप्रमाणः ( १६० चित्रम् )। सेयं त्रिकास्थ्नः पुरस्तात् किञ्चिदिव धनुर्वक्रा सरला नलिका, या ऊर्ध्वं बृहदन्त्रकुण्डलिकया, अधश्च पायुद्वारेणानुबध्यते। तस्याश्च पुरस्तात्—पुंसो वस्तिः, स्त्रियास्तु गर्भाशयो योनिश्च। पश्चात्—त्रिकपुरःस्था नाड़ीप्रवेण्यः अनुत्रिकाख्याः, शाखाश्च वामाया आभ्यन्तराऽधिश्रोणिकाख्यधमन्याः।

अथास्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्याय—उत्तरगुदम्, मध्यगुदम्, अधरगुदञ्चेति। तत्राद्यं स्थालिकावदायतं सार्धचतुरंगुलमानं च प्रायेण, तत् शुण्डिकाख्यपेश्याः पुरःस्थम्। द्वितीयं द्वित्रांगुलमानं किञ्चित् संकुचितं पुंसो वस्तिद्वारपृष्ठस्थं च, तत् पुरस्तात् पौरुषग्रन्थिं शुक्राधारिके च संस्पृश्यावतिष्ठते। स्त्रियास्तु योनिपृष्ठप्राचीरेण संबद्धोऽस्य पुरोभागः। अधरगुदं पुनः संकुचिततरं

---

१। आरोहि बृहदन्त्रं—Assending Colon. २। बृहदन्त्रस्य याकृतकोणः—Hepatic Flexure, ३। अनुप्रस्थबृहदन्त्रं—Transverse Colon. ४। अवरोहि बृहदन्त्रं—Descending Colon. ५। बृहदन्त्रस्य प्लैहिककोणः—Splenic Flexure. ६। बृहदन्त्र-कुण्डलिका—Sigmoid Flexure. ७। गुदनलिका—Rectum.

[ १५९ चित्रम् ]—बृहदन्त्रस्य कुण्डलिका ।




[ १६० चित्रम् ]—गुदनलिका ( विदार्य दर्शिता ) ।



सार्धांगुलमात्रं द्व्यंगुलमात्रं वा अनुत्रिकास्थिपुरःस्थं, तद् गुदसङ्कोचनीभ्यां पेशीभ्यां पायुधारण्याख्यपेश्या च संवेष्टितम्। तस्य चरमप्रान्तः पायव्यत्रिकोणान्तःस्थः।

अथास्या गुदनलिकाया अभ्यन्तरे दृश्या अनुप्रस्थावस्थिताश्चक्रार्धप्राया-स्तिस्रो वलयः ( चतस्रो वा क्वचित् ) कलावृतमांसतन्तुनिर्मिताः। ताः गुदसङ्कोचे सति मलसन्धारणसहायाः अन्तरान्तरा जवनिकाभूताः, गुदविस्फारे तु मार्गोन्-मोचनात् मलविसर्जन्यः। प्रवाहणं पुनः सम्पद्यते औदर्यपेशीनामुत्तरगुदस्य च सङ्कोचनेन, पायुधारण्याः शिथिलीकरणेन च। मलविसर्जनं गुदनलिकाया अधोऽधःक्रमेण सङ्कोचनात्। गुदसंवरणं पुनः गुदसङ्कोचन्याख्यपेशीद्वयस्य सङ्कोचेन, पायुधारण्या पायोरूर्ध्वाकर्षणेन च।

प्राचां वलित्रयं तु पूर्वोक्ताद् वलित्रयात् किञ्चिद् भिन्नं प्रतिभाति। तत्तत्-क्रियाधिष्ठानसान्निध्यादेव हि तत्र तत्र वली-पेश्यादौ कथमपि प्रवाहणी-विसर्जनी-संवरणीति संज्ञात्रयस्य सङ्गतिरूर्ध्वाधःक्रमेण। तथाहि प्रथमवलि-चक्रोपलक्षितभागेन मलस्य अधःपीडनात् प्रथमा प्रवाहणी। गुदविस्फारणेन मलविसर्जनाद् द्वितीया विसर्जनी। गुदसङ्कोचन्याख्यपेशीद्वयकृता चक्राकारा वलिस्तु तृतीया संवरणी नाम ( १६० चित्रम् )।

**गुदद्वारं, पायुद्वारं वा**[1] नाम ( १६० चित्रम् ) अधरगुदस्याधःप्रान्तः अनुत्रिकास्थ्नः पुरस्तान्नितम्बद्वयान्तराले दृश्यः। स संक्षेपेण पायुरिति गुदमित्यपि वा क्वचित् संज्ञायते। तत्परितश्च तन्वी त्वक् प्रतनुकाभिरनुदैर्घ्यं प्रसृताभिः वलीराजिभिरुपलक्षिता गुदाभ्यन्तरस्थया श्लैष्मिककलया समनु-बध्यते। त्वक्कलयोः सन्धिस्थानं च तत्र नीलाभशुभ्ररेखाङ्कितम्। अभ्यन्तरतश्च श्लैष्मिककलायामपि तादृश्य एव वलीराज्यो[2] गभीरतराः। परितस्तु पायुं गुदसङ्कोचनी बाह्या नाम पेशी वर्णितपूर्वा। पुरस्ताच्च गुदोपस्थयो-रन्तरालस्थः प्रदेशो मूलाधारो[3] नाम, मध्ये सेवन्या[4] उपलक्षितः। खातं च गुदं परितो मेदःपूर्णम् भगन्दररोगायतनम्—गुदकौकुन्दरं[5] नाम वर्णितपूर्वम्।

---

१। गुदद्वारं पायुद्वारं वा—Anus. २। वलीराज्यः—Rectal Columns (of Morgagni). ३। मूलाधारः—Perinæum. ४। सेवनी—Perinæal Raphe. ५। गुद-कौकुन्दरं खातम्—Ischio-rectal Fossa.

समग्रस्य च बृहदन्त्रान्तरीय-कलाभागस्य 'मलधरा कला'-इति संज्ञा प्राचाम् ।

इदञ्चात्र स्मर्त्तव्यम् । गुदनलिकां परितोऽवस्थितस्य सिराचक्रस्य भृशं रक्तपूर्णत्वे सति सिरामुखाणामधःस्थानां स्फारीभावात् तीव्ररुजाप्रादुर्भावो रक्तस्रुतिश्च । तानि च सिरामुखाणि रक्तार्शसामायतनानीति सिराध्याये वर्णितचराणि । शुष्कार्शसान्तु सम्भवो गुदद्वारं परितः स्थितानां त्वक्-कलामयीनां प्रतनुवलीनां शिथिलीभावात् । प्रवाहिकादौ तु अधरगुदाभ्यन्तरस्थ-कलाभागस्य प्रशिथिलीभावात् पुरीषोत्सर्गकाले गुदनिर्गमो बालानां प्रायः ।

**पोषणं** पुनरन्त्राणाम् उत्तराधराख्ययोः आन्त्रिकीसंज्ञयोर्धमन्योः शाखा-प्रतानैः । सिराश्च तदनुवर्त्तिन्यः प्रतीहारिणीं महासिरां प्रविशन्ति । ततो यकृद्रोगेषु तस्यां स्तोकेनापि रक्तावरोधे तदापूरणीषु सिरासु रक्ताधिक्यं, ततश्च रक्तार्शसां सम्भवः प्रायशः—इति विशेषतः स्मरणीयम् ।

नाड्यस्तावदन्त्राणां मणिपूराख्यनाड़ीचक्रादुद्भूताः संज्ञावहाश्चेष्टावहाश्च । मूलाधारचक्रोद्भवाश्च काश्चन गुदोपस्थादिप्रसृताः । क्रियाः पुनरन्त्राणां स्वतन्त्रपेशीनिर्मितानां न पुरुषेच्छापेक्षिण्यः, अन्यत्र गुदप्रान्तात् । स्वत एव हि ताः प्रवर्त्तन्ते समानापानयो र्वाय्वोरानुलोम्ये सति अन्त्रसङ्कोचनादिरूपाः स्वभावात् ।

**अन्त्रबन्धन्यः**[1] पुनः क्षुद्रान्त्राणां बृहदन्त्रस्य च कलामय्यः प्रबन्धन्यः ( १५०।१५१ चित्रयोः ) । ता उदर्यकलाया अन्त्राणि परितः प्रसृताया द्विगुणी-भावेनाऽरचिताः सिरा-धमनी-रसायनी-रसग्रन्थ्यादिभिः सहाऽन्त्राणां सन्धारण्यः ।

उदर्या हि कला ग्रहणीवर्जं क्षुद्रान्त्राणि, अनुप्रस्थाख्यं बृहदन्त्रं, तत्कुण्डलिकान्त्रञ्च सर्वत आवृणोति, रचयति च दृढ़ां बन्धनत्रयीम् । ताश्च क्षुद्रान्त्रबन्धनी[2], अनुप्रस्थबृहदन्त्रधरा[3] कुण्डलिकान्त्रधरा[4] च नाम । न च सन्ति आरोहिबृहदन्त्रस्य अवरोहिबृहदन्त्रस्य च सन्धारणाय सर्वत्र समानाः अन्त्रबन्धन्यः, स्वल्पतरा हि ताः प्रायेण । तासां संज्ञाः तत्तदन्त्रभागनामानुसारेण भवन्ति ।

---

१ । अन्त्रबन्धन्यः—Mesenteries and Meso colon. २ । क्षुद्रान्त्रबन्धनी—Mesenteries. ३ । अनुप्रस्थान्त्रधरा बन्धनी—Transverse Meso-colon. ४ । कुण्डलिकान्त्र-धरा बन्धनी—Sigmoid Meso-colon.

सन्ति च बृहदन्त्रस्याऽधोधारालम्बिताः मालतीपुष्पगुच्छाकाराः काश्चन कलावृता मेदोगुच्छिकाः, ता अन्त्रपुष्पिकाः[१] नाम।

गुदनलिका तु उत्तरगुदांशमात्रे उदर्यकलयाच्छादिता। उदर्यकलाया द्विगुणीभावाच्च पुंसां गुद-वस्त्यन्तरीयस्य स्थालीपुटस्य सम्भवः, स्त्रीणान्तु योनिगुदान्तरीयस्य वस्तिगर्भाशयान्तरीयस्य च। तच्चोक्तपूर्वमुदर्यकलाप्रसंगे।

अथ अग्न्याशयः।

**अग्न्याशयः**[२] नाम प्रायेण दशांगुलदीर्घः त्रि-चतुरांगुलायतो विशिष्ट-ग्रन्थिसङ्घातमय आशयः। स आमाशयस्य पृष्ठतः प्रथमकटिकशेरुकायाः पुरस्ताद् अनुप्रस्थमधिशेते ( १५४।१५५ चित्रयोः )। तस्य स्थूलः शिरोभागो दक्षिणाभिगो ग्रहण्या क्रोड़ीकृतः, तनुः पुच्छभागस्तु वामाभिगः प्लीहा। तस्योर्ध्वधारानुक्रमेण प्रसृता अभिप्लीहिका नाम धमनी। पश्चिमतस्तु दृश्याः—साधारणी पित्त-नलिका, अधरा महासिरा, वामा अनुवृक्का सिरा, महाधमनी, उत्तरान्त्रिकाख्ये सिराधमन्यौ, महाप्राचीराया मूलद्वयं पृष्ठवंशसहितम्, वामवृक्कः अधिवृक्क-सहितः, वामा कटिचतुरस्रा पेशी च। अधोधारा पुनस्तस्य दक्षिणभागे ग्रहण्या उत्सङ्गे धृता; वामभागे अनुप्रस्थबृहदन्त्रस्य वन्धन्या। अस्य च तावदग्न्याशयस्य अनुलम्बविदारणेन दृश्यं दीर्घं स्रोतोद्वयम् आग्नेयरसस्रावि। तच्च मिलितम् एकमेव स्रोतः सम्पद्यते, आग्नेयस्रोतोनलिका[३] नाम, उन्मुच्यते च तद् ग्रहण्यन्तः सह साधारण्या पित्तनलिकया एकेनैव छिद्रेण।

सोऽयम् अग्न्याशयः आमाशये अर्धविपक्वस्य सर्वविधान्नपानस्य पचनक्षम-माग्नेयरसं[४] प्रक्षरति पूर्वोक्तया स्फुटस्रोतोनलिकया ग्रहण्याम्। तत्परिमाणञ्च साधारणान्नपानसेविनः पुरुषस्य अहोरात्रे प्रायेणाशीतितोलकमानमिति परीक्षकाः।

अस्ति च क्वचित् क्वचित् काये अग्न्याशयात् पृथग्भूतो द्वितीयोऽपि ग्रन्थि-स्तादृश एव तत्पार्श्वे तादृशस्रोतसा मुख्यस्रोतोनलिकां प्रविष्टेन सहितः, स तत्कार्य एव।

---

१। अन्त्रपुष्पिकाः—Appendices Epiploicæ. २। अग्न्याशयः—Pancreas. ३। आग्नेयस्रोतोनलिका—Pancreatic Duct. ४। स एव वैद्यके अच्छपित्तमित्युच्यते, याकृतन्तु पित्तमीषदाविलं पीतहरिद्वर्णञ्च। स च त्रिविधपाचक-किण्वाधिष्ठानम्—मधुरकपाचकं (Amylase), आमिषवस्तुपाचकं ( Trypsin ), स्नेहपाचकं ( Lipase ) चेति प्रतीच्याः। परीक्षासिद्धञ्चैतत्। अतएव अग्न्याशयः पाचकरसस्य मुख्यः प्रभवः। [ किण्वं नाम सूक्ष्मं वस्तु सुराकिण्ववत् कार्यकरम् —Enzyme. ]

सन्ति चादृश्यानि स्रोतांसि अग्न्याशयस्य, यैः प्रक्षरति सूक्ष्म आग्नेयरसः सूक्ष्मसिराजालकान्तः। स च सर्वशरीरचरः शुक्रसारवत्, धात्वग्निसहायश्च। तद्विवरणं आशयखण्डान्ते वक्ष्यामः।

**सूक्ष्मनिर्माणं** तु अग्न्याशयस्य अणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यम् (१६१ चित्रम्), लालाग्रन्थिनिर्माणवत्। लक्ष्यन्ते हि उभयोरन्तः शून्यस्थानानि विशिष्टरसस्रावि-कोषाणुपुञ्जैः परिवृतानि। ते चेह कोषाणुपुञ्जाः आग्नेयरसाख्यं रसं स्रवन्ति, स च रसस्तत्र तत्र सञ्चीयमानः सूक्ष्मैराग्नेयस्रोतोभिः ईषत्स्थूलेषु द्वित्र-स्रोतःसु उपचीयते। तेभ्यश्च प्रवहन् स मुख्यया स्रोतोनलिकया ग्रहण्यां पतति (१५५ चित्रम्)। सन्ति चाग्न्याशयान्तरपरेऽपि कोषाणुपुञ्जा निःस्रोतस्काः, ते अग्निद्वीपाः[१] नाम। तेभ्यो निःसृतो हि रसः सिराजालकैराकृष्टः सार्वकायिकरक्तप्रवाहे सञ्चरन् मांसधात्वग्निपोषणो भवति, मांसधातुस्थस्य 'मधुरक'स्य परिणामकरत्वात्। तं च निगूढ़रसं प्रतीच्यपरीक्षकाः 'इन्सुलीन[२]'संज्ञया व्यपदिशन्ति, प्रयुञ्जते च पृथक्कृत्य त्वाचमार्गेण मधुमेहरोगे, तदापूरणेन तत्प्रतीकारः[३] सुलभः—इति।

[ १६१ चित्रम् ]

## अग्न्याशयस्य सूक्ष्म-निर्माणम्।



[ क-क—आग्नेयरसस्रावी कोषाणुपुञ्जः—मध्ये रससञ्चयाय शून्यस्थानयुतः। अ—अग्निद्वीपः। स—आग्नेयरसस्य सूक्ष्मस्रोतः। ]

१। Islets of Langerhans. २। Insulin. ३। प्रतीकारश्चायं यावद् 'इन्सुलीन' रसः प्रयुज्यते तावदेव। स च रसः सद्योमारितपशोरग्न्याशयादाकृष्यते निपुणैः।

## अथ यकृत् ।

**यकृत्**[1] नाम बृहत्तमः प्रधानतमश्च घनकोमलग्रन्थिः ( ईषद्गर्भ आशयो वा ) शरीरे ( १६१।१६२ चित्रयोः ) । स उदरगुहायां दक्षिणानुपार्श्विकदेशे प्रच्छन्नो भूम्ना, प्रसृतश्च स्पर्शनयोग्यश्च हृदयाधरिकदेशे ( क्वचिद् वामानुपार्श्विकदेशे च ) स्तोकेन ।

सोऽयम् बहिःस्निग्ध-मसृण-संहताकृतिस्त्रिकोणप्रायो ग्रन्थिर्महायतनः पक्वतालफलवर्णश्च । आच्छाद्यते चासौ बहिर्भागे प्रायः सर्वत्र प्रतनुना उदर्याख्यकलाभागेन अन्यत्र पृष्ठैकदेशात् ( १६२।१६३ चित्रयोः ) । तस्य च द्विगुणितकलानिर्मितस्य कोषस्य याकृतकोष इति संज्ञा । दैर्घ्यं तु यकृतो वितस्तिप्रमाणं प्रायेण । प्रस्थं मध्ये अष्टांगुलम् । स्थूलत्वञ्च तत्र तावदेव । प्रान्तेषु तु तत् क्रमशस्तनूकृतत्वात् न्यूनम् । गुरुत्वपरिमाणं तु यकृतः पुंशरीरे—शतोत्तरविंशतितोलकादारभ्य सार्धशततोलकपर्यन्तं भवति । स्त्रीशरीरे तु शतोत्तरविंशतितोलकमेव किञ्चित्न्यूनं वा । तदायतनस्य ह्रासवृद्धी तु रोगकृते ।

तस्य द्वे तले—ऊर्ध्वतलमधस्तलञ्च । द्वे धारे—पुरोधारा, पश्चिमधारा च । द्वे पिण्डे—दक्षिणं वामञ्च । द्वे पिण्डिके—दीर्घपिण्डिका, चतुरस्रपिण्डिका च । पञ्च सीताः, पञ्च प्रबन्धन्यः, पञ्च आशयसम्पर्काश्च । तत्र तलद्वयं यथा—

**ऊर्ध्वतलं** कूर्मपृष्ठाकारं महाप्राचीरोदरस्थं, तद् दक्षिणाभिमुखं पुरोविलम्बि च बाहुल्येन । पुरस्ताच्च तदाच्छादन्यः षट् सप्त वा अधराः पर्शुकोपपर्शुकाः पर्शुकान्तरालाभिः पेशीभिरापूरिताः । दृश्यते च तत्रैव मध्ये यकृत्प्रबन्धनी नाम कलामयी बन्धनी, या वामदक्षिणयोः पिण्डयोर्यकृद् विभजते,, धारयति च गर्भस्थशिशोः संबाहिनीं नाम महासिरां वर्णितपूर्वाम् ।

**अधस्तलं** तु तस्य कोरोदरं वाम-पश्चिमाभिमुखं विशेषादुच्चावचञ्च, तत्र सीताबाहुल्यादाशयसम्पर्काच्च । पञ्च हि सीताः पिण्डविभजन्य इहैवाग्रे वक्ष्यमाणाः । आशयाश्च तद्व्यतिकरेण दृश्याः पञ्चैव—आमाशयो, ग्रहणी, बृहदन्त्रस्य याकृतकोणः, साधिवृक्को दक्षिणवृक्कः, पित्तकोषश्चेति ।

धाराद्वयं च तस्य—पुरस्तात्, पश्चिमतश्च दृश्यम् । तत्र—

---

१ । यकृत्—Liver.

[ १६२ चित्रम् ]

## यकृत् ( सम्मुखतो दृष्टम् )




[ १।२—यकृत्पार्श्विकी प्रबन्धनी—दक्षिणा वामा च । ३—दक्षिणपिण्डम् । ४—वामपिण्डम् । ]

**पुरोधारा** दक्षिणानुपार्श्विकदेशस्थानां पर्शुकोपपर्शुकानामधोधारानुवर्त्तिनी तनुपत्राकारा । स्तोकेन खण्डिता च सा द्वयोरंशयोः पित्तकोषधारणाय दक्षिणतः, यकृत्प्रबन्धनीसंयोगाय च मध्यतः ( १६१ चित्रम् ) ।

**पश्चिमधारा** पुनर्यकृतः स्थूला गभीरखाताङ्किता च अधरमहासिराधारणाय ।

पिण्डद्वयं तु यकृन्निर्मापकम् । तत्र—

**दक्षिणपिण्डं**[1] बृहत्तरं दक्षिणानुपार्श्विकप्रदेशे पर्शुकादिभिः प्रच्छन्नं, वामपिण्डस्य षड्गुणायतनम् । तस्यैव वाम-पश्चिमसीमायामधरमहासिराधरं खातम् । अधस्तले च चत्वारि आशयस्पर्शलक्ष्माणि—अधिवृक्क-वृक्क-ग्रहणी-बृहदन्त्र-स्पर्शनसम्भवानि ।

**वामपिण्ड**[2] लघुतरं, धारायां वटपत्राकारं, हृदयाधरिकप्रदेशस्थं च । तद् आमाशयमंशेन छादयति । तस्याधस्तले दृश्यमामाशयस्य अन्ननलिकासंयुक्तस्य स्पर्शकृतं खातम् ईषद्गभीरम् ।

---

१ । दक्षिणपिण्डम्—Right Lobe. २ । वामपिण्डम्—Left Lobe.

[ १६३ चित्रम् ]

यकृत् ( पश्चिमतो दृष्टम् )




[ १। उदर्याऽनावृतः प्रदेशः। २। अधिवृक्कस्पर्शजं खातम्। ३।४। यकृद्बन्धन्याः पूर्वापरभागौ। ५। वृक्कस्पर्शजं खातम्। ६। ग्रहणीस्पर्शजं खातम्। ७। बृहदन्त्रकोणस्पर्शजं खातम्। ८। चतुरस्र-पिण्डिका। ९। संवाहिनीसिरावशेषः। १०। पिण्डकूटम्। ११। पिण्डयोजनिका। १२। वामपिण्डम्। १३। आमाशयस्पर्शजं खातम्। १४। अन्ननलिकास्पर्शजं खातम्। ]

पिण्डिकाद्वयं तु यकृतः—

**चतुरस्रपिण्डिका**[1], **दीर्घपिण्डिका**[2] चेति। ते यकृत्तले पिण्डद्वय-स्यान्तराले पूर्वापरक्रमेणाऽवतिष्ठेते। तयोराद्यायाः पुरो दक्षिणतश्च दृश्यः पित्तकोषः। द्वितीयायास्तु पश्चाद् दक्षिणतो दृश्या अधरा महासिरा गभीरखात-प्रविष्टा। पिण्डिकाद्वयान्तराले च दृश्या द्वारसीता प्रतीहारिणीसंज्ञक-महा-सिरादिधरा।

लक्षणीयश्चात्र द्वारसीतायाः पुरस्तात् दक्षिणपिण्डस्य चतुरस्रपिण्डिकया संयोजनोऽवयवः—**पिण्डयोजनिका**[3] नाम।

---

१। चतुरस्रपिण्डिका—Quadrate Lobe. २। दीर्घपिण्डिका—Caudate or Spigelian Lobe. ३। पिण्डयोजनिका—Caudate Process.

**सीतापञ्चकं** पुनर्यकृत्पश्चिमतले स्फुटं द्रश्यं H इत्यक्षरवदवस्थितम्। तत्र यकृद्द्वारगता मध्यस्थ-सीता—**द्वारसीता**[1] नाम। तामाश्रित्य प्रविशति यकृदभ्यन्तरे प्रतीहारिणी महासिरा। 'याकृती'-संज्ञा नाड़ी धमनी च निर्गच्छत-स्तेनैव द्वारेण। पित्तस्रोतोनलिके च तत्र रसायनीभिः परिवृते। सोऽयं सिरा-धमन्यादिसङ्घातः 'उदर्याख्य'-महाकलायाः स्तरद्वयेन याकृतकलाकोषेण च समन्तात् परिवृतो **यकृद्वृन्तं** नाम।

प्रान्तयोस्तु द्वारसीतायाः द्वे सीते—वामा दक्षिणा चेति। तयोर्वामा सीता सुदीर्घेण पूर्वांशेन पुरस्तले प्रसृता यकृत्पिण्डद्वयस्य विभजनी, तस्याः वामपूर्वेति, दीर्घसीतेति वा संज्ञा। पश्चिमांशेन पश्चात्प्रसृतस्तु वामसीतांशः गर्भस्थशिशोः सेतुसिराधारणः, तस्य वामपश्चिमेति, सेतुसीतेति वा संज्ञा। दक्षिणा पुनः सीता मध्ये नातिगभीरा। सा पूर्वार्धेन पित्तकोषधारणं नातिगभीरं खातम्, पश्चार्धेन च अधरमहासिराधरं गभीरखातमारचयति। तयोरंशयोः क्रमाद् दक्षिणपूर्वा, दक्षिणपश्चिमा चेति संज्ञा (१६२ चित्रम्)।

**यकृत्-प्रबन्धन्यः**[2] पुनः पञ्च कलामय्यः। तासां दीर्घा (मध्यमा वा) प्रबन्धनी पुरस्ताद् यकृत्पिण्डद्वयविभजनी। पार्श्विकप्रबन्धन्यौ च तत्संलग्ने तत्कार्ये उभयतः, तिस्रश्च ताः पुरस्तात् परस्परसंयुक्ताः। पश्चिमप्रबन्धनी—महाप्राचीरया यकृत्पृष्ठं सम्बध्नाति। गर्भस्थशिशोः संवाहिनीसिराया अवशेषधरा त्वपरा, सा दीर्घायाः प्रबन्धन्या अनुवृत्तिरूपा पुरस्तादधश्च रज्जुरूपेण तां प्रबन्धनीं नाभि-मूलान्तं प्रबध्नाति, तस्या रज्जुप्रबन्धनीति संज्ञा।

[आशयादिसम्पर्कास्तु यकृतो व्याख्याताः। पित्तकोषः पृथगिहैव व्याख्यास्यते]।

**सूक्ष्मनिर्माणं** पुनर्यकृतः क्षुद्राभिः कन्दिकाभिः सिरा-धमनी-जालकानु-विद्धाभिः (१६३।१६४ चित्रयोः)। प्रतीहारिणी हि महासिरा शाखा-प्रशाखानु-शाखादिभिर्यकृन्मध्ये प्रसृता चरमैः शाखाप्रतानैः संवेष्टयति तास्ताः कन्दिकाः। तेषाञ्च सिराप्रतानानां कन्दिकान्तरालाः[3] सिराः—इति संज्ञा। याकृती धमनी च

---

१। द्वारसीता—Porta Hepatis or Transverse Fissure. २। यकृत्-प्रबन्धन्यः—Ligaments of the Liver. ३। कन्दिकान्तरालाः सिरा—Inter-lobular Veins.

[ १६४ चित्रम् ]

## यकृतः सूक्ष्म-निर्माणम् ।

प्रतीहारिणीमहासिरायाः कन्दिकान्तराला शाखा ( विदार्य दर्शिता ) ।

( तत्र अणुवीक्षणयन्त्रसहायेन चक्षुषा लक्षणीया विशेषाः )




[ १६५ चित्रम् ]

## यकृत्कन्दिका-संस्थानम्

( अणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यम् )



तथैव विभज्यते चरमैः शाखाप्रतानैः। तेषां प्रतानानां कन्दिकान्तराला धमन्यः इति संज्ञा। केन्द्रेषु पुनः कन्दिकानां दृश्यन्ते मुखानि सूक्ष्माणां याकृतसिराणाम्। ताश्च सिराः कन्दिकाकेन्द्रिण्यो[1] नाम। तासां पुञ्जीभावात् सम्भवन्ति याकृत्यः सिराः क्रमशः स्थूलतराः। तासामधरमहासिरायां प्रवेशः।

यकृत्कन्दिकाः[2] पुनः सूक्ष्माणां यकृद्वस्तुनिर्मापककोषाणूनां[3] संघातमय्यः। पित्तस्रोतांसि[4] तु सूक्ष्मतमानि, कन्दिकान्तर्वर्त्तिभ्यः सिराधमनी-जालकेभ्यः सम्भूतानि, तत्सहचराणि च। तेषां परस्परसम्मेलनात् सम्भवन्तितनूनि पित्त-स्रोतांसि, तानि कन्दिकान्तरालानां सिराधमनीनां सहचराणि। तेषां क्रमशः परस्परसंयोगात् सम्पद्यन्ते स्थूलानि पित्तस्रोतांसि। तेषां प्रधानयोर्याकृतपित्त-स्रोतसोः परिणामः। ते यकृद्द्वारसीतायां स्फुटं दृश्ये। तयोश्चैकीभावात् सम्भूता याकृती नाम पित्तनलिका। सा च 'कौषिकी'-संज्ञकनलिकया ग्रहणीपार्श्वे मिलिता साधारणीं पित्तनलिकां निर्मिमीते। तस्या मुखं ग्रहण्यन्तर्दृश्यम्।

**कार्याणि तु यकृतः** पञ्चविधानि—(१) अन्नरसस्य विविधभुक्तजस्य शोधनं, यथार्हपरिणमनं च। (२) पित्तनिर्माणम्। (३) 'मधुरक'संरक्षणम्। (४) रक्तस्य रञ्जकवस्तुनिर्माणम्। (५) रक्तस्य स्कन्दनप्रदवस्तुनिर्माणञ्च—इति प्रतीच्याः। ओदन-शर्करादिसम्भवो हि मधुरको[5] नाम मधुरवस्तुविशेषो याकृत-कोषाणुकेषु किञ्चिद्विपरिणतस्तत्रैव संरक्ष्यते, मांसादिधातूनां (सति धातुक्षये) व्यवहाराय। स हि स्वभावाद् यकृति मांसधातौ चावतिष्ठते, परिणमति च शरीर-प्रचेष्टनेन। मूत्रस्य प्रधानांशश्च आमिषादिपरिणामजो[6] यकृत एव सम्भवति। शोणितस्य शोणिमप्रदं रञ्जकपित्तं[7] च यकृत्प्लीह्नोः सम्भवतीति प्राञ्चः[8]।

### अथ पित्तकोषः।

**पित्तकोषः**[9] नाम क्षुद्रतुम्बीसमाकार ऊर्ध्वमुखः कोषो यकृदधस्तले संलग्नः (१६५ चित्रम्)। तस्य तलभागो यकृत्-पुरोधारास्पर्शी नवमोप-पर्शुकापुरोभागस्य कोणे वर्त्तते, स विदारितोदरे स्तोकेन पुरस्ताद् दृश्यः।

---

१। कन्दिकाकेन्द्रिण्यः सिराः—Intra-lobular Veins. २। यकृत्कन्दिकाः—Liver-lobules. ३। यकृद्वस्तुनिर्मापककोषाणवः—Liver-cells. ४। पित्तस्रोतांसि—Bile-capillaries. ५। मधुरकः—Glucose. ६। Urea. ७। रञ्जकपित्तम्—Haemoglobin or Haemoglobinogin. ८। अधुना (ई० १९२६ वर्षात्) पाण्डुरोगे यकृद्भक्षणेन रक्तनिर्माणं भवतीत्याविष्कृतं प्रतीच्यैरपि। तेषु केचित् (e. g. Wright) यकृतो रक्तकणिकानिर्मापकत्वमपि स्वीकुर्वते। प्लीह्नि रक्तकणिकानिर्माणं तु पुराऽपि स्वीकृतमेव तैः। ९। पित्तकोषः—Gall-bladder.

अनुभवयोग्यश्चासौ पित्तकोषस्य व्रणशोथे, विवृद्धौ च। ऊर्ध्वभागस्तु तस्य मरालग्रीवावद् वक्रीभूतमुखो यकृद्द्वारसीतां यावत् प्रसृतः। तत्र च नलिका-रूपेण परिणतमस्य मुखं प्रतिहारिणीं महासिरामनुवर्त्तते, गच्छति चाधोमुखं ग्रहणीप्रवेशाय।

तस्य दैर्घ्यं पञ्चषांगुलपरिमाणम्, प्रस्थं मूले द्वित्रांगुलं, मुखे तु सार्धांगुल-मंगुलमात्रं वा। स्वाभाविकमायतनं त्रिचतुरतोलकपरिमाणस्य पित्तस्य धारण-क्षमम्। निर्मीयते चासौ स्नायुतन्तुभूयिष्ठैः स्वतन्त्रमांसतन्तुभिरुदर्यकलाच्छादितैः। अभ्यन्तरतश्च तदावरणी कला सर्पनिर्मोकवद् विचित्रवलीकदम्बकाचिता। सेयं पित्तकोषनलिका[1] (कौषिकी नलिका वा) शरेषीकापरिणाहा द्वित्रांगुलदीर्घा याकृत्या पित्तनलिकया[2]ऽनुबध्यते ग्रहणीपृष्ठतः। मिलितयोश्च नलिकयोः

[ १६६ चित्रम् ] पित्तकोषः पित्तनलिकासहितः।

( विदार्य दर्शितः— स्वाभाविकायतनः )




१। पित्तकोषनलिका—Cystic Duct. २। याकृती पित्तनलिका—Hepatic Duct

पित्तप्रसेकः इति साधारणी पित्तनलिकेति[1] वा संज्ञा। अवस्थानवैचित्र्याच्च यकृन्निःस्रुतस्य पित्तस्य पित्तकोषे सञ्चयः, सद्यःस्रुतिर्वा यथाप्रयोजनं ग्रहण्याम्। याकृतपित्तविकृतौ पित्तकोषस्य व्रणशोथे वा पित्तरोचनाश्च[2] बहुधा तत्र सम्भवन्ति मानुषाणां, गवां पित्तेषु रोचनावत्। स च रोगः शूल-कामलादिकरः सिद्धान्त-निदाने वर्णितः।

**पित्तस्रावस्य परिमाणं** तु पुंसामहोरात्रेण षट्पलादारभ्य दशपलपर्यन्तं भवति प्रायः। स्त्रीणान्तु—तत् पलमात्रेण न्यूनम्। प्रयोजनं पुनः पित्तस्रावस्य स्वकीयक्षारत्वेन आमाशयाद् ग्रहण्यामागतस्य अम्लीभूतभुक्तस्य अम्लत्वनिवारणं, स्नेहानां क्षारमिश्रणेन सुपचत्वसम्पादनं, अन्नविषनिष्कासनञ्च। न तु साक्षादन्न-पाचकत्वमस्य पित्तस्य नीलपीतादिवर्णस्य[3], मलभूतत्वात्।

### अथ प्लीहा।

**प्लीहा**[4] नाम निःस्रोतस्कग्रन्थिषु बृहत्तमो मुख्यो ग्रन्थिः (१६७ चित्रम्) उदरगुहायां वामानुपार्श्विकभागे प्रच्छन्नः। स प्रायेण सप्ताष्टांगुलदीर्घः, चतुरंगुलप्रस्थः, द्व्यंगुलस्थूलः, किञ्चिद्विवृत्तकायः, स्थूलकपालिकाकारः पक्वजम्बूफलश्यामलश्च। तस्य गुरुत्वपरिमाणं प्रायेण पञ्चदशतोलकमात्रम्। ज्वरादिहेतोस्तु तस्य आयतनं गुरुत्वञ्च क्रमाद् विवर्धते। प्लीहोदरे[5] पुनः स एवाभिप्रवृद्ध आ-वंक्षणं प्रसृतः प्रायः समग्रामपि उदरगुहामधिकरोति।

एष चास्य प्रकृतिस्थस्य व्यतिकरः। पुरस्ताद् दक्षिणतश्च प्लीहः—आमाशयस्कन्धः। पश्चाद् ऊर्ध्वञ्च महाप्राचीरा नाम पेशी नवम-दशमैकादशवाम-पर्शुकाभिः सम्बद्धा। अन्तःसीम्नि चास्य खातं प्लीहद्वारम्[6] नाम। तत्र दृश्या अभिप्लीहिका धमनी, प्लैहिकी सिरा च। तदधस्ताद् अग्न्याशयपुच्छम्। अधोधारा त्वस्य त्रिकोणप्राया बृहदन्त्रस्य प्लैहिकं कोणं स्पृशति।

सोऽयं सर्वतोऽपि उदर्याख्यकलयाऽच्छादितः प्लीहा तिसृभिः कलामय-बन्धनीभिर्यथास्थानमभिरक्ष्यते। तासामाद्या प्लीहामाशयिका[7] नाम बन्धनी आमाशयस्कन्धेन प्लीहः प्रबन्धनी। द्वितीया प्राचीरबन्धनी[8] प्लीहप्राचीरिका

---

१। साधारणी पित्तनलिका—Common Bile-Duct. २। पित्तरोचना—Gall-stone. ३। उक्तं चैतदभिप्रायेणैव चरके—'किट्टमन्नस्य विण्मूत्रं, रसस्य च कफः, असृजः पित्तम्' इत्यादि। धातुभूतं पित्तं तु पाचकादिगुणसम्पन्नमन्यत्। ४। प्लीहा—Spleen. ५। प्लीहोदरञ्च कालज्वरादौ दृश्यं प्रायः। ६। प्लीहद्वारम्—Hilum of Spleen. ७। प्लीहामाशयिका बन्धनी—Gastro-splenic Ligament. ८। प्राचीरबन्धनी—Phreno-splenic Ligament.

[ १६७ चित्रम् ]

## प्लीहा (परावृत्य दर्शितः)।




[ १६८ चित्रम् ] **प्लीहः सूक्ष्मनिर्माणम्।**




**चित्रव्याख्या**—❀ धमनीयं प्लीहवस्तुमध्ये विस्फारं गतेति लक्षणीयम्। † सिरा-धमन्योः शाखा-प्रशाखाभिर्जालकनिर्माणं प्लीहवस्तुनि लक्ष्यम्, अन्तरालेषु च जालकानामीषच्छुभ्राः 'प्लीहवालुकाः'।

नाम, सा महाप्राचीरापार्श्वेन प्रवध्नाति प्लीहानम् । तृतीया वृक्कप्लीहिका[1] नाम, या प्लीह्नो वामवृक्केण प्रबन्धनी ।

सिरा-धमनी-रसायन्यः पुनः प्लीह्नो यथास्थानं वर्णितपूर्वाः । नाड्यस्तु—भूम्ना मणिपूरचक्रतः सम्भूताः, प्राणदाख्यनाड़ीप्रभवाश्च ।

**सूक्ष्मनिर्माणं** तु प्लीह्नः विनाप्यणुवीक्षणयन्त्रेण कथञ्चिद् दृश्यं सामान्यतः, विशेषतस्तु अणुवीक्षणयन्त्रसहायेन चक्षुषा । तत् चेदृशम् । अभिप्लीहिका धमनी प्लीह्नि प्रविष्टा स्फारायतना भवति, प्रसरति च सूक्ष्माभिः शाखाप्रशाखाभिः । ताश्च सूक्ष्मेषु जालकेषु विभज्यन्ते, जालकानि च विशिष्टकोषाणुसंघातमयानि प्लीहवस्तूनि संवेष्ट्य स्थितानि प्लीहाभ्यन्तरं मधुचक्रवद् विभजन्ते । तेषु च जालकेषु शोणितस्य रक्तकणिकाः श्वेतकणिकाश्च प्राचुर्येणोपलभ्यन्ते । यथा च—रसग्रन्थिषु दृश्यन्ते वालुकाकणवत् कणकाः तद्वदिहापि 'प्लीहवालुकाः' नाम कणकविशेषाः स्थूलतराः । किञ्च, मधुचक्रवन्निर्माणवैशेष्यात् न स्थिरं प्लीहायतनं जीवच्छरीरे । तद्धि ह्रसति वर्धते च नियतं काले काले रक्तप्रवाहस्य अल्पत्वाद् भूरित्वाद् वा । अत एव यावदायतनः प्लीहा मृतकशरीरे, नाऽसौ तथा जीवच्छरीरे । वस्तुतस्तु स्वस्थे जीवच्छरीरे चतुर्गुणायतनः सः, मृतकशरीरस्थप्लीहापेक्षया--इति विशेषविदः । जीर्णविषमज्वरादौ तु स भृशं वर्धते, आच्छादयति च कदाचित् सर्वानप्युदर्याशयान् ।

**प्लीह्नः कार्याणि** तु इत्थमुपदिशन्ति परीक्षकाः । (१) रक्तकणिकानां श्वेतकणिकानां च यथाप्रयोजनं निर्माणम् । (२) तासां सञ्चयनञ्च स्ववस्तुनि सर्वकायरक्तसंवर्धनाय । यथा हि—दुर्गान्तःसमेताः सेनाः काले काले निष्क्रम्य दुर्गबहिःस्थसैनिकानां साहाय्यं विदधते सति प्रयोजने, तथैव प्लीहसञ्चिताः श्वेतरक्तकणिकाः बहिःस्थानां तादृशकणिकानां साहाय्यकारिण्यः । (३) विध्वंसनञ्च जीर्णानां श्वेतरक्तकणिकानाम् तत्रैव । (४) व्यापादनञ्च रक्तप्रवाहप्रविष्टानां रोगकरजीवाणूनाम् ।

सुश्रुताद्याचार्यास्तु शोणितस्य रक्तवर्णप्रदं रञ्जकपित्तं प्लीह-यकृतोः सम्भवतीत्याहुः । तच्च न विरुध्यते पूर्वोक्तसिद्धान्तेन ।

इदञ्चात्र स्मर्तव्यम् । प्लीह्नि समुत्पन्नाः श्वेत-रक्तकणिकाः प्लैहिकीसंज्ञया सिरया प्रतीहारिणीं महासिरां प्रविशन्ति, ततो यकृदभ्यन्तरम्, ततश्च अधरां महासिराम्, ततश्च हृदयम् ।

---

१ । वृक्क-प्लीहिका प्रबन्धनी—Lieno-renal Ligament.

# चतुर्थोऽध्यायः।

अथातो मूत्र-गर्भ-प्रजननयन्त्र[१]वर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु मूत्रोत्पादन-निष्कासन-यन्त्राणि मूत्रणयन्त्राणीत्युच्यन्ते। शुक्रार्त्तव-धारण-निरसन-गर्भोत्पादन-यन्त्राणि तु प्रजननयन्त्राणि। तेषां सम्बन्धोऽतिघनिष्ठः, परस्पर-सन्निकर्षात्, परस्परापेक्षित्वाच्च।

तत्र बृक्कौ, गवीन्यौ, वस्तिर्मूत्रप्रसेकश्चेति मूत्रनिर्माण-निरसनयन्त्राणि। प्रजननयन्त्राणि तु पुंसां शिश्नः, वृषणौ, शुक्रवाहिन्यौ, शुक्रप्रपिके चेति, तत्पारिपार्श्विकश्च पौरुषग्रन्थिः शिश्नमूलिकग्रन्थिद्वयसहितः। स्त्रीणां प्रजननयन्त्राणि पुनः—योनिः, गर्भाशयः, बीजकोषौ, बीजवाहिन्यौ चेति, तत्पारिपार्श्विकञ्च योनिद्वारिकं ग्रन्थिद्वयम्।

अथ बृक्कौ गवीन्यौ च।

**बृक्कौ**[२] नाम—महाशिम्बीबीजसमाकारे मुख्ये मूत्रनिर्माणयन्त्रे स्त्रीपुंसयोस्तुल्ये (१६६ चित्रम्)। तयोरवस्थानमुदरगुहायां कटिप्रदेशे पृष्ठवंशमुभयत एकादश-द्वादशपर्शुकयोरुपकण्ठे। तत्र दक्षिणबृक्कस्य स्थितिर्वामबृक्कात् स्तोकेन निम्नतरा, दक्षिणपार्श्वे यकृदवस्थानात्। उदर्या कला च बृक्कयोः पुरःस्थैव (न परितश्छादनी)।

एकैकस्य च बृक्कस्य धनुर्वक्रा बहिर्धारा कटिपार्श्वाभिमुखी, सा कटित्रिकोणाख्येन पेश्यन्तरालेन[३] स्पर्शनयोग्या। अन्तर्धारा तु मध्ये खाताङ्किता पृष्ठवंशाभिमुखी च। तच्च खातं बृक्कद्वारं[४] नाम। तत् संश्रित्य प्रविशन्ति अनुबृक्का नाम धमनी पञ्चषासु शाखासु विभक्ता, नाड्यश्च बृक्कान्तःप्रसर्पिण्यः। निर्गच्छन्ति च तेनैव द्वारेण बृक्कप्रभवाः सिरा रसायन्यो गवीनी च।

(व्यतिकरः) उदरगुहायां पृष्ठवंशमुभयतो मेदःपुञ्जपरिवृतयोर्बृक्कयोः आशयान्तरसम्पर्कः उक्तपूर्वः यकृत्-प्लीह वर्णने (१६२।१६७ चित्रयोः)। स्पृशति हि दक्षिणबृक्कः पुरस्ताद् यकृद्दक्षिणपिण्डं, ग्रहण्या अधरभागम्, आरोहि बृहदन्त्रञ्च। वामबृक्कस्तु प्लीहानम्, अग्न्याशयपुच्छं, स्तोकेन आमाशयम्, अवरोहि बृहदन्त्रं चेति। पश्चिमतस्तु उभावपि स्पृशतः एकादश-द्वादशाख्यं पर्शुकाद्वयं, महाप्राचीराया मूलद्वयं, कटिलम्बिन्यौ, कटिचतुरस्रे च पेश्यौ।

---

१। मूत्र-गर्भ-प्रजनन-यन्त्राणि—Uro-genital Apparatus. २। बृक्कौ—Kidneys. ३। द्रष्टव्यं पेशीखण्डे २६४ पृष्ठम्। ४। बृक्कद्वारम्—Hilum of Kidney.

[ १६६ चित्रम् ]

## वामवृक्कः ( अनुलम्बच्छेदेन दर्शितः ) ।




**अधिवृक्कौ**[1] नाम निःस्रोतस्कौ ग्रन्थी त्रिकोणप्रायौ वृक्कशिखरयोः सम्बद्धौ ( १७० चित्रम् ) । तयोर्दक्षिणस्य यकृदधःप्रदेशेन, वामस्य च प्लीहाधः-प्रदेशेन स्पर्शः । तयोर्निर्माणादिवर्णनं निःस्रोतस्कग्रन्थिवर्णने करिष्यामः ।

**निर्माणं** पुनर्वृक्कयोरनुलम्बच्छेदेन स्फुटं दृश्यं स्थूलतः । सूक्ष्म-निर्माणन्तु अणुवीक्षणयन्त्रसहायेनैव चक्षुषा ।

तत्र वृक्कच्छेदेन स्थूलतो लक्षणीयानि—वृक्कवस्तु, वृक्कद्वारं, वृक्कालिन्दः, वृक्ककोषश्चेति ( १६६ चित्रम् ) । तत्र —

( १ ) वृक्कवस्तु वृक्कस्य स्थूलोपादानभूतम् । तद् द्विविधम्,—बहिर्वस्तु अन्तर्वस्तु चेति । तत्र—( क ) वहिर्वस्तु[2] वृक्कस्य बाह्यपरिधिभागनिर्मापकम् । ( ख ) अन्तर्वस्तु[3] अभ्यन्तरतो रेखावल्यङ्कितं, वृक्कद्वाराभिमुखीभिः शिखरिकाभि-रुपलक्षितञ्च । शिखरिकाणां स्थूलमूलानि वहिर्वस्तुप्रतिबद्धानि । अग्राणि तु पुष्पमुकुलाकाराणि वृक्कालिन्दाख्ये शून्यभागे दृश्यानि ।

---

१ । अधिवृक्कौ—Adrenals or Suprarenal Bodies. २ । वहिर्वस्तु—Cortical Matter.
३ । अन्तर्वस्तु—Medullary or Pyramidal matter.

[ १७० चित्रम् ]

## बृक्कद्वयस्य गवीन्योश्च व्यतिकरः ।

( उदरं विदार्य अन्त्राणामपसारणेन दर्शितः )




[ अधि०—अधिवृक्कः । ग—गवीनी । १ । महाप्राचीरिका धमनी ( कर्त्तितमूला ) । २ । उत्तरान्त्रिकी धमनी । ३ । अधरान्त्रिकी धमनी । ४ । अनुवृक्के सिरे धमन्यौ च । ५ । अधरा महासिरा । ६ । महाधमन्याश्चरम-विभागस्थानम् । ७ । अनुत्रिक्यिौ सिरा धमनी च । ८ । वस्तिबन्धनं रज्जुकात्रयम् । ९ । कटिप्रावरणी । १० । कटिचतुरस्रा पेशी । ११ । कटिलम्बिनी दीर्घा पेशी । १२ । वस्तिशीर्षम् ।

(२) बृक्कद्वारं[1] नाम बृक्कान्तःपरिधिस्थं खातं, यत्र संयुज्यते गवीनीशीर्षम् ।

(३) बृक्कालिन्दः[2], ( गवीनीशीर्षकं वा ) नाम बृक्कद्वारे स्फारीभूयावस्थितो गवीन्याः शीर्षभागः बृक्ककोषाख्यस्थूलकलया परिवृतः । तत्र सञ्चीयन्ते बृक्कशिखरिकाग्रैः शनैः शनैर्निःस्नुता मूत्रविन्दवः । दृश्यन्ते च तत्र बृक्कशिखरिकाणां दश द्वादश वा मुकुलाग्राणि, तानि कलामयीभिः आलबालिकाभिर्वेष्टितानि । तासां च प्राचीराणि गवीनीप्राचीरानुबन्धीनि ( १६६ चित्रम् ) ।

(४) बृक्ककोषः[3] नाम—एकैकं बृक्कमभितः संलग्नं स्थूलकलामयं प्रावरणम् । कला च सा बृक्कद्वारोपकण्ठे समूहिता बृक्कद्वारमवगाह्य बृक्कालिन्दस्य परिसरं निर्मिमीते, ततश्च प्रत्यावृत्ता गवीनीशीर्षं प्रावृणोति ।

**सूक्ष्मनिर्माणं** तु बृक्कस्याऽतिविचित्रम् । बृक्कपरिधिस्थं हि बहिर्वस्तु मूत्रनिर्मापकैः सूक्ष्मैर्वर्त्तुलप्रायैर्जालकमयैः यन्त्रकैरेव भूम्ना निर्मितम् । तेषां मूत्रोत्सिका[4] इति संज्ञा, उत्सवद् अजस्रं वारिप्रभवत्वात् । नवतिसंख्याश्च ता अङ्गुलमात्रे प्रदेशे प्रायः । ताः ऋजुकाख्यानां सूक्ष्मसिरा-धमनीनामन्तरालेषु सूक्ष्मतरशाखाधमनीभिरालम्बिताः फलगुच्छवद् अवतिष्ठन्ते ( १७१ चित्रम् ) ।

एकैकाञ्च उत्सिकां प्रविशति एकैका सूक्ष्मा धमनी गुच्छमुखी । तां च वर्त्तुलप्राये गुच्छे परिणतां प्रावृणोति विचित्रनिर्माणं कलामयं पुटकम् उत्सिकापुटकं[5] नाम । पुटकान्तश्च शनैः शनैः सूक्ष्मकणैः क्षरति शोणितस्य त्याज्यभाग आप्यो मूत्रं नाम । तद् उत्सिकापुटकनिर्गतेन सूक्ष्मेण मूत्रवहस्रोतसा बृक्कान्तर्नीयते । उत्सिकापुटकेभ्यो निर्गतानि च मूत्रस्रोतांसि क्षुद्रान्त्रवत् प्रसृतानि सर्पगत्या केन्द्राभिमुखं प्रवर्त्तन्ते । एवञ्च प्रतिस्रोतो दृश्याश्चत्वारो भागाः— (१) आद्यकुण्डलिकाभागः[6], (२) पाशभागः[7], ( ३ ) अन्त्यकुण्डलिकाभागः[8], ( ४ ) ऋजुभागः[9] चेति । परस्परपार्श्वस्थानि च ऋजुस्रोतांसि बृक्कशिखरिकाणां निर्माणाय कल्पन्ते । तेषामन्त्रवत् प्रसर्पणाद् आन्त्राणीति[10] संज्ञा[11] प्राचाम् ।

---

१ । बृक्कद्वारम्—Hilum of Kidney. २ । बृक्कालिन्दः, गवीनीशीर्षकं वा—Pelvis of Kidney. ३ । बृक्ककोषः—Renal Capsule. ४ । मूत्रोत्सिका—Glomerulus. ५ । उत्सिकापुटकं—Bowmans' Capsule. ६ । आद्य-कुण्डलिकाभागः — First Convoluted Tubule. ७ । पाशभागः — Henle's Loop. ८ । अन्त्य-कुण्डलिकाभागः — Second Convoluted Tubule. ९ । ऋजुभागः—Straight Tubule. १० । आन्त्राणि—Convoluted Tubules. अन्त्रवत् प्रसर्पन्तीति आन्त्राणि । सादृश्ये संज्ञायामण् । ११ । आथर्वण सूक्तञ्चात्र उपोद्घातस्य ७५ पृष्ठे द्रष्टव्यम् ।

एकैकस्याश्च उत्सिकाया मूत्रभागोत्सर्गावशिष्टं रक्तं विनिवर्त्तते सूक्ष्मसिरया ततो निर्गतया। एवमुत्सिकाभ्यो निःसृताः सूक्ष्मसिराः परस्परमिलिताः

[ १७१ चित्रम् ]

## बृक्कस्य सूक्ष्म-निर्माणम्।

( अणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यम् )




[ ध १—उत्सिकाप्रवेशिनी 'गुच्छमुखी' धमनी। स १—उत्सिकाविनिगता सिरा। स० जा०—सिराजालकम्। स २—ऋजुका सिरा। ध २—ऋजुका धमनी। ध—स्थूलतरा धमनी। सि — स्थूलतरा सिरा। जा०— सिराधमनीजालकम्। १—उत्सिकापुटकान्निर्गत-मान्त्राख्यमूत्रस्रोतसो मुखम्। २—तस्यैव आद्यकुण्डलिका। ३-४-५—तस्यैव पाशाकारो भागः। ६-७—तस्यैव अन्त्यकुण्डलिका। ८—बृक्कान्तरीयम् ऋजु मूत्रस्रोतः। ९—बृक्कान्तरीयं चरमं स्थूलतरं मूत्रस्रोतः। ]

धमनीसहचरीः सिराः प्रविशन्ति। ता अपि मूत्रवहस्रोतसां वृक्ककेन्द्राभिमुखाणामनुवर्त्तिन्यः क्रमात् सङ्घीभूय वृक्कप्रभवासु स्थूलसिरासु परिणमन्ति। ताश्च अनुवृक्काभ्यां सिराभ्यामधरां महासिरां प्रविष्टाः।

इदञ्चात्र विशेषेण लक्ष्यम्—अनुवृक्का-धमन्याः चरमानुशाखाः वृक्कबहिर्वस्तुनि, सरलद्रुमशाखा इव फलवत्यः, उभयतोऽवस्थिताः उत्सिका धारयन्ति पुष्णन्ति च शाखाप्रतानैः। ता हि ऋजुका नाम धमन्यः[1]। सन्ति च तत्पार्श्ववर्त्तिन्यः तादृश्य एव ऋजुका नाम सिराः[2] उत्सिकाभ्यो विनिर्गतानां सिराणां संग्राहिण्यः। न च प्रसिच्यते मूत्रेण सह रक्तस्था लसीका, अन्यत्र वृक्करोगात्। तत्र हेतुरुत्सिकावरणानां पुटकानामाभ्यन्तरकला प्रभाव एव।

आन्त्राख्याणां मूत्रस्रोतसां संनिवेशस्तु उत्सिकाराजीनामन्तरालेषु वृक्कान्तर्वस्तुनि द्रष्टव्यः। तासां क्रमशः ऋजु-स्थूलीभूतानां मुखानि शिखरिकाग्रेषु दृश्यन्ते।

**गवीन्यौ**[3] नाम वृक्काभ्यां निर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने (१७० चित्रम्)। तयोरेकैकस्या शीर्षं वक्रीभूतधत्तूरपुष्पसदृशं वृक्कालिन्दसंलग्नं, पञ्चषाभिश्चञ्चुभिरुपलक्षितञ्च। ते तिर्यगधो गत्वा क्रमेण संकुचितविवरे वस्तिमभि प्रसर्पतः। तयोरेकैका प्रायेण विंशत्यंगुलदीर्घा हंसपक्षनलिकापरिणाहा, तिरश्चीनगत्या पृष्ठवंशपुरस्ताद् महासिराधमन्यावुल्लंघ्य श्रोणिगुहायामवतरति। उन्मुच्यते च तस्या द्वारं वस्तेः पश्चादेकैकस्मिन् पार्श्वे। तस्य गवीनीद्वार[4]मिति संज्ञा।

निर्माणञ्च गवीन्या अनुदैर्घ्यमवस्थितैः स्वतन्त्रपेशीतन्तुभिः अन्तर्बहिश्च कलावृतैः। तत्र बाह्या कला स्थूला वृक्ककोषानुषङ्गिणी।

गवीनीनिर्माणवैशेष्याच्च वृक्कालिन्दे सञ्चिता मूत्रक्षारजाः सिकताः गुडिकाकारेण कदाचिद् निरुन्धन्ति गवीनीमार्गम्। तेनाश्मरीशूलाख्याः[5] तीव्ररुजः प्रादुर्भवन्ति पेशीतन्तुसंकोचात्, विनश्यन्ति च ता गुडिकावतरणेन।

**पोषणं** पुनर्वृक्कयोः गवीन्योश्च इत्थं संपद्यते महाधमन्या अनुवृक्काख्यशाखानुशाखाभिः। अनुवृक्के हि धमन्यौ महाधमन्याः पार्श्वाभ्यां संभूय पृष्ठवंशस्य पुरस्ताद् अधरमहासिरापृष्ठे चोभयतः प्रसृते वृक्कौ प्रविशतः वृक्कद्वारद्वयमाश्रित्य। तयोरेकैका पञ्चषासु शाखासु विभज्यमाना प्रतनुभिः शाखाभिः स्वपार्श्ववर्त्तिवृक्क-

१। ऋजुका धमनी—Arterœ Rectæ. २। ऋजुकाः सिराः—Vene Rectæ. ३। गवीन्यौ—Ureters. ४। गवीनीद्वारम्—Opening of Ureter. ५। अश्मरीशूलः—Renal Colic. उक्तञ्च—"मूत्रवेगनिरस्तासु तासु शाम्यति वेदना। यावदन्या पुनर्नैति गुडिका स्रोतसो मुखम्" इति—(सुश्रुत, उत्तर० ५९ अध्यायः)। अत्र स्रोतःपदेन गवीन्येव निर्दिश्यते।

मधिवृक्कं गवीनीञ्च तर्पयति । अवशिष्टाश्च शाखाः वृक्कान्तःप्रविष्टा वृक्कान्त-र्वस्तुनि वृक्कपोषणीषु सूक्ष्मधमनीषु परिणमन्ति । तासां सूक्ष्मतमाश्चरमशाखाः ऋजुका नाम धमन्य उक्तपूर्वाः । ता गुच्छमुखीभिर्धमनीभिरुत्सिका रचयन्तीति व्याख्यातपूर्वम् । अधिवृक्कयोस्तर्पणन्तु उत्तर-मध्यमाऽधराभिः अधिवृक्किणी-संज्ञाभिर्धमनीभिः । गवीनीपोषण्यो धमन्यस्तु अनुवृक्काभ्यां धमनीभ्याम् अनुवृषणिकाभ्याञ्च सम्भूताः, क्वचिद् वस्तिगाख्यधमनीशाखाभ्यश्च ।

सिराः पुनर्वृक्कयोः धमनीनामनुसारिण्यः प्रायः । तत्र विशेषः— उत्सिकाभ्यो मूत्रक्षरणावशिष्टं रक्तं वहन्त्यस्ताः सूक्ष्मसिराजालेषु परिणम्य पुनः ऋजुसिरासु परिणमन्तीति । अधिवृक्कगवीन्योः सिरास्तु धमनीसहचर्यः प्रायेण ।

नाड्यः पुनर्वृक्काधिवृक्कगवीनीनामधिवस्तिकनाड़ीचक्रप्रभवाः, द्वितीय-तृतीय-चतुर्थानुत्रिकनाड़ीप्रभवाश्च ।

अथ वस्तिः ( १७०।१७२ चित्रयोः ) ।

**वस्तिः**[१], **मूत्राशयो** वा नाम—क्षुद्रालाबुफलसमाकारो मूत्राधारो वस्ति-गुहायां भगास्थिसन्धिपृष्ठतोऽवस्थितः । स पुंसो गुदनलकस्य पुरोवर्त्ती, स्त्रियास्तु योनि-गर्भाशययोः । आच्छाद्यते चासौ ऊर्ध्वं पश्चिमतश्च किञ्चिन्मात्रमुदर्य्या कलया[२] । सम्बध्यते च वस्तेरूर्ध्वं तनुशिखाकारा कलामयी प्रबन्धनी आ-नाभि प्रसृता, सा वस्तिशीर्षबन्धनीति[३] नाम । तदाकृष्टस्य वस्तिशिखरस्य च 'वस्तिशिरः'-संज्ञा प्राचाम् । तदुभयोर्धारयीश्च द्वयें संवाहिन्याख्यधमन्योरवशेषभूते बन्धनिके । तिसृणामपि तासां वस्तिरज्जुकेति[४] संज्ञा ।

अस्ति च वस्तिद्वारं संवेष्ट्यावस्थितो ग्रन्थिः पौरुषग्रन्थिर्नाम । वस्ति-पृष्ठतश्च एकैकस्मिन् पार्श्वे तिर्यगवस्थिते—शुक्रवाहिनी, शुक्रप्रपिका च । ते वस्तिद्वारोपकण्ठे परस्परमिलितमूले मूत्रप्रसेकान्तः शुक्रप्रसेकं रचयतः ।

निर्माणं पुनर्वस्तेरामाशयवत्, त्रिधा सन्निविष्टैः स्वतन्त्रमांसतन्तुभिः । तैर्निपीड्यते मूत्रपूर्णो वस्तिर्मूत्रनिष्कासनाय । अभ्यन्तरतश्च वस्तेर्दृश्या विचित्रवलिराजियुता कलामयी वृतिः वस्त्यन्तरीया नाम । त्रिकोणाकारश्च तत्र प्रदेशो वस्त्यन्तरीयं त्रिकोणं[५] नाम । तस्योर्ध्वभागे उभयोः कोणयोर्द्वयें

१ । वस्तिः—Bladder. वस्तिशब्दः क्वचिद् वस्तिगुहार्थेऽपि प्रयुज्यते । तद्वर्णनमस्थिखण्डे ( १म भागस्य ४३ पृष्ठे ) द्रष्टव्यम् । २ । सा च कला सर्वतो नावृणोति वस्तिमिति स्मरणीयम् । ३ । Urachus. ४ । Ligaments of the bladder. ५ । वस्त्यन्तरीयं त्रिकोणम्—Trigone.

[ १७२ चित्रम् ] वस्तेरभ्यन्तरम् ।

( वस्तिं मध्ये विदार्य पूर्वार्धमधःपरावृत्य दर्शितम् )




गवीनीद्वारे, अधःकोणे तु मूत्रप्रसेकानुबन्धि वस्तिद्वारं क्षुद्रकलायिकाकारेणोत्सेधेनोपलक्षितम् । सेयं कलायिका मूत्रार्गलिका[१] नाम, या अर्गलमिव मूत्रद्वारं निरुणद्धि। उत्थाप्यते च सा मूत्रणकाले पायुधारिण्याः पेश्याः सङ्कोचवशादिति केचित् ।

**मूत्रप्रसेकः**[२] नाम—मूत्रवाहिनी कलामयी नलिका वितस्तिप्रमाणा, या पुंसो वस्तिद्वारात् शिश्नाग्रपर्यन्तं शिश्नाधोभागे मध्यरेखानुक्रमेण प्रसृता । तस्यास्त्रयो भागाः—आद्यो वस्तिद्वारिकः[३], मध्यो मूलाधारिकः[४], शेषः शैश्निकश्चेति[५] । तत्राद्यो द्व्यङ्गुलमात्रो वस्तिद्वारानुषङ्गी पौरुषग्रन्थिं मध्ये निर्भिद्य प्रसृतः । तदभ्यन्तरे चोभयतो दृश्ये शुक्रप्रसेकयोश्छिद्रे । मध्यभागो मूलाधारदेशे वर्त्तमानः प्रतनुकलामयोऽङ्गुलमात्रः, स कचित् कलामयभाग इत्यपि संज्ञायते । तं संवेष्ट्य स्थिता मूत्रद्वारसङ्कोचनी पेशी । तदावरणी च औपस्थिकत्रिकोणच्छादनी स्थूलकला त्रिकोणप्रावरणी नाम । अथ चरमः शैश्निकभागः शिश्नाधःसंलग्नो दीर्घतमः । स आदावन्ते

१ । Uvula Vesicæ. २ । मूत्रप्रसेकः—Urethra. ३ । Prostatic portion (of Urethra).
४ । Membranous portion (Do). ५ । Penile portion (Do).

च किञ्चिदायतोदरो नवांगुलप्रमाणश्च दैर्घ्येण प्रायः । तस्य मूलभाग आयतो वर्त्तुलप्रायः शिश्नमूलस्थः । तद्बहिरुभयतो दृश्यौ कलायनिभौ ग्रन्थी शिश्नमूलिकौ नाम, तत्स्रोतसी च मूत्रप्रसेकान्तरुन्मुच्येते ( १७३।१७४ चित्रयोः ) ।

स्त्रीणान्तु मूत्रप्रसेको द्व्यंगुलमात्रः, स योनेः पुरःप्राचीरे सम्बद्धः शरेषीका-परिणाहः । तस्य द्वारं योनिद्वारस्योर्ध्वं पुरस्ताच्च भगशिश्निकाऽधो दृश्यम् ।

अथ प्रजननयन्त्राणि ।

इह खलु सर्वेषां प्रजननयन्त्राणां प्रधानं गर्भोत्पत्तिकारणं ग्रन्थिद्वयम् स्त्री-पुंसयोः शरीरे । तत्र पुंसो बहिःस्थं तद् वृषणसंज्ञं शुक्रप्रभवम्, तत्स्रोतसी च

[ १७३ चित्रम् ] पौरुषग्रन्थिसहितः शिश्नः ।
( निम्नदेशादवलोकितः )



शुक्रवाहिन्यौ नाम। स्त्रियास्तु तादृशमेव ग्रन्थिद्वयमन्तर्निगूढं गर्भाशयोभयपार्श्वस्थं वीजकोषसंज्ञं वीजार्त्तवप्रभवम्, तत्स्रोतसी च गर्भाशयपार्श्वयोः प्रतिबद्धे। गर्भाधानसाधनन्तु पुंसां शेफः, स्त्रीणां योनिः। गर्भाधारस्तु गर्भाशयः। तदेतद् वीजरूपं प्रजननयन्त्रवर्णनमुक्तम्, विस्तरोऽत ऊर्ध्वम्।

अथ पुंसां प्रजननयन्त्राणि।

शिश्नः, वृषणौ, शुक्रवाहिन्यौ, शुक्रप्रपिके, पौरुषग्रन्थिः, शिश्नमूलपार्श्विकं ग्रन्थिद्वयं चेति पुंसां प्रजननसहायानि यन्त्राणि। तत्र—

[ १७४ चित्रम् ]

शिश्नस्य अवयवविभागः।




शिश्नपार्श्विकयोः पेश्योर्मूलद्वयम् ( भगास्थ्नोः संयुक्तम् )

[ व—मूत्रप्रसेकधराया मूलस्थो वर्त्तुलभागः ]

**शिश्नः**[1] नाम—मेढ्र-मेहनादिपर्यायं पुंसां मैथुनसाधनं यन्त्रं, मूत्रप्रसेक-धरम्। तत् तिसृभिः पेशीभिर्दीर्घदण्डिकाकाराभिर्निर्मितम्, प्रहृष्टदशायां त्रिधार-दंडप्रायम्। ताश्च पेश्यः दृढस्नायुजालेन परस्परं निबद्धाः, उत्तेजनवशात् प्रहर्षणशीलाः।

तासां शिश्नपार्श्वयोः परस्परसंसक्ते प्राधान्येन शिश्ननिर्मापिके स्थूलमांसले पेश्यौ द्वे—शिश्नपार्श्विके[2] नाम (१७४ चित्रम्)। तयोर्मूलद्वयं भगास्थिसन्धान-मुभयतः सम्बद्धम्। पेश्योरधस्ताच्च मध्यरेखायां तु संसक्ता मृणालसंस्थाना अल्प-मांसला पेशी मूत्रप्रसेकधरा[3] नाम। सा मध्ये मूत्रप्रसेकाख्यं मूत्रमार्गं धारयति।

तस्याश्च मूत्रप्रसेकधराख्यपेश्याः पश्चिमभागो वर्त्तुलप्रायो मूलाधार-प्रदेशस्थः। तं निर्भिद्य प्रविष्टो मूत्रप्रसेकः। तस्याश्च पेश्याः छत्राक[4]सदृशोऽग्र-भागः शिश्नमुण्डं[5] शिश्नमणिर्वा नाम, स शिश्नपार्श्विकाख्यपेश्योः पुरःप्रान्तच्छादनः।

[ १७५ चित्रम् ] शिश्ननिर्माणम्।

( अनुप्रस्थच्छेदेन स्थूलचक्षुषा दृश्यम् )




[ चित्रव्याख्या—१। शिश्नपृष्ठिके सिराधमन्यौ। २। कामसंवेदिन्यौ नाड्यौ। ३। शिश्नच्छदः। ४। पेशीद्वयस्य प्रावरणी। ५। शिश्नपार्श्विकाख्यं पेशीद्वयम्। ६। पेशीद्वयान्तराला स्नायुप्राचीरिका ]

तदेतत् शिश्नमुण्डं तनु-मृदुलाऽरक्तकलया संवृतं समन्तादुच्छ्रितया चक्रनेमि तुल्यया धारया उपलक्ष्यते। तत्र च दृश्या गौरसर्षपाभाः पूतिरसस्राविणो ग्रन्थयः। सेयं धारा शिश्ननेमिका[6] नाम। पश्चिमतश्च धाराया दृश्यं शिश्नग्रीवावेष्टनं खातं

---

१। शिश्नः—Penis, २। शिश्नपार्श्विके पेश्यौ—Corpora Cavernosa. ३। मूत्रप्रसेकधरा पेशी—Copora Spongiosa. ४। छत्राकम्—शिलीन्ध्रम् ( Mushroom ). ५। शिश्नमुण्डम्—Glans Penis. ६। शिश्ननेमिका—Corona glandis.

शिश्नकण्ठिका[1] नाम। शिश्नमुण्डं परितश्च स्थिता शिथिलकोमला शिश्नावरणी त्वक् शिश्नच्छदा[2] नाम, सा अभ्यन्तरतः तनुश्लेष्मलकलावृता स्वभावतः शिश्नमुण्डमावृणोति, प्रकाशयति च पश्चादाकृष्टा। अशिथिलीभूता तु सा निरुद्धप्रकशं[3] नाम रोगं जनयति शिश्नमुण्डस्य प्रकाशं निरुध्य। सैव परावृत्य दृढीभूता शिश्नमुण्डस्य प्रावरणाऽसमर्था अवपाटिकाख्यं[4] रोगमुत्पादयति।

अधश्च शिश्नमुण्डस्य मध्यरेखायां दृश्या शिश्नच्छदायाः प्रबन्धनसूत्रं शिश्नसेवनी[5] नाम (१७३ चित्रम्)। सा शिश्नमुण्डं द्विदलमिव विभजतेऽधस्तात्। तत्पुरतश्च दृश्यं बाह्यं मूत्रप्रसेकद्वारम्[6], तत् शिश्नमुण्डाभ्यन्तरे किञ्चिदायतं, बहिश्च संकुचितमुखम्।

उभयतश्च शिश्नमूलम् उपस्थसङ्कोचनीसंज्ञे पेश्यौ मध्यरेखायां सेवन्या संयोजिते। अस्ति चापरा पेशी एकैकतः शिश्नमूले संयुक्ता शिश्नप्रहर्षणी नाम। सर्वाश्च ताः प्रावृणोति त्रिकोणप्रावरणो नाम दृढकला। सर्वास्ता उक्तपूर्वाः पेशीखण्डे (८२ चित्रम्)। उपरिष्टाच्च शिश्नच्छदापृष्ठे दृश्याः—मध्ये शिश्नपृष्ठिका सिरा, उभयतश्च शिश्नधमन्यौ, तदुभयतश्च नाड्यौ कामसंवेदन्यौ नाम।

अस्ति च स्त्रीपुंसयोः उपस्थोपरिष्टाद् मृदुमेदुरः कोमलत्वगावृत उत्सेधः कामपीठं[7] नाम, स यौवनारम्भात्प्रभृति तनुरोमजालैराच्छाद्यते।

### अथ वृषणौ।

अत्रेमे परिज्ञेया विशेषाः—वृषणकोषः, वृषणग्रन्थी, अधिवृषणिके, वृषणबन्धन्यौ, शुक्रवाहिन्यौ चेति। तत्र—

**वृषणकोषः[8], अण्डकोषो वा**—नाम शिथिलचर्मावृतस्थूलकलामयो बाह्यपुटकः, स-बन्धनोक-वृषणद्वयस्य सन्धारणः। तस्य च बाह्यचर्मपुटकमात्रस्य चर्मकोष इति संज्ञा। तदाभ्यन्तरस्य स्थूलकलापुटकस्य तु दृढप्रावरणकलामयत्वात् प्रावरणकोष[9] इति। स च मध्यस्थेन दृढकलामयप्राचीरेण भागद्वये विभक्तः। एकैकस्मिंश्च भागे दृश्यः एकैको वृषणग्रन्थिः, अण्डधरपुटकसंवृतः।

---

१। शिश्नकण्ठिका — Cervix of Glans Penis. २। शिश्नच्छदा — Prepuce. ३। निरुद्धप्रकशः—Phimosis. ४। अवपाटिका—Para-phimosis. इमे संज्ञे प्राचीने। ५। शिश्नसेवनी—Frænum Preputii. ६। मूत्रप्रसेकद्वारम्—External Urinary Meatus. ७। कामपीठम्—Mons Veneris. ८। वृषणकोषः—Scrotum. ९। प्रावरणकोषः—Dartos.

**वृषणग्रन्थी[1], मुष्कौ वा** नाम — आम्रशलाटुनिभौ[2] कुक्कुटाण्ड-संस्थानौ वा ग्रन्थी, अधिवृषणिकाभ्यां सह अण्डधरपुटकान्तर्दृश्यौ (१७२ चित्रम्)। तयोरण्डाविति, आण्डाविति वा संज्ञामाचक्षते आथर्वणाः। तौ वृषणबन्धनीभ्यां सह वृषणकोषान्तस्तिष्ठतः। तयोरेकैकस्य परिमाणं तोलकद्वयम्। गर्भस्थशिशोस्तु तावेव वस्तिगुहाभ्यन्तरमधितिष्ठतः, आ-सप्तम-मासात्। ततः क्रमाद् वंक्षणसुरङ्गापथेनावतीर्णौ तौ पुरःस्थया त्वचा प्रावरण्यादि-सहितयाऽच्छादितौ वृषणकोषाभ्यां धार्येते। क्वचिदनवतीर्णौ तु तौ गूढाण्डं नाम पुमांसं जनयतः।

अस्ति हि प्रतिवृषणग्रन्थि तत्संसक्तं कलाकोषमयं पुटकम्। तदेकेन स्तरेण वृषणग्रन्थिमावृत्य अपरेण स्तरेण तद्धारणं निश्छिद्रकोषं निर्मिमीते। तस्य अण्डधरपुटकम्[3]-इति संज्ञा। स च गर्भस्थशिशोर्वृषणावतरणकाले वृषणेन सह पुरस्तादाकृष्टः उदर्याख्यकलांश एव पृथग्भूत इति सूक्ष्मदृशः। तस्मिंश्च कोषे स्तरद्वयाभ्यन्तरे सञ्चीयमानं लसीकाभूयिष्ठं जलं उदकवृद्धिं[4] नाम रोगं जनयति।

[ १७६ चित्रम् ] **वृषणग्रन्थिः ( वृषणबन्धनी-सहितः )।**

वृषणकोषापसारणेन आभ्यन्तरवृषणवृतीनां विदारणेन च प्रदर्शितः।




[ अधि १।अधि २—अधिवृषणिकाया आद्यन्तभागौ। १।२—वृषणाधिवृषणस्थं स्वाभाविकविन्दुद्वयं यत् प्रयोजनं न ज्ञायते ]

---

१। वृषणग्रन्थी—Testes or Testicles. २। शलाटुः अपक्वफलम्। ३। Tunica Vaginalis.
४। *Hydrocele.* मूत्रवृद्धिरिति प्राचां संज्ञा तु न शोभना, मूत्रस्य तत्र प्रवेशासम्भवात्।

दृश्यन्ते च अण्डधरपुटकस्य बहिःस्तरसंलग्नानि कानिचित् पेशीसूत्राणि। तानि गर्भस्थशिशोरण्डावतरणकालेऽवतीर्णानि मध्यमायाः उदरच्छदाख्य-पेश्याः कतिचित् सूत्राणीति गर्भव्याकरणाभिज्ञाः। फलकोषकर्षणी नाम तनुसूत्रा पेशी च तन्निर्मिता वर्णितपूर्वा। सा च कलायुता वृषणस्य पेशीमयः कोषः[1] इति केचित्।

अण्डधरपुटकान्तश्च दृश्ये द्वे पुटके अन्तरन्तःप्रविष्टे तयोराद्यः अण्डच्छदो[2] नामाग्रे वक्ष्यमाणः। अपरः सूक्ष्मसिरा-धमनी-नाड़ी-रसायनीमयो जालकाकारः, स जालकपुटकं[3] नाम। एवञ्च पुटकानां त्रयेण संवृतमेकैकमण्डमिति स्मर्त्तव्यम्।

**अधिवृषणिका**[4] नाम एकैकस्य वृषणग्रन्थेः पार्श्वे संलग्नः अर्धचन्द्र-प्रायोऽवयवः ( १७७ चित्रम् ) यं प्रविशन्ति सूक्ष्माणि शुक्रवहस्रोतांसि अण्ड-शिखरदेशाद् विनिर्गतानि। सोऽयम् अतिदीर्घ-सूक्ष्म-शुक्रस्रोतसां लताशुङ्गा-

[ १७७ चित्रम् ] **वृषणग्रन्थेः सूक्ष्मनिर्माणम्।**




[ पु १—अण्डधरपुटकस्य परिसरीयभागः। पु २—तस्यैव आशयिकभागः। पु ३—स्तरद्वयस्य अन्तरालस्थोऽवकाशः यत्रोदकवृद्धौ जलसञ्चयो भवति। शु॰ नि॰—शुक्रनिर्मापक-ग्रन्थिवस्तूनि। ]

---

१। पेशीमयः कोषः—Cremasteric Fascia. २। अण्डच्छदः—Tunica Albugenia.
३। जालकपुटकम्—Tunica Vasculosa. ४। अधिवृषणिका—Epididymus.

वदावर्त्तवतां संघात एव यः सावधानमाकृष्य ऋजूकृतः प्रायेण त्रयोदशहस्तदीर्घ-सूत्राकारो भवतीति विचित्रमेवास्या निर्माणम्। सेयमधिवृषणिका उपरिष्टात् स्थूलग्रन्थिनिभा, अधःप्रान्ते च तनूकृता वृषणग्रन्थिं क्रोडीकृत्य अवतिष्ठते। परिणामे सरलस्थूलनलिकाकारा च सा शुक्रवाहिनी-संज्ञा भवति।

**वृषणबन्धन्यौ**[1] नाम—वृषणग्रन्थ्योरवलम्बनभूते स्थूलकोमले रज्जुके वृषणकोषान्तः स्पर्शानुभवयोग्ये। तयोरेकैका वृषणपार्श्वाद् अन्तर्वंक्षणीयच्छिद्रं यावत् प्रसृता पञ्चाङ्गुलदीर्घा प्रायेण। अन्तर्वंक्षणच्छिद्रादूर्ध्वं तु वंक्षणसुरङ्गायां निगूढावस्थिता सा बहिर्वंक्षणीयच्छिद्रेण वस्तिगुहां प्रविशति। सेयम् अनु-वृषणिकाख्य सिरा-धमनी-रसायनीभिः गुदोपस्थिकनाड़ीचक्रसम्भवैः नाड़ीप्रतानैश्च परिवृता शुक्रवाहिन्येव। बहिरावृता च सा वृषणाकोषीय त्वचा प्रावरणी सहितया, फलकोषकर्षण्याख्यपेशीतन्तुभिश्च यत्सङ्कोचेन ऊर्ध्वमाकृष्यते सपरिकरो वृषणः।

**सूक्ष्मनिर्माणं** पुनर्वृषणग्रन्थेरनुलम्बच्छेदेन स्फुटं दृश्यते स्थूलचक्षुषा, स्फुटतरन्तु अणुवीक्षणयन्त्रसहायेन चक्षुषा (१७७ चित्रम्)। तत्र अण्डधर-पुटकान्तर्दृश्यो ग्रन्थिच्छादनः तनुस्नायुमयः कोषोऽपरः अण्डच्छदो नाम। तच्छाखाभूताश्च स्नायुपत्रिकास्तनुकुशपत्रसंस्थानाः, दश द्वादश वा, ग्रन्थि-वस्तुनोऽन्तः प्रविश्य तावतीषु प्रकोष्ठिकासु विभजन्ते एकैकमण्डग्रन्थिम्। एकैकस्याञ्च प्रकोष्ठिकायां दृश्यं शुक्रनिर्मापकेण ग्रन्थिवस्तुना परिवृतमेकैकं सूक्ष्मं शुक्रस्रोतो मूले कुण्डलीकृतम्, अस्ति चात्र परितो ग्रन्थिवस्तुवेष्टनं सूक्ष्मं सिरा-धमनीजालकं, यतो नियतं स्रवति लसीका शुक्रनिर्माणाय। ततश्च वृषणग्रन्थि-वस्तुनिर्मापकैः विचित्रप्रभावैः कोषाणुभिर्निर्मितं शुक्रं[2] शुक्रवहस्रोतोभिर्नीयमानं कतिचित् प्रधानस्रोतांसि संश्रित्य अण्डशिरसि अधिवृषणिकामभिप्रपद्यते। ततश्च तदन्तः क्रमादुपचीयमानं शुक्रमूर्ध्वं नीयते शुक्रवाहिन्येति संक्षेपतः शुक्रनिर्माणप्रणाली व्याख्याता। अतएव प्राञ्चः—"शुक्रवहानां स्रोतसां वृषणौ मूलम्"—इति। शुक्रन्तु सूक्ष्मदीर्घसूत्रसदृशैरतिचञ्चलैः शुक्रजीवाणुभिरभिव्याप्तमिति प्रत्यक्षमीक्षणीयमणु-वीक्षणसहायेन चक्षुषा। सूक्ष्मशुक्रसारन्तु सर्वशरीरचरं शुक्रप्रपिकाभ्यन्तरतः सिरापथैर्नीयते रक्तप्रवाहे इत्यग्रे वक्ष्यामः।

**शुक्रवाहिन्यौ[3], वीर्यवाहिन्यौ वा** नाम—अधिवृषणिकाभ्यां विनिर्गते कपोतपक्षनलिकाकारे पेशी-स्नायुतन्तुनिर्मिते नलिके (१७७ चित्रम्), वृषण-

१। वृषणबन्धन्यौ—Sparmatic Cords. २। शुक्रं (वीर्यं वा)—Semen. ३। शुक्र-वाहिन्यौ, वीर्यवाहिन्यौ वा—Ducta or Vasa Deferentia.

विनिर्गतस्य शुक्रस्य वस्तिद्वारमभि वहनाय। ते अनुवृषणिकाख्यसिरा-धमनी-नाड़ीजालवेष्टिते, वृषणबन्धनीभ्यामूर्ध्वं गच्छतः। तयोर्गतिः सरलोर्ध्वमुखी आ-वंक्षणसुरङ्गाद्वारम्, वंक्षणसुरङ्गायान्तु बहिस्तिरश्चीना। ततः श्रोणिगुहान्तः प्रविष्टे ते वक्रीभूय तिर्यगधो गत्वा वस्तिपृष्ठाश्रयेण वस्तिद्वारमुभयतस्तिष्ठतः। शुक्रप्रपिके च तत्पार्श्वयोर्दृश्ये गवीनीसहचर्यौ। एकैकतश्च वस्तिद्वारसमीपे शुक्रप्रपिका-शुक्रवाहिन्योः मेलकेन प्रभवति अंगुलमात्रदीर्घः शुक्रप्रसेकः। तद्द्वारञ्च मूत्रप्रसेकाभ्यन्तरे दृश्यम्।

## शुक्रप्रपिके।

**शुक्रप्रपिके**[1] नाम—मधुचक्रवदन्तःसुषिरे पेशी-स्नायुतन्तुभूयिष्ठे शुक्राधारिके (१७८ चित्रम्), ये प्रायश्चतुरंगुलप्रमाणदैर्घ्ये कनिष्ठिकापरिणाहे तिर्यग् वस्तिपृष्ठमधितिष्ठतः। ते तत्र शुक्रवाहिन्योः सहचर्यौ। तयोः सञ्चीयते शुक्रं ब्रह्मचर्यकाले *। एकैकस्याश्च शुक्रप्रपिकायाः तनूकृतमधोमुखं शुक्रवाहिन्या मुखेन संबद्धम्। उभयोश्च मुखयोर्मिलितयोः साधारणं सूक्ष्मं स्रोतो वस्तिद्वार-पार्श्वस्थं **शुक्रप्रसेकः**[2] नाम। तस्य सूक्ष्मं द्वारं मूत्रप्रसेकान्तर्दृश्यमेकैकस्मिन् पार्श्वे।

प्राञ्चोऽप्याहुः—"द्व्यङ्गुले दक्षिणे वामे[3] वस्तिद्वारस्य चाप्यधः।
मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते।" इति (सु० शा० अ० ४)

## पौरुषग्रन्थिः।

**पौरुषग्रन्थिः**[4] नाम—वस्तिद्वारं मूत्रप्रसेकस्याद्यभागञ्च संवेष्ट्य स्थितोऽक्षोटफलाकारो[5] ग्रन्थिः (१७३।१७८ चित्रयोः) भगास्थिसन्धानपृष्ठेऽवस्थितः। स तोलकद्वयपरिमाणः, द्व्यङ्गुलायतः, बहिः स्नायुमयकोषपरिवृतोऽभ्यन्तरतश्च मधुचक्रसंस्थानः। तस्मात् स्रवति पिच्छिल उपस्नेहः सति कामोद्रेके यूनाम्, अतिप्रवाहणे च सर्वेषाम्। तस्य दश द्वादश वा (क्वचिद् विंशतिर्वा) स्रोतांसि मूत्रप्रसेकान्तरुन्मुच्यन्ते सुसूक्ष्मैश्छिद्रैः। वार्धके तु स्नायुतन्तुभूयिष्ठामभिवृद्धिं गतोऽसौ कदाचिद् मूत्रमार्गं सङ्कोचयति, निरुणद्धि वा क्वचिद् वस्तिद्वारमिति स्मर्त्तव्यम्।

---

१। शुक्रप्रपिके—Vesiculæ Seminales. २। शुक्रप्रसेकः—Ejaculatory Duct. ३। "द्व्यङ्गुले दक्षिणे पार्श्वे" — इति पाठस्तु लिपिकरप्रमादकृतः प्रतिभाति। वर्णनमिदं प्राचां शारीर ज्ञानोत्कर्षं दर्शयति। ४। पौरुषग्रन्थिः—Prostate gland. सौश्रुतीयं संज्ञा। दृश्यतां उपोद्घातस्य ७१ पृष्ठम्। ५। अक्षोटफलं 'आखरोट' इति भाषायाम् (Walnut).
* शुक्रसारस्तु सूक्ष्मस्तत एव काले सिरारक्तेनाकृष्टः सर्वशरीरे सञ्चरन् बलवर्णौजसां वृद्धये पुरुषोचित लक्षणाय च कल्पते। अत एव ब्रह्मचर्यं प्रशंसन्ति प्राञ्चः।

**शिश्नमूलपार्श्विकौ**[1] नाम—चणकसंस्थानौ ग्रन्थी मूत्रप्रसेकस्य मध्यमभागमुभयतो बहिर्वर्त्तेते ( १७३ चित्रम् ) । तयोरपि स्रोतसी मूत्र-प्रसेकान्तर्दृश्ये । ताभ्यां निःस्रुत उपस्नेहो मूत्रप्रसेकं सदा तर्पयतीति केचित् ।

[ १७८ चित्रम् ]

## शुक्रवाहिन्यौ, शुक्रप्रपिके, पौरुषग्रन्थिश्च ।

( वस्तिपृष्ठतो दृष्टाः )




### अथ स्त्रीणां प्रजनन-यन्त्राणि ।

भगं, गर्भाशयः, बीजाधारौ, बीजवाहिन्यौ चेति स्त्रीणां प्रजननयंत्राणि । तत्र—

**भगं**[2], **योनिर्वा** नाम — स्त्रीणां बहिरवयवैः सहितोऽपत्यपथः । तस्य बहिर्भगम्, अन्तर्भगञ्चेति द्वेधा विभागो वर्णनासौकर्याय । **कामपीठं** तु भगोपरिष्टाद् वर्त्तमानो मृदुमेदुर उत्सेधो वर्णितपूर्वः । तत्र—

---

१ । शिश्नमूलपार्श्विकौ ग्रन्थी--Cowper's glands. २ । भगं, योनिर्वा—Female Genital Apparatus. भगशब्दः क्वचित् सामान्यतो जननेन्द्रियवाची च ।

**बहिर्भगं**[1] नाम—भगस्य बाह्यः प्रदेशो गवाक्षाकारः सप्तावयवः ( १७६ चित्रम् )। ते चावयवाः—बृहद्भगोष्ठद्वयं, लघुभगोष्ठद्वयं, भगशिश्निका, भगालिन्दः, मूत्रप्रसेकद्वारं, भगद्वारं, भगाञ्जलिका चेति। मध्ये च भगद्वार पायुद्वारयोः सेवन्यङ्कितो भागो मूलाधारपीठं, मूलपीठं वा नाम। तत्र—

( १ ) **बृहद्भगोष्ठद्वयं**[2] नाम—भगपीठाद् मूलपीठं यावदुभयतोऽवस्थितं किञ्चित्स्थूलकोमलमोष्ठद्वयसदृशं भगावयवद्वयम् ( १७६ चित्रम् )। तद् बहिःसोष्मोः लोमशतनुत्वगावृतम्, अन्तर्मेदुरं, स्नायुसूत्रमयप्रावरण्या दृढीकृतश्च त्वगधः। यस्तावत्पुंसामण्डकोषः स एवाण्डवर्जितो द्विधाभिन्नो बृहद्भगोष्ठद्वये परिणतः—इत्याहुः गर्भव्याकरणविदः।

[ १७६ चित्रम् ] बहिर्भगम्।




( क—कुमारीच्छदा। ख—भगाञ्जलिका। ग—मूलपीठम्। )

---

१। बहिर्भगम्—External genital organs. २। बृहद्भगोष्ठद्वयम्—Labia Majora.

तच्च बृहद्भगोष्ठद्वयमुपरिष्टाद् भगशिश्निकापार्श्वयोर्मिलितम्, अधस्ताच्च भगाञ्जलिकायाम्। तदन्तश्च दृश्यानि सूक्ष्माणि सिराधमन्यादि जालकानि कामसंवेदनीभिर्नाड़ीभिः सहितानि, पूतिरसस्राविग्रन्थयश्च तत्र निगूढ़ाः सह तत्स्रोतोभिः।

(२) **लघुभगोष्ठद्वयं**[1] नाम—तनुस्वल्पावयवमोष्ठद्वयं बृहद्भगोष्ठयोरुत्सङ्गस्थमेकैकतो द्व्यङ्गुलमात्रायतम् (१७६ चित्रम्)। तत् मूत्रप्रसेकद्वारस्य च पार्श्वयोः स्तोकेन अवतिष्ठते। तदन्तराले च योनिद्वारम् अनुविद्धञ्च तद् विशेषेण पूतिग्रन्थिस्रोतोभिः।

(३) **भगशिश्निका**[2] नाम—भगपीठाधो मध्यरेखायां तनुत्वगावृतो वटप्ररोहवद् नीरन्ध्रोऽवयवः (१७६ चित्रम्)। तस्याग्रभागमात्रं शिश्नमुण्डवत् लघुभगोष्ठयोरूर्ध्वसन्धाने दृश्यम्। छाद्यते च तत् स्तोकेन शिश्निकाच्छदाख्यया तनुत्वचा। सेयं भगशिश्निका तनूकृतः शिश्नावशेष एवेति गर्भव्याकरणविदः।

(४) **भगालिन्दः**[3] नाम — लघुभगोष्ठयोरन्तराले वर्त्तमानस्त्रिकोणाकारः प्रदेशो योनिद्वारोपरिष्टात् (१७६ चित्रम्)। तन्मध्ये दृश्यं काकपक्षनलिकाप्रवेशार्हं छिद्रं मूत्रप्रसेकद्वारं नाम, यद् द्व्यङ्गुलमात्रदीर्घं स्त्रीणाम्।

(५) **भगद्वारं**[4], **योनिद्वारं वा** नाम—कुक्कुटाण्डायतनं द्वारं लघुभगोष्ठयोरन्तराले मूत्रप्रसेकद्वारस्याधस्तादवस्थितम् (१७६ चित्रम्)। तद् योनिसङ्कोचन्याख्यपेशीद्वयेनावेष्टितम्। अभिरक्षितञ्च तत् प्रायो निम्नार्धमात्रे कुमारीषु कुमारीच्छदाख्यया जवनिकया[5]। सेयं स्थूलकला यौवने प्रथममैथुनात् प्रभृति क्रमशः शीर्यते। कदाचित्तु साकल्येन भूम्ना वा योनिद्वारं प्रावृण्वन्ती सा मासिकमार्त्तवं निरुणद्धि। तेन आर्त्तवकाले दारुण शूलयुगार्त्तवरक्तसञ्चयो योनिमार्गान्तः। शस्त्रसाध्योऽयं रोगः।

उभयतश्च योनिद्वारमभ्यन्तरतः श्लेष्मलकलान्त-र्निगूढं ग्रन्थिद्वयं योनिद्वारिकं[6] नाम। तत् स्फुटाभ्यां सूक्ष्मस्रोतोभ्यां पिच्छिलमुपस्नेहं स्रवति पुंसः शुक्रवद् वेगेन मैथुनान्ते। तं स्त्रीशुक्रमित्याचक्षते प्राञ्चः[7]।

---

१। लघुभगोष्ठद्वयम्—Labia Minora. २। भगशिश्निका—Clitoris. ३। भगालिन्दः—Vestibule. ४। भगद्वारं, योनिद्वारम् वा—Vaginal Orifice. ५। कुमारीच्छदा—Hymen. ६। योनिद्वारिकग्रन्थी—Glands of Bartholin. ७। उक्तं हि—"योषितोऽपि स्रवन्त्येव शुक्रं पुंसां समागमे। तत्र गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते"—इति (अ० सं० शा० १ अ०)।

(७) **भगाञ्जलिका**[1] नाम—भगद्वारस्य अधोधारायाम् अञ्जलिवदव-स्थितो भगावयवः दृढकलावृतमेदोभूयिष्ठः। सेयं मूलाधारपीठस्य पुरःसीमा। सा प्रायः प्रसवकालेऽवदीर्यते सह मूलपीठेन सेवनीप्रदेशे। तत् मूलावदरणम्[2] इत्याहुः प्रसूतितन्त्रज्ञाः। तच्चेत् न सीव्यते काले, तर्हि सम्भवति कष्टकरी योनि-व्यापद् योनौ गर्भाशयाऽवतरणादिति सर्वथा प्रतिषेध्या सा कुशलेन।

अथ अन्तर्भगम्।

**अन्तर्भगं**[3], **योनिमार्गो वा** नाम—भगद्वाराद् गर्भाशयमुखं यावत् प्रसृतः ईषद्वक्रो मार्गः वस्तिगुदयोरन्तरालस्थः। स एव 'अपत्यपथ'-संज्ञोऽपि। सोऽयं पुरःप्राचीरानुक्रमेण चतुरंगुलदीर्घः, पश्चिमप्राचीरानुक्रमेण तु पञ्चां-गुलायतः। तत्प्राचीराणां नियतसङ्कोचात् स्वभावतो रुद्धप्रायोऽपि स सति प्रयोजने बहु विस्फारणयोग्यः। तदूर्ध्वप्रान्तस्तु गर्भाशयग्रीवां संवेष्ट्य तिष्ठति किञ्चिद् विस्फारितः, दूरतः प्रसृतश्च पश्चिमतः (१८० चित्रम्)।

योनिद्वारन्तु व्याख्यातचरम्, योनिसङ्कोचन्यौ पेश्यौ च तत्पार्श्वस्थे।

(व्यतिकरः) पुरस्ताद्—योनेः पुरःप्राचीरव्यवहितो वस्तिः मूत्रप्रसेकश्च। पश्चिमतः—योनेः पश्चिमप्राचीरव्यवहिता गुदनलिका, योनिगुदान्तरीयं स्थालीपुटश्च उदर्याकलानिर्मितम्। पार्श्वयोस्तु—पार्श्वप्राचीरव्यवहिते पायुधारिण्यौ पेश्यौ।

निर्माणं पुनर्योनिप्राचीराणां अन्तस्तनुश्लेष्मस्राविकलावृतैः स्वतन्त्रपेशी-तन्तुभिः। कला च सा सङ्कोचकाले वलयाकाराभिः शिथिलवलीराजिभिरुपलक्षिता, अन्तः सेवनीचिह्नाङ्कितश्च योनिमार्गः पुरः पश्चाच्च मध्यरेखायाम्।

पोषणं पुनर्योनिमार्गस्य--आभ्यन्तर्योरधिश्रोणिकाख्यधमन्योरनुयोनिकाभ्यां शाखाभ्यां गुदोपस्थिकाया धमन्यास्तनुप्रशाखाभिश्च।

अथ गर्भाशयः।

**गर्भाशयः**[4] नाम — अधोमुख-क्षुद्रालाबुफलाकारः स्थूलपेशीमयः कोषः योनेरूर्ध्वमुखे प्रतिबद्धः। तस्यायतनं[5] स्वमुष्टिमात्रमगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भायतनं प्रवृद्धम् (१८०।१८१ चित्रयोः)।

---

१। भगाञ्जलिका—Fourchette. २। Rupture of Perinæum. ३। अन्तर्भगम्, योनिमार्गो वा—Vaginal Canal. योनिशब्दश्च क्वचिदेतदर्थ एव। ४। गर्भाशयः—Uterus. 'जरायु' शब्दो गर्भाशयार्थे कैश्चिदज्ञैः प्रयुज्यते प्रमादेन, तत् परिहर्त्तव्यम्। स हि ऊर्णनाभतन्तु-जालाभ-सूत्रजालकवाचकः सामान्यतः, विशेषतस्तु गर्भवेष्टककलापुटार्थः। ५। विशेषतस्तु तस्य दैर्घ्यं चतुरङ्गुलम् (3″), प्रस्थं किञ्चिदूनत्र्यङ्गुलम् (2″)।

अथास्य त्रयो भागाः कल्प्यन्ते--मुखं, ग्रीवा, शरीरञ्चेति । तत्र—

**गर्भाशयमुखं**[१] योनिमार्गशिखरालम्बि निम्नाभिमुखम् । तत्र लक्षणीयं छिद्रं—बाह्यं गर्भच्छिद्रं[२] नाम, तदेव गर्भाशयस्य द्वारम् । तच्च नियतं संकुचितमेवावतिष्ठते, स्फारीभवति च विशेषात् प्रसवकाले, आर्त्तवकाले च स्तोकेन षोड़शदिनपर्यन्तं (आ-विंशतिदिनं वा) पुंबीजधारणाय । रजःकृच्छ्रे तु असम्यग् विस्फारितं तन्निरुणद्धि यथार्हं रजःप्रवाहमिति तीव्ररुजाः सम्भवन्ति, बन्ध्यात्वं च प्रायः ।

**गर्भाशयग्रीवा**[३] पुनर्गर्भाशयस्य मुख-शरीरयोरन्तरालस्थः कलसिकाग्रीवावत् संकुचितभागो द्व्यंगुलमात्रः । तत्प्राचीराणां स्थूलता तु अंगुलचतुर्थांशपरिमाणा । तदन्तर्वर्त्ती मार्गश्च क्षुद्रपटोलफलाकारः प्रायेण श्लेष्मपिण्डकाप्रतिबद्धः, अन्यत्र रजःकालात् । तस्य ग्रीवासरणि[४]रिति संज्ञा ( १८१ चित्रम् ) ।

**गर्भाशयशरीरं**[५] पुनर्गर्भाशयस्य मुख्यभागः तुम्बीफलवदायतोदरः । तदन्तर्द्दश्यस्त्रिकोणाकारोऽवकाशः । तस्योर्ध्वमुभयतः कोणद्वयं सच्छिद्रं बीजस्रोतोभ्यां प्रतिबद्धम् । अधोगस्तु कोणो ग्रीवासरण्या अनुबन्धी । तस्य आभ्यन्तरं गर्भच्छिद्रम्[६] इति संज्ञा । गर्भाशयप्राचीरिकाश्च गर्भाशयशरीरांशे स्थूलतमाः, तासां मिलितानां स्थूलत्वं प्रायेण सार्धांगुलपरिमाणम् । शिरोभागश्च गर्भाशयस्य गर्भतुम्बी[७]संज्ञः ।

सोऽयं गर्भाशयः अष्टाभिर्बन्धनिकाभिर्यथास्थानं धार्यते वस्ति-गुदयोरन्तराले । प्राव्रियते च समन्तादुदर्यया कलया ग्रीवां परितः सङ्गत्य द्विगुणीभूतया । द्विगुणीभावाच्च तस्याः स्तरद्वयान्तराले विरच्येते द्वे स्थालीपुटे वक्ष्यमाणे ।

**बन्धनिकाश्च**[८] **गर्भाशयस्य** अष्टौ ( १८० चित्रम् ) यथा — एका अग्रिमा, एका पश्चिमा, द्वे पक्षबन्धन्यौ, द्वे रज्जुबन्धनिके, द्वे त्रिकगर्भाशयिके चेति । तत्र—

अग्रिमा पश्चिमा चेति द्वे बन्धनिके उदर्याख्यकलाया द्विगुणीभावादारचिते तस्याः पूर्व-पश्चिमांशभूते । ताभ्यामारच्येते वस्ति-गर्भान्तरीयम्, योनिगुदान्तरीयं चेति द्वे स्थालीपुटे उक्तपूर्वे ( १५० चित्रम् ) ।

---

१ । गर्भाशयमुखम्—Os Uteri. २ । बाह्यं गर्भच्छिद्रम्—External Os. ३ । गर्भाशयग्रीवा—Cervix Uteri.. ४ । ग्रीवासरणिः—Gervical Canal. ५ । गर्भाशयशरीरम्—Body of the Uterus. ६ । आभ्यन्तरं गर्भच्छिद्रम्—Internal Os. ७ । गर्भतुम्बी—Fundus Uteri. ८ । Ligaments of the Uterus.

[ १८० चित्रम् ]

## गर्भाशयः ( बीजाधार-बीजवाहिन्यादियुतः )।




[ पु०-पु०—बीजवाहिन्योः पुष्पितप्रान्तौ। ×-×—चिह्निता—गर्भाशय-ग्रीवा। ]

**पक्षबन्धन्यौ**[1] नाम—गर्भाशयपार्श्वस्थे पक्षिपक्षवदायते बन्धनिके ( १८० चित्रम् )। ताभ्यां मध्यप्राचीरवत् स्थिताभ्यां विभज्यते वस्तिगुहा[2] पूर्वापर-भागयोः। निर्माणञ्च पक्षबन्धन्योः स्थूलजवनिकावदास्तृतयोः उदर्याख्यकलाया द्विगुणीभावात्। दृश्यन्ते च एकैकस्यां पक्षबन्धन्यां कलास्तरद्वयान्तराले सप्रबन्धनो बीजाधारः, बीजकुल्या, रज्जुबन्धनिका, नाड़ी-सिरा-धमन्यो रसायन्यश्च।

**रज्जुबन्धनिके**[3] नाम—रज्ज्वाकारे बन्धनिके पञ्चषांगुलदीर्घे। दृश्ये च ते गर्भाशयशरीरस्य पार्श्वकोणाभ्यां पुरस्तात् तिर्यग् बहिःप्रसृते पक्षबन्धन्योरंशभूते। ते च स्त्रीणां वंक्षणसुरङ्गयोः प्रविश्य तत्रैव क्रमशः प्रनष्टे। तयोर्वृषणबन्धनिकाभ्यां स्फुटं सादृश्यमिति गर्भव्याकरणज्ञाः।

---

१। पक्षबन्धन्यौ—Broad Ligaments. २। वस्तिगुहा नाम लघ्वी श्रोणिगुहा ( True Pelvis ). सा अस्थिखण्डे ( ४३ पृष्ठे ) वर्णिता। ३। रज्जुबन्धनिके—Round Ligaments.

[ १८१ चित्रम् ]

## गर्भाशयस्य अभ्यन्तरम्।

( अनुलम्बच्छेदेन दर्शितम् )




[ १।१—बीजवाहिन्योः संयोगस्थानम्। २—गर्भाशयप्राचीरिका। ३—गर्भाशयस्य अभ्यन्तरम्। ४—आभ्यन्तरं गर्भच्छिद्रम्। ५—ग्रीवासरणिः। ६—बाह्यं गर्भच्छिद्रम्। ७। योनिप्राचीरिका ]

त्रिकगर्भाशयिके[1] नाम ह्रस्वप्राये बन्धनिके तु गर्भाशयस्य पार्श्वकोणाभ्यां सम्भूय पश्चाद् धनुर्वद् वक्रीभूय त्रिकास्थिपार्श्वयोः सम्बद्धे।

ताश्चामी बन्धनिकाः पेशी-स्नायुसूत्रभूयिष्ठाः गर्भाशयं सम्यक् समन्तात् प्रबध्नन्ति, धारयन्ति च यथास्थानं सर्वास्ववस्थासु, सति प्रयोजने दीर्घीभूताः।

### अथ बीजाधारौ, बीजवाहिन्यौ च।

**बीजाधारौ**[2], **बीजकोषौ** वा नाम—स्त्रीणां चटकाण्डसमाकारौ ग्रन्थी पुंसां वृषणग्रन्थिवत्। तयोरेकैकः वस्तिगुहान्तः प्रच्छन्नो गर्भाशयस्य एकैक-पार्श्वतः पक्षबन्धन्याः स्तरद्वयान्तराले ( १८० चित्रम् ) तिर्यगवतिष्ठते। तस्य द्वौ प्रान्तौ, माध्यसीमस्थः पार्श्वसीमस्थश्चेति। तत्राधो गर्भाशयाभिमुखः गर्भाशयेन

---

१। त्रिकगर्भाशयिके बन्धनिके—Sacro-uterine Ligaments. २। बीजाधारौ, बीजकोषौ वा—Ovaries.

सम्बध्यते द्विांगुलदीर्घया रज्ज्वाकारप्रबन्धन्या बीजाधारबन्धनिका[1] संज्ञया। तस्य पार्श्वसीमाभिमुखेन प्रान्तेन तु सम्बद्धा तन्वी कुल्या बीजाधाराद् बीजार्त्तवस्य प्रवहणाय, सेयं बीजकुल्या[2] नाम या बीजवाहिन्याः पुष्पितप्रान्तेनाऽनुबध्यते।

[ १८२ चित्रम् ]

बीजाधारस्य सूक्ष्मनिर्माणम्।




[ १।१।१।१।१—बीजानां बाल्यावस्था। २।२।२—तेषां पुटकान्तः पृथग्भूतानां मध्यावस्था। ३।३—तेषां परिणतावस्था बीजनिर्गमप्रकारश्च। ४—उत्सृष्टबीजस्य पुटकस्य शुष्यमाणोऽवशेषः। ५—बीजनिर्गमाय बीजकोषस्य विदीर्णावस्था ]

**निर्माणं** पुनर्बीजाधारस्य तनुकोषावृतस्य स्नायुसूत्रमयजालाभ्यन्तरे अतिसूक्ष्मसिरा-धमनीजालकान्तःस्थानां सिकताकृतीनां स्त्रीबीजानां[3] सन्निवेशात्। एकैकस्मिंश्च बीजाधारे प्रायः सप्ततिसहस्रं सूक्ष्मबीजानां पुटका[4]वृतानाम्। तानि च बीजानि यौवनारम्भे क्रमशः पुष्टीभूय तिष्ठन्ति, सम्भवन्ति च पुष्टतराणि गर्भधारणकाले। तेषु च पुष्टतमानां बीजानां मासि मासि रजःकाले आ-षोड़शरात्रमा-विंशतिरात्रं वा बीजाधारगात्रस्फुटनाद् बहिर्निर्गमः। निःर्गतानि च बीजानि बीजकुल्यामार्गेण प्रचलितानि बीजवाहिन्योः पुष्पित-मुखाभ्यामाह्रियन्ते, ततस्तेषां बीजवाहिनीपथेन गर्भाशये प्रवेशः। तेभ्यश्च पुंबीजसम्पर्काद् गर्भसम्भवः[5] ( १८० चित्रम् )।

---

१। बीजाधारबन्धनिका—Ligament of the Ovary. २। बीजकुल्या—Ovarian Fimbria. ३। स्त्रीबीजम्—Ovum. ४। बीजपुटकम्—Ovisac or Graafian Vesicle. ५। एष स्वाभाविको नियमः। क्वचित्तु गर्भाशयादूर्ध्वं बीजवाहिनीं प्रविश्य प्रसर्पतः शुक्रजीवाणुकस्य बीजकुल्यादौ तदुपकण्ठे वा स्त्रीबीजसंयोगादस्थानेऽपि गर्भोत्पत्तिः ( Ectopic Gestation).

दृश्यानि च प्रतिबीजकोषं बीजनिर्गमावशिष्टानि पुटकानि बीजकिणपुटक[1] संज्ञानि, विदारलक्ष्माणि च बीजनिर्गमकृतानि ( १८२ चित्रम् ) ।

**बीजवाहिन्यौ**[2], **बीजस्रोतसी** वा नाम—( १८० चित्रम् ) गर्भाशयपार्श्वकोणाभ्यां बाहुवदुभयतः प्रसृते स्वतन्त्रपेशीतन्तुभूयिष्ठे दीर्घनलिके काकपक्षनलिकाकारे। ते पक्षबन्धन्योरूर्ध्वधारानुक्रमेण पार्श्वतः प्रसृते। तयोर्बहिःप्रान्तौ प्रस्फुटितपुष्पाकारौ पुष्पितप्रान्तौ[3] नाम। ताभ्यामाह्रियन्ते मासि मासि बीजाधारगात्रस्फुटनाद् विनिर्गतानि स्त्रीबीजानि गर्भाशयप्रापणाय।

तान्येतानि स्त्रीपुंसयोः प्रजननयन्त्राणि व्याख्यातानि।

## अथ स्तनौ।

**स्तनौ**[4], **कुचौ** वा नाम — स्त्रीणां दुग्धनिर्मापकौ ग्रन्थिसङ्घातौ उरःपुरःस्थौ, तयो र्दूरस्थयोरपि प्रजननयन्त्रैरतिघनिष्ठः सम्बन्धो[5] दुर्विज्ञेयकारणः। तयोः शैशवे पुंस्तनाभ्यामविशेषः, कैशोरे वयसि तु क्रमात् पुष्टिरायौवनम्। पुष्टतमौ च तौ दृश्येते गर्भिण्याः प्रसूतायाश्च, दुग्धपूर्णत्वात्। वयःपरिणामे तु ( अकालवार्धके वा ) तयोः क्रमात् परिशोषः, प्रलम्बित्वङ्मात्रशेषता च।

तावेतौ सम्यक् परिणतौ त्वचा मेदोभूयिष्ठया कलया च परिवृतौ नातिकठिनग्रन्थिसङ्घातमयौ बिल्वफलवत् सम्पद्येते। सन्ति च एकैकस्मिन् स्तने षोड़शाऽष्टादश विंशतिर्वा वा ग्रन्थिसङ्घाताः दुग्धप्रभवाः, तेभ्यश्च सम्भूताः दुग्धवाहिन्यः[6] नाम प्रणालिकाः। ताः क्रमशः परस्परमेलकेन पुष्टाः शेषे कलसिकावत्[7] स्फारीभूता भवन्ति, सम्मिलन्ति च सर्वतः समूहिताः चूचुकं केन्द्रीकृत्य, उन्मुच्यन्ते च सूक्ष्मैर्मुखैस्तत्रैव। अन्तरालेषु च दुग्धवाहिनीनां दृश्याः मेदोऽनुविद्धसिरा-धमनीजालकैर्व्याप्ताः स्नायुमय्यः प्राचीरिकाः। ताः सर्वावरणभूतात् स्नायुमयकोषात् संभूय स्तनान्तःप्रसृताः ग्रन्थिपिण्डसङ्घातानां विभागाय ( १८३ चित्रम् )।

---

१। बीजकिण-पुटकम्—Corpus Luteum. २। बीजवाहिन्यौ, बीजस्रोतसी वा—Oviducts or Uterine tubes ( Fallopian tubes ). ३। पुष्पितप्रान्तौ—Fimbriated ends of Oviducts. ४। स्तनौ, कुचौ वा—Mammary glands or Breasts. ५। अतएव स्तनयोरत्र वर्णनम्। ६। दुग्धहारिण्यः—Lactiferous ducts. सुश्रुते तु—"पक्वे तु दुग्धहरिणीः परिहृत्य नालीः" —इत्यादि पाठे ( सु० चिकि १८ अ० ) स्तनविद्रधौ शस्त्रावचारणविधिवर्णने दुग्धहरिणीति संज्ञा। ७। कलसिकाः—Ampulæ.

[ १८३ चित्रम् ]

### स्तनाभ्यन्तरस्था दुग्धग्रन्थयः, दुग्धस्रोतांसि च।




[ दु१—दुग्धहारिण्याः कलसिकाभागः। दु२—तस्या एव चरमप्रान्तः।
क०—स्नायुजालरचिताः कोष्ठिकाः—यास्वाधीयन्ते ग्रन्थयः। ]

**चूचुकं**[1] नाम — दुग्धवाहिस्रोतसां सम्मेलनकेन्द्रभूतं स्नायुसूत्रभूयिष्ठं स्तनशिखरम्। तदावरणी च त्वक् स्वभावतः किञ्चित्ताम्रवर्णा श्यामाभा वा भवति। कृष्णमण्डलोपलक्षिता तु सा विशेषतो गर्भिण्याः गर्भलक्षणं सूचयति। तत्स्फुटनाच्च प्रायः सम्भवति स्तनाभ्यन्तरे विद्रधिः प्रसूतानाम्।

## पञ्चमोऽध्यायः।

अथातो विविधग्रन्थिवर्णनीयमध्यायं[2] व्याख्यास्यामः।

**ग्रन्थयः**[3] नाम घन-कोमलेषत्सुषिर-वस्तुविशेषसंघातमयानि शारीर-यंत्रकाणि, यानि स्वकीयैर्निःस्रवैः शरीरमभिरक्षन्ति साक्षात् परम्परया वा। ते त्रिकोण-वर्त्तुलाऽर्धचन्द्र-खगाण्डादिनानाविधाकृतयः, स्वल्पायतनाः बृहदायतना वा,

---

१। चूचुकम्—Nipple. २। एषोऽध्यायो ग्रन्थस्य चतुर्थावृत्तौ योजितः, न्यूनत्वपरिहाराय।
३। Glands ( Including Endocrine organs ).

कोष्ठादिगुहान्तस्तद्वहिश्च निर्दिष्टस्थानेषु शरीरस्य वर्त्तन्ते । तेषां स्रोतांसि स्फुटानि सूक्ष्म-स्थूलनलिकारूपेण, निगूढानि वा । निगूढानि च तानि सूक्ष्मैः सिरापथैः ( रसायनीमार्गैर्वा[1] ) स्वकीयं निःस्रवं प्रायः स्वोत्पादितवस्त्वन्तरसहितं समर्पयन्ति सार्वकायिके रक्तप्रवाहे । सन्ति चोभयविधानि वा स्रोतांसि केषाञ्चित् ये पृथगविधं निस्रवं ( वाह्यमाभ्यन्तरं च ) स्रवन्ति मार्गभेदेन । एवञ्च त्रिविधा ग्रन्थयः शरीरे—बहिःस्रवाः, अन्तःस्रवाः, उभयतःस्रवाश्चेति । सन्ति च केचिदन्ये तत्सदृशा ग्रन्थयो ये नाद्यापि विज्ञातनिःस्रवाः । सोऽयं समासतस्त्रिविधग्रन्थिपरिचयो बीजरूपः । विस्तरोऽत ऊर्ध्वम् ।

अथ बहिःस्रवा ग्रन्थयः ।

**बहिःस्रवा ग्रन्थयः**[2] खलु स्ववस्तुभ्यो निर्गतं स्थूलचक्षुर्दृश्यं निःस्रवं सूक्ष्मैः स्रोतोभिः पृथक्कृत्य स्रवन्ति बहिर्गामिनीभिः स्रोतोनलिकाभिः । ते द्विविधाः—(१) केवलबहिःस्रवाः—यथा लालाग्रन्थयः, वृक्कौ, पौरुषग्रन्थ्यादयश्च वर्णितपूर्वाः । (२) आपातबहिःस्रवाश्च ये स्थूलदृष्ट्या बहिःस्रवा एवेति लक्ष्यन्ते, सूक्ष्मपरीक्षया तु ज्ञायन्ते अन्तःस्रवा अपीति । यथा—यकृदग्न्याशय-वृषण-बीजकोषाद्याः । त एव उभयतःस्रवा नाम अग्रे वक्ष्यमाणाः ।

अथ अन्तःस्रवा ग्रन्थयः ।

**अन्तःस्रवा ग्रन्थयः**[3] पुनः सूक्ष्मपरीक्षयापि अलक्षितस्रोतसो ग्रन्थयः ये स्ववस्तुनिर्मापककोषाणुसम्भवमलक्ष्यं निःस्रवविशेषं[4] सिरापथेन रक्तप्रवाहे निःक्षिपन्ति । अतएव तेषां निःस्रोतस्का ग्रन्थयः[5]-इति व्यपदेशः । तेषां दशकमद्यापि आविष्कृतप्रभावम् । अन्तःस्रवाणाञ्च केषाञ्चिदान्तरनिःस्रवाः पृथक्कृत्य त्वक्पथेन प्रयोक्तुं शक्यन्ते, तेषामभावात् न्यूनताहेतोर्वा सम्भूतानां रोगाणां प्रतीकाराय । अन्यथाऽपि वा ते प्रयुज्यन्ते तत्क्रियाविशेषलाभाय । तत्र—

---

१ । लसीकाग्रन्थीनामत्र ग्रहणाय इदमुक्तम् । ते च रसायनीनां बहिर्मुखीनां तेभ्यो निर्गमदर्शनाद् बहिःस्रवा इव, निःस्रुताया लसीकायाः श्वेतकणिकाबाहुल्याद्, अन्ते सिरारक्तप्रवेशाच्च अन्तःस्रवा इवेति तेषां वैलक्षण्यं स्मर्त्तव्यम् । अतएव ते बहिःस्रवाः अप्यन्तःस्रवाः—इति सुवचम् ।
२ । बहिःस्रवा ग्रन्थयः — Glands with external secretions ; Exocrine glands.
३ । अन्तःस्रवा ग्रन्थयः — Endocrine glands ( or Organs ). ४ । निःस्रवविशेषः — Internal Secretion or Autocoids : Sometimes called Hormones. ५ । निःस्रोतस्का ग्रन्थयः—Ductless glands or Endocrine organs.

अथ प्लीहा, ग्रैवेयकग्रन्थिः, बालग्रैवेयकग्रन्थिः, चत्वारः परिग्रैवेयकसंज्ञा ग्रन्थयः, अधिवृक्कौ, पोषणकग्रन्थिः (अमृतग्रन्थिर्वा)—इति दशको गणः केवलान्तःस्रवाणां मुख्यग्रन्थीनां संग्राहकः, भूम्ना परिज्ञातप्रभावश्च। त एते निःस्रोतस्का[1] नाम ग्रन्थयः, अदृश्यस्रोतस्कत्वात्।

अथैषां स्थान-संस्थानकार्याणि। तत्र—

१। प्लीहा[2] नाम बृहत्तमो ग्रन्थिः सविस्तरं वर्णितपूर्वः (१६७।१६८ चित्रयोः)।

२। ग्रैवेयकग्रन्थिः[3] ग्रीवायामवटुकाधो दृश्यः पुरस्तात्। स त्र्यंगुलमात्रप्रदेशे श्वासनलिकामावेष्ट्य वर्त्तते पुरः पार्श्वयोश्च। तस्य द्वे पिण्डे वामदक्षिणसंज्ञे, ते अधोभागे सार्धाङ्गुलायतेन योजकभागेन संयोजिते पुरस्तादेव। पश्चिमतस्तु पृथग्भूते ते एकैकतो द्वौ द्वौ चणकाकारौ ग्रन्थी परिग्रैवेयकसंज्ञौ स्वोत्सङ्गे धारयतः।

[ १८४ चित्रम् ]

ग्रैवेयकग्रन्थिः (सम्मुखतो दृष्टः)।




१। निःस्रोतस्कग्रन्थयः—Ductless Glands. २। प्लीहा—Spleen. ३। ग्रैवेयकग्रन्थिः—Thyroid Gland.

सोऽयं ग्रैवेयकग्रन्थिरूर्ध्वाधःक्रमेण त्रिचतुराङ्गुलायतः पञ्चषांगुलप्रस्थश्च। तद्गुरुत्वं तु सार्धतोलकद्वयमितं पुंसाम्। स्त्रीणान्तु किञ्चिदधिकं तत्, बृहत्तरं च।

पोषणं तु तस्य उत्तराधरग्रीविकासंज्ञाभ्यां धमनीभ्यामन्तःस्तनिकादि-धमनीशाखाभिश्च। अतो बहुसिराधमनीजालकानुविद्धोऽयं ग्रन्थिरन्तर्बहिश्च।

सूक्ष्मनिर्माणं पुनरस्य ग्रन्थेरीदृशम्। आदौ सर्वावरणः कलाकोषः, ततोऽन्तःप्रसृताः कलामय्यः प्राचीरिकाः पिण्डिकाणुपिण्डिकासु तद्विभजन्यः। तथाविभक्तस्य चास्य निर्माणं सान्द्रमधुसदृश-निर्यासभरैः कोषैर्मधुचक्रवत्। ते च कोषाः षट्कोणकोषाणुकैः[१] परिवेष्टिताः। तेभ्यश्च निःस्रवति मधुसदृशो निर्यासः[२] कोषाभ्यन्तरपूरणः। तस्य च सूक्ष्मांशाः सूक्ष्मैः सिराजालकैराकृष्टाः सार्वकायिकं रक्तप्रवाहमाविशन्तीति तदान्तरनिःस्रवः वक्ष्यमाण-कार्यदर्शनादनुमीयते। सोऽसौ ग्रन्थिर्दोषजविकृतिहेतोः शनैः प्रवर्धमानो गलगण्डाख्यं रोगं जनयति। तत्र नेत्रगोलकयोर्नेत्रगुहातः स्तोकेन बहिर्निर्गमः[३], सन्त्रस्तदृष्टिता चेति विशिष्ट-लिङ्गद्वयं प्रायः।

[ १८५ चित्रम् ]

ग्रैवेयक-ग्रन्थेराभ्यन्तरनिर्माणम्।




चित्रव्याख्या—१। कोषाभ्यन्तरस्थं निर्यासवद् घनवस्तु। २। रसायनी (कर्त्तिता) ३। कोषपरिधिस्थिता वेष्टनी षट्कोण-कोषाणुकैः निर्मिता।

---

१। Cubical Epithelial Cells. २। Colloid matter. ३। Ex-opthalmic Goitre.

अथ चेदस्य ग्रन्थेः आवाल्यादल्पनिःस्रवत्वं, तदा जड़-गद्गद-मिन्मिन-भाषिणः, स्थूलाः, वामनाः स्वल्पबुद्धयश्च भवन्ति वालाः[१] ( १८७ चित्रम् )। कदाचिद् यौवने वार्धकेऽपि वा सम्भवति प्रायस्तादृश्येव दशा[२] ग्रैवेयकग्रन्थि-शोषात्। त एते रोगिणो यथार्हमात्रया पशूनां ग्रैवेयकग्रन्थिवस्तु[३]भक्षणेन शीघ्रमेव स्वास्थ्यं लभन्ते — इति वहुशो दृष्टमेतत् । तथा चास्य ग्रन्थेर्महाप्रभावता अकामेनापि स्वीकरणीया ।

३। **परिग्रैवेयकग्रन्थयः**[४] पुनः प्रायेण चत्वारः ( कदाचित् पञ्च षड् वा ), उद्दिष्टपूर्वाः। ते स्विन्नचणकाकाराः लघुनिम्बफलाकारा वा लसीका-ग्रन्थिवद् रूपेण। तेषां द्वे द्वे एकैकस्य ग्रैवेयकपिण्डस्योत्सङ्गे दृश्ये पश्चिमतः। आवरणकोषाश्च तेषां प्रतिग्रन्थि पृथगेव, वहिर्मुखस्रोतांसि तु न दृश्यानि।

[ १८६ चित्रम् ] **ग्रैवेयकग्रन्थिः, परिग्रैवेयकग्रन्थयश्च ।**

( पश्चिमतो दृष्टाः )




---

१। वाल्ये प्रादुर्भूतस्य एतद्रोगस्य 'क्रेटिनिज़्म्' ( Cretinism ) इति प्रतीच्या संज्ञा। २। तस्यैव यौवने प्रौढ़ौ वा दृष्टस्य 'मिक्सिडीमा' (myxœdema)-इति संज्ञा। ३। ग्रन्थिवस्तु च शुष्कं मुखद्वारेण प्रयुज्यते नव्यैः। तत् स्थूलानां कृशीकरणाय च प्रयुञ्जते केचित्। ४। परिग्रैवेयक-ग्रन्थयः--Parathyroid glands.

[ १८७ चित्रम् ]

ग्रैवेयकग्रन्थेः न्यूनताकृतानि लक्षणानि ।



१। जड़गद्गदभाषी स्थूलो निर्बुद्धिश्च वालकः ।

२। स एव वालको ग्रैवेयक ग्रन्थिभक्षणेन सुभाषणः शोभनाकृतिरस्थूलः सुबुद्धिश्च ।

३। स एव वालको ग्रैवेयक ग्रन्थिभक्षणावर्जनात् पुनः पूर्वावस्थः ।

अथैषां क्षुद्रत्वेऽपि महाप्रभावता निरणायि नव्यैः परीक्षकैः। अस्ति खलु मानुषाणां शोणिते स्वाभाविकः सुधाभागः[1], स च निर्दिष्टपरिमाणः अस्थ्यादीन् धातून् पुष्णाति, स्कन्दयति[2] चाभिघातादि हेतोः सद्यःस्रुतं शोणितं क्षणमात्रेण। सोऽयं सुधाभागः परिग्रैवेयकग्रन्थीनां निष्कासनात् ( इतरथा वा तत्कार्यहानेः ) मात्राल्पत्वं भजते, जनयति च विविधान् व्यानवायुविकारान्। तद्यथा— सार्वकायिकपेशीनां—विशेषतश्च करपादांगुलीपेशीनाम्—उद्वेष्टनाक्षेपकादीनि[3] लिङ्गानि, श्वासमार्गद्वारिकपेशीनामाक्षेपकहेतुका श्वासकृच्छ्रता च मुहुर्भाविनी। तान्येतानि लक्षणानि यथार्हमात्रया परिग्रैवेयकग्रन्थिभक्षणेन शोणितस्य सुधाभाग-वृद्धौ शीघ्रं विलीयन्ते—इति परीक्षितं बहुशः। अतः शोणितस्य सुधाभाग-नियन्त्रणकार्या इमे ग्रन्थयः प्राणधारणसहायाः—इति नव्याः।

४। **बालग्रैवेयकग्रन्थिः**[4] बालानां कण्ठमूलेऽवतिष्ठते उरसि च आ यौवनारम्भादिति तथासंज्ञः। तस्य हि पिण्डद्वयम् उरःफलकपृष्ठे अग्रिम-

[ १८८ चित्रम् ] **बालग्रैवेयकग्रन्थिः**

( कण्ठोरःस्थलयोः पुरोभागं विदार्य दर्शितः )




---

१। सुधाभागः—Calcium Content. २। स्कन्दनं स्त्यानीकरणम्—Coagulation.
३। उद्वेष्टनम्—Irregular Contraction—Tetany or Cramps. आक्षेपकः—Spasm.
४। बालग्रैवेयकग्रन्थिः—Thymus gland.

फुस्फुसान्तराले वर्त्तते, अधस्ताद् हृत्कोषशिखरं यावद्, ऊर्ध्वञ्च स्तोकेन कण्ठकूपमतिक्रम्य । आलम्बितश्च तद् ग्रैवेयकग्रन्थिपिण्डयोरधस्तात् स्नायुमयबन्धनीभ्याम् ।

सोऽयं ग्रन्थिरारक्तधूसरवर्णोऽनिश्चितायतनश्च, बाल्यादारभ्य यौवनारम्भं यावत् क्रमशो वर्धमानत्वात् । ततः प्रजननयन्त्राणां पूर्णविकासे तस्य क्षयारम्भः । तद्विलोपश्च ( शुष्कावशेषता वा ) प्रौढ़ानां शरीरे ।

सूक्ष्मनिर्माणं तु बालग्रैवेयकस्य प्रायो ग्रैवेयकग्रन्थिवत्, लसीकाग्रन्थिवद् वा आपातदृष्ट्या । तस्य हि तादृश एव आवरणकोषः, कलामय्यः प्राचीरिकाश्च तदन्तःप्रसृताः । कोषविभागश्च तादृगेव । कोषान्तरीयं वस्तु पुनः संहततरम् । न च सन्ति सिराधमनीवर्जमस्य बहिर्मुखानि स्रोतांसि । अन्तर्निःस्रवस्तु अस्त्येव ।

कार्यं चास्य ग्रन्थेरित्थं निर्णीयते । अस्य हि ग्रन्थेर्निष्कासनाद् बालानां अकाले यौवनोद्गमलिङ्गानि सम्भवन्ति । स्वभावाधिककालं वर्त्तमानश्चासौ यौवनलिङ्गानि विलम्बेन दर्शयति । ततो बालानां बाल्योचितसौकुमार्यरक्षणम्, अकाले यौवनलिङ्गोद्भव-वारणञ्चास्य ग्रन्थेः कार्यमिति परीक्षकाः ।

५। **अधिवृक्कौ**[1] नाम पीताभौ नातिक्षुद्रौ ग्रन्थी त्रिकोणप्रायौ, वृक्कशिखरयोः संलग्नावुद्दिष्टपूर्वौ ( १७० चित्रम् ) । तयोरेकैकस्य द्वौ भागौ अनुप्रस्थच्छेदेन दृश्यौ—( क ) बहिर्भागः पीताभवेष्टनभूतः ईषत्कठिनश्च, स बहिर्वस्तुसंज्ञः । ( ख ) अन्तर्भागः आरक्तधूसरः सुकोमलश्च मध्यभागेऽवस्थितः, अन्तर्वस्तुसंज्ञः । तयोरान्तरनिःस्रवौ पृथक्कृत्य प्रयुक्तौ स्व-स्वप्रभावं पृथगेव दर्शयतः ।

सूक्ष्मनिर्माणं च बाह्यान्तर्वस्तुनोः पृथगेव । तद्यथा—

( क ) बहिर्वस्तु[2] तावत् तनुयोजकवस्तुमयकोषावृतं समन्तात्, तदन्तश्च ईषद्दीर्घकोषाणुकमयः स्तरः, तदन्तश्च सूक्ष्मवर्त्तुलकोषाणुकमयः स्तरः उभयोश्च स्तरयोर्दृश्या मेदःकणिकाः—इति तस्य निर्माणवैशिष्ट्यम् ।

( ख ) अन्तर्वस्तुनः[3] सूक्ष्मनिर्माणं तु अन्यविधम् । तत्र हि सिराधमनीजालकानामतिप्राचुर्यम्, तदन्तरालेषु च कोषविभक्तेषु दृश्याः नाड़ीकन्दिकाः नाड़ीप्रतानाश्च, कोषाणुकानि च बहुकेन्द्रकणायुतानि । न च तत्रोपलभ्यन्ते मेदःकणिकाः बहिर्वस्तुनीव—इति तस्य वैचित्र्यम् ।

१। अधिवृक्कौ—Supra-renal Bodies or Adrenals. २। बहिर्वस्तु—Cortex. ३। अन्तर्वस्तु—Medulla.

[ १८६ चित्रम् ]

## अधिवृक्कस्य स्वरूपम्।




१—दक्षिणाधिवृक्कीया सिरा। २—दक्षिणाधिवृक्कस्य यकृत्स्पर्शी प्रदेशः। ३—तस्यैव अधरमहासिरास्पर्शी प्रदेशः। ४—वामाधिवृक्कस्य आमाशयस्पर्शी प्रदेशः। ५—तस्यैव अग्न्याशयस्पर्शी प्रदेशः। ६—वामा अधिवृक्कीया सिरा।

प्रभावस्तु अधिवृक्क-बहिर्वस्तुनः प्रधानतः प्रजननयन्त्रेषु लक्षणीयः। बाल्य एवास्य वृद्धेरकाले यौवनागमः स्त्रीपुंसयोः, स्त्रीणां पुरुषोचितशरीरसंहननञ्च। अथ चेदिदं रोगवशात् क्षीयते, अपाकृष्यते वेदं बहिर्वस्तु शरीरात्, तर्हि सम्भवति दारुणो रोगः[1] प्राणघाती। तस्येमानि लिङ्गानि — त्वचः कृष्णता, बलमांसक्षयः, दौर्बल्यं, सिराधमनीनां क्रमशो रिक्तता, हृत्सादश्चान्ते—इति। तत्राधिवृक्क-बहिर्वस्तुनः सारश्चेत् प्रयुज्यते त्वाचपथेन सिरापथेन वा तर्हि शीघ्रमुपशमो लिङ्गानामिति बहुधा परीक्षितं विशेषज्ञैः। आरोग्यसम्भवश्च तत्र काले प्रतीकारात्।

प्रभावश्चान्तर्वस्तुनः स्वतन्त्रनाड़ीतन्त्रे, स्वतन्त्रपेशीतन्त्रे, रक्तसंवहन-यन्त्रतन्त्रेषु च विशेषतो लक्षणीयः। दृश्यन्ते हि तत्सारस्य त्वाचपथेन सिरापथेन वा प्रयोगादेतानि लिङ्गानि—हृद्यन्त्रस्य अतिद्रुत-दुर्बलगतेरपि मन्दता, संयतवेगता च, धमनीवेष्टनस्वतन्त्रनाड़ीतन्त्रस्य उत्तेजनात् धमनीप्राचीरिकाणां संकोचः तत्कृता रक्तसंहतिवृद्धिश्च[2] शरीरे, आशयद्वारिकपेशीनां सपदि सङ्कोचः, तमकश्वासादौ संकुचितानां क्लोमकाण्डिकानां विस्फारणम्, नेत्रकनीनकयोर्विस्तारः, विशेषतो

१। Addison's disease. २। Rise of Blood-pressure.

सार्वकायिकशोणिते मधुरकभागवृद्धिश्चेति। अतएव हृद्दौर्बल्ये, तमकश्वासादौ बहुधा प्रयुज्यतेऽस्य सारं त्वाचपथेन नव्याः, सद्यःफलप्रदत्वात्।

६। **पोषणकग्रन्थिः**[1] अमृतग्रन्थिर्वा नाम निम्बफलसदृशो ग्रन्थिर्महाप्रभावः करोटिगुहान्तःस्थः। स जतूकास्थिशरीरपृष्ठस्थे पोषणकखाते[2] वर्त्तते, मस्तिष्कतलभागेन तद्वृन्तिकया सम्बद्धः। तस्य त्रयो भागाः—अग्रिमपिण्डम्, पश्चिमपिण्डम्, मध्यपत्रिका चेति। द्वावेव वा भागौ निर्माणवैशेष्यात्—पूर्वार्धः, पश्चिमार्धश्चेति। मध्यपत्रिकायाः पश्चिमार्धान्तर्गतत्वात्, निर्माणसादृश्याच्च। तयोरान्तरनिःस्रवौ पृथक्प्रभावौ—इति परीक्षकाणां सिद्धान्तः। तत्र—

(क) पोषणकपूर्वार्धस्य सूक्ष्मनिर्माणं सूक्ष्मसिकतासदृशीभिः कणिकाभिः सिराधमनीजालकान्तर्निविष्टाभिः। तदान्तरनिःस्रवस्य कार्यं त्रिविधम्—प्रथममस्थ्नां सम्यक् पोषणं वर्धनञ्च, द्वितीयं प्रजननयन्त्राणां यथाकालं यथार्हञ्च संवर्धनम्, तृतीयं मानसवृत्तीनां यथार्हं क्रमशो विकासनम्—इति। दृश्यते हि पोषणकपूर्वार्धनिःस्रवस्य हानौ वयोवृद्धावपि बालकवदेव शरीरम्, अस्थिपोषणाल्पत्वात्।

[ १६० चित्रम् ]

**पोषणकग्रन्थिः** (विदार्य दर्शितः)।




चित्रव्याख्या—१। दृष्टिनाडीयोजनिका। २। ब्रह्मगुहा †। ३·४-७। पोषणकग्रन्थेः मध्यभागः। ५। अग्रिमपिण्डम्। ६। मध्यपत्रिका। ८। पश्चिमपिण्डम्।

---

१। पोषणकग्रन्थिः (पोषणिका वा)—Pituitary gland or body. २। पोषणकखातम्—Sella Turcica in Sphenoid bone. † ब्रह्मगुहा—Third Ventricle of Brain.

उपचीयते चास्य मेदोधातुविशेषेण धात्वन्तरपोषणनिरोधात्, प्रजननयन्त्राणां यौवनोचितपुष्ट्यभावात्, मानसवृत्तीनां विकासाल्पत्वाच्च। अथ चेत् कस्यापि पोषणकपूर्वार्धो[1] वर्धतेऽतितरां बाल्ये यौवनारम्भे वा, तदा समधिकमुपचीयन्ते अतिदीर्घीभवन्ति चास्याङ्गानि—येन महाप्रांशुर्विशालकर-पाद-मुखमण्डलश्चासौ लक्ष्यते, पूर्णयौवनलक्षणश्चाऽकालेऽपि। अतएवानुमीयते—शरीरपोषणसहायोऽसौ ग्रन्थिर्विशेषेणेति, तस्मात् पोषणग्रन्थिरिति अमृतग्रन्थिरिति वाऽस्य संज्ञा। इदमपि निर्णीतं परीक्षकैर्यत् पोषणकपूर्वार्धस्य सारप्रयोगेण ग्रैवेयकग्रन्थेः स्त्रीणां बीजाधारग्रन्थेश्च क्रियोत्तेजनं सुशकमिति।

(ख) पोषणकग्रन्थेः पश्चिमार्धः[2] पुनः मध्यपत्रिका[3]वृतो विचित्रनिर्माणश्च। सम्बन्धश्चास्य विशेषतो मस्तिष्कस्य प्राणगुहया पोषणकवृन्तिकाद्वारेण। तद्विशेष-वर्णनं तु नाड़ीखण्डे ( ८४ पृष्ठे ) द्रष्टव्यम्। सूक्ष्मनिर्माणं पुनरस्य नाड़ीतन्त्वोक्त-क्षेत्रवस्तुवद्वस्तुना। मध्यपत्रिकानिर्माणं तु निर्यासगर्भैरणुकोषैरिति विशेषः।

अस्य च ग्रन्थेः पश्चिमार्धस्य कार्यं परीक्षकैरित्थं निर्णीतम्। अस्य सारांशश्चेत् पृथक्कृत्य प्रयुज्यते त्वक्पथेन सिरापथेन वा, तदेमानि लिङ्गानि प्रादुर्भवन्ति—शोणितस्य माधुर्यवृद्धिः, सिराधमनीनां प्राचीरसङ्कोचाद् रक्तचाप[4]-वृद्धिः, आन्त्रपेशीनां वस्तिपेशीनां गर्भाशयपेशीनाञ्च दृढ़सङ्कोचः, मूत्रस्य मात्राल्पत्वं, हृद्बलवृद्धिश्च—इति। अतएवास्य सारः हस्तिमेहे वहुमूत्रताप्रतिषेधाय, गर्भस्रावे, गर्भपाते, प्रसवानन्तरं वा रक्तस्रावनिवारणाय च प्रयुज्यते कुशलैः। हृद्दौर्बल्ये च प्रत्यक्षफलत्वाद् बहुसमादृतोऽयं ग्रन्थिसारः पाश्चात्यानाम्।

सन्ति च मातृकाग्रन्थ्यादयः केचनाऽन्येऽपि क्षुद्रा ग्रन्थयस्तादृशा एव स्वरूपतः। ते अपरिज्ञातकार्यत्वान्न चिन्त्यन्ते विस्तरेण। तत्परिचयमात्रन्तु यथा—

( १ ) मातृकाग्रन्थी[5] नाम द्वौ क्षुद्र ग्रन्थी गलपार्श्वयोः—तयोरेकैको महा-मातृकधमन्याः विभागस्थाने एकैकतो दृश्यः।

( २ ) तृतीयदृक्कन्दिका[6] नाम—क्षुद्रग्रन्थिः मस्तिष्कमूलपिण्डस्याऽधो मध्यरेखायां दृश्यः। तं योगिनां योगसाधनेन, केषाञ्चित् प्राणिनां तु स्वभावेन, तृतीयदृगुन्मेषमूलं मन्यन्ते केचित्। तद्वर्णनं नाड़ीखण्डे ( ८४ पृष्ठे ) द्रष्टव्यम्।

---

१। पोषणकपूर्वार्धः—Anterior Pituitary. २। पोषणकग्रन्थेः पश्चिमार्धः—Posterior Pituitary. ३। मध्यपत्रिका—Pars Intermedia. ४। चप् कल्पने—इति धातो निष्पन्नो चाप शब्दः पीड़नार्थो ( To mean pressure ) मन्तव्यः। ५। मातृकाग्रन्थी—Carotid Glands ( Glomus Caroticus ). ६। तृतीयदृक्कन्दिका—Pineal body.

(३) कन्दमूलग्रन्थिः[१] नाम — क्षुद्रग्रन्थिः चटकाण्डवद्रूपः इड़ा-पिङ्गलाख्ययोः स्वतन्त्रनाड़ीशृङ्खलयोर्मेलकस्थाने, अनुत्रिकास्थनः उत्संगे वर्त्तते— इति नाड़ीखण्डे वर्णनीयम् । तं "ध्वजाधो.गुदोर्ध्वं खगाण्डवद्"—इति वर्णयन्ति षट्चक्रवर्णने तन्त्रकाराः[२] ।

अथ उभयतःस्रवा ग्रन्थयः ।

सन्ति खल्विह केचन ग्रन्थयः शारीरे येषां सत्स्वपि वहिर्मुखेषु स्रोतःसु बहिर्निःस्रववाहिषु, निगूढ़ान्तरनिःस्रवा अपि स्रवन्ति शोणितजालकान्तरेषु । त एते **उभयतःस्रवा** नाम ग्रन्थयः । तेषां षट् आविष्कृततमाः यथा—(१) यकृत्, (२) अग्न्याशयः, (३।४) वृषणग्रन्थी, (५।६) वीजकोषौ—इति । तेषां स्थान संस्थान-निर्माणानि सकार्याणि वर्णितपूर्वाणि । तत्र विशेषाः यथा—

१। **यकृत्** नाम सुमहान् ग्रन्थिः ऊरोगुहायां व्याख्यातचरः । तस्य स्थूलनिःस्रवः—मलभूतं पित्तं यद् द्वाभ्यां स्रोतोभ्यामन्ते मिलिताभ्यां निष्पतति ग्रहण्याम् । सूक्ष्मनिःस्रवास्तु—रञ्जकपित्तादयो यकृत्कार्यवर्णनमुखेनोद्दिष्टपूर्वाः ।

२। **अग्न्याशयः** वर्णितपूर्वः । तस्य स्थूलनिःस्रवः आग्नेयरसो नाम यो ग्रहण्यां निष्पतति पृथक् स्रोतसा पित्तनलिकया मिलितेन । तस्याऽन्तर-निःस्रवः अग्निद्वीपाख्यभागेभ्यः प्रवर्त्तमानो रक्तस्रोतसि सञ्चरन् रक्तस्य 'मधुरक' भागं सर्वधातुपोषणाय परिणमयति । सोऽयं पृथक्कृत्य प्रयुक्तः सद्यःफलदो मधुमेहादौ—इति सूचितपूर्वमग्न्याशयवर्णने ।

३।४। **वृषणग्रन्थी मुष्कौ** वा नाम शुक्रनिर्मापकौ ग्रन्थी वर्णितपूर्वौ । तयोः स्थूलनिःस्रवो वहिर्मुखः शुक्रसंज्ञः, स विचित्रप्रभावेभ्यो ग्रन्थिवस्तुनिर्मापक-कोषाणुकेभ्यो निःसरति । शुक्रान्तश्च दृश्यन्ते सूक्ष्मसूत्राकारा अतिचञ्चलाः मुण्ड-पुच्छवन्तो जीवाणवः[३] (१६१।१६२ चित्रयोः) ते गर्भोत्पादनाय कल्पन्ते स्त्री-वीजाणुकसंयोगेन । सूक्ष्मनिःस्रवस्तु मुष्कयोः शुक्रसारसंज्ञः शुक्रेण सहोत्पद्यमानः साक्षाद् रक्तस्रोतसि प्रविशति, शुक्रप्रपिकयोः सञ्चिताद् वा शुक्रादाऽकृष्यते, तदेव शुक्रसाराख्यं वस्तु शोणिते सञ्चरत् पुरुषोचितं शरीरावयवसंस्थानं श्मश्रुगुम्फादि-लिङ्गानि च जनयति । सोऽयमान्तरनिःस्रवः सर्वशरीरचरः शुक्रसारसंज्ञः । स एव क्वचित् शुक्रसंज्ञयाऽपि व्यपदिष्टः प्राचां ग्रन्थेषु । न हि स्थूलं शुक्रं सर्वशरीरचरं दृश्यते —इति शुक्रसारार्थमेव तत्र शुक्रपदं मन्तव्यम् ।

---

१। कन्दमूलग्रन्थिः—Glomus Coccygens. २। इदं पूर्णानन्द कृतात् षट्चक्राख्य प्रसिद्धग्रन्थात् । ३। शुक्रजीवाणवः—Spermatozoa.

# वृषणसम्बन्धि सूक्ष्मशारीरचित्रद्वयम् ।

( १६१ चित्रम् )

मुष्कान्तरीय शुक्रस्रोतोऽन्तरस्था क्रिमिसदृशाः जीवाणवः ।




( १६२ चित्रम् )

शुक्रान्तर्दृश्यं क्रिमिसदृशं जीवाणुद्वयम् ( एकैकजीवकोषाणुमयम् )




१६१ चित्रव्याख्या—क—गुच्छाकारेण स्थिताः शुक्रजीवाणवः । ख—तदुत्पादकाः कोषाणुकाः । ग—तद्धारकाः कोषाणुकाः । घ—सूक्ष्मकलामयी आवरणी । ङ—योजकवस्तु ।

१६२ चित्रव्याख्या - मु—शुक्रजीवाणोर्मुण्डम् । श—तस्यैव शरीरम् । पु—तस्यैव पुच्छम् ।

५।६ । अथ स्त्रीणां **बीजकोषौ** अपि पुंसां मुष्कवदुभयतःस्रवौ वर्णितचरौ[1] । तयोर्बाह्यनिःस्रवो गर्भोत्पादकानां बीजाणूनां धारणः, ते हि मासि मासि आर्त्तवकाले प्रक्षरन्ति बीजवाहिन्योः, नीयन्ते च गर्भाशये आषोडशरात्रम् आ-विंशतिरात्रं वेत्युक्तम् । आर्त्तवशोणितन्तु गर्भाशयान्तरीयकलया सह निःस्रवत् तेन मिश्रीभवति, न तु तदेव शोणितं गर्भकरम्[2] । आन्तरनिःस्रवस्तु बीजकोषयोः पृथगेव, स शुक्रसारवत् सर्वशरीरचरः, तत्प्रभावादेव योषितां यौवनारम्भात् प्रभृति सौन्दर्य-सौकुमार्यादिकं स्तन-योनि-गर्भाशयादिपरिवर्त्तनविशेषाश्च प्रादुर्भवन्ति । स च सद्योमारितस्त्रीपशूनां बीजकोषाभ्यां पृथक्कृत्य त्वक्पथेन प्रयुक्तो नष्टार्त्तवानामार्त्तवप्रदो भवति प्रायशः—इति नव्यपरीक्षकाणां परीक्षासिद्धः सिद्धान्तः ।

इति पञ्चमोऽध्यायः * ।

---

१ । २५३ पृष्ठे ( १८२ चित्रम् ) । २ । शुक्र-शोणितसंयोगेन गर्भोत्पत्तिरिति प्राचामुक्तौ शोणितपदेन बीजार्त्तवमेव लक्ष्यते, आर्त्तवशोणितस्य तद्धारकत्वात् । * एषोऽध्यायः नवीन संस्करणे सं १९९८ वर्षे योजितः ।

इति

वङ्गाधिपतिश्रीमन्महाराजलक्ष्मणसेननरपतेः सभापण्डितस्य महाकविधोयीसेन-
कविराजस्य वंशधरेण श्रीमन्नारायणकरुणावतारश्रीकृष्णचैतन्यतनयीकृत-
धन्यजनिश्रीमद्रघुनन्दनगोस्वामिदौहित्रकुलोद्भवेन निखिलराढभूमि-
सौरभप्रभवश्रीखण्डपुरवास्तव्य-विद्याकल्पद्रुमेत्यन्वर्थनामधेय-
सर्वतन्त्रस्वतन्त्रश्रीविश्वनाथोपमविश्वनाथकविराजात्मजेन
महामहोपाध्याय-श्रीगणनाथसेनशर्म-सरस्वती-
विद्यासागर-वैद्यावतंस एम्.ए, एल्, एम्, एस्
इत्याद्युपाधिकेन प्राणाचार्येण विरचिते

## प्रत्यक्षशारीरे

## पेशी-धमनी-सिरा-रसायन्याशयादिवर्णनीयो

## नाम

## द्वितीयो भागः

समाप्तः ।

। श्रीकृष्णचरणार्पणमस्तु ।

"प्रत्यक्षशारीर"मधिकृत्य निखिलभारतीय-वैद्यशिरोमणीनां

# अप्रार्थितप्रशंसा-वचनानि

**मुम्बई वास्तव्यानां, भारतविश्रुतानां बहुवैद्यकग्रन्थसम्पादकानामायुर्वेदमार्त्तण्ड पं० श्रीयादवजीत्रिकमजी आचार्याणामभिप्रायः ( आयुर्वेदीयग्रन्थमालातः )—**

"कलिकातानगरवास्तव्यैः वैद्यावतंस-कविराज श्रीगणनाथसेन-महोदयैः संस्कृतभाषया विरचितस्य 'प्रत्यक्षशारीरस्य' प्रथमभागमधिगम्य सत्यं सन्तोषमावहति चेतः। एतत्त्ववश्यं स्वीकरणीयम् यद्वर्त्तमानसमयेऽवशिष्टेषु चरकसुश्रुताद्यायुर्वेदग्रन्थेषु यच्छारीरज्ञानं वर्त्तते, न तच्छल्य-चिकित्सायां कायचिकित्सायां वा पर्याप्तम्। त्रुटिमेनां सम्यक् पूरयितुं कविराजमहोदयैः समारब्धोऽयं यत्नः। कृतकृत्याश्च ते खल्वस्मिन् यत्ने। एतत्कार्यं सम्पादयितुं श्रीगणनाथसेन व्यतिरिक्तो न कोऽपि पुरुषः सम्प्रति भारतवर्षमलङ्करुते। यतो ये प्राच्यायुर्वेदाभिज्ञा वैद्याः सन्ति न ते प्रत्यक्षीकृतशारीरतत्त्वाः, ये च प्रतीच्यायुर्वेदाभिज्ञा भिषजो डाक्टरपदवाच्याः, न ते प्राच्यायुर्वेद-मर्मज्ञाः, न वा संस्कृतभाषयेदृशग्रन्थरचनायां समर्थाः। श्रीगणनाथसेनास्तु प्राच्यप्रतीच्योभय-भिषग्विद्यामर्मज्ञाः, प्रत्यक्षीकृतशारीरतत्त्वाः, संस्कृतभाषया गद्यपद्यरचनायां चातीव प्रौढाः। यदा खलु भारतवर्षे ईदृशग्रन्थानामध्यापनं, शारीरतत्त्वस्य प्रत्यक्षतः शिक्षणं च प्रचरिष्यति, स एवास्माकं मृतप्रायस्यायुर्वेदस्य पुनरुज्जीवनारम्भदिवसः।"

**मद्रासवास्तव्यानां वैद्यरत्नोपाधिक पं० डो० गोपालाचार्याणाम्—**

"एष ग्रन्थः सम्पूर्णतां प्राप्तः आयुर्वेदजलनिधेः कौस्तुभमिव भविष्यति। अवश्यपाठ्योऽयं छात्राणाम्। ईदृशं दुष्करं कर्म सम्पादयितुं साम्प्रतं भवानिव भवानेव दृश्यते।"

**कानपुर निवासिनां चिकित्सक-चूडामणि पं० श्रीरामेश्वरमिश्र वैद्यशास्त्रिणाम्—**

"अनेकविरुदावलीप्रोज्ज्वला आत्मीयैस्तेजोभिरिदानीं कलिकाताभिधां महानगरी-मलङ्कुर्वाणाः "सम्प्रति शल्यतन्त्रवञ्चितो ह्यायुर्वेद" इत्यभिसूयया तं परैर्विगर्हितप्रायमालोच्य प्रत्यक्षशारीराभिधं ग्रन्थरत्नं विरचयन्तो निखिलायुर्वेदोपजीविनां भिषजां लोकानाञ्च मनो रञ्जयन्तो धन्यवादाभिनन्दनार्हाः श्रीमन्तो गणनाथा विद्याचञ्चवो विपश्चिद्गुरवः समुल्लसन्तितराम्,—यदेते महानुभावा निद्राणमप्यायुर्वेदं जगति प्रथयितुम् औरभ्र-पौष्कलावतादिमुनिगणानां नाथाः सुश्रुता इवाऽवातरन्निति।"

**रत्नमाला ( चम्पारन ) वास्तव्यानां सुप्रसिद्ध-विद्यावयोवृद्ध-वैद्यप्रवरानां पं० श्रीचन्द्रशेखरधरशर्मणाम्—**

"प्रत्यक्षशारीरं निर्मितवता भवता आयुर्वेदस्य विकलमङ्गं यथा पुनरपि सकलं व्यधायि, नाद्यावधि केनापि सुशकं तद्भूत्। सत्यमेव विश्वसिमि, यथा वेदोद्धाराय भगवतो व्यासस्य प्रादुर्भावः समभूद्, यथा च धर्मोद्धाराय श्रीशङ्कराचार्यपादानामवतारोऽभवत्, तथा आयुर्वेदो-द्धारार्थमेव भवतामाविर्भाव इति।"

**नेपालमहाराजान्तिकस्थ राजवैद्यानां श्रीमतां रामदास भिषक्प्रवराणाम्—**

"हन्त सनाथीकृतो लोकः। "प्रत्यक्षशारीर" तत्त्वामृतपानलोलुपा रमन्ते वैद्यलोकाः यतस्ते स्वीयविद्यायां शल्यतन्त्रस्य प्रचाराभावात् नानाविधशास्त्रनिपुणा अपि नखदन्तभग्ना इव भ्रमन्ति। तादृशानां महात्मनामन्येषाञ्च वैद्यविद्याजिज्ञासूनामुपकाराय प्रत्यक्षशारीराख्यो मार्गः प्रदर्शितो भवद्भिरेव प्रथमः"—इति।

कलिकातावास्तव्यानां कविरत्नोपाधिक-विद्वद्वर कविराजवर्य श्रीराजेन्द्रनारायण सेन महोदयानामभिमतम्—

"प्रत्यक्षदृष्ट-नरदेहतत्त्ववर्णनपरं संस्कृतभाषया सङ्कलितं पुस्तकमिदं शारीरतत्त्वबोधकैश्चित्रैस्तथा सुसिद्धान्तनिकरैरन्वर्थपरिभाषाप्रकटनैश्च अत्युपादेयतया प्रतिभाति। सफलश्रमोऽयं ग्रन्थकारः। अध्येतारश्च सर्वथा सिद्धार्थाः स्युरिति।"

वैद्यरत्नोपाधिधारिणां प्राच्यप्रतीच्यशास्त्रविदुषां कविराज श्रीयोगेन्द्रनाथ सेन विद्याभूषण, एम्, ए, महाशयानामभिप्रायः—

"प्रत्यक्षशारीरं" दृष्ट्वा नितरां ह्लादितोऽस्मि। अस्य भाषाया उत्कर्षो विषयस्य गौरवं संवदत्येव। अस्थिसंख्यानादि प्रस्तावेषु समधिकं वैदुष्यमत्र प्रकटीकृतम्। सिद्धान्तानां चमत्कारित्वं च सर्वैर्वांगीकर्त्तव्यम्। ग्रन्थोऽयं वैद्यानामुपादेयो भविष्यतीत्याशास्ते—योगीन्द्रनाथ सेनः।"

कलिकातास्थ भिषक्वराणां कविराज श्रीश्यामादास वाचस्पति महोदयानाम्—

"धान्वन्तरीय-निबन्ध-प्रतिसंस्कारमेनं वदतां कमपि धीविभ्रमं नावैमि। कालवशाद् विपरिणम्यमाने जगति विविधेषु खल्वपि विषयेष्ववश्यम्भावी प्रतिसंस्कारः। यो यो मनीषिशिता देशकालपात्राण्यनुसृत्य तमनुतिष्ठति स तु नायकपदवीमलङ्कुर्वाणो धन्यवचनभाग् भवति। प्रणेता तावत् प्रत्यक्षशारीरस्य गणनाथो धन्यवचनभूमिः। नवीनतत्त्वजिज्ञासु-धान्वन्तरीयाणामन्येषाञ्चायमुपकर्त्ता, चेतश्चमत्कर्त्ता च सम्पत्स्यते।"

श्रीखण्डवास्तव्य-सर्वतन्त्रस्वतन्त्र-कविराज श्रीराधिकानाथ राय कविरत्नानाम्—

इतः प्राग् द्विसहस्रवर्षकालेनापि यत्कार्यं कर्त्तुमशक्यमासीदतीतैर्वर्त्तमानैश्च वैद्यवर्यैः, अधुना प्राच्यप्रतीच्योभयशास्त्रपारदर्शिना कुशाग्रधीसम्पन्नेन श्रीमता गणनाथसेन-विद्यानिधि महोदयेन तादृग् अतिदुरूहकार्यं लीलया सुष्ठु कृतमिति तु महच्चित्रमेव। ग्रन्थस्य भाषासम्पद्वर्णनावैचित्र्यञ्च मामिदं वक्तुं मुखरयति यद् अपि खलु चरकमुनिरेष उत वा भगवान् शङ्कराचार्यः, उत वा कोप्यन्यः प्राचीन ऋषिः योऽधुना पुनः पृथिव्यामाविर्भूय आयुर्वेदशास्त्रस्य चिरन्तनमभावं दूरीकर्त्तुमित्थं प्रयतते।"

कुचविहारराज्याधिपति-चिकित्सकानां सुप्रसिद्ध "वनौषधिदर्पण" ग्रन्थकृतां कविराज श्रीविरजाचरण काव्यतीर्थ कविभूषण महोदयानाम्—

"प्रत्यक्षदृष्टनिखिलार्थकमद्य शास्त्रमुद्द्योतयन्तं श्रीमद्गणनाथसेनं को नाम नार्हत्यभिनन्दितुं जनहितकामी। अस्तु निर्विघ्नपरिसमाप्तिः प्रत्यक्षशारीरस्य। बीजरूपं धन्वन्तरिप्रोक्तं शारीरतत्त्वं महीरुहसदृशेन प्रत्यक्षशारीरेण प्रपञ्चयता श्रीमद्गणनाथेन "कुशलेनाभिपन्नं तद् बहुधाभिप्ररोहति" इति धन्वन्तरिवाक्यम् सफलीकृतम्। पारिभाषिकसंज्ञारचनायामभिधेयवर्णने, चित्रव्याख्यायां, मुद्रणव्यापारे च ग्रन्थकर्त्तुर्या श्रमशीलता, कार्यपटुता, लिपिकुशलता, गभीरदर्शिता च परिस्फुटा, कालेऽस्मिन् पाल्लविकोत्पातबहुले सुदुर्लभैव सा।"

# प्रत्यक्षशारीरम्

विद्यासागर-प्राणाचार्य्योपाधिक-

महामहोपाध्याय श्रीगणनाथसेन-शर्म्म-सरस्वती,

एम्-ए, एल्-एम्-एस्-

महाशयेन विरचितः

प्रत्यक्षदृष्ट-नरदेहतत्त्व-वर्णनपरः

## शारीरग्रन्थः

तस्य चायं

## नाडीखण्डेन्द्रियखण्डवर्णनीयो नाम

## तृतीयो भागः ।

तदात्मजेन

M. Sc., कविरत्नोपाधिक

कविराज श्रीसुशीलकुमार सेन-शर्म्मणा

कलकत्ता, चित्तरञ्जन एविन्युस्थ-

कल्पतरु प्रासादतः

प्राकाश्यं नीतः ।

( सं० १९९२ )

मूल्यम् ६)

**कलिकातावास्तव्यानां कविरत्नोपाधिक-विद्वद्वर कविराजवर्य्य श्रीराजेन्द्रनारायण सेन महोदयानामभिमतम्—**

"प्रत्यक्षदृष्ट-नरदेहतत्त्ववर्णनपरं संस्कृतभाषया सङ्कलितं पुस्तकमिदं शारीरतत्त्वबोधकैश्चित्रैस्तथा स्वसिद्धान्तनिकरैरन्वर्थपरिभाषाप्रकटनैश्च अत्युपादेयतया प्रतिभाति। सफलश्रमोऽयं ग्रन्थकारः। अध्येतारश्च सर्वथा सिद्धार्थाः स्युरिति।"

**वैद्यरत्नोपाधिधारिणां प्राच्यप्रतीच्यशास्त्रविदुषां कविराज श्रीयोगेन्द्रनाथ सेन विद्याभूषण, एम्, ए, महाशयानामभिप्रायः—**

"प्रत्यक्षशारीरं" दृष्ट्वा नितरां ह्लादितोऽस्मि। अस्य भाषाया उत्कर्षो विषयस्य गौरवं संवदत्येव। अस्थिसंख्यानादि प्रस्तावेषु समधिकं वैदुष्यमत्र प्रकटीकृतम्। सिद्धान्तानां चमत्कारित्वं च सर्वैरेवांगीकर्त्तव्यम्। ग्रन्थोऽयं वैद्यानामुपादेयो भविष्यतीत्याशास्ते—योगीन्द्रनाथ सेनः।"

**कलिकातास्थ भिषक्वराणां कविराज श्रीश्यामादास वाचस्पति महोदयानाम्—**

"धान्वन्तरीय-निबन्ध-प्रतिसंस्कारमेनं वदतां कमपि धीविभ्रमं नावैमि। कालवशाद् विपरिणम्यमाने जगति विविधेषु खल्वपि विषयेष्ववश्यम्भावी प्रतिसंस्कारः। यो यो मनीषेशिता देशकालपात्राण्यनुसृत्य तमनुतिष्ठति स तु नायकपदवीमलङ्कुर्वाणो धन्यवचनभाग् भवति। प्रणेता तावत् प्रत्यक्षशारीरस्य गणनाथो धन्यवचनभूमिः। नवीनतत्त्वजिज्ञासु-धान्वन्तरीयाणामन्येषाञ्चायमुपकर्त्ता, चेतश्चमत्कर्त्ता च सम्पत्स्यते।"

**श्रीखण्डवास्तव्य-सर्वतन्त्रस्वतन्त्र-कविराज श्रीराधिकानाथ राय कविरत्नानाम्—**

इतः प्राग् द्विसहस्रवर्षकालेनापि यत्कार्य्यं कर्त्तुमशक्यमासीदतीतैर्वर्त्तमानैश्च वैद्यवर्य्यैः, अधुना प्राच्यप्रतीच्योभयशास्त्रपारदर्शिना कुशाग्रधीसम्पन्नेन श्रीमता गणनाथसेन-विद्यानिधि महोदयेन तादृग् अतिदुरूहकार्य्यं लीलया सुस्थु कृतमति तु महच्चित्रमेव। ग्रन्थस्य भाषासम्पद्वर्णनावैचित्र्यञ्च मामिदं वक्तुं मुखरयति यद् अपि खलु चरकमुनिरेष उत वा भगवान् शङ्कराचार्यः, उत वा कोप्यन्यः प्राचीन ऋषिः योऽधुना पुनः पृथिव्यामाविर्भूय आयुर्वेदशास्त्रस्य चिरन्तनमभावं दूरीकर्त्तुमित्थं प्रयतते।"

**कुचविहारराज्याधिपति-चिकित्सकानां सुप्रसिद्ध "वनौषधिदर्पण" ग्रन्थकृतां कविराज श्रीविरजाचरण काव्यतीर्थ कविभूषण महोदयानाम्—**

"प्रत्यक्षदृष्टनिखिलार्थकमद्य शास्त्रमुद्द्योतयन्तं श्रीमद्गणनाथसेनं को नाम नार्हत्यभिनन्दितुं जनहितकामी। अस्तु निर्विघ्नपरिसमाप्तिः प्रत्यक्षशारीरस्य। वीजरूपं धन्वन्तरिप्रोक्तं शारीरतत्त्वं महीरुहसदृशेन प्रत्यक्षशारीरेण प्रपञ्चयता श्रीमद्गणनाथेन "कुशलेनाभिपन्नं तद् बहुधाभिप्ररोहति" इति धन्वन्तरिवाक्यम् सफलीकृतम्। पारिभाषिकसंज्ञारचनायामभिधेयवर्णने, चित्रव्याख्यायां, मुद्रणव्यापारे च ग्रन्थकर्त्तुर्या श्रमशीलता, कार्यपटुता, लिपिकुशलता, गभीरदर्शिता च परिस्फुटा, कालेऽस्मिन् पाल्लविकोत्पातबहुले सुदुर्लभैव सा।"

# प्रत्यक्षशारीरम्

विद्यासागर-प्राणाचार्य्योपाधिक-

**महामहोपाध्याय श्रीगणनाथसेन-शर्म्म-सरस्वती,**

**एम्-ए, एल्-एम्-एस्-**

महाशयेन विरचितः

प्रत्यक्षदृष्ट-नरदेहतत्त्व-वर्णनपरः

## शारीरग्रन्थः

तस्य चायं

**नाडीखण्डेन्द्रियखण्डवर्णनीयो नाम**

**तृतीयो भागः ।**

तदात्मजेन

M. Sc., कविरत्नोपाधिक

**कविराज श्रीसुशीलकुमार सेन-शर्म्मणा**

कलकत्ता, चित्तरञ्जन एविन्युस्थ-

कल्पतरु प्रासादतः

प्राकाश्यं नीतः ।

( सं० १९९२ )

मूल्यम्—रु० ६)

तृतीयभागे चित्रसंख्या मष्टिः—१३२। वहुवर्ण चित्राणि—११।

मुद्राकरकराघातैर्वाणी चेद् विकला क्वचित् ।
मात्रासंयोजनैरेतां सान्त्वयन्तु भिषग्वराः ॥*

[ * शुद्धिपत्रस्यान्ते द्रष्टव्यम् । ]

# प्रत्यक्षशारीरस्य

तृतीयभागारम्भे ग्रन्थकर्त्तुर्निवेदनम्।

ओं नमः श्रीकृष्णाय।

ओं नमो ब्रह्म-प्रजापत्यश्वि-वासव-धन्वन्तरि-सुश्रुत प्रभृतिभ्यः।

मुग्धव्रजवधूस्वान्त-दुरन्तमुरलीध्वनिः।
यस्य नाद्यापि विश्रान्तः सोऽश्रान्तं विदधातु माम् ॥१॥

श्रीचैतन्यतनुः कृपाधृतजनुः प्रेमा स्वयं मूर्त्तिमान्
भक्ताभक्तजनान् समानसुमुखो यः प्रोद्दधाराऽदरात्।
स्वीकुर्वन् रघुनन्दनं सुतमिव श्रीखण्डसंमण्डनं[1]
श्रीकृष्णो मम भासतां स हृदये प्रोद्भास्य तत्त्वावलिम् ॥२॥

आयुर्वेदमुपासते हि बहवस्तत्त्वं परं दुर्लभं
ग्रन्थाधीतिपरस्य चेद् गुणगणप्राप्त्यै न तप्तं तपः।
कृत्स्नं शास्त्रमुपास्य वीक्ष्य मृतके सप्राकृतं वैकृतं[2]
योग्यां[3] रोगिषु यो व्यधत्त बहुधा तस्यैष चिन्तामणिः[4] ॥३॥

---

१। बङ्गेषु बर्द्धमानप्रदेशान्तः सुप्रसिद्धं वैष्णवस्थानं श्रीखण्ड नाम। तत्र स भगवान् श्रीकृष्णावतारः श्रीकृष्णचैतन्यो भक्तचूड़ामणिं श्रीरघुनन्दनगोस्वामिनं नामाऽस्मत्पूर्वपुरुषं "ममासौ पुत्र" इति कृतकपुत्रत्वेनोत्सङ्गे चकारेति सुप्रथिता वङ्गीयवैष्णवेष्वियं वार्त्ता।
२। प्रथमतः शास्त्रेषु श्रमं कृत्वा प्राकृतं वैकृतं च शारीरं मृतकशरीरेषु वीक्ष्यैव हि सम्यग् रोगविज्ञानमासादयन्ति सुभिषजः। ३। योग्या कर्म्माभ्यासः, वैद्यकप्रसिद्धोऽयं शब्दः।
४। चिन्तामणि नामक महारत्नवत् सर्वार्थप्रदः।

प्रत्यक्षशारीरकहर्म्यमेतद् भागद्वये निर्म्मितमप्युदारम् ।
ज्ञान-प्रयत्नाकर दिव्य चूड़ा मणेरभावादसमाप्तमासीत् ॥४॥

तद् द्वादशानामिह वत्सराणामन्ते गुरूणां कृपया कृतार्थः ।
समापयाम्यद्य सुयोगिलभ्य-ज्ञानोज्वलं त्रिश्वजनीनवेश्म ॥५॥

अतिगहनेऽस्मिन् विषये[1] यातेऽस्तं शास्त्रभास्करे प्रायः ।
दीपं गुरूपदेशं शरणीकृत्य मृग्यते पन्थाः ॥६॥

प्रत्यक्षञ्च परीक्षितञ्च शतशो यद् यत् तदाचक्ष्महे
संक्षेपादथ यत् समाधिसुगमं तद् दुर्लभं प्राकृतैः[2] ॥
तज् ज्ञातुं यदि वाञ्छसि प्रतिदिनं ध्यानाश्रयः श्रीगुरुं
षट्चक्रं प्रविभिद्य भास्वरसहस्रारस्थमालोकय[3] ॥७॥

महामहोपाध्याय श्रीगणनाथ सरस्वती ।
सिद्धान्तं याचते स्वान्तध्वान्तं हन्तु सरस्वती ॥८॥

श्रीगुरुचरणद्वन्द्वं मस्तिष्कान्तःस्थितं स्वतेजोभिः ।
नौमि प्रकाशयन्तं सकलं तत्त्वं वचो-मनः-कायैः ॥६॥

दुस्तरशास्त्रपयोधा सन्तरतो मे बुधाः करालम्बम् ।
वितरिष्यन्ति दयार्द्रा, धावन्त्वनु निष्ठुरा मकराः ॥१०॥

---

१। अस्मिन् विषये तृतीयभागप्रतिपाद्ये प्रचलितवैद्यकग्रन्थेषु दुर्लभं विवरणम्। तन्त्रेषु लभ्यमानं च तदतीव गहनं ध्यानगम्यञ्च भूम्ना सद्गुरुपदेशात्। २। प्राकृतैः साधारणजनैः। ३। एतद्विवरणमपि षटचक्रवर्णनीयाध्याये वक्ष्यते।

# प्रत्यक्षशारीरम् ।

## नाड़ीखण्डम् ।

### प्रथमोऽध्यायः ।

अथातो निखिलज्ञान-प्रयतनसामान्यविज्ञानीयमध्यायं व्याख्यास्यामः ।

निखिलं खल्विह ज्ञानं प्रयतनञ्च प्राणिनां भूम्ना शरीरतन्त्रम् । तदायतनञ्च प्रधानं शिरसि मस्तुलुङ्गपिण्डं[1] नाम मानुषाणाम्, अन्येषाञ्च पृष्ठवंशवतां प्रायः[2] । तत्रैव हि सर्वासां संज्ञानां संज्ञावहाभिर्नाड़ीभिरुपनीतानां प्रवेशः, प्रकाशश्च तत्पृथक्-पृथगंशेषु । सम्भवश्च प्रायेण तस्यैवांशेभ्यश्चेष्टावेगानाम्, प्रसरश्च चेष्टावहाभिर्नाड़ीभिस्तत्तदङ्गेषु बाह्येषु । बहुपरीक्षासिद्धञ्चैतत् । तत्तदंशोत्तेजने[3] तत्तत्संज्ञा-चेष्टा-सम्भवात्, तत्तदंशध्वंसने तत्तत्संज्ञा-चेष्टाध्वंसाच्च । तत्र च साङ्गोपाङ्गं मस्तिष्कं सहस्रदलपद्मसादृश्यात् सहस्रारमिति सर्वज्ञानप्रयत्नाकरं मन्यन्ते[4] योगिनः ।

द्विविधञ्च ज्ञानम्—ऐन्द्रियमतीन्द्रियञ्चेति ।

---

१। मस्तुलङ्गपिण्डम्—Brain or Encephalon. तस्यांशाः—मस्तिष्कमनुमस्तिष्कम् सुषुम्नाशीर्षकञ्चेति । तत्र मस्तिष्कम् ( Cerebrum ) प्रधानम् । अनुमस्तिष्कस्य द्वावंशौ—पुरस्ताद् उष्णीषकम् ( Pons ), पृष्ठतो धम्मिल्लकम् ( Cerebellum ) । सुषुम्ना-शीर्षकन्तु ( Medulla Oblongata ) पृष्ठवंशान्तरस्थस्य सुषुम्नाकाण्डस्य ( Medulla Spinalis or Spinal Cord ) शिखरभूतं शिरःस्थम् । तदेतदखिलमग्रे सविस्तरं वर्णयिष्यते । २। आमीन-मनुष्याणाम् पृष्ठवंशवतां प्राणिनाम् मध्ये त्रिगुणातारतम्यभेदाद् ज्ञानस्य तारतम्यम्, तद्धेतुकञ्च मस्तिष्कादि-निर्म्माण वैशेष्यम् । प्रायः इति कथनात् ज्ञान-प्रयत्नाधिष्ठान वैशेष्यमपि समुन्नेयम् । पतङ्ग-जलौकादीनान्तु पृष्ठवंशरहितानाम् मस्तिष्कादिकं नास्त्येव । सन्ति तु तेषां केवलं नाड़ीकन्दिकाः, नाड्यश्च सर्व्वाङ्गगाः । ३। तत्तदंशोत्तेजनञ्चेह कृत्रिमं वैद्युतवेग-सन्तापादिकृतं ज्ञेयम् । स्वभावतस्तु मानसवेगसम्पातादेव तादृशमुत्तेजनं भवति । ४। यत्तु वैद्यके—"बुद्धेर्निवासं हृदयं प्रदूष्य" इत्यादि विरुद्धप्रायं वचनम्, तद् मस्तिष्क-मूलस्थिताऽऽज्ञाचक्रांशभूत ब्रह्महृदयाभिप्रायेण । योगिनो हि षट्चक्रनिरूपणे मस्तिष्कमूलस्थमाज्ञा-चक्रमुपक्रम्य "एतत्पद्मान्तराले निवसति च मनः सूक्ष्मरूपं प्रसिद्धम्" इति स्पष्टमाहुः । न च मनोविरहिता बुद्धिरस्ति । श्रुतिश्च—"य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः" इति ( तैत्तिरीय उपनिषद्, षष्ठ अनु० ) । यच्च सुश्रुतोद्धृतं 'हृदयञ्चेतनास्थानमित्यादि' प्राचीनवचनं, तदपि एतदभिप्रायकमेव, 'जाग्रतस्तद् विकशति' इत्यादि निर्देशादिति दिक् । न च मांसमयमेव हृद्यन्त्रं तदिति वाच्यं, तद्धि न कथमपि तादृशलक्षणाभिधेयं भवितुमर्हति, असम्भवात् । तदेतदखिलमस्मदीय शारीरमीमांसाख्ये ग्रन्थे विस्तरेण स्फुटीकृतं द्रष्टव्यम् ।

तत्र ऐन्द्रियं[1] ज्ञानं आत्मेन्द्रियमनोऽर्थानां[2] सन्निकर्षजं प्रत्यक्षापरपर्य्यायम् । तत् पञ्चविधं, शब्द-स्पर्श-रूप-रस-गन्धाख्य विषय संज्ञानभेदात् । द्वाराणि च तस्य पञ्चविधस्य श्रोत्र-त्वङ्-नेत्र-रसना-घ्राणाख्यानि पञ्च ज्ञानेन्द्रियाधिष्ठानानि । तानि हि द्वारीकृत्य तत्तत्संज्ञानां प्रवेशः, प्रकाशश्च तेषु तेषु मस्तिष्कभागेषु 'संज्ञाधिष्ठान'[3] संज्ञेषु । इन्द्रियाणि त्वतीन्द्रियाणि । इन्द्रियोद्भासकम्पुनर्मन एव ।

अतीन्द्रियं तु ज्ञानं त्रिविधम्—स्वानुभवसिद्धम्, मानसव्यापारसमुत्थं, स्वतःसम्भवि चेति । तत्र स्वानुभवमात्रसिद्धं क्षुत्तृष्णादिविषयम् । मानसव्यापारसमुत्थं ध्यानालोचनादिसम्भवम् (तत्र ध्यानेन यथावद् वस्तुसाक्षात्कारे मानसप्रत्यक्षमाहुः । अन्यदनुमानादि त्वालोचनादिसम्भवम्) । स्वतःसम्भवि, चित्तवृत्तिनिरोधे सद्यःसमुदित-चिदानन्दज्ञानरूपम्[4], तद् योगिनामेव । सर्वञ्चेदमनुमानवर्जं मानसप्रत्यक्षमेव मनोमात्रनिष्ठत्वात् ।

अथेह प्रयत्नोऽप्यखिलो द्विविधः—शारीरो मानसश्च ।

तत्र शारीरः पेशीनां संकोचप्रसारकृतो ग्रहण-धारण-हृत्स्पन्दनादिरूपः, लालाग्रन्थ्यादीनां निःस्रवकरश्च । तत्र पेशीप्रचेष्टनात्मकस्यैव प्रयत्नस्य चेष्टापदेन[5] व्यवहारोऽस्मिन् शास्त्रे । त्रिविधाश्च चेष्टा :—इच्छानुगाः, स्वतन्त्राः, प्रतिसंक्रमिताश्चेति[6] । तत्र इच्छानुगाः—इच्छाख्यमानसव्यापारपूर्वाः ग्रहण-चलनादिरूपाः । स्वतन्त्राः—शरीरयात्रार्थं स्वतःप्रवृत्ताः, हृत्स्पन्दनान्त्रसंकोचनोच्छ्वासनिःश्वासरूपाः । प्रतिसंक्रमिताः—त्वगादीनां सपदि तीव्रोत्तेजनोद्रिक्ता अकामप्रवृत्ताः ज्ञाता अज्ञाताश्च—यथा क्रमेण विद्युद्विलसने नेत्र-निमीलनाद्याः, स्वपतोऽपि पादतलोत्तेजनादौ सक्थिसंकोचाद्याश्च । लालाग्रन्थ्यादिनिःस्रवस्तु[7] प्रायेण प्रतिसंक्रमित-नाड़ीवेगमात्रतः सम्भवति ।

तत्र इच्छानुगचेष्टानां साधनानि— वाक्-पाणि-पाद-पायूपस्थानि पञ्च कर्मेन्द्रियाणि प्राधान्यतः, सामान्यतस्तु सर्वाण्यपि अङ्गप्रत्यङ्गानि पेशीतन्तुयुतानि ।

---

१ । ऐन्द्रियं पञ्च-ज्ञानेन्द्रियजम् । २ । अर्थाः शब्दादयो विषयाः । तथाहि चरकः—"आत्मेन्द्रिय-मनोऽर्थानां सन्निकर्षात् प्रवर्त्तते । व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निगद्यते ।" इति ३ । संज्ञाधिष्ठानानि—Sensory areas. ४ । तथाहि पातञ्जलसूत्रेषु—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" (१म पाद । ३ सूत्र) । ५ । चेष्टा—Muscular action. हृत्स्पन्दनाद्यपि स्वतन्त्रपेशीचेष्टाकृतम् । ६ । इच्छानुग चेष्टा—Voluntary Muscular action. स्वतन्त्रचेष्टा—Involuntary Muscular action. प्रतिसंक्रमित चेष्टा—Reflex Muscular action. ७ । स च पेशीप्रचेष्टनाभावाद् नाडीवेगमात्रजः प्रयत्नः, न चेष्टा ।

प्रभवस्थानानि पुनश्चेष्टानां पृथक् "चेष्टाधिष्ठानानि" मस्तिष्कादिपृथगंशस्थानि । तत्प्रयोजकास्तु मानसवेगा एव। स्वतन्त्रादि चेष्टासम्भवविवरणं त्वग्रे वक्ष्यामः ।

मानसप्रयत्नश्चानेकविधः ध्यानालोचनाभिलषण-शब्दकल्पनादिरूपः । स च प्रायेणानुभव-स्मृति-वासनामूलः । तत्र विषयग्रहणमनुभवः, क्षुत्तृष्णादिबोधश्च । "अनुभूतविषयाऽसम्प्रमोषः[1] स्मृतिः" । ऐहिकामुष्मिककर्म्मधारानुषङ्गजाऽभिलाष-परम्परा वासना । पाश्चात्यास्तु[2] त्रिविध एव मनसो व्यापारः—अनुभवनं, चिन्तनम्, अभिलषणञ्चे[3]त्याहुः । नैतत् पर्य्याप्तम् ।

ज्ञानेन्द्रियाणामुद्भासकं कर्म्मेन्द्रियाणाञ्च प्रयोजकं सर्वानुभवज्ञानास्पदं स्वतन्त्रमतीन्द्रियञ्च मनः । तदेव एकादशमिन्द्रियमन्तःकरण[4]माहुः । तत्र विषयेन्द्रिय-सन्निकर्षेऽपि मनःसंयोगाभावे विषयज्ञानासम्भवात् उद्भासकत्वम् । शारीरव्यापाराणां भूम्ना मानसव्यापारपूर्वत्वात् प्रयोजकत्वम् । सुखदुःखसंवेदनाद्याश्रयत्वात् अनु-भवाश्रयत्वम् । स्वतन्त्रव्यापारशीलत्वात् स्वतन्त्रत्वम् । स्वयमिन्द्रियाऽगोचर-त्वादतीन्द्रियत्वम् । तत् चेतयितुरात्मनः सम्पर्कात् स्वयमचेतनमपि चेतनवत्[5] प्रतिभाति । तदेकमणु त्रिगुणञ्च मन्यन्ते मनीषिणः । युगपदनेकविषयग्रहण-प्रयतनसामर्थ्याभावात्, अविभुत्वात्[6], सत्त्वरजस्तमोगुणानां प्रकाश-प्रवृत्ति-स्थितिशीलानां क्रियाश्रयत्वाच्च ।

अथेह शरीरे निखिलज्ञानस्य प्रयतनस्य च निष्पत्तिः स्रोतांस्यपेक्षते । तानि त्रिविधानि—मनोवहानि स्रोतांसि, संज्ञावहानि स्रोतांसि, चेष्टावहानि स्रोतांसि चेति ।

तत्र मनोवहानि[7] स्रोतांसि विषयसंज्ञानानां चेष्टावेगानाञ्च संज्ञा-चेष्टाधिष्ठानादिषु वेगवाहकानि । न हि खलु मस्तिष्कस्थानि संज्ञा-चेष्टाधिष्ठानानि स्वभावतो मानसवेगानन्तरेण स्वतश्चेष्टां जनयन्ति, अन्यत्र स्वतन्त्रादिचेष्टाभ्यः । तादृशवेगानाञ्च सूर्य्यरश्मीनामिव आज्ञाचक्रान्तःस्थमनःसम्भवानां सम्यगुपलब्धिर्योगिनामेव ।

---

१ अनुभूतानां विषयाणामनुभवजन्यो यः संस्कारस्तस्य अप्रमोषः अविलोपः, पुनरपि स्फुरणमिति यावत्। (पातञ्जल सूत्र १।११)। २ पाश्चात्या नाम यूरोपादि भारतपश्चिमदेशीयाचार्य्याः। पाश्चात्य-पदस्य चेह सर्वत्र अयमेवार्थो ज्ञेयः। ३ अनुभवनम् = Feeling. चिन्तनम् = Thinking. अभिल-षणम् = Willing. ४ अन्तःकरणञ्च केचित् त्रिधा चतुर्धा वा विभजन्ते। तत्र त्रिधा यथा—मनो बुद्धिरहंकार इति। चतुर्धा यथा—मनो बुद्धिरहङ्कारश्चित्तञ्चेति। पातञ्जलास्तु मनःपर्यायं चित्तमाहुः, तद्वृत्तयश्च पञ्चतय्यः—इति। वैद्यके तु मन एवान्तःकरणम् । तदनुवर्त्तिनश्च वयम् एतद्विषयकविचारश्च शारीरमीमांसायां द्रष्टव्यः । ५ तदुक्तं चरके—"अचेतनं क्रियावच्च मनश्चेतयिता परः। युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः।" (चरक० शारीर०) इति। विस्तरस्तु तत्रैव सांख्ये च द्रष्टव्यः। ६ विभुत्वं सर्वव्यापकत्वम्, तदभावादेकदेशव्यापित्वाद् अणुत्वम्। ७ मनोवहानि स्रोतांसि योगशास्त्रे वैद्यकनये च श्रूयन्ते। तानि पाश्चात्यपरीक्षकै-र्नाद्यापि निर्णीतानि।

तेन सह मस्तिष्कांशानां संयोजकविविध[1]नाड़ीसूत्रसंनिवेशस्य दर्शनादनुमानतः, आगमाच्च पुनरन्येषाम्।

संज्ञावहानि चेष्टावहानि च स्रोतांसि पुनर्नाड्य एव सर्वदेहगाः। ताः सूक्ष्माणां नाड़ीकन्दाणुकाणामवयवभूताः। तद्विस्तरमनुपदं प्रतिपादयिष्यामः।

निखिलज्ञान-प्रयतनवेगानाञ्च मनःशरीराधिष्ठानानां प्रवर्त्तको जीवशक्तिरूपेण* सर्वप्राणिदेहचरो वायुरेव सर्वाध्यक्षः—इति प्राञ्चः। तथाचाहु:—

"वायुस्तन्त्र[2]यन्त्र-धरः, प्राणोदान-समान-व्यानापानात्मा[3], प्रवर्त्तकश्चेष्टानां[4]मुच्चावचानाम्, नियन्ता प्रणेता च मनसः[5], सर्वेन्द्रियाणामुद्योतकः[6], सर्वेन्द्रियार्थानामभिवोढा[7], सर्वशरीरधातुव्यूहकरः[8], सन्धानकरः[9] शरीरस्य, प्रवर्त्तको वाचः[10], प्रकृतिः[11] स्पर्श-शब्दयोः, श्रोत्रस्पर्शनयोर्मूलं[12], हर्षोत्साहयोर्योनिः[13], समीरणोऽग्नेः[14], दोषसंशोषणः[15], क्षेप्ता बहिर्मलानाम्[16], स्थूलाणुस्रोतसां[17] भेत्ता, कर्त्ता गर्भाकृतीनाम्[18], आयुषोऽनुवृत्ति[19]प्रत्ययभूतो भवत्यकुपितः।" (चरक० सूत्र० १२ अ०)

---

१ एतानि मस्तिष्कांशानामाज्ञाचक्रेण संयोजकानि नाड़ीसूत्राणि (Association-fibres) मनोवहानि स्युरिति पारिशेष्यादुन्नीयते। स्वतः-प्रतिसंक्रमितचेष्टास्तु मानसप्रयत्नादृतेऽपि सम्भवन्ति, अभ्यासात्तु अन्या अपि चेष्टास्तादृश्य एव भवन्ति। २ तन्त्राणि सर्वकायविततानि सिराधमन्यादिवस्तूनि, यन्त्राणि हृदयादीनि, तेषां धरः स्वकर्म्मसामर्थ्यप्रदः। ३ प्राणादिसंज्ञया पञ्चधा प्रविभक्तः, कर्म्मविभागात्। तद्विस्तरश्चैहैवाग्रे सौश्रुतनिदानस्थानारम्भेऽष्टाङ्गसंग्रहे च द्रष्टव्यः। ४ चेष्टावहनाडीमार्गेण पेश्यादिषु-इति शेषः। ५ नियन्ता यदृच्छया कम्मणि प्रवृत्तस्य मनसो नियामकः प्रणेता च मानसवृत्तीनाम्। ६ उद्योतकः—सत्वोल्वणमनःसन्निकर्षविधानेन विषयग्रहणसामर्थ्यप्रदः। ७ शब्दादिसंज्ञानां संज्ञावहनाड़ीमार्गेण मस्तिष्काद्यभिमुखप्रापणः। ८ शरीरधातूनां यथायथसन्निवेशकृत्। ९ भग्नविच्छिन्नादिभागानां प्रतिसन्धानकरः। १० शब्दसंयोजनादिमानसव्यापारपूर्वस्य वागिन्द्रियप्रयत्नस्य प्रयोजकः। ११ अस्ति तावद् रूप-रस-गन्धानां तैजसाप्यपार्थिवानां स्थूलत्वमापेक्षिकम् स्पर्शशब्दयोस्तु न तथेति सूक्ष्मत्वाद् वायुरेव तयोः प्रकृतिः प्रभवः। १२ अतएव श्रवणेन्द्रियस्पर्शनेन्द्रिययोरपि स्वकर्म्मसामर्थ्यं वायुमूलम्। १३ हर्षोत्साहौ हि मानसौ धर्म्मौ, तयोः कारणमपि वायुरेव स्वभावस्थः। १४ अग्नेः अग्निकर्म्मणः पित्तस्य प्रयोजकः। तदुक्तं "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत्।" इति। १५ दोषाणां मलभूतानां पित्तश्लेष्मादीनां शोषणकृत्। १६ मलानां स्वेदमुत्रपुरीषादीनाम्। १७ शुक्रशोणितसंयोगजस्य एकस्य कोषाणुकस्य बहुधा विभागेन परस्परसंयोजनेन च स्थूलसूक्ष्माणां स्रोतसां निर्म्माणकृत्। १८ गर्भस्य शारीरावयवविशेषाणाञ्च सम्पादकः। १९ आयुषोऽनुवृत्तिः, प्रतिक्षणं शीर्य्यमाणस्य शरीरस्य नवनवनिर्म्माणेनाऽपूरणादेव हि संरक्ष्यते आयुःसन्तानः। तस्य प्रत्ययः कारणं च वायुरेव स्वभावस्थः इति सर्वार्थसंग्राहकं विशेषणं चरमम्। तदेतदस्य सन्दर्भस्यास्मदीयं व्याख्यानं शारीरानुगतम्।

* [N. B. The Sanskrit words—VAYU and VATA closely resembles the Latin VIVO (to live) and VITA (life) and Greek BIOS meaning Life. Vayu therefore may be rightly translated as the Vital Force=जीवशक्तिः।]

## [ १७५ चित्रम्—नाडीतन्त्रप्रदर्शकम् ]

अत्र पश्चिमतो दृश्यम्

मध्ये मस्तिष्क-सौषुम्निक तन्त्रम्, पार्श्वयोरिडा पिङ्गला च




मध्यरेखायां सुषुम्नाकाण्डः

[ आभ्यन्तरविशेषास्तु मेरुजाख्य नाड्यादयो नेह वर्ण्यन्ते ]

आह च भगवान् धन्वन्तरिः—

"दोषधात्वग्निसमतां सम्प्राप्तिं[१] विषयेषु च।
क्रियाणामानुलोम्यं च करोत्यकुपितोऽनिलः॥" इति

(सुश्रुत० निदान० १ अ०)

अथैषां मस्तिष्कादीनां द्वेधा विभागः कार्य्यविभागात्। तत्र मस्तिष्कमनुमस्तिष्कं सुषुम्नाशीर्षकं सुषुम्नाकाण्डश्चेति चतुष्टयस्य तत्सम्बन्धिनाड़ीभिः सहितस्य "मस्तिष्कसौषुम्निकं[२] नाड़ीतन्त्र"मिति, कायमध्यस्थत्वात् "मेरुनाड़ीतन्त्रम्" इति वा संज्ञा। तद् ज्ञानप्रयत्नायतनं सामान्यतः। पृष्ठवंशमुभयतो वहिःस्थितयोरिडापिङ्गलयोस्तत्सम्बद्धनाड़ीग्रन्थि-वाह्याभ्यन्तर-नाड़ीचक्रादिसंयुक्तयोः पुनः "स्वतन्त्र-नाड़ीतन्त्र[३]"मिति व्यपदेशः, स्वातन्त्र्येण प्राणयात्रा[४]निर्वाहकत्वात् (१७५ चित्रम्)। सन्ति च मूलाधार-स्वाधिष्ठान-मणिपूराऽनाहत विशुद्धाज्ञासंज्ञानि षट् चक्राणि[५] मेरुमध्यान्तरस्थानि। तानि नानावर्णपद्माकारतया योगिनां ध्यानगोचराणि। तत्क्रियाश्च भूम्ना प्राणयात्रार्थाः नास्मादृशामिच्छाधीनाः। योगिनां तु नियम्या एव ताः।

तदेतद् वीजरूपं निखिलज्ञान-प्रयतनायतनविज्ञानं व्याख्यातं, विस्तरोऽत ऊर्द्ध्वम्। भवन्ति चात्र—

"प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च।
यदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते॥" (चरक० सूत्र० १७ अ०)

"शिरस्तात्वन्तरगतं सर्वेन्द्रियपरं मनः।
तत्रस्थं तद्धि विषयानिन्द्रियाणां रसादिकान्।
समीपस्थान् विजानाति त्रीन्[६] भावांश्च नियच्छति।
तन्मनःप्रभवं चापि सर्वेन्द्रियमयं बलम्॥"

(भेलसंहिता० चिकित्सा० ८ अ०)

---

१ सम्प्राप्तिमिन्द्रियसंयोगम्, आत्मेन्द्रियमनःसंयोगम् वा। २ Cerebro-Spinal Nervous System. ३ Autonomic Nervous System. ४ प्राणयात्रा श्वसनान्नपचन-रक्तसंवहनादिकार्य्यमुखेन प्राणधारणम्। ५ तेषाञ्च शारीरवस्तूनि स्फुटं दृश्यानीति अग्रे षट्चक्रवर्णने प्रवक्ष्यते। सन्ति च वहिःस्थान्यपि चक्राणि स्थूलानि, तानि उपोद्घाते वर्णितचराणि। ६ भेलमते हि—मनश्चित्तबुद्धयस्त्रयो भावाः पारम्पर्य्यात् मनःप्रभवाः—इत्यभिप्रायः।

"ऊर्द्ध्व[१]मूलमधःशाखमृषयः पुरुषं विदुः ।
मूलप्रहारिणस्तस्माद्द रोगान् शीघ्रतरं जयेत् ॥
सर्वेन्द्रियाणि[२] येनास्मिन् प्राणा[३] येन च संश्रिताः ।
तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥" (अष्टाङ्गहृदयम्)

इति प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः ।

अथातो नाडीतन्त्रनिर्म्माणविज्ञानीयमध्यायं व्याख्यास्यामः ।

इह खलु नाडीतन्त्रविशेषविज्ञानाय तन्निर्माणवस्तुविज्ञानमपेक्षितं भवति । परिभाषा च तदपेक्षिणी । तदन्तरेण सम्बन्धाभिधेयप्रयोजनज्ञानासम्भवात् । तत्र—

**नाड्यो**[४] नाम मृदुसूत्रसंघातमय्यो नीरन्ध्रास्तन्त्र्योऽस्मिन् शास्त्रे इत्यवोचाम । तासु प्रायेण द्विविधानि नाडीसूत्राणि सम्भूय तिष्ठन्ति—संज्ञावहानि चेष्टावहानि चेति । तत्र संज्ञावहानि त्वगादिभ्यो मस्तिष्काद्यभिमुखं प्रापयन्ति संज्ञावेगान् । तेष्वन्तर्मुखो वेगः । चेष्टावहानि तु मस्तिष्कादिभ्यः प्रवर्त्तयन्ति चेष्टावेगान् पेश्यादिषु । तेषु बहिर्मुखो वेगः ।

ता एता द्विविधनाडीसूत्रसंघातवत्यो नाड्यो मिश्रा[५] नाड्यः—इत्युच्यन्ते विशेषाभिधाने । एकविधनाडीसूत्ररचितास्तु शुद्धा[६] नाड्यः – इति । नाडीसूत्राणाञ्च क्वचिद्द "नाडी"ति लघुसंज्ञामात्रेणापि सामान्यतो व्यपदेशः ।

मिश्रासु नाडीसु परस्परसन्निहितान्यपि पृथग्विधानि नाडीसूत्राणि त्वक्-पेश्यादि प्रवेशकाले पृथग् भूत्वा प्रसरन्ति स्पर्शयन्त्रिका[७]दिष्विति सविस्तरमग्रे प्रतिपादयिष्यामः ।

---

१ मूलं करोटि-गुहान्तःस्थं सहस्रारमनुमस्तिष्कं सुषुम्नाशीर्षकञ्च सपरिकरम् । शाखाः परिसरीया नाड्यः, सुषुम्नाकाण्डश्च । २ ज्ञानेन्द्रियाणि कर्म्मेन्द्रियाणि एकादशेन्द्रियं मनश्च । ३ प्राणाश्रयत्वं सुषुम्नाशीर्षकस्थश्वासादिप्राणक्रियाकेन्द्रप्राणगुहाभिप्रायेण । प्राणगुहा = Fourth Ventricle. (All the vital centres are situated in and about this spot). ४ नाड्यः = Nerves 'नड गतौ' इति धातोः । Compare Greek *Neuron* = Nerve. एषा च पारिभाषिकी संज्ञा तन्त्रेषु अतिप्रसिद्धा । डलयोरभेदात्तु क्वचिन्नलिकार्थेऽपि नाडीशब्दो वैद्यकेऽन्यत्र च । ५ Mixed Nerves. ६ Pure Nerves (Sensory or Motor). ७ Tactile Corpuscles.

२

सर्वेषाञ्च नाड़ीसूत्राणां प्रभवो नाडीकन्दाणुकेभ्यः, प्रसरश्च यथार्हं त्वगादि-स्थितासु प्रान्तिकयन्त्रिकासु[1]। ताश्च प्रान्तिकयन्त्रिकाः स्थानभेदेन पृथक् संज्ञाभिरभिधीयन्ते ।

**नाडीकन्दाणुकानि**[2] नाम ( १७६ । १७७ चित्रयोः ) अतिसूक्ष्म-कोमलानि नाडीमूलभूतानि सूक्ष्मवस्तूनि सावयवानि मस्तिष्कसुषुम्नादि[3]स्थितानि। तानि स्थानभेदेन च एकवाहुक-द्विवाहुक-वहुवाहुक-गुल्मकादि-नानारूपाणि[4], प्रायशो बहुधा प्रतानवन्ति, मध्ये केन्द्रकणिकोपलक्षितानि[5] चेति स्पष्टमणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यानि। तन्निर्मितानि च निखिलानि संज्ञाचेष्टाधिष्ठानानि, तत्प्रधानप्रतानाश्च नाड्यः सामान्यतः । विशेषतस्तु—

[ १७६ चित्रम् ]




क—चेतवस्तु । अ—अक्षतन्तुः । ख—केन्द्रकणिका । ग—ऊर्णातन्तवः ।

एकैकस्य नाडीकन्दाणुकस्यैको दीर्घप्रतानः, अनेके च प्रायेण ह्रस्व-कुटिलाः प्रतानाः । तत्र दीर्घप्रतानस्य अक्षतन्तुरिति[6] संज्ञा, तस्य नाडीसूत्ररूपेण परिणामः, प्रसरश्च दूरात् शाखाप्रशाखानुशाखादिभिः । ह्रस्वप्रतानानान्तु कन्दाणुकं परितो विसारिणामूर्णातन्तुसादृश्याद् ऊर्णातन्तवः[7] इति, ह्रस्वत्वात् "लघुतन्तवः" इति वा निर्द्देशः ( १७६ चित्रम् )। ते तादृशैरेवान्यस्य नाडीकन्दाणुकस्य प्रतानैः परस्पराश्लिष्टाः कन्दाणुकानां सन्निहितानामुद्-बोधनकर्म्माणो भवन्ति। तत्परम्परया च सञ्चरति नाडीभिरुपनीतो वायुवेगोऽन्तर्मुखं वहिर्मुखं वा। [ १७८ चित्रम् (४) ]।

१ End-organs. २ नाड़ीकन्दाणुकानि=Neurons. सावयवानीति स्पष्टार्थमुक्तम्। निरवयवानि हि तानि नाड़ीकोषाणुकानि नाम=Nerve Cells. ३ आदिपदेन नाड़ीग्रन्थि-कन्दादीनां ग्रहणम्। ४ एकबाहुकम्=Unipolar, द्विबाहुकम्=Bipolar, बहु-बाहुकम्= Multipolar. गुल्मकम्=Purkinji Cell. आदि शब्देन करीराकृति-निरक्षकन्दाणुकानां ग्रहणम् । करीराकृतीनि=Pyramidal Cells. निरक्षाणि—अक्षतन्तु-रहितानि=Golgi Cells ( II ). ५ केन्द्रकणिका=Nucleus. ६ अक्षतन्तुः Axone. ७ Dendrites.

## [ १७७ चित्रम् ]

### विविधानि नाडीकन्दाणुकाणि ।




क—नाड़ीकन्दाणुकं—एकबाहुकम् ।   ख—तदेव करीराकृति ।

ग—तदेव गुल्मकाकृति ।   घ—तदेव बहुबाहुकम् ।

ङ—तदेव निरक्षम् ।   च—तदेव द्विबाहुकम् ।

इदं चात्र स्मर्त्तव्यम्—नाडीकन्दाणुकध्वंसे तत्प्रतानामवश्यध्वंसः, न तु प्रतानध्वंसे कन्दाणुकध्वंसः प्रायेण। दृष्टश्च प्रतानानां छिन्नप्रतिसंहितानां[१] पुनःप्ररोहो हस्तपादाद्यवयवस्थनाडीषु।

पोषणार्थश्च सर्वाणि नाडीकन्दाणुकानि (नाडीसंघाताश्च) अतिसूक्ष्मैः सिरा-धमनी-रसायनीजालकैरभिव्याप्तानि। तानि च संश्लिष्टानि परस्परम् मस्तिष्क-सुषुम्ना-काण्डयोः कन्दाणुकान्तरालस्थेन क्षेत्रवस्तुना[२]। तच्च 'लूताणुक' संज्ञैः सूक्ष्मतरैर्विचित्राणुकैरभिव्याप्तम्। (१७६। १७८ चित्रयोः)

अथैतेभ्यो नाडीकन्दाणुकेभ्यो विनिर्गता अक्षतन्तवो नाडीसूत्ररूपेण परिणमन्ति। द्विविधानि च नाडीसूत्राणि, सितानि असितानि च। तत्र सितानि वसामयीः सूक्ष्मा[३] वृतीः परिदधति। तानि दुर्व्वाङ्कुरवत् पर्व्वसु विच्छिन्नप्रायाणि। तान्येतानि सितनाडीसूत्राणि मस्तिष्क-सौषुम्निक-तन्त्र-सम्भवानि।

असितानि नाडीसूत्राणि तु प्रायेण स्वतन्त्रनाडीतन्त्र-सम्भवानि वसावृति-रहितानि।

तदेवं द्विविधानि नाडीसूत्राणि—सवृतिकानि[४] अवृतिकानि[५] च। द्विविधान्यपि च तानि सूक्ष्मतरकलाकञ्चुकाभिरक्षितानि[६]। गुच्छीभूतानाञ्च तेषां सन्धारणान्यपराणि कलाकञ्चुकानि[७], सन्ति च कलाप्राचीरिकाः[८] तद्गुच्छान्तरविभाजिकाः। (१७८ चित्रम्)

तासाञ्च नाडीनां सावकाशं ग्रथितानां कक्षादिभागस्थानां नाडीवेणिकेति[९] संज्ञा, हृदयोदरादिप्रदेशेषु नाडीकन्दसहितानां तु वाह्यनाडीचक्राणीति[१०] तत्साद्रश्यात्। सन्ति च प्रसरन्तीनां नाडीनां मार्गेषु क्वचित् क्वचित् चणकाद्याकाराः स्फुटाः ग्रन्थयो नाडीग्रन्थयो[११] नाम। स्थूलायतानाञ्च कन्दाद्याकाराणां तेषां मस्तिष्काद्यन्तःस्थानां कन्द-कन्दिका-पत्रिकादि-संज्ञाभिर्व्यवहारः। त एते सर्वेऽपि कन्दाणुकभूयिष्ठाः।

अथेह कन्दाणुकबहुलानां नाडीतन्त्रवस्तूनां भस्मवद्ध धूसरप्रायो वर्ण इति धूसरवस्तु[१२] संज्ञया व्यपदेशः। नाडीसूत्रबहुलानान्तु शुभ्रप्रायो वर्ण इति शुभ्रवस्तु[१३] संज्ञया।

---

१ आदौ छिन्नाः ततः प्रतिसंहिताः शस्त्रादिनेति शेषः। २ Neuroglia. लूताणुकं=Neuroglia cell. ३ सेयं वृति र्वसामयी=Medullary sheath. ४ Medullated Nerve fibres. ५ Non-medullated Nerve-fibres. एवं कलावृतिसहितत्वेऽपि तस्या वृतेरतिसूक्ष्मत्वादवृतिक संज्ञा न विरुध्यते। ईषदर्थे नञ्। ६ Neurilemma ७ Peri-neurium ८ Endo-neurium. ९ Plexus of Nerves (long). १० Sympathetic plexus. ११ Ganglion. १२ Grey matter. १३ White matter.

# [ १७८ चित्रम् ]

(१)

सवृतिकं नाड़ी-सूत्र-द्वयम्।




(३)

लुताणुकम्।



(२)

नाड़ीसूत्रगुच्छिकाः।




(४)

नाड़ीकन्दाणुकयोः परस्पराश्लेषदर्शकं चित्रम्।



(१) चित्रे—क—कलाकञ्चुका। ख—नाड़ीपर्व। ग—वसामयी वृतिः।

घ—अक्षतन्तुः। ङ—वृतिगातस्था केन्द्रकणिका।

(२) चित्रे—क—सवृतिकं नाडी-सूत्र। ख, ख—अवृतिकं नाड़ीसूत्रद्वयम्

तत्र मस्तिष्कं बहिःस्तरेषु धूसरवस्तुमयम्, अन्तःस्तरेषु शुभ्रवस्तुप्रायम्, अन्यत्र मूलकन्दादिभागेभ्यः। सुषुम्नाकाण्डस्तु बहिः शुभ्रवस्तुप्रायः, अन्तः धूसरवस्तुमयः। नाडीग्रन्थि-नाडीकन्दादीनाञ्च धूसर एव वर्णः। नाडीसूत्राणान्तु शुभ्रो वर्णः पीताभो वा, मेदोमयवृतिबाहुल्यात्।

तदेतत् नाडीतन्त्रवस्तुनिर्म्माणं सपारिभाषिकं व्याख्यातम्। इदं चात्र सर्वार्थ-संग्राहकं पद्यद्वयं स्मरणसौकर्य्याय।

नाडीकन्दाणुकविरचितं नाड़िकातन्त्रमेतत्-<br>
तस्मिन् संज्ञा-प्रयतनभुवः सन्ति कन्दाणुपुञ्जाः।<br>
तेभ्यो विष्वग् वपुषि विसृता अक्षतन्तुप्रताना-<br>
स्ते वै नाड्यो द्विविधमपि या वायुवेगं वहन्ति ॥१॥<br>
परस्पराश्लेषपराः परे ये कन्दाणुकानां प्रसृताः प्रतानाः।<br>
परम्परातः प्रणयन्ति वेगान् तैरेव तानि प्रतिबोधितानि ॥२॥

एष हि तावद् गर्भस्थशिशोः नाडीतन्त्रनिर्म्माणप्रकारः। भ्रूणस्य हि प्रथम एव मासि वाह्यस्तरतः पृष्ठमध्यरेखायां सम्भिद्यते काचित् परिखा। परिखा-तटद्वयस्य शनैः सम्मेलनाच्च सम्पद्यते नाड़ीतन्त्रप्रसूर्नलिका[१]; तस्याश्च नलिकायाः स्फारीभूताच्छीर्षभागात् समग्रस्य मस्तुलुङ्गपिण्डस्य सम्भवः, अवशिष्ट-भागात्तु सुषुम्नाकाण्डस्य। तटद्वयतश्च प्रोद्भिद्यन्ते मेरुतन्त्रीया[२] नाड्यः, उभयतश्च स्वतन्त्रनाड़ीग्रन्थिशृङ्खले[३] इड़ापिङ्गलाख्ये। परिखाया मध्यरेखायां पुनर्दृश्यः सूक्ष्मो रन्ध्रमार्गः[४] ब्रह्ममार्गो नाम। तत्परितश्च संवेष्टनी नाडी चित्रिणी[५] नाम।

मस्तुलुङ्गपिण्डन्तु आदित एव बुद्बुदत्रये[६] विभक्तं (१७६ चित्रम्) क्रमशो हंसग्रीवावद् वक्रीभूयतिष्ठति, विभज्यते च त्रिषु पिण्डेषु कोषगर्भेषु। तत्र अग्रिमात् पिण्डात् सम्भवति गोलार्द्धद्वयं[७] मस्तिष्कस्य, यदन्तरे दृश्या इमे विशेषाः—मस्तिष्क-सेतुः[८], छत्त्रिका[९], मध्यस्थं ब्रह्महृदयम्[१०], उभयतः आज्ञाकन्दद्वयं[११], त्रिपथाख्ये गुहे[१२] च, अन्ये च विशेषाः पोषणकग्रन्थ्यादयः[१३]। अथ मध्यमात् पिण्डात् सम्भवन्ति मस्तिष्कमूलस्थं

---

१ Neural tube. २ Spinal nerves. ३ Sympathetic Chain (Right and left). ४ Central Canal. ५ Substantia gelatinosa centralis. ६ Vesicles. ७ Cerebral hemispheres. ८ Corpus callosum. ९ Fornix. १० Third ventricle. ११ Thalami. १२ Lateral ventricles. १३ Pituitary gland.

[ १७६ चित्रम् ]

## गर्भस्थशिशोः मस्तुलुङ्गपिण्डस्य विकाशक्रमः ।




( क ) चित्रम् आद्यबुद्बुदपिण्डत्रय-प्रदर्शकम् । तत्र च—

क अ—अग्रिमं मस्तुलुङ्गपिण्डम् । म—मध्यमं तदेव । प—पश्चिमं तदेव । सु—सुषुम्नाकाण्डः ।

( ख ) चित्रम्—त्रिंशद्दिवसीय-भ्रूणस्य मस्तुलुङ्गपिण्डम् ।

१—अग्रिमं मस्तुलुङ्गपिण्डम् । म—मध्यमं तदेव । प—पश्चिमं तदेव । २ आज्ञाकन्दः । ३—मस्तिष्क गोलार्द्धम् । ४—अग्रिम मस्तुलुङ्गाग्रपिण्डम् । ५—दृष्टिनाडीमूलम् । ६—पञ्चम्या नाड्या मूलम्—चेष्टावहांशः । ७—तस्यैव —संज्ञावहांशः । ८—वक्त्र नाड़ी । ९।१०—सप्तमाष्टम नाड़ीमूलभूतं ग्रन्थिद्वयम् । ११—श्रुतियन्त्र-सम्पादकं बुद्बुदम् । १२—कण्ठरासनी नाड़ी । १३—जिह्वातलगा नाड़ी । अ—दृष्टिनाड़ी । आ—धम्मिल्लकम् । इ—श्रुतिनाड़ी । ई—ग्रीवापृष्ठगा नाड़ी ।

( ग ) चित्रम्—त्रैमासिक भ्रूणस्य मस्तुलुङ्गपिण्डम ( विदार्य्य दर्शितम् ) ।

१—राजिलपिण्डम् । २—नेत्रकोटरिका । ३—दृष्टिनाड़ीयोजिका । ४—पोषणक ग्रन्थिः । ५—कन्दाधरिक पिण्डम् । अ—मस्तिष्कगोलार्द्धम् । आ—आज्ञाकन्दः । इ—मस्तिष्कमृणालकम् । ई—कलायिकाचतुष्टयम् । उ—उष्णीषकम् । ऊ—धम्मिल्लकम् । ए—सुषुम्नाशीर्षकम् । ऐ—सुषुम्नाकाण्डः ।

मृणालकद्वयं,[१] कलायिकाचतुष्टयं,[२] सुरङ्गिका[३] च ब्रह्मगुहाभिगामिनी । पश्चिमपिण्डकात् पुनः सम्भवति उष्णीषक[४]-धम्मिल्लक[५]-सहितं सुषुम्नाशीर्षकम्[६] । तदन्तश्च दृश्या प्राणगुहा[७] ।

एवञ्च क्रमशो विशेष-निष्पत्तिरा द्वितीयमासात् षण्मासावधि दृष्टा भ्रूणसहस्र-परीक्षया प्रेक्षावद्भिः । इमे चात्र नाडीतन्त्वोत्पत्तिस्मारकाः श्लोकाः—

गर्भस्य मासि प्रथमे हि नाडीतन्त्वप्रसूः स्यान्नलिका सुतन्वी ।<br>
तच्छीर्षतो रोहति मस्तुलुङ्गं[८] कृत्स्नं, सुषुम्नादि[९] तु पुच्छभागात् ॥१<br>
सामान्यतस्तत्र विशेषभागान् प्रोद्भिद्यमानान् शृणु सावधानम् ।<br>
मासाद् द्वितीयात् प्रभृति क्रमेण षण्मासकालावधि यत्प्रपूर्त्तिः ॥२<br>
अथेह तच्छीर्षकपिण्डमेतद् विभज्यमानं त्रिषु बुद्बुदेषु ।<br>
स्यादग्रिमं मध्यम-पश्चिमे च पिण्डत्रयं कोषसमं विचित्रम् ॥३<br>
तत्राग्रिमात् छत्रिक-सेतुयुक्तं गोलार्द्धयुग्मं त्रिपथे गुहे च ।<br>
आज्ञाह्व-कन्द द्वितयान्तराले स्याद् ब्रह्मह्रत् पोषणकश्च नीचैः ॥४<br>
तद्वृन्तिका,[१०] राजिलपिण्डिके[११] च दृग्गन्धनाडीयुगमूलिके[१२] च ।<br>
तृतीयदृक्[१३]कन्दयुताधिपीठिकास्[१४]तत्रापरे चूचुकवर्त्तुले[१५] च ॥५<br>
अथास्य पिण्डात् खलु मध्यमात्तु मस्तिष्कमूलस्थमृणालके स्तः ।<br>
कलायिकानां च भवेत् चतुष्कं सुरङ्गिका ब्रह्मगुहाभिगा च ॥६<br>
अथापरात् पश्चिमपिण्डकात्तु सोष्णीषधम्मिल्लक-शोभितं हि ।<br>
प्रजायते चारुतरं सुषुम्नाशीर्षं दधत् प्राणगुहां तदन्तः ॥७<br>
तन्त्वप्रसूर्या नलिका प्रदिष्टा तत्पुच्छतः स्यात् क्रमशः सुषुम्ना[१६] ।<br>
सकाण्डनाडीतति-कन्दपुञ्जा[१७] स्वतन्त्व-नाडीयुग-शृङ्खले च ॥८

इति द्वितीयोऽध्यायः ।

---

१ Crura Cerebri. २ Corpora quadrigemina. ३ Aquæduct of Sylvius. ४ Pons Varolii. ५ Cerebellum. ६ Medulla Oblongota. ७ Fourth ventricle. ८ Brain. ९ Spinal cord. १० Tuber cinereum. ११ Corpora striata. १२ Optic and olfactory nerves. १३ Pineal body. १४ Corpora geniculata. १५ Corpora albicantia. १६ Medulla Spinalis or Spinal cord. १७ Sympathetic ganglions.

# तृतीयोऽध्यायः ।

अथातः सुषुम्नाकाण्डव्याकरणीयमध्यायं व्याख्यास्यामः ।

इह खलु मस्तिष्कमनुमस्तिष्कं सुषुम्नाशीर्षकं सुषुम्नाकाण्डश्चेति चतुष्टयस्य साङ्गोपाङ्गस्य मस्तिष्क-सौषुम्निकतन्त्रमिति मेरुनाड़ीतन्त्रमिति[1] वा संज्ञा। तत्राद्यं त्रितयं करोटिसम्पुटान्तःस्थम्, सुषुम्नाकाण्डस्तु पृष्ठवंशान्तर्निगूढः ।

अथ सुषुम्नाकाण्डवर्णनम् ।

यथा हि सर्वेषां कायास्थ्नां मध्यालम्बनभूतः पृष्ठवंशस्तथैव प्रायः सर्वस्य नाड़ीतन्त्रस्य मध्याश्रयस्तदन्तरस्थः सुषुम्नाकाण्ड इति स एवादौ वर्णनीयः। प्रायेण सर्वेषां नाड़ीतन्त्रभागानां साक्षात् परम्परया वा तत्सम्बन्धलक्षणात् । सोऽयं—

**सुषुम्नाकाण्डः**[2]—पृष्ठवंशान्तश्चूड़ावलयाख्य-प्रथमग्रीवाकशेरुकात आरभ्य द्वितीयकटिकशेरुकाशिखरं यावद् दृश्यते पृथुकमलनालाकारः ( १८० चित्रम् )। स दैर्घ्येण स्ववितस्तिद्वयप्रमाणः, मध्यमांगुलिपरिणाहः, सार्द्धतोलकद्वयमितश्च गुरुत्वेन। तस्यानुषङ्ग ऊर्द्ध्वं सुषुम्नाशीर्षकेण। सोऽयमधस्ताद् द्वितीयकटिकशेरुकात आरभ्य अनुत्रिकं यावत् क्रमशस्तनूभूय प्रसरति शतावरीमूलान्तवत्। तस्य च मूलमात्रस्य सुषुम्नामूलिकेति[3] संज्ञा। सेयं मूलिका परितः प्रसृतैः सूत्राकारनाड़ी-गुच्छैः प्रावृता तुरङ्गपुच्छाकारा दृश्यते वृत्यन्तः, लभते च तुरङ्गपुच्छिकेति[4] संज्ञाम् । तस्याश्च मध्यस्थः प्रान्तिकसूत्राकारभागो मूल-सूत्रिका[5] संज्ञः ( १८१ चित्रम् )। सेयं सूत्रिका प्रथमत्रिककशेरुकान्तं यावत् सुषुम्नावृतिप्रावृता उत्तराख्या, तदधस्तात्तु निर्वृतिकाऽसौ अधराख्या। दैर्घ्यञ्चास्या दशांगुलमात्रम् ।

अस्य च सुषुम्नाकाण्डस्य ग्रीवावंशान्तः कटिवंशान्तश्च दृश्यौ स्थूलतरौ भागौ लघुपटोलफलाकारौ । तयोः अनुग्रीविका स्फीतिः, अनुकटिका स्फीति[6] श्चेति संज्ञे ( १८० चित्रम् )। तयोः स्थूलता ऊर्द्ध्वाधःशाखाप्रसृतानाम् नाड़ीनां तत्तत्स्थानोत्थितमूलसंकुलीभावात्। सुषुम्नाकाण्डान्तरीयान् विशेषांस्तु अग्रतो वक्ष्यामः ।

---

१ Cerebro-spinal System. २ Spinal Cord or Medulla Spinalis. ३ Conus Medullaris. ४ Cauda Equina. ५ Filum Terminale. ६ Cervical and Lumbar enlargements.

[ १८० चित्रम् ]

## सशीर्षमूलः सुषुम्नाकाण्डः ( संक्षिप्ताकारः )।




—चित्र व्याख्या—

१ शीर्षकस्थो वेणीबन्धः । २ पार्श्वपश्चिमान्तरा सीता ।
३ अग्रिमान्तरा सीता । ४ अनुग्रीविका स्फीतिः ।
५ पश्चिमान्तरा सीता । ६ अनुकटिका स्फीतिः ।
७ सुषुम्नामूलिका । क—मूलसूत्रिका ।

[ १८१ चित्रम् ]

## सुषुम्नाकाण्डस्य चरमांशः ।

( स्वाभाविकायतनः )



योगिनस्त्वाहुः—"नाड्योऽनन्ताः समुत्पन्नाः सुषुम्नापञ्चपर्वसु" इति। तेषां हि सशीर्षकसुषुम्नाकाण्डस्य सुषुम्नेति संज्ञा, सुषुम्नाशिरसः 'स्मेरधुस्तूर पुष्प'वद्वर्णनात्। ततश्च तन्मते त्रीणि स्थूलपर्वाणि शीर्षकमादाय, द्वे चान्ये पर्वणी तदन्तरालस्थे—इति पञ्चपर्वत्वं सुषुम्नायाः समुन्नेयम्। इह तु सुषुम्नाशीर्षकस्य पृथङ् निर्देशाद् द्वे एव स्थूलपर्वणी सुषुम्नाकाण्डस्य।

अथ मस्तिष्काऽनुमस्तिष्क-सुषुम्नाशीर्षकप्रभवा नाड्यः शीर्षण्या[1] नाम, तासां करोटिगुहान्तः सम्भवात्। सुषुम्नाकाण्डजास्तु नाड्यो मेरुजा[2] संज्ञाः। स्वतन्त्र-नाड़ीतन्त्रसम्भवाः पुनर्नाड्यः स्वतन्त्रा[3] इत्यभिधीयन्ते। तत्र 'मेरुजा'ख्यनाड़ीनां मूलान्यग्रतो व्याख्यास्यन्ते।

अथ **सुषुम्नाकाण्डवृतयः**[4] (१८२ चित्रम्)—तिस्रो हि कलामय्यो वृतयो मेरुनाड़ीतन्त्रं समन्तात् प्रावृत्य तिष्ठन्ति—बाह्या, मध्यमा, आभ्यन्तरी

[ १८२ चित्रम् ]

## वृतिसन्निवेश दर्शकम्।

( अनुप्रस्थच्छेदेन दर्शितः सवृतिकः सुषुम्नाकाण्डः )




**चित्रव्याख्या** :—क—पश्चिमनाड़ीमूलकन्दिका। ख—पश्चिम नाड़ीमूलम्। ग—ब्रह्मोदकुल्या। घ—पश्चिमान्तरा सीता। ङ—पश्चिमशृङ्गम्। च—नीशारिका। छ—वराशिका। ज—ब्रह्ममार्गः। झ—ब्रह्मोदकुल्या। ञ—अग्रिमशृंगम्। ट—अग्रिमान्तरा सीता। ठ—चीनांशुका। ड—अग्रिम नाड़ीमूलम्। ढ—मेरुजा नाड़ी।

---

१ Cranial Nerves. २ Spinal Nerves. ३ Sympathetic Nerves.
४ Covering Membranes of the Spinal Cord.

चेति। तासां द्वेधा विभागो वर्णनासौकर्य्याय, करोटिगुहान्तः, पृष्ठवंशान्तश्चावस्थानात्। तत्र करोटिगुहान्तरीया वृतिभागाः मस्तिष्कादिवर्णने व्याख्यातव्याः। पृष्ठवंशान्तरीयास्त्विह वर्ण्यन्ते विशेषतः।

अथासां **बहिर्वृतिः** दृढस्नायुसूत्रबहुला कलानिर्म्मिता करोटिसम्पुटान्तः पृष्ठवंशान्तश्च अस्थिमयप्राचीरिकासु कतिचित् स्नायुसूत्रैः सम्बद्धा। तस्याः 'वराशिका'[1]—इति साधारणी संज्ञा। विशेषतस्तु तस्याः सौषुम्निकांशः किञ्चिदायतनलिकाकारः सुषुम्नाशीर्षकान्तादारभ्य द्वितीयत्रिक-कशेरुकान्तं व्याप्य तुरङ्गपुच्छिकान्ते समाप्यते तनूभूतेन प्रान्तेन। स पृष्ठवंशीयास्थिषु न साक्षात् सम्बध्यते, समन्तात् सिराजालैर्मेदसा च परिवृतत्वात्। सोऽयमवकाशः 'परिवराशिक'[2]-संज्ञः। अभ्यन्तरतश्च वराशिकानीशारिकयोर्मध्ये अन्योऽवकाशस्तादृश एव लसीकापूर्णः। स "अन्तर्वराशिक"[3]-संज्ञः।

**मध्यमा वृतिः** पुनस्तनुतरकलामयी पृष्ठवंशान्तः नलिकाकारा सा 'नीशारिका'[4] नाम। तदन्तराले च महत्तरोऽवकाशो ब्रह्मवारिधरः। तस्य 'ब्रह्मोदकुल्या'[5] इति संज्ञा। तस्यां हि कुल्यायां मध्यतोऽवलम्बते सुषुम्नाकाण्डः 'चीनांशुका'-परिवृतः।

**आभ्यन्तरी वृतिः** पुनस्तनुतमा। सा सर्वथा मस्तुलुङ्गपिण्डं सुषुम्नाकाण्डं च संवेष्ट्य तद्विभागान्तरालेषु च संसक्ता, सूक्ष्मसिरा-धमनीजालकैरनुविद्धा। तस्याः 'चीनांशुके'ति[6] संज्ञा। तस्याः करपत्रिकाकारे द्वे बन्धन्यौ पार्श्वयोर्निर्गते वराशिकान्तरुभयतः संबद्धे। ते 'करपत्रिकाख्ये'[7] नाम वृतिबन्धन्यौ।

अथ **सुषुम्नाकाण्डीयाः सीताः**—सोऽयं सुषुम्नाकाण्डः षड्भिः सीताभिर्विभक्तः। तासाम् 'अग्रिमान्तरा,[8] पश्चिमान्तरा'[9] चेति द्वे सीते स्वनाम-व्याख्याते पुरः पश्चाच्च मध्यरेखायां किञ्चिद् गभीरं प्रविष्टे। तयोराद्यां सीतां गम्भीरतरां विशति चीनांशुकामयी प्राचीरिका। पश्चिमान्तु सीतां प्रविष्टा अतितन्वी प्राचीरिका क्षेत्रवस्तुमयी। ते सुषुम्नाकाण्डं सदूरयोर्वामदक्षिणपिण्डार्द्धयोर्विभजेते। ते च पिण्डार्द्धे मध्यतः 'सेतु'[10]-भागेन संयुक्ते। द्वे द्वे चापरे सीते एकैकस्मिन् पिण्डार्द्धे। तत्रैका सीता पश्चिमपार्श्वतो दृश्या, सा 'पार्श्वपश्चिमान्तरा'[11] नाम पश्चिमानां नाडीमूलानां निर्गमनद्वारभूता।

---

१ Dura mater. २ Epidural Space. ३ Subdural Space. ४ Arachnoid membrane. ५ Sub-Arachnoid Space. ६ Pia mater. ७ Ligamentum Denticulatum. ८ Antero-median Fissure. ९ Postero-median Fissure. १० Commissure ( white & grey ) ११ Postero-lateral Fissure.

सेयं सीता पश्चिमं तन्तुगुच्छं विभजते 'अग्रपार्श्वग' संज्ञकात्तन्तुगुच्छात्। पश्चिमतन्तुगुच्छन्तु ग्रीवापृष्ठदेशीये सुषुम्नाकाण्डांशे अपरया तनुसीतया द्वयोर्गुच्छकयोर्विभक्तम्। सा पश्चिमगुच्छान्तरीया[1] नाम। तयोश्च तन्तुगुच्छकयोः पश्चिमान्तरीयं[2] पश्चिमपार्श्विकञ्चेति[3] संज्ञे। अग्रपार्श्वगश्च तन्तुगुच्छं पुरः प्रसरद्भिरग्रिमनाडीमूलैर्विभज्यते द्वयोस्तन्तुगुच्छकयोः अग्रिम-पार्श्वगसंज्ञयोः[4]। तदेवमग्रिमं पार्श्वगञ्चेति तन्तुगुच्छद्वयं पुरस्तात्, पश्चिमान्तरीयं पश्चिमपार्श्विकं चेति तन्तुगुच्छद्वयं पश्चादिति चतुर्धा गुच्छविभाग एकैकस्मिन्नर्द्धे सुषुम्नाकाण्डस्य। तेषु च तन्तुगुच्छकेषु सूक्ष्मचाक्षुषपरीक्षया नाडीसूत्राणामूर्द्ध्वाधोमुखवेगवहत्वेन विवेचनयोग्यत्वात् पुनरपि पृथङ् नाडीतन्त्रिकासु विभागमाहुः परीक्षकाः[5]। प्राञ्चोऽपि—"सुषुम्ना चव्यवल्लीव" इत्यभिधाय सूत्रगुच्छमयत्वं तस्याः सूचयन्ति।

अथ **सुषुम्नाकाण्डनिर्म्माणम्**—सुषुम्नाकाण्डो वहिः शुभ्रवस्तुमयः, अन्तश्च धूसरवस्तुनिर्मित इत्यवोचाम। तस्य चांशानां सम्यङ्-निरीक्षणाय क्रियन्ते अनुप्रस्थाश्छेदाः द्वयोर्द्वयोः कशेरुकयोर्मध्ये (१८३ चित्रम्)। तथा विभक्तानां च खण्डानां सुषुम्नाखण्डिकेति[6] संज्ञा। लक्षणीयाश्च ग्रीवा-पृष्ठ-कटि-त्रिकानुत्रिकगतेषु सुषुम्नाकाण्डांशेषु पृथग् विशेषाः। तद्यथा—धूसरवस्तुनो रूपमायततरुपल्लवयुगाकारमनुत्रिकान्तः। आयतपक्षजतूकाकारं पार्श्व-शृङ्गोपलक्षितञ्च त्रिककशेरुकान्तः। क्रमशो हीयमानकायं पृष्ठकशेरुकान्तः। पुनः क्रमादायतं ग्रीवाकशेरुकान्तः आपञ्चमकशेरुकान्तम्, ततः पुनर्हीयमानकायमाचूड़ा-वलयम्। चूड़ावलयान्ते तु सुषुम्नाशीर्षकसन्धौ पुनर्विस्फारः। आयतिश्च तत्र तत्र धूसरवस्तुनि क्रमादूर्द्ध्वाधःशाखासम्बन्धिनां केन्द्राणुकानां नाड़ीसूत्राणाञ्च संकुलीभावात्। शुभ्रवस्तुनो रूपन्तु पूर्वोक्तनाड़ीसूत्रगुच्छानां स्थूलीभावेन तनूभावेन च दृश्यं यथादेशम्। तत्रापि पूर्ववदायतिर्नाड़ीसूत्र-बाहुल्याद् यथाप्रयोजनम्। (१८३ चित्रम्)।

द्विविधश्चात्र दृश्यम्—स्थूलचाक्षुषं, सूक्ष्मचाक्षुषञ्चेति। तद् विभज्य पृथग् वक्ष्यते। सन्ति च सामान्यलक्षणानि तत्तदंशानामिति तान्येवादौ प्रथमतो ब्रूमः।

---

१ Postero-intermediate fissure. २ Postero-median Column. ३ Postero-lateral Column. ४ Antero-lateral Column ५ ते हि सुषुम्नाकाण्डस्यान्तरान्तरा तन्त्रिकाकर्त्तनेनोर्ध्वाधःप्रसारिविकृतिविशेष-( Wallerian degeneration )स्य दर्शनादिदं निश्चिन्वन्ति। रोगजविकृतयोऽपि तन्मतं द्रढयन्ति तथैव दृष्टाः। ६ Neuromeres.

[ १८३ चित्रम् ]

## सुषुम्नाकाण्डस्य अनुप्रस्थाश्छेदाः (खण्डिकाः) ।




### अथ धूसरवस्तुविवेकः—

धूसरवस्तु हि दृश्यते काण्डाभ्यन्तरतः सार इव तरूणाम् । सन्निवेशाश्च तस्यानुप्रस्थच्छेदेन लक्षणीयाः पुरः पश्चान्मुखयोरर्द्धचन्द्रकयोरिव परस्पर पार्श्वतः स्थितयोः । एवञ्च प्रतिभाति श्रृङ्गद्वयं पुरतः पश्चिमतश्च । तयोः अग्रिमश्रृङ्गयुगं[1], पश्चिमश्रृङ्गयुगञ्चेति[2] संज्ञे । संयोज्यते चोभयमपि श्रृङ्गद्वयं मध्यभागे सेतुवदवस्थितेन 'श्रृङ्गसेतु'[3]ना । तस्य निर्माणं ब्रह्ममार्गस्य पुरस्तात् शुभ्रवस्तुप्रायं, पश्चिमतो धूसरवस्तुमयम् । श्रृङ्गसेतुमध्ये च दृश्यमतिसूक्ष्मं छिद्रं, सूक्ष्मस्य ब्रह्ममार्गस्य प्रदर्शकम् । सोऽयं ब्रह्ममार्गः[4] सुषुम्नाकाण्डस्य मूलसूत्रिकान्तःस्थायाः सूक्ष्मत्रिकोणगुहाया आरभ्य उर्द्ध्वं समग्रसुषुम्नाकाण्डमध्यमधिष्ठाय दृश्यते शिरसि श्रृङ्गाटकपथेन ब्रह्मगुहां यावत् प्रसृतो ब्रह्मवारिधरः[5] ।

[ अस्ति चाग्रिमश्रृङ्गद्वयान्तराले श्रृङ्गसेतोः पुरस्तादपरमपि योजकं शुभ्रवस्तुमयम्, तस्य 'सितसेतु'[6]रिति संज्ञा ]

१ Anterior Cornu or horn. २ Posterior Cornu or horn. ३ Grey Commissure. ४ Central Canal. ५ Cerebro-spinal fluid. ६ Anterior White Commissure.

परितश्च ब्रह्ममार्गं प्रसृता धूसरवस्तुकर्बुरा सूक्ष्मा केन्द्राणुकवती[1] नाड़ी चित्रिणी नाम प्राचाम्। समग्रस्य च सुषुम्नाकाण्डान्तरीयस्य धूसरवस्तुनः वज्रेति, वज्रिणीति वा संज्ञा चिरन्तनी। तदेतदखिलं षट्चक्रव्याख्याने प्रवक्ष्यामः।

अथैतदत्र सूक्ष्मचाक्षुषमणुवीक्षणयन्त्रसहायेन चक्षुषा दृश्यम्। तद्यथा—शृङ्ग-चतुष्टयं बहूनां केन्द्राणुकानां प्रभवस्थानम्। तेभ्यश्च सम्भूतानि सूक्ष्मतमानि नाड़ीसूत्राणि इतरकेन्द्राणुकानां नाड़ीसूत्रैराश्लेषपराणि। तानि च सूत्राणि गुच्छिकाकारेण सुषुम्नाकाण्डस्य शुभ्रवस्तुमयेषु बहिर्भागेषु ऊर्द्ध्वमधो वा विस्तृतानि, तन्त्रिका संज्ञानि। तानि यथाप्रयोजनमुभयतो निर्गतानि अग्रिम-पश्चिमस्थूलनाड़ी-मूलरूपेण पृष्ठवंशस्य पार्श्वच्छिद्रेभ्यः। तन्मेलकजाश्च मेरुजाख्याः स्थूलनाड्यो मध्यकाये शाखासु च प्रसृताः (१८४ चित्रम्)।

अत्र चैते विशेषाः। अग्रिमशृङ्गद्वये स्थितानां[2] पुञ्जीभूतकेन्द्राणुकानां भूयांसोऽक्षतन्तवः सम्भूय परिणमन्ति चेष्टावहासु नाड़ीषु, संज्ञावहासु च केचित्। पश्चिमशृङ्गद्वये स्थितानां तु पुञ्जीभूतकेन्द्राणुकानामक्षतन्तवः प्रायेण ह्रस्वाः पुरोगामिनश्च। तेषु केचन अग्रिमशृङ्गीयानक्षतन्तून् विशेषत आश्लिष्य तिष्ठन्ति, जनयन्ति च प्रतिसंक्रमितान् वेगान्। सन्ति चात्र धूसरवस्तुनः पार्श्वतो मध्यतश्च

[ १८४ चित्रम् ]

सुषुम्नाकाण्डस्य अनुप्रस्थकर्त्तिता खण्डिका।




1 Substantia Gelatinosa Centralis.

स्थितानां तादृशकेन्द्राणुकानामक्षतन्तवो दीर्घा ऊर्ध्वं मस्तिष्काभिमुखं प्रसारिण्यः। संक्षेपतस्तु अग्रिमशृङ्गीयकेन्द्राणुकानामक्षतन्तवो भूम्ना चेष्टावहाः, पश्चिमशृङ्गीय-केन्द्राणुकानां संज्ञावहाः। सन्ति च तत्रैवान्यानि केन्द्राणुकानि येषामक्षतन्तवः अन्तर्मुखा बहिर्मुखाश्च स्वतन्त्रनाड़ीतन्त्रेण सम्बध्यन्ते अग्रिम-पश्चिमनाड़ीमूलसूत्र-द्वारेण तन्त्रयन्त्रक्रियानिर्वहणायेति दिक् (१८४ चित्रम्)। विस्तरस्तु आकरे शारीरक्रियाविज्ञाने च मृग्यः।

अथ **शुभ्रवस्तुविवेकः**—

व्याख्याताचराणीह सुषुम्नाकाण्डीय-सीताभिर्विभक्तानि स्थूलदृश्यानि मुख्य-तन्तुगुच्छकानि—अग्रिम-पार्श्वग-पश्चिमा-न्तरीय-पश्चिमपार्श्विकसंज्ञानि। तत्र अग्रिम-पार्श्वगगुच्छयोर्मध्यं निर्भिद्य गतानि यतस्ततो मेरुजाख्यनाड़ीनामग्रिममूलानि। तैर्विभज्यते अग्रिमं पार्श्वगश्चेति गुच्छ-कद्वयं स्फुटविभागम्। पृष्ठतश्च पश्चिम-नाड़ीमूलानां दृश्यं पश्चिमं गुच्छकं पुनस्तनुसीतया द्विभागविभक्तम्। तानि च सर्वाणि गुच्छकानि प्रायः सवृतिकैः सूक्ष्मसूक्ष्मतरैर्नाड़ीसूत्रैः क्षेत्रवस्तुपरिवृतै-र्निर्मितानि। क्षेत्रवस्तु च सुषुम्नाकाण्ड-परिधौ दृश्यं बाहुल्येन। त एते शुभ्र-वस्तुनः स्थूल-सूक्ष्मचाक्षुषपरीक्षादृश्याः विभागाः स्थानसन्निवेशाश्च चित्रेषु लक्षणीयाः (१८६।८७ चित्रयोः)।

तत्र धूसरवस्तुनः पुरः पार्श्वतश्च स्थितं सूक्ष्मसूत्रजालकमयं शुभ्रवस्तु **तन्तुभूमिका** नाम। सा द्वेधा विभज्यते अग्रिम-पार्श्वगभागयोः, अग्रिम-

(१८५ चित्रम्)

## सुषुम्नाकाण्डस्य अनुलम्बच्छेदः




[ १ शुभ्रवस्तु। २ धूसरवस्तु। ]

शृङ्गीयनाड़ीमूलैर्बहिर्गच्छद्भिः । तत्र अग्रिमशृङ्गस्य (क) पुरस्त्यो भागः अग्रिमा तन्तुभूमिका[1] इत्युच्यते, (ख) पार्श्वगो भागः पार्श्वगा तन्तुभूमिकेति[2] । त्रेधा च तत्र सूत्राणि क्षेत्रवस्तुपरिवृतानि। तद्विभिन्नांशयोजकाश्च ते ते सूत्रसन्निवेशाः। तद्-यथा—दीर्घाणि नाड़ीसूत्राणि सुषुम्नाकाण्डस्य खण्डिकान्तरीयकेन्द्राणुकानां परस्पर-संयोजकानि ( १८५ चित्रम् ) । ह्रस्वानि नाड़ीसूत्राणि पार्श्वतो विस्तृतानि अग्रिम-नाड़ीमूलाभिगतानि। अपराणि तिरश्चीनसूत्राणि सितसेतुं समाश्रित्य वेणीवन्धन-क्रमाद् विपर्ययेण[3] प्रसृतानि अग्रिमशृङ्गस्थकेन्द्राणुकानां परस्परसंयोजकानि ।

अथेमां तन्तुभूमिकां परितः काण्डपरिधौ तन्मध्ये च दृश्यानि सूक्ष्म दीर्घ नाड़ी-सूत्रगुच्छानि **नाड़ीतन्त्रिका**[4] नाम ( १८६।१८७ चित्रयोः ) । तासां सुनिरूपिता दश तन्त्रिका एकैकस्मिन् काण्डार्द्धे द्रष्टव्याः । तद्यथा (पुरःपश्चात्- क्रमेण)—

१। **सरला मुकुलतन्त्रिका**[5]—सेयमग्रिमान्तराख्यसीतायाः पार्श्वस्था सुषुम्नाकाण्डस्य उत्तरार्द्धमात्रे दृश्या। सा मस्तिष्कगोलार्द्धस्य समानपार्श्विकस्य वहिःस्तरीय चेष्टाकेन्द्रेभ्यः सम्भूतानामान्तरकूर्च्चवल्लिकासूत्राणां सुषुम्नाशीर्षके मुकुलिकासूत्रेषु परिणतानां लघ्वंशरूपा। तत्रसूत्राणि चादौ सुषुम्नाशीर्षके वेणीवन्धमप्रविश्यैव अधस्ताद् ऋजुगत्या सुषुम्नाकाण्डे प्रसृतानि। शेषे तु तान्यपि सुषुम्नाकाण्डीयशृङ्गसेतोः पुरःस्थे सितसेतौ वेणीवन्धेन परस्परमुल्लंघ्यैव अपरार्धीयैरग्रिमशृङ्गीयकेन्द्राणुकैः सङ्गतानि। एवञ्च तत्तत्केन्द्राणुकप्रभवाणि नाड़ीसूत्राणि अपरार्ध एव मध्यकायस्य शाखयोश्च चेष्टावेगान् वहन्ति—इत्यादौ सरलाऽपि परिणामे कुटिलैवेयं तन्त्रिकेति स्मर्त्तव्यम्।

२। **कुटिला मुकुलतन्त्रिका**[6]—सेयं पश्चिमशृङ्गस्य पार्श्वतो दृश्या स्थूलतमा तन्त्रिका अनुप्रस्थच्छेदेषु वर्तुलप्रायं देशमधिकृत्य वर्तमाना। तन्निर्माप-कानि नाड़ीसूत्राणि पूर्ववदेव अपरपार्श्वीयमस्तिष्क-गोलार्द्धस्य चेष्टाधिष्ठान-केन्द्राणुकेभ्यो निर्गतानि। तानि सुषुम्नाशीर्षके वेणीवन्धक्रमेण इतरपार्श्वीयां मुकुलिकां प्रविश्य अधस्तात् प्रसृतानि तन्त्रिकानिर्माणाय। समाप्यन्ते च तत्-प्रताना अग्रिमशृङ्गस्थकेन्द्राणुकानि परितः। तेषु प्रवहन्ति चेष्टावहा वेगाः अपरार्ध एव मध्यकायस्य शाखयोश्च।

३। **पार्श्वपूर्वा तन्त्रिका**[7]—सेयं तन्तुभूमिकायाः पुरस्तात् काण्डपरिधि-

---

१ Anterior Basis bundle. २ Lateral Basis bundle. ३ दक्षिणानि वामतः, वामानि च दक्षिणतः—इति भावः। ४ Tracts or Columns. ५ Direct Pyramidal Tract or Anterior Cerebrospinal Fasciculus. ६ Crossed Pyramidal Tract. ७ Vestibulo-spinal & Tecto-spinal Tracts.

माश्रित्य तिष्ठति (१८६ चित्रम्)। तन्निर्मापकानि नाड़ीसूत्राणि प्राणगुहाभूमिस्थ-श्रुतिमूलकेन्द्रतः कलायिकाचतुष्टयाच्च सम्भूय अधःप्रसृतानि, मिलितानि च अग्रिम-श्रृङ्गस्थैः केन्द्राणुतन्तुभिः। तद्वहाश्च वेगाः अधोमुखाः पेशीपुञ्जक्रियाणां परस्पर-सामञ्जस्यविधायिनः—इति परीक्षकाः।

४। **पार्श्वमध्या तन्त्रिका**[१]—(धम्मिल्लाभिगा पूर्वा वा) तन्तुभूमिकायाः पार्श्वतः काण्डपरिधौ मध्यभागे वर्तते (१८६ चित्रम्)। तत्रस्थानि च नाड़ीसूत्राणि ऊर्द्ध्वमुखानि इतरपार्श्वीयपश्चिमश्रृङ्गस्थेभ्यः केन्द्राणुकेभ्यः सम्भूय तिरश्चीनगत्या श्रृङ्गसेतोरग्रिमार्द्धमुल्लंघ्य सुषुम्नाशीर्षकमार्गेण धम्मिल्लकस्य उत्तरवृत्तिकान्तम् प्रविशन्ति। तेषु ऊर्द्ध्वमुखो वेगः पेशीक्रियाणां वार्त्तावहः।

५। **पार्श्वान्तिका तन्त्रिका**[२]—(धम्मिल्लाभिगा पश्चिमा वा) सुषुम्ना-काण्डस्य वहिःपार्श्वपरिधौ पश्चिमतो वर्तते कटिकशेरुकोपरिष्टात्। तत्रस्थानि च नाड़ीसूत्राणि पश्चिमश्रृङ्गस्थकेन्द्राणुकेभ्यः सम्भूय ऊर्द्ध्वं प्रसरन्ति धम्मिल्ल-कीयामधर-वृत्तिकाम् प्रवेष्टुम्। तेष्वपि ऊर्द्ध्वमुखो वेगः पेशीचेष्टानां वार्त्तावहः।

६। **पश्चिमान्तिका तन्त्रिका**[३] त्रिधारप्राया पश्चिमान्तराख्यसीता-पार्श्वस्था। सा सुषुम्नाकाण्डस्य अधरार्द्धसम्बन्धि-पश्चिमनाड़ीमूलकन्दिकानां केन्द्राणुकेभ्यः सम्भूतैर्नाड़ीसूत्रैर्निर्मिता। तानि च नाड़ीसूत्राणि ऊर्द्ध्वं प्रसृतानि सुषुम्नाशीर्षकान्तः दशाकन्दिकां प्रविशन्ति। तैश्चोर्द्ध्वं प्रवहन्ति मध्य-कायाधरार्द्धस्य त्वाचसंज्ञाश्चेष्टाजसंज्ञाश्च विशेषेण।

७। **पश्चिमपार्श्विकी तन्त्रिका**[४]—सेयं पश्चिमान्तिकाख्यतन्तुगुच्छ-कात्तनुपत्रिकाव्यवधानमात्रेण भिन्ना पश्चिमश्रृङ्गस्य पृष्ठस्था। सा सुषुम्ना-काण्डस्य उत्तरार्द्धसम्बन्धि-पश्चिमनाड़ीमूलकन्दिकाभ्यः सम्भूतैर्नाड़ीसूत्रैर्निर्मिता। तानि च नाड़ीसूत्राणि ऊर्द्ध्वं सुषुम्नाशीर्षकान्तः कोणकन्दिकां परितः समाप्यन्ते। तैश्चोर्द्ध्वं प्रवहन्ति मध्यकायोत्तरार्द्धस्य त्वाचसंज्ञाः, चेष्टाजसंज्ञाश्च विशेषेण।

८। **आज्ञाभिगा तन्त्रिका**[५]—(१८६ चित्रम्) अग्रिमश्रृङ्गस्य पुरस्ताद् विन्यस्ता तन्वी अर्द्धचन्द्राकारपरिधिश्च। तां निर्भिद्य बहिर्गच्छन्ति चेष्टावहनाड़ीमूलानि। सेयमूर्द्ध्वमाज्ञाकन्दमभिविशति शीतोष्णरुजादिसंज्ञानां तत्र प्रापणाय।

---

१ Ventral Spino-cerebellar tract. २ Direct or Dorsal Spino cerebellar tract. ३ Fasciculus Cuneatus or Column of Burdach. ४ Fasciculus Gracilis or Column of Goll. ५ Spino-thalamic tract.

[ १८६ चित्रम् ]

## सुषुम्नाकाण्डस्य अनुप्रस्थच्छेदः ।

( तन्त्रिकानामवस्थानदर्शकः )




[ चित्रव्याख्या—अ०—अग्रिमान्तरा सीता । अ० शृ०—अग्रिमशृङ्गम् । १ तन्तुभूमिका । २ ब्रह्ममार्गः । ३ पश्चिमशृङ्गनिर्गता नाड्यः । प०—पश्चिमान्तरा सीता । प० शृ०—पश्चिमशृङ्गम् । ]

[ १८६ (क) चित्रम् ] **सुषुम्नाशीर्षकीय वेणीबन्धक्रमः** [ अनुप्रस्थच्छेदः ]




[ क—पश्चिम सीता । ख—वेणीबन्धः । १-१—दशाकन्दिके । २—पश्चिमशृङ्गाभिगसूत्राणि । ३—अग्रिमशृङ्गभवसूत्राणि । ४—ब्रह्ममार्गः । ५—चित्रिणी कन्दाणुकानि । ६—अग्रिमशृंगीयकन्दाणुकानि । ७—पश्चिमशृंगीयकन्दाणुकानि ।

[ To face p. 2

९। **शोणजा नाम तन्त्रिका**[1]—मस्तिष्कमृणालकान्तरीय शोणकन्दिकातः सम्भूय (२०१ चित्रम्) सुषुम्नाकाण्डे मुकुलिकाख्यतन्त्रिकायाः पुरस्तान्मध्यतो विराजते विभिर्धाराभिरुपलक्षिता। अतएवास्याः क्वचित् मध्यमा त्रिधारतन्त्रिकेति संज्ञा। तत्सूत्राणि धम्मिल्लकोद्भूतान् चेष्टासामञ्जस्यप्रदानधोमुखवेगान् अग्रिमशृङ्गीय कन्दाणुकानि परितो वहन्तीति परीक्षकाः।

१०। **विषाणिका नाम तन्त्रिका**[2]—शोणजाख्यतन्त्रिकायाः पुरोवर्त्तिनी अनुप्रस्थच्छेदेषु विषाणसदृशरूपा। सा पश्चिममस्तुलुङ्गपिण्डान्तरीयश्रुतिमूलकेन्द्रतोऽवरूढ़ा सुषुम्नाकाण्डार्द्धं अग्रिमशृङ्गीयकन्दाणुकानि परितः समाप्यते सूक्ष्मैः सूत्रप्रतानैः। प्रवहन्ति च तैरपि चेष्टासामञ्जस्यप्रदा वेगा धम्मिल्लकप्रभवाः।

आसाञ्च तन्त्रिकाणां मध्ये पञ्च आरोहिण्यः, पञ्चैव अवरोहिण्यः - इति स्पर्त्तव्यम्।

ता एता दश तन्त्रिकाः संक्षेपेण व्याख्याताः। सन्ति चान्या अपि असम्यङ्-निर्धारितस्वरूपाः अर्धसमाप्ता वा तन्त्रिकाः काण्डाभ्यन्तरतस्ता नेह चिन्त्यन्ते।

इमे च दशानां मुख्यतन्त्रिकाणां नाम-कर्म्मणोः सुखस्मरणाय श्लोकाः—

(नामानि यथा—) सरला कुटिला चेति द्वे स्तो मुकुलतन्त्रिके।
पूर्व-मध्याऽन्तिकासंज्ञा स्तिस्रः स्युः पार्श्वतन्त्रिकाः॥ १
पश्चिमान्तिक-पार्श्विक्यौ द्वे स्तः पश्चिमतन्त्रिके।
आज्ञाभिगा विषाणी च शोणजा चेति ता[3] दश॥ २

(कर्म्माणि यथा—) पश्चिमे[4] वहतः संज्ञामाज्ञाकन्दाभिगा च या।
स्पर्शजां, चेष्टनोत्थाञ्च विशेषात् पश्चिमद्वयी॥ ३
पार्श्वान्तिका पार्श्वमध्या धम्मिल्लं प्रति धावतः।
चेष्टोत्थवार्त्तामुद्वोढुम्, आरोहिण्यो हि पञ्च ताः॥ ४
चेष्टावेगान् प्रवहतो मुकुलाख्ये तु तन्त्रिके॥
वहन्ति[5] पार्श्वपूर्वा तु शोणजा च विषाणिका।
चेष्टासंयमनान् वेगान् पूर्वं धम्मिल्लकोत्थितान्।
पञ्चैता अवरोहिण्यः, सोऽयं कर्म्मविनिश्चयः॥ ५।६

---

१ Rubro-Spinal Tract. २ Vestibulo-Spinal Tract. ३ तास्तन्त्रिकाः।
४ तिस्रोऽपि स्पर्शसंज्ञां वहन्ति। पश्चिमतन्त्रीद्वयन्तु चेष्टाजसंज्ञां विशेषेण वहतीत्यर्थः।
५ वहन्तीति तिसृणां समुच्चितवचनम्।

अथ **मेरुजाख्यनाड़ीनां मूलानि**[१]—तानि सुषुम्नाकाण्डमुभयतो युग्मैः सूत्रगुच्छकैरग्रिम-पश्चिमैर्निर्गच्छन्ति पृष्ठवंशान्तरेव पार्श्वतः। तत्सम्मेलनप्रभवाश्च मेरुजाख्या नाड्यः इति सूचितपूर्वम्। तत्र एकैकस्मिन् पार्श्वे दृश्यानि पञ्चषाणि नाड़ीमूलसूत्राणि। पश्चिमनाड़ीमूलसूत्रगुच्छान्ते पुनर्दृश्याः कन्दिकाः पश्चिमनाड़ीमूलकन्दिकाः[२] नाम, ताभ्यश्च निर्गतास्तनुनाड्यो मेरुजाख्यनाड़ीभ्यः पृथग् भूतास्तत्पार्श्वगाः। कन्दिकाश्चातिक्रम्य निर्गतानि नाड़ीसूत्राणि अग्रिमनाड़ीमूलसूत्रैः संयुज्यन्ते मेरुजाख्यनाड़ीनिर्माणाय।

ताश्च मेरुजा नाड्यः कशेरुकाणामन्तरालस्थैः रन्ध्रमार्गैः पृष्ठवंशस्य वामदक्षिणपार्श्वयोः प्रसृताः युग्मरूपाः। तासामिदं संख्यानमेकैकतः। ग्रीवां प्रत्यष्टौ। पृष्ठं प्रति द्वादश। कटिवंशं प्रति पञ्च। त्रिकास्थि प्रति पञ्च। अनुत्रिकास्थि प्रत्येका। ता एताः साकल्येन एकाधिका त्रिंशद् मेरुजाख्या नाड्यः एकैकतो द्रष्टव्याः। तच्छाखा-प्रशाखादयस्तु यथास्थानं वर्णयिष्यन्ते।

सोऽयं सुषुम्नाकाण्डः सपरिकरो व्याख्यातः संक्षेपेण।

इति तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः।

अथातः पश्चिममस्तुलुङ्गपिण्डवर्णनीयमध्यायं व्याख्यास्यामः।

इह खलु **पश्चिममस्तुलुङ्गपिण्डं**[३] नाम—सुषुम्नाशीर्षकम्, उष्णीषकं धम्मिल्लकञ्चेति अवयवत्रयेण निर्मितं पिण्डं करोटिगुहायां पश्चिम महाखातस्थम्। तच्च पृथक्कृतमिव मस्तिष्कात् जवनिकाख्येन[४] मस्तिष्कवृतिभागेन। तत्र उष्णीषक-धम्मिल्लकयोः पुरःपश्चाद्वर्त्तिनोर्मिलितयोरनुमस्तिष्कमिति[५] संज्ञा। तयोर्मध्ये निहितं तत्सम्बद्धञ्च सुषुम्नाशीर्षकम्।

अथ सुषुम्नाशीर्षकवर्णनम्।

**सुषुम्नाशीर्षकं**[६] तु सुषुम्नाकाण्डस्य शिखरे पश्चिमकपालमूलभागमधितिष्ठत् करोटितलस्थे महाविवरे दृश्यम्। तच्च निखिलसौषुम्निकतन्त्रिकाणां संग्राहकं, संयोजकञ्च कासाञ्चित्तन्त्रिकाणां मस्तिष्कानुमस्तिष्काभ्याम्। प्रभवनिर्गमस्थानञ्च तद् बहूनां केन्द्राणुकानां शीर्षण्यनाड़ीनाञ्च षष्ठ्यादि द्वादशान्तानाम्।

---

१ Roots of the Spinal Nerves २ Ganglions of the Posterior Nerve-roots ३ Rhombencephalon. ४ Tentorium Cerebelli. ५ Metencephalon. ६ Medulla Oblongata.

[ १८७ चित्रम् ]

## सुषुम्नाकाण्डस्य अनुप्रस्थच्छेदो द्वितीयः ।

( कन्दाणुपुञ्जानां संस्थानदर्शकः )



चित्रव्याख्या—१।२ अग्रिमशृङ्गीयं केन्द्राणुपुञ्जद्वयम् । ३ पार्श्वशृङ्गस्थं केन्द्राणुपुञ्जम् । ४ पश्चिमशृङ्गमूलस्थं तदेव अक्षतन्तुसहितम् । ५ पश्चिमशृङ्गस्थं कन्दाणुपुञ्जम् । ६ अग्रिमशृङ्गमूलस्थं तदेव यस्य अक्षतन्तुः पश्चिमशृङ्गं प्रविशति । ७ चित्रिणीवर्त्मस्थं कन्दाणुपुञ्जं सूक्ष्मम् । ८ सितसितौ वेणीबन्धकरतन्तूनां कन्दाणुकानि । ९ निरक्षकन्दाणुकम् । १० तन्तुभूमिकातन्तूनां मूलभूतानि कन्दाणुकानि । ११ अग्रिमनाडीमूलानि । १२ पश्चिमनाडीमूलानि । १३ तत्सम्बद्धाः कन्दिकाः ।

**अत्र रक्तानि कन्दाणुकानि चेष्टावहनाडीनां केन्द्राणि । नीलानि तु संज्ञावहनाडीनाम् ।**

[ To face p. 26 ]

ध्रियते च तत्र प्राणगुहायाः निम्नार्द्धं पश्चिमतो धम्मिल्लकाच्छादितम्। तद् दैर्घ्येण द्व्यङ्गुलमात्रम्, सार्द्धाङ्गुलप्रस्थं कनिष्ठिकापरिणाहश्चाधस्तात्। तस्योर्द्धभागः स्थूलतरपरिणाहः उष्णीषकाधःसीम्नि वर्तते, अधोभागस्तु सुषुम्नाकाण्डानुबन्धी। मध्ये चास्य निम्नार्द्धमात्रे दृश्यः सूक्ष्मो ब्रह्ममार्गः चित्रिण्याख्य-धूसरवस्तुपरिवृतः। स चोत्तरार्द्धे पश्चिमतः स्फारीभूय प्राणगुहाया अधरार्द्धं त्रिकोणाकारमारचयति।

[ १८८ चित्रम् ]

## सुषुम्नाशीर्षकम् ( उष्णीषकसहितम् )

( सम्मुखतो दृष्टम् )




अ—अग्रमूलिकाख्य धमन्या आश्रयखातम्।

अथास्य सुषुम्नाशीर्षकस्य पुरः पश्चाच्च दृश्ये द्वे सीते अग्रिमान्तरा पश्चिमान्तरा[1] चेति। एकैकतश्च पार्श्वभागे दृश्ये अपरे सीते – अग्रिमा पार्श्वगा पश्चिमा पार्श्वगा[2] चेति। तासामिमे विशेषाः स्फुटं दृश्याः ( १८८।१८९ चित्रयोः )। यथा—

अग्रिमान्तरा नाम सीता पुरस्तान्मध्यरेखायां दृश्या सुषुम्नाकाण्डस्य तादृशसीतानुबन्धिनी। तस्या ऊर्द्ध्वप्रान्तः उष्णीषकमूलस्थेन त्रिकोणसूक्ष्म-विवरेणोपलक्षितः। अधरार्द्धे तु तस्या बाह्यवेणीवन्धाख्यः परस्परालङ्गि तिरश्चीन-सूत्रसंघातो विशेषादुपलक्षणीयः। सीताश्चोभयतः उत्तरार्द्धमात्रे दृश्ये तनुदीर्घे पिण्डिके मुकुलिके[3] नाम। तदुभयपार्श्वतो लक्षणीये अग्रिमे सीते पार्श्वगे[4] नाम।

१ Anterior Median Fissure & Posterior Median Fissure. २ Antero-lateral Sulcus & Postero-Lateral Sulcus. ३ Pyramid. ४ Antero-Lateral Sulcus.

[ १८९ चित्रम् ]

## सुषुम्नाकाण्डस्य उत्तरभागः शीर्षकोष्णीषकसहितः पश्चिमतो ( धम्मिल्लकस्य अपसारणेन ) दृष्टः ।




क—कलायिकाचतुष्टयम् ( मस्तिष्कमृणालद्वयमध्यस्थम् ) । ख—मस्तिष्कमृणालकम् । ग—कटाक्षिणी नाड़ी । घ—धम्मिल्लकस्य उत्तरवृन्तिका । ङ—चतुरस्रखातम् ( प्राणगुहा ) । च—नीशारिका (परावर्त्तिता) । छ—मस्तिष्कमातृका धमनी । ज—दशाचूड़िका । झ—'ग्रीवापृष्ठगा' नाड़ी । ञ—पश्चिमक्षान्तिका तन्त्रिका । ट—करपत्रिकाख्या वृतिबन्धनी । ठ—वराशिका (परावर्त्तिता) । ड—नीशारिका ( परावर्त्तिता ) । ढ—चीनांशुकापरिवृतः सुषुम्नाकाण्डः । ण—द्वितीयग्रैवेयनाड्याः पश्चिममूलम् । त—'ग्रीवापृष्ठगा' नाड्याः मेरुजांशः । थ—प्रथमग्रैवेयनाड्या पश्चिममूलम् । द—पश्चिमकपालम् । ध—ग्रीवापृष्ठगा नाड्याः मेरुजांशः । न—जिह्वातलगा नाड़ी । प—'ग्रीवापृष्ठगा' नाड्याः शीर्षण्यांशः । फ—प्राणदा नाड़ी । ब—कण्ठरासनी नाड़ी । भ—श्रुतिनाड़ी । म—वक्त्रनाड़ी । य—त्रिधाराख्या शीर्षण्यनाड़ी ।

तयोरवस्थानं द्वादशनाड्योर्मूलसूत्रैः सीताद्वयमाश्रित्य स्फुटं निर्गच्छद्भिः सूच्यते। पश्चिमपार्श्वसीतयोरवस्थानञ्च तद्वदेव नवम्यादिशीर्षण्यनाडीत्रयस्य मूलसूत्रैर्लक्ष्यम्। उभयोश्च सीतयोरन्तराले दृश्ये लवलिका[१] संज्ञे प्रायोवर्तुले पिण्डके लवलीफलाकारे। तदन्तश्च स्थूलतरा कन्दिका—लवलीकन्दिका[२] नाम। तन्मूले चाधस्ताद् दृश्ये सूत्रावल्यौ धनुःकोटिवत् मुकुलिकापार्श्वाभ्यां परावृत्य प्रसृते। त एते बहिर्धानुष[३] सूत्रावली संज्ञे।

पश्चिमान्तरा[४] नाम सीता सुषुम्नाशीर्षकस्य पृष्ठतो निम्नार्द्धमात्रे दृश्या। उत्तरार्द्धे तु सैव द्विधा भिन्ना त्रिकोणाकारं प्राणगुहाया अधरार्द्धं क्रोड़ीकरोति। ताञ्च सीतामुभयतः स्थूलप्राये तन्त्रिके पश्चिमान्तिके[५] नाम। तयोः स्फीतभागयोः दशाचूड़िकेति[६] संज्ञा। तदन्तश्च दृश्ये धूसरवस्तुनी दशाकन्दिके[७] नाम। तत्केन्द्राणुकानि परितः समाप्यन्ते पश्चिमान्तिकाख्यतन्त्रिकयोः सूत्राणि। अपरे च तन्त्रिकापार्श्वयोर्दृश्ये तन्त्रिके पश्चिमपार्श्विक्यौ[८] नाम। तयोः स्फीतभागौ कोणचूड़िका[९] संज्ञौ। तदन्तश्च दृश्ये धूसरवस्तुनी कोणकन्दिके[१०] नाम। तत्केन्द्राणुकानि परितः समाप्यन्ते पश्चिमपार्श्विक्याख्यतन्त्रिकयोः सूत्राणि। ता एताश्चतस्रोऽपि तन्त्रिकाः तदाख्यसुषुम्नाकाण्डीय मुख्यतन्त्रिकाणामनुबन्धभूताः। तासां शिखराणि प्राणगुहामूले पार्श्वयोः प्रसृतानि। तदुभयतो दृश्यैश्च बहिर्मुखैः सूत्रैर्निर्मीयेते धम्मिल्लकस्य अधरवृन्तिके[११]। तानि च पार्श्वान्तिकाख्यसुषुम्नाकाण्डीयतन्त्रिकासम्भवानि सूत्राणि बाह्याभ्यन्तर 'धानुष' संज्ञानि धम्मिल्लकं प्रविशन्ति।

प्राणगुहान्तरीयान् विशेषांस्तु प्राणगुहावर्णने विशदीकरिष्यामः।

**सुषुम्नाशीर्षकस्य आभ्यन्तरविशेषाः** पुनः स्थूल-सूक्ष्मचाक्षुषपरीक्षासमन्वयेन अनुलम्बानुप्रस्थच्छेदेषु दृश्याः। (१६०।१६१।१६२ चित्रेषु च)।

तत्रायं प्रथमो विशेषः। सुषुम्नाशीर्षकस्थं धूसरवस्तु न सर्वत्र मध्यस्थं सुषुम्नाकाण्ड इव। तस्य तन्तुजालान्तरेषु विचित्रसन्निवेशतो बहुधा पृथक्तया दर्शनात्। तानि च पृथग् दृष्टानि धूसरवस्तूनि प्रायेण कन्दिका[१२] संज्ञकानि। तेषु कानिचित् सुषुम्नाकाण्डीय धूसरवस्त्वनुबन्धभूतानि, अपराणि सर्वथा स्वतन्त्राणि शीर्षण्यनाड़ीनां प्रभवकेन्द्रभूतानि। (१६२ चित्रम्)

---

१ Olive. २ Inferior Olivery Nucleus. ३ External Arcuate Fibres. ४ Postero-median Fissure. ५ Fasciculus Gracilis (Column of Goll). ६ Clava. ७ Nucleus Gracilis. ८ Fasciculus Cuneatus (Column of Burdach). ९ Cuneate Tubercle. १० Nucleus Cuneatus. ११ Restiform Bodies. १२ Nucleus.

[१६० चित्रम्] [१६१ चित्रम्]

## सुषुम्नाशीर्षकस्य अनुप्रस्थच्छेदद्वयम् ।

( वेणीबन्धस्याधःस्ताद् ) ( वेणीबन्धप्रदेशे )







१ पश्चिमान्तरा सीता । २ पश्चिम नाड़ीमूलम् (संज्ञावहम्) । ३ पश्चिमतन्त्रिकाः । ४ पश्चिमशृंगम् । ५ कुटिला मुकुलतन्त्रिका । ६ अग्रिमनाड़ीमूलम् (चेष्टावहम्) । ७ वेणीबन्धसूत्राणि । ८ अग्रिमान्तरा सीता । ९ बल्लिकासूत्राणि । १० अग्रिमशृंगम् । ११ अग्रिमशृंगद्वयस्य मूलभागान्तःस्थो ब्रह्ममार्गः । १२ पश्चिमान्तिका तन्त्रिका ।

एष च द्वितीयो विशेषः । सुषुम्नाकाण्डीयानि कुटिलमुकुलिकाख्य-चेष्टावहतन्त्रिकासूत्राणि तिर्यग् वेणीबन्धक्रमेणात्र प्रसृतानि—दक्षिणसूत्राणि वामतः, वामसूत्राणि च दक्षिणतः । तैर्मध्ये खण्डितं लक्ष्यते शृङ्गद्वयमग्रिमम् । पश्चिमान्तिका-पश्चिमपार्श्विकाख्यसंज्ञावहतन्त्रिकाद्वयसूत्राण्यपि तथैव वेणीबन्ध-क्रमेण प्रसृतानि । तैर्द्वेधा खण्डितं दृश्यते शृङ्गद्वयं पश्चिमम् । सोऽयं द्वितीयो वेणीबन्धः संज्ञावहश्चेष्टावहवेणीबन्धस्थानादूर्द्ध्वतरभागमधितिष्ठति । एवं बहुधाखण्डितस्य सुषुम्नाशीर्षकीयशुभ्रवस्तुनः पुरःपार्श्वभागयोर्दृश्यो नाड़ीजालक-मयोंऽशः जालवस्तुक[१] संज्ञः ( १६२ चित्रम् ) । तदन्तरे च दृश्यौ सूत्रसंघातौ वल्लिका[२] संज्ञौ । तौ दशा-कोणाख्य कन्दिकाद्वयप्रभवौ तत्तत्संज्ञावहौ ।

असौ च तृतीयो विशेषः । सुषुम्नाकाण्डान्तरीयो ब्रह्ममार्गः शीर्षकस्य उत्तरार्द्धे स्फारीभूय विवृतः प्राणगुहानिम्नार्द्धं विरचयति । तत्र च ब्रह्ममार्ग-वेष्टनेन धूसरवस्तुना चित्रिणीसंज्ञेन निर्मीयन्ते दशम्या द्वादश्याश्च शीर्षण्यनाड़ीनां केन्द्रभूताः कन्दिकाः, अपराणि च स्वल्पतर केन्द्राणि ( १६२ चित्रम् ) । सन्ति च प्राणगुहाया उत्तरार्द्धेऽपि उष्णीषकाङ्गभूते तादृश्य एव कन्दिकाः पञ्चम्यादिशीर्षण्य-नाड़ीनां मूलभूताः—इत्यग्रे वक्ष्यामः ।

---

१ Formatio Reticularis. २ Fillet or Lemniscus.

[ १६२ चित्रम् ]

## सुषुम्नाशीर्षकस्य मध्यभागेऽनुप्रस्थच्छेदः।

( षड्गुणीकृत्य चित्रितः )




१ द्वादश-नाड़ीकंदिके। २ दशम-नाडीकंदिके। ३ पश्चिम प्राणपिधानिकायाः कर्त्तितांशः। ४ दशाकंदिका। ५ कोणकंदिका। ६ धंमिल्लकस्य अधरवृंतिका। ७ त्रिधाराख्य-नाड्याः सूत्रसंघातः। ८ प्राणदा नाड़ी। ९ धानुषी सूत्रावली। १० अधरा लवलीकंदिका। ११ द्वादशी ( जिह्वातलगा ) नाड़ी। १२ अग्रिमान्तरा सीता। १३ पार्श्विकी लवलीकंदिका। १४ जालकवस्तु ( शुभ्रम् )। १५ जालकवस्तु ( धूसरम् )। १६ उभयार्धयोः संयोगरेखा।

**शीर्षण्यनाड़ीप्रभवस्थानानि त्वग्रे समुच्चयेन विशदीकरिष्यामः।**

## अथ उष्णीषकवर्णनम्।

**उष्णीषकं**[1] **नाम—पश्चिममस्तुलुङ्गपिण्डस्य पुरस्त्यो भागः उष्णीषपट्टिका-वदनुप्रस्थप्रसृताभिः सूत्रपट्टिकाभिरुपलक्षितः ( १८८।१९६ चित्रयोः )। तत् मस्तिष्क-धम्मिलक-सुषुम्नाशीर्षकाणां परस्परसंयोजकं, द्व्यङ्गुलायतं सार्द्धाङ्गुलदीर्घश्च।**

१ Pons.

तस्योर्द्ध्वसीम्नि मध्यरेखामुभयतो द्वश्ये बहिर्निर्गते मस्तिष्कमृणालके, अधःसीम्नि द्वश्यं सुषुम्नाशीर्षकम्, पृष्ठतः पार्श्वयोश्च स्तोकेन धम्मिल्लकपिण्डद्वयम्— इति चतुःसीमनिर्देशः ।

तस्य द्वौ भागौ—पुरोभागः पश्चिमभागश्चेति । तत्र—

(१) पुरोभागः—जतूकास्थ्न ऊर्द्ध्वतलमधिशेते । स मध्यरेखायां सीवनिका[१]ख्यसीताङ्कितः अग्रमूलिकाख्यधमन्या धारणाय । तत्रानुप्रस्थविन्यस्तानि सूत्राणि स्फुटं द्वश्यानि, यानि पार्श्वयोः संव्यूह्य निर्मिते धम्मिल्लकस्य मध्यवृन्तिके । तदपसारणाच्च द्वश्ये स्फारीभूते मुकुलतन्त्रिके याभ्यामूर्ध्वं प्रसृताभ्यां मस्तिष्कमृणालकयोर्निष्पत्तिः । ऊर्द्ध्वसीमसमीपे चास्य पार्श्वयोर्द्वश्ये तनुखाते त्रिधारा[२]ख्यनाड़ीद्वयस्य निर्गमाय ।

[ १६३ चित्रम् ]

## उष्णीषकोत्तरभागस्य अनुप्रस्थच्छेदः ।

( चतुर्गुणीकृत्य चित्रितः )




( इह वामपूर्वार्द्धम् अच्छिन्नम् । तदभ्यन्तरमपि दक्षिणपूर्वार्धवदुन्नेयम् )

१ प्राणगुहा । २ अग्रिमा ( उत्तरा वा ) प्राणगुहापिधानिका । ३ शलभिकाजिह्वा । ४ त्रिधाराख्यनाड्या अन्यतमं मूलम् । ५ उत्तरवृंतिका । ६ अनुदीर्घसूत्राणि ( पश्चिमान्तरीयाणि ) । ७ पार्श्ववल्लिका । ८ जालकवस्तु । ९ मध्यवल्लिका । १० त्रिधारा नाड़ी । ११ मुकुलतंत्रिकासूत्राणि । १२ उष्णीषकस्य अनुप्रस्थसूत्राणि । १३ सीवनिका ।

१ Raphe. २ Trigeminal (or fifth) Nerve.

(२) पश्चिमभागः पुनरुष्णीषकस्य त्रिकोणाकारः प्राणगुहाया उत्तरार्द्धधरः। स धम्मिल्लकपिधानावृतः, पार्श्वयोरारक्षितश्च धम्मिल्लकस्यैव उत्तरवृन्तिकाभ्याम्। प्राणगुहान्तरीयविशेषांस्त्वग्रे प्राणगुहावर्णने वक्ष्यामः।

सम्यक् परीक्षणञ्च उष्णीषकस्य अनुप्रस्थच्छेदेन क्रियते स्थूलसूक्ष्मपरोक्षया (१६४ चित्रम्)। तथाच तत्र दृश्या इमे विशेषाः।

(क) तस्य पूर्वार्द्धं स्थूलायतं त्रिपादायतनम्। तत्र दृश्यन्ते—

१। अनुप्रस्थसूत्राणि उत्तानानि गम्भीराणि च, यान्यन्तरान्तरा अनुदीर्घसूत्राणि क्रोड़ीकृत्य मध्यरेखायां वेणीवन्धक्रमेण प्रसृतानि।

२। तानि च अनुदीर्घसूत्राणि (उत्तानानि गम्भीराणि च) पूर्वोक्तदीर्घतन्त्रिकाणामनुवृत्तिरूपाणि शुभ्रविन्दुपिण्डिकाद्याकारैर्लक्षणीयानि। तत्र मुकुलतन्त्रिकाणामनुवन्धसूत्राणि मुख्यानि परिस्फुटानि च विशेषतः। तानि च उत्तानानुप्रस्थसूत्राणामपसारणेन दृश्यानि।

३। त्रिधाराख्य पञ्चमशीर्षण्यनाड्योर्मूलद्वयं पार्श्वाभ्यां निर्गतम्।

४। धूसरवस्तूनि च क्वचित् क्वचिद्द धूसरविन्दुभिरालक्ष्याणि।

(ख) पश्चिमार्द्धं पुनर्धम्मिल्लकस्य स्वल्पायतं पादमात्रायतनम्। तत्र—

१। मध्यरेखामुभयतो दृश्यं जालकवस्तुपिण्डद्वयं[१] सुषुम्नाशीर्षकीयजालकवस्तुनोऽनुवृत्तिरूपम्।

२। वल्लिकाख्य[२] सूत्रसंघातानाञ्च दृश्यास्तत्र द्विधा सन्निवेशाः—मध्यरेखापार्श्वयोः मध्यवल्लिकाख्यौ, पक्षपार्श्वयोः पार्श्ववल्लिकाख्यौ।

३। मध्यरेखायां पृष्ठतो दृश्या त्रिकोणाकारा प्राणगुहा[३] 'अग्रिमप्राणपिधानिका'च्छादिता।

४। पार्श्वयोश्च उत्तरवृन्तिकाख्यौ सूत्रसंघातौ धम्मिल्लकसंयोजनौ। सन्ति च प्राणगुहाभूमौ यतस्ततो निविष्टाः काश्चिन्नाड़ीकन्दिकाः अग्रानां शीर्षण्यनाड़ीनां प्रभवभूताः। तासां विशेषान् प्राणगुहावर्णने प्रतिपादयिष्यामः। इह तु लक्षणीया उष्णीषकस्य अधरांशच्छेदेन पश्चिमभागे चतस्रो नाड़ीकन्दिकाः युग्माः, नाड़ीसूत्राणि च तत्सम्भवानि। तद्यथा—

---

१ Formatio reticularis. २ Lemniscus or Fillet. ३ Fourth Ventricle.

(१) पार्श्वयोः श्रुतिनाड़ीकन्दिके[१], तत्सम्भवसूत्राणि च ।

(२) मध्यरेखामुभयतः षष्ठनाड़ीकन्दिके[२], तत्सम्भवसूत्राणि च ।

(३) तत्रैव पुरस्तादुभयतो वक्त्रनाड़ीकन्दिके[३], तत्सम्भवसूत्राणि च ।

(४) ऊर्द्ध्वभागे पञ्चमनाड्योर्मूलचतुष्टयम्[४] ( संज्ञावह-चेष्टावहांशभेदात् ), सूत्राणि च तत्सम्भवानि ।

---

# अथ धम्मिल्लकवर्णनम् ।

**धम्मिल्लकं**[५] नाम अनुमस्तिष्कस्य पश्चिमांशो बृहत्तरो योषितां धम्मिल्लका-[६]कारः ( १६४।१६५ चित्रयोः )। तत् करोटिगुहायाः पश्चिममहाखातनिम्नार्द्धमधि-तिष्ठति. आच्छाद्यते चोर्द्ध्वं जवनिकाख्येन[७] मस्तिष्कबाह्यवृतिभागेन। पृथक्कृतं च तद् भूम्ना तेनैव मस्तिष्कपश्चिमभागात्। प्रबन्धनानि चास्य त्रीणि युग्म-वृन्तिकारूपाणि उत्तर-मध्यमाऽधर संज्ञानि क्रमेण मस्तिष्कोष्णीषक-सुषुम्नाकाण्डैः संयोजनायेत्यग्रे वर्णयिष्यते । तच्च लघुमस्तिष्कमिति केचित्, मस्तिष्कवत् स्वाधीनक्रियाभूमित्वात्।

तदेतत् पार्श्वयोराततं, विभक्तश्च स्थूलगोलार्द्धकारयोः पिण्डयोः। मध्ये च पिण्डयोः संकुचितो भागः स्थूलवर्त्तिकाकारः। दृश्यते च पिण्डद्वयम् उपर्युपरिग्रथितैर्वटपत्रैरिव बहुभिः पत्रस्तरैरारचितमिति तस्य गठनवैचित्र्यम्। निर्म्मितश्च तद् वहिर्धूसरवस्तुना, अन्तश्च शुभ्रवस्तुना किञ्चिद्धूसरवस्तुगर्भितेन।

गुरुत्वेन तु यूनो धम्मिल्लकं प्रायेण द्वादशतोलकमानम्, मस्तिष्कभारस्य अष्टमांशमितश्च। शिशोस्तु तदेव विंशांशमानम्।

तस्य च धम्मिल्लकस्य त्रयो भागाः मुख्याः—पार्श्वभागौ पक्षपिण्डसंज्ञौ,[८] मध्यभागश्च परिखाङ्कितः शलभिका[९]संज्ञकवर्त्तिकायुतः। साऽसौ शलभिका धम्मिल्लकस्योर्ध्वतले उत्सेधवती, अधस्तले तु मध्यपरिखान्तर्गभीरप्रविष्टा अदृश्य-प्राया। तयोश्चांशयोः उत्तरशलभिका,[१०] अधरशलभिका,[११] चेति संज्ञे। मध्यपरिखा चासौ सुषुम्नाशीर्षकस्य पश्चिमभागे दृश्या अधरधम्मिल्लखात[१२]-संज्ञा।

---

१ Nuclei of Eighth Nerves. २ Nuclei of Sixth Nerves. ३. Nuclei of Seventh Nerves. ४ Double Nuclei of Fifth Nerves. ५ Cerebellum (सेरिबिलम्). ६ "धम्मिल्लः संयताः कचाः"—इत्यमरः। ७ Tentorium Cerebelli. ८ Hemispheres. ९ Vermis. १० Superior Vermis. ११ Inferior Vermis. १२ Vallecula.

पक्षपिण्डद्वयान्तराले च सम्मुखतो दृश्यं खातम् अग्रिमधम्मिल्लखातं[1] नाम। तदेव तादृशं पश्चिमतः पश्चिमधम्मिल्लखातं[2] नाम। स्तरास्तु धम्मिल्लकस्य 'धम्मिल्लपत्रिका'[3]-संज्ञाः।

सन्ति च धम्मिल्लकस्य पिण्डान्तर्बह्वाः सीताः स्तरविभजन्यः। तासां मुख्ये गभीरसीते अनुप्रस्थ वेष्टन्यौ[4] नाम पार्श्वयोर्दृश्ये। ते सम्मुखत आरभ्य पश्चिमसीमान्तं यावत् धनुर्वद् वक्रीभूय पार्श्वसीम्नोः प्रसृते। ताभ्यां धम्मिल्लकस्य उत्तराधरभागयोर्विभागः। तयोश्च सीतयोर्मिलिताः धम्मिल्लकपिण्डान्तरीयाः सीताः ऊर्द्ध्वाधस्तलस्थाः।

प्रबन्धनन्तु धम्मिल्लकस्य उत्तरवृन्तिकाभ्याम् मस्तिष्केन, मध्यवृन्तिकाभ्याम् उष्णीषकेन, अधरवृन्तिकाभ्याम् सुषुम्नाशीर्षकेण। ताश्च वृन्तिकाः शुभ्रसूत्रमय्यः।

इमे च धम्मिल्लकस्य ऊर्द्ध्वाधस्तलयोर्दृश्याः विशेषाः यथा—

१। ऊर्द्ध्वतले—पार्श्वयोरायतमुत्तानञ्च पिण्डद्वयं पक्षपिण्डसंज्ञम्, मध्ये च किञ्चिदुन्नतो वर्त्तिकांश उत्तरशलभिकाख्यः (१६४ चित्रम्)। दृश्यन्ते च तत्र शलभिकायास्त्रयोंऽशा एकैकतः पक्षपिण्डस्थ पिण्डिकात्रयेण सानुबन्धाः। यथा—पुरस्तात् शलभिकामुण्डं[5] पक्षतिपिण्डिकयानुबद्धम्[6]। मध्ये वर्मावृतं शलभिकाशरीरम्[7] अग्रिम-पश्चिम-चतुरस्रपिण्डिकाभ्यां[8] ग्रथितम्। पश्चिमतः शलभिकापुच्छं[9] (गूढ़प्रायं) उत्तराधचन्द्रिकाख्यया[10] पिण्डिकया संयुक्तम्। तासाञ्च पुरस्तान्मध्ये पश्चिमतश्च दृश्यास्तिस्रः सीताः क्रमेण अनुपक्षतिका,[11] पिंडिकान्तरिका अग्रिमा पश्चिमा[12] चेति-संज्ञाः। ता एकैकतो मध्यरेखाया वहिर्गत्य अनुप्रस्थवेष्टन्या सीतया मिलिताः।

दृश्यश्चात्र द्वयमपरम्। पुरःस्तात् शलभिकाया मुखाग्रे जिह्वावद् जिह्वा[13], प्राणगुहाच्छादनी, पश्चात् पुच्छोपरि समुन्नतमर्वुदं शलभिकात्रिक[14] संज्ञमिति।

---

१ Anterior Cerebellar Notch. २ Posterior Cerebellar Notch. ३ Laminæ of Cerebellum. ४ Great Horizontal Sulci. ५ Lobus Centralis. ६ Alæ Lobuli Centralis. ७ Monteculus Vermis. ८ Ant. & Post. Quadrangular lobes. ९ Folium Vermis. १० Sup. & Inf. Semilunar Lobes. ११ Pre-central Fissure. १२ Pre-clival & Post-clival fissures. १३ Lingula Vermis. १४ Clivus Monteculi.

[ १६४ चित्रम् ]

## धम्मिल्लकस्य ऊर्ध्वतलम्।




१ शलभिकामुण्डम्। २ शलभिकापक्षतिः। ३ पश्चिमान्तरिका सीता। ४ अग्रिमा चतुरस्रपिंडिका। ५ त्रिकपूर्विका सीता। ६ त्रिकपश्चिमा सीता। ७ पश्चिमा चतुरस्र-पिंडिका। ८ उत्तरा अर्धचंद्रपिंडिका। ९ शलभिकात्रिकम्। १० शलभिकाशरीरम् (वर्मावृतम्)। ११ अनुप्रस्थ वेष्टनी सीता।

२। अधस्तले पुनर्धम्मिल्लकस्य पुनर्दृश्यं पूर्ववदेव—पार्श्वयोः पक्षपिण्डद्वयं, मध्ये च मध्यपरिखान्तर्निगूढः शलभिकाया अधरांशः 'अधरशलभिका'-संज्ञः (१६५ चित्रम्)। तत्र च दृश्याश्चत्वार एव मुख्याः शलभिकावयवाः, एकैकतः पक्षपिण्डस्यानुवृत्त्या। यथा—पूर्वापरक्रमेण—(१) शलभिकोष्ठं[१] (२) शलभिकाग्रीवा[२] (३) शलभिकातुन्दम्[३] (४) शलभिका कटि[४] श्चेति। तदैकैकतश्च पक्षपिण्डे तदनुवृत्ताः पिण्डिकाश्चतस्रः यथा क्रमेण—(१) तूलपिंडिका[५] (२) शालूकपिंडिका[६] (३) पालाण्डुपिंडिका[७] (४) अधरा अर्धचन्द्रपिंडिका[८] चेति।

---

१ Nodule of Vermis. २ Uvula Vermis. ३ Pyramid Vermis. ४ Tuber Vermis. ५ Flocculus. ६ Tonsil Vermis. ७ Bi-ventral lobe. ८ Inferior Semilunar lobe.

[ १६५ चित्रम् ]

## धम्मिल्लकस्य अधस्तलम् ।




क—शलभिकामुण्डम् । ख—अग्रिमा (उत्तरा) प्राणगुहा पिधानिका । ग—शलभिका पक्षतिः । घ—तूलपिंडिका । ङ—अनुप्रस्थवेष्टनी सीता । च—पलाण्डु पिंडिका । छ—अधरा अर्धचंद्र-पिंडिका । ज—शलभिकातुंदम् । झ—शलभिकाकटिः । ञ—शालूकपिण्डिका । ट—शलभिका ग्रीवा । ठ—ओष्ठपश्चिमा सीता । ड—शलभिकोष्ठम् ।

अत्रापि च तिस्रः सीताः क्रमादेकैकतः शलभिकायाः ओष्ठदेशान्निर्गत्य तूलपिण्डिकयोः पश्चिमतः प्रसृताः । शलभिकातुन्दाद् विनिर्गते तु सीते द्वे—तयोरग्रिमा शालूक-पलाण्डुसंज्ञयोः पिण्डिकयोर्विभजनी, पश्चिमा पलाण्डु-पिण्डिकाऽधरार्द्धचन्द्रपिण्डिकयोः ।

सर्वाश्च ताः सीता अनुप्रस्थवेष्टन्याख्य सीतया मिलिता एकैकतः इत्युक्तपूर्वम् ।

आभ्यन्तरनिर्म्माणं पुनर्धम्मिल्लकस्य बहिर्धूसरवस्तुना अन्तश्च शुभ्रवस्तुना किञ्चिद्धूसरकन्दिकासहितेनेत्यवोचाम । तत्रेमे विशेषाः—यथा—

शुभ्रवस्तु खल्विह धूसरवस्त्वन्तः तरुपत्रान्तःप्रतानैरिव तन्वंशैः प्रविष्टम् । तेषां पत्रप्रतानिके[१]ति संज्ञा । द्विविधानि चात्रसूत्राणि वृन्तिकासूत्राणि सामान्यसूत्राणि—चेति । तत्र वृन्तिकासूत्राणि[२] तिसृषु युग्मवृन्तिकासु विन्यस्तानि धम्मिल्लकस्याग्रिम-भागसम्भवानि । तानि धम्मिल्लकस्य मस्तिष्कादिसंयोजनानि । ( १६६ चित्रम् ) तद्यथा—उत्तरवृन्तिके[३] प्राणगुहायाः पटलनिर्म्मापकैः सूत्रैरारचिते मस्तिष्क-

१ Arbor Vitæ. २ Peduncular fibres. ३ Superior Peduncles or Brachia conjunctiva.

सम्बन्धिन्यौ। तानि च सूत्राणि दन्तुरकन्दिकाख्य-धूसरवस्तुनः सम्भूय गुलिका-चतुष्टयाधस्ताद् वेणीबन्धक्रमेण परस्परमुल्लङ्घ्य मस्तिष्कमृणालकान्तःस्थं शोण-कन्दिकाद्वयमभिसर्पन्ति ततश्चाज्ञाकन्दद्वयमुल्लंघ्य पुनरूर्द्ध्वं प्रसरन्ति मस्तिष्काभि-मुखम्। अन्तराले च उत्तरवृन्तिकयोर्दृश्या तन्वी शुभ्रवस्तुमयी पत्रिका प्राणगुहाच्छादनी, सा उत्तरा ( अग्रिमा वा ) प्राणपिधानिका[१] नाम।

मध्यवृन्तिके[२] तु उष्णीषकस्य अनुप्रस्थसूत्राणां संव्यूहनेन रचिते धम्मिल्लकस्य उष्णीषकेण, पक्षपिण्डयोश्च परस्परं, संयोजनं विदधाते। तत्सूत्राणि च सर्वाण्यपि उष्णीषकन्दिकासंयुक्तानि।

अधरवृन्तिके[३] तु धम्मिल्लकस्य सुषुम्नाशीर्षकेण संयोगमारचयतः, तत्रस्थानि च नाड़ीसूत्राणि सुषुम्नाकाण्डान्तरीय 'पार्श्वान्तिका'ख्यतन्त्रिकयोरूर्द्ध्वानुवृत्तिरूपाणि।

सामान्यसूत्राणि पुनर्धम्मिल्लकस्य द्विविधानि। पक्षपिण्डयोः परस्परयोजनानि, धम्मिल्लपत्रिकाणां परस्परयोजनानि चेति।

अथ धम्मिल्लकस्य धूसरवस्तुविवेकः। तच्च दृश्यते पत्रिकासु विभक्तम्, ताश्च द्रुमपत्रप्रतानवद् अन्तः शुभ्रवस्तुप्रतानैरुपलक्षिताः—इत्यवोचाम।

धूसरवस्तुनस्तु द्वेधा विभागः, परिसरीयभागः[४], केन्द्रस्थभागश्चेति[५]। तत्र—

(क) धूसरवस्तुनः परिसरीये भागे सूक्ष्मचाक्षुषपरीक्षया दृश्यस्त्रेधा स्तरवि-भागः। बाह्यस्तरः, मध्यस्तरः, आभ्यन्तरस्तरश्चेति। तत्र बाह्यस्तरे दृश्यानि सामान्य-कन्दाणुकानि अक्षतन्तवश्च। मध्यस्तरे कलसिकाख्यानि विशिष्ट कन्दाणुकानि[६] विचित्रगुल्मकाकृतीनि (१७७ चित्रे—ग)। आभ्यन्तरस्तरे तु किञ्चित् शोणधूसरवर्णे दृश्याः अत्यतिसूक्ष्माः नाड़ीकन्दिकाः, नाड़ीसूत्राणि च मध्यस्तरसम्भूतानि।

( ख ) अथ केन्द्रस्थे धूसरवस्तुनि दृश्याश्चतस्रः स्थूलकन्दिकाः कन्दाणुक-निर्म्मिताः। तासु मुख्या दन्तुरकंदिका[७] नाम स्वनामव्याख्याता। तस्य चोत्सङ्गान्निर्गतास्तन्तवः धम्मिल्लकस्य उत्तरवृन्तिकयोः प्रसृताः। अपराश्च तिस्रस्तत्र कन्दिका-स्तत्सन्निहिताः—द्वारकन्दिका[८], वर्त्तुलकन्दिका[९], पटलकन्दिका[१०] चेति। तासामाद्ये कन्दिके नाद्यापि निरूपितप्रयोजने। पटलकन्दिका तु श्रुतिनाड़ीमूलैः सम्बन्धवती।

१ Superior ( or Anterior ) Medullary Velum. २ Middle Peduncles of Cerebellum or Brachia Pontis. ३ Inferior Peduncles or Restiform bodies. ४ Cortical substance. ५ Medullary substance. ६ Cells of Purkinjee. ७ Dentate Nucleus. ८ Nucleus Emboliformis. ९ Nucleus Globosus १० Nucleus Fastigii.

[ १६६ चित्रम् ]

## धम्मिल्लवृन्तिकात्रयदर्शकम् ।

( अत्र धम्मिल्लकं द्विधाकृत्य परावर्त्तितम् पार्श्वतः ) ।




### अथ प्राणगुहावर्णनम् ।

**प्राणगुहा**[१] नाम पश्चिममस्तुलुङ्गपिण्डाभ्यन्तरस्था गभीरा चतुरस्रगुहा यस्या भूमिः पुरस्तादुष्णीषक-सुषुम्नाशीर्षकपृष्ठाभ्यामारचिता, प्रच्छाद्यते च या पश्चिमतो धम्मिल्लकेन। सेयं श्वसनादिप्राणकार्यकेन्द्राणां धारणात् तथासंज्ञा। तस्या ऊर्द्ध्वसीमा—उत्तरकोणाख्या उष्णीषकस्योर्ध्वसीम्ना निर्दिश्यते। अधःसीमा—अधरकोणाख्या सुषुम्नाशीर्षकस्य लवलिकामूलद्वयसन्धिना। पार्श्वकोणौ धम्मिल्लकस्योत्तर-मध्यमवृन्तिकयोः संयोगस्थानाभ्याम्। पार्श्वसीमानश्च तस्याश्चतस्रः—द्वे उत्तरार्द्धस्य, द्वे चाधरार्द्धस्य। तत्र उत्तरार्द्धसीमा एकैकतो धम्मिल्लकस्य उत्तर-मध्यमवृन्तिकाभ्यां निर्मीयते। अधरार्द्धसीमा तु एकैकतो दशा-कोणाख्य-चूड़िकाभ्या-मधरवृन्तिकया च—इति प्राणगुहायाश्चतुःसीमनिर्द्देशः। ( १६७।१६८ चित्रयोः )।

---

१ इयं पाश्चात्यमतेन मस्तुलुङ्गगुहासु चतुर्थी नाम। Fourth Ventricle.

प्राणगुहान्तरीयावकाशस्तु ऊर्द्ध्वं ब्रह्मद्वारसुरङ्गया अधश्च सुषुम्नान्तरीयेण ब्रह्ममार्गेण सानुबन्धः। मध्येगुहश्च दृश्या चीनांशुकापरिवृता मञ्जरिका[१] ब्रह्मवारिणि प्लवमाना।

[ १६७ चित्रम् ]

## प्राणगुहापटलम्।

( धम्मिल्लकापसारणेन दृश्यम्। लक्ष्यतामत्र वृन्तिकात्रयं कर्त्तितम्। )




तस्याश्च द्वावंशौ मुख्यौ—पटलं तलश्चेति। तत्र—

(१) प्राणगुहापटलं[२] प्राणगुहायाश्छदिरूपम् ( १६७ चित्रम् )। तस्य उत्तरार्द्धं धम्मिल्लकस्य उत्तरवृन्तिकाभ्याम् उत्तरप्राणपिधानिकया च शलभिकाजिह्वासहितया निर्मीयते। अधरार्द्धं तु अधरप्राणपिधानिकया तन्तुराजिसहितया, कोणपिधानिकया च। तत्र उत्तरा (अग्रिमा वा) प्राणपिधानिका[३] शुभ्रवस्तुमयी उत्तरवृन्तिकाद्वयान्तरालस्था धम्मिल्लकस्य शुभ्रवस्तुना सानुबन्धा। अधरा (पश्चिमा वा) प्राणपिधानिका[४] च तादृश्येव पूर्वोक्ताभिस्तन्तुराजिभिरनुविद्धा। उभे च प्राणपिधानिके गुहाभ्यन्तरत आवृणोति मञ्जरिकाधरी तन्वी जवनिका चीनांशुकमयी चीनांशुजवनिका[५] नाम—मध्ये लम्बमाना पक्षति[६]द्वयवती। तत्र च दृश्यानि त्रीणि विवराणि, द्वे पार्श्वयोरेकञ्च मध्यतः, यानि द्वारीकृत्य सम्यक् प्रवहति प्राणगुहान्तरीयं ब्रह्मवारि सर्वतः।

१ Choroid plexus. २ Roof of the 4th Ventricle. ३ Anterior Medullary Velum. ४ Posterior Medullary Velum. ५ Tela choroidea. ६ Ligula.

[ १६८

## प्राणगुहातलम्—चतुरस्रखातम् ।

( कर्त्तित धम्मिल्लकापसारणेन दृश्यम् )




१ कलायिकाचतुष्टयम् ( ऊर्ध्वाधःस्थम् ) । २ पिधानबन्धनिका । ३ षष्ठी ( कटाक्षिणी ) नाड़ी । ४ उत्तरा (अग्रिमा वा) प्राणगुहापिधानिका । ५ दन्तुरकंदिका । (परितश्च पत्रप्रतानिकाः) ६ कोणपिधानिका । ७ दशाचूड़िका । ८ तन्तुराजिः । ९ श्यामपत्रिका । १० द्वादशी-मूलकंदिका । ११ श्रुतिनाड़ी-मूलकंदिका । १२ चिकुरिका । १३ वक्त्रनाड़ी-मूलकंदिका । १४ उत्तरपार्श्वा सीतिका । १५ उत्तरवृंतिका । १६ उष्णीषपृष्ठस्थातन्तुराजिः ।

(२) प्राणगुहातलं[१] धम्मिल्लकापसारणेन दृश्यं चतुरस्रखातसंज्ञम्[२] (१६८ चित्रम्) निर्मीयते च तद् उष्णीषक-सुषुम्नाशीर्षकयोः पृष्ठदेशेन। आवृतश्च तद् धूसरवस्तु-वितानेन, धूसरवस्तु चेदं सुषुम्नान्तरीयधूसरवस्तुन ऊर्द्ध्व विस्तारः क्षेत्रवस्तुपरिवृतः।

तस्य च चतुरस्रखातस्य त्रेधा विभागो वर्णनासौकर्य्याय—उत्तरभागः, मध्यभागोऽधरभागश्चेति। तत्र—

( क ) उत्तरभागस्त्रिकोणाकृतिरुभयतो धम्मिल्लकस्य उत्तरवृन्तिकाभ्यामारक्षितः ( १६६ चित्रम् )। तस्य शिखरमूर्ध्वमुखं, तन्मध्ये च विवरं ब्रह्मद्वारसुरङ्गया

२ Floor of the 4th Ventricle. १ Rhomboid Fossa.

सानुबन्धम्। मध्यरेखायाश्च द्रश्या मध्यसीतिका[१], तदुभयतश्च वक्त्रनाड़ीमूलिके[२], तदुभयतश्च सूक्ष्मखातद्वयम् उत्तरपार्श्विकखात[३] संज्ञम्। तत्पार्श्वयोस्तु द्रश्यं मध्यवृन्तिकाद्वयं धम्मिल्लकस्य।

(ख) मध्यभागस्तु चतुरस्रखातस्य चिकुरिकाख्य[४]धूसरसूत्रराजिभिरुभयतो बहिर्गामिनीभिरुपकल्पितः। तदूर्द्ध्वञ्चोभयतः पार्श्वकोणौ सूक्ष्मविवरयुतौ।

(ग) अधरभागस्तु चतुरस्रखातस्य अधोमुखत्रिकोणाकारः ऊर्द्ध्वं चिकुरिकाद्वयेन पार्श्वयोश्च दशाचूड़िकाभ्यां सीमाबद्धः। तत्त्रिकोणाग्रञ्च मध्यरेखायां कोणपिधानिकया[५] संवृतं लेखनीमुखसदृशया। तदन्तःस्थो ब्रह्ममार्गः सुषुम्नान्तरीयब्रह्ममार्गेण सानुबन्धः। मध्यरेखामुभयतश्च तत्रैव द्वादशनाड़ीमूलिके[६], तदुभयतश्च श्रुतिनाड़ीमूलिके[७]। कोणपिधानिकोपरिष्टात्तु उभयतो द्रश्ये तन्तुराजिके श्यामपत्रिके[८] च।

अथात्र चतुरस्रखाते द्रश्या अष्टौ शीर्षण्यनाड़ीमूलकन्दिकाः विशेषेण स्मरणीयाः, पञ्चम्यादि-द्वादश्यन्तनाड़ीमूलानां ततस्ततः सम्भवात्। श्वसनहृत्स्पन्दनादिप्राणकार्य्याणाञ्च केन्द्राणि प्राणगुहान्तःस्थानि। तत्र नाड़ीमूलकन्दिकास्थानानि यथा—

(१) पञ्चमनाड्योः त्रिधाराख्ययोर्युग्मं मूलकन्दिकाद्वयं चतुरस्रखातस्य पार्श्वकोणयोरुपकण्ठे द्रश्यम्।

(२) षष्ठनाड्योर्मूलकन्दिके चतुरस्रखातस्योर्द्ध्वभागे मध्यरेखामुभयतः प्रच्छन्ने।

(३) सप्तमनाड्योर्वक्त्रनाड़ीसंज्ञयोर्मूलकन्दिके चतुरस्रखातस्य अधरार्द्धे चिकुरिकाधस्तात् पार्श्वयोः।

(४) अष्टमनाड्योः श्रुतिनाड़ीसंज्ञयोरपि मूलकन्दिकाद्वयं बहिःपार्श्वकोणयोः।

(५।६) नवमनाड्योः कण्ठरासनीसंज्ञयोर्दशमनाड्योश्च प्राणदाख्ययोर्मूलकन्दिकाचतुष्टयमपि अधरार्द्धपार्श्वयोः श्यामपत्रिकयोश्च पूर्वोक्तयोः।

(७) एकादश्योर्नाड्योर्मूलकन्दिके च तत्रैवाधस्तात् सुषुम्नाकाण्डान्तश्च ग्रीवायाम्।

(८) द्वादश्योर्नाड्योः पुनर्मूलकन्दिके चतुरस्रखातस्य अधरार्द्धे मध्यरेखामुभयतः, द्वादशीमूलत्रिकोणान्तश्च।

तदेतत् पश्चिममस्तुलुङ्गपिण्डं सपरिकरं समासतो व्याख्यातम्। विस्तरस्त्वाकरेषु मृग्यः सूक्ष्मचाक्षुषपरीक्षावेद्यश्च।

इति चतुर्थोऽध्यायः।

---

१ Medial Sulcus. २ Eminentia Teres or Colliculus Facialis. ३ Superior Fovea. ४ Striæ Medullaries or Striæ Acoustica. ५ Obex. ६ Trigonum Hypoglossi. ७ Area Acoustica. ८ Ala Cineria.

# पञ्चमोऽध्यायः ।

अथातो मध्यममस्तुलुङ्गपिण्डवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु **मध्यममस्तुलुङ्गपिण्डं**[१] नाम (१६६ चित्रम्) गर्भस्थशिशोर्मध्यम-मस्तुलुङ्गबुद्बुदसम्भवो भागो ह्रस्वतमः किञ्चित् संकुचितश्च अग्रिम-पश्चिम-मस्तुलुङ्गपिण्डयोः संयोजकः । तद् द्वारीकृत्य प्रसरन्ति संज्ञाचेष्टावहा वेगा नाड़ीतन्त्रिकामार्गैरूर्ध्वमधश्च । तदुभयपार्श्वाभ्याञ्च निर्गतास्तृतीयादिषष्ठ्यन्ताः शीर्षण्या नाड्यः ।

तस्य च त्रयो भागा मुख्याः—(१) पुरःपार्श्विको भागः मस्तिष्कमृणालधरः । (२) पश्चिमभागः कलायिकाचतुष्टयोपलक्षितः पार्श्वसीतया तथा विभक्तः । (३ आभ्यन्तरभागश्च धूसरवस्तुगर्भितजालकवस्तुमयो ब्रह्मद्वारसुरङ्गाधरः । मध्यरेखायाञ्चास्य पूर्वार्धमात्रे दृश्या सीवनिका[२], मृणालान्तरालञ्च वक्ष्यमाणम् । तत्र—

१ । पुरः पार्श्विकभागे प्रधानतो दृश्यं मस्तिष्कमृणालकद्वयं सहस्रारकमल-नालाकारम् । सहस्रारं हि मस्तिष्कमिति प्राञ्चः, तस्य च प्रतिगोलार्द्धमेकैकं मृणालकम् तन्मूलस्थम् ।

अथ मस्तिष्कमृणालकवर्णनम् ।

**मस्तिष्कमृणालके**[३] नाम करोटिपीठाधिष्ठिते मस्तिष्कतलस्थे स्थूलायतसंहते नालके मस्तिष्कस्य शंखिकपिण्डाभ्यां प्रच्छन्ने ( तदपाकर्षणेन दृश्ये ) ( १६६चित्रम् ) । ते हि उष्णीषकस्योर्ध्वसीम्न उत्थाय उभयतस्तिर्य्यग् बहिर्मुखं प्रसृत्य मस्तिष्कगोलार्द्धद्वयं प्रविशतः । उत्थानस्थले च तयोर्मध्यरेखामुभयतः सम्भूते तृतीयाख्ये शीर्षण्यनाड्यौ । अन्तराले च मृणालकयोस्त्रिकोणखातं मृणालान्तरालं[४] नाम, तत् प्रावृणोति सुषिरधूसरवस्तुमयी त्रिकोणपत्रिका सुषिरपत्रिका (पश्चिमा)[५]-संज्ञा—सा ब्रह्मगुहाया भूमिभूता । तां च निर्भिद्य प्रविष्टाः मस्तिष्कपोषणा धमनीप्रतानाः । संवेष्ट्य तु मृणालकद्वयं तदुत्थानस्थानपार्श्वयोर्दृश्ये चतुर्थाख्ये शीर्षण्यनाड्यौ । मृणालकयोर्मस्तिष्कप्रवेशस्थले च दृश्ये स्थूलतमे द्वितीयाख्ये शीर्षण्यनाड्यौ दृष्टिनाड्यौ[६] नाम, ते आज्ञाकन्दीयदृष्टिपीठादिभ्यः सम्भूय सन्दंशवदावेष्ट्य

---

१ Mid-brain or Mesencephalon. २ Raphe. ३ Crura Cerebri. ४ Inter-peduncular Space. ५ Posterior Perforated Substance. ६ Optic Tracts.

[ १६६ चित्रम् ]

# अग्रिम-मध्यम-पश्चिम मस्तुलुङ्गपिण्डानां संस्थान प्रदर्शकम् ।

( निम्नतो दृष्टम् )




सकाण्ड सुषुम्नाशीर्षकांशः ( विदार्य्य दर्शितः )।

**चित्रव्याख्या**—प्रथमेत्यादिपदैः घ्राण-दृष्ट्यादि संज्ञकनाड़ीनां निर्देशः । २ सं—दृष्टिनाड़ीसन्दंशः । क—अग्रिमा सुषिरपत्रिका । ख—दृष्टिनाड़ीयोजनिका । ग—पोषणक-वृन्तिका । घ—चूचुकवर्तु लकद्वयम् । ङ—मस्तिष्कमृणालकम् । च—पश्चिमा सुषिरपत्रिका ( मृणालान्तरालस्था )। छ—उष्णीषकम् । ज—धम्मिल्लकस्य अधरवृन्तिका । झ—सुषुम्ना-शीर्षकशिखरम् । ञ—मुकुलिका । ट—सुषुम्नाशीर्षकस्याभ्यन्तरम् । ठ—धम्मिल्लकम् । ड—सुषुम्नाशीर्षकं सकाण्डं ( विदार्य्य दर्शितम् )। वेणीबन्धस्थले तन्त्रिकाणां परस्परोल्लंघनक्रमोऽत्र लक्षणीयः । ग्री १—प्रथमा ग्रीवानाड़ी ।

[ २०० चित्रम् ]

## मध्यमस्तुलुङ्गपिण्डस्यानुप्रस्थच्छेदः ।

[ वस्तुविभागप्रदर्शनाय वामार्धे रेखादिभिः प्रविभक्तः ]




१ अग्रमस्तिष्कोष्णीषकान्तरीय सूत्राणि । २ मस्तिष्कसुषुम्नान्तरीय सूत्राणि । ३ पार्श्व-मस्तिष्कोष्णीषकान्तरीय सूत्राणि । ४ पार्श्ववल्लिकांशः । ५ पार्श्वसीता । ६ पार्श्ववल्लिका । ७ जालकवस्तु ।

मृणालकद्वयं पुरस्तान्मिलिते । सन्दंशक्रोड़े च दृश्यं सुषिरपत्रिकाग्रतो वस्तुत्रितयं—चूचुकवर्त्तुलकद्वयं, पोषणकवृन्तिका चेत्यग्रतः पुनर्वर्णयिष्यामः ।

मस्तिष्कमृणालक निर्माणं पुनर्मध्यम मस्तुलुङ्गपिण्डस्यानुप्रस्थच्छेदेन लक्षणीयम् ( २००।२०१ चित्रयोः ) । तस्य च पिण्डस्य एकैकार्धे यद् यथा दृश्यमपरार्धेऽपि तत्तथैव, अन्यत्र ब्रह्मसुरङ्गायाः ।

एकैकञ्च मृणालकं विभज्यते त्रिष्वंशेषु वर्णनासौकर्य्याय । तत्र—

( क ) अग्रिमांशो मृणालकस्य शुभ्रसूत्रसंघातमयो बाह्यः, तस्य विसवितान[१] इति संज्ञा । तत्र त्रिविधानि सूत्राणि पृथग् विभज्य दृश्यानि—मस्तिष्क-सुषुम्नान्तरीयाणि, अग्रमस्तिष्कोष्णीषकान्तरीयाणि, पार्श्वमस्तिष्कोष्णीषकान्तरीयाणि चेति । तेषु—

१ Crusta or Pes of Cerebral Peduncle.

[ २०१ चित्रम् ]

## मध्यमस्तुलुङ्गपिण्डस्य अनुप्रस्थच्छेदः ।

[ उत्तरार्धे—यथावद् दृश्यः ]




(१) मस्तिष्क-सुषुम्नान्तरीय सूत्राणि[१] मस्तिष्कवहिःस्तरीय चेष्टाभूमिसम्भवानि विसवितानस्य मध्यांशमधिकृत्य मुकुलिकाभिगानि भूम्ना, शीर्षण्यनाड़ी-कन्दिकाभिगानि स्तोकेन। (२) अग्रमस्तिष्कोष्णीषकान्तरीयाणि[२] सूत्राणि मृणालान्तरालपार्श्वतस्त्रिकोणस्थानमधिकुर्वन्ति। तानि अग्रिममस्तिष्कतः सम्भूय उष्णीषकान्तरीय कन्दिकाः प्रविशन्ति। (३) पार्श्वमस्तिष्को-ष्णीषकान्तरीयाणि[३] तु सूत्राणि विसवितानस्य वहिर्भागस्थं त्रिकोण-स्थानमधिकृत्य वर्त्तन्ते। तानि पार्श्वमस्तिष्कतः सम्भूय उष्णीषकान्तरीय-कन्दिकाः प्रविशन्ति।

(ख) मध्यमांशस्तु मृणालकस्य विसवितान-कुथवितानयोरन्तरालस्थः। स तनुधूसर वस्तुपत्रिकामयः श्यामपत्रिकासंज्ञः[४] ऊर्ध्वमाज्ञाकन्दमूलान्तं प्रसृतः।

(ग) पश्चिमांशः पुनर्मृणालकस्य कुथवितानसंज्ञो[५] भूम्ना जालकवस्तुमयः। स उष्णीषकाभ्यन्तरवस्तुवत् कन्दिका-तन्त्रिकानुविद्धः तदनुबन्धो च। तत्र मुख्ये कन्दिके द्वे, तन्त्रिकाश्च तदनुवन्धिन्यस्तिस्रः। तत्र कन्दिकाः—यथा –(१) पुरस्तात् प्रथमतो दृश्या शोणकन्दिका[६], तदवसानस्थानं धम्मिल्लकस्योत्तरवृन्तिकासूत्राणाम्।

---

१ Fronto-pontine Fibres. २ Cerebro-spinal Fibres. ३ Temporo-pontine Fibres. ४ Substantia Nigra. ५ Tegmentum. ६ Red Nucleus.

तत्सम्भवानि च कानिचित् सूत्राणि ऊर्ध्वमाज्ञाकन्दाभिमुखं प्रसरन्ति, अपराणि अधःसुषुम्नाकाण्डाभिगानि मध्यमां त्रिधारतन्त्रिकां रचयन्ति। उल्लंघयन्ति च तां तत्पार्श्वगायास्तृतीयनाड्याः सूत्राणि। (२) मृणालकद्वयान्तराले च मध्यतो धूसर-ग्रन्थिरपरः मृणालान्तरीयग्रन्थिसंज्ञः[1], तत्सम्भवसूत्राणामाज्ञाकन्दाधिपीठेन संयोगः।

तन्त्रिकास्तु कुथवितानान्तरीयाः यथा—(१) धम्मिल्लकस्य उत्तरवृन्तिका, सा धम्मिल्लकवर्णने वर्णितपूर्वा। (२) वल्लिका, सा सुषुम्नाशीर्षकान्तःस्थकोण-कन्दिका-दशाकन्दिकाभ्यां सम्भूय तत्रैव वेणीबन्धक्रमेण ऊर्द्ध्वं प्रसृतानां संज्ञावह-सूत्रगुच्छानां संहतिरूपा त्रिकोणाकारेण अनुप्रस्थच्छेदेषु दृश्या। तस्याः कतिचित् सूत्राणि पार्श्वतः मृणालकस्य पार्श्वसीतोपकण्ठे दृश्यानि। सर्वाणि च तानि प्रायेण

[ २०२ चित्रम् ]

## मध्यममस्तुलुङ्गपिण्डस्य पश्चिमभागः।

( पार्श्वतो दृष्टः )




( चित्र व्याख्या )

१ तृतीय दृक्कन्दिका। २ आज्ञाकन्दस्य पश्चिमांशः। ३ अधरालिका। ४ उत्तरालिका। ५ अधरा अधिपीठिका। ६ उत्तरा अधिपीठिका। ७ दृष्टिनाड़ीमूलिका। ८ दृष्टिनाड़ीयोजनिका।

---

१ Interpeduncular Ganglion.

आज्ञाकन्दप्रविष्टानि। (३) अनुदीर्घसूत्राणि पश्चिमान्तरीयाणि, तानि उष्णीषक-वर्णने वर्णितपूर्वाणि। तानि आज्ञाकन्दाधरीयभागात् सम्भूय अधःप्रसृतानि।

१। पश्चिमभागः पुनर्मध्यममस्तुलुङ्गपिण्डस्य कलायिकाचतुष्टयोपलक्षितः (२०२ चित्रम्)। कलायिकाश्च ताः क्षुद्रवर्त्तुलाकाराः स्वस्तिकाख्यसीतया परस्परविभक्ताः। तासु उत्तरे कलायिके द्वे—ते दर्शनेन्द्रियसम्बन्धिनी। अधरे च द्वे, ते श्रवणेन्द्रियसम्बन्धिनी। एकैकतश्च कलायिकाचतुष्टयाद् बहिर्गते नाड़ीसूत्रगुच्छिके आलिकावद् दृश्ये। तयोः उत्तरालिका[1] अधरालिका[2] चेति संज्ञे। तत्प्रान्तयोश्च लक्षणीयौ स्विन्नयवाकारौ उत्सेधौ क्रमेण उत्तराधरे अधिपीठिके[3] नाम। तयोरुत्तराऽधिपीठिका साक्षाद् दृष्टिनाड़ीमूलिकामूलस्था। अधराऽधिपीठिका तु धूसरवस्तुप्राया कतिचित् पार्श्ववल्लिकासूत्राणां श्रुतिनाड़ीसम्बन्धिनां संयोगभूमिः प्राधान्येन, दृष्टिनाड़ीमूलसूत्राणाञ्च केषाञ्चित् स्तोकमात्रेण।

अवस्थानञ्च कलायिकाचतुष्टयस्य प्राणगुहापटलशिखरादूर्द्ध्वं द्रष्टव्यम्। अधश्च कलायिकाचतुष्टयादुभयतो दृश्ये नाड़िके 'कटाक्षिणी' संज्ञे। पुरस्तादूर्द्ध्वञ्च उत्तरकलायिकाद्वयात् मध्यरेखायां दृश्या वर्त्तुलाकारा कन्दिका तृतीय दृक्कन्दिका[4] नाम।

३। आभ्यन्तरभागस्तु मध्यममस्तुलुङ्गपिण्डस्य धूसरवस्तुभूयिष्ठेन जालक-वस्तुना निर्म्मितः ब्रह्मद्वारसुरङ्गाधरः (२००।२०१ चित्रयोः)। दृश्यते चायम् अनुप्रस्थच्छेदेन त्रिकोणप्रायः।

सेयं ब्रह्मद्वारसुरङ्गा[5] नाम सूक्ष्मो ब्रह्मवारिमार्म्मः अर्द्धांगुलदीर्घः परितो धूसर-वस्तुवेष्टितः कुथवितान-कलायिकाचतुष्टययोरन्तराले तिष्ठति। धूसरवस्तु चेदं तृतीयादिपञ्चम्यन्तनाड़ीनां केन्द्रपुञ्जवती। सुरङ्गा च सा मस्तिष्कसुषुम्नान्तरीय-ब्रह्मवारिमार्गस्य मध्यांशभूता।

तदेतत् मध्यमं मस्तुलुङ्गपिण्डं सपरिकरं समासतो व्याख्यातम्। विस्तरस्तु आकरेषु मृग्यः सूक्ष्मचाक्षुषपरीक्षावेद्यश्च।

इति पञ्चमोऽध्यायः।

---

१ Superior Brachium. २ Inferior Brachium. ३ External Geniculate body & Internal Geniculate body. ४ Pineal body. ५ Aquæduct of Sylvius.

# षष्ठोऽध्यायः ।

अथातः अग्रिममस्तुलुङ्गपिण्डवर्णनीयमध्यायं व्याख्यास्यामः ।

अग्रिममस्तुलुङ्गपिण्डं हि मस्तिष्कस्य गोलार्द्धद्वयेनाऽभिन्नम् । तच्च समृणालकं मस्तिष्कमित्युच्यते । तत् मानुषाणां महायतनं पूर्णावयवञ्च शिरोगुहान्तः करोटिपीठमधिष्ठाय वर्त्तते, करोटिपटलेन करोटिपक्षाभ्याञ्च सुरक्षितम् ।

## अथ मस्तुलुङ्गवृतयः ।

सन्ति खलु समग्र मस्तुलुङ्गसहित सुषुम्नाकाण्डस्य तिस्रो वृतयः—इति सूचितपूर्वम् । ताः बाह्या मध्यमा आभ्यन्तरी चेति त्रिरूपाः । तासां वराशिका-नीशारिका-चीनांशुकेति क्रमेण संज्ञाः । स्थानविभागेन तु ताः सानुबन्धत्वात् समानसंज्ञा अपि पृथग् विभज्य वर्ण्यन्ते — मस्तुलुङ्गवृतयः, सुषुम्नावृतयश्चेति । तासां सुषुम्नावृतयो वर्णितपूर्वाः । मस्तुलुङ्गवृतयस्तु यथा —

**बहिर्वृतिः—वराशिका**[1] नाम समग्रकरोटिगुहान्तरावरणी कृत्स्न मस्तुलुङ्ग-रक्षणी च । सेयं द्रढस्नायुसूत्रमयी स्थूलकला करोटिसम्पुटीयास्थिभागेषु द्रढं संसक्ता अस्थिधरा कला भवति, सम्बध्यते च विशेषतः शिरोऽस्थिसीमन्तिकासु, करोटिपीठे, महाविवरे, शिरःकपालानामन्तस्तलेषु च वृतिबन्धनैः कलाग्रन्थिभिः नीशारिकांशसम्भवैः । प्रसरन्ति च तस्याः पृथगंशाः जतूकापक्षान्तरालमार्गेण नेत्रगुहान्तः प्रविष्टास्तन्निर्मापकास्थिधरकलारूपेण, वृतिरूपेण च शीर्षण्यनाडीनाम् ।

साऽसौ स्तरद्वयवत्यपि प्रायेण एकस्तरवत् लक्ष्यते — अन्यत्र विभाग-स्थानेभ्यः । स्तरद्वयान्तरालेषु च तत्र तत्र द्रश्याः सिरासरितः सिराकुल्याश्च । ताः सिराध्याये वर्णितपूर्वाः चित्रेषु च लक्षणीयाः ( ११७।११८।२०३ चित्रेषु ) ।

सन्ति च वराशिकाया मस्तुलुङ्गविभजनांशाश्चत्वारः विभागस्थानेभ्यः प्रसृताः । ते—दात्रिका, जवनिका, लघुदात्रिका, चक्रवृतिका चेति संज्ञायन्ते । तत्र—

**दात्रिका**[2] स्वनामव्याख्याता मस्तिष्कगोलार्द्धद्वयान्तराले अनुदीर्घा महासीतां प्रविष्टा । तदूर्द्ध्वपरिधौ च द्रश्या सिरासरित्—उत्तरा दीर्घिका[3] नाम । अधःपरिधौ तु अधरा दीर्घिका[4] ( २०३ चित्रम् ) ।

---

१ Dura mater. २ Falx Cerebri. ३ Superior Sagittal Sinus.
४ Inferior Sagittal Sinus.

(२०३ चित्रम्)

## मस्तुलुङ्गस्य बहिर्वृतिः सविभागा।

[ करोटिसम्पुटस्य उर्द्ध्वाधश्छेदेन दर्शिता ]




१।२—इत्यादि संख्याः तत्तत्संख्यक नाड़ीमुखानां प्रदर्शिकाः

जवनिका[1] — मस्तिष्कानुमस्तिष्कयोर्विभजनी करोटिगुहायाः पश्चिमखातमावृत्य तिष्ठति। तस्याः पार्श्वद्वयं पक्षपुटसंज्ञं शङ्खास्थ्नः अश्मतटिकाद्वये संसक्तम् अनुपार्श्विकाख्य[2] सिरासरिद्भ्यामुपलक्ष्यते। तन्मध्यतश्छिद्रं सुषुम्नाकाण्डनिर्गमाय। अन्तराले च दात्रिकाजवनिकयोर्मध्यरेखायां दृश्या सिराकुल्या दीर्घिकायोजनी[3] नाम।

लघुदात्रिका[4] — नाम त्रिकोणाकारो वराशिकाभागः पश्चिमधम्मिल्लखातमधिष्ठाय वर्त्तते। सा जवनिकाया मध्यरेखायां संसक्ता तदधो लम्बते पश्चिमकपालिकाख्यसिराकुल्ययोपलक्षिता।

चक्रवृतिका[5] —नाम लघुचक्राकारो वराशिकांशः यो पोषणकग्रन्थेः पटलभूतस्तमारक्षति समन्तात् प्रावृत्य। तन्मध्ये छिद्रं पोषणकवृन्तिकाधारणाय।

**मध्यमा वृतिः** पुनर्मस्तुलुङ्गस्य तन्वी **नीशारिका**[6] नाम (२०४ चित्रम्)। सा सर्वाणि मस्तुलुङ्गपिण्डानि प्रावृणोति नातिघनसंसक्ता, प्रविशति च सा मस्तिष्कगोलार्द्धद्वयान्तराले, मस्तिष्कधम्मिल्लकयोरन्तराले च कतिचित् सिराजालवती। प्रावृताश्च तच्छाखाभिः शीर्षण्या नाड्यः करोटिगुहातो निर्गमं यावत्।

लक्षणीयौ चात्र वराशिकादि वृतित्रयान्तरालेषु द्वाववकाशौ — यथा —

(१) वराशिका-नीशारिकयोर्मध्ये — 'अन्तर्वराशिक'[7] संज्ञोऽवकाशः।

(२) नीशारिका-चीनांशुकयोर्मध्ये च 'ब्रह्मोदकुल्या'[8] संज्ञः। तयोराद्यः सामान्यलसीकापूर्णः। द्वितीयस्तु ब्रह्मोदकपूर्णः स द्वयोः प्रदेशयोर्विशेषेण स्फारीभूतः — मस्तिष्काधस्तले, सुषुम्नाशीर्षकधम्मिल्लकयोरन्तराले च। सेयं 'ब्रह्मोदकुल्या' मस्तुलुङ्गान्तरीयप्राणगुहया त्रिपथगुहाभ्याञ्च सम्बन्धवती त्रिभिः सूक्ष्मविवरैरिति प्राणगुहावर्णने वर्णितपूर्वम्।

**ब्रह्मोदकं** तु नाम ब्रह्मोदकुल्यायां सर्वत्रस्थितं स्वच्छं वारि यन्मस्तुलुङ्गान्तर्गुहासु सुषुम्नाकाण्डाभ्यन्तरतः सर्वत्र च नीशारिका-चीनांशुकयोरन्तरालेषु वर्त्तते। तत्र प्रायेण पञ्चतोलकमानं यूनाम्, किञ्चिदधिकं वा प्रवयसाम्। तत् मस्तुलुङ्गवस्तुनः सौषुम्निकवस्तुनश्च प्रतिघातवारणाय सम्यक् पोषणाय चेत्याहुराधुनिकाः।

---

१ Tentorium Cerebelli. २ Occipital Sinus. ३ Straight Sinus. ४ Falx Cerebelli. ५ Diaphragma Sellæ. ६ Arachnoid. ७ Sub-dural Space. ८ Sub-Arachnoid Space.

**आभ्यन्तरी वृतिः** पुनर्मस्तुलुङ्गपिण्डस्यातिसूक्ष्मा **चीनांशुका**[१] नाम। सा विशेषेण मस्तुलुङ्गीयसिरा-धमनीजालकानां धारणी सर्वतान्तर्मस्तुलुङ्गं सम्यक् प्रविष्टा। तस्याः प्राणगुहान्तः प्रविष्टो भागविशेषः मञ्जरिकाख्यो वर्णितपूर्वः। तादृशाश्चापरे भागाः त्रिपथगुहयोरन्तः ब्रह्मगुहायाञ्च दृश्यन्ते। ते तत्र तत्र प्रसङ्गतो वर्णयिष्यन्ते।

[ २०४ चित्रम् ]

## मस्तिष्कगोलार्द्धद्वयम् ( सवृतिकम् )।

[ करोटिपटलापसारणेन दृश्यम् ]




---

१ Pia mater.

## अथ मस्तिष्कवर्णनम्।

**मस्तिष्कं**[१] हि नाम अग्रिममस्तुलुङ्गपिण्डमेव मृणालकसहितमित्युक्तपूर्वम्। तस्य च द्वावंशौ कल्प्येते वर्णनासौकर्य्याय—मस्तिष्कगोलार्द्धद्वयं मस्तिष्कमूलपिण्डश्चेति। तत्र करोटिपटलापसारणेन उपरिष्टाद् दृश्यं गोलार्द्धद्वयमेव (२०४।२०५ चित्रयोः)। तदुत्तरार्द्धापसारणेन तु दृश्यमाज्ञाकन्दाद्युपलक्षितं मूलपिण्डं, गुहाश्च मस्तिष्काभ्यन्तरीयाः। अपरे च तत्र विशेषाः मस्तिष्कतले मृणालकद्वयानुबन्धेन लक्षणीयाः।

तत्र मस्तिष्कमूलपिण्डं मध्यरेखामुभयतः स्थिताभ्यामाज्ञाकन्दाभ्यां सानुबन्धाभ्यां लक्षणीयम्। अन्तरा च तयोस्त्रिकोणाकारः प्रदेशो मूलत्रिकोणं नाम। तद् ब्रह्मगुहायाः स्थानं निर्दिशति। अनुबन्धाश्च यथा — तत्पृष्ठतो दृश्या तृतीयदृक्कन्दिका पश्चिमयोजनिकया सम्बद्धा। तत्पृष्ठतश्च कलायिकाचतुष्टयानुबन्धेन स्थिते उत्तराधरपीठिके एकैकतः। पुरस्तात्तु मस्तिष्कतले दृश्ये चूचुकाकारे कन्दिके चूचुकवर्त्तुले नाम। तदेतदखिलं मस्तिष्कमूलपिण्डेऽन्तर्भाव्यते गर्भव्याकरणकोविदैः।

अन्ये तु आज्ञाकन्दद्वयं तदुत्तराधर भागद्वयञ्च पृथग् विविच्य वर्णयन्ति, बोधसौकर्य्याय। तत्र कन्दोत्तरिकभागे दृश्यानि—मूलत्रिकोणं, तृतीयदृक्कन्दिका, पश्चिमयोजनिका च। कन्दाधरिकभागे तु चूचुकवर्त्तुलद्वयं, पोषणकग्रन्थिः, तद्वृन्तिका च सद्वारा, दृष्टिनाड़ीयोजनिका च।

## अथ मस्तिष्कगोलार्द्धद्वयम्।

**मस्तिष्कगोलार्द्ध**द्वयं[२] हि (२०५ चित्रम्) मस्तुलुङ्गपिण्डस्य भूयिष्ठो भागः उपरिष्टाद् विशालविहङ्गमाण्डवद् दृश्यः। तत् पुरस्तादल्पायतम्, पश्चात् प्रशस्ततरम्, पार्श्वकुम्भयोरन्तराले प्रशस्ततमम्। मध्ये च गोलार्द्धयोः सुगभीरा सीता तद्विभजनी, सा अनुदीर्घा महासीता[३] नाम। तस्यां प्रसृतो दात्रिकासंज्ञो वराशिकावृतिभागः। सेयं सीता मध्यरेखायां पुरःपश्चाच्च गम्भीरानुप्रविष्टाऽपि मध्ये गोलार्द्धद्वयसंयोजकेन मस्तिष्कसेतुना विहतगतिर्दृश्यते। मस्तिष्कसेतुश्चासौ अधस्तात् छत्रिकाद्यावृतं ब्रह्मगुहादिभागांश्छादयति। एकैकस्मिंश्च गोलार्द्धेऽभ्यन्तरतो दृश्या त्रिधा प्रसृता महागुहा त्रिपथगुहा[४] नाम। साऽन्ये चाभ्यन्तरविशेषाः अग्रे पृथग् वर्णनीयाः। इह त्वादौ मस्तिष्कबहिर्भागविशेषाः वर्ण्यन्ते।

---

१ Cerebrum. २ Hemispheres of Cerebrum. ३ Great Longitudinal Fissure. ४ Lateral Ventricle.

[ २०५ चित्रम् ]

## मस्तिष्कगोलार्द्धद्वयम् ।

( उपरिष्टाद् दृष्टम् )




अथ मस्तिष्क बहिर्भागविशेषाः ।

एकैकस्मिन् हि मस्तिष्कगोलार्द्धे बहिर्द्दृश्यानि त्रीणि तलानि, बह्व्यश्च सीताः । ताश्च गभीराऽगभीर प्रवेशेन मस्तिष्कवस्तुनः पिण्डेषु कर्णिकासु च विभजन्यः ।

तत्र त्रीणि तलानि मस्तिष्कस्य एकैकार्द्धे यथा—बहिस्तलम्, आन्तरतलम् अधरतलञ्चेति ।

तेषु बहिस्तलं पार्श्वतोवृत्तमुपरिष्टाद् बहिश्च दृश्यम् । अन्तस्तलं निगूढं मध्यरेखायां गोलार्द्धयोः पृथक्करणेन दृश्यम् । अधरतलं तु विशेषेण उच्चावचं तादृशकरोटिपीठमधितिष्ठति, तत् करोटिगुहातो मस्तिष्कस्य पृथगादानेन परावर्त्तनेन च दृश्यम् । सन्ति च सर्वेषु तलेषु बृहत्यः लघ्व्यश्च सीताः, कर्णिकाश्च तदन्तरालस्था वक्ष्यमाणाः ।

ताः पृथग् विभज्य वर्ण्यन्ते शिष्यबुद्धिवैशद्याय। अधरतलन्तु पृथगेव व्याख्यास्यते व्यतिकर विशेष प्रदर्शनाय।

अथ मस्तिष्कसीताः।

अष्टौ हि मस्तिष्कसीताः एकैकस्मिन् गोलार्द्धे मुख्याः मस्तिष्कावयवविभजन्यः। मुख्यतमा तु सीता एकाकिन्येव मस्तिष्कगोलार्द्धयोर्विभजनी पृथग् गणनीया, सा **अनुदीर्घा** नाम महासीता वर्णितपूर्वा ( ५५ पृष्ठे )। एवञ्च—सप्तदश मुख्य-सीताः साकल्येनोभयोर्गोलार्द्धयोर्द्रष्टव्याः। सन्ति च लघुतरा अपि सीता बह्व्यः, ताः पिण्डान्तरीयवस्तुनः पिण्डिकासु कर्णिकासु च विभजन्यः—'सीतिका'-संज्ञाः। ताः प्रायेण पिण्डान्तरीय विभागवर्णने व्याख्येयाः।

न चास्ति सर्वेषु मस्तिष्केषु सर्वासां सीतानां सीतिकानां कर्णिकानाञ्च तुल्यरूपत्वम्, दैर्घ्य-गाम्भीर्य्य-वक्रिमादीनां बहुधा व्यतिक्रमदर्शनात्। स्थान-लक्षण-सामान्यं तु सर्वासामस्त्येव।

ताश्च अष्टौ सीताः यथा—

१। **शङ्खपार्श्वान्तरा**[१] नाम गभीरतिरश्चीना सीता ( २०६ चित्रम् ) एकैकस्य गोलार्द्धस्य पार्श्व-तलयोर्दृश्या। तस्या मूलभागो ह्रस्वः, अर्द्ध-चन्द्राकारश्च। स मस्तिष्कतले अग्रिमपिण्डं शंखिकपिण्डाद् विभजते। तलदेशं विभज्य पार्श्वतः प्रसरंश्च स त्रिशाखो भवति। तस्य द्वे शाखे अग्रिमे ह्रस्वे पुरस्तादग्रिमपिण्डं प्रविष्टे। पश्चिमा तु शाखा दीर्घा शंखिकपिण्डं पार्श्वपिण्डाद् विभजते।

२। **मध्यान्तरा**[२] नाम सीता ( २०६ चित्रम् ) अनुदीर्घाख्य महासीतायाः मध्यदेशात् कुटिलमधोमुखमनुप्रस्थञ्च प्रसृता एकैकं गोलार्द्धं अग्रिम-पार्श्विक-पिण्डयोर्विभजते। ताञ्च परिवृत्यावतिष्ठन्ते अङ्गप्रत्यङ्गचेष्टाप्रदा नाड़ीभूमयो विशेषेण—इति स्मर्त्तव्यम्। सैषा सीता 'रोलान्दो' संज्ञकेन यवनाचार्य्येण सम्यग् वर्णितेति 'रौलान्दिकी सीता' नाम पाश्चात्यशारीरविदाम्।

३। **पार्श्वपश्चिमान्तरा**[३] नाम सीता—एकैकतः पश्चिमप्रान्ते दृश्या पार्श्विकपिण्डस्य पश्चिमपिण्डाद् विभजनी ( २०६।२०७ चित्रयोः )। सा बहिस्तले अस्फुटा ह्रस्वा च, आन्तरतले तु दीर्घा वक्रा च। तत्कृत-

---

१ Lateral Cerebral Fissure ( of Sylvius ). २ Central Fissure ( of Rolondo). ३ Parietc-occipital Fissure.

[ २०६ चित्रम् ]

## मस्तिष्कगोलार्द्ध-पार्श्वस्थाः सीताः कर्णिकाश्च ।




✻ एतच्चिह्नं सीताकौटिल्यप्रदर्शकम्

विभागश्च वहिस्तले कल्पितरेखायोजनेनैव। आन्तरतले तु सुगभीरमधोमुखं प्रविष्टाऽसौ सीता वक्रान्तराख्य सीतया मिलित्वा त्रिकोणाख्यपिण्डिकां चतुरस्र-पिण्डिकातो रासन कर्णिकातश्च विभजते ( २०७ चित्रम् )।

४। **प्रच्छन्नधानुषी**[१] नाम सीता ( २०८ चित्रम् ) एकैकस्य गोलार्द्धस्य वहिःपार्श्वे प्रच्छन्ना अग्रिम-शंखिक-पार्श्विकपिण्डानां पिधान कर्णका[२]पसारणेन दृश्या। सा प्रच्छन्नपिण्डिकां पञ्चषदलमयीमावेष्ट्य वर्त्तते।

५। **अधिसेतुका**[३] नाम **सीता** ( २०७ चित्रम् ) मस्तिष्कसेतोः पुरस्ता-दुपरिष्टाच्च वक्रीभूय धनुर्वत् प्रसृता आन्तरतलीयसीतासु मुख्यतमा। तस्याः पश्चिम-प्रान्तः परावृत्य ऊर्द्ध्वं गतो मध्यान्तरां सीतां स्पृशति प्रायेण। विभजते च सा अधिसेतुकर्णिकामुत्तराया अग्रपिण्डकर्णिकायाः, अनुमध्यान्तराख्यकर्णिकायाश्च।

६। **वक्रान्तरा**[४] नाम **सीता** धनुर्वक्रा ( २०७ चित्रम् ) आन्तरतले पश्चिमतो दृश्या। सा पूर्वोक्त सीतायाः आन्तरांशेन पुरःसङ्कृत्य मस्तिष्कसेतोः पश्चादधश्च स्तोकेन प्रसृता। तस्या अग्रभागः त्रिपथगुहायाः पश्चिममार्गान्तर्गभीरं प्रविष्ट उपलवर्त्तिकाख्यमुत्सेधं जनयति।

७। **अन्वन्तरा**[५] नाम **सीता** पार्श्वपश्चिमान्तराख्य सीताया आन्तरांश-मधिसेतुकायाः सीतायाः पश्चिमांशेन कथमपि योजयन्ती चतुरस्रपिण्डिकाधस्ताद् दृश्या। सेयं प्रायेण नातिस्फुटा।

८। **सरलान्तरा**[६] नाम **सीता** ( २०७ चित्रम् ) तत्रैवाऽधरतले च दृश्या। सा पश्चिमप्रान्तादारभ्य पुरस्तात् प्रसृता उपरि स्थितां रासनकर्णिका-मुपधानपिण्डिकाञ्च वेमकर्णिकातो विभजते।

आसु च सीतासु प्रथमचतुष्टयं वहिस्तलेऽधरतले च दृश्यम्। अपरचतुष्टयम् आन्तरतले। पार्श्वपश्चिमान्तरा तु सीता वाह्यान्तरतलयोः प्रसृता।

अथ मस्तिष्कपिण्डविभागः।

चत्वारि खल्विह मुख्यानि पिण्डानि, द्वे च पिण्डिके, एकैकस्मिन् मस्तिष्क-गोलार्द्धे प्रोक्ताभिः सीताभिर्विभज्यन्ते। तद्यथा—

---

१ Circular Sulcus. २ Opercula. ३ Callosal Fissure. ४ Calcarine Fissure. ५ Sub-parietal Sulcus. ६ Collateral Fissure.

१। **अग्रिमपिण्डं**[1] नाम पुरःस्थं पिण्डं यद् विभज्यते पश्चिमतो मध्यान्तराख्य सीतया पार्श्विकपिण्डाद्, अधस्तात् पार्श्वतश्च शंखपार्श्वान्तरया सीतया शंखिकपिण्डात्। आन्तरतले तु तद्विभागः अधिसेतुकाख्यसीतया तदाख्य कर्णिकातः।

अग्रिमपिण्डान्तश्च लक्षणीयाः सीतिकास्तिस्रः (२०६ चित्रम्)—तासु एका अनुप्रस्थं गता मध्यान्तराख्यां सीतामनुवर्त्तते पुरस्तात्। सा **पुरोमध्यान्तरा**[2] नाम। तदग्रतश्च अनुलम्बं पूर्वापरगते सीतिके द्वे तत्संयुक्ते-**अग्रपिण्डोत्तरा**,[3] **अग्रपिण्डाधरा**[4] चेति संज्ञे।

अथाभिः सीताभिर्विभागादत्र दृश्याः कर्णिकाश्चतस्रः। तद्यथा (२०६ चित्रम्)—

(१) मध्यान्तरा अग्रिमकर्णिका[5] मध्यान्तराख्य सीतायाः पुरोवर्त्तिनी अधस्तात् शंखपार्श्वान्तराख्य सीतोपकण्ठावधि प्रसृता। सा विशेषेण स्मर्त्तव्या बाहुवक्त्रादिसञ्चालननाडीक्षेत्राधारत्वात्।

[ २०७ चित्रम् ]

## वाममस्तिष्कगोलार्द्धस्य आन्तरतलम्।




म—मध्यान्तराख्यसीतायाः आन्तरप्रान्तः।

१ Frontal Lobe. २ Precentral Sulcus. ३ Superior Frontal Sulcus. ४ Inferior Frontal Sulcus. ५ Anterior Central Gyrus.

(२) उत्तरा अग्रपिण्डकर्णिका[1] दीर्घायता अग्रपिण्डशिखरस्था। सा चान्तरतलेऽपि अक्षिसेतुकां सोतां यावत् प्रसृता। तस्यास्तुण्ड' पुरस्ताद् वक्रम्। तत्पश्चिमांशः प्रायेण पृथग्भूत इव 'अनुमध्यान्तरा कर्णिका'—संज्ञः आन्तरतले दृश्यः।

(३) मध्यमा अग्रपिण्डकर्णिका[2] स्थूलायता उत्तराधरसीतिकयोरन्तराले वहिःपार्श्वे दृश्या। सा पुरस्तादधश्च अग्रिमनेत्रोत्तरकर्णिकया सानुवन्धा।

(४) अधरा अग्रपिण्डकर्णिका[3] तु अग्रपिण्डाधराख्यसीतिकया पृथक्कृता अग्रपिण्डस्य पार्श्वाधरभागं तलभागञ्च रचयति। सा शंखपार्श्वान्तर सीताया अग्रिमशाखाद्वयेन तिसृषु कर्णिकासु विभक्ता। ताश्च कर्णिकाः पूर्वापरक्रमेण नेत्रोत्तरकर्णिका,[4] त्रिकोणकर्णिका,[5] पिधानकर्णिका[6] चेति व्यपदिश्यन्ते। तासु—

नेत्रोत्तरकर्णिका चतुर्भुजसीतिकया[7] लघुतरकर्णिकाचतुष्टये विभज्यते। ताश्च अग्रिम-पश्चिम-पार्श्विकाऽन्तरसंज्ञाः। अस्ति च मध्यरेखामनुगता घ्राणपिण्डिकया विभक्ता तनुदीर्घा लघुकर्णिका घ्राणपिण्डोत्तरा[8] नाम। सा उत्तराग्रपिण्डकर्णिकाया अवयवभूता (२०८ चित्रम्)।

अत्र चायं विशेषः स्मर्त्तव्यः। वामा अधराग्रपिण्डिका[9] मनुष्याणां स्थूलतरा वाङ्मयोच्चारणप्रवर्त्तकंक्षेत्रमिति निर्णीतं ब्रोकाचार्य्यप्रमुखैः पाश्चात्यपरीक्षकैः। ततश्चास्या वाङ्मयपिण्डिकेति संज्ञा।

२। **पार्श्विकपिण्डं**[10] नाम—पार्श्वस्थं पिण्डं (२०६ चित्रम्) यद् विभज्यते मध्यान्तराख्यसीतया अग्रिमपिण्डात्, शंखपार्श्वान्तराख्य सीतया च शंखिकपिण्डात्। पश्चिमतस्तु न स्फुटोऽस्य विभागः पश्चिमपिण्डात्, पार्श्वपश्चिमान्तराख्य सीतायाः पार्श्विकभागस्य स्वल्पत्वात्। आन्तरतले तु स स्फुट एव, तस्याः सीताया आन्तरभागस्याऽदीर्घस्फुटत्वात्।

अस्य च पिण्डस्य पार्श्वतः सीतिके द्वे, एका 'अनुमध्यान्तरा' नाम मध्यान्तराख्य सीताया अनुवर्त्तिनी, अपरा तत्क्रोड़ात पश्चिमतः प्रसृता 'पार्श्वान्तरा' नाम। तयोराद्यया पृथग्भूता 'अनुमध्यान्तरा' नाम कर्णिका पुरस्तात्।

---

१ Superior Frontal Gyrus. २ Middle Frontal Gyrus. ३ Inferior Frontal Gyrus. ४ Pars Orbitalis. ५ Pars Triangularis. ६ Pars Opercularis. ७ Oribital Sulcus. ८ Gyrus Rectus. ९ Left Inferior Frontal Gyrus = Broca's Convolution. १० Parietal Lobe.

अन्त्यया तु स्फुटीभूते उत्तराधराख्ये पार्श्वकर्णिके। आन्तरतले तु पार्श्विक-पिण्डस्य द्वश्ये अनुमध्यान्तराकर्णिका, चतुरस्रपिण्डिका च, अधिसेतुकाख्य-सीताया वक्रोर्द्ध्वभागेन पृथक्कृते। चतुरस्रपिण्डिकाधश्च नातिस्फुटा सीता 'अन्वन्तरा' नाम वर्णितपूर्वा।

३। **पश्चिमपिण्डं**[1] नाम (२०६ चित्रम्) लघुतमं त्रिकोणपिण्डं यदान्तरतले विशेषेण परिस्फुटमपि बहिस्तले स्तोकेन पृथक् क्रियते पार्श्व-पश्चिमान्तराख्य सीतायाः बाह्यभागेन।

अस्य च त्रीणि तलानि—बाह्यतलम्, आन्तरतलम्, अधरतलञ्च। तत्र अधरतलं जवनिकाख्य कलोपरिष्टादवतिष्ठते—इत्यस्य जावनिकतलमिति क्वचित् संज्ञा।

एतत्पिण्डान्तश्च द्वश्ये सीतिके नातिस्फुटे। तयोरेका पार्श्वान्तराख्य-सीतिकानुबन्धिनी प्रायेण वक्रमुखी, अपरा तदधस्ताद् द्वश्या। ते 'पश्चिमोत्तरा'[2] 'पश्चिमाधरा'[3] चेति संज्ञे।

[ २०८ चित्रम् ]

## प्रच्छन्नपिण्डिका—प्रच्छन्नधानुषी सीता च।

( वाममस्तिष्कगोलार्द्धपार्श्वतः अग्रिम-पार्श्विक-पार्श्विपिण्डानां कर्णिकापसारणेन दर्शिता। )




---

१ Occipital Lobe. २ Transverse Occipital Sulcus. ३ Lateral Occipital Sulcus.

विभागस्तु बहिर्द्वयोरेव कर्णिकयोः, ते उत्तराधरे पश्चिमकर्णिके नाम। आन्तरतले तु दृश्ये द्वे पिण्डिके वक्रान्तराख्यसीतया पृथक्कृते, तयोः 'त्रिकोण-पिण्डिका', 'रासनकर्णिका' चेति संज्ञे (२०७ चित्रम्)।

४। **शंखिकपिण्डं**[1] नाम - करोटिपेटस्य मध्यममहाखाताधिष्ठायि पिण्डं (२०६।२०७ चित्रयोः) यत् शंखपार्श्वान्तराख्यसीतया सम्यक् पृथक्कृतं पार्श्वतोऽधरतले च दृश्यम्। तस्य त्रीणि तलानि—उत्तरतलं, मध्यमतलम्, अधरतलञ्चेति।

सीतिके चात्र कर्णिकाविभजन्य स्तिस्रः—उत्तर-मध्यमाऽधरसंज्ञाः। कर्णिकाश्च तावत्य एव तथासंज्ञाः।

विशेषतस्तु—अस्याधरतलं जवनिकाख्य कलोपरिष्ठायि, तत्र च दृश्या 'सरलान्तरा' नाम सीता या पश्चिमपिण्डावयवभूतां रासनकर्णिकां वेमकर्णिकातो विभजते, वेमकर्णिकाञ्च उपधानपिण्डिकातः। वेमकर्णिकाधश्च दृश्या सीतिका 'अधरशंखिका' नाम।

अथ मुख्ये पिण्डिके यथा—

(१) **प्रच्छन्नपिण्डिका**[2] नाम प्रच्छन्नधानुष्या सीतया संवेष्टिता मस्तिष्क-पार्श्वतो गभीरावस्थिता त्रिकोणप्राया पिण्डिका (२०६ चित्रम्) या शंखपार्श्वा-न्तराख्य सीताया विभागस्थानोपकण्ठे दृश्या। सेयं अग्रिम-पार्श्विक-शंखिक-पिण्डानां कर्णकापसारणेन[3] दृश्या। स्वयञ्च पञ्चषाभिः कर्णिकाभिर्निर्मिता। सेयं पिण्डिका रीलाचार्य्येण प्राग्वर्णितेति 'रीलद्वीप' संज्ञा पाश्चात्या नाम।

तत्रायं विशेषः। एतत्पिण्डिकाच्छादनं धूसरवस्तु परितःस्थितेन मास्तिष्क-धूसरवस्तुना सानुबन्धम्, आभ्यन्तरवस्तु चास्य राजिलपिण्डवस्तुना।

(२) **गर्भपिण्डिका**[4] नाम मस्तिष्कसेतुभागावेष्टनी पिण्डिकाद्वयी (२०७ चित्रम्) या ऊर्द्ध्वमधिसेतुकर्णिकया अधश्च उपधानपिण्डिकया निर्मिता। सैषा गर्भपिण्डिका घ्राणशक्तिविशेषशालिनां सारमेयादिपशूनामत्यर्थं परिपुष्टा। संयोगस्थाने चोक्तपिण्डिकयोर्दृश्या पुरस्तात् स्थूलावृत्तमुखी कर्णिका अंकुशकर्णिका नाम, पश्चिमतश्च तन्वी कर्णिका योजनकर्णिका नाम। मध्ये चानयोर्लम्वी सीता 'दन्तुरसीता' नाम।

तान्येतानि चत्वारि पिण्डानि पिण्डिकाद्वयसहितानि व्याख्यातानि।

---

१ Temporal lobe. २ Insula or Island of Reil. ३ कर्णकानि नाम तत्तत्-पिण्डानां शंखपार्श्वान्तरसीतां परितः स्थिताःकोणभागाः ये मत्स्यकर्णकवत् पिधानभूताः प्रच्छन्न-पिण्डिकायाः। कर्णकानि = Opercula. ४ Limbic lobe.

अथ मस्तिष्काधरतल दृश्याः विशेषाः[१]।

तेषु च उक्तानुक्तचराः व्यतिकरज्ञानाय स्मर्त्तव्याः। ते हि करोटिपीठान्मस्तिष्कमादाय परावृत्त्य परीक्ष्याः पूर्वापरक्रमेण। तत्रादौ दृश्याः सिराःधमन्यो जालकानि च कलात्रयावृतानि प्रोक्तचराणि। जवनिकाख्यो वृतिभागश्चात्र-मस्तिष्कतले धम्मिल्लकोपरिष्टाद् जवनिकावत्प्रविष्टो व्यवधायकः। वृतोनाम-पसारणेन च दृश्या मस्तिष्कभागाः, नाड्यश्च शीर्षण्याः मध्यरेखायां पार्श्वतश्च विशेषतो लक्षणीयाः ( २०६ चित्रम् )। यथा—

१। अनुदीर्घाख्यमहासीतायाः[२] पुरोभागः।

२। तदुभयतः घ्राणनाड़ीमूलिके[३] अग्रिमपिण्डद्वयं[४] च।

३। तत्पश्चिमतः शंखपार्श्वान्तरिके सीते[५] धनुर्वक्रे।

४। पुनर्मध्यरेखामुभयतो दृष्टिनाड्यौ स-योजनिके स-मूलिके[६]।

५। तयोर्मध्ये पोषणकग्रन्थिः सवृन्तिकः[७]।

६। तदुभयतः अग्रिमसुषिरपत्रिके[८]।

७। तदुभयतः शंखिकपिण्डद्वयम्[९]।

८। पोषणकग्रन्थेः पश्चात् चूचुकवर्त्तुलद्वयम्[१०]।

९। तत्पश्चिमतः पश्चिमसुषिरपीठिका[११]।

१०। तदुभयतः नेत्रचेष्टन्यौ नाम तृतीये नाड्यौ,[१२] मस्तिष्कमृणालके[१३] च।

११। तत्पश्चिमत उष्णीषकम्।

१२। तत्पार्श्वयोः कटाक्षिण्यौ नाम चतुर्थनाड्यौ[१४] त्रिधाराख्ये पञ्चम-नाड्यौ[१५] च।

१३। पश्चिमतश्चोष्णीषकस्य सुषुम्नाकाण्डो विशेषेण लवलिका[१६]द्वयोपलक्षितः तदुभयतः पश्चिमतश्च धम्मिल्लकम्।

---

१ Parts in the base of the Brain. २ Longitudinal Fissure. ३ Olfactory bulbs. ४ Frontal lobes. ५ Lateral Cerebral Fissure. ६ Optic Nerves with Chiasma and Optic Tracts. ७ Pitutary body with Infundi-bulum. ८ Anterior Perforated Substance. ९ Temporal lobe. १० Corpora Mamillaria ( or albicantia ). ११ Posterior Perforated Space. १२ Oculomotor Nerve (3rd). १३ Cerebral Peduncle (or Crura). १४ Trochlear Nerve (4th). १५ Trigeminal Nerve (5th). १६ Olivary body.

[ २०६ चित्रम् ]

## समग्र मस्तिष्कस्य अधरतलम् ।




[ १।२।३—इत्यादि संख्याः शीर्षण्यनाड़ीनां तत्तत्संख्यकतां सूचयन्ति ]

१४। उष्णीषक-सुषुम्नाकाण्डयोरन्तराले दृश्ये नेत्रपार्श्विक्यौ नाम षष्ठ्यौ नाड्यौ[१] मध्यरेखामुभयतः ।

१५। तत्पार्श्वयोश्च वक्त्रनाड्यौ[२] श्रुतिनाड्यौ[३] च क्रमेण सप्तमाष्टमसंज्ञे ।

१६। सुषुम्नाकाण्डपार्श्वतश्च एकैकतो दृश्याः नवम-दशमैकादश-द्वादश संज्ञाः नाड्यः क्रमेण कण्ठरासनी[४]-प्राणदा[५]-ग्रीवापृष्ठगा[६]-जिह्वातलिकाख्याः[७] ।

त एते मस्तिष्काधरतल दृश्याः विशेषाः सव्यतिकरं व्याख्याताः । शीर्षण्य-नाड़ीनाञ्च द्वादशानां निर्गमस्थानानि इहैव सम्यग् दृश्यानि ।

---

१ Abducent Nerves (6th). २ Facial Nerves (7th). ३ Auditory Nerves (8th). ४ Glossopharyngeal Nerves (9th). ५ Vagus Nerves (10th). ६ Spinal Accessary Nerves (11th). ७ Hypoglossal Nerves (12th).

[ २१० चित्रम् ]

## मस्तिष्कसेतुपृष्ठम् ।

( अनुप्रस्थच्छेदेन प्रदर्शितम् )




### अथ मस्तिष्काभ्यन्तर विशेषाः ।

आभ्यन्तरं हि मस्तिष्कस्य विचित्रतमनिर्माणं तदुत्तरार्द्धापसारणेन द्रश्यम् । तदेतत् मस्तिष्कसेतुच्छादित ब्रह्मगुहा-त्रिपथगुहा-मूलपिण्डाद्यात्मकं गर्भगृहमिव मस्तिष्कस्य । तत्र—

**मस्तिष्कसेतुः**[१] नाम गोलार्द्धद्वयस्य परस्परसंयोजनः शुभ्रवस्तुभूयिष्ठो गूढ़ावस्थानो मस्तिष्कमध्यस्थभागः (२१०।२११ चित्रयोः) । स कटाहवत् कुब्जपृष्ठो मध्ये ब्रह्मगुहामुभयतश्च त्रिपथगुहाद्वयं छादयति । अनुदीर्घा च महासीता तदुपरिष्टान्मध्यरेखायां प्रलम्बते दात्रिकाख्यं मस्तिष्कवृतिभागं क्रोड़ीकृत्य ।

सोऽयं मस्तिष्कसेतुः षडंगुलदीर्घः पूर्वापरप्रान्तयोः स्थूलो मध्ये क्षीणः सार्धांगुल प्रस्थश्च । तस्य सम्मुखसीमा द्व्यंगुलेन मस्तिष्कपूर्वसीम्नः । पश्चिम-सीमा तु त्र्यंगुलेन मस्तिष्कपश्चिमसीम्नः । पूर्वप्रान्तः (२११ चित्रम्) स्थूल आवृत्त-

१ Corpus Callosum.

मुखश्च 'सेतुजानु'[१]-संज्ञः। तन्मुखं परावृत्तं पश्चादधश्च 'सेतुचञ्चु'संज्ञम्, तदधस्तात् प्रान्तपत्रिकाख्य धूसरवस्तुमय्या पत्रिकया सानुबन्धम्। पश्चिमप्रान्तः स्थूलतरः 'सेतुभित्ति'[२]संज्ञः। तदवयवो धनुर्वक्रः पुनरावृत्य पुरस्तादधश्च प्रसृतो ब्रह्मगुहां क्रोडी करोति, छत्रवदाच्छादयति च ( २११ चित्रम् )। स 'छत्रिका'संज्ञः।

[ २११ चित्रम् ]

## मस्तिष्कस्य अनुदैर्घ्यच्छेदः।

( मध्यरेखायाम् )




१—प्रान्तपत्रिका। २—ब्रह्मगुहा। ३—सेतुचञ्चुः। ४—सेतुजानु। ५—काचपत्रिका। ६—मस्तिष्कसेतुः। ७—गुहान्तरालिक छिद्रम्। ८—मध्यबिन्दुः। ९—मञ्जरीपत्रिका। १०—पश्चिमा योजनिका। ११—कलायिकाचतुष्टयम्। १२—तृतीयदृक्कन्दः। १३—सेतुभित्तिः। १४—मस्तिष्क मृणालकम्। १५—चीनांशुका ( आभ्यन्तरी मस्तिष्कवृतिः )। १६—प्राणगुहा। १७—धम्मिल्लकम्। १८—सिरामञ्जरिका। १९—ब्रह्मद्वारसुरंगा। २०—सुषुम्नाशीर्षकम्। २१—उष्णीषकम्। २२—नेत्रचेष्टनी नाड़ी। २३—चूचुकवर्त्तुलम्। २४—वृन्तिका द्वारम्। २४—दृष्टिनाड़ी योजनिका।

---

१ Genu. २ Splenium.

**छत्रिका**[1] नाम मस्तिष्कसेतुतले छत्रवदास्तृता चतुर्भुजप्राया शुभ्रसूत्रपट्टिका। सा पुरस्तात् काचपत्रिकाद्वयेन मस्तिष्कसेतोः पृथक्कृता (२११।२१२।२१३ चित्रेषु)। मध्यभागेन तु मूलच्छत्रिका संज्ञेन सेतुतलमध्ये संलग्ना। तद्धारण्यश्च स्तम्भिकाश्चतस्रो मध्यरेखामुभयतो धनुर्वक्राः, द्वे अग्रिमे द्वे च पश्चिमे। ताः स्तम्भिका-संज्ञाः। तासामेकैका (अग्रिमा पश्चिमा च) एकैकस्मिन् मस्तिष्क-गोलार्द्धे। तत्रैते विशेषाः—

[ २१२ चित्रम् ]

### मस्तिष्कस्य अधरतलच्छेदः।

(आज्ञाकन्द सहित मृणालकाद्यपसारणेन निम्नतो दृश्यः)




**मूलच्छत्रिका**[2] त्रिकोणाकृतिरग्रे तन्वी पश्चादायता (२१४ चित्रे)। सा ऊर्द्ध्वं पुरश्च काचपत्रिकाद्वयेन, पश्चात् मस्तिष्कसेतुभित्तिकया संलग्ना। पश्चिमार्द्धे

१ Fornix. २ Body of Fornix.

च तस्याः पश्चिमस्तम्भिकामूलद्वयान्तराले दृश्या त्रिकोणाकृतिस्तनुपत्रिका छत्रपत्रिका[१] नाम। सा 'मञ्जरीपत्रिका'ख्य-ब्रह्मगुहापिधानिकायाश्छादनी। पार्श्वधारे तु मूलच्छत्रिकायास्त्रिपथगुहामध्ये 'त्रैपथिक' भूमौ दृश्ये स्तोकेन।

अग्रिमस्तम्भिके[२] पुनरग्रतो वक्रीभूय निम्नतः प्रसृते आज्ञाकन्दयोः पुरःस्थे। ते काचपत्रिकयोः पश्चिमसीमगे। तत्प्रान्तद्वयं मस्तिष्कतले चूचुक-वर्त्तुलयोः परिणतम्। तत्प्रभवानां सूत्राणामाज्ञाकन्दयोः प्रवेशः।

पश्चिमस्तम्भिके[३] तु मूलच्छत्रिकाया वक्रीभूय निम्नतो गत्वा त्रिपथ-गुहयोरधरशृङ्गिकमार्गान्तः प्रविष्टे। तयोश्चरमप्रान्तौ सूत्रप्रायौ तत्रैव उपधानिका-क्रोड़गतौ स्तम्भमूलिके[४] नाम। तयोरंकुशकर्णिकान्तः प्रवेश इत्युक्तपूर्वम्।

पृष्ठं तु पुनरिह मस्तिष्कसेतोस्तनुधूसरवस्तुसंवृतम्। सेयं सेतुपृष्ठास्तरणी धूसरवस्तुमयी तनुपत्रिका सेतुपृष्ठकर्णिका[५] नाम। मध्यरेखायाञ्च सेतुपृष्ठस्य दृश्या 'सेतुसीवनिका', उभयतश्चालिके 'अनुसीवनिके' नाम।

इदञ्चात्र लक्षणीयम् ( २०७ चित्रम् )। याऽसौ सेतुपृष्ठमधिरूढ़ा तद्भिन्ना 'अधिसेतुकर्णिका' वर्णितपूर्वा, तदधस्ताद् दृश्या तन्वी सीतिका सेतुविभजनी, सा 'सेतुपृष्ठसीतिका'[६] नाम।

अथाऽस्य मस्तिष्कसेतोर्निर्मापकानि शुभ्रसूक्ष्मसूत्राणि मस्तिष्कस्य प्रतिपिण्डं प्रविष्टानि। तत्र सम्मुखाभिगानि सूत्राणि अग्रिमपिण्डयोः सन्दंशवद् वक्रीभूय प्रसरन्ति, तेषाम् 'अग्रिमसन्दंश'[७]—इति संज्ञा। पश्चिमाभिगानि च तादृशान्येव पश्चिमपिण्डयोः प्रविशन्ति, तेषां 'पश्चिमसन्दंश'[८]—इति संज्ञा। मध्यस्थानि तु सूत्राणि वामदक्षिणपार्श्वयोः पार्श्विक-शंखिकपिण्डान्तः प्रविश्य 'सेतुपक्ष'-द्वयमारचयन्ति।

**त्रिपथगुहे**[९] नाम मस्तिष्काभ्यन्तरस्थे त्रिमार्गे गुहे (२१२।२१३।२१४ चित्रेषु) मध्यरेखामुभयतो गोलार्द्धद्वयान्तर्निगूढ़े ब्रह्मवारिधरे। तयोः सम्बन्धो ब्रह्मगुहया परस्परञ्च तत्पार्श्वस्थसूक्ष्मविवराभ्याम्।

एकैकस्याश्च त्रिपथगुहाया एकैकगोलार्द्धस्थिताया मध्यभागः **'त्रैपथिक'**[१०] संज्ञः, स पार्श्विकपिण्डान्तर्दृश्यः, त्रिकोणपरिधिश्च। ततो निर्गतास्त्रयो गुहामार्गाः शृङ्गवद् वक्राः पूर्व-पश्चिमाऽधरसंज्ञाः। भूमिश्च 'त्रैपथिक'स्य मध्योन्नता, तस्यां

---

१ Lyra or Psalterium २ Anterior Pillars. ३ Posterior Pillars. ४ Fimbriæ Hippocampi. ५ Supra-callosel Gyrus. ६ Callosal Fissure. ७ Anterior Forceps. ८ Posterior Forceps. ९ Lateral Ventricles. १० Central part of Lateral Ventricles.

दृश्याः पूर्वापरक्रमेण षड् विशेषाः—शफरीकन्दः, सूत्रराजिका, शैषिकी सिरा, आज्ञाकन्दांशः, सिरामञ्जरिका, छत्रिकापार्श्वभागश्च। आन्तरसीम्नि चास्य लक्षणीयः तन्वच्छकलामयोऽवयवः 'काचपत्रिका' संज्ञः। तद्विशेषास्तु अग्रे वक्ष्यन्ते।

अथासौ पूर्वो गुहामार्गः स्थूलायतो मध्यरेखानुबन्धी बहिर्मुखः **पूर्वशृङ्गपथ**[२] संज्ञः (२१२।२१३ चित्रयोः)। स त्रैपथिकादारभ्य पुरस्तात् प्रसृतः शफरीकन्दशीर्षकमावेष्ट्य निम्नाभिमुखेनाऽग्रिमपिण्डं प्रविष्टः। तस्याग्रकोटिः सेतुग्रीवया सुरक्षिता। भूमिः शफरीकन्देन। आन्तरसीमा तु काचपत्रिकया।

[ २१३ चित्रम् ]

## मस्तिष्कस्य गम्भीरानुप्रस्थच्छेदः।

( मस्तिष्कसेतोरपसारणेन दृश्यः )




१ Septum Pellucidum. २ Anterior Cornu.

पश्चिमो गुहामार्गः पुनरायतमूलस्तनुकोटिः पार्श्वानुबन्धी धनुर्वक्रश्च, स **पश्चिमशृङ्गपथ**[1] संज्ञः ( २१२।२१३ चित्रयोः )। सोऽसौ त्रैपथिकादारभ्यादौ पश्चाद् बहिर्मुखं गत्वा पुनरावृत्याऽन्तर्मुखं प्रसरति क्रमशस्तनूभूय, प्रविशति चान्ते पश्चिमं पिण्डं तनुनाऽग्रेण। तस्याऽन्तरसीम्नि दृश्य उत्सेधः उपलवर्त्तिका[2]-संज्ञः, स वक्रान्तरायाः सीताया अनुप्रवेशेन निष्पन्नः। तत्पार्श्वे च दृश्या किञ्चिदुन्नता रेखा 'पश्चिमशृङ्गालिका'[3] नाम।

[ २१४ चित्रम् ]

## मस्तिष्कस्य गम्भीरतरानुप्रस्थच्छेदः।

( पार्श्वद्वये भूयोऽपि खण्डितः )




१ Posterior Cornu. २ Calcar Avis. ३ Bulb of the Posterior Cornu.

अधरो गुहामार्गस्तु बृहत्तमो गम्भीरतमश्च। स त्रैपथिकस्य पश्चिमप्रान्ताद् वक्राधोमुखः शंखिकपिण्डं प्रविष्टः **अधरशृङ्गपथ**[1] संज्ञः (२१४।२१५ चित्रयोः)। सोऽयमादौ पश्चात्, ततः पार्श्वे, ततश्चाधोमुखं गत्वा पुनरग्रतो वक्रीभूय स्थूलाग्रेण शङ्खिकपिण्डं प्रविशति- इति विचित्राऽस्य गतिर्लक्षणीया। तदवस्थानं च उत्तरशंखिकया सीतया मस्तिष्कबहिस्तले सूच्यते।

तस्य च गुहामार्गस्य छदिभागः मस्तिष्कसेतुपक्षेण निर्मीयते, पुच्छेन च शफरीकन्दस्य सूत्रराजिकासहितेन। भूमौ च गुहाया दृश्यं वस्तुचतुष्टयम्— उपधानिका, स्तम्भमूलिका, त्रिकोणवेदिका, सिरामञ्जरिका चेति। तद्विशेषा अनुपदं वर्णनीयाः।

[ २१५ चित्रम् ]

## त्रिपथगुहाद्वयस्य व्यतिकरदर्शकम्।




१ Inferior Corme.

इदञ्चात्र गुहामार्गाणां गति-संस्थानादिसूचकं स्मरणसुखं श्लोकषट्कम् ।

त्रयस्त्रौ पथिकोद्भूता मस्तिष्कैकार्द्धवर्त्तिनः ।
पूर्व-पश्चिम-निम्नाभिमुखाः शृङ्गपथाः स्मृताः ॥ १ ॥
तत्र पूर्वः पुरोगामी शफरीशीर्षवेष्टनः ।
निम्नाभिगेन प्रान्तेन विशते पिण्डमग्रिमम् ॥ २ ॥
पश्चिमस्तु बृहन्मूलस्तनुकोटिर्धनुर्निभः ।
पार्श्वं प्राप्य विशत्यन्तर्मुखः पश्चिमपिण्डकम् ॥ ३ ॥
अधरस्तु गुहामार्गः सुगम्भीरस्त्रिवक्रिमः ।
आदौ पश्चात्ततः पार्श्वे ततोऽधः सम्मुखं गतः ॥ ४ ॥
स स्थूलाग्रो महागर्भः शंखिकं पिण्डमाविशेत् ।
सेतुपक्षश्छदिस्तस्य भूमौ वस्तुचतुष्टयम् ॥ ५ ॥
उपधानी स्तम्भमूली मञ्जरी त्र्यस्रवेदिका ॥
गुहायास्त्रिपथाख्यायाः समासादेष निर्णयः ॥ ६ ॥

[ २१६ चित्रम् ]

## त्रिपथगुहासंस्थान सूचकम् ।

( त्रिपथगुहास्थानमन्तर्निगूढमपि कल्पनामात्रेण बहिरङ्कितम् )



इमे चाष्टौ विशेषाः एकैकस्मिन् मस्तिष्कगोलार्द्धे पृथग् द्रष्टव्याः यथा—

१। **उपधानिका**[१] नाम—वक्रदण्डाकृतिश्चतुरंगुलदीर्घ उत्सेधो धूसरवस्तु-भूयिष्ठो यस्त्रिपथगुहाया 'अधरशृङ्गपथ'-भूमिं भूम्ना रचयति (२१२ चित्रम्), सदन्तुरस्रोताया अन्तःप्रविष्टायाः परिधिना निर्मीयते। तस्या अग्रिमप्रान्तः स्थूलः पादाग्रवदाकृतिः द्वित्रांगुलियुतः 'उपधानिका-प्रपद' संज्ञः (११४ चित्रम्)। स्तम्भमूलिका[२] तु मस्तिष्कसेतुनिम्नस्थायाश्छत्रिकायाः पश्चिमस्तम्भिकाप्रान्तरूपा तनुमूलिका, या परावृत्य उपधानिकायाः क्रोडे तिष्ठति। तत्सम्बन्धश्छत्रिकावर्णने वर्णितपूर्वः।

२। **सिरामञ्जरिका**[३] नाम—सूक्ष्मसिराधमन्यंकुराचिता मञ्जरी या त्रिपथगुहान्तस्तुलसीमञ्जरीव विराजते (२१३।२१४ चित्रयोः)। सा नीशारिकाख्य-कलया गुहाभ्यन्तरीयसूक्ष्मतरकलान्तरेण च संवेष्टिता गुहान्तःस्थं ब्रह्मवारि पुष्णाति, नियमयति च तन्मात्रां रसादानप्रदानाभ्याम्। उभयोश्च सिरामञ्जरिकयोरन्तराले दृश्या गुहाबाह्या त्रिकोणपत्रिका तादृश्येव, सा ब्रह्मगुहायाः पिधानभूता **मञ्जरीपत्रिका**[४]-संज्ञा (प्रसङ्गादिहैवोक्ता)। साऽपि पूर्ववत् नीशारिकावृता तत्कर्मैव साधयति।

धमनीशाखास्तु एकैकस्यां सिरामञ्जर्य्यां मञ्जरीपत्रिकायाञ्च अन्तर्मातृकाख्य-धमन्या अग्रप्रशाखाप्रभवाः। सिराश्च तदनुवर्त्तिन्यः सर्वत्र, ताः क्रमशो मिलित्वा मस्तिष्कीयचरमसिरासु परिणमन्ति, प्रविशन्ति चान्ते दीर्घिकायोजन्यां सिरा सरिति—इति स्मर्त्तव्यम्।

३। **त्रिकोणवेदिका**[५] नाम—उपधानिकायाः पार्श्वे पश्चिमतश्चावस्थित-स्त्रिकोणप्राय उत्सेधः, यः सरलान्तराख्यसीताया अनुप्रवेशेन निष्पन्नः (२१७ चित्रम्)। तस्य पश्चिमप्रान्तः 'त्रिकोणपीठिका' नाम, सा त्रिपथगुहायाः पश्चिमाऽधरशृङ्गमाऽर्गयोर्मध्यस्था।

४। **राजिलपिण्ड**[६] नाम त्रिपथगुहायामग्रिमशृङ्गपथभूमौ तद्बहिश्च गुहा पार्श्वतो दृश्यं दीर्घप्रायं पिण्डम् (२१३।२१४।२१८ चित्रेषु)। तच्च शुभ्रधूसर-वस्तुनोर्मिश्रणविशेषाद् राजिबहुलमिति तथासंज्ञम्। तस्य द्वौ भागौ—गुहान्तरीय भागः—'शफरीकन्द' संज्ञः, गुहाबाह्यभागः—'शुक्तिकन्द' संज्ञश्चेति। तत्र—

---

१ Hippocampus. २ Fimbria Hippocampi. ३ Choroid Plexus of Veins. ४ Tela Choroidea. ५ Collatereal eminence. ६ Corpus Striatum.

[ २१७ चित्रम् ]

## वाम त्रिपथगुहाया अधर शृङ्गपथः ।

( पृथग् विदार्य्य दर्शितः )




(१) **शफरीकन्दः**[१] वक्रीकृततन्व्या शफर्य्या सदृशं पिण्डं मध्यरेखा-पार्श्वतस्त्रिपथगुहान्तर्दृश्यम् । तस्य शीर्षकमग्रिमशृङ्गपथभूमौ दृश्यं पुरस्तात् शुक्तिकन्दाग्रेण मिलितम् । पुच्छं तु पश्चिमत आज्ञाकन्दपार्श्वतो दृश्यं, विभक्तञ्च तस्माद् आन्तरकूर्चवल्लिकया । गुहान्तः पुनराज्ञाकन्द-शफरीकन्दयोर्विभागः 'सूत्रराजिका'ख्यशुभ्रसूत्रगुच्छिकया, सिरया च 'शैषिकी'संज्ञया ।

(२) **शुक्तिकन्दः**[२] पुनः त्रिपथगुहाबाह्यं पिण्डम् आज्ञा-शफरीकन्दयोः पार्श्वस्थम् । तच्च मस्तिष्कस्य अनुपार्श्वम् ऊर्द्ध्वाधश्छेदेन स्फुटं दृश्यते ( २१७ चित्रम् )—आकृत्याशुक्तिपुटप्रायम् । तस्यान्तरसीम्नि विभागः आज्ञा-शफर्याख्यकन्दद्वयादान्तरकूर्चवल्लिकया । बहिःसीम्नि विभागस्तु कन्दपत्रिकातो बाह्यकूर्चवल्लिकया । स्वयञ्चासौ विभज्यते त्रिषु पिण्डकेषु बाह्याभ्यन्तर-

१ Caudate Nucleus. २ Lentiform Nucleus.

मध्यस्थेषु। तत्र बाह्यं पिण्डकं शोणाभधूसरवस्तुप्रायं शुक्तिपीठ[1] संज्ञम्, इतरद्वयं तु शुभ्रसूत्रमयपत्रिकया किञ्चिद् विभक्तमपि साकल्येन शुक्तिगर्भसंज्ञम्[2]। सन्ति च त्रिष्वपि पिण्डेषु बहूनि शुभ्रसूक्ष्मसूत्राणि बहुबाहुककन्दाणुचयोत्थानि, तदनुप्रविष्टानि च। तेषां सम्बन्धो मस्तिष्कबहिःस्तरेण, मृणालकेन, आज्ञाकन्देन च सूक्ष्मचाक्षुषपरीक्षासंवेद्यः।

५। **कन्दपत्रिका**[3] नाम तन्वी धूसरवस्तुमयीपत्रिका बाह्यकूर्चबल्लिका-पार्श्वतो दृश्या मस्तिष्कस्यानुप्रस्थच्छेदेषु (२१८ चित्रम्)। सा प्रच्छन्न-पिण्डिकाया अंश एव पृथगभूत इति केचित्।

६। **आन्तरकूर्चबल्लिका**[4] नाम शुभ्रतनुसूत्रमयी कूर्चाकारा गुच्छिका या शफरीकन्द-शुक्तिकन्दयोरन्तराले प्रविष्टा। सा मस्तिष्कार्द्धस्यानुप्रस्थच्छेदे दृश्यते काण्डभग्नलतेव, अनुलम्बमूर्द्धाधश्छेदे तु अर्धमण्डलाकृतिः (२१८ चित्रम्)। तत्सूत्राणि च सूर्य्यकिरणवदर्धमण्डलाकृत्या पुरःपश्चादूर्द्ध्वञ्च विसरन्ति, तेन तेषां विसारिकिरणमण्डलमिति[5] संज्ञा साकल्येन (२१६ चित्रम्)।

अथास्या आन्तरकूर्चबल्लिकायास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्य्याय—अग्रिम-भागः, कोणभागः, पश्चिमभागश्चेति। तत्र अनुप्रस्थच्छेदे यत्र काण्डभग्नत्वं, स कोणभागः। तस्य पुरस्तादग्रिमभागः, पश्चात् पश्चिमभागः।

अत्रैतत् स्मर्त्तव्यम्—

(क) अग्रिमभागीयसूत्राणि—चतुर्विधानि (१) कानिचिद् आज्ञा-कन्दादुत्थाय मस्तिष्काग्रिमपिण्डप्रसृतानि, (२) कानिचित् शुक्तिकन्द-शफरीकन्दयोः संयोजकानि (३) अपराणि ताभ्यामेव कन्दाभ्यामुत्थाय मस्तिष्कबहिःस्तरेषु प्रसृतानि, (४) अन्यानि अधोमुखानि मस्तिष्कमृणालक-मार्गेण उष्णीषकपुरोभागान्तः प्रविष्टानि।

(ख) कोणभागीयसूत्राणि मस्तिष्कबहिःस्तरीय चेष्टाप्रद क्षेत्रेभ्यः सम्भूया-ऽधस्तात् मस्तिष्कमृणालकमार्गेण प्रसरन्ति, प्रविशन्ति च वेणीबन्धक्रमेण परस्परमुल्लंघ्य चेष्टाप्रदशीर्षण्यनाडीनांकन्दिकासु।

---

१ Putamen. २ Globus Pallidus. ३ Claustrum. ४ Internal Capsule. ५ Corona Radiata.

[ २१८ चित्रम् ]

# मस्तिष्कगोलार्द्धस्य गभीर-पूर्वापरच्छेदः ।

( व्यतिकरज्ञानाय प्रदर्शितः । )




( पश्चिमप्रान्तः )

१—सेतुजानु । २—अग्रिम शृङ्गपथः । ३—शफरीकन्दः । ४—काचपत्रिका ५—आन्तरकूर्चवल्लिका (अग्रिमांशः)। ६—छत्रिकास्तम्भिका (कर्त्तितांशः)। ७—आन्तर-कूर्चवल्लिका ( कोणभागः ) । ८—शुक्तिपीठम् । ९—शुक्तिगर्भः । १०—आन्तरकूर्चवल्लिका ( पश्चिमांशः ) । ११—आज्ञाकन्दः । १२—शफरीकन्दपुच्छम् । १३—उपधानिका । १४—अधरशृङ्गपथः । १५—पश्चिमशृङ्गपथः । १६—आज्ञाकन्दोत्थ-पश्चिमाभिमुख सूत्राणि । १७—गर्भपिंडिका । १८—कन्दपत्रिका । १९—वाह्या कूर्चवल्लिका ।

[ २१६ चित्रम् ]

## मस्तिष्कपार्श्वभागस्य ऊर्ध्वाधश्छेदः ।

( व्यवच्छेदविशेषसहितः )




१—शलभिकातुन्दम् । २—मुकुलिका ।

( ग ) पश्चिमभागस्य तु अग्रिमतृतीयांशद्वयस्थानि सूत्राणि सौषुम्निक-नाड़ीमूलतन्तुमयानि । तानि मस्तिष्कबहिःस्तरीय चेष्टाप्रदक्षेत्रेभ्यः सम्भूय, मृणालक-मध्यदेशाश्रयेण अधःप्रसृत्य, क्रमात् सुषुम्नाशीर्षकस्थां मुकुलिकां प्रविशन्ति, तथा प्रविष्टानि चाग्रे वेणीवन्धं विधाय निम्नतः सुषुम्नाकाण्डे प्रसरन्ति निखिलाङ्गप्रत्यङ्ग-चेष्टावेगवहनाय । पश्चिमतृतीयांशगतानां तु सूत्राणां मध्ये कानिचिदाज्ञा-कन्दोत्थितानि मध्यवल्लिकाऽगतानि वा, तानि साधारणसंज्ञावहानि । अपराणि दृष्टिश्रुतिसंज्ञावहानि, निम्नस्थेभ्यस्तत्तन्नाड़ीकेन्द्रेभ्यः सम्भूय मस्तिष्कस्य पश्चिम-शंखिकपिण्डयोर्यथाक्रमं प्रविष्टानि । अन्यानि तयोरेव पिण्डयोर्बहिःस्तरेभ्यः सम्भूय अधस्तात् मृणालकाश्रयेण गत्वा उष्णीषकान्तःकन्दिकासु प्रविशन्ति । सोऽयं सूक्ष्मचाक्षुषपरीक्षाकुशलानां शारीरक्रियाविदाञ्च निर्णयः ।

इदञ्चात्र विशेषेणावधेयम्। 'मस्तिष्कमूलिक-धमनीचक्र'सम्भवानां मस्तिष्क-पोषणीनां शाखाधमनीनां मध्ये 'मध्यमा मस्तिष्कानुगा' नाम धमनी (अन्तर्मातृकोत्था) स्वप्रशाखाभिः राजिलपिण्डं प्रविष्टा। तस्या वार्द्धकादिहेतोर्भंगुरत्वाद् यदा आन्तरकूर्चवल्लिकान्त स्तदुपकण्ठे वा तद्भङ्गकृतो * रक्तस्रावः, तदा सन्न्यासः पक्षवधश्च वामदक्षिणपार्श्वविपर्य्ययेण। वामतो रक्तस्रावे तु वाक्शक्तिलोपश्च, तत्क्षेत्रस्य सान्निध्यात्।

७। **बाह्य कूर्चवल्लिका**[1] नाम शुभ्रसूत्रमयी तनुगुच्छिका २१८ चित्रम्, शुक्तिकन्दस्य बहिःपार्श्वस्था शुक्तिकन्द-कन्दपत्रिकान्तराले दृश्या मस्तिष्कानु-प्रस्थच्छेदेषु दृश्या। सा शुक्तिकन्दस्य पश्चादधश्च आन्तरकूर्चवल्लिकया मिलिता। तत्सूत्राणि प्रायेण आज्ञाकन्दोत्थानि।

८। **सूत्रराजिका**[2] नाम तनुशुभ्रसूत्रगुच्छिका या त्रिपथगुहान्तस्त्रै-पथिकदेशे आज्ञाकन्द-शफरीकन्दयोरन्तराले दृश्या ( २१३।२१४ चित्रयोः )। तस्याः सूत्राणि पुरस्तात् छत्रिकाग्रिमस्तम्भिकाम् अग्रिमसेतुयोजनिकाञ्च समुल्लंघ्य शफरीकन्दान्तः प्रसरन्ति। पश्चिमतस्तु तेषामधरश्रृङ्गिकमार्गपटले प्रवेशः।

अथ मस्तिष्कमूलपिण्डम्।

**मस्तिष्कमूलपिण्डं**[3] नाम मस्तिष्कमूलभागान्तर्निगूढं युग्मपिण्डं यन्मध्यरेखामुभयतः स्थिताभ्यामाज्ञाकन्दाभ्यां सानुबन्धाभ्यां निर्मितम्। मध्ये चानयोर्दृश्या तन्वी गुहा त्रिकोणाकृति **ब्रह्मगुहा**[4] नाम। तदन्तश्च परमशिव-स्थानमामनन्ति षट्चक्रविदः। आज्ञाकन्दद्वयरचितदलयुगमाज्ञाचक्रं च मनसो-ऽधिष्ठानमाहुः। तत्तत् सूक्ष्मस्वरूपन्तु योगिजनध्यानगम्यम्। तदेतदखिलं षट्चक्रवर्णनीयाध्याये विशेषतः प्रतिपादयिष्यामः। तत्र—

**आज्ञाकन्दौ**[4] नाम वायसाण्डसदृशौ ( पनसबीजाकारौ वा ) धूसरवस्तु-भूयिष्ठौ कन्दौ ब्रह्मगुहामुभयतो वर्त्तेते। तयोरेकैकस्य दैर्घ्यं द्व्यंगुलमानं, द्वौ च प्रान्तौ पूर्वापरसंज्ञौ, चत्वारि च तलानि उत्तराधर-मध्यानुग-पार्श्वानुग भेदात्। तत्र पूर्वप्रान्तः स्वल्पायतो मध्यरेखानुगः, 'गुहान्तरालिक'-च्छिद्रतः पश्चिमः। पश्चिमप्रान्तः स्थूलायतः पार्श्व-पश्चिमाभिगः उत्तरकलायिकाद्वयोपरिष्टादालम्बते

---

* धमनीत्रुटनं च शरीरे रक्ताधिक्यादि हेतोः ( through high Blood-pressure ) यथा भवति, तद् गुरुसकाशे सम्यग् वेदितव्यम्।

१ External Capsule. २ Stria Terminalis. ३ The Basal Ganglia with 3rd Ventricle. ४ Third Ventricle. ५ Thalamus.

स्तोकेन। तस्य मध्यानुगभागः स्थूलोन्नतालिकः 'उत्तराधिपीठिका'नुबन्धी 'दृष्टिपीठ' संज्ञः, तदधश्च दृश्या 'अधराधिपीठिका' उत्तरवृन्तिकया पृथक् कृता।

[ २२० चित्रम् ]

## समग्रमस्तिष्कस्य गम्भीरतमानुप्रस्थच्छेदः।

( विशिष्टव्यवच्छेद समन्वितः )




उत्तरतलन्तु एकैकस्य आज्ञाकन्दस्य स्तोकेन कूर्मपृष्ठाकारं शुभ्रवस्तुमय्या पत्रिकया 'कन्दास्तरणी'[१] संज्ञया संवृतम्। आज्ञाकन्द-शफरीकन्दयोरन्तराले च तत्रैव दृश्या 'सूत्रराजिका', 'शैषिकी' सिरा च, ते वर्णितपूर्वे। विभागश्चात्र उत्तरतलस्य तनुतिरश्चोनसीतिकया – मध्यानुग-पार्श्वानुगभागयोर्द्वयोः। तत्र मध्यानुगभागः 'मञ्जरीपत्रिका'ख्यया ब्रह्मगुहापिधानिकयाच्छाद्यते। पार्श्वानुगभागस्तु त्रिपथगुहायाः त्रैपथिकभागस्य भूमिमंशतो रचयतीत्युक्तपूर्वम्।

१ Stratum Zonale.

अधरतलं पुनरेकैकस्य आज्ञाकन्दस्य—मस्तिष्कमृणालीय-'कुथवितान'मधितिष्ठति तेनैव सानुबन्धम्, मृणालकसूत्राणां तदनुप्रवेशात्।

सन्ति च तदधस्तात् 'कन्दाधरिक' देशे कानिचित् कन्दाणुकानि स्वतन्त्रनाड़ीतन्त्र केन्द्रभूतानि। निद्राकेन्द्रमपि तत्रैवेति केचित्।

मध्यानुगतलन्तु—ब्रह्मगुहायाः पार्श्वप्राचीरभूतमेकैकतः। मध्ये च कन्दयोः सेतुवदास्तृता तन्वी धूसरपत्रिका पुरस्ताद् 'अग्रिमयोजनिका' नाम। तत्पुरस्तादेकैकतः सूक्ष्मविवरं 'गुहान्तरालिक' संज्ञम् ( २१६ चित्रम् ), तद् द्वारीकृत्य ब्रह्मगुहायाः संयोगस्त्रिपथगुहाभ्याम्।

पार्श्वानुगतलं पुनरान्तरकूर्चवल्लिकायाः पश्चिमांशेन संसज्यते। विभज्यते च तेनैवाऽज्ञाकन्दः शुक्तिकन्दात्।

**निर्माणं** पुनराज्ञाकन्दयोर्धूसरवस्तुनैव भूम्ना शुभ्रवस्तुगर्भितेन। तत्र धूसरवस्तु केन्द्राणुकभूमिभूतम्। शुभ्रवस्तुनि दृश्यानि सुबहूनि सूक्ष्म शुभ्र-सूत्राणि तत्प्रविष्टानि तत्प्रभवाणि च। दृश्यते च बहिरपि उत्तरतलाच्छादि शुभ्रवस्तु 'कन्दास्तरणी' संज्ञमित्युक्तपूर्वम्।

बोधसौकर्य्याय पुनर्द्वेधाविभागमुपदिशन्ति एकैकस्याज्ञाकन्दस्य तत्त्वविदः। यथा—

१। **पार्श्विकभागः**[1] **'केन्द्राकरभूमि'**र्नाम। तत्र हि प्रविशन्ति संज्ञावहसूत्राणि सुषुम्नाकाण्डप्रभवाणि पश्चिममस्तुलुङ्गोत्थानि च। तत्रत्यकन्दाणुकानि परितश्च प्रसरन्ति प्रायेण कृत्स्नश एव मध्यवल्लिकासूत्राणि चरमप्रतानाश्च घ्राण-दृष्टिनाड्योः सूत्राणाम्। तामेव च भूमिमभिविशन्ति धम्मिल्लकप्रभवाणि, शोणकन्दिकोत्थानि, मस्तिष्कबहिःस्तरजानि च (कानिचित्) सूत्राणि। राजिलवस्तु सम्भवानामपि कतिचित् सूत्राणां तत्रैव प्रवेशः।

प्रसरन्ति च तत्रत्यकन्दाणुकेभ्यः सम्भूतानि सूत्राणि सूर्य्यादिव किरणानि सर्वतो मस्तिष्कबहिःस्तरेषु—विशेषतश्च मध्यान्तराख्यसीतायाः पुरःस्थितेषु 'चेष्टाधिष्ठान' क्षेत्रेषु। तानि हि मनस आज्ञावहदूतवत् करचरणादिसञ्चालनक्रियाणां समुत्तेजकानि।

---

१। Lateral Nucleus.

अथैतानि चतुर्धा सम्पतन्ति एकैकार्धे मस्तिष्कस्य । यथा—

(१) अग्रिमसूत्रगुच्छानि—आन्तरकूर्चवल्लिकाया अग्रिमांशमाश्रित्य मस्तिष्क-पुरःपिण्डं प्रविशन्ति ।

(२) पश्चिमसूत्रगुच्छानि—आज्ञाकन्दस्य दृष्टिपीठाख्यपश्चिमांशात् उत्तरा-धिपीठिकायाश्च सम्भूय आन्तरकूर्चवल्लिकायाः पश्चिमभागाश्रयेण मस्तिष्क-पश्चिम पिण्डमभिविशन्ति ।

(३) अधरसूत्रगुच्छानि—आज्ञाकन्दस्याऽधरान्तरीयभागप्रभवाणि, तान्यधस्तात् शुक्तिकन्दमतिक्रम्य शंखिकपिण्डं प्रच्छन्नपिण्डिकां च प्रविशन्ति ।

(४) पार्श्विकसूत्रगुच्छानि—आज्ञाकन्दस्य पार्श्विकभागप्रभवाणि, तानि पार्श्विकपिण्डं प्रविष्टानि, राजिलपिण्डश्च कैश्चन सूत्रैः ।

२। **अग्रिमान्तरीय भागः**[१]—'**संवेदनभूमि**'र्नाम । तत्र हि प्रविशन्ति पार्श्विकभागभवाणि मध्यवल्लिकाभवानि च सूत्राणि, प्रतानाश्च घ्राणनाड़ी-सूत्राणाम् । तत्प्रभवसूत्राणान्तु राजिलपिण्डान्तः प्रवेशः । तच्चेदं सुख-दुःखादि-संवेदन स्थानमिति तत्त्वविदां सिद्धान्तः ।

## अथ ब्रह्मगुहा ।

**ब्रह्मगुहा**[२] **ब्रह्मयोनिर्वा**नाम आज्ञाकन्दयोरन्तराले मध्यरेखायां दृश्या गुहा तनुत्रिकोणपरिखाकारा ( २२० चित्रम् ) सूचितपूर्वा । सा च गुहायाः पुरस्तादूर्द्ध्वं त्रिपथगुहाभ्यां सम्बन्धवती 'गुहान्तरालिक' विवर द्वारेण, पश्चिमतश्च प्राणगुहया 'ब्रह्मद्वारसुरङ्गा' मार्गेण ( २१६ चित्रम् )। तदेव क्वचिद् 'ब्रह्महृदय' मिति 'हृदय'-मिति वा व्याहरन्ति प्राज्ञाः । तदन्तश्च दृश्यास्तिस्रः सेतवः—अग्रिमयोजनिका, मध्यपत्रिका, पश्चिमयोजनिका चेति । तत्र—

अग्रिमयोजनिका[३] राजिलवस्तुनोः संयोगविधायिनी शुभ्रवस्तुमयी । तद्-योजकसूत्राणि च शंखिकपिण्डयोः प्रसृतानि इतरपार्श्वीयघ्राणनाड़ीसूत्रैः ।

मध्यपत्रिका[४] ( मध्ययोजनिका वा ) नाम धूसरवस्तुमयी तन्वी पत्रिका आज्ञा-कन्दयोः संयोगविधायिनी । तस्यां च वेणीवन्धक्रमेण प्रसृतानि मध्यममस्तुलुङ्ग-प्रसूतानि कतिचित् सूत्राणि । सेयं 'ब्रह्मविन्दु'-संज्ञा योगिनामिति केचित् ।

---

१। Antero-medial part of Thalamus ( Essential organ ). २। Third Ventricle. ३। Anterior commissure. ४। Massa Intermedia.

पश्चिमयोजनिका[1] तु—शुभ्रवस्तुमयी ब्रह्मगुहायाः पश्चिमसीमस्था ( २१४ चित्रम् )।

एष च ब्रह्मगुहायाः षट्सीमनिर्देशः—

पटलं[2] हि ब्रह्मगुहायास्तत्पिधानिका 'मञ्जरीपत्रिका' नाम। तदुपरिष्टात् छत्रिकायास्त्रिकोणाकृतिरंशः 'छत्रपत्रिका' संज्ञः ( २१३।२१४ चित्रयोः )। तौ चोक्तपूर्वौ।

भूमिन्तु तस्या रचयन्ति—मस्तिष्कमृणालकद्वयान्तरालस्था सुषिरपत्रिका ( पश्चिमाख्या ), चूचुकाख्यं वर्त्तलद्वयं, पोषणकग्रन्थिः सवृन्तिकः, दृष्टिनाडीयोजनिका चेति विशेषाः। तेषां 'कन्दाधरिकभाग'[3] इति संज्ञा (१९९ चित्रम्)।

पुरस्ताद् ब्रह्मगुहाया द्वयो छत्रिकास्तम्भिके अग्रिमाख्ये।

पश्चात् पुनः—मूलत्रिकोणं सभित्तिकं, तृतीय दृक्कन्दिका, पश्चिमयोजनिका, ब्रह्मद्वारसुरङ्गामुखं च।

उभयोस्तु पार्श्वयोः आज्ञाकन्दद्वयं, मूलद्वयी च तृतीयदृक्कन्दिकायाः।

अभ्यन्तरं तु ब्रह्मगुहायाः सुमसृणं ब्रह्मवारिपूर्णञ्च। तन्मध्यस्थं चाकाशं 'ब्रह्मविन्दु'-प्रदेशं वा परमशिवस्थानमामनन्ति योगिनः। ब्रह्मवारि तु तदन्तःस्थं त्रिपथगुहान्तरीय-ब्रह्मवारिणा 'गुहान्तरालिक' छिद्राभ्यां, प्राणगुहान्तःस्थब्रह्मवारिणा च ब्रह्मद्वार-सुरङ्गामार्गेण समन्वेति। सुषुम्नाकाण्डान्तरीय 'ब्रह्ममार्ग'स्थं वार्य्यपि तदनुवन्धि। अतएवास्य 'मस्तिष्क सुषुम्नान्तरीयजल'[4]मिति संज्ञा। तच्च यदा रोगवशात् परिमाणतः प्रवृद्धं पूयादिदुष्टं वा ज्वर-मोहादिप्रदं भवति, तदांऽशेन निर्हरन्ति कटि-कशेरुकान्तरालमाविध्य पृष्ठतः सूचीयन्त्रेण शल्यतान्त्रिकाः।

## अथ मूलपिण्डानुबन्धाः।

**अनुबन्धास्तु** मस्तिष्कमूलपिण्डस्योद्दिष्टपूर्वाः। ते शिष्यबुद्धिसौकर्य्याय आज्ञाकन्दव्यतिकरेण उत्तराधरिकभागयोर्विभज्य वर्ण्यन्ते। तत्र कन्दोत्तरिकभागे त्रीणि द्रष्टव्यानि—सभित्तिकं मूलत्रिकोणं, तृतीयदृक्कन्दिका, पश्चिमयोजनिका च। कन्दाधरिकभागे च त्रीणि—चूचुकवर्त्तुलके, पोषणकग्रन्थिः सवृन्तिकः, दृष्टिनाड़ीयोजनिका चेति। विशेषास्तु यथा—

---

१। Posterior Commissure. २। पटलं छदिः ( Roof ). ३। Sub-thalamic region. ४। Cerebro-spinal fluid.

**मूलत्रिकोणं**[१] नाम (२२०।२२१ चित्रयोः)—आज्ञाकन्दयोरन्तराले पश्चिमतो दृश्यो योनिपीठसदृशो भागो ब्रह्मगुहाया मूलभूतः। तत्र च दृश्या सूक्ष्मत्रिकोणाकारा धूसरपत्रिका मूलत्रिकोणभित्तिका[२] नाम। तत्प्रभवाणां सूत्राणां शोणकन्दिकाभ्यां सम्बन्धः, तृतीयदृक्कन्दिकाभ्यां च (२२० चित्रम्)।

**तृतीयदृक्कन्दिका**[३] नाम—उत्तरकलायिकाद्वयस्य पुरस्तान्मध्ये दृश्या कन्दिका चणकाकारा (२२०।२२१ चित्रयोः), यां योगिनस्तृतीयदृगुन्मेष क्षेत्र मित्युपदिशन्ति। तस्या मूलद्वयं ब्रह्मगुहामुभयतः पुरःप्रसृतं छत्रिकाया अग्रिम-स्तम्भिकाभ्यां[४] सम्बध्यते।

**पश्चिमयोजनिका**[४] तु मूलत्रिकोणोत्सङ्गस्था शुभ्रवस्तुमयी तनुपत्रिका आज्ञाकन्दयोरन्तरालस्था पश्चिमतः (२२१ चित्रम्)।

तदेतत्त्रयमाज्ञाकन्दयोरुपरिष्टादवतिष्ठमानं 'कन्दोत्तरिक-भाग'[५] संज्ञम्।

**चूचुकवर्त्तुलके**[६] नाम (१९९ चित्रम्)—चूचुकाकारे लघुवर्त्तुलके मस्तुलुङ्गाधस्ताद् मस्तिष्कमृणालकयोरन्तरालस्थे शुभ्रवस्तुसंवृत-धूसरवस्तुमये। तत्र शुभ्रवस्तु कतिचित्सूक्ष्मसूत्रैश्छत्रिकास्तम्भिकाऽग्रतैर्निर्मितं प्रायेण। धूसर-वस्तु पुनर्नाड़ीकन्दिकाभिरारचितम्, ताभ्यश्च प्रसरन्ति नाडीसूत्राण्यूर्द्ध्वमधश्च।

**पोषणकग्रन्थिः**[७] (पोषणिका वा) नाम—चटकाण्डसमाकृतिर्लघुग्रन्थिः (२०६ चित्रम्) सर्वधातुपोषणार्थं निगूढान्तररसस्रावी, यो मस्तिष्कमूलपिण्डा-धस्ताद् जतूकास्थिपृष्ठस्थं 'पोषणकखात'मधितिष्ठति। स 'वराशिका'ख्य मस्तिष्क-वाह्यवृत्या संवृतः। शिरसि चास्य दृश्या सविवरा वृन्तिका 'पोषणक-वृन्तिका'[८] संज्ञा (१९९।२०६ चित्रयोः)।

अस्य च त्रयो भागाः पृथग् विभज्यन्ते—अग्रिमभागो मध्यभागः पश्चिम-भागश्चेति। तत्राद्यः अञ्जलिवत् कोरोदरः, मध्यभागस्तनुपत्रिकाकारः, पश्चिमभागो लघुद्राक्षाफलवद् वर्त्तुलप्रायः। वृन्तिका तु पश्चिमभागेनैव भूम्ना संबद्धा ब्रह्मगुहाभूमिमारचयति दृष्टिनाड़ीयोजनिकान्तं सङ्गता। सम्यग् विदार्य्य परीक्षितञ्च तदभ्यन्तरं पिच्छिलवस्तुगर्भान् कोषान् प्रकटीकरोति, तेभ्यश्च कोषेभ्यः

१। Trigonum Habenulæ. २। Meynert's bundle. ३। Pineal body. ४। Posterior Commissure. ५। Epithalamus. ६। Mammilary bodies. ७। Pitnitary body. ८। Tuber Cinerium.

[ २२१ चित्रम् ]

## मस्तिष्कमूलपिण्डम् ।

[ आच्छादक भागापसारणेन स्पष्टीकृतम् ]

पश्चिम-मस्तुलुङ्गपिण्डमपीह व्यतिकरज्ञानाय दर्शितम्




**चित्रव्याख्या**—१—त्रिपथगुहाया अग्रिमशृङ्ग पथः। २—छत्रिकाया अग्रिमस्तम्भिके कर्त्तितमूले। ४ ( चित्रान्तः )—चतुर्थशीर्षण्यनाड्या मूलद्वयम्। ७।८ ( चित्रान्तः )—सप्तमाष्टम शीर्षण्य-नाड्योर्मूलद्वयम्। ५।६।१२।१३—कलायिका चतुष्टयम्। ९—धम्मिल्लकस्य अधरवृन्तिका। १०—तस्या एव चरमांशः। ११।१६—सुषुम्नाशीर्षकस्य 'लवली' द्वयम्। १५—वेणीबन्धाख्य स्थानम् ( सुषुम्नाशीर्षकस्य )। सु० शी०—सुषुम्नाशीर्षकम्, तद्विशेषास्तु नेह दर्शिताः, अप्रासङ्गिकत्वात्। तद्विवरणं १९७।१९८ चित्रयोर्द्रष्टव्यम्।

स्रवति सूक्ष्मो रसः सुधासदृशः। तस्य सूक्ष्मैः सिराजालकैः शोणितस्रोतसि प्रवेशः सर्वधातुपोषणाय। अतएवास्य 'सुधास्राावि सोममण्डल' मिति योगिनां व्यपदेशः। प्राचाम् 'ओजः' संज्ञः पदार्थश्च स एव प्रतिभाति।

**दृष्टिनाड़ीयोजनिका**[1] नाम—नेत्रगोलकमूलोत्थयोर्नाडीसूत्रसम्मेलक-निष्पन्नयोर्दृष्टिनाड्योः संयोजनश्चतुर्भुजोऽवयवो मस्तिष्काधस्तले दृश्यः (२०६ चित्रम्)। स पोषणकग्रन्थेः पुरस्तात् जतूकास्थ्नो दृष्टिनाड़ीपरिखामधितिष्ठति। तस्याग्रिमौ भुजौ दृष्टिनाड्यौ, पश्चिमौ भुजौ दृष्टिनाड़ीमूलिके, शरीरन्तु अर्धांगुलायतो योजकभागः।

दृष्टिनाड़ीतन्तवः पुनः सरलकुटिलनानापथजुषः प्रसरन्ति दृष्टिनाड़ीयोजनिका-मार्गेण। तेषां गति-संयोगादिवैचित्र्यं दृष्टिनाड़ीवर्णने वक्ष्यते।

तदेत्तयं 'कन्दाधरिकभाग'[2] संज्ञम्। एतावता च मस्तिष्कमूलपिण्डं सानुबन्धं संक्षेपेण व्याख्यातम्। विस्तरस्त्वाकरेषु मृग्यः।

इति षष्ठोऽध्यायः।

## अथ सप्तमोऽध्यायः।

अथातो नाड़ीतन्त्रवस्तुनिर्माणविज्ञानीयमध्यायं व्याख्यास्यामः।

मस्तुलुङ्गपिण्डं हि वर्णनासौकर्य्याय गर्भव्याकरणक्रमेण त्रिभागविभक्तं वर्णितचरम् सह सुषुम्नाकाण्डेन। तदन्तःस्थ वस्तुविभाग विशेषा इहानुव्याख्येयाः, तद्व्यतिकर-प्रयोजनयोर्विज्ञानाय। ते च सूक्ष्मचाक्षुषपरीक्षावेद्याः।

### अथ धूसरवस्तुविवेकः।

मस्तिष्कनिर्माणं वहिर्धूसरवस्तुना, अन्तश्च शुभ्रवस्तुना, अन्यत्र मूलकन्दादि-भागेभ्यः—इत्यवोचाम। तत्र वाह्यं धूसरवस्तु मस्तुलुङ्ग वहिःस्तरेषु दृश्यम्, आभ्यन्तरं पुनर्मूलकन्दादिषु।

धम्मिल्लक निर्म्माणं पुनरितरविलक्षणं वर्णितचरमग्रे विशदीकरणीयम्।

तत्र मस्तिष्क वहिःस्तरः सामान्यतः पञ्चसु स्तरिकासु विभज्यते। तासां च कन्दाणुकवाहुल्ये सति "कन्दाणुस्तरिका" इति, तन्तुवाहुल्ये तु "तन्तुस्तरिका" इति विभागः, व्यपदेशश्च प्राधान्येन (२२२ चित्रम्)। तद्यथा—

---

१। Optic chiasma. २। Hypothalamus.

[ २२२ चित्रम् ]

## मस्तुलुङ्ग बहिःस्तरस्य पञ्चस्तरिका विभागः।

( सूक्ष्म-चाक्षुष परीक्षाद्वश्यः )




**चित्रव्याख्या**—१ बाह्या तन्तुस्तरिका। २ बाह्या कन्दाणुस्तरिका। ३ ताराणुस्तरिका। ४ आभ्यन्तरी तन्तुस्तरिका। ५ आभ्यन्तरी कन्दाणुस्तरिका।

**क—ख—ग**—इति स्तरिकाणां रञ्जक वस्तुविशेष योगतो दृश्यानि पृथग्रूपाणि। वास्तवभेदस्तु नास्त्येव। तत्र 'क' चिह्नित चित्रांशे 'करीर' कन्दाणुकानां स्फुटता, 'ग' चिह्नित चित्रांशे सूत्राणाम्। 'ख' चिह्नित चित्रांशे उभयोरपि।

(१) बाह्या तन्तुस्तरिका[१] नाम—प्रथमस्तरिका सूत्रजालबहुला। तत्र दृश्यन्ते लूताणुकानुविद्धं क्षेत्रवस्तु, सवृतिकाऽतिसूक्ष्मनाड़ीसूत्राणि चास्तरणवत् प्रसृतानि, प्रान्तभागाश्च बहिर्विसारिणामूर्णातन्तूनाम् । सन्ति च तत्र बहूनि द्विबाहुक-कन्दाणुकानि तदन्तरालेषु ।

अस्याश्च स्तरिकायाः स्थूलता नृणां बुद्धिवैशेष्यक्रमेणाऽल्पीयस्यधिका वा भवतीति परीक्षकानां सिद्धान्तः ।

(२) बाह्या कन्दाणुस्तरिका[२] नाम—द्वितीयस्तरिका करीराकृति त्रिकोणकन्दा-णुकभूयिष्ठा। तच्छीर्षोत्थिता ऊर्णातन्तवः प्रथमस्तराभिगाः। तलोत्थितास्तु तन्तवो दीर्घाः, अक्षतन्तुभूताः, मस्तिष्कमूलपिण्डाभिगामिनश्च। सेयं स्तरिका तीक्ष्णधियामेव विशेषतः स्फुटीभवति ।

(३) ताराणुकस्तरिका[३] नाम—तृतीयस्तरिका ( मध्यमा वा ) तारकाकृति-कन्दाणुकभूयिष्ठा। सेयं स्तरिका "विषय-बोधाधिष्ठान" क्षेत्रेषु विशेषतः स्फुटी-भवति।

(४) आभ्यन्तरी तन्तुस्तरिका[४] नाम—चतुर्थी स्तरिका करीराकृतिभिर्बृहत्तर-कन्दाणुकैर्व्याप्ता। तच्छीर्षोत्थिता लघुतन्तवस्तु प्रथमस्तरीयतन्तुजालाभिमुखा-स्तत्प्रवेशिनश्च। अपरे च तन्तवस्तत्रैवाऽस्तरणवत् प्रसृताः। सेयं स्तरिका मध्यान्तराख्य सीतायाः पुरस्तात् 'चेष्टाधिष्ठान' क्षेत्रेषु स्फुटतमा भवति ।

(५) आभ्यन्तरी कन्दाणुस्तरिका[५] नाम पञ्चमी स्तरिका नानाविधाकृतिसूक्ष्म-कन्दाणुकैरनुविद्धा येषां स्थूला लघुतन्तवो बहिर्विसारिणोऽपि प्रथमस्तरान्तं न प्रसरन्ति, दीर्घा अक्षतन्तवस्तु प्रायेणाधःस्थ शुभ्रवस्तु प्रवेशिनः। सेयं स्तरिका 'प्राणयात्रिक'[६] यन्त्रतन्त्रैः सम्बन्धवती विशेषेणेति परीक्षकाः ।

तासाञ्च सर्वासां स्तरिकाणां मस्तिष्कीयक्षेत्रविशेषेषु तनुस्थूलत्वादिवैचित्र्यं प्रयोजनवशाद् भवतीति स्मर्त्तव्यम् । क्षेत्रविशेषाश्चाग्रे व्याख्येयाः ।

---

१। Outer fibre lamina. २। Outer cell-lamina ( Pyramidal cells ). ३। Middle ( granular ) cell-lamina. ४। Inner fibre-lamina. ५। Inner ( polymorphic ) cell-lamina. ६। यथा संज्ञाधिष्ठानक्षेत्रेषु ताराणुकानां बाहुल्यम्, चेष्टाधिष्ठानक्षेत्रेषु तु करीराकृति कन्दाणुकानाम्।

अथ शुभ्रवस्तुविवेकः।

शुभ्रवस्तु तावदिह मस्तुलुङ्गान्तर्दृश्यते प्राचुर्य्येण वहुधा विन्यस्तम्। निर्दिष्टाश्च नानाविधा नाडीसूत्रसंघाताः प्रसङ्गतो मस्तुलुङ्गवर्णनेषु। इह तु विचार्य्यन्ते तद्विभागाः।

तानि तानि हि नाडीसूत्राणि कार्य्यविभागात्त्रेधा विभज्यन्ते—**विसारिसूत्राणि, सयुजसूत्राणि, सेतुसूत्राणि** चेति। तत्र—

१। **विसारिसूत्राणि**[1] मस्तिष्कवहिःस्तराणामनुमस्तिष्कस्य च इतरमस्तुलुङ्गांशैः, सुषुम्नाकाण्डेन च, संयोजनानि। तानि गतिमार्गभेदाद् द्वेधा निपतन्ति—अवरोहिसूत्राणि,[2] आरोहिसूत्राणि[3] चेति।

अथ अवरोहिसूत्राणि।

**अवरोहिसूत्राणि** द्विविधानि—मस्तिष्कप्रभवाणि, धम्मिल्लकप्रभवाणि चेति। तत्राद्यानि चेष्टावेगवहानि प्रायः, अपराणि चेष्टासंयमन-वेगवहानि। तत्र—

(१) **मस्तिष्कप्रभवाणि** मस्तिष्कवहिःस्तरेभ्यः सम्भवन्ति, तानि त्रेधा विभज्यन्ते—चेष्टावर्त्मगानि, उष्णीषकाभिगानि, आज्ञाकन्दाभिगानि चेति। तत्र—

(क) चेष्टावर्त्मगानि[4] सूत्राणि—चेष्टाधिष्ठानक्षेत्रेभ्यः सम्भूय आन्तरकूर्चवल्लिकायाः 'कोण' भागं, पश्चिमभागस्याऽग्रिमतृतीयांशद्वयञ्चाधिकृत्य नीचैः प्रसरन्ति (२२३ चित्रम्)। तत्र कोणभागीयसूत्राणां समाप्तिः चेष्टावहशीर्षण्यनाडीनां कन्दाणुकानि परितः सूक्ष्मैः प्रतानैः मस्तुलुङ्गान्तरेव वेणीवन्धेन। अन्येषान्तु अधःप्रसृतानां सुषुम्नाशीर्षकान्तः वेणीवन्धेन मुकुलिकादेशेषु भूम्ना, ऋजुगत्या सुषुम्नाकाण्डान्त र्वा। तेषाञ्च मुकुलिकाख्यतन्त्रीचतुष्टयाश्रयेण प्रसृतानामग्रिमशृङ्गीय केन्द्राणुकान्यभितः समाप्तिः प्रतनुभिः प्रतानैः। तद्विवरण विस्तरमग्रे वक्ष्यामः।

(ख) उष्णीषकाभिगानि[5] सूत्राणि तु अग्रिम-पार्श्विक मस्तिष्कपिण्डाभ्यां सम्भूय उष्णीषकान्तरीयकन्दिकानां केन्द्राणुकानि परितः समाप्यन्ते प्रतनुभिः प्रतानैः। तेभ्यश्च केन्द्राणुभ्यः समुद्गतास्तत्सम्बन्धिनोऽक्षतन्तवस्तत्रैव वेणीवन्धं विधाय धम्मिल्लकान्तः प्रविशन्ति तन्मध्यमवृन्तिकाभ्याम्।

---

१ Radiating fibres (Corona Radiata) २ Descending fibres. ३ Ascending fibres. ४ Motor nerve fibres. ५ Fibres to the Pons.

१२

(ग) आज्ञाकन्दाभिगानि[1] पुनः सूत्राणि मस्तिष्कवहिःस्तरेभ्य उत्थाय आज्ञाकन्दान्तरीयकेन्द्राणुकानि परितः समाप्यन्ते। तेभ्यश्चोत्थितानि तत्सम्बन्धीनि भूयांसि सूत्राणि मस्तिष्क मृणालकान्तः 'शोणकन्दिका' द्वयं स्पृष्ट्वा धम्मिल्लकान्तरमभिसर्पन्ति तदुत्तरवृन्तिकाभ्याम्। कानिचित्तु आज्ञाकन्द-शोणकन्दिकयोर्व्यतिकरं विनैव प्रसरन्ति तन्मार्गेणैव धम्मिल्लकान्तः साक्षात्।

उभयविधानि चैतानि सूत्राणि धम्मिल्लकाभिगानि परिणामे इति स्मर्त्तव्यम्।

## (२) धम्मिल्लकप्रभवाणि[2] अवरोहि सूत्राणि पुनर्द्विविधानि—

(क) कानिचित् धम्मिल्लकस्योत्तरवृन्तिकाभ्यां विनिर्गत्य मृणालकान्तर्वेणीवन्धं विधाय तत्रैव शोणकन्दिकाद्वयान्तः प्रविशन्ति वाम-दक्षिणपार्श्वविपर्य्ययेण। ततश्चोत्थितानि तद्वेगवहानि सूत्राणि पुनर्वेणीबन्धेन सुषुम्नाकाण्डान्तः प्रविश्य शोणजां नाम तन्त्रिकामारचयन्ति तस्मिन्नेव पार्श्वे[3]। (ख) अपराणि धम्मिल्लकस्याधरवृन्तिकाभ्यां विनिर्गत्य साक्षादेव सुषुम्नाशीर्षकान्तस्ततश्च सुषुम्नाकाण्डान्त विशन्ति। उभयविधानामप्यमीषां सूत्राणां चेष्टासंयमनवेगवहत्वमुक्तपूर्वम्।

(२२३ चित्रम्)

### आन्तरकूर्चवल्लिकायाः विभागाः।

(अनुप्रस्थच्छेदेन दर्शिताः)




[1] Descending Fibres to the Thalamus. [2] Descending fibres from Cerbellum. [3] द्वे [illegible] परिणामे [illegible] कार्य्यन्तः—इत्यर्थः।

अथ आरोहिसूत्राणि।

**आरोहिसूत्राणि** प्रायेण संज्ञावहानि, भूम्ना आज्ञाकन्दाभिगानि च। तद्-द्वारेणैव हि प्रायेण तद्वेगप्रसरो मस्तिष्कादिषु। तदेतद् आज्ञाकन्दद्वयं मनसः स्थानमिति प्राञ्चः *।

तानि च त्रिविधानि—(१) ऐन्द्रियसंज्ञावहानि, (२) सुषुम्नाकाण्डादुत्थाय धम्मिल्लकाभिगानि, (३) धम्मिल्लकादुत्थाय मस्तिष्काभिगानि चेति। तत्र—

१। ऐन्द्रियसंज्ञावहानि[1] सूत्राणि द्विविधानि (२२०।२३० चित्रयोः)। यथा—

(क) कानिचित्[2] शब्द-स्पर्श-रूप-रस-गन्धवेगान् शीर्षण्यसंज्ञावह नाडीभिः सुषुम्नाशीर्षकाऽन्तरानीतानूर्द्ध्वं वहन्ति तदुत्थसूत्रैः पृथग् वेणीबन्धान् विधाय प्रविशन्ति चान्ते आज्ञाकन्दद्वयमेव।

(ख) अन्यानि[3] मध्यकायस्य (सशाखस्य) त्वङ्मांसादिसमुत्थान् स्पर्शज-वेगान् 'चेष्टाज संज्ञा' वेगांश्च पश्चिम नाड़ीमूलैः सुषुम्नाकाण्डप्रविष्टान् पश्चिम-शृङ्गीय केन्द्राणुकानि द्वारीकृत्य पश्चिमाख्यतन्त्रिकाद्वयमार्गेणोर्ध्वं वहन्ति, प्रविशन्ति च सुषुम्नाशीर्षकान्तरीयं दशाकन्दिकाद्वयं कोणकन्दिकाद्वयञ्च। तथाप्रविष्टानि च तानि तत्रैव चेष्टावहवेणीबन्धादूर्द्ध्वं पृथग्वेणीबन्धेषु परस्परमुल्लंघ्य मस्तिष्क-मृणालकान्तरीयेण मध्यवल्लिकामार्गेण आज्ञाकन्दद्वयमभिसंविशन्ति वाम-दक्षिण-पार्श्वविपर्य्ययेण।

उभयथाऽपि समागतानां सूत्राणां चरमो वेगप्रसरस्तु ऊर्द्ध्व माज्ञाकन्दोत्थसूत्रैः पूर्वोक्तेषु संज्ञाधिष्ठानेषु। कानिचित्तु सूत्राणि आज्ञाकन्दसम्बन्धं विनाऽपि संज्ञाधिष्ठानेषु प्रसरन्तीति केचित्।

२। सुषुम्नाकाण्डाद् धम्मिल्लकाभिगानि[4] सूत्राणि तु मध्यकाये प्रवृत्तानां पेशीचेष्टानामूर्द्ध्वं वार्त्तावहानि चेष्टासामञ्जस्यकराणां वेगानां प्रवर्त्तनाय। तानि सुषुम्नाकाण्डान्तः प्रविश्य पश्चिमशृङ्गीयकन्दाणुकैराश्लेषेण सम्बन्धमारचय्य द्वेधा विभज्यन्ते। तत्र एकैकं सूत्रगुच्छमेकैकार्द्धे पश्चिमाख्यं संज्ञावहतन्त्रीद्वयं प्रविश्योर्द्ध्वं प्रसरद् दशाकोणाख्य कन्दिकाद्वये समाप्यते, ततश्च तत्सम्बन्धिसूत्राणां केषाञ्चित् प्रवेशो धम्मिल्लकान्तस्तदधरवृन्तिकामार्गेण। अपरं सूत्रगुच्छन्तु अग्रिम-पश्चिम-

* "एतत्कन्दान्तराले निवसति हि मनः" (इति षट्चक्रे)। तच्चाग्रे विशदी करिष्यामः

[1] Sensory fibres. [2] Sensory fibres of special senses including tactile fibres arising from the head & neck. [3] Tactile fibres arising from the trunk

शृङ्गयोर्मध्यस्थं मध्यमशृङ्गीयं कन्दाणुपुञ्जं[१] प्रविशति, ततस्तदुत्थसूत्राणि काण्डपार्श्वपरिधिस्थे पार्श्वमध्या-पार्श्वान्तिकाख्ये तन्त्रिके विरचय्य धम्मिल्लकान्तः प्रविशन्ति तदुत्तराधरवृन्तिकामार्गाभ्याम्।

अत्र चैतावान् विशेषः। सुषुम्नाकाण्डाद् धम्मिल्लकाभिगानि सूत्राणि प्रायशः कायस्य समानपार्श्वीयचेष्टावार्त्तावहानि, वेणीवन्धप्रवेशाभावात्।

३। धम्मिल्लकान्मस्तिष्काभिगानि सूत्राणि तु विलक्षणतराणि, तानि धम्मिल्लक-वहिःस्तरेभ्यः सम्भूय आदौ तद्गर्भस्थां दन्तुरकन्दिकां प्रविशन्ति ततश्च पुनरुत्थाय उष्णीष कान्तःस्थां शोणकन्दिकाम्। तत्प्रभवाणि सूत्राणि तु आज्ञाकन्दमेकेन गुच्छेन प्रविशन्ति राजिलवस्तु चापरेण प्रविश्य समाप्यन्ते। आज्ञाकन्दाभ्यन्तरतश्च धम्मिलकप्रेषितवार्त्तावहानि सूत्राणि सर्वतः प्रसरन्ति मस्तिष्कवहिःस्तरेषु प्रायेण।

[ २२४ चित्रम् ]

## मस्तिष्कगोलार्धे सयुजसूत्राणां गतिप्रकारदर्शकम्।




चित्रव्याख्या—१।१।१ धनुर्वक्राणि सयुजसूत्राणि। २।२ तान्येव ईषद्वक्राणि। ३।३ तान्येव ऋजुसूत्राणि। ४।४ अंकुशाकार सयुजसूत्राणि। ५ तान्येव छत्रिकास्थानि।

---

१ Cells of Clarke's column (Thoracic Nuclei). इदञ्च कन्दाणुपुञ्जं सुषुम्नाया अनुपृष्ठांशे (मध्यभागे) तिष्ठति। २ Descending fibres from Cerbellum. ३ द्वेधा वेणीबन्धप्रवेशात् परिणामे स्वपार्श्वीयान्येव कार्य्यतः—इत्यर्थः।

अत्रेदवधेयम् । मस्तुलुङ्गवहिःस्तरेभ्यः, तान् प्रति वा, प्रस्थितानां तत्तत्-सूत्राणां प्रसरो विसारिकिरणमण्डलमार्गेण । सर्वाणि च तानि समूह्यन्ते आन्तरकूर्चवल्लिका रूपेण । सा च आज्ञा-शुक्तिकन्दयोः शफरी-शुक्तिकन्दयोश्चान्तरालेऽवतिष्ठते—इति दर्शितपूर्वम् ( २२३ चित्रे ) । तस्याश्च कोणभागं पश्चिम भागस्याद्यतृतीयांशद्वयञ्चाश्रित्य प्रसृतानि अवरोहिसूत्राणि चेष्टावहानि, अग्रिमभागं पश्चिमभागशेषञ्चाऽऽश्रित्य आरोहिसूत्राणि संज्ञावहानि ।

२ । **सेतुसूत्राणि**[1] तु मस्तिष्कार्धद्वयस्य परस्परसंयोजनानि । तेषु प्रधानभूतानि 'मस्तिष्कसेतु'निर्मापकानि सूत्रगुच्छानि । 'छत्रिका'ख्यमपि सूत्रगुच्छं सेतुसूत्रमयमेव । ( २१०।२११ चित्रयोः )

३ । **सयुजसूत्राणि**[2] पुनर्मस्तिष्कस्य एकैकार्द्धे तदन्तरीयाणां पृथग्-भागानां परस्परसंयोगमारचयन्ति । तानि यथाप्रयोजनं ह्रस्वानि, दीर्घाणि, धनुर्वक्राणि, अंकुशाकाराणि वा । तदाश्रयेण हि परस्परसम्बन्धो मस्तिष्कीय-कर्णिकांशानां सन्निहितानां विदूरस्थानाञ्च ( २२४ चित्रम् ) ।

इति सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

अथातो नाड़ीक्षेत्र-वर्त्मविज्ञानीयमध्यायं व्याख्यास्यामः ।

सन्ति खलु मस्तिष्कबहिःस्तरेषु पृथग्विभक्तप्राय स्थान-कर्म्माणि क्षेत्राणि, वर्त्मानि च संज्ञा-चेष्टादीनां निपुणपरीक्षाशतसिद्धानि । क्षेत्रेषु च कानिचित् संज्ञाधिष्ठानानि, अपराणि चेष्टाधिष्ठानानि, शेषाणि सचिव्याख्यानि स्मरण-ध्यानाऽऽलोचनादि सहायकानि । अस्ति च सर्वेषामपि क्षेत्राणां परस्परसम्बन्धो घनिष्ठः सेतु-सयुजाख्यैः सूत्रैरिति व्याख्यातचरम् । तत्र संज्ञा-चेष्टाधिष्ठानानि ज्ञानेन्द्रिय-कर्मेन्द्रियाणां मूलायतनानि । शेषाणि तु मानसव्यापाराणाम्, तानि न सम्यग्-विज्ञात-तत्त्वानि—इति प्रतीच्याः । प्राञ्चस्तु आज्ञाचक्रमेव सपरिकरं मनसो मूलायतनं मन्यन्ते । तदिदमग्रे षट्चक्रविवरणीयाध्याये प्रदर्शयिष्यामः ।

वर्त्मानि पुनः क्षेत्रेभ्यः सम्भूतानि, तदभिमुखानि वेति द्विविधानि । तानि नानाविध वायु[3]वेगवहानि सूक्ष्म-नीरन्ध्र तन्तुरूपाणीति अवोचाम ।

---

१ Commisural fibres. २ Association fibres. ३ वायुश्चेह पारिभाषिक [illegible]

• अथ मस्तिष्कीयक्षेत्रविभागः। तत्रादौ संज्ञाधिष्ठानानि।

इह खलु पञ्चानां ज्ञानेन्द्रियाणां पञ्चविधानि विषयबोधनक्षेत्राणि **संज्ञाधिष्ठानानि**[१] नाम। तानि पञ्च एव एकैकार्धे मस्तिष्कस्य बहुपरीक्षासिद्धानि (२२५।२२६ चित्रयोः)। तेषु हि तास्ताः संज्ञाः शरीरापराधींयाः प्रविशन्ति प्रायेण। प्रतिसंज्ञाधिष्ठानञ्च द्वेधा विभागः—संज्ञादानभूमिः,[२] संज्ञाविवेकभूमि[३]श्चेति। तत्र संज्ञादानभूमिषु गृह्यन्ते संज्ञाः, संज्ञविवेकभूमिषु तु विविच्यन्ते तत्तत्प्रकाराः। यथा—

१। **शब्दसंज्ञाधिष्ठानम्**[४]—उत्तरशंखिकां नाम कर्णिकामधितिष्ठति विशेषेण (२२५।२२६ चित्रयोः)। तस्याश्च मध्यमतृतीयांशः (पश्चार्धं वा) शब्दसंज्ञादानभूमिः, शेषांशास्तद्विवेकभूमिः। विवेकभूमौ च विविच्यन्ते शब्दसंज्ञायाः स्वरादिप्रकारविशेषाः।

२। **स्पर्शसंज्ञाधिष्ठानम्**[५]—बृहत्तरं, तद् मध्यान्तराख्यसीतायाः पश्चात् तदाख्यां पश्चिमकर्णिकामधितिष्ठति (२२५।२२६ चित्रयोः), अनुमध्यान्तराख्यकर्णिकांशश्च आन्तरतले तदनुबन्धभूतम्। तत्र पश्चिमकर्णिकाया अग्रिमार्द्धः स्पर्शसंज्ञाया आदानभूमिः। शेषार्द्धः सानुबन्धस्तद्विवेकभूमिः, तत्र हि विविच्यन्ते शीतोष्ण-खर-श्लक्ष्णादयः स्पर्श-प्रकारविशेषाः, संज्ञाविशेषाश्च सन्धि-स्नायु-पेश्यादिचेष्टाप्रभवाः।

एष चात्र विशेषः। मध्यान्तराख्य सीतायाः पुरःस्थायां कर्णिकायां चेष्टाधिष्ठानसमष्टिभूतायां यथा यथा कर-चरणाद्यवयवानुसारी विभागः, संज्ञाधिष्ठानेष्वपि तथा तथैव विभागः क्रमेण पश्चिमतः, तद्यथा—पश्चिमकर्णिकायाः शिरसि संज्ञाभूमिर्जंघादेः। मध्यभागे मध्यकायार्द्धस्य, बाहोश्च। अन्त्यभागे शिरोग्रीवार्धस्य इत्यादि। इदञ्च स्पर्शचेष्टाधिष्ठानयोरतितरां सान्निध्यं परस्परकर्मसाचिव्यं सूचयतीति केचित्।

३। **रूपसंज्ञाधिष्ठानम्**[६]—मस्तिष्कगोलार्धस्य पश्चिमपिण्डमाश्रित्य वक्रान्तरां नाम सीतामभितोऽवतिष्ठते (२२५।२२६ चित्रयोः)। तत्र सीतातटद्वयं रूपसंज्ञादानभूमिः। तदुपरिष्टादधश्च रूपविवेकभूमिः, सा मस्तिष्कार्धस्याऽन्तरतले त्रिकोणपिण्डिकां रासनकर्णिकाञ्चाधिश्रिता विशेषेण। रूपसंज्ञावर्त्मविवेकस्तु तरविलक्षणो दर्शनेन्द्रियवर्णने पुनः पृथग् व्याख्येयः।

---

१ Sensory areas. २ Sensory receptive areas. ३ Sensory psychic
[ar]eas. ४ Auditory area. ५ Area of touch and general sensations.
Visual area.

Cerbellum. ३ द्वेधा वर्णाबिन्धप्रवेशात् ... स्वपार्श्वायान्येव कार्य्यतः—इत्यर्थः।

( २२५ चित्रम् )

## मस्तिष्कवामार्धस्य वहिस्तलस्थानि संज्ञाचेष्टाधिष्ठानानि ।




( २२६ चित्रम् )

## मस्तिष्क वामार्धस्य अन्तस्तलस्थानि संज्ञाचेष्टाधिष्ठानानि ।




अत्र चेष्टाधिष्ठानानि रक्तवर्णानि । स्पर्शाधिष्ठानानि नीलानि । शब्दसंज्ञाधिष्ठा
हरिद्वर्णानि । रूपसंज्ञाधिष्ठानानि पीतानि । गन्धसंज्ञाधिष्ठानानि जाम्बववर्णानि । ला

:s.

To face P

४१५। **रस-गन्ध संज्ञाधिष्ठाने**[1] तु विशेषतः परस्परसन्निहिते परस्परसम्बन्धिनी च विशेषेण। ते अंकुशकर्णिकामुपधानकर्णिकाञ्चाधितिष्ठतः (२२५।२२६ चित्रयोः)। गर्भपिण्डिकायाः परिधिरपि गन्धसंज्ञाधिष्ठानम्, अंकुशकर्णिका च विशेषेण। रस गन्धसंज्ञाधिष्ठानयोः पार्थक्यं पुनर्नाद्यापि सम्यङ् निरूपितम्, तथापि उपधानपिण्डिकैव स्वादसंज्ञाभूमिरित्यनुमिमते बहवः। घ्राणशक्तिविशेषवतां श्वादीनान्तु गर्भपिण्डिकैव भृशं परिपुष्टा स्वाद-गन्धाधिष्ठानम्।

अथ चेष्टाधिष्ठानानि।

**चेष्टाधिष्ठानानि**[2] नाम निखिलाङ्गप्रत्यङ्गचेष्टानां मूलायतनानि मुख्यानि। तानि मस्तिष्कस्य एकैकार्धे (२२५।२२६ चित्रयोः) मध्यान्तराख्यसीतायाः पुरस्तात्तदाख्यायामग्रिम कर्णिकायां तदनुबन्धे चान्तरतलीयेऽवस्थितानि ऊर्द्धाधः-क्रमेण। स चानुबन्धोऽनुमध्यान्तराख्य कर्णिकांशे निर्णीतः। तेभ्यश्च चेष्टाधिष्ठानेभ्यः स्वभावादिच्छाशक्त्या वा कृत्रिमोपायैर्वा परीक्षकाणां समुत्तेजितेभ्यः प्रवर्त्तन्ते तास्ताश्चेष्टा अपरशरीरार्धीया अङ्गप्रत्यङ्गानाम्। अभिघातादिभिरभिहतेषु च चेष्टाधिष्ठानेषु दृश्यते तत्तत्सम्बन्धिनामङ्गानां वेपथुः क्रियालोपो वा। मस्तिष्काभ्यन्तरेधमनी त्रुटनाद् रक्तस्रावादिना तु तेषां नाड़ीवर्त्मविच्छेदात् पक्षवधादयो रोगाः।

सन्ति च मस्तिष्कबहिःस्तरीय चेष्टाधिष्ठानक्षेत्रेषु चेष्टाकेन्द्रभूतानि करीराकृतीनि कन्दाणुकानि[3]। तानि च स्फुटतमानि सूक्ष्मपरीक्षायां चतुर्थस्तरिकान्तरिति व्याख्यातचरम्। तेभ्यो हि नीचैः प्रवर्त्तन्ते चेष्टावेगास्तत्तत्पेशीपुञ्जेषु (न तु एकैक पेशीषु) चेष्टावहवर्त्मभिः।

सन्ति च त्रयाणामपि अग्रपिण्डकर्णिकानां पश्चिमांशेषु चेष्टाप्रकार-विवेचन-क्षेत्राणि। तानि तेषां कर्म्मसाचिव्यं विदधतीति परीक्षकाः।

सन्ति च गौणान्यपि चेष्टायतनानि[3] सुषुम्नाकाण्डान्तः। तेभ्यो हि पश्चिम शृङ्गीयकन्दाणुप्रतानैरग्रिमशृङ्गीयकन्दाणुनां समुत्तेजनमात्रेण प्रवर्त्तन्ते स्वभावाद-बुद्धिपूर्वं प्रतिसंक्रमिताः क्रियावेगाः[4] पेशीषु। तानि नेह विचार्य्यन्ते।

एष च मुख्यानां चेष्टाधिष्ठानानां विन्यासक्रमो मध्यान्तराग्रिमकर्णिकायाः सानुबन्धाया बहिःस्तरेषु सुनिरूपितो निपुणैः परीक्षकैः। यथा (२२५।२२६ चित्रयोः)—

---

१ Areas of taste and smell. २ Motor area. ३ Reflex arcs.
४। Reflex muscular actions.

अधःशाखीयाङ्गप्रत्यङ्गानां चेष्टाभूमिः कर्णिकाशिरसि, तदनुबन्धे चान्तरतलस्थे (अनुमध्यान्तराख्य कर्णिकांशे)। तदधस्ताद् बहिःस्तले मध्यकायार्द्धस्य। तदधः कर्णिकामध्यभागे अंस-प्रगण्ड-प्रकोष्ठ-कराणां क्रमशः। तदधस्तात् मुख-जिह्वा-स्वरयन्त्रादीनाम्। कर्णिकामूले वागिन्द्रियस्य। तच्च वामत एवेति ब्रोकाचार्य्यः, उभयत एवेत्यन्ये। नैव क्वचिद् विशेषेणेत्यपरे।

मुखमण्डलस्थ पेशीनां चेष्टाधिष्ठानन्तु अधराया अग्रपिण्डकर्णिकाया मूलस्थम्।

## अथ सचिवक्षेत्राणि।

इह खलु विज्ञातेष्वपि संज्ञा-चेष्टावधिष्ठानेषु बहवोंऽशा मस्तिष्कबहिः-स्तराणामवशिष्यन्ते असम्यग्विदितस्वरूपाः। तेषां सचिवक्षेत्राणीति संज्ञा। तानि ध्यानाऽलोचनऽस्मरणसहायकानीति प्रतियन्ति निपुणाः।

**सचिवक्षेत्राणि**[१] चतुर्धा विभज्यन्ते – (१) अग्रपिण्डाश्रितानि (२) पार्श्विकपिण्डाश्रितानि, (३) शंखिकपिण्डाश्रितानि, (४) प्रच्छन्नपिण्डिका श्रितानि चेति। तानि परिज्ञात संज्ञा-चेष्टाधिष्ठान सान्निध्येन सन्तिष्ठन्ते तत्तत्-संज्ञा-चेष्टासम्बन्धिनां ध्यानालोचनस्मरणादीनां कर्म्मसचिवानि। स्फुटतर-विज्ञानन्तु तेषां नाद्यापि सुशकं परोक्षकैः।

तदेतत् मस्तिष्कीयं क्षेत्रविज्ञानं संक्षेपेण व्याख्यातम्।

## अथ धम्मिल्लकीय-क्षेत्रविज्ञानम्।

व्याखातचरं धम्मिल्लकोय-वस्तुविज्ञानम्। तद्विशेषाववोधाय सूक्ष्मपरीक्षया द्रष्टव्यानि विविधानि तदन्तरोयसूक्ष्मनाडीकन्दाणुकानि सह नाड़ोप्रतानैः (२२७ चित्रम्)। सन्ति हि तत्र मध्यस्तरे विचित्राणि कलसिकाख्यानि कन्दाणुकानि[२] चेष्टासंयमनवेगवह नाड़ीमूलानि येषामूर्णातन्तवो धम्मिल्लकबहिःस्तरेषु क्षेत्र-वस्त्वन्तःप्रविष्टाः। अक्षतन्तवस्तु आभ्यन्तरस्तरेषु।

धम्मिल्लकान्तरीयनाड़ोवर्त्मविशेषास्तु व्याख्यातचराः। धम्मिल्लकप्रयोजनञ्च प्रवृत्तानां पेशीचेष्टाविशेषाणां वार्त्ताऽदानं, ततस्तत् क्रिया सामञ्जस्यसम्पादनञ्च चेष्टासंयमन वेगप्रवर्त्तनेन—इत्युक्तचरम्।

क्षेत्रविभागविशेषास्तु धम्मिल्लकस्य नाद्यापि सम्यङ् निरूपिताः।

---

१ Association areas. २ Cells of Purkinjee.

( २२७ चित्रम् )

## धम्मिलकस्य सूक्ष्मपरीक्षादृश्या विशेषाः।




१।१—लूताणुकद्वयम्। † अत्र कलसिकाख्यकन्दाणुकानां वाहुल्यं लक्षणीयम्।

### अथ वर्त्मविज्ञानम्।

**वर्त्मानि[1] नाम**—नाड़ीतन्तुमया मार्गा यानाश्रित्य प्रवर्त्तन्ते संज्ञा-चेष्टा वेगाश्चेष्टानुव्रतवेगाश्च। अनुवृत्तिश्च तेषु वेगानामन्तराऽन्तरा कन्दाणुपुञ्जव्यवधानेन। कन्दाणुकान् प्राप्ता हि वेगास्तान् प्रतिबोध्य तदक्षतन्तुभिः पुनः प्रवर्त्तन्ते तादृक्प्राया ऊर्द्ध्वमधो वा। तत्राभिमस्तिष्कमूर्ध्ववहाः स्पर्शादिसंज्ञावाहिन्यः। ता आदौ आज्ञाकन्दं, ततश्च मस्तिष्कवहिःस्तरान् प्राप्नुवन्ति, साक्षाद् वा मस्तिष्कम्। अधोवहाः

१ Tracts.

प्रायेण मस्तिष्कवहिःस्तरेभ्यः आन्तरकूर्चवल्लिकामार्गेण प्रवर्त्तमानान् चेष्टावेगान् तद्वहशीर्षण्यनाडीनां मूलकन्दिकाः प्रापयन्ति, सुषुम्नाकाण्डान्तरग्रिमशृङ्गीय-कन्दाणु-पुञ्जान् वा। ततस्ततश्च निर्गताश्चेष्टावहनाड्यस्तदनुप्राणितपेशीनां क्रिया-प्रवर्त्तिन्यो भवन्ति। त एते वेगा मानसव्यापारपूर्वं प्रवर्त्तन्ते।

सन्ति चापराण्यपि वर्त्मानि येषु धम्मिल्लकाभिमुखं धम्मिल्लकाद् वा प्रवर्त्तन्ते वेगाः। ते च प्रत्येकशो द्विविधाः—ऊर्द्ध्ववहाः अधोवहाश्च। तत्र—धम्मिल्लकं प्रति—सुषुम्नाकाण्डाद् उर्द्ध्ववहाः, मस्तिष्कादधोवहाः। धम्मिल्लकात्तु—मस्तिष्कं प्रत्यूर्द्ध्ववहाः, सुषुम्नाकाण्डं प्रत्यधोवहाः। तत्रोर्द्ध्ववहाः चेष्टाकृतानुभवविशेषान् चेष्टावार्त्ता वा अभिवहन्ति। अधोवहास्तु चेष्टासंयमनवेगान् पेशीषु धम्मिल्लक-वहिःस्तरेषु वा मस्तिष्कात्। ते च वेगा विनैव मानसव्यापारेण प्रवर्त्तन्ते प्रायः। तद्वहानां वर्त्मनां धम्मिल्लकीय[१] वर्त्मानीति संज्ञा।

अथ चेष्टावहवर्त्मविवेकः।

सन्ति खलु मस्तिष्कस्य एकैकाद्ध वहिःस्तरेषु चेष्टाधिष्ठानक्षेत्राणि मध्यान्तराख्या-मग्रिमकर्णिकां सानुवन्धामधिष्ठाय—इत्यवोचाम। तेषां चतुर्थस्तरिकासु दृश्यानि करीरकन्दाणुकानि येभ्यः प्रवर्त्तन्ते नाडीतन्तवश्चेष्टावहाः। तेषां च कन्दाणुका-नामुत्तेजनमिच्छाख्यमानसवेगसंक्रमात् प्रायः। ते चाक्षतन्तवो विसारिकिरण-मण्डलमार्गेणाधःप्रसृताः स्वपार्श्विकीमान्तरकूर्चवल्लिकां प्रविशन्ति। अधितिष्ठन्ति च तन्मध्यभागं कोणाख्यं, पश्चिमभागस्याऽग्रतृतीयांशद्वयञ्च—इति दर्शितपूर्वम्। प्रसरन्ति च ते मस्तिष्कमृणालान्तरीयेण विसवितानमार्गेणाऽधस्ताद् द्वेधा विभक्तम्। तत्रैकं वर्त्म शीर्षण्यचेष्टावहनाडीमूलकन्दिकाभिमुखम्, अपरं दीर्घतरं सुषुम्नाकाण्डान्तः सुदूरप्रसृतमग्रिमशृङ्गीयचेष्टामूलकन्दाणुकान् प्राप्नोति। तदिदं चेष्टावहं वर्त्म[२]।

तत्रायं विस्तरः—( २२८।२२९ चित्रयोः )

(१) कोणभागीयसूत्राणि[३] मध्यम-पश्चिम मस्तुलुङ्गपिण्डयोरभ्यन्तरं प्रविश्य मस्तिष्कापरार्धादागतानि तादृशसूत्राणि मध्यरेखायां वेणीवन्धक्रमेणोल्लंघ्य क्रमशः स्वेतरपार्श्विकान् चेष्टावहशीर्षण्य-नाडीनां मूलकन्दाणुकान् परितः समाप्यन्ते सूक्ष्मातिसूक्ष्मैः प्रतानैः। तैः प्रतिवोधितानि च तानि कन्दाणुकानि यथास्वमपर्यन्ति चेष्टावेगान् तदुत्थेषु शीर्षण्यनाडीसूत्रेषु, शीर्षण्यपेशीनां तदनुप्राणितानां प्रचेष्टनाय।

---

१ Cerebellar tracts. २ Motor tract. ३ Geniculate fibres.

कानिचित्तु सूत्राणि वेणीबन्धमप्रविश्य स्वपार्श्विक चेष्टावहशीर्षण्यनाडीनां मूलकन्दाणुकान् प्रविशन्ति--इत्यपि स्मर्त्तव्यम्। शीर्षण्यनाडीमूलकन्दिकास्तु तत्तन्नाडीवर्णनेषु वर्णनीयाः।

(२) अथ आन्तरकूर्चवल्लिकायाः पश्चिमावयवस्याऽग्रतृतीयांशद्वयगानि सूत्राणि सुषुम्नाशीर्षकं प्राप्य 'मुकुलिका' सूत्रेषु[1] परिणमन्ति, उल्लङ्घयन्ति चाधस्तात् मध्यरेखायां वेणीबन्ध[2]क्रमेण पार्श्वान्तरादागतानि तादृशानि 'मुकुलिका' सूत्राणि भूम्ना ( २२८।२२६ चित्रयोः )। ततस्तैरेव गुच्छीभूतैर्निर्मीयते मुकुलतन्त्रिका कुटिला[3] नाम स्वेतरे पार्श्वे सुषुम्नाकाण्डान्तः।

कानिचित्तु मुकुलिकासूत्राणि (स्तोकसंख्यानि) वेणीबन्धमप्रविश्य सरलमार्गेणाधः प्रसरन्ति। तैरारच्यते स्वपार्श्वीया मुकुलतन्त्रिका सरला[4] नाम। परिणामे तु तान्यपि सुषुम्नाकाण्डान्तः सितसेतुमाश्रित्य परस्परोल्लङ्घनं कुर्वन्त्येवेति साऽपि कार्य्यतः कुटिलैव।

उभयविधानि च मुकुलतन्त्रिकासूत्राणि चरमैस्तन्तुप्रतानैरग्रिमश्रृङ्गीय-कन्दाणुकान् प्रतिबोधयन्ति, पश्चिमश्रृङ्गीयकन्दाणुकांश्च कैश्चन संयोजकैः प्रतानैः। अग्रिमश्रृङ्गीयकन्दाणुकेभ्यश्च प्रवर्त्तन्ते चेष्टावहा नाड्यो मेरुजाः याभिरनुप्राणिताः प्रचेष्टन्ते पेश्यो मध्यकायगताः शाखागताश्चेति व्याख्यातं चेष्टावहं वर्त्म।

अत्र चायं विशेषः सदा स्मर्त्तव्यः चेष्टाक्रमाववोधाय, विशेषज्ञानाय च पक्षवधादिवातव्याधानाम्।

सर्वाणि तानि नाडीसूत्राणि वेणीबन्धक्रमेण परस्परमुल्लङ्घयन्ति मध्यमे पश्चिमे वा मस्तुलुंगपिण्डे शिरोऽन्तः, वेणीबन्धे, सुषुम्नाकाण्डान्तर्वा प्राग् अग्रिमश्रृङ्गीय-कन्दाणुप्रवेशात्। तस्मात् मस्तिष्कस्य वामार्धे सम्भूतानां वेगानां क्रियापरिणामो दक्षिणांगेषु, दक्षिणार्ध-सम्भूतानां वामांगेष्विति नियमः। सन्न्यासरोगे रक्त-स्रावादिना वर्त्मविच्छेदे स्थानभेदेन क्रियालोपस्तथैव पार्श्वविपर्य्ययेण, कदाचिद-न्यथापि वा यथा—मुखस्य दक्षिणार्धे, कायस्य तु वामार्धे इत्यादि।

---

१ Pyramidal fibres. २ सोऽयं मुख्यो वेणीबन्धः = Motor Decussation.
३ Crossed Pyramidal tract. ४ Direct Pyramidal tract.

तदेतदखिलं सरलीकर्त्तुमेषा सारणिः शिष्याणां स्मरणसुखा—

## [ चेष्टावहवर्त्मबोधनी सारणी ]




[ शरचिह्नं नाडीसूत्राणां तदभिमुखीं गतिं सूचयति। × एतच्चिह्नं वेणीबन्धक्रमेण पार्श्वान्तरगमनसूचकम्, तत्र— ×१ अनुमस्तिष्कान्तरीयो वेणीबन्धः। ×२ सुषुम्नाशीर्षकीयः। ×३ सुषुम्नाकाण्डान्तरीयः सितसेतौ। ]

### अथ संज्ञावह-वर्त्मविवेकः।

सन्ति हि संज्ञाधिष्ठानक्षेत्राण्यपि मस्तिष्कबहिःस्तरेष्वित्युक्तपूर्वम्। तानि मस्तिष्कस्य एकैकार्धे पृथक्प्रायाणि, शरीरापरार्धीयाः शब्द-स्पर्शादिसंज्ञाः परिगृह्णन्ति। सम्भवश्च शब्द-स्पर्श-रूप-रस-गन्ध संज्ञानां तत्तदिन्द्रियाधिष्ठानेभ्यः श्रोत्र-त्वङ्-नेत्र-रसना-घ्राणाख्येभ्यः। स्पर्शसंज्ञायास्तु सर्वेभ्योऽपि बाह्याभ्यन्तर-शरीरदेशेभ्यः प्रायेण।

तत्र शब्दादि-संज्ञा-विशेषविज्ञानमिन्द्रियखण्डे वर्णयिष्यामः। इह तु व्याख्येया स्पर्शसंज्ञा। तद्वहं च वर्त्म सामान्यतः संज्ञावहवर्त्म[1] नाम।

---

[1] Sensory tract.

( २२८ चित्रम् )

## चेष्टावहवर्त्मदर्शकम् ।




चित्रमध्ये सुषुम्नाकाण्डान्तः सरलाख्यमुकुलिका सूत्राणां परस्परोल्लंघनं लक्ष्यम् ।

To face P. 100.

सेयं स्पर्शसंज्ञा द्विविधा मुख्यगौणभेदात्। तत्र मुख्या स्पर्शसंज्ञा त्वाची शीतोष्ण-खर-श्लक्ष्ण-मृदु-कठिनादिबोधलक्षणा रुजाऽपीडनादिबोधविशेषलक्षणा च। तां बाह्यां साधारणीं वा स्पर्शसंज्ञामाचक्षते। गौणी तु स्पर्शसंज्ञा मांसास्थि-सन्धि-चेष्टनानुभवलक्षणा। सा आभ्यन्तरी गम्भीरा वेत्युच्यते।

अन्ये तु चतुर्धा विभजन्ते स्पर्शम्। तद्यथा—(१) शीतोष्णस्पर्शः, (२) सामान्यस्पर्शः, (३) रुजावहस्पर्शः, (४) गम्भीरस्पर्शश्चेति।

तत्र शीतोष्ण-रुजा-स्पर्शाख्य बाह्यसंज्ञावहा नाडीतन्तवस्त्वगादिभ्य उत्थाय क्रमेणोर्ध्वं नयन्ति संज्ञावेगान् मेरुजपश्चिमनाडीनां मूलकन्दिकास्विति प्रथमः क्रमः। तासु च कन्दिकासु वर्त्तमानाः कन्दाणवस्तैस्तैर्वेगैः प्रतिबोधिताः पश्चिमनाडी-मार्गेषु प्रवृत्तैः स्वायैरक्षतन्तुभिः प्रणयन्ति तानेव वेगान् सुषुम्नाकाण्डान्तरीय-पश्चिमशृङ्गस्थेषु कन्दाणुकेषु—इति द्वितीयः क्रमः। तेषाञ्च कन्दाणुकानामक्षतन्तवः सुषुम्नाकाण्डान्तः प्रसृताः क्रमेण तत्रैव परस्परमुल्लंघ्य स्वपार्श्वविपर्य्ययेण आज्ञाभिगां तन्त्रिकामारुह्य ऊर्द्ध्वं प्रसरन्ति। प्रविशन्ति चान्ते उष्णीषकान्तरीयमध्य-वल्लिकामार्गेण आज्ञाकन्दमिति तृतीयः क्रमः।

गम्भीरस्पर्शसंज्ञावाहिनो नाड़ीतन्तवस्तु पेश्यस्थिसन्ध्यादिभ्य उत्थाय आदौ पश्चिमनाड़ीमूलकन्दिकाः प्रविशन्ति इति प्रथमः क्रमः पूर्ववत्। तत्कन्दाणु-पुञ्जेभ्य उत्थिताश्चाक्षतन्तवस्तद्वेगवहाः सुषुम्नाकाण्डान्तः स्वपार्श्वस्थं पश्चिमाख्यं तन्त्रिकाद्वयमाश्रित्य ऊर्द्ध्वं प्रसरन्तो दशा-कोणाख्यकन्दिकाद्वये समाप्यन्ते सुषुम्नाशीर्षकान्तः—इति द्वितीयः क्रमः। तत्प्रभवाश्चाऽक्षतन्तवः उष्णीषकान्तरितरपार्श्वीयान् ताद्भशतन्तूनुल्लंघ्य स्वेतरपार्श्विकैराज्ञाभिगसूत्रैः सह मिलिताः मध्यवल्लिकामार्गेण आज्ञाकन्दं प्रविशन्तीति तृतीयः क्रमः।

इत्थञ्च, उभयथा आज्ञाकन्दप्रवेशीनि नाड़ीसूत्राणि तत्कन्दाणून् प्रतिबोधयन्ति तैस्तैः संज्ञावेगैः। तदुत्थानाञ्च तन्तूनां तत्तद्वेगप्रतिग्राहिणां चतुर्धा प्रसरो मस्तिष्कवहिःस्तरीयस्पर्शसंज्ञाधिष्ठानेषु—इति वर्णितपूर्वमाज्ञाकन्दवर्णने द्रष्टव्यम्। सोऽयं चतुर्थः क्रम उभयसाधारणः।

अथ दशाकोणाख्य-कन्दिकयोः कन्दाणुभ्य उत्थिताः केचन तन्तवो धम्मिल्लक-मभिसर्पन्ति। ततश्चोत्थिता उष्णीषकन्दिकासु प्रविशन्ति स्वपार्श्वविपर्य्ययेण। तत्प्रभवाश्च मस्तिष्कवहिःस्तरेषु—इति पारिपार्श्विकं क्रमत्रयमपि स्मरणीयम्।

( २२८ चित्रम् )

## संज्ञावह-वर्त्मदर्शकम् ।




[ अत्र मस्तिष्कान्तर्मध्यरेखामुभयतः आज्ञाकन्दद्वयम् । तन्निर्भिद्य चोर्द्ध्वमुत्थितं संज्ञावह-वर्त्मद्वयं विसारि-किरणमण्डलाभ्यां संज्ञाधिष्ठानक्षेत्रेषु प्रसृतमिति लक्षणीयम् । ]

अस्य चार्थविस्तरस्य सुखस्मारणीयं सारणी शिष्यबोधवैशद्याय—

## [ संज्ञावहवर्त्मबोधनी सारणी ]




[ शरचिह्नं नाडीसूत्राणां तदभिमुखीं गतिं सूचयति। × एतच्चिह्नं वेणीबन्धक्रमेण पार्श्वान्तरगमनसूचकम्, —तत्र १ अनुमस्तष्कान्तरीयो वेणीबन्धः। २ सुषुम्नाशीर्षकीयः। ३ सुषुम्नाकाण्डान्तरीयः।

### अथ चेष्टानुव्रतवेगवह-वर्त्मानि।

द्विविधानि खल्विह अनुव्रतवेगवहानि वर्त्मानि धम्मिल्लक सम्बन्धेन प्रवर्त्तन्ते—चेष्टावार्त्तावहानि, चेष्टासंयमन-वेगवहानि चेति ( २२७।२२८ चित्रयोः )। नाड़ी-सूत्राणाञ्च तत्तद्वेगवहानां धम्मिल्लकीयसूत्राणि सचिवसूत्राणीति वा संज्ञा। तानि प्रत्येकशो द्विविधानि उर्द्ध्वाधोगतिभेदात्। तद्यथा—

( १ ) मस्तिष्कादभिधम्मिल्लकम्। ( २ ) धम्मिल्लकात् सुषुम्नाकाण्डान्तः। ( ३ ) सुषुम्नाकाण्डाद्ध धम्मिल्लकं प्रति। ( ४ ) धम्मिल्लकादभिमस्तिष्कम्।

( २२९ चित्रम् )

## धम्मिल्लकसम्बन्धीनि अवरोहिसूत्राणि ।

[ चित्राङ्कनेन एकार्द्धमात्रे दर्शितानि ]




( म०—मध्यरेखा । तत्र सूत्राणां वेणीबन्धाः लक्षणीयाः )

अथ मस्तिष्कबहिःस्तरेभ्यश्चेष्टावर्त्मसु प्रवर्त्तमानानां विसारिकिरणमण्डलीय नाड़ीसूत्राणां मध्ये यानि कनिचित् सूत्राणि धम्मिल्लकबहिःस्तरानभिगतानि, तानि तत्कन्दाणूनुत्तेजयन्ति चेष्टासंयमन-वेगप्रवर्त्तनाय सुषुम्नाकाण्डान्तः । तेभ्यश्च प्रवर्त्तन्ते ते ते वेगाः पेशीक्रियासंयमनाः ।

सुषुम्नाकाण्डाद् धम्मिल्लकाभिगानि तु सूत्राणि पेशीपुञ्जेषु प्रवृत्तानां क्रियाणा मूर्द्ध्व वार्त्तावहानि । तैरुत्तेजिताश्च धम्मिल्लकीयाः कलसिका-कन्दाणवः स्वीयै रक्षतन्तुभिः प्रवर्त्तयन्ति चेष्टासंयमनान् वेगान् सुषुम्नाकाण्डस्य पार्श्वपरिधौ यैः समञ्जसीक्रियन्ते तास्ताः क्रियाः पेशीपुञ्जानाम् , आवेदयन्ति चान्ये तादृशः चेष्टन-वार्त्तामभिमस्तिष्कम् ।

इदं चात्र स्मर्त्तव्यम्। पेशीनामाकर्षणाऽपकर्षणोन्नमनाऽवनमनादिक्रियाः कतिचित्पेशीपुञ्जानां संकोचनात् तद्विपरीतानां प्रसारणाच्च भवन्तीति पेशीपुञ्जानां क्रियासामञ्जस्यमावश्यकम्, तच्च धम्मिल्लकसूत्रैरेव विधीयते।

( २३१ चित्रम् )

## धम्मिल्लकसम्बन्धीनि आरोहिसूत्राणि।

[ चित्राङ्कनेन एकार्द्धमात्रे दर्शितानि ]




[ म० = मध्यरेखा ]

चतुर्विधानाञ्चामीषां सूत्राणां मस्तुलुङ्ग-सुषुम्नाकाण्डयोरभ्यन्तरे गतिवैचित्र्य-विशेषाः विसारिसूत्रवर्णने वर्णितपूर्वाः ( ८६—६२ पृष्ठेषु )। ते च पुनरालोचनीयाः क्रियाविशेषज्ञानाय ( २३१।२३२ चित्रयोः )।

इति अष्टमोऽध्यायः।

# अथ नवमोऽध्यायः ।

अथातः शीर्षण्यनाडीवर्णनीयमध्यायं व्याख्यास्यामः ।

**शीर्षण्या नाड्यः**[1] शिरोग्रीवस्य संज्ञा-चेष्टावहाः सामान्यतः, शब्द-रूप-रस-गन्धसंज्ञावहाश्च विशेषेण । तासां द्वादश एकैकार्धे शिरसः ।

ताः स्थूलदृष्ट्या मस्तुलुङ्गतलप्रभवाः । वस्तुतस्तु द्विविधस्तासां प्रभवः—उत्तानो गम्भीरश्च । तत्रोत्तानः प्रभवो मस्तुलुङ्गतले दृश्यः । गम्भीरः पुनर्मस्तुलुङ्गाभ्यन्तरेषु निगूढः कन्दाणुपुञ्जमयः ।

तासां प्रथमा घ्राणनाडी[2] नाम गन्धसंज्ञावहा । द्वितीया दृष्टिनाडी[3] नाम रूप-संज्ञावहा, सा नेत्रगोलकमूलान्मस्तिष्कान्तः पश्चिमपिण्डं यावत् प्रसृता । तृतीया चतुर्थी षष्ठी चेति तिस्रो नेत्रपेशीप्रचेष्टन्यः । पञ्चमी त्रिधारा[4] नाम, सा स-मुख-मण्डलस्य शिरसः स्पर्श-संज्ञावहा, चेष्टावहा च हानव्यपेशीनाम् । सप्तमी वक्त्रनाडी[5] नाम, सा भूम्ना मुखमण्डलीय-पेशीनां चेष्टावहा, संज्ञावहा च रसनापूर्वार्धस्य । अष्टमी श्रुतिनाडी नाम, सा श्रोत्राभ्यन्तरसम्बद्धा शब्दसंज्ञावहा । नवमी कण्ठरासनी[6] नाम, सा गल-तालु-रसनापश्चार्द्धानां संज्ञावहा, स्वादग्राहिणी च विशेषेण । दशमी प्राणदा[7] नाम, सा संज्ञाचेष्टावहा गल-क्लोम-फुस्फुस-हृदयादि-प्राणनयन्त्राणां यकृदामाशयादीनाञ्च । एकादशी ग्रीवापृष्ठगा[8] नाम, सा प्रचेष्टनी मन्याख्य-पेश्याः पृष्ठच्छदायाश्च । द्वादशी जिह्वातलिका[9] नाम, सा प्राधान्येन जिह्वापेशीनां प्रचेष्टनी । ताश्च नाड्यः करोटिगुहातो वहिर्निर्गताः वक्ष्यमाणै-र्जतूकाद्यस्थि-रन्ध्रविवरैः । तासां निर्गमात् पूर्वमनन्तरं वा कासुचित् सम्बद्धा नाड़ीग्रन्थयः । अस्ति च सर्वासामपि शीर्षण्य-नाड़ीनां सम्बन्धः प्रायेण स्वतन्त्र-नाड़ीमण्डलीयैः सूत्रैः ।

सोऽयं शीर्षण्यनाडीनां परिचयः समासेन ( २३२ चित्रम् ) । विस्तरोऽत उर्द्ध्वम् ।

## अथ प्रथमा—घ्राणनाडी नाम ।

**घ्राणनाडी**[2] नाम प्रथमा शीर्षण्यनाडी मस्तिष्काधरतले पुरस्तादेकैकतो दृश्या घ्राणपिण्डिकाख्य[10]-दीर्घवर्त्तुलमुखी । सेयमग्रे मस्तिष्कप्ररोहाकृतिः करोटिभूमौ

---

१ । Cranial Nerves. २ । Olfactory Nerve. ३ । Optic Nerve. ४ । Trigeminal Nerve. ५ । Facial Nerve. ६ । Glsso pharyngeal Nerve. ७ । Vagus Nerve. ८ । Accessory Nerve. ९ । Hypo-glossal Nerve. १० । Olfactory Bulb.

( २३२ चित्रम् )

# शीर्षण्यनाड़ीनामुत्तानप्रभवाः ।

( मस्तिष्कतले दृश्याः )

[ अत्र मध्यभागमात्रं प्रदर्शितम् ]




**चित्रव्याख्या**—प्रथमेत्यादिपदैर्घ्राण-दृष्ट्यादिसंज्ञकनाड़ीनां क्रमनिर्देशः ।

क—अग्रिमा सुषिरपत्रिका । ख—दृष्टिनाड़ीयोजनिका । ग—पोषणकवृन्तिका । घ—चूचुकवर्तुलकद्वयम् । ङ—मस्तिष्कमृणालकम् । च—पश्चिमा सुषिरपत्रिका (मृणालान्तरालस्था) । छ—उष्णीषकम् । ज—धम्मिल्लकस्य अधरवृन्तिका । झ—सुषुम्नाशीर्षकशिखरम् । ञ—मुकुलिका । ट—सुषुम्नाशीर्षकस्य वेणीबन्धः । ठ—धम्मिल्लकम् । ड—सुषुम्नाकाण्डशिखरम् (विदार्य्य दर्शितम्)। वेणीबन्धस्थले तन्त्रिकाणां परस्परोल्लंघनं लक्षणीयम् । ग्री १—प्रथमानुग्रीविका नाडी ।

झर्झरास्थ्नश्चालनी-पटलमधितिष्ठति । तस्या विंशतिप्रायाः प्रतानाः नासा-गुहाभ्यन्तरे घ्राणकलायां प्रसृताः ( २३३ चित्रम् ) । ताभिर्गृह्यते गन्धसंज्ञा 'घ्राणादानयन्त्रिका' संयुक्ताभिः । ताश्च यन्त्रिकाः इन्द्रियखण्डे स्फुटं वर्णनीयाः ।

एकैकस्याश्च घ्राणनाड्यास्त्रीणि मूलानि वहिर्मस्तिष्कतले 'घ्राणत्रिकोणे' दृश्यानि । तानि मध्यमस्तिष्कं गर्भपिण्डिकापरिधौ, आज्ञाकन्दे, उपधान-कर्णिकायाश्च सम्बद्धानि । तदेतत् त्रितयं घ्राणनाड्या गम्भीरः प्रभवः ।

( २३३ चित्रम् )

## नासाभ्यन्तरे घ्राणनाडीप्रतानाः ।




[ ना १—पञ्चमनाड्याश्चाक्षुषशाखायाः औपनासिकी प्रशाखा ।
ना २—तस्या एव अग्रिमतालुकी प्रशाखा ]

### अथ द्वितीया—दृष्टिनाडी नाम ।

**दृष्टिनाड़ी**[1] नाम द्वितीया शीर्षण्यनाडी मस्तिष्काधरतले एकैकतो दृश्या । सा जतूकास्थ्नो दृष्टिनाडीरन्ध्रमार्गेण अक्षिकोटरे प्रविष्टा एकैकेन नेत्रगोलकेन सम्बद्धा । सेयं नेत्रान्तःस्थेन दृष्टिवितानाख्येन चरमपटलेन रूपसंज्ञां गृह्णाति ।

उभे च दृष्टिनाड्यौ मस्तिष्कतले पोषणकग्रन्थेः पृष्ठतो दृष्टिनाडीयोजनिका[2] सम्बद्धे ( २३२ चित्रम् ) ततश्चोभयतो निर्गते वक्रीभूय पश्चिमाभिमुख्यौ दृष्टिनाडीमूलिके[3] मस्तिष्क-मृणालकद्वयमुल्लंघ्य मस्तिष्कान्तः प्रविष्टे । एकैका च दृष्टिनाडीयोजनिका जतूकास्थ्नो दृष्टिनाडीपरिखामधितिष्ठतीत्युक्तपूर्वम् ।

१। Optic Nerve. २। Optic Chiasma. ३। Optic Tracts.

गम्भीरप्रभवास्तु दृष्टिनाड्या एकैकतो द्विविधाः। तत्र आज्ञाकन्दः, उत्तराऽधिपीठिका, उत्तरा कलायिका चेति त्रयो मस्तिष्कमूलस्थाः आद्यप्रभवाः। त्रिकोणपिण्डिका रासनपिण्डिका चेति द्वयं गम्भीरतरः प्रभवः, तत् चरमं दृष्टिसंज्ञाधिष्ठानमिति दर्शितपूर्वम्।

नाडीसूत्रसन्निवेशश्च दृष्टिनाड्योर्विचित्रविलासाः सूक्ष्मपरीक्षाद्रष्टव्याः (२३४चित्रम्)।

[ २३४ चित्रम् ] दृष्टिनाडीसूत्राणां गतिवैचित्रीदर्शकम्।




**चित्रव्याख्या** —क१ दक्षिणनेत्रीय-दृष्टिवितानस्य आन्तरार्द्धीय-सूत्राणि।
क २ तान्येव वामनेत्रस्य। तेषाञ्च परस्परोल्लंघनं दृष्टियोजनिकायां लक्षणीयम्।
ख—दक्षिणानेत्रस्य पार्श्वार्द्धीयानि सूत्राणि। एवं वामस्यापि वामतः।

द्वे खल्विह नेत्रगोलकयोरभ्यन्तरस्थे चरमपटले दृष्टिवितानौ नाम । तौ रूपसंज्ञाग्राहकौ कन्दाणुपुञ्जमयौ । तेषाञ्च कन्दाणुकानामक्षतन्तवो दृष्टिनाडीसूत्राणि । तानि द्वेधा निपतन्ति दृष्टिनाडीयोजनिकां प्रविश्य । तद्यथा—दृष्टिवितानयोः पार्श्वार्द्धीयानि नाडीसूत्राणि योजनिकायामृजुगत्यैव प्रसृत्य स्वपार्श्वस्थे दृष्टिनाडीमूलिके प्रविशन्ति । आन्तरार्द्धीयानि सूत्राणि तु योजनिकायां वेणीबन्धं विधाय विपर्य्ययेण । ततश्च, पार्श्वार्द्धीयानां सूत्राणां प्रवेशः आज्ञाकन्दान्तर्दृष्टिपीठे, उत्तराधिपीठिकायां, उत्तरकलायिकान्तश्च एकैकतः स्वपार्श्व एव । आन्तरार्द्धीयानान्तु आज्ञाकन्दान्तरधराधिपीठिकायाञ्च विपर्य्ययेण । तेभ्यश्चोत्थितानि नाडीसूत्राणि

( २३५ चित्रम् )

## द्वितीयादि-षष्ठ्यन्त-शीर्षण्यनाडीनाम् नेत्रगुहान्तरीय-गतिप्रदर्शकम् ।




**चित्रव्याख्या**—पे१—ऊर्द्धदर्शिनी । पे२—वहिर्दर्शिनी । पे३—अधोदर्शिनी । पे४—वक्राधोदर्शिनी पेशी । ५मी(क)—त्रिधारनाड्याः संज्ञावहसूत्राणि । ५मी(ख)—त्रिधारनाड्याः चेष्टावहसूत्राणि । ५मी (ग)—त्रिधारनाड्याः शंखगण्डगा शाखा । ३क—तृतीयनाड्याः अधरशाखा ।

1.2.3—त्रिधारनाड्या मूलशाखात्रयम् । 4.4—कानीनक नाडीसूत्राणि ।

* चाक्षुषग्रन्थिः शुभ्ररेखया दर्शितः ।

एकैकतो मस्तिष्कपश्चिमपिण्डे त्रिकोणपिण्डिकां रासनपिण्डिकाञ्च प्रविशन्ति। तद्धि चरमं रूपसंज्ञाधिष्ठानमित्यवोचाम।

अथ तृतीया—नेत्रचेष्टनी नाम।

**नेत्रचेष्टनी**[1] नाम तृतीया शीर्षण्यनाडी मस्तिष्कतले मृणालकद्वयान्तराला-न्निर्गता एकैकतः, पुरस्तादुष्णीषकस्य (२३२ चित्रम्)। तस्या गम्भीरं मूलं ब्रह्मद्वारसुरङ्गाभूमौ निगूढ़म्। सा सर्वासां नेत्रपेशीनामनुप्राणनी वहिर्दर्शिनी-वक्रोर्द्धदर्शिनीति पेशीद्वयवर्जम्। चाक्षुषनाडीग्रन्थिसम्बन्धवती च सा कनीनक-संकोचन्यादि-पेशीनामपि प्रचेष्टनी। सेयं जतूकास्थ्नः पक्षान्तरालमर्म्मेण नेत्रकोटरं प्रविष्टा विभज्यते यथाप्रयोजनं शाखाप्रशाखासु (२३५ चित्रम्)।

अथ चतुर्थी—कटाक्षिणी नाम।

**कटाक्षिणी**[2] नाम चतुर्थी शीर्षण्यनाड़ी तन्वी, या नेत्रगोलके वक्रोर्द्धदर्शिनीं नाम पेशीं चेष्टयन्ती कटाक्षदृष्टिं सम्पादयतीति तथासंज्ञा। सा मस्तिष्कतले एकैकतो मृणालकपार्श्वान्निर्गता जतूकास्थ्नः पक्षान्तरालपथेन नेत्रकोटरं प्रविष्टा (२३५ चित्रम्)। तस्या गम्भीरमूलं ब्रह्मद्वार-सुरङ्गाभूमौ दृश्यम्। ततो लब्धोत्थाने च कटाक्षिण्यौ नाड्यौ प्राणगुहापटले उत्तराख्य-प्राणपिधानिकायां परस्परमुल्लंघयतः (१६७ चित्रम्)। एवञ्च स्वगम्भीरमूलाद् विपरीते पार्श्वे नेत्रकोटरं प्रविष्टेयं नाड़ीति स्मर्त्तव्यम्।

अथ पञ्चमी—त्रिधारा नाम।

**त्रिधारा**[3] नाम स्थूलतमा शीर्षण्यनाड़ी पञ्चमी या करोटिसम्पुटान्तरुष्णीषक-पार्श्वादेकैकतो द्वाभ्यां मूलाभ्यामुद्गता (२३२ चित्रम्)। तयोरग्रिमं तनुमूलम् चेष्टावहम्, पश्चिमं स्थूलं संज्ञावहम्। पश्चिममूले च दृश्यस्त्रिधाराख्यो ग्रन्थिरर्द्ध-चन्द्राकारः, स शंखास्थ्नः अश्मकूटाग्रमधितिष्ठति, आदत्ते च अग्रिममूलमपि स्वान्तः। सोऽयमुत्तानः प्रभवः त्रिधाराख्य-नाड्याः। गम्भीरप्रभवस्तु प्राणगुहातले चतुरस्त्रखाते दृश्यो वर्णितपूर्वः (४४ पृष्ठे)।

अथास्मात् त्रिधारग्रन्थेरुद्भूतास्तिस्रो मूलनाड्यः—चाक्षुषी, ऊर्द्ध्वहानव्या, अधो-हानव्या चेति (२३६ चित्रे १।२।३)। ताः क्रमेण जतूकास्थ्नः पक्षान्तराल-वृत्तविवर-जाम्बवविवरैः करोटिसम्पुटाद् वहिर्निर्गताः प्रसरन्ति मुखमण्डलार्द्धे नानाविधाभिः शाखाप्रशाखाभिः। तासामाद्ये संज्ञावहे, तृतीया संज्ञाचेष्टावहा। तत्र—

१। Oculomotor Nerve. २। Trochlear Nerve. ३। Trigeminal Nerve.

( २३६ चित्रम् )

## पञ्चम्यादि शीर्षण्यनाडीनाम् गतिदर्शकम् ।

[ मुखपार्श्वदेशस्य गम्भीरव्यवच्छेदेन प्रदर्शितम् ]

अत्र हनुकूट-गण्डास्थि-पश्चिमकपालांशा अपसारिताः ।




**चित्रव्याख्या**—१—तृतीया नाडी ( द्वितीयामधिरूढा ) । ५—पञ्चमी नाडी । २।३।४—तस्याः शाखात्रयम् । तत्र २—चाक्षुषी शाखा, ३—ऊर्द्ध्वहानव्या, ४—अधोहानव्या । ६—जानुकग्रन्थिः ( ७म नाड्या विस्फाररूपः ) । ७-७—प्राणदा नाडी । ८—अधोहानव्यनाड्या गण्डगा शाखा । ९- उर्ध्वहानव्यनाड्याः उत्तरदन्तिका शाखा । १०—अधोहानव्यनाड्याः अधरदन्तिका शाखा । ११- सप्तमनाड्या रसग्रहा शाखा । × द्वादशी नाडी ( जिह्वातलगा ) ।

(१) चाक्षुषी[1] नाम मूलनाड़ी त्रिधारग्रन्थेः प्रथमा ह्रस्वतमा च शाखा संज्ञावहा। सा जतूकास्थ्नः पक्षान्तरालविवरेण नेत्रगुहां प्रविश्य प्रशाखाभिर्विस्तृता (२३५।२३६ चित्रयोः) स-वर्त्मनेत्रगोलकाऽश्रुग्रन्थि-नासागुहा-भ्रू-ललाटादीनां स्पर्शसंज्ञां गृह्णाति, विदधाति च कनीनक-संकोचनाऽश्रुप्रवर्त्तनादि कर्म्माऽपि।

तस्यास्तिस्रः शाखा मुख्याः—(क) आश्रवी[2]—या अश्रुग्रन्थिं प्रविष्टा, प्रसृता च उत्तर नेत्रपुट-नेत्रवर्त्मनोः (ख) लालाटिकी[3]—या भ्रू-ललाटयो-रास्तृता, (ग) औपनासिकी[4]—या नासाप्राचीर-नासाग्रयोः शाखाद्वयेन प्रसृता, नेत्रान्तश्च 'चाक्षुष'नाडीग्रन्थिसम्बन्धेन प्रतनुप्रतानैः।

(२) ऊर्ध्व हानव्या[5] नाम मूलनाड़ी त्रिधारग्रन्थेः मध्यमा शाखा संज्ञावहा, या जतूकास्थ्नो वृत्तविवर-मार्गेण करोटिगुहातो विनिर्गता (२३६ चित्रम्)। विनिर्गत्य चासौ करोटिपक्षे हनुजातूकखातमुल्लंघ्य नेत्रगुहां विशति तद्भूमिसंश्रिता, मुखमण्डलं च नेत्राधरीयविवरेण। सेयं विचित्रगतिभिः शाखा-प्रशाखाभिः शंख-गण्डाऽधरनेत्रपुट-नासोष्ठानां स्पर्शसंज्ञां गृह्णाति, उत्तरदन्तमूलानां च स-दन्तवेष्टकानाम् 'उत्तरदन्तिका'-ख्यशाखया। तालव्याश्च संज्ञां तालुजातूकाख्य-नाड़ीग्रन्थिसम्बन्धेन। ताश्च शाखा-प्रशाखाः यथा प्रयोजनं तत्तन्नामधराः कल्पनीयाः।

(३) अधोहानव्या[6] नाम मूलनाडी पञ्चमनाड्याः शाखा तृतीया—सा त्रिधारग्रन्थिसम्भूतया चेष्टावहशाखया मिलिता उभयस्वभावा भवति। सेयं जतूकास्थ्नो जाम्बवविवरेण करोटिसम्पुटात् निर्गता दशसु शाखासु विभज्यते (२३६ चित्रम्)। अधिरूढा च सा कर्णिकाख्येन नाडीग्रन्थिना पुरस्तात्।

ताश्च शाखा इत्थं प्रसरन्ति—मस्तिष्क-वृतिं प्रत्येका (परावृत्य प्रविष्टा)। हनुकूटकर्षणीं, हनुमूलकर्षणीसंज्ञं पेशीद्वयं, शंखच्छदाश्च पेशीं प्रत्येकैकेति चतस्रः चर्वण-कर्मसाधन्यः। स-कर्णपालि शंखदेशं 'कर्णमूलिक' लालाग्रन्थ्यादीन् प्रति चैका नानाप्रशाखा 'कर्णशङ्खिका'[7] नाम। रसनां प्रति चैका सामान्यसंज्ञावहा रसनाया अग्रिमतृतीयांशद्वये 'रासनो'[8] नाम। अधरदन्तमूल-चिबुकाऽधरं प्रत्येका

१। Ophthalmic Nerve. २। Lacrimal Nerve. ३। Frontal Nerve. ४। Naso-cilliary Nerve. ५। Maxillary Nerve. ६। Mandibular Nerve. ७। Auriculo-temporal Nerve. ८। Lingual Nerve.

नानाप्रशाखावती संज्ञावहा 'अधरदन्तिका'[१] नाम। कपोलिकां पेशीं प्रत्येका। मुखभूमिकण्ठिकां द्विगुम्फिकां च पेशीं प्रत्येका। तत्रायं विशेषः। "रासनी" नाम नाडी सप्तम-नाड्याः 'रसग्रहा' ख्य-शाखया मिलिता प्रसर्पति, विभज्यते च पुनरपि रसनायां कर्मभेदात्[२]।

अथ षष्ठी—नेत्रपार्श्विकी नाम।

**नेत्रपार्श्विकी**[३] नाम षष्ठी शीर्षण्यनाड़ी उष्णीषक-सुषुम्नाशीर्षकान्तरालात् निर्गता एकैकतः (२३५ चित्रम्)। गम्भीरप्रभवस्तु तस्याः प्राणगुहाभूमिरेव। सेयं जतूकास्थ्नः पक्षान्तराल-मार्गेण करोटिसम्पुटाद् वहिःप्रसृता नेत्रगुहायां वहिर्दर्शिनीं नाम नेत्रपेशीमनुप्राणयति।

अथ सप्तमी—वक्त्रनाड़ी नाम।

**वक्त्रनाड़ी**[४] नाम सप्तमी शीर्षण्यनाड़ी संज्ञा-चेष्टावहा। सा उष्णीषक-सुषुम्नाशीर्षकयोरन्तरालपार्श्वान्मूलद्वयेनोत्थिता अष्टमनाड़ीसाहचर्य्येण एकैकतः (२३२ चित्रम्)। सेयम् अंशेन रसनापूर्वार्धस्य तालुनश्च संज्ञावहाऽपि मुख्यतया मुखमण्डलीयपेशीनां, कर्णाभ्यन्तरीय-लघुपेशीनां, ग्रीवापेशीद्वयस्य च प्रचेष्टनी, रसस्रावप्रवर्त्तिनो च हन्वधरीय-जिह्वाधरीयाख्यलालाग्रन्थ्योः। सम्बन्धवती चाऽसौ पञ्चमाऽष्टम-नवम-दशमनाड़ीभिः कपालमूलिन्यादिग्रैवेयनाडीप्रशाखाभिश्च। तस्या गम्भीरप्रभवः प्राणगुहायां चतुरस्रखातस्याधरार्द्धे दर्शितपूर्वः (४४ पृष्ठे)।

सेयमष्टमनाड्या सह कर्णान्तर्द्वारसंज्ञेन शंखास्थि विवरेण अश्मकूटान्तरीये तनुवक्रसुरङ्गामार्गे प्रविष्टा शिफागोस्तनान्तरीयविवरेण निर्गत्य मुखमण्डलं प्राप्नोति, विस्तीर्य्यते च तत्र हंसपदिकाकारैः शाखाप्रतानैः (२३७ चित्रम्)। अस्ति चास्य विस्फाररूपस्तनुकुटिलो नाड़ीग्रन्थिः तत्रैव सुरङ्गान्तर्निगूढ़ो जानुको[५] नाम, सोऽनुपदं वर्णनीयः सह शाखाभिः।

इमाश्चास्याः शाखा मुख्याः—

(१) रसग्रहा कर्णान्तिका[६]—या सप्तमनाड्याः प्रथमा शाखा अश्मकूटान्तःश्रुति-वक्त्रनाडीसुरङ्गायां सम्भूता अन्तःश्रुतिमार्गमाविश्य पञ्चमनाड्याः 'रासनी'-संज्ञया शाखया मिलिता। पृथग्भूता चान्ते सैव रसनाया आद्यतृतीयांशद्वये प्रसरति रसास्वादग्राहिणी।

१। Inferior Alveolar Nerve. २। कर्मभेदश्चेत्थम्—'रसग्रहा'ख्य नाड्या स्वादमात्रं गृह्यते, अपरया तु स्पर्शसंज्ञामात्रम्। ३। Abducent Nerve. ४। Facial Nerve. ५। Genicular Ganglion. ६। Chorda Tympani.

( २३७ चित्रम् )

## वक्त्र नाड्याः शाखाविस्तारः ।




१—चाक्षुषनाड्याः लालाटिकी शाखा । २—तस्या एव आश्रवी संज्ञं शाखाद्वयम् । ३—शंख-वक्त्रगा शाखा । ४—गण्डानुगा शाखा । ५।६—ऊर्द्ध्वहानव्याख्य नाड्याः नासोष्ठगाः शाखाः । ७।८—सप्तमनाड्याः शंख-वक्त्रगाः शाखाः । ९।१०—सप्तमनाड्या ग्रीवावक्त्रगाः शाखाः ।

**(२) कर्णान्तरीया[१]—या कर्णाभ्यन्तरे 'पर्य्याणिका' ख्य-पेश्याः प्रचेष्टनी ।**

**(३) कर्णपश्चिमा[२]—या शिरःपृष्ठे कर्णमूले च शाखाद्वयेन प्रसृता ।**

**(४) द्वे पेशीगे[३]—द्विगुम्फिका-शिफारसनिकाख्य-पेशीद्वयं प्रविष्टे ।**

**(५) शंख-वक्त्रगा[४] ( शंखानुगा वा )—याऽनेकाभिः शाखाभिः शंखदेशे कपोले नेत्राधरीयदेशे च प्रसृता संज्ञावहा ।**

**(६) ग्रीवा-वक्त्रगा[५]—साऽपि वहुभिः शाखाभिः मुखमण्डलस्याधरार्द्धे ग्रीवायां च विस्तृता संज्ञावहा ।**

---

१। Nerve to the Stapedius. २। Posterior Auricular. ३। Muscular ( to Digastric and Stylo-hyoid ) ४। Temporo-facial branches. ५। Cervico-facial ( Buccal, Mandilbular and Cervical ) branches.

### अथ अष्टमी—श्रुतिनाड़ी नाम ।

**श्रुतिनाड़ी**[१] नाम सुकोमला शीर्षण्यनाड़ी श्रुतिसंज्ञावहा या सप्तमीं नाड़ीं पुरस्कृत्य तया सह उष्णीषक-सुषुम्नाशीर्षकयोरन्तराल-पार्श्वादुत्थिता (१६६।२३२ चित्रयोः)। सा शंखास्थ्नः कर्णान्तर्द्वारं प्रविश्य अश्मकूटान्तरीयनाडी सुरङ्गापथेन सप्तमनाड्या सहैव प्रसृता मध्येमार्गं पृथग्भूय श्रवणेन्द्रियान्तः प्रविशति अश्मकूटसम्पुटान्तरेव। तस्या गम्भीरः प्रभवः प्राणगुहायां चतुरस्रखातस्याधरांशे दर्शितपूर्वः ( ४४ पृष्ठे )। द्वे च शाखे अन्तःकर्णसुरङ्गायामेव—श्रुतिशम्बूकाभिगा,[२] श्रुतितुम्बिकाभिगा[३] चेति। तद्विस्तरः श्रवणेन्द्रियवर्णने व्याख्येयः।

### अथ नवमी—कण्ठरासनी नाम ।

**कण्ठरासनी**[४] नाम नवमी शीर्षण्यनाडी सुषुम्नाशीर्षकपार्श्वे लवलिका-पश्चिमतो निर्गता त्रिचतुरैर्मुलैरेकैकतः (२३२।२३८ चित्रयोः)। सा सामान्यसंज्ञावहा गल-तालु-रसनादीनाम्, स्वाद-संज्ञावहा चांशेन रसनामूले। तस्या गम्भीरप्रभवः प्राणगुहायां चतुरस्रखाते अधरार्द्धपार्श्वे श्यामपत्रिकायाञ्च द्रष्टव्यः ( ४४ पृष्ठे )।

सेयं करोटिसम्पुटान्मन्याविवरेण वहिर्गता स्वविस्फाररूपं ग्रन्थिद्वयम् 'अनुमन्याक'-संज्ञं निर्माय गलताल्वादिषु प्रसृता वहुभिः शाखा-प्रशाखाभिः। सम्बन्धवती च सा सप्तम्या दशम्या च नाड्या शाखाप्रतानैः। मुख्याश्चास्याः शाखाः—(१) श्रावणी[५] अन्तःकर्णसुरङ्गायाम्, (२) अनुधमनिकाः—अन्तर्मातृकां धमनीमनुगताः (३) उपजिह्वानुगाः[६]—स्वपार्श्विकीमुपजिह्वां प्रविष्टाः कोमलताल्वादि च। (४) रसनाभिगे[७] द्वे (५) कण्ठानुगा[८] श्चेति पञ्चविधाः। ताः प्रशाखानु-शाखाभिः कण्ठाभ्यन्तरं रसनापश्चिमतृतीयांशञ्च व्याप्नोतीति 'कण्ठरासनी' संज्ञा। कण्ठानुगशाखानाञ्चैका शिफागलान्तरीयां पेशीं प्रति प्रसृता, अपराः कर्णाभ्यन्तरे गलविलान्तश्च स्वतन्त्रनाडीचक्रेषु। रसनाभिगे तु स्वादग्राहिण्यौ जिह्वापश्चिम-तृतीयांशे।

### अथ दशमी—प्राणदा नाम ।

**प्राणदा**[९] नाम दशमी महती च शीर्षण्यनाडी संज्ञा-चेष्टावहा, या स्वरयन्त्र-क्लोम-फुस्फुसाऽमाशय-यकृत्-प्लीह-वृक्क-पर्य्यन्तमास्तृता, स्वतन्त्रनाडीतन्त्रेण विशेषतः

---

१। Acoustic Nerve. २। Cochlear Nerve. ३। Vestibular Nerve. ४। Glosso-pharyngeal Nerve. ५। Tympanic Nerve. ६। Tonsillar branches. ७। Lingual branches. ८। Pharyngeal branches. ९। Vagus Nerve.

( २३८ चित्रम् ) 'प्राणदा'दिनाडीत्रयस्य शाखाविस्तार: ।



( २३८ चित्रव्याख्या )

१। कण्ठरासनी नाड़ी। २।३। नागिनी नाड़ी तन्मूलद्वयञ्च। ४। कण्ठरासन्या उपजिह्वानुगा शाखा। ५। नागिन्या ग्रसनिकाभिगा शाखा। ६। कण्ठरासन्या रसनाभिगा शाखा। ७। कण्ठरासन्याः कण्ठानुगा शाखा। ८। कचानुगा नाड़ीप्रवेणी ( कर्त्तितांशः )। ९। स्वतन्त्रनाड़ीग्रन्थ्यंशः। १०। तोरणी महाधमनी। ११। प्राणदानाड्या ( वामायाः ) अधरा स्वरयन्त्रगा शाखा। १२। प्राणदायाः फुस्फुसाभिगा शाखा। १३। अन्ननलिका। १४। प्राणदा नाड़ी। १५। प्राणदानाड्या अन्ननलिकानुगा शाखा। १६।१७। प्राणदायाः शाखावितानः। १८। स्वतन्त्रनाड़ीग्रन्थिः। १९। प्राणदायाः सौरमण्डलाभिगा शाखा। २०। प्राणदाया आमाशयाभिगा शाखा। २१। प्राणदा। २२। आमाशयः।

सम्बन्धवती च। सा सुषुम्नाशीर्षकपार्श्वादष्टाभिर्दशभिर्वा मूलैरुत्थिता मस्तिष्कतले ( २३२ चित्रम् ) दृश्या। गम्भीरप्रभवस्त्वस्याः प्राणगुहायां चतुरस्रखाते पूर्ववत्।

सेयं करोटितलादनुमन्याख्यविवरेण विनिर्गता स्वरयन्त्रे श्वासयन्त्रे च संज्ञावहसूत्रैरास्तृता, ग्रसनिकान्ननलिकयोरामाशये हृदये च चेष्टावहसूत्रैः (२३८ चित्रम्)। यकृत्-प्लीह-वृक्केषु च तत्तत्क्रियाप्रवर्त्तकसूत्रैः। अस्ति चास्या मूले शाखायाञ्च एकैको नाडीग्रन्थिः याभ्यां सप्तम-नवमैकादश-द्वादश-शीर्षण्यनाडीभिः प्रथमद्वितीय-ग्रैवेयनाडीभ्याञ्च तस्याः सम्बन्धः संयोजकैः शाखाप्रतानैः ( २३६।२३८ चित्रयोः )।

इमाश्चास्या मुख्याः शाखाः—

(१) मस्तिष्कवृतिगा[१]—या परावृत्य करोटिगुहां प्रविष्टा।

(२) श्रावणी[२]—या बाह्यकर्णरन्ध्रमार्गे प्रसृता।

(३) ग्रसनिकान्तरा[३]—या गलविले ग्रसनिकान्तः प्रसृत्य परिग्रसनिकाख्य-स्वतन्त्रनाड़ीचक्रे मिलिता।

(४) स्वरयन्त्रगा उत्तरा[४]—या स्वरयन्त्रस्य संज्ञावहा शाखाद्वयेन।

(५) सैव परावर्त्तिनी[५]—या उरोगुहाभ्यन्तरादूर्द्ध्वं परावृत्य स्वरयन्त्रं प्राप्ता। उभयोश्च परावर्त्तिन्योः दक्षिणा अक्षाधरां धमनीं संवेष्ट्य उर्द्ध्वं गता। वामा तु तोरणीं महाधमनीम्।

(६) हार्दिकशाखाद्वयं[६] यद् ग्रीवायामुरसि चोत्थाय परिहार्दिकं नाडीचक्रद्वयम्[७] ( उत्तानं गम्भीरञ्च ) प्रविष्टम्।

---

१। Meningeal branch. २। Auricular branch. ३। Pharyngeal branch. ४। Superior Laryngeal branch. ५। Right Recurrent Laryngeal branch. ६। Cardiac branches. ७। Superficial & Deep Cardiac plexuses.

(७) फौस्फुसशाखाद्वयं[१] यत् सक्लोम-फुस्फुसद्वयसम्बन्धिनोः अग्रिम-पश्चिम-स्वतन्त्रनाडीचक्रयोः प्रविष्टम्।

(८) अन्ननलिकानुगाः[२]—याः ग्रसनिकावेष्टनं नाडीचक्रं प्रविष्टाः।

(९) आमाशयाभिगाः[३]—या वाम-दक्षिण-क्रमेण आमाशयस्याग्रिम-पश्चिम-तलयोः प्रसृताः।

(१०) याकृत्यः[४]—या यकृत्परिवारि नाडीचक्रं प्रविष्टाः।

सन्ति च काश्चनाऽपराः स्वतन्त्रनाडीचक्रगाः शाखाः[५]—याः सौरमण्डलं नाम नाभिदेशस्थं नाडीचक्रं प्रविश्य प्लीहाऽग्न्याशय वृक्काऽधिवृक्काऽन्त्राणि अनुप्राणयन्ति।

ता एताः प्रधानभूताः शाखाप्रशाखाः स्वतन्त्रनाडीतन्त्वीयसूत्रैः सहाऽरचयन्ति तानि तानि नाडीचक्राणि पूर्वोक्त-कोष्ठयन्त्राण्यभितः। तान्यग्रे वर्णनीयानि।

अथ एकादशी—ग्रीवापृष्ठगा नाम।

**ग्रीवापृष्ठगा[६] (नागिनी** वा) नाम एकादशी शीर्षण्यनाडी भूम्ना चेष्टावहा (२३८ चित्रम्), या कराटिमूलस्थेन महाविवरेण शिरोगुहां प्रविश्य पुनरनुमन्याख्येन विवरेण वहिर्गच्छति। तस्या द्वे शाखे मुख्ये - एका प्राणदायाः सहकारिणी, अपरा ग्रैवेयनाडीनाम्। तयोराद्या पञ्चषैर्मूलैः सुषुम्नाशीर्षकपार्श्वादुत्थिता प्राणदामूलानां पश्चिमतः। गम्भीरप्रभवस्तु तस्याः प्राणगुहायामेव चतुरस्रखातस्याधरार्द्धे मूलकन्दिकाद्वये सुषुम्नाकाण्डान्तश्च इति वर्णितपूर्वम्। द्वितीया ग्रैवेयनाडीसहकारिणी शाखा तु प्रथमादि-पञ्चम्यन्त ग्रैवेयनाडीमूलैर्मिलिता, सा उरःकर्णमूलिका-पृष्ठच्छदाख्य-पेशीद्वयस्य प्रचेष्टनी।

सन्ति चास्या नाड्या ग्रसनिका-स्वरयन्त्रादिषु प्रसृताः शाखास्त्रिचतुराः, यासां दशम्या नाड्याः शाखाप्रतानैः सम्बन्धो घनिष्ठः।

अथ द्वादशी—जिह्वामूलिनी नाम।

**जिह्वामूलिनी[७] (जिह्वातलगा वा)** नाम द्वादशी शीर्षण्यनाडी जिह्वा-पेशीनां प्रचेष्टनी (२३६।२३८ चित्रयोः)। सा दशभिर्द्वादशभिर्वा मूलैः सुषुम्ना-शीर्षकस्य मुकुलिका-लवलिकयोरन्तरालादेकैकतो विनिर्गता। गम्भीरप्रभवस्तु तस्याः प्राणगुहायां चतुरस्रखातस्याधरार्द्धे मध्यरेखापार्श्वतो वर्णितपूर्वः। सा पश्चिम-

---

१। Anterior and Posterior bronchial branches. २। Oesophageal. ३। Gastric branch. ४। Hepatic branches. ५। Coeliac branches. ६। Accessory Nerve. ७। Hypoglossal Nerve.

कपालस्य मूलकोटिपुरःस्थेन विवरेण वहिर्गच्छति। तस्याः शाखाद्वयमादौ मस्तिष्कवृतिं प्रति, ततो दशमनाडीग्रन्थिं प्रति प्रसृतम्। प्रथमग्रैवेयनाड्या अग्रिम-शाखा तु तस्याः मध्यभागे मिलिता कियद्दूरे पृथग्भूय द्वादशी पाशं[१] नाम नाड़ी-पाशं रचयति द्वितीय-तृतीयग्रैवेयनाड़ीशाखाभिः। तस्य तिस्रः प्रशाखाः मन्यादि-ग्रीवापेशीत्रये प्रसृताः।

इत्थञ्चास्याश्चतुर्विधाः शाखाः—(१) मस्तिष्कवृतिगा[२] (२) दशमीग्रन्थिगा[३] (३) द्वादशनाडीपाशगा,[४] (४) पेशीगाश्चेति[५]। तत्र पेशीगाः जिह्वापेशीनां प्रचेष्टन्यः, अन्यासाञ्च कण्ठिकास्थिसम्बद्धानां पेशीनाम्। द्वादशनाडीपाशादपि तिस्रः पेशीगाः प्रशाखाः सम्भवन्तीत्युक्तपूर्वम्।

अथ शीर्षण्यनाडीग्रन्थयः।

सन्ति खलु कासुचित् शीर्षण्यनाडीषु मध्येमार्गं सम्बद्धाः ग्रन्थयः शीर्षण्यनाडीग्रन्थि[६] संज्ञाः। ते हि कन्दाणुपुञ्जपूर्णा नाडीसूत्राणां बलाधान-केन्द्राणि विश्रामस्थानानि वेति विशेषविदः। द्विविधाश्च ते—नाडीनां विस्फाररूपाः, पृथग्रूपा वा। तत्राद्या मध्येस्थूलाः क्षुद्रनिम्बफलाकृतयः, अपरे ऊर्णनाभसदृशाः। तेषु प्रविष्टैस्तेभ्यो निर्गतैश्च नाडीसूत्रैर्जालवद् विरच्यन्ते नाडीचक्राणि।

ते च नाडीग्रन्थयः प्रथम-तृतीय-पञ्चम सप्तम-नवम-दशमाख्यनाडीव्यतिकरेण दृश्यन्ते ( पूर्वचित्रेषु दर्शितचराः )। तद्यथा—

१। प्रथमाया ग्रन्थिर्विस्फाररूपो घ्राणपिण्डिका[७] नाम वर्णितपूर्वः (२३३ चित्रे)।

२। पञ्चमनाड्या विस्फाररूपोऽर्द्धचन्द्राकारः सुमहान् नाडीग्रन्थिः त्रिधार-ग्रन्थिः[८]नाम सविस्तरं व्याख्यातपूर्वः ( २३६ चित्रे )।

तत्सम्बन्धिनश्च पृथग्भूता ग्रन्थयः—चाक्षुषः, तालुजातूकः, कर्णिकः, हन्वधरीयश्चेति चत्वारः। तत्र—

(क) चाक्षुषो[९] नाम क्षुद्रतमो ग्रन्थिः नेत्रगुहायाम् ( २३५ चित्रे )। सम्बन्धवांश्च स तृतीयनाड़ीशाखया विशेषतः। तच्छाखाः कनीन-कादि-नेत्रांशेषु प्रसृताः संज्ञाचेष्टावहाः स्वतन्त्र-नाडी-सम्बन्धिन्यश्च।

१। Ansa Hypoglossi. २। Meningeal branch. ३। Branch to Ganglion Nodosum of Vagus Nerve. ४। Descendens Hypoglossi. ५। Muscular Branches. ६। Ganglion of Cranial N. ७। Olfactory Bulb. ८। Semilunar or Gasserian ganglion. ९। Cilliary ganglion.

( ख ) तालुजातूको[१] नाम वृहत्तरो ग्रन्थिः नासोर्द्ध्व सुरङ्गायां तालुजातूक-विवरोपकण्ठे द्रश्यः । स मुख्यतमः पृथग्रूप-नाडीग्रन्थिषु, सम्वन्धवांश्च सप्तम्या नाड्या, स्वतन्त्रनाडीसूत्रैश्च । तस्याः शाखाप्रशाखाः संज्ञा-चेष्टावहा गल-तालु-काकलक-दन्तमूल-नासा-नेत्रादिषु प्रसृताः ।

( ग ) कर्णिको[२] नाम स्वल्पाकृतिर्नाडीग्रन्थिः पञ्चमनाड्या अधोहानव्यां शाखामधिष्ठाय वर्त्तते बहिर्जाम्बवविवरात् । तस्य शाखा-स्तालूत्तंसनी-पटहोत्तंसन्यादिपेशीनां प्रचेष्ट्न्यः । स सप्तम्या नाड्या सम्वन्धवान् विशेषेण ।

( घ ) हन्वधरीयो[३] नाम नाडीग्रन्थिः तदाख्य-लालाग्रन्थिसमीपे वर्त्तते । 'रसनिका'ख्यनाडीशाखया सहिताश्च तच्छाखाः मुखकुहरमभितः, हन्वधरीय-लालाग्रन्थौ च प्रविष्टाः ।

३ । सप्तमनाड्या विस्फाररूपो ग्रन्थिः जानुको[४] नाम जानुसन्धिवद्वक्रमध्यः । स शंखास्थ्नोऽश्मकूटान्तर्निगूढः । सम्वन्धश्चास्य त्रिधारग्रन्थिना, तालुजातूक-कर्णिकाभ्यां ग्रन्थिभ्यां, स्वतन्त्रनाडीसूत्रैश्च सूक्ष्मैः शाखाप्रतानैः ।

४ । नवमनाड्या द्वौ ग्रन्थी विस्फाररूपौ अनुमन्याकौ[५] नाम—उत्तराधरभेदात् । तत्रोत्तरो लघीयान् अनुमन्याविवरान्तःस्थः । अधरस्तु तद्बाह्यो वृहत्तरः, अन्तःश्रुतिपथस्य वाह्य-मध्यमभागयोः शाखाद्वयप्रेरकः । सम्वन्धश्चास्य दशमनाडी-ग्रन्थिना शाखाप्रतानैः ।

५ । दशमनाड्या अपि द्वौ ग्रन्थी विस्फाररूपौ दशमग्रन्थी[६] नाम—उत्तरा-धरभेदात् । तत्र उत्तरग्रन्थेः सम्वन्धो नवमैकादशनाडीभ्याम् । अधरस्य तु वृहत्तरस्य एकादशद्वादशनाडीभ्यां, स्वतन्त्र-नाडीग्रन्थिना, ग्रैवेयनाडीद्वयेन च ।

नवम-दशमैकादश-नाडीनां निर्गमस्तु युगपदनुमन्याविवरेण—इति स्मर्त्तव्यम् ।

---

१ । Sphenopalatine ganglion. २ । Otic ganglion. ३ । Submaxillary ganglion. ४ । Genicular ganglion. ५ । Superior or Jugular ganglion and Inferior or Petrous ganglion. ६ । Ganglion of the Vagus root and Ganglion of the Vagus trunk ( Ganglion nodosum ).

### अथ शीर्षण्यनाडीनां त्वाचशाखाः ।

त्वाचशाखास्तावत् शीर्षण्यनाडीनां ग्रैवेयनाडीनाञ्च शिरोग्रीवस्य बाह्यस्पर्शसंज्ञावहाः । ता इत्थं विभज्य सन्निवेशिताः ( २३६ चित्रम् ) । पञ्चमनाड्याः शाखात्रयस्य प्रशाखाः क्रमेण सशिरः पटल मुखमण्डलस्य उत्तर-मध्यमाऽधरभागानां स्पर्शसंज्ञावाहिन्यः । शिरोग्रीवपश्चिमभागस्य स्पर्शसंज्ञां तु ग्रैवेयनाडीनां पश्चिमाः शाखाप्रशाखाः संगृह्णन्ति । ग्रीवापुरोभागस्य पुनरग्रिमाः—इति संक्षेपः ।

( २३६ चित्रम् )

## शिरोग्रीवीयाः त्वाचशाखाविस्ताराः ।




* त्रिधारनाड्याश्चाक्षुषशाखायाः कपालमूलिकाया वृहत्याश्च शाखाप्रतानै रधिकृतः—इत्यर्थः ।

† एतच्चिह्नांकिता नाड्यः ग्रैवेयनाडीनां त्वाचशाखाः ।

**इति नवमोऽध्यायः ।**

# अथ दशमोऽध्यायः ।

अथातो मेरुजनाड़ीवर्णनीयमध्यायं व्याख्यास्यामः ।

**मेरुजाः**[1] नाम नाड्यः संज्ञाचेष्टावहाः पृष्ठवंशस्य पार्श्वद्वयान्निर्गताः कशेरुचक्रान्तरालस्थैर्विवरैः । तासामेकाधिका त्रिंशदेकैकतः । ता इत्थं विभज्यन्ते—

(२४० चित्रम्) मस्तिष्कतलादारभ्य मेरुजनाड़ीनां संस्थानदर्शकम् ।




म०—मस्तिष्कस्य अग्रपिण्डद्वयम् । चु०—चूचुकवर्त्तुलद्वयम् । दृ०—दृष्टिनाडीं ।
उ०—उष्णीषकम् । ध०—धम्मिल्लकम् । ग०—स्वतन्त्र-नाडीग्रन्थिः । तु०—तुरङ्गपुच्छिका ।

---

१ । Spinal Nerves.

ग्रीवां प्रत्यष्टौ अनुग्रीविका[१] नाम ( ग्रैवेयी संज्ञा वा )। पृष्ठं प्रति द्वादश अनुपृष्ठिका नाम औरसी[२] संज्ञा वा। कटिं प्रति पञ्च अनुकटिका[३] नाम। त्रिकास्थि प्रात पञ्च अनुत्रिका[४] नाम। अनुत्रिकास्थि प्रत्येका त्रिकशैषिकी[५] नाम ( २४० चित्रम् )।

एकैका च मेरुजा नाडी द्वाभ्यां मूलाभ्यामुत्थिता सुषुम्नाकाण्डपार्श्वात् पृष्ठवंशान्तरेव। तयोरग्रिमं मूलं चेष्टावहं, पश्चिमन्तु संज्ञावहम्। पश्चिमे च मूले सम्बद्धो नाडीग्रन्थिर्लघुनिम्बफलाकारः कन्दाणुपुञ्जमयः पश्चिममूलकन्दिका[६] नाम। तद्धि विश्रामस्थानं बलाधानस्थानं वा संज्ञावहसूत्राणां प्राक् सुषुम्नाकाण्डप्रवेशात्। सोऽसौ नाडीग्रन्थिः कशेरुचक्रयोरन्तरालविवरे निगूढः।

[ २४१ चित्रम् ]

## सुषुम्नाकाण्डस्य अनुप्रस्थकर्त्तिता खण्डिका।

( मेरुजनाड्या निर्गम प्रदर्शकम् )




उभयोर्मूलयोर्मिलनादेकैव नाडी एकैकतः। पश्चिममूलकन्दिका-द्वारेण च चेष्टावहसूत्राणां केषाञ्चित् सम्बन्धः स्वतन्त्र-नाडीतन्त्रीय-ग्रन्थिभरित्यग्रे प्रतिपादयिष्यामः।

---

१। Cervical Nerves. २। Thoracic Nerves. ३। Lumbar Nerves. ४। Sacral Nerves. ५। Coccygeal Nerve. ६। Spinal Ganglia.

सेयम् एकैका मेरुजा नाडी द्वयोर्मूलशाखयोर्विभज्यते अग्रिम-पश्चिमयोः[1]। तयोरग्रिमा पुरोमुखी स्थूला मुख्या च। पश्चिमा पृष्ठाभिमुखी तन्वी च, अन्यत्र प्रथमद्वितीयानुग्रीविक-नाड़ीभ्याम्। तत्र अग्रिममूलशाखासूत्रैः संज्ञाचेष्टानिर्वाहः सग्रीव-मध्यकायस्य पुरः-पार्श्वभागयोः, शाखानाञ्च। पश्चिम-विभागीयसूत्रैस्तु पृष्ठमात्रस्य। प्रशाखाश्चाग्रिममूलशाखानामेव स्वतन्त्र-नाड़ीग्रन्थिमालाभिर्मिलिताः कटि-पृष्ठ-देशयोः।

( २४२ चित्रम् )

## ग्रीवानुग-कक्षानुगाख्य प्रवेणीद्वयप्रदर्शकम्।




वा०—पार्श्विकी वेणिका। प०—पश्चिमा वेणिका। आ०—मध्यानुगा वेणिका।

ग१तो—ग८—प्रथमादि ग्रैवेयनाड्यष्टकम्। प१।प२।प३—प्रथमादि औरसी-नाडीत्रयम्।

---

१। Anterior and Posterior Divisions of Spinal Nerves.

अथ अनुग्रीविका नाड्यः।

**अनुग्रीविकाः** ('ग्रैवेयी' संज्ञा वा) नाड्यो युग्माः अष्टसंख्याः। तासामाद्यचतुष्टयस्याग्रिम-शाखाभिर्निर्मीयते ग्रीवानुगा नाम नाड़ीप्रवेणो एकैकतः। चरमचतुष्टयस्य प्रथमानुपृष्ठिकायाश्चाऽग्रिमशाखाभिस्तु कक्षानुगा नाम प्रवेणी।

तत्रायं विशेषः। प्रथमानुग्रीविकायाः पश्चिमशाखा[२] स्थूला, सा पश्चिमकपालमूलाधस्तात् चूड़ावलयाख्यकशेरुचक्रोपरि शिरःपृष्ठतो निर्गत्य 'कपालमूलिक' त्रिकोणं[३] प्रविष्टा, तस्या योजनी शाखा द्वितीयानुग्रीविकया सम्बध्यते, पेशीगाश्च शाखाः पञ्च—शिरःपृष्ठदण्डिकादि-पूर्वोक्तपेशीपञ्चकस्य प्रचेष्टन्यः। द्वितीयानुग्रीविकायाः पश्चिमशाखा पुनः स्थूलतरा वृहती कपालमूलिका[४] नाम, सा शिरोग्रीवपृष्ठे त्वचि प्रसृता।

अथ ग्रीवानुगा प्रवेणी।

**ग्रीवानुगा (ग्रैवेयी वा)** नाम नाड़ीप्रवेणी[५] एकैकतो ग्रीवापार्श्वे प्रथमादिग्रैवेयनाडीचतुष्टयस्य अग्रिममूलशाखाभिरारचिता (२४२ चित्रम्) प्रायेण वेणीवद् विन्यस्ताभिः। सा प्रथमग्रीवाकशेरुचतुष्टयस्य पुरस्तादंसोन्नमनीं पर्शकाकर्षणीं मध्यमाञ्चेति पेशीद्वयमधिरूढा। संवृता च पुरतः कर्णमूलिकया पेश्या।

द्वादश चास्याः प्रवेण्याः मुख्यशाखाः संज्ञावहाश्चेष्टावहाश्च। तासु चतस्र उत्तानाः—प्रायेण संज्ञावहाः, अष्टौ गम्भीराः संज्ञा-चेष्टावहाः। तत्रोत्तानाः यथा—

(१) एका कपालमूलिका तन्वी[६] नाम, या शंखपश्चिमत्वचि प्रसृता।

(२) अन्या कर्णमूलिनी वृहती[७] नाम, या कर्णपालिं परितस्त्वचि विस्तृता त्रिचतुराभिः प्रशाखाभिः।

(३) अन्या उत्तानग्रीविका[८] त्वाची नाम, या ग्रीवात्वचि द्वित्राभिः प्रशाखाभिः प्रसृता।

(४) अपरा ऊर्द्ध्वजत्रुका[९]—या ग्रीवामूले अंसोरसोश्च तिसृभिः प्रशाखाभिरास्तृता। ता एताश्चतस्रः शाखा उत्तानाः बहुप्रशाखाः।

---

१। Cervical Nerve. २। Suboccipital Nerve. ३। Suboccipital Triangle. (पेश्यध्याये वर्णितम्) ४। Greater Occipital Nerve. ५। Cervical Plexus. ६। Smaller Occipital. ७। Great Auricular. ८। Cutaneous Cervical. ९। Supraclavicular.

गम्भीराः शाखास्तु यथा—

चतस्रः संयोजन्यः, ताः दशमैकादश-द्वादशनाडीभिः[1] स्वतन्त्रनाडीशृङ्खलया[2] च संयोगं घटयन्ति। तासामेका द्वादशीपाशं[3] रचयति—इति दर्शितपूर्वम्। अपराः पेशीगाः—शिरःपूर्व-पार्श्व-दण्डिका-दीर्घग्रीविका-दीर्घशिरस्काख्यपेशीनाम्, उरःकर्णमूलिका-पृष्ठच्छदांऽसोन्नमनी पर्शुकाकर्षणी मध्यमा चेति पेशीचतुष्टयस्य च प्रचेष्टन्यः। अनुकोष्ठिका नाम नाडी तु पृथगेव। सेयम्—

**अनुकोष्ठिका[4] (प्रश्वसनी वा)** नाडी तृतीया-चतुर्थ-पञ्चमानुग्रीविक नाडीभ्यो मूलत्रयेणोत्थिता पश्चिमतः, विशेषात्तु चतुर्थानुग्रीविकाया नाड्याः (२४२ चित्रम्)। सा अग्रिमपर्शकाकर्षण्याः पेश्याः पुरस्तादवतीर्य्य अक्षाधरां नाम धमनीमुल्लङ्घयन्ती 'उत्तर-फुस्फुसान्तराल'मार्गेण उरोगुहान्तः प्रविशति हृत्कोषस्य एकैकस्मिन् पार्श्वे (६४ चित्रम्)। अनुसरति च तामन्तःस्तनिकाख्यधमन्या महाप्राचीराभिगा शाखा। सेयं नाडी महाप्राचीराख्यायां पेश्यां तदधस्तले च प्रशाखा-प्रतानैरास्तीर्य्यते। केचिच्च तस्याः प्रतानाः, 'उरस्याख्य'कलायां, हृत्कोषे, सौरमण्डलाख्य-नाडीचक्रे[5] च (उदरगुहान्तः) प्रसृताः। उभयोश्च अनुकोष्ठिक-नाड्योर्दक्षिणा ह्रस्वा सरला गम्भीरतरा च। उभाभ्यां प्रचेष्टिता च महाप्राचीराख्या पेशी विशेषतः प्रश्वसनकर्म्म सम्पादयतीति तयोर्नाड्योः प्रश्वसनीति संज्ञा।

अथ कक्षानुगा प्रवेणी।

**कक्षानुगा** नाम **नाड़ीप्रवेणी**[6] आदौ ग्रीवापार्श्वे, ततः कक्षादर्य्यां द्रष्टव्या, सा पञ्चम-षष्ठ-सप्तमाष्टमानुग्रीविकनाडीनां प्रथमानुपृष्ठिक-नाड्याश्च अग्रिम-मूलशाखाभिर्वेणीरचनया निर्मीयते (२४२ चित्रम्)। तदित्थम्—

पञ्चम-षष्ठ्योरनुग्रीविकयोरग्रिम-शाखाद्वयेन उत्तरा काण्डशाखा[7]। अष्टम्या अनुग्रीविकाया प्रथमानुपृष्ठिकायाश्च अग्रिमशाखाद्वयेन अधरा काण्डशाखा[8]। सप्तम्या अग्रिमशाखामात्रेण मध्यमा काण्डशाखा[9]। तत्रायं विशेषः—उत्तराधर-काण्डशाखयोः प्रायेण संयुज्येते क्रमेण चतुर्थ्या अनुग्रीविकायानाड्या द्वितीयानु-पृष्ठिकायाश्च संयोजन्यौ शाखे।

---

१। Communicating with Hypoglossal, Vagus and Spinal Accessory. २। Communicating with Sympathetic. ३। Communicantes Cervicales. ४। Phrenic Nerve. ५। Solar Plexus. ६। Brachial Plexus. ७। Upper Trunk. ८। Lower Trunk. ९। Middle Trunk.

अथासां काण्डशाखानाम् अक्षकास्थिपृष्ठमतिक्रम्य कक्षादरीं प्रविष्टानां द्वयोर्द्व योः शाखयोर्विभागः—अग्रिम-पश्चिमयोः[१] । ततः—

उत्तर-मध्यम-काण्डशाखयोरग्रिम-शाखाद्वयसंयोगेन सम्पद्यते **पार्श्विकी वेणिका**[२] बहिःपार्श्वस्था । अधरकाण्डशाखाया अग्रिमशाखामात्रेण **मध्यानुगा वेणिका**[३] अन्तःपार्श्वस्था । तिसृणामपि काण्डशाखानां पश्चिम-शाखात्रयसंयोगेन तु **पश्चिमा वेणिका**[४] । ( २४२ चित्रम् )

व्यतिकरश्च कक्षानुगप्रवेण्या इत्थं द्रष्टव्यः ।

( क ) सेयमादौ ग्रीवापार्श्वे—मन्यापृष्ठच्छदाख्य-पेश्योरन्तरालस्थे त्रिकोणे अंसोन्नमन्या अग्रिमपर्शु काकर्षण्याश्च पेश्या उत्सङ्गस्था । तां संवृणोति गलपार्श्वच्छदा नाम तन्वायता पेशी त्वगादिमात्रप्रावृता । ततः—

( ख ) कक्षादर्य्याम्—पार्श्विक-पश्चिमाख्यं वेणिकाद्वयं कक्षाधराया धमन्या बहिःपार्श्वगम् । मध्यानुगा वेणिका आदौ तस्याः पश्चिमस्था, ततोऽन्तःपार्श्वगा । एवञ्च तत्र वेणिकात्रयेण संवेष्टिता शोभतेऽसौ धमनी ( १०४ चित्रम् ) ।

अथ कक्षानुग-प्रवेण्याः शाखाप्रविभागः । स च द्वेधा कल्प्यते—अक्षकास्थ्न ऊर्द्ध्वाधोऽवस्थानभेदात् । तासाम् अष्टौ नव वा अक्षकोत्तराः[५] शाखाः प्राग्वेणिका-विभागात् सम्भवन्ति । तदनन्तरम् अक्षकाधराः,[६] ता द्वादशसंख्याः प्रायेण ।

तत्र अक्षकोत्तराः शाखाः यथा—

(१) सामान्यपेशीगाः[७] पञ्चषाः—याः पर्शुकाकर्षण्याख्यं पेशीत्रयं, दीर्घग्रीविका-मक्षकाधरां च प्रविशन्ति ।

(२) अंसपृष्ठगा[८]—पञ्चमानुग्रीविकनाडीसम्भवा । सा पर्शुकाकर्षणीं मध्यमां पेशीं निर्भिद्य अंसोन्नमनीम् अंसापकर्षणीद्वयं च प्रविष्टा ।

(३) अध्यंसिका[९]—पञ्चम-षष्ठ-ग्रैवेयनाड्योर्मूलकसम्भूता पृष्ठाभिमुखी । सा पृष्ठच्छदाख्य-पेशीसंवृता अंसशिरःकोटरेण प्रविश्य अंसकपालपृष्ठं प्राप्ता अंस-पृष्ठिकाख्यं पेशीद्वयं प्रशाखाभ्यां प्रविष्टा ।

---

१ । Ant. and Post. Divisions. २ । Lateral Cord. ३ । Medial Cord. ४ । Posterior Cord. ५ । Supra-clavicular branches. ६ । Infra-clavicular branches. ७ । Muscular branches. ८ । Dorsal Scapular Nerve. ९ । Supra-scapular Nerve.

(४) दीर्घा औरसी[१]—या पञ्चम-षष्ठ-सप्तमाऽनुग्रीविक-नाडीनां शाखात्रय-मेलकसम्भवा पृष्ठतो द्रश्या ( २४२ चित्रम् ) । सा उरःपार्श्वं गता अग्रिमारित्रां नामाऽष्टमूलां पेशीं प्रविशति अष्टाभिः प्रशाखाभिः ।

(५) अनुकोष्ठिकायोजनी[२] नाम प्रशाखा चात्र विशेषतो लक्षणीया पश्चिमतः । सा सूक्ष्मा पञ्चमानुग्रीविकासम्भवा तृतीय-चतुर्थ्योरनुग्रीविकनाड्योः पश्चिम-प्रशाखाभिः सह संयुज्यते अनुकोष्ठिकाख्य-नाडीनिर्म्माणाय ।

अथ अक्षकाधराः नाड्यः । ताः कक्षादर्य्याम् पूर्वोक्तवेणिकात्रयात् सम्भवन्ति । तद्यथा—

## १ । पार्श्विक-वेणिकातः तिस्रः, यथा ( २४२ चित्रम् )—

(१) अग्रिमौरसी[३]—पञ्चम-षष्ठ-सप्तमानुग्रीविकनाडीसम्भवा । सा कक्षाधरां धमनीमुल्लंघ्य उरसि गम्भीरं प्रसृता उरश्छदां गम्भीरां नाम पेशीं प्रविशति ।

(२) पेशीत्वगन्तिका बाहवी[४]—साऽपि पूर्ववत् सम्भूय काकोष्ठिकां पेशीं निर्भिद्य द्विशिरस्कां कूर्परद्वारिकां काकोष्ठिकाञ्च प्रविष्टा त्रिचतुराभिः प्रशाखाभिः । ततोऽसौ प्रकोष्ठपार्श्वे आ-मणिबन्धं त्वचि प्रसृता ।

(३) मध्यबाहुकायोजनी[५]—नाम चरमा स्थूलशाखा बहिःपार्श्वगा या मध्यानुगवेणिका-सम्भूतया सद्रश्या शाखया संयुक्ता मध्यबाहुकां नाम नाडीं वक्ष्यमाणां रचयति ।

## २ । मध्यानुगवेणिकातः पञ्च शाखाः—यथा ( २४२ चित्रम् )—

(१) मध्यमौरसी[६]—या अक्षकाधराख्य-धमन्याः पश्चात् प्रसृता उरश्छदां लघ्वीं नाम पेशीं प्रविशति, उरश्छदां गुर्वीञ्च द्वित्राभिः प्रशाखाभिः । तस्या अन्या प्रशाखा अग्रीमौरसी-संज्ञया नाड्या मिलिता ।

(२) प्रगण्डान्तरीया त्वाची[७]—या आदौ प्रगण्डस्य अन्तःपार्श्वे ततश्च तत्-पृष्ठे कूर्परान्तम् प्रसृता । तस्याः सम्बन्धः प्रगण्डाभिगपर्शुकान्तरिकया वक्ष्यमाणया त्वाचनाड्या—इति स्मर्त्तव्यं रोगविज्ञानाय ।

---

१ । Long Thoracic nerve. २ । To phrenic nerve. ३ । Lateral Anterior Thoracic. ४ । Musculo-cutaneous. ५ । Lateral head of Median nerve. ६ । Medial Anterior Thoracic. ७ । Medial Anti-brachial cutaneous.

(३) पुरोबाहुका ( प्रकोष्ठगा वा ) त्वाची[१]—या एकया प्रशाखया प्रगण्ड-सम्मुखीन-त्वचि प्रविष्टाऽपि अन्ते मुख्याभ्यामग्रिम-पश्चिमप्रशाखाभ्यां प्रकोष्ठस्य पुरः पश्चाच्च प्रतन्यते। तयोरग्रिमाप्रशाखा मणिबन्धान्त-मास्तृता।

(४) अन्तर्बाहुका[२]—बाहोरान्तरपार्श्वे प्रसृता मुख्या स्थूलशाखा अग्रे व्याख्येया।

(५) मध्यबाहुकारचनी मध्यानुगा[३]—नाम चरमा स्थूलतमा च शाखा या स्वसंज्ञया पार्श्विकशाखया पार्श्विकवेणिकासम्भूतया मिलिता मध्यबाहुकां नाम मुख्यनाड़ीं वक्ष्यमाणां रचयति।

३। **पश्चिमवेणिकात**श्च पञ्च शाखाः प्रभवन्ति। तद्यथा—

(१) प्रथमा अन्वंसिका[४]—या अंसान्तरिकाख्य-पेश्या उत्तरार्द्धं प्रविष्टा।

(२) द्वितीया अन्वंसिका[५]—या कटिपाश्वच्छदां पेशीमभिगच्छति।

(३) तृतीया अन्वंसिका[६]—या अंसान्तरिकाख्य-पेश्या अधराधम्, अंसाधरिकां गुर्वीं च पेशीं प्रविष्टा।

(४) कक्षाधरा ( प्रगण्डवेष्टनिका वा )[७]—या कक्षाधराख्य-धमन्याः पृष्ठतः प्रसृत्य प्रगण्डास्थि ग्रीवां संवेष्ट्य, अंसवेष्टन्या धमन्या सह अंसाधरिकां लघ्वीमंसच्छदाञ्च पेशीं शाखाद्वयेन विशति। अंससन्धिमंसशिरस्त्वचश्चाऽपरैः शाखाप्रतानैः।

(५) बहिर्बाहुका[८]—या स्थूलतमा मुख्यशाखा अग्रे सविस्तरं वर्णनीया।

### अथ बाहवी-संज्ञा नाड्यः।

**बाहवी**-संज्ञा नाड्यः पूर्वोक्तवेणिकात्रयसम्भूतास्तिस्र उद्दिष्टपूर्वाः। ताः सविस्तरं वर्ण्यन्ते शिष्यबुद्धिवैशद्याय। तत्र—

बाहोर्बहिःपार्श्वे प्रसृता बहिर्बाहुका। अन्तःपार्श्वे अन्तर्बाहुका। मध्ये मध्यबाहुका—इति तासां सामान्यतः स्थाननिर्देशः।

---

१। Medial brachial cutaneous. २। Ulnar nerve. ३। Medial head of Median nerve. ४। Upper subscapular. ५। Lower subscapular. ६। Thoraco-dorsal, ७। Axillary. ८। Radial Nerve,

( २४३ चित्रम् )

## 'बहिर्बाहुका'नाड्याः शाखाविस्तारः ।

[ गम्भीरव्यवच्छेदेन प्रदर्शितः ]



## अथ बहिर्बाहुका नाडी ।

**बहिर्बाहुका**[१] **(बहिःप्रकोष्ठिका वा)** नाम नाडी कक्षानुगप्रवेण्याः पश्चिमवेणिकासम्भवा चरमशाखा । पश्चिमवेणिका च पञ्चम-षष्ठ-सप्तमाष्टम-ग्रैवेयनाडीभ्यः प्रथमानुपृष्ठिकनाड्याश्च सम्भूतस्य पूर्वोक्तकाण्डशाखात्रयस्य पश्चिमशाखा-त्रितयसंयोगजा - इत्युक्तपूर्वम् ( द्रश्यतां २४२ चित्रम् ) ।

सेयं बहिर्बाहुका नाडी प्रगण्ड-प्रकोष्ठ-पश्चिमानां पेशी-त्वचां, करपृष्ठत्वचश्च अनुप्राणनी कक्षादर्य्यां कक्षधराधमन्या अन्तःपार्श्वगा, प्रगण्डास्थ्नश्च षडंगुलं यावत् । ततः क्रमेण वक्रगत्या प्रगण्डपृष्ठे त्रिशिरस्काख्य-पेश्याः शिरोद्वयान्तराले, प्रगण्डास्थिपृष्ठस्थ-सीतायां च प्रसृता तन्मध्यनलकं तिर्य्यक् संवेष्टयति पश्चिमतः । प्रकाशते च कूर्परसन्धेर्बहिःसीम्नि दीर्घायाः 'करोत्तानती'पेश्या आन्तरसीमानुगता स्वनामिकाया धमन्याः सहचरीभूता । विभज्यते च कूर्परसन्धेः पुरस्ताद् अग्रिम-पश्चिमयोश्चरमशाखयोः । ते च बहिःप्रकोष्ठिनी, प्रकोष्ठान्तराला पश्चिमा चेति नाम --इत्यस्या व्यतिकरः ( २४३ चित्रम् ) ।

इमाश्चास्याः शाखाः प्राग् विभागाद् द्रष्टव्याः—

( क ) पेशीगाः[२]—ता स्त्रेधा निपतन्ति—अन्तःसीम्नि, बहिःसीम्नि, पश्चिम-सीम्नि च । ताः त्रिशिरस्कां, कूर्परपृष्ठिकां, दीर्घां करोत्ताननीं, मणिबन्धापकर्षणीं दीर्घां, कूर्परद्वारिकाञ्चेति पेशीपञ्चकं पृथक् प्रतानैः प्रविशन्ति । प्रकोष्ठपश्चिमाश्च पेशीः पश्चिमया प्रकोष्ठान्तरालाख्य-शाखया ।

( ख ) त्वाचशाखाः—ताः प्रायेण तिस्रः—प्रगण्डपश्चिमा त्वाची,[३] प्रगण्ड-पूर्विका त्वाची,[४] प्रकोष्ठपश्चिमा त्वाची[५] चेति नाम । तासां क्रमेण कक्षोपकण्ठे, त्रिशिरस्काख्यपेशीनिर्भेदनेन बहिःपार्श्वे, प्रगण्डपश्चिमतश्च शाखाप्रतानास्त्वचि प्रसरन्ति ।

विभागादनन्तरं तु द्वे शाखे बहिर्बाहुकायाः यथा—

१ । बहिःप्रकोष्ठिनी ( बहिःप्रकोष्ठिका वा )[६]—नाम प्रथमा शाखा प्रकोष्ठ-पुरस्तादुत्तानगा बहिर्बाहुकाया अनुवृत्तिरूपा । सा दीर्घया करोत्ताननीपेश्या संवृता स्वनामिकां धमनीमनुसरन्ती मणिबन्धपृष्ठं गता द्वेधा विभज्यते बहिरन्तः-

---

१ । Radial nerve. २ । Muscular branches. ३ । Posterior brachial cutaneous nerve. ४ । Anterior brachial cutaneous nerve. ५ । Dorsal anti-brachial cutaneous nerve. ६ । Superficial branch of the Radial Nerve ( old name—Radial nerve ).

पार्श्विकयोः शाखयोः। तयोराद्या अंगुष्ठमूलत्वचः संज्ञावाहिनी। द्वितीया अंगुलित्रयपृष्ठत्वचाम्, सा च पेशीत्वगन्तिकायाः प्रशाखया मणिवन्धोपरिष्टा-न्मिलिता, अन्तर्वाहुकायाः पश्चिमत्वाचशाखया च करपृष्ठे नाडीधानुषीरचनाय। तस्याश्च धानुष्याः तिस्रः प्रशाखाः इत्थं करपृष्ठे सार्धांगुलित्रयपार्श्वेषु प्रसृताः— प्रथमा अंगुष्ठमुभयतस्तर्जनी-वहिःपार्श्वे च, द्वितीया तर्जनी-मध्यमयोः सन्निहित-पार्श्वेषु तृतीया मध्यमानामिकयोस्तद्वत्।

२। प्रकोष्ठान्तराला पश्चिमा[१] नाम वहिर्वाहुकाया गम्भीरशाखा ह्रस्वां करोत्ताननीं पेशीं निर्भिद्य प्रकोष्ठपृष्ठं गता प्रकोष्ठपश्चिमानामुत्तान-गम्भीर-पेशीनां (दीर्घकरोत्ताननी कूर्परपृष्ठिकाख्य पेशीद्वयवर्जं सर्वासाम्) प्रचेष्टनी। सेयमन्ते प्रकोष्ठपृष्ठस्याधर-तृतीयांशे तनूभूता प्रकोष्ठान्तरालां कलामधिशयाना मणिवन्धाधः नाडीग्रन्थिमिव रचयति, प्रतनोति च कूर्चान्तरीयसन्धिषु मणिवन्धसन्धौ च शाखाप्रतानान् (२४३ चित्रम्)।

### अथ मध्यवाहुका।

**मध्यबाहुका (मध्यप्रकोष्ठिका वा)**[२] नाम नाडी पार्श्विक-मध्यानुग-वेणिकयोः योजन्याख्य शाखाद्वयमेलकसम्भवा (२४२ चित्रम्)। तत्सूत्राणि पञ्चम्यादिग्रैवेयनाडीचतुष्टयस्य प्रथमानुपृष्ठिकायाश्च अग्रशाखाप्रभवाणि। सा कक्षापुरस्तात् स्वमूलद्वयेन कक्षाधरां धमनीं क्रोडीकृत्य तामेव अग्रे 'वाहवी'-संज्ञामनुसरति, प्रसरति च तस्याः वहिःपार्श्वे पुरस्तादन्तःपार्श्वे च क्रमेण आ-कूर्परसन्धिम्। तत्र च कूर्परपट्टिकाख्य-स्नायुपट्टिकया संवृताऽसौ दीर्घायाः करविवर्त्तनी-पेश्याः मूलद्वयान्तरालेन प्रकोष्ठपुरःस्थासु पेशीषु गम्भीरं प्रविशति।

एवंगता च सा अङ्गुलीसंकोचन्या मध्यपर्विकया पेश्या संवृता तदाख्यामग्रपर्विकां पेशीमधिरुह्य मणिवन्धसन्धिं यावत् सरलं धावति, स्वशाखया अग्रिमप्रकोष्ठान्त-रालीययाऽनुसृता (२४४ चित्रम्)। ततो मणिवन्धसन्धेः पुरस्तात् कङ्कणिकाख्य-स्नायुपट्टिकानिर्मिते सुरङ्गपथे अंगुलीसंकोचन्याख्यपेशीद्वयस्य कण्डराष्टकेन सह दीर्घायाः अंगुष्ठसंकोचन्याः पेश्याः कण्डरया च प्रसृता करतलमध्ये द्वयोश्चरम-शाखयोर्विभज्यते। तत्प्रशाखाश्च संज्ञावहाः पञ्च अंगुष्ठाद्यंगुलित्रयपार्श्वेषु अनामिकाया वहिःपार्श्वे च पूर्ववद् विभागेन प्रसृताः।

---

१। Deep branch of the Radial Nerve (Posterior Interosseous nerve).

२। Median Nerve.

( २४४ चित्रम् ) **बाहुपुरस्त्या नाड्यः ।**



पेशीगाश्चास्याः शाखाः द्विविधाः—

(क) कूपरसन्धिपुरोगाः[१]—याः सर्वा अपि करविवर्त्तन्याद्याः प्रकोष्ठपुरोगाः पेशीः (मणिवन्धसंकोचनीं विहाय) प्रविशन्ति। तासु विशेषतो लक्षणीया अग्रिमा प्रकोष्ठान्तराला शाखा वर्णितपूर्वा या प्रकोष्ठपुरःस्थस्य गम्भीरपेशीत्रयस्य प्रचेष्टनी।

(ख) अंगुष्ठमूलगाः[२]—याः अंगुष्ठमूले अंगुष्ठापकर्षणीं ह्रस्वां, अंगुष्ठजापिनीं, अंगुष्ठसंकोचनीं ह्रस्वाञ्चेति पेशीत्रयं प्रविष्टाः।

त्वाचशाखे अपि तस्याः करतल-करपृष्ठगे द्रष्टव्ये।

अथ अन्तर्वाहुका।

३। **अन्तर्वाहुका ( अन्तःप्रकोष्ठिका वा )**[३] नाम नाडी कक्षानुग-प्रवेण्या आन्तर ( मध्यानुग ) वेणिकासम्भूता, तत्सूत्राणि अष्टमानुग्रीविक-प्रथमानु-पृष्ठिकनाडीप्रभवाणि। सेयं प्रगण्डान्तःपार्श्वे वाहवीं धमनी मनुसरन्ती तन्मध्यदेशे पेश्यन्तरालां कलाप्राचीरिकां निर्भिद्य पश्चिमतो गता प्रगण्डास्थ्न आन्तरावुर्दं यावत् प्रसरति मणिवन्धसंकोचन्या अन्तःस्थायाः पेश्या मूलद्वयान्तराले। ततोऽसौ प्रकोष्ठपुरस्तात् तयैव पेश्या संवृता अंगुलीसंकोचनीमग्रपर्विकां पेशीमधिशेते उत्तरार्धमात्रे प्रकोष्ठपुरोभागस्य। अधरार्धे तु सा अन्तःप्रकोष्ठिकां धमनीमनुसरति त्वक्-कलामात्रप्रावृता आ-मणिवन्धम्। मणिवन्धेऽपि कङ्कणिकापुरःस्थैव सा द्वयोः शाखयोर्विभज्यते— अग्रिम-पश्चिमयोरुत्तान-गम्भीर करतलिकाख्ययोः नाड्योः।

अथेमाः शाखा अन्तर्वाहुकायाः प्राग्विभागाद् द्रष्टव्याः—

(१) सन्धिगे[४]—द्वे कूपरसन्धिं मणिवन्धसन्धिञ्च प्रविष्टे।

(२) पेशीगे[५]—द्वे मणिवन्धसंकोचनीमन्तःस्थामंगुलीसंकोचनीमग्रपर्विकाञ्च प्रविष्टे।

(३) त्वाचशाखाश्च वहवः[६]—अग्रिम-पश्चिमाख्यचरमशाखाद्वय[७]-समुत्थाः प्रकोष्ठे करतले च प्रसृताः। तत्र प्रकोष्ठीयाः मणिवन्धसन्धिं परित आस्तृताः करतले च। करतलीयास्तु पृथगेव करतल-करपृष्ठयोरुत्तानं गम्भीरञ्च प्रविष्टाः त्वङ्मांसगतां संज्ञां निवहन्ति।

---

१। Volar Interosseous nerves ( Anterior interosseous ). २। Palmar branches. ३। Ulnar Nerve. ४। Articular branches. ५। Muscular branches. ६। Cutaneous branches. ७। Volar and Dorsal branches.

तत्राप्ययं विशेषः। अग्रिमशाखायाः करतलगता उत्तान-प्रशाखाः कनिष्ठांगुलि-मुभयतः, अनामिकाऽन्तःपार्श्वे चेति सार्धांगुलिमात्रे प्रसृताः। गम्भीरप्रशाखास्तु कनिष्ठामूलगाः पेशीः, अंगुलीमूलशलाकान्तरीयाश्च प्रविशन्ति करतलधानुषीं गम्भीरां नाम धमनीमनुवर्त्तमानाः।

अथ अनुपृष्ठिका नाड्यः।

**अनुपृष्ठिकाः**[१] **(औरसी-संज्ञा वा)** नाड्यः पृष्ठकशेरुकाणां चक्रान्तराल-विवरैर्निर्गताः एकैकतो द्वादशेत्युक्तपूर्वम्। तासां प्रथमा प्रथम-द्वितीय-पृष्ठकशेरु-चक्रयोरन्तरालस्थविवरेण निर्गता। द्वितीया द्वितीय-तृतीय-पृष्ठकशेरुचक्रयोः। एव मग्रेऽपि। द्वादशी तु द्वादशपृष्ठकशेरुका-प्रथमकटिकशेरुकयोश्चक्रान्तराल-विवरेणेति विशेषः।

( २४५ चित्रम् )

## अनुपृष्ठिकनाडीनां गतिमार्गः।

( उरसः अनुप्रस्थच्छेदेन सामान्यतो दर्शितः। )




१। उरस्त्रिकोणिका पेशी। २। अन्तःस्तनिका धमनी। ३। स्वतन्त्रनाडी योजनी। क। कशेरुका।

[१] Thoracic nerves.

## (२४६ चित्रम्) अनुपृष्ठिकनाडीनां पश्चिमशाखाविस्तारः।




चित्रव्याख्या। ५—अनुपृष्ठिका नाड्याः पश्चिमप्रशाखा। च—त्रिकपृष्ठिकाख्य पेशी विभागः।

एकैका च अनुपृष्ठिका नाडी मेरुजनाडी पूर्ववद् द्वयोर्मूलशाखयोर्विभज्यते अग्रिम-पश्चिमयोः। तयोरग्रिमशाखा एकैकां पर्शुकामनुसरति तदधोधाराऽनुवर्त्तिनी। पश्चिमा तु पश्चिमतो निर्गता।

अथासां शाखानां पश्चिमाः प्रथमं व्याख्यायन्ते स्वल्पविषयत्वात्। ता हि पृष्ठकशेरुकाणां बाहुप्रवर्द्धनान्तरालानाश्रित्य पश्चिमतो निर्गताः प्रत्येकं द्वेधा विभज्यन्ते त्रिकपृष्ठिकाख्याया दीर्घतमपृष्ठपेश्याः पृष्ठतः, निर्गच्छन्ति च तदुभयतो बहिरन्तःपार्श्वयोः। तासां पृष्ठानुगेति संज्ञा[1]। तच्छाखाभिरनुप्राणिताः प्रायेण सर्वा अपि पृष्ठपेश्यः। पृष्ठस्थास्त्वचोऽपि।

तत्रायं विशेषः। प्रथमषट्कस्य अन्तःपार्श्विकाः शाखाप्रतानास्त्वचि प्रसृताः, बहिःपार्श्विकास्तु पेशीषु। द्वितीयषट्कस्य तु तद्वैपरीत्यम्।

अग्रिमाः शाखाः पुनरनुपृष्ठिकनाडीनां पर्शुकान्तरिकाः[2] (पर्शुकानुगा वा) नाम। ता हि पर्शुकानामधोधारासु प्रसरन्ति---अन्तर्बहिःसंज्ञानां पर्शुकान्तरिक-पेशीनामन्तरालस्थासु स्नायुरक्षितपरिखासु सु-धृताः स्वनामक-सिराधमनीसाहचर्य्येण।

तासां प्रथमषट्कस्यातिघनिष्ठः सम्बन्धः फुस्फुसच्छदया कलया। प्रशाखाश्च तासां पार्श्वमध्यतो मांसं निर्भिद्य निर्गताः पार्श्वगा त्वाची[3] ति संज्ञाधारिण्यः। चरमाश्च तत्प्रशाखाः पुरस्ताद् उरःफलकपार्श्वतो विनिर्गताः अग्रिमा त्वाची[4] ति संज्ञाधराः।

पर्शुकाधरधारास्थ-परिखासु प्रचरन्तीनां च तासां शाखाः पर्शुकान्तरिकाख्य पेशीषु प्रविष्टाः।

द्वितीयषट्कस्य तु पूर्ववदेव प्रसृतस्य उदर्य्यपेशीषु उदर्य्यत्वक्षु च प्रवेशः।

सोऽयं सामान्यतो निर्देशः। विशेषतस्तु---प्रथमाया अनुपृष्ठिकनाड्या अग्रिमशाखा कक्षानुगनाडीप्रवेण्या मिलितेत्युक्तचरम्। तस्यास्तन्वी प्रशाखा प्रथमपर्शुकामनुवर्त्तते।

द्वितीयायाः पार्श्वगा त्वाची प्रशाखा परावृत्य कक्षादरीं प्रविष्टा प्रगण्डान्तरीयां त्वाचीं नाम मध्यानुगवेणिकासम्भवां शाखामाश्लिष्यति। सेयं प्रगण्ड-पर्शुकान्तरिका त्वाची नाम[5]।

---

१। Posterior Division of the Thoracic Nerve. २। Thoracic Intercostal Nerves. ३। Lateral Cutaneous branch. ४। Anterior Cutaneous branch. ५। Intercosto-brachial Nerve ( Nerve of wrisberg ).

( २४७ चित्रम् )

## अनुपृष्ठिकनाडीनामग्रिमशाखाविस्तारः ।




**चित्रव्याख्या**—१। कक्षानुगा प्रवेणी। २।३।३ पर्शुकान्तरिकाख्यं नाडीत्रयं सशाखम्। ४।७।८। पर्शुकान्तरिकनाडीनां पार्श्वगाः त्वाचशाखाः। ५। सैव प्रगण्डाभिगा शाखा। ६। प्रगण्डान्तरीया त्वाची। ९। वस्तिजघनिका नाडी। १०। ऊरुपार्श्विकी त्वाची। ११। पर्शुकान्तरिकानाडीनामग्रिमाः त्वाचशाखाः। १२। वंक्षणोपस्थिका नाडी। १३। और्वीनाड्याः त्वाच शाखाः।

क—महारित्ना पेशी। ख—पर्शुकान्तरिका अन्तःस्था पेशी। ग—उदरदण्डिका पेशी। घ—उदरच्छदा चरमा पेशी। च—वस्तिचूड़िका पेशी।

द्वादशी अनुपृष्ठिका[1] नाम नाडी स्थूलतमा सजातीयासु । तस्या अग्रिमशाखा द्वादशपर्शुकाधो वृक्कपृष्ठे कटिचतुरस्राख्य-पेश्याः पुरोदृश्या । सा प्रथमानुकटिकां नाडीं स्तोकेन स्पृशन्ती उत्तरच्छदाख्य-पेशीषु प्रशाखाः प्रतनोति, विभज्यते च प्रशाखयोर्जघन-वंक्षणानुगयोः । त्वाची चास्याः पार्श्वगा प्रशाखा जघनास्थिधारा-मनुसरन्ती नितम्बत्वचि प्रसृता ऊर्वस्थिमहाशिखरं यावदिति विशेषः ।

अथ अनुकटिका नाड्यः ।

**अनुकटिकाः**[2] नाम नाड्यः कटिकशेरुकाणां चक्रान्तरालविवरै र्निर्गताः पञ्च पञ्च एकैकतः ( २४८ चित्रम् )। ताः आपातदृष्ट्या सुषुम्नाकाण्डस्य तुरङ्ग-पुच्छिका-प्रभवाः । तासामपि एकैकस्या द्वे द्वे मूलशाखे अग्रिम-पश्चिमभेदेन पूर्ववत् । तत्र एकैका पश्चिमा मूलशाखा द्वयोर्द्वयोः कशेरुकयोर्बाहुप्रवर्द्धनान्तरालेन पृष्ठतो गत्वा द्वेधा विभज्यते मध्यानुग-पार्श्विकाख्ययोः शाखयोः । तत्र सर्वा अपि मध्यानुगशाखाः पृष्ठपेशीषु गम्भीरं प्रविष्टाः । पार्श्विकशाखास्तु पेशीगास्त्वाचाश्च । तासु प्रथमादिनाडीत्रयस्य त्वाचशाखाः आ-नितम्बं प्रसृताः—इति विशेषः ।

अग्रिममूलशाखाः पुनः श्रोणिगुहाभ्यन्तरे कटिवंशपुरस्ताद् दीर्घायाः कटि-लम्बिन्याः पेश्याः पश्चिमतः प्रसर्पन्ति । तासां प्रथमचतुष्टयेनारच्यते कटिपूर्विका नाम प्रवेणी ( २४८ चित्रम् )। चतुर्थ्या अग्रिममूलशाखांशयुक्तया पञ्चम्यग्रिम-शाखया तु कटित्रिकिणी[3] नाम स्थूला काण्डशाखा अग्रे वक्ष्यमाणा । सा त्रिक-पूर्विकां नाडीप्रवेणीं प्रविशति ।

अथ कटिपूर्विका नाडीप्रवेणी ।

**कटिपूर्विका** नाम **नाड़ीप्रवेणी**[4] अनुकटिकाख्य नाडीनां प्रथमचतुष्टया-ग्रिमशाखाभिः निर्म्मिता । सा दीर्घया कटिलम्बिन्या पेश्या संवृता, तां निर्भिद्य अधोऽधः प्रसृता, क्रमेण सप्तभिः शाखाभिः वस्ति-जघन-वंक्षणोपस्थ-वृषणोरु-देशीयास्त्वचः पेशीश्च प्रविशति ( २४८ चित्रम् )। तदित्थम्—

(१) वस्तिजघनिका[5] नाम शाखा प्रथमानुत्रिक-नाड्याः अग्रशाखा-मिलितायाः द्वादशानुपृष्ठिक-नाडीशाखायाः सम्भूता । सा कटिचतुरस्रां पेशीमुल्लंघ्य पुरस्खलिता औदर्य्यपेशीर्निभिद्य वहिःपार्श्वे जघनधारान्तं प्रसर्पति । तत्प्रशाखाद्वयं वस्तिपुरोभागे जघनपार्श्वे च त्वचि प्रततम् ।

---

१। Twelfth Thoracic Nerve. २। Lumbar Nerves. ३। Lumbo-sacral Trunk. ४। Lumbar Plexus. ५। Ileo-hypogastric Nerve.

( २४८ चित्रम् )

# कटिपूर्विका-त्रिकपूर्विकाख्य प्रवेणीद्वयम् ।




१। त्रिकशैषिकी नाडी। २। मूलाधारिणी। ३। गुदोपस्थिका। ४। नितम्बाधरीया त्वाची। ५। अनुगृध्रसी। ६। श्रोणिगवाक्षिणी अन्तःस्थाभिगा। ७। ऊरुचतुरस्राभिगा। ८। अधरा नितम्बिनी। ९। उत्तरा नितम्बिनी। १०। ऊरुवृषणिका नाडी।

क१। क२। क३—इत्यादि संख्या अनुकटिका नाड्यः। ख—गृध्रस्यां पश्चिमजंघिकाया नाडीसूत्राणि। ग—तत्रैव पुरोजंघिकाया नाडीसूत्राणि। त१। त२। त३—इत्याद्या अनुत्रिका नाड्यः। प१२—द्वादशी पर्शुका।

(२) बंक्षणोपस्थिका[१] नाम शाखा पूर्वोक्तनाडीसहचरी तद्वत् सम्भूय उदरच्छदां मध्यमां पेशीं निर्भिद्य ( संयोज्य च तां प्रशाखया ) वृषणवन्धनीमनुसरन्ती वंक्षणसुरङ्गापथेनावतरति, प्रतन्यते च वृषणोपस्थयोस्त्वाच-शाखाप्रतानैः।

(३) ऊरुवृषणिका[२] नाम शाखा प्रथम-द्वितीयानुकटिक-नाडीशाखाद्वयमेलकजा ( २४८ चित्रम् ) दीर्घां कटिलम्बिनीं पेशीं निर्भिद्य पुरस्तात् प्रशाखाद्वयेन प्रसृता। तयोराद्या प्रशाखा ऊरुवंक्षणिका[३]-संज्ञा, सा बंक्षणदर्य्या मौर्वीं धमनी-मनुसरन्ती ऊरुपुरोभागे वंक्षणे च त्वाचशाखाप्रतानैः प्रतता। द्वितीया प्रशाखा अनुवृषणिका[४] नाम, सा बंक्षणसुरङ्गायां वृषणवन्धन्या सहावतीर्णा फलकोषकर्षणीं पेशीं प्रविशति, त्वचं च वृषणोपस्थयोः।

(४) ऊरुपार्श्विकी त्वाची[५] नाम शाखा स्थूलतरा द्वितीय-तृतीयानुत्रिकनाड्यो-रग्रिमशाखाद्वयस्य पश्चिमप्रशाखायुगसंयोगजा ( २४८ चित्रम् )। सा दीर्घां कटिलम्बिनीं पेशीं निर्भिद्य, श्रोणिपक्षिणीं पेशीमुल्लंघयन्ती तिर्य्यक् प्रसृता। तस्याः अग्रिम-पश्चिमप्रशाखाद्वयमूरोः पुरः-पार्श्व-पश्चिमत्वक्षु प्रतायते।

(५) बंक्षणिका[६] नाम शाखा द्वितीय-तृतीय-चतुर्थानुत्रिकनाडीनामग्रिमशाखानां पूर्वप्रशाखात्रयसंयोगजा ( २४८ चित्रम् )। सा श्रोणिगवाक्षमार्गेण श्रोणिगुहातो निर्गच्छति। तस्या द्विविधाः प्रशाखाः—पेशीगाः सन्धिगाश्चेति। तत्र पेशीगाः श्रोणिगवाक्षिणीं बहिःस्थां पेशीम्, ऊरुसंव्यूहनी-संज्ञं पेशीत्रयञ्च प्रविशन्ति। सन्धिगाः बंक्षणसन्धिं जानुसन्धिञ्च। त्वाचाश्च कदाचिदस्याः प्रतानाः ऊरु-जंघयोस्त्वचि प्रसरन्ति।

(६) अनुबंक्षणिका[७] नाम शाखा तृतीय-चतुर्थानुत्रिकनाड्योरग्रिमशाखाद्वय-संयोगजा। सा बंक्षणदर्य्यां भगास्थ्न उत्तरशृङ्गमुल्लंघ्य कंकतिकां पेशीं बंक्षण-सन्धिञ्चाभिगच्छति। नापि दृश्यते कदाचित्।

(७) **और्वी**[८]( अग्रिमा और्वी, पुरःसक्थिका वा ) नाम स्थूलतमा शाखा द्वितीय-तृतीय-चतुर्थानुत्रिक-नाडीनामग्रिमशाखात्रयस्य पश्चिम-विभागत्रितय-

---

१। Ilio-inguinal Nerve. २। Genito-femoral or Genito-crural Nerve. ३। Lumbo-inguinal Nerve (crural branch) ४। External spermatie Nerve ( genital branch ). ५। Lateral Femoral cutaneous Nerve ( external cutaneous ). ६। Obturator Nerve. ७। Accessory Obturator Nerve. ८। Femoral Nerve (Ant. Crural).

## (२४६ चित्रम्) और्व्यानाड्याः शाखाविस्तारः।



संयोगजा। सा पूर्ववद् वंक्षणदर्य्यां स्वनामिकां धमनीमनुसरन्ती त्रिविधाः प्रशाखाः प्रतनुते--पेशीगाः सन्धिगाः, त्वाचीश्च। तत्र—

(क) पेशीगाः[1] षट्—ताः कंकतिकां, दीर्घायामाम्, उदरदण्डिकाम्, उरुप्रसारणीसंज्ञं पेशीषट्कं च प्रविष्टाः।

(ख) सन्धिगाः[2]—वंक्षणसन्धिमभिगताः।

(ग) त्वाच प्रशाखास्तिस्रः यथा—उरुमध्यगा त्वाची[3] पुरतः, उरुजानुगा त्वाची[4] ऊरोरधरार्धे अन्तःपार्श्विकत्वचि। उरुजंघिका त्वाची[5] और्व्यीधमन्या सह ऊरुसंव्यूहनीं गरिष्ठां पेशीं निर्भिद्य, ऊरोरन्तः-पार्श्वे उत्तानीभूय दीर्घोत्तानां सिरामनुसरति यावदंगुष्ठमूलम्। तत् प्रतानाः जानुपुरोभागे जंघापादयोरन्तः पार्श्वे च प्रसृताः। तन्निर्मितं च नाडीचक्रद्वयमपि तत्र लक्षणीयम्। जानुकपाल-सम्मुखतः परिजानुकं[6] नाम, दीर्घायामाख्य पेश्यधश्च दीर्घायामाधरिकं[7] नाम।

### अथ अनुत्रिका नाड्यः।

**अनुत्रिका**[8] नाम सुदीर्घा नाड्यः त्रिकास्थ्नः पुरः-पश्चिमविवरैर्निर्गच्छन्ति अग्रिम-पश्चिममूलशाखाविभागेन। ताः पञ्च पञ्च एकैकतः, आपातदृष्ट्या सुषुम्ना-काण्डस्य तुरङ्गपुच्छिकाप्रभवाः। सा च वर्णितपूर्वा (१७ पृष्ठे)।

अथाऽसां पश्चिमशाखाः ह्रस्वास्तनवश्च। तत्रायं विशेषः—प्रथमचतुष्टयं त्रिकास्थ्नः पश्चिमविवरैः निर्गच्छति पञ्चमी त्रिकाऽनुत्रिकास्थ्नोः सन्धानस्थेन पश्चिमविवरेण। सर्वाश्च ताः मेरुधारिणीं पेशीं निर्भिद्य तां, त्रिक-नितम्बत्वचश्च प्रीणयन्ति। चतुर्थ-पञ्चम्योः पश्चिमशाखे, त्रिकशैषिक्याः पश्चिमशाखा च त्रिका-धरदेशीयत्वचि प्रसृताः।

अग्रिमशाखाः पुनरनुत्रिकनाडीनां त्रिकाग्रिमविवरेभ्यो निर्गत्य स्वतन्त्रनाडी-ग्रन्थिभिरादौ सम्बन्धं विदधते। तासां प्रथमनाडीत्रितयेन कटित्रिकिण्या सह निर्मीयते त्रिकपूर्विका नाम नाडीप्रवेणी[9] वक्ष्यमाणा। द्वितीय-तृतीय-चतुर्थीनाम-ग्रिमशाखांशैश्च गुदोपस्थिका[10] नाम नाडी, या पञ्चमानुत्रिकनाड्याः त्रिकशैषिका-

---

१। Muscular branches. २। Articular branches. ३। Intermediate Cutaneous Nerve. ४। Medial or Internal Cutaneous Nerve. ५। Saphenous Nerve (Long or Internal Saphenous Nerve). ६। Plexus Patellae. ७। Sub-sartorial Plexus. ८। Sacral Nerves. ९। Sacral Plexus. १०। Pudendal Nerve.

( २५० चित्रम् )

# कटिपूर्विका प्रवेणी प्रदर्शकम्।

[ उदरपुरःस्थाः पेश्यः अन्त्राणि च गम्भोर-व्यवच्छेदेन अपसारितानि ]




## चित्रव्याख्या।

१। बस्तिजघनिका नाडी। २। वंक्षणोपस्थिका नाडी। ३। ऊरुपार्श्विकी त्वाची नाडी। ४। कटितिकिणी काण्डशाखा। ५। और्वी नाडी। ६। अनुवंक्षणिका नाडी। ७। ऊरुसंव्यूहनी गरिष्ठा पेशी ( पार्श्वे समाकृष्य प्रदर्शिता )। ८। कटिलम्बिनी दीर्घा पेशी। ९। श्रोणिपक्षिणी पेशी। १०। वंक्षणिका स्नायुरज्जुः। ११। दीर्घायामा पेशी। १२। और्बी नाडी। १३। ऊरुकंचुकाकर्षणी।

याश्च शाखाप्रतानै वस्तिगुहान्तरीयानाशयान्, अनुत्रिकिणीं पेशीं गुदपश्चिमां त्वचं च प्रीणयति। एतच्च मेलकं गुदोपस्थिकं नाम नाडीचक्रमिति[1] केचित्।

अथ त्रिकपूर्विका नाडीप्रवेणी।

**त्रिकपूर्विका** नाम महती नाडीप्रवेणी पूर्वोक्त कटित्रिकिण्याख्यकाण्ड-शाखया प्रथमानुत्रिक-नाडीत्रयस्य अग्रिमशाखाभिश्च वेणीरचनया निर्म्मिता। दृश्यते च सा वस्तिगुहायां त्रिकास्थिपुरस्तात् तत्सम्बद्धशुण्डिकाख्यपेशीमूलान्य-धिशयाना, सुसंवृता चासौ वस्तिगुहान्तरीयाख्य कलया। तस्याः पुरस्ताद् दृश्याः—बृहदन्त्रकुण्डलिका, तत्पार्श्वीया गवीनी, धमनी च अधिश्रोणिकाऽभ्यन्तरी नाम (२४८।२५१ चित्रयोः)।

सर्वाश्च ताः प्रवेणीविरचन्यो नाड्यः अग्रिम-पश्चिमशाखासु विभज्यन्ते। तासां च वेणीवत् संयोगैर्विरच्यन्ते मुख्याः शाखाः, यासु प्रधानभूते द्वे नाड्यौ पुरोजंघिका साधारणी, पश्चिमजंघिका चेति। तयोर्मेलकसम्भूता महागृध्रसी नाम नाडी गृध्रसीविवरेण बहिर्गता।

गुदोपस्थिका नाम नाडी तु द्वितीय-तृतीय-चतुर्थानुत्रिकनाडीशाखाप्रभवा गृध्रस्या अनुचरी, सा गुदोपस्थिक नाडीचक्रवर्णने व्याख्येया।

इमाश्च त्रिकपूर्विकाख्य नाडीप्रवेण्याः शाखाः—

१। उत्तरानितम्बिनी[2]—या चतुर्थ-पञ्चम्योरनुकटिकनाड्योः प्रथमानुत्रिक-नाड्याश्च अग्रिमशाखात्रयस्य पश्चिमांशेभ्यो मूलत्रयेण प्रभवति। सेयं शुण्डिकाख्य-पेशीमधिरुह्य गृध्रसीद्वारान्निर्गता उत्तराधर-शाखयोर्विभज्यते नितम्बपिण्डिकां मध्यमां कनिष्ठाञ्च पेशीं प्रवेष्टुम्।

२। अधरा नितम्बिनी[3]-या पञ्चमानुकटिकायाः प्रथम-द्वितीयानुत्रिकनाड्योश्च अग्रिमशाखात्रयसम्भूतस्य पश्चिमशाखात्रिकस्य संयोगजात् काण्डान्मूलत्रयेणोद्भूता। सा शुण्डिकाख्य-पेश्यास्तलधारानुवृत्त्या गृध्रसीद्वारान्निर्गत्य नितम्बपिण्डिकां गरिष्ठां नाम पेशीं प्रविशति।

३। शुण्डिकाभिगा[4]—या द्वितीयानुत्रिकनाड्या अग्रिमशाखा पश्चार्द्धसम्भवा शुण्डिकाख्यां पेशीं प्रविशति।

---

१। Pudendal Plexus. २। Superior Gluteal Nerve. ३। Inferior Gluteal Nerve. ४। Nerve to the Piriformis.

( २५१ चित्रम् )

## गुदोपस्थिकानाड्याः शाखाप्रतानाः त्रिकपूर्विकाप्रवेणी च ।

[ श्रोणिगुहार्द्धस्य गम्भीरव्यवच्छेदेन अन्त्राणि अपसारितानि ]




**चित्रव्याख्या**—१। साधारणी अधिश्रोणिका धमनी दक्षिणा। २। आभ्यन्तरी अधिश्रोणिका धमनी। ३। वंक्षणिका नाडी। ४। बहिःस्था अधिश्रोणिका धमनी। ५। उत्तरा नितम्बिनी नाडी। ६। श्रोणिवंक्षणिका धमनी। ७। श्रोणिगवाक्षिणी अन्तःस्था पेशी। ८। पायुधारिण्यभिगा नाडी। ९। पायुधारिणी पेशी। १०। मूत्रप्रसेकः। ११। त्रिकास्थिपार्श्वस्थं सन्धिलक्ष्म। १२।२३। स्वतन्त्रनाडीग्रन्थिद्वयम्। १३। उत्तरा नितम्बिनी धमनी। १४। कटित्रिकियाः काण्डशाखाः। १५।१७।२१।२२।२५।२८।—अनुत्रिक नाडीनामग्रिमशाखाः। १६। शुण्डिकाख्या पेशी (वामा)। १८। सैव (दक्षिणा)। १९। त्रिकपूर्विका प्रवेणी। २०। श्रोणिगवाक्षिणी अन्तःस्थां प्रति नाडी। २४। त्रिकपूर्विका प्रवेण्याः शाखाः। ३०।२६। मूलाधारिणी नाडी। २७। अनुत्रिकिणी पेशी। २९। गुदोपस्थिका नाडी। ३१। त्रिकशैषिकी नाडी। ३२।३३।३४।—मूलाधारिणी नाड्याः शाखाप्रतानाः। ३५। ऊरुपश्चिमा त्वाचीनाडी।

४। ऊरुचतुरस्रिणी[१]—या कटित्रिकिण्याः प्रथमानुत्रिकनाड्याश्च अग्रिम-प्रशाखासम्भवा। सा ऊरुचतुरस्राख्यां पेशीं यमलाञ्चाधरां प्रविशति।

५। श्रोणिगवाक्षिणी[२]—या कटित्रिकिण्याः प्रथमानुत्रिकनाड्याश्च अग्रिम-प्रशाखासम्भवा। सा स्वनामिकामन्तःस्थां पेशीमुत्तरयमलाञ्च प्रविशति। सेयम् गृध्रसीद्वारेण निर्गत्य कुकुन्दरकूटमुल्लंघ्य कुकुन्दरद्वारेण पुनर्वस्तिगुहां प्रविशति—इत्यस्या वैचित्र्यम्।

६। अनुगृध्रसी[३] (पश्चिमोरुका त्वाची वा) नाम स्थूलतरा वहुप्रशाखा नाडी या प्रथम-द्वितीय-तृतीयानुत्रिकनाडीनां प्रशाखाचतुष्टयसम्भवा। सा गृध्रस्या सह गृध्रसीद्वारेण निर्गत्य ऊरुकञ्चुकान्तर्विशति। प्रसरति च तां निर्भिद्य नितम्बाधः सीम्नि ऊरु-जानु-जंघापृष्ठेषु, तिरश्चीनप्रशाखया गुदवृषणान्तरालीयत्वचि च।

७। **महागृध्रसी[४] ( गृध्रसी वा )** नाम तनौ स्थूलतमा नाडी अंगुष्ठ-परिणाहा सक्थिपृष्ठगा ( २५२ चित्रम् )। सा ऊरुपृष्ठपेशीनां जंघापादपेशीनाञ्च प्रचेष्टनी संज्ञावाहिनी च जङ्घात्वचः। सा विषयबाहुल्यादन्ते वर्ण्यते। सेयं चतुर्थ-पञ्चमानुकटिकनाड्योः प्रथम-द्वितीयानुत्रिकनाड्योश्च अग्रिममूलशाखानां पूर्व-पश्चिमविभागैः, पूर्वविभागेन च तृतीयानुत्रिकाग्रशाखायाः निर्मीयते। सा भविष्यन्त्योः पुरोजङ्घिका-पश्चिमजङ्घिकाख्यनाड्योः मेलकसम्भवा—क्रमेण अग्रिम-पश्चिमविभागीय-सूत्रैस्तथागतैरारचितत्वात्। सेयं गृध्रसीद्वारेण शुण्डिकाख्य पेश्या अधस्तात् निर्गता ऊरुपृष्ठमध्यरेखायां प्रसर्पति, दृश्यते च ऊर्वस्थिमहाशिखर-कुकुन्दर-कूटयोरन्तराले आ-जानुपृष्ठखातम्। विभज्यते च तत्रैव खाते ( तदूर्द्ध्वं वा कदाचित् ) पुरः-पश्चिमजङ्घिकाख्ययोश्चरमशाखयोः। ते च जङ्घान्तरीय नाडीवर्णने अनुपदं व्याख्येये। सन्ति च प्राग्विभागाद् गृध्रसीनाड्याः शाखा-प्रशाखाः वंक्षणसन्धिं प्रविष्टाः, पेशीगाश्च। तत्र पेशीगाः—द्विशिरस्कामौर्वीं, कलाकल्पां, कण्डराकल्पाम्, ऊरुसव्यूहनीं गरिष्ठां चेति पेशीचतुष्टयमभिविशन्ति।

### अथ जङ्घान्तरीया नाड्यः।

सर्वा अपि जङ्घान्तरीया नाड्यः गृध्रसीसम्भवाः, अन्यत्र उरुजङ्घिकाख्यत्वाच-नाड्याः। सा हि और्वीसम्भवा जंघान्तरसीम्नस्त्वचि आगुल्फं प्रसृतेत्युक्तचरम्।

---

१। Nerve to the Quadratus Femoris and Gemellus inferior. २। Nerve to the Obturator Internus and Gemellus Superior. ३। Posterior Femoral Cutaneous Nerve (Small Sciatic Nerve) ४। Sciatic Nerve.

( २५२ चित्रम् ) नितम्ब-सक्थिपृष्ठस्था नाड्यः ।



चरमशाखे च गृध्रस्याः जानुपृष्ठखातान्तर्द्वयो—पुरोजंघिका पश्चिमजंघिका चेति। तत्र पश्चिमजंघिका प्रायेण गृध्रस्या अनुवृत्तिरूपेति हेतोः प्रथमं वर्णनीया। पुरोजंघिका तु मांसं निर्भिद्य पुरः प्रस्थिता परस्ताद् वक्ष्यते।

अथ पश्चिमजंघिका।

**पश्चिमजङ्घिका**[1] नाम नाडी जानुपृष्ठखाते गृध्रस्या विभागजा स्थूलतरा शाखा (२५२ चित्रम्)। सा जंघापृष्ठे पिण्डिकामूलद्वयान्तरालं प्रविश्य आदौ ऊरुजानुपृष्ठिकाख्यां धमनीं ततश्च तच्छाखां स्वनामिकामनुसरन्ती, अन्तर्गुल्फ-पार्ष्ण्यो-रन्तरालेन प्रसर्पति त्वक्कलामात्रावृता, विभज्यते च आन्तर-बाह्यपादतलीया-ख्ययोः शाखयोः। सेयं नाडी बाहुगताया मध्यप्रकोष्ठिकाख्य-नाड्या अनुकारिणी।

अथास्याः प्राग् जंघान्तःप्रवेशादिमाः शाखाः सम्भवन्ति—

(१) सन्धिगाः[2]—जानुसन्धिमभिगतास्तिस्रः।

(२) पेशीगाः[3]—चतस्रः पञ्च वा—जानुपृष्ठिकां जंघापिण्डिकाख्य-पेशीत्रयञ्च प्रविष्टाः।

(३) त्वाची (अन्तःपार्श्विकी[4])—या जंघापिण्डिकाया मूलद्वयान्तरालं प्रविश्य जंघामध्ये तत्पृष्ठान्तःसीम्नि विनिर्गता, अपरया बहिःपार्श्विकत्वाचशाखया सम्बन्धमारचयन्ती बहिर्गुल्फानुक्रमेण पादपार्श्वे प्रसृता।

अथास्या जंघान्तःप्रवेशादर्वाग् इमाः शाखाः लक्षणीयाः—

(१) पेशीगाश्चतस्रः—जंघापिण्डिकां लघ्वीं, जंघानुगां, पादांगुलि-संकोचनीं दीर्घां, पादांगुष्ठसंकोचनीं दीर्घां चेति पेशीचतुष्टयं प्रविष्टाः।

(२) त्वाची (अन्तःपार्ष्णिका[5])—या पार्ष्णिदेशे पादान्तःसीम्नि च त्वचि प्रसृता।

अथ पश्चिमजंघिकायाश्चरमशाखे। यथा—

१। पादतलीया आन्तरा[6]—या अन्तर्गुल्फाधः पादतलान्तःसीम्नि पादांगुष्ठा-पकर्षण्या पेश्या संवृता स्वनामिकाया धमन्या अनुचरी। सेयमुभयोः शाखयोः स्थूलतरा। इमाश्चास्याः शाखा मुख्याः—

(१) त्वाचशाखाः—पादतले प्रसृताः।

---

१। Tibial Nerve (Internal Popliteal Nerve). २। Articular branches. ३। Muscular branches. ४। Medial Sural Cutaneous. ५। Medial Calcaneal Nerve. ६। Medial Plantar.

(२) पेशीगाः—पादांगुष्ठापकर्षणीं पादांगुष्ठसंकोचनीं ह्रस्वां, प्रथमानुकण्डरिकां चेति पेशीत्रयं प्रविष्टाः।

(३) सन्धिगाः—कूर्चास्थिसन्धीन्, कूर्च-शलाकान्तरीयसन्धींश्च प्रविष्टाः।

(४) पादांगुलिगाः– ता एताश्चरमशाखाः आदौ तिस्रः, ततश्चतस्रस्तृतीयाया द्वेधा विभागात्। तासां प्रथमा अंगुष्ठान्तःसीम्नि प्रसृता। अपरास्तिस्रोऽङ्गुलिमूलेषु द्वयोर्द्वयोः प्रशाखयोरित्थं विभक्ताः प्रसरन्ति—द्वितीया अंगुष्ठान्तःसीम्नि, द्वितीयांगुल्या वहिःसीम्नि च। तृतीया द्वितीया-तृतीयांगुल्योः सन्निहितपार्श्वयोः शाखाभ्याम्।

२। पादतलीया वाह्या[1] नाम पश्चिमजंघिकायाश्चरमशाखा पादतलमध्यं तिर्य्यगुल्लंघ्य पादतलधानुषीं धमनोमनुसरन्ती वहिःसीम्नि प्रसृता द्वेधा विभज्यते उत्तान-गम्भीरयोः प्रशाखयोः। तत्र उत्ताना कनिष्ठामूले त्रिधाविभक्ता कनिष्ठा-पार्श्वयोः चतुर्थांगुलि-वहिःसीम्नि च प्रसरति। गम्भीरा तु पादतले गम्भीरं प्रविष्टा पादांगुष्ठप्रकर्षणीं, शलाकान्तरीयाः, अनुकण्डरिकाख्य-पेशीश्च शाखा-प्रतानैः प्रविशति।

अथ पुरोजंघिका नाडी।

**पुरोजंघिका साधारणी[2] ( अधिजंघिका वा )** नाम नाडी गृध्रस्याश्चरमशाखा द्वितीया, जानुपृष्ठखाते दृश्या ( २४६ चित्रम् )। सा द्विशिरस्काया: ( और्व्याः ) पेश्या निवेशकण्डराऽन्तःपार्श्वे प्रसृता अनुजंघास्थिग्रीवां संवेष्ट्य पादविवर्त्तनीं दीर्घां नाम पेशीं प्राप्नोति, विभज्यते च तदावृता द्वयोः शाखयोरुत्तान-गम्भीरयोः। तयोः क्रमेण पुरोजंघिका उत्ताना गम्भीरा चेति संज्ञे।

प्राक् च विभागात् साधारण्याः पुरोजंघिकाया इमाः प्रशाखा द्रष्टव्याः—

(क) सन्धिगास्तिस्रः[3]—जानुसन्धिं प्राप्ताः।

(ख) त्वाची संज्ञे[4] द्वे-जंघोत्तरार्धे पश्चिम-वहिःपार्श्विकप्रदेशयोः प्रसृते। तयोर्द्वितीया पश्चिम-जंघिकाया अन्तःपार्श्विकीं त्वाच-प्रशाखामाश्लिष्य पुष्णाति—याऽसौ पादवहिःपार्श्वं यावत् त्वचि प्रसृता।

---

१। Lateral Plantar. २। Common Peroneal Nerve. ३। Genicular and Recurrent Articular Nerves. ४। Lateral Sural Cutaneous and Peronæal anastomotic Nerves.

अथ विभागादर्वाक् तस्या द्वे शाखे यथा—

१। **पुरोजंघिका गम्भीरा**[१] सा पूर्वोक्तक्रमेण सम्भूय पुरस्ताद् गम्भीरगा पादांगुलीप्रसारण्या दीर्घपेश्या संवृता तत्पार्श्वानुगा अस्थ्यन्तरालायाः कलायाः पुरतः पुरोजंघिकां धमनीमनुसरति आ-गुल्फसन्धेः। विभज्यते चान्ते वहिरन्तः-पार्श्विक्योः शाखयोः। सन्ति चास्या अन्या अपि प्रशाखाः सन्धिगाः, पेशीगाश्च। तत्र सन्धिगाः द्विताः जानुसन्धौ गुल्फसन्धौ च प्रविष्टाः। पेशीगास्तु—जंघा-पुरोगा, पादांगुष्ठप्रसारणी दीर्घा, पादांगुलिप्रसारणी दीर्घा, पादविवर्त्तनी तृतीया चेति पेशीचतुष्टयं प्रविशन्ति ( २४६ चित्रम् )।

अथास्या द्वे चरमशाखे अंगुष्ठमूलगा[२] कूर्चाभिगा[३] चेति। तयोराद्या पाद-पृष्ठिकाख्य धमन्या अनुचरी अंगुष्ठांगुल्योर्मूले आन्तरपादपृष्ठिकाख्यनाड्या द्वितीयप्रशाखया मिलिता। द्वितीया तु वहिर्मुखी पादांगुलिप्रसारण्या ह्रस्वायास्तले समाप्यते, प्रविशति च ह्रस्वैः शाखाप्रतानैः तामेव पेशीं सन्धींश्च कूर्चान्तरीयान् कूर्चशलाकान्तरीयांश्च।

२। **पुरोजंघिका उत्ताना**[४] नाम साधारण्याः पुरोजंघिकाया उत्तानगा शाखा या पादविवर्त्तन्योः पेश्योः पादांगुलिप्रसारण्या दीर्घायाश्च अन्तरालेनाधः प्रसृता गम्भीरप्रावरणीं निर्भिद्य जंघाया अधरतृतीयांशे प्रकाशते। विभज्यते च तत्रैव चरमयोः प्रशाखयोः ( २४६ चित्रम् )।

प्राक् च विभागात् तस्याः शाखाः यथा—(क) पेशीगे द्वे पादविवर्त्तनीं दीर्घां ह्रस्वाञ्च प्रविष्टे (ख) त्वाची चैका जंघाधरदेशे प्रसृता। चरम प्रशाखे तु पादपृष्ठिका आन्तरा वाह्या चेति द्वे त्वचि प्रतते। तत्र—

(१) आन्तरा पादपृष्ठिका[५]—गुल्फसन्धिमुल्लंघ्य पादपृष्ठे द्वयोरनुशाखयो-र्विभज्यते। तयोरेका अंगुष्ठान्तःपार्श्वे प्रसृता, अंगुष्ठांगुल्योः सन्निहितपार्श्वयोश्च शाखाद्वयेन। अपरा द्वितीय-तृतीयांगुल्योः सन्निहितपार्श्वयोः।

(२) वाह्या पादपृष्ठिका[६] नाम वहिःसीमगा प्रशाखा तृतीय-चतुर्थ-पञ्चम-पादांगुलीनां पार्श्वेषु प्रसरति चरमानुशाखाविभागेन। तच्चेत्थं प्रायेण—तृतीयाया वहिःपार्श्वे। चतुर्थ्या उभयतः, पञ्चम्याश्च।

---

१। Deep Peronaeal Nerve (Anterior Tibial Nerve). २। Medial Terminal. ३। Lateral Terminal. ४। Superficial Peronæal Nerve ( Musculo-cutaneous Nerve ). ५। Medial Dorsal Cutaneous. ६। Intermediate Dorsal Cutaneous Nerve.

## अथ गुदोपस्थिकं नाडीचक्रम्।

**गुदोपस्थिकं नाडीचक्रं**[1] त्रिकानुत्रिकयोरुत्सङ्गस्थं वस्तिगुहान्तर्द्दृश्यम्। तत् त्रिकपूर्वकाख्य-नाडीप्रवेण्या नातिपृथग्भूतमपि प्रयोजनवशात् पृथग् विविच्यते। प्रयोजनञ्च स्वतन्त्रनाडीचक्रेणास्य सम्बन्धविशेषः, वस्त्युपस्थगुदादि-संज्ञा-चेष्टाप्रवर्त्तकत्वञ्च।

तदेतत् द्वितीयादि-पञ्चम्यन्तानामनुत्रिकनाडीनां त्रिकशैषिक्याश्च नाड्या अग्रिममूलशाखा-प्रशाखासंयोगसम्भवम्। तत्प्रतानाश्च वस्त्युपस्थ-गुदवृषणादिषु प्रतायन्ते। तत्रेमाः शाखा मुख्याः (२४८।२५१ चित्रयोः)—

(१) **गुदोपस्थिका नाडी**[2]—या द्वितीयादि-चतुर्थ्यन्तानुत्रिकनाडी-सम्भवा स्वतन्त्रसूत्रबहुला। सेयं शुण्डिकाऽनुत्रिकाख्यपेश्योरन्तरालेन गृध्रसीद्वारान्निर्गत्य अनुकुकुन्दरिकाख्य-स्नायुमयसुरङ्गया प्रसृता पुनर्वस्तिगुहां प्रविशति कुकुन्दरद्वारेण (२५१ चित्रम्)। अनुगता च सा स्वनामिकाभ्यां सिराधमनीभ्याम्।

तस्यास्तिस्रः प्रशाखाः मुख्याः—

गुदान्तिका, वृषणगा, उपस्थपृष्ठिका चेति। तत्प्रतानैर्हि व्याप्यन्ते गुदोपस्थ-वृषण-मूलाधारपीठादिगताः पेश्यस्त्वचश्च। तेषु मूलाधारिणी नाम नाडी मुख्या पृथगेव दृश्यते प्रायः।

(२) **नितम्बाधरीया त्वाची**[3] या द्वितीय-तृतीयानुत्रिकनाडीसम्भवा। सा गरिष्ठाया नितम्बपेश्या अधःसीम्नि त्वचि प्रसृता।

(३) **आशयगाः**[4]—शाखास्तु स्वतन्त्र-नाडीसूत्रैर्विशेषेण अभिव्याप्ताः, ता वस्तिं गुदनलिकाञ्च नाडीप्रतानै र्व्याप्नुवन्ति, योनिञ्च स्त्रीषु। एतानि च स्वतन्त्रनाडीसूत्राणि किञ्चिदिच्छातन्त्राणि।

(४) **पेशीगाः शाखाः**[5]—पुनः प्रायेण चतुर्थानुत्रिकनाडीप्रभवाः। ताः पायुधारणी-मनुत्रिकिणीं गुदसंकोचनीं वाह्याञ्चेति पेशीत्रयं प्रविशन्ति सह गुदोपस्थिकाख्य-नाडीप्रभवैः प्रतानैः (२५१ चित्रम्)। सन्ति चात्र संज्ञावहा अपि नाड्यो याः पञ्चमानुत्रिकनाड्याः त्रिकशैषिक्याश्च सम्भूताः। ताभिरनुविद्धं गुदं तदुपकण्ठञ्च विशेषेण।

इति दशमोऽध्यायः।

---

१। Pudendal Plexus. २। Pudic Nerve. ३। Perforating Cutaneus.
४। Visceral Branches. ५। Muscular Branches.

# अथ एकादशोऽध्यायः ।

## अथातः स्वतन्त्रनाडीवर्णनीयमध्यायं व्याख्यास्यामः ।

इह खलु **स्वतन्त्रं**[1] नाम **नाडीतन्त्रं** ( २५३।२५४।२५५ चित्रेषु ) स्वयमेव क्रियावेगवहमिति तथासंज्ञम् । ते च क्रियावेगाः सर्वत्र शरीरे प्रवर्त्तन्ते सूक्ष्मातिसूक्ष्मैर्नाडीप्रतानैः सामान्यतः, अन्यत्र इच्छातन्त्रपेशीभ्यः । विशेषतस्तु तेषां प्रवृत्तिः हृदयाऽमाशयाऽन्त्रादिषु आशयेषु, सिराधमन्यादिप्राचीरिकासु, स्वेद-लालादिवहग्रन्थिषु, अन्येषु च देशेषु प्रायेण स्वतन्त्रपेशीतन्तुभूयिष्ठेषु । ताभिर्हि क्रियाभिर्यथाप्रयोजनं प्रवृत्ताभिः प्राणयात्रानिर्वाहः प्राणिनाम् । न च सर्वथा पृथगेवेदं तन्त्रम् मेरुजनाडीतन्त्रात्, मस्तिष्क-सुषुम्नाकाण्डान्तर्मुख्यकेन्द्राणां दर्शनात् ।

अथास्य नाडीतन्त्रस्य अनिच्छातन्त्रत्वेऽपि मनसा सम्बन्धो घनिष्ठः । मनसि प्रसन्ने तत्क्रियासामञ्जस्यदर्शनात्, कामक्रोधादिपरीते तत्क्रियावैषम्यात् । तत्क्रियासाम्य-वैषम्याभ्यां हर्षविषादसम्भवाच्च ।

द्वेधा चास्य नाडीतन्त्रस्य विभागो बोधसौकर्य्याय कल्प्यते — मूलभागः परिसरीयभागश्चेति (२५३-आदि चित्रेषु) । तत्र मूलभागो मेरुजनाडीतन्त्रान्तः सूक्ष्मचाक्षुषपरीक्षाद्दृश्यः कन्दाणुपुञ्जमयः । ते च कन्दाणुपुञ्जा मध्यम-पश्चिम-मस्तुलुङ्गपिण्डयोर्दृश्याः पूर्वोक्तशीर्षण्यनाडीनां केन्द्रेषु, सुषुम्नाकाण्डान्तश्च पार्श्विकशृङ्गान्तरीयकेन्द्रेषु अन्यत्र तद्ग्रैवेयांशात् । तत्प्रभवाणि च स्वतन्त्रनाडीसूत्राणि काश्चन शीर्षण्यनाडीः मेरुजनाडीश्चारुह्य ग्रन्थि-चक्रादिपरम्परया प्रसृतानि परिसरीयभागं रचयन्ति ।

सन्ति च नानाविधाशयसमुत्थानि सामान्य-संज्ञावहान्यपि स्वतन्त्रनाडीसूत्राणि स्तोकसंख्यानि, यानि अन्तर्मुखगत्या शीर्षण्यनाडीमूलानि पश्चिममूलानि च मेरुजनाडीनां प्रविशन्ति । तत्र सुषुम्नाकाण्डप्रवेशीनि नाडीसूत्राणि आदौ पश्चिममूलकन्दिकाः प्रविश्य कन्दाणुषु समाप्यन्ते, पुनरुद्भवन्ति च तत्तत्कन्दाणुभ्यः सामान्यसंज्ञावहनाडीवदिति अविशेषः ।

अथाप्ययं विभागः प्रकल्प्यते क्रियावोधसौकर्याय । मूलभागप्रभवाणि नाडीसूत्राणि यावत् स्वतन्त्रनाडीग्रन्थिषु ( शीर्षण्येषु, स्वतन्त्रशृङ्खलास्थेषु वा ) न प्रविशन्ति, तावत् <u>प्राग्ग्रन्थिकानि</u>[2] नाम, तानि सवृतिकानि । नाडीग्रन्थिभ्यो निर्गतानि तु नाडीसूत्राणि <u>पश्चिमग्रन्थिकानि</u>[3] नाम, तान्यवृतिकानि । सन्ति च मध्येमार्गं नाड़ीकन्दिकाः नाडीचक्रसहिताः, या द्वारीकृत्य प्रसरन्ति नाडीप्रतानास्तत्तदाशयादिषु वक्ष्यमाणेषु ( २५३-आदि चित्रेषु ) ।

---

१। Autonomic Nervous System. २। Pre-ganglionic fibres. ३। Post-ganglionic fibres.

तेषु प्राग्ग्रन्थिकानि सूत्राणि त्रेधा विभज्यन्ते—उत्तराऽधर-मध्यमनाडी-मण्डलभेदात् । तत्र—

१। उत्तरं[१] नाडीमण्डलं शीर्षण्यमूलप्रभवम् । तस्य प्रतानविस्तारः शिरसि मध्यकाये च दृश्यः ( २५६ चित्रम् ) । तत्र शिरसि शीर्षण्यनाडीभिः शीर्षण्यनाडी-ग्रन्थीन् द्वारीकृत्य प्रसरः, विशेषतस्तु तृतीय-सप्तम-नवम-दशमैकादशनाडीभिः चाक्षुष-तालु-जातूक-कर्णिकादि-ग्रन्थिषु । दशम्या नाड्या तु कोष्ठान्तरीय-ग्रन्थि-चक्रादिष्वपि । क्रियाश्च तासां नेत्रान्तः कनीनकसङ्कोचन्यां पेश्यां, लालाग्रन्थिषु, हृदये, क्लोमकाण्डिकासु, महास्रोतसि, यकृति, पित्तकोषे, अग्न्याशये च स्फुटतमाः ।

सोऽयं मुख्यः प्राणवायुमार्गः सह स्वतन्त्रशृङ्खलयोः शीर्षण्यभागेन ( २५६ चित्रम् ) ।

२। अधरं[२] स्वतन्त्रनाडीमण्डलं पुनः सुषुम्नाकाण्डस्य अनुत्रिकांशप्रभवम् । तत्सूत्राणां प्रसरः ( २५४।२५५ चित्रयोः ) द्वितीय-तृतीय-चतुर्थानुत्रिकनाडीद्वारेण वृक्क-वस्ति-गुदोपस्थवृषणेषु । तानि च सूत्राणि गुदोपस्थिकाख्यनाडीप्रतानैः सह गुदोपस्थिकादिनाडीचक्रान्तर्मिलितानि ।

सोऽयमपानवायुमार्गो योगिनाम् ( २५६ चित्रम् ) ।

तदेतद् उत्तराधरं नाडीमण्डलद्वयम् मध्येमार्गमिडापिङ्गलाभ्यां सम्बन्धमविधायैव प्रसर्पतीति विशेषः सदा स्मर्त्तव्यः । अतएव परिस्वतन्त्रम्[३] नाम पृथगेवेदं नाडी-मण्डलद्वयमित्याधुनिकाः ।

३। मध्यमं[४] स्वतन्त्रनाडीमण्डलं पुनरिडापिङ्गलाख्य-स्वतन्त्रशृङ्खलिकाभ्यां सम्बन्धं विधायैवाग्रे प्रसरति नाडीचक्रेषु स्वैः स्वैः प्रतानैः (२५५ चित्रम् ) । तानि च चक्राणि हृदयाद्याशयानभितः, पृथक् च, दृश्यन्ते कोष्ठान्तः । तद्विशेषानग्रे वक्ष्यामः ।

तदेतद् मध्यस्वतन्त्रं नाम नाडीतन्त्रं कोष्ठमध्यस्थानामाशयानां परिचालकं भूम्ना । तस्योत्तरभाग उदानवायोर्मार्गः, अधरस्तु समानवायोः ( २५६ चित्रम् ) ।

एवञ्च स्वतन्त्रनाडीतन्त्रस्य द्वेधा विभागः स्मर्त्तव्यो बोधसौकर्य्याय—

**परिस्वतन्त्रमण्डलं, मध्यस्वतन्त्रमण्डलं** चेति ।

तयोराद्यं व्याख्यातचरम् । द्वितीयमग्रे व्याख्यास्यते ।

१। Upper Para-Sympathetic System. २। Lower Para-Sympathetic System. ३। Para-Sympathetic System. ४। Sympathetic System.

अथ स्वतन्त्रशृङ्खलिके—इडापिङ्गले नाम।

**स्वतन्त्रशृङ्खलिके**[१] नाम पृष्ठवंशमुभयतः पुरस्तात्, नाडीसूत्रग्रन्थित ग्रन्थि-मालारूपे। तयोर्वाम-दक्षिणयोः क्रमाद् **इड़ा पिङ्गला** चेति संज्ञाद्वयं प्राचाम्। ताभ्यां सपरिकराभ्यामारच्यते मध्यस्वतन्त्रमण्डलं नाम नाडीतन्त्रम् (२५३ चित्रम्)।

तस्य त्रयो भागाः कल्प्यन्ते वर्णनासौकर्य्याय—शीर्षण्यभागः, उरस्यभागः, उदर्य्यभागश्चेति। तत्राद्यः शिरोऽभ्यन्तरतः, स उत्तरस्वतन्त्रमण्डलेन शीर्षण्य-नाडीभिश्च सम्बन्धवान्। शेषद्वयं स्वतन्त्रनाडीचक्रैः।

अथैषां भागानां सम्बन्धः सुषुम्नाकाण्डाभ्यन्तरस्थैः खण्डिकाविशेषैः, यान् षट्पद्मसंज्ञया व्यपदिशन्ति तन्त्रविदः। तथाह्युक्तं—

"मेरोर्वाह्यप्रदेशे शशिमिहिरशिरे सव्यदक्षे निषण्णे
मध्ये नाडी सुषुम्ना"——इत्यादि।

"——सकलसरसिजान् मेरुमध्यान्तरस्थान्
भित्त्वा देदीप्यते सा"——इत्यादि च। (षट्चक्र निरूपणे)*

उभयोश्च स्वतन्त्रशृङ्खलिकयोर्धनुर्वक्रयोः शीर्षण्यभागस्य चरमः सम्बन्ध ऊर्द्ध्वं मस्तिष्कमूलिकधमनीचक्रस्य पुरस्तादवस्थितेन मूर्द्धन्याख्येन नाडीग्रन्थिना[२]। तदेतद् उत्तरं ग्रन्थिस्थानमाहुस्तान्त्रिकाः। वर्ण्यते च अधरमपि ग्रन्थिस्थानं कन्दमूलं नाम अधस्ताद् गुदोपकण्ठे। तद्धि "कन्दमूलं[३] खगाण्डवद्"—इत्याहुः षट्चक्रकोविदाः।

अथ इडापिङ्गलयोः शीर्षण्यभागः।

अथानयोः शीर्षण्यभागस्य मस्तिष्कमूले विस्तारो दृष्टिनाडीपरिखयोरवस्थिताभ्यां नाडीभ्यां मातृका-संज्ञाभ्याम्[४], तदाख्य-ग्रन्थिसहिताभ्याम्[५]। तद्रचितञ्च वक्ष्यमाणं नाडीचक्रद्वयं तत्रैव धमनीं परितः सूक्ष्मतन्तुजालमयम्। तयोश्च नाड्योर्निर्माण-मुत्तरानुग्रीविकाख्य-स्वतन्त्रग्रन्थिप्रभवैः सूत्रैः।

तत्र **अन्तर्मातृकं**[६] नाम चक्रम् शिरसि अन्तर्मातृकाख्यधमन्या अन्तःसीमस्थम् तद् जतूकास्थ्नः शरीरपार्श्वे दृश्यम्। तस्य सम्बन्धो विशेषेण त्रिधारग्रन्थिना, षष्ठ्या शीर्षण्य-नाड्या नवम्या च, ग्रन्थिना च तालुजातूकाख्येन।

---

१। Gangliated Cords. ( Sympathetic Trunks ) २। Ganglion of Ribes. ३। Ganglion Coccygeum Impar. ४। Carotid Nerves. ५। Carotid Ganglion. ६। Carotid Plexus.

* मेरोः मेरुदण्डस्य पृष्ठवंशस्य वाह्यप्रदेशे नत्वन्तः। सव्यदक्षे वाम-दक्षिणपार्श्वयोः। शशि-मिहिरसिरे चन्द्रनाडी-सूर्य्यनाडीसंज्ञे। मध्ये मेरुदण्डस्य सुषुम्ना। सकलसरसिजान् षट्पद्मानि भित्त्वा देदीप्यते सा चित्रा नाम नाडी सुषुम्नागर्भस्था—इत्यर्थ निकर्षः। एष च षट्चक्रनिरूपणाख्यो ग्रन्थस्तन्त्रशास्त्रे ऽतिप्रसिद्धः पूर्णानन्दकृतः।

( २५३ चित्रम् )

## स्वतन्त्रशृङ्खला प्रदर्शकम् ।

[ अत्र वामा स्वतन्त्रशृङ्खला दर्शिता । उभयोरेकत्रावस्थानं १७५ चित्रे द्रष्टव्यम् ]




चित्रव्याख्या—ग१— उत्तरानुग्रीविकः । ग२—मध्यमानुग्रीविकः । ग३—अधरानुग्रीविकः ।

**बहिर्मातृकाख्यं**[१] नाडीचक्रन्तु अन्तर्मातृकाख्य-धमन्याः बहिःपार्श्वगम् तस्य सम्बन्धः तृतीयचतुर्थीभ्यां शीर्षण्यनाडीभ्यां, पञ्चमनाड्याश्चाक्षुषशाखया, षष्ठ्या च नाड्या, चाक्षुषग्रन्थिना च।

उभयोश्चानयो र्नाडीचक्रयोः सूक्ष्मानुसूक्ष्माः शाखाप्रताना मस्तिष्कमूलस्थेषु सिराधमन्यादि विशेषेषु प्रतायन्ते सह उत्तरस्वतन्त्रमण्डलीयैर्नाडीतन्तुभिः।

अथ इडापिङ्गलयोर्मध्यकायिकभागः।

अथ पृष्ठवंशव्यतिकरेणावस्थितयोः स्वतन्त्रग्रन्थिश्रृङ्खलिकयोरेकैकस्या निर्माणं नाडीसूत्रग्रन्थितै र्ग्रन्थिभिर्द्रष्टव्यम् (२५३ चित्रम्)। तत्र ग्रीवायामनुग्रीविका नाम नाडीग्रन्थयस्त्रय एव प्रायेण (चत्वारो वा क्वचित्)। पृष्ठे अनुपृष्ठिका नाम ग्रन्थयो द्वादश। कटिपुरस्ताद् अनुकटिकाश्चत्वारः। वस्तिगुहायाम् अनुवस्तिकाश्चत्वारः, पञ्च वा—इति त्रयोविंशतिश्चतुर्विंशति र्वा स्वतन्त्रनाडीग्रन्थय एकैकतो द्रष्टव्याः। तान् खलु द्वारीकृत्य प्रसरन्ति मध्यकाये स्वतन्त्रनाडीतन्त्रीया वेगाः तत्तदाशयपरिवारिषु स्वतन्त्रनाडीचक्रेषु।

अथ मध्यकायिकाः स्वतन्त्रनाडीग्रन्थयः।

**स्वतन्त्रनाडीग्रन्थयः स्वतन्त्रग्रन्थयो**[२] वा नाम—स्वतन्त्र-नाडीतन्त्र-सम्बद्धाः ग्रन्थयः (२५३ चित्रम्)। ते प्रायेणोभयनाडीतन्त्रसम्बद्धाः, द्विविधाश्च—शीर्षण्या मध्यकायिकाश्चेति। तत्र शीर्षण्या व्याख्यातचराः। मध्यकायिका इहोच्यन्ते।

ते च मध्यकायिका ग्रन्थयस्त्रिविधाः—श्रृङ्खलान्तरीयाः,[३] नाडीचक्रान्तरीयाः,[४] पर्य्याशयिकाश्चेति[५]। तत्र स्वतन्त्रश्रृङ्खलान्तर्गताः मालावद्ग्रथिताः—श्रृङ्खलान्तरीयाः। वक्ष्यमाणनाडीचक्रसमूहान्तरीयाः—नाडीचक्रान्तरीयाः। आशयान् परितः संसक्ताः—पर्य्याशयिकाः।

तत्रादौ श्रृङ्खलान्तरीयाः।

तेषु अनुग्रीविकाः[६] स्वतन्त्रग्रन्थयो यथा—

ग्रीवावंशानुक्रमेण त्रयो ग्रन्थयः ग्रन्थ्यष्टकमेलकसम्भवाः एकैकतो द्रष्टव्याः—ते उत्तरमध्यमाऽधरसंज्ञाः। तेषु—

---

१। Cavernous Plexus २। Sympathetic Ganglia. ३। Ganglia of the Sympathetic Trunks. ४। Ganglia of the Sympathetic Plexuses. ५। Visceral Ganglia. ६। Cervical Ganglia.

(१) **उत्तरानुग्रीविको**[1] नाम ग्रन्थिर्वृहत्तमो महानिम्बफलाकारः प्रथम-ग्रन्थिचतुष्टयमेलकसम्भूतः (२५३ चित्रम्)। स द्वितीय-तृतीयानुग्रीविक मेरुजमाड्योः पुरस्ताद् वर्त्तते, महामातृकाधमनीकञ्चुकं पुरस्कृत्य। तच्छाखाप्रतानैर्निर्मीयन्ते—अन्तर्मातृकं वहिर्मातृकञ्च नाम चक्रद्वयं (पूर्वोक्तं), परिग्रसनिकाख्यचक्रञ्च ग्रसनिकावेष्टनम्। तस्यैका अन्तःसीमगा शाखा उत्तरया स्वरयन्त्रगया नाड्या सम्मिलिता, अपरा **उत्तरा हार्दिकी**[2] नाम, सा ग्रीवानुगत्या आहृदयं प्रसृता।

(२) **मध्यमानुग्रीविको**[3] नाम ग्रन्थिः षष्ठग्रैविककशेरुकायाः पुरस्ताद् अधरग्रैवेयकीं नाम धमनीमधिशेते (२५३ चित्रम्)। तस्मात् सम्भूता **मध्यमा हार्दिकी**[4] नाम नाडी वहुप्रताना, या गम्भीरं हार्दिकनाडीचक्रमभिविशति।

(३) **अधरानुग्रीविको**[5] नाम ग्रन्थिः प्रथमपर्शुकान्तरीयधमन्या मूलगः (२५३ चित्रम्)। स सप्तमग्रीवाकशेरुकाया वाहुप्रवर्द्धनपुरोवर्त्ती, उरस्याख्य कलया समावृतः। तस्मात् सम्भूता **अधरा हार्दिकी**[6] नाम नाडी वहुप्रतानवती, या गम्भीरं हार्दिकनाडीचक्रं प्रविशति।

अथ अनुपृष्ठिकाः[7] स्वतन्त्रग्रन्थयः। ते च प्रायेण द्वादशसंख्याः एकैकतः, पशुकामुण्डानां पुरस्ताद् दृश्याः, उरस्यासमावृताश्च। दृश्यन्ते च मेरुजनाडीनां शाखाप्रतानाः ग्रन्थिषु प्रविष्टाः, ग्रन्थिभ्यो निर्गताश्च तासु प्रविष्टाः। तेषु परिसरीयाणि स्वतन्त्रनाडीसूत्राणि ग्रन्थिभ्यो निर्गत्य आशयाभिमुखं प्रसृतानि। तत्क्रमश्च यथा—प्रथमादिपञ्चग्रन्थिभ्यो विनिर्गतानि सूत्राणि महाधमन्या उरस्यांशं परितः, फुस्फुसपश्चिमतश्च नाडीचक्रद्वयं प्रविशन्ति। शेषेभ्यो ग्रन्थिभ्यो विनिर्गतानि सूत्राणि तु परस्परमेलकेन तिस्रो नाडीर्विरचयन्ति। तासां संज्ञाः—महती आशयिकी, लघ्वी आशयिकी, अनुवृक्का चेति। तत्र—

**महती आशयिकी**[8] नाम नाडी (२५४।२५६ चित्रयोः) पञ्चमादि दशमान्त-ग्रन्थिसम्भवा प्रायेण। सा मेरुजग्रन्थिभिर्योजकसूत्रैः सम्बद्धा अधरपश्चिमं फुस्फुसान्तरालं प्रविश्य महाप्राचीरामूलं निर्भिनत्ति, प्रविशति चोदरे मणिपूराख्यं ग्रन्थिं सौरमण्डलान्तः।

---

१। Superior Cervical Ganglion. २। Superior Cervical Cardiac Nerve. ३। Middle Cervical Ganglion. ४। Middle Cardiac Nerve. ५। Inferior Cervical Ganglion. ६। Inferior Cardiac Nerve. ७। Thoracic Ganglia. ८। Great Splanchnic Nerve.

## ( २५४ चित्रम् ) स्वतन्त्रनाड़ीतन्त्रस्य विस्तारप्रदर्शकम् ।




**चित्रव्याख्या**—ट० पञ्चमनाड्या ऊर्द्धहानव्या शाखा । ठ०—चाक्षुषग्रन्थिः । ड०—तालुजातूक ग्रन्थिः । ड०—स्वतन्त्रशृंखलाया उत्तरानुग्रीविको ग्रन्थिः । ६–षष्ठी नाडी । १०–दशमी नाडी । ग१।ग२—इत्यादि—अनुग्रीविकानाड्यः (मेरुजाः) । प१।प२—इत्यादि—अनुपृष्ठिका नाड्यः । क१।क२—इत्यादि—अनुकटिका नाड्यः । त१।त२—अनुत्रिका नाड्यः ।

**लघ्वी आशयिकी**[1] नाम नाडी (२५४-आदि चित्रेषु) दशमैकादशग्रन्थिभ्यां विनिर्गता पूर्ववदेवाधः प्रसरति सह महत्या आशयिकनाड्या। तत्प्रान्तीयाः शाखाः सौरमण्डलं परिवृक्कीय-नाडीचक्रञ्च प्रविशन्ति।

अनुवृक्का[2] नाम (तन्वी आशयिकी वा) नाडी चरमानुपृष्ठिकग्रन्थिसम्भवा। सा पूर्ववन्महाप्राचीरामूलं निर्भिद्य उदरगुहायामवतीर्णा परिवृक्कं नाम नाडीचक्रं प्रविष्टा (क्वचिन्नापि दृश्या)।

**अनुकटिका**[3] नाम स्वतन्त्रग्रन्थयश्चत्वारः (पञ्च वा क्वचित्) एकैकतः कटिवंशपुरस्तात् मेरुजनाडीभिः सम्बन्धवन्तः पूर्ववत् (२५४।२५५।२५६ चित्रेषु)। तेषां परिसरीयसूत्राणि कानिचिद् महाधमनीं परितः प्रतायन्ते, अपराणि अधिवस्तिकं नाडीचक्रं प्रविशन्ति। प्रथमादिग्रन्थित्रिकन्तु मेरुजनाडीसूत्राणि।

**अधिवस्तिका**[4] अधित्रिका वा नाम ग्रन्थयश्चत्वारः पञ्च वा एकैकतः (२५४।२५५।२५६ चित्रेषु) दृढनाडीसूत्रैर्मालावद् ग्रथिताः, त्रिकोत्सङ्गवर्त्तिनः। अधःप्रान्तौ च ग्रन्थिमालिकयोः सम्बध्येते चरमसूत्राभ्यां कन्दमूलाख्ये ग्रन्थौ पुरस्तादनुत्रिकास्थ्नः। तदेतत् "कन्दमूलं" खगाण्डवत्[5] प्राचाम्। अधिवस्तिक-ग्रन्थीनां मूलाभिगसूत्राणि अनुकटिकाख्य-मेरुजनाडीभिः सम्बध्यन्ते, परिसरीय-सूत्राणि तु अधिवस्तिकचक्रेण।

सर्वे चामी नाडीग्रन्थय उभयोः पार्श्वयोः योजकसूत्रैः परस्परसम्बन्धमारचयन्ति यथासम्भवमिति स्मर्त्तव्यम्।

अथ स्वतन्त्रनाडीचक्राणि।

त्रीणि खलु महान्ति नाडीचक्राणि[6] स्वतन्त्रनाडीतन्त्रीयाणि कोष्ठान्तः। तानि अनेकनाडीग्रन्थि-सूत्रजालनिर्मितानि तनु-विषमायतमण्डल-प्रायाणि (२५४-आदि चित्रेषु) तद्यथा—

**हार्दिकं** नाम महानाडीचक्रमुरोगुहायाम्। **उदर्य्यं** (सौरमण्डलं वा) नाम उदरगुहायाम्। **अधिवस्तिकं** नाम वस्तिगुहायाम्। सन्ति चैषामन्तर्गतानि प्रत्याशयं प्रततानि लघुतराण्यपि नाडीचक्राणि पर्य्याशयिकानि नाम, तानि गौणानि बहूनि चेति संक्षेपादुद्देशः। विस्तरतस्तु—

---

१। Lesser Splanchnic Nerve. २। Least or Renal Splanchnic Nerve. ३। Lumbar Ganglia. ४। Pelvic Ganglia. ५। Ganglion Coccygeum Impar. ६। The Three Great Sympathetic plexuses.

( उरोगुहायाम् — )

१। **हार्दिकं**[१] **(परिहार्दिकं वा)** नाम महानाडीचक्रमूर्द्ध्व हृदयमूले दृश्यम् (२५४-आदि चित्रेषु)। तस्य द्वौ विभागौ — उत्तानो गम्भीरश्चेति। तयोः परस्परसम्बन्धो घनिष्ठः। तत्र—

(क) **उत्तान-हार्दिकं**[२] नाम नाडीचक्रं विरच्यते उत्तरहार्दिक्या नाड्या वामस्वतन्त्रानुग्रीविकग्रन्थि-सम्भूतया, वामप्राणदायाः अधरहार्दिक-शाखाभिः, गम्भीरहार्दिक-नाडीचक्रोत्थैश्च प्रतानैः। अस्ति च तदन्तःस्था कन्दिका प्रायेण— हार्दिककन्दिका[३] नाम ( नापि दृश्यते क्वचित् )। सा तोरण्या महाधमन्या उत्सङ्गे निगूढा।

(ख) **गम्भीर-हार्दिकं**[४] नाम नाडीचक्रम् तोरण्या महाधमन्याः पश्चात् श्वासनलिकाया विभागस्थाने दृश्यम्। तस्य निर्माणं 'हार्दिकी' संज्ञाभिर्नाडीभिः स्वतन्त्रानुग्रीविकग्रन्थिसम्भूताभिः, हार्दिकशाखाभिश्च प्राणदाख्यनाड्योः। सम्बन्धश्च उत्तानहार्दिक-नाडीचक्रेण घनिष्ठः — इत्युक्तपूर्वम्।

अनयोश्च नाडीचक्रयोः प्रताना इत्थं प्रसृताः उरोगुहान्तराशयादीन् परितः—

उभयस्यापि हार्दिकनाडीचक्रस्य प्रतानाः दक्षिणां हार्दिकधमनीं परितः प्रसृताः सम्मुखतः, वामाश्च पश्चिमतः। ते हार्दिकधमनीवेष्टनं[५] नाम नाडीचक्रद्वय-मारचयन्ति। तदनुप्राणितधमनीरक्तेन यथार्हं प्रीणिता हि हृत्पेश्यो हृत्कार्य्येषु प्रवर्त्तन्ते इति गुरुप्रयोजनमिदं नाडीचक्रद्वयं प्राणधारणाय। सन्ति चापरे तनवो हार्दिक ग्रन्थयो हृन्मांसान्तः।

दृश्यन्ते च हार्दिकनाडीचक्रद्वयस्यान्ये प्रतानाः ये परिफुस्फुसं नाम नाडीचक्रद्वयं प्रविशन्ति, वामदक्षिण-फुस्फुसवृन्तयोः पुरस्तात्।

एवं हि खलु दक्षिणाग्रिमं, दक्षिणपश्चिमं, वामाग्रिमं वामपश्चिमञ्चेति चत्वारि नाडीचक्राणि फुस्फुसद्वयसम्बन्धेन, तानि परिफुस्फुस[६]-संज्ञानि। तेषां च सूत्राणि क्लोमकाण्डिकानुक्रमेण फुस्फुसान्तः प्रविशन्ति तत्कार्य्यप्रवर्त्तनाय।

अथात्र विशेषः। अग्रिमं परिफुस्फुसनाडीचक्रद्वयमेव विरच्यते हार्दिकनाडी-चक्रोत्थैः प्रतानैः, न तु पश्चिमम्। प्राणदायाः फौस्फुसशाखाद्वयं तु उभयम् प्रविशन्ति।

---

१। The Cardiac plexus. २। Superficial Cardiac plexus. ३। Cardiac Ganglion of Wrisberg. ४। Deep Cardiac Plexus. ५। Coronary plexuses. ६। Pulmonary plexuses.

( २५६ चित्रम् )

## स्वतन्त्रनाडीतन्त्रप्रदर्शकः शवव्यवच्छेदः ।



( उरोगुहायाम् — )

१। **हार्दिकं**[1] **(परिहार्दिकं वा)** नाम महानाडीचक्रमूर्द्ध्व हृदयमूले दृश्यम् (२५४-आदि चित्रेषु)। तस्य द्वौ विभागौ — उत्तानो गम्भीरश्चेति। तयोः परस्परसम्बन्धो घनिष्ठः। तत्र—

(क) **उत्तान-हार्दिकं**[2] नाम नाडीचक्रं विरच्यते उत्तरहार्दिकया नाड्या वामस्वतन्त्रानुग्रीविकग्रन्थि-सम्भूतया, वामप्राणदायाः अधरहार्दिक-शाखाभिः, गम्भीरहार्दिक-नाडीचक्रीयैश्च प्रतानैः। अस्ति च तदन्तःस्था कन्दिका प्रायेण— हार्दिककन्दिका[3] नाम (नापि दृश्यते क्वचित्)। सा तोरण्या महाधमन्या उत्सङ्गे निगूढा।

(ख) **गम्भीर-हार्दिकं**[4] नाम नाडीचक्रम् तोरण्या महाधमन्याः पश्चात् श्वासनलिकाया विभागस्थाने दृश्यम्। तस्य निर्माणं 'हार्दिकी' संज्ञाभिर्नाडीभिः स्वतन्त्रानुग्रीविकग्रन्थिसम्भूताभिः, हार्दिकशाखाभिश्च प्राणदाख्यनाड्योः। सम्बन्धश्च उत्तानहार्दिक-नाडीचक्रेण घनिष्ठः — इत्युक्तपूर्वम्।

अनयोश्च नाडीचक्रयोः प्रताना इत्थं प्रसृताः उरोगुहान्तराशयादीन् परितः—

उभयस्यापि हार्दिकनाडीचक्रस्य प्रतानाः दक्षिणां हार्दिकधमनीं परितः प्रसृताः सम्मुखतः, वामाञ्च पश्चिमतः। ते हार्दिकधमनीवेष्टनं[5] नाम नाडीचक्रद्वय-मारचयन्ति। तदनुप्राणितधमनीरक्तेन यथार्हं प्रीणिता हि हृत्पेश्यो हृत्कार्य्येषु प्रवर्त्तन्ते इति गुरुप्रयोजनमिदं नाडीचक्रद्वयं प्राणधारणाय। सन्ति चापरे तनवो हार्दिक ग्रन्थयो हृन्मांसान्तः।

दृश्यन्ते च हार्दिकनाडीचक्रद्वयस्यान्ये प्रतानाः ये परिफुस्फुसं नाम नाडीचक्रद्वयं प्रविशन्ति, वामदक्षिण-फुस्फुसवृन्तयोः पुरस्तात्।

एवं हि खलु दक्षिणाग्रिमं, दक्षिणपश्चिमं, वामाग्रिमं वामपश्चिमञ्चेति चत्वारि नाडीचक्राणि फुस्फुसद्वयसम्बन्धेन, तानि परिफुस्फुस[6]-संज्ञानि। तेषां च सूत्राणि क्लोमकाण्डिकानुक्रमेण फुस्फुसान्तः प्रविशन्ति तत्कार्य्यप्रवर्त्तनाय।

अथात्र विशेषः। अग्रिमं परिफुस्फुसनाडीचक्रद्वयमेव विरच्यते हार्दिकनाडी-चक्रोत्थैः प्रतानैः, न तु पश्चिमम्। प्राणदायाः फौस्फुसशाखाद्वयं तु उभयम् प्रविशन्ति।

---

१। The Cardiac plexus. २। Superficial Cardiac plexus. ३। Cardiac Ganglion of Wrisberg. ४। Deep Cardiac Plexus. ५। Coronary plexuses. ६। Pulmonary plexuses.

( २५६ चित्रम् )

## स्वतन्त्रनाडीतन्त्रप्रदर्शकः शवव्यवच्छेदः ।




चित्रव्याख्या—१—सप्तमी नाडी । २—अन्तर्मातृका धमनी । ३—मातृकाचक्रम् । ४—पञ्चमनाड्याश्चाक्षुषी शाखा । ५।६—चाक्षुषग्रन्थिः समूलः ।

एवञ्चेह षड् गौणानि नाडीचक्राणि उरोगुहायां—द्वे हार्दिकधमनीवेष्टने, चत्वारि च परिफुस्फुस संज्ञानीति स्मर्त्तव्यम्।

( उदरगुहायाम् )

२। **सौरमण्डलं**[१] (मणिपूरचक्रं वा) नाम सुमहद् उदर्य्यनाडीचक्रमामाशय-पृष्ठतः पुरश्च महाधमन्याः द्रष्टव्यम् (२५५।२५६ चित्रयोः)। ततो हि सूर्य्यादिव रश्मयोऽसंख्यकल्पा नाडीतन्तवो गौणनाडीचक्र-ग्रन्थ्यादिषु, परितश्चाशयान्, प्रसृताः। अतएव उदर्य्यमिदं मस्तिष्कमिति[२] रूपकमाहुः केचित्।

अस्य च नाडीचक्रस्य पार्श्वस्थौ ग्रन्थी मुख्यौ **अर्द्धेन्दुग्रन्थी**[३] (**मणि-पूरग्रन्थी वा**) नाम। तौ विषमधारावपि प्रायेणार्धचन्द्राकारौ, क्षुद्रग्रन्थि-संघातमयौ, छिद्रबहुलौ च। तयोरवस्थानं प्रायेण महाप्राचीरामूलद्वयस्य पुरस्तात्।

अस्मिंश्च नाडीचक्रे प्रविशन्ति 'पर्य्याशयिकी' संज्ञं नाडीद्वयं पूर्वोक्तम्, शाखा-सूत्राणि च कानिचिद् दक्षिणप्राणदायाः। नाडीचक्रोत्थैश्च प्रतानै रारच्यन्ते दश नाडीचक्राणि गौणानि उदर्य्याशयादीन् परितः (२५५।२५६ चित्रयोः)। तद्यथा—

(१) अनुकोष्ठिकं[४] नाम नाडीचक्रम् अर्द्धेन्दुग्रन्थिप्रतानैः उदरगुहान्तर-नुकोष्ठिकाख्य-नाडीप्रतानमिलितैर्निर्म्मितम्। तस्य दक्षिणभागे द्रष्टव्यो नाडी-ग्रन्थिरनुकोष्ठिकाख्यः। तदेतत् नाडीचक्रं स्वप्रतानैर्महाप्राचीरामनुप्राणयति, अधिवृक्कीयचक्रञ्च कदाचित्।

(२) अधिवृक्कीयं[५] नाम नाडीचक्रमधिवृक्कं परितः प्रततम्। तस्य निर्म्माणं बहुभिः सूत्रैः सौरमण्डलोत्थैरर्द्धेन्दुग्रन्थि-सम्भवैः, आशयिकीसंज्ञकनाडी-द्वयप्रभवैश्च, अनुकोष्ठिकाख्य-नाडीप्रतानैश्च प्रायेण।

(३) परिवृक्कं[६] नाम नाडीचक्रद्वयं वृक्कद्वयं परितः प्रततम्। तस्य निर्म्माणं पूर्ववदेव, लघ्वाशयिक्योर्नाड्योः प्रतानैरनेक तनुग्रन्थिबहुलैः। तस्य कतिचित् सूत्राणि अनुवृषणिकं नाडीचक्र मारचयति भूम्ना।

(४) अनुवृषणिकं[७] नाम नाडीचक्रं परिवृक्कनाडीचक्रोत्थैः सूत्रैर्निर्म्मितं वक्ष्यमाण-महाधामनिक-चक्रस्य प्रतानैः परिपुष्टं, वृषणबन्धन्यनुक्रमेणाधस्ताद् वृषणान्तं प्रसृतं, स्वनामिकां सिराधमनीमनुसरति पुंसः। स्त्रियास्तु तदेव अनुवीजकोषिकं[८] नाम तद्वद् वीजकोषं प्रति बस्तिगुहान्तः प्रसृतम्।

---

१। The Epigastric or Cœliac or Solar plexus. २। Abdominal Brain. ३। Semilunar Ganglia. ४। Phrenic Plexus. ५। Supra-renal plexus. ६। Renal plexus. ७। Spermatic plexus. ८। Ovarion plexus.

(५) पर्य्यामाशयिकं[१] नाम नाडीचक्रं वामप्राणदायाः शाखाभिर्मिलितैः सौरमण्डलप्रतानैर्निर्मीयते । तद् आमाशयकोडिकां वामां धमनीमनुसरति ।

(६) याकृतं[२] नाम नाडीचक्रं अभियाकृतधमन्यनुसारि यकृतो बहिरन्तश्च प्रततम । तद् वामायाः प्राणदायाः दक्षिणानुकोष्ठिकाख्य-नाड्याश्च प्रतानैरारचितम् । तस्य शाखाप्रतानास्तस्या एव धमन्याः शाखाप्रशाखानुसरणेन आमाशयतले, ग्रहणीञ्च परितः, प्रसरन्ति ।

(७) प्लैहिकं[३] नाम नाडीचक्रं सौरमण्डलशाखाभिः सह वाममणिपूर-ग्रन्थिसम्भवैः प्रतानैः, दक्षिणप्राणदायाः शाखाभिश्च सम्पाद्यते । तस्य प्रतानाः अभिप्लीहिकां धमनीं सशाखामनुसृत्य प्लीहान्तः प्रविशन्ति, आमाशयतले च प्रतायन्ते ।

(८) उत्तरान्त्रिकं[४] नाम नाडीचक्रं सौरमण्डलस्यानुबन्धरूपं दक्षिण-प्राणदायाः शाखया संमिलितम् । तद् उत्तरान्त्रिकीं धमनीमनुसरति सशाखाम् । विभज्यते च शाखाप्रतानेषु अग्न्याशय-क्षुद्रान्त्र-बृहदन्त्रादिगेषु लघुनाडीग्रन्थिबहुलेषु ।

(९) महाधामनिकं[५] नाम नाडीचक्रं महाधमन्याः पुरःपार्श्वयोश्च प्रततं उत्तरान्त्रिकाऽधरान्त्रिक-धमन्योर्मूलान्तराले । तस्य निर्म्मापकास्तन्तवः सौर-मण्डलात्, मणिपूरग्रन्थिभ्याम्, अनुकटिकाख्य-नाडीग्रन्थिभ्यश्च सम्भूताः । तदुत्थाः पुनः सूत्रप्रतानाः अनुवृषणिकाऽधरान्त्रिकाऽधिवस्तिक-नाडीचक्रैः सम्बध्यन्ते, प्रसरन्ति च अधरां महासिरां परितः ।

(१०) अधरान्त्रिकं[६] नाम नाडीचक्रं सौरमण्डलोत्थैर्नाडीप्रतानैर्निर्मितम् अवरोहिबृहदन्त्रं गुदनलिकाञ्च परितः प्रतायते, तदन्तर्गतानि च त्रीणि गौणचक्राणि वामं बृहदान्त्रिकं, परिकुण्डलिकं, परिगुदकञ्चेति ।

अथ अधिवस्तिकं नाडीचक्रम् ।

३ । **अधिवस्तिकं**[७] नाम नाडीचक्रम् त्रिक-कशेरुकासन्धानस्य पुरस्तात् साधारण्योरधिश्रोणिकधमन्योरन्तराले दृश्यं तच्छाखानुवर्त्ति (२५५।२५६ चित्रयोः) । तदारच्यते महाधामनिकचक्रोत्थैर्नाडीसूत्रैरनुकटिकग्रन्थिसम्भवैश्च । तस्य चाधः-प्रसृतस्य द्वेधा विभागो वाम-दक्षिण-वस्तिगुहान्तरीयचक्रयोः । तयोः सम्बन्धो द्वितीय-तृतीय-चतुर्थानुत्रिक नाडीभिः, आद्यानुकटिक-स्वतन्त्रग्रन्थिद्वयेन च एकैकतः ।

१ । Superior Gastric plexus. २ । Hepatic plexus. ३ । Splenic or Lienal plexus. ४ । Superior Mesenteric plexus. ५ । Aortic plexus. ६ । Inferior Mesenteric plexus. ७ । Hypogastric plexus.

( २५७ चित्रम् ) समगूनाडीतन्त्रस्य परस्परसम्बन्धप्रदर्शकं रेखाङ्कनम् ।

[ प्राणादिवायूनां वर्त्मान्यपि इहैव प्रदर्शितानि, षट्चक्रपरिचयश्च ]




[ अत्र कृष्णसूत्राणि परिस्वतन्त्रनाडीसूत्राणां सूचकानि । लोहितसूत्राणि तु मध्यस्वतन्त्रनाडीसूत्राणाम् ]

[ To face P. 168.

चित्रव्याख्या—३।७।१०—अङ्काः तृतीय-सप्तम-दशम नाडीनां सूचकाः। म०म०—मध्यम मस्तुलुङ्गपिण्डम्। सु० शी०—सुषुम्नाशीर्षकम्। च०—चाक्षुष ग्रन्थिः। त०—तालुजातूक ग्रन्थिः। ह०—हन्वधरीय ग्रन्थिः। क०—कर्णिक ग्रन्थिः। ग१—सुषुम्नाकाण्डस्य ग्रैवेयांशारम्भः। प१—तस्यैव अनुपृष्ठिकांशारम्भः। क१—तस्यैव अनुकटिकांशारम्भः। त्रि१—तस्यैव अनुत्रिकांशारम्भः। पि०—पिङ्गला। मू०—मूलाधारपद्मम्। स्वा०—स्वाधिष्ठानम्। मणि०—मणिपूरः। अना०—अनाहतपद्मम्। विशुद्ध०—विशुद्धपद्मम्। आज्ञा०—आज्ञाचक्रम्। उ०ग०—उत्तरग्रीविक ग्रन्थिः। सौर०—सौरमण्डलम्। उ०आ०—उत्तरान्त्रिकं नाडीचक्रम्। अ० आ०—अधरान्त्रिकं नाडीचक्रम्।

वामतः प्राणोदानादि शब्दैः प्राणादिवायूनां समूलाः क्रियाप्रसरमार्गाः प्रदर्शिताः। व्यानवायुमार्गस्तु सर्वशरीरगो नेह दर्शितः।

( २५५ चित्रम् )

## स्वतन्त्रनाडीतन्त्रस्य पृथग्विभाग प्रदर्शकं रेखाङ्कनम् ।




चित्रव्याख्या—३।४।५— तृतीयादि नाडीत्रयं प्रति यथाक्रमं प्रतानाः । १२—द्वादशीं नाडीं प्रति । ह१ ह२ ह३—उत्तर-मध्यमाऽधरसंज्ञा हार्दिकनाड्यः (यथाक्रमम्) । फ०—फुस्फुसपश्चिमं नाडीचक्रम् । ट०—अनुकोष्ठिकनाड्याः प्रतानाः । ज१ ज२—महती आशयिकी, लघ्वी आशयिकी चेति नाडीद्वयं ( क्रमेण ) । ज३—अनुवृक्का नाडी । अ०—सौरमण्डलान्तर्गतः अर्द्धेन्दुग्रन्थिः । झ०—अधिवृक्कं नाडीचक्रम् । छ० ज०—महाधामनिकं नाडीचक्रम् । च०—अनुवृषणिकं चक्रम् ।

अथ वस्तिगुहान्तरीय[१] नाडीचक्रयोः प्रतानैर्निर्मीयन्ते यथासम्भवमिमानि नाडीचक्राणि गौणानि ( २५५।२५६ चित्रयोः)। तद्यथा—

(क) परिगुदकमधरगुदकं[२] वा नाम चक्रं— गुदं परितः।

(ख) परिवस्तिकं[३] नाम चक्रं—वस्तिं शुक्रप्रपाद्वयं शुक्रवाहिनीद्वयञ्च परितः।

(ग) परिपौरुषं[४] नाम चक्रं—पौरुषग्रन्थिं परितः।

(घ) पर्युपस्थं[५] चक्रं, सपरिकरमुपस्थं (पुंसो मेढ्ं स्त्रियाश्च योनिं) परितः।

(ङ) परिगर्भाशयं[६] चक्रं—गर्भाशयं वीजवाहिनीद्वयञ्च परितः।

चरमतस्तु अधिवस्तिक-नाडीचक्रास्ताद् द्वश्यं कन्दमूलं[७] नाम इडापङ्गलयोश्चरमं मेलकस्थानमनुत्रिकास्थ्न उत्सङ्गस्थम्।

इति एकादशोऽध्यायः।

---

## अथ द्वादशोऽध्यायः।

अथातो वायुपञ्चकवर्त्मादिविज्ञानीयमध्यायं व्याख्यास्यामः।

पञ्च खल्विह वायवः शरीरे शुभाशुभविधातार इति प्राञ्चः। तेषाञ्च वर्त्मानि नाडीतन्त्रेषु विभज्य दर्शयितुं शक्यानि प्रायेण ( २५७ चित्रम्)। येषु येषु चाशयादिषु विशेषतः क्रियाप्रसरस्तेषां, तानि तानि तत्तद्वायूनां स्थानानीत्यभिधीयन्ते।

तत्र प्राणो नाम वायुः मस्तिष्क-सुषुम्नाशीर्षकमूलः। तस्य वर्त्मानि शीर्षण्या नाड्यः उत्तरस्वतन्त्रनाडीमण्डलञ्च। तस्य क्रियाः इन्द्रियाधिष्ठानेषु, लालाग्रन्थिषु, श्वासयन्त्रे, हृदि, यकृदामाशयान्त्रादिषु, अन्येषु चोदर्य्ययन्त्रेषु अन्यत्र वृहदन्त्र-वृक्क-वस्ति-गुदादिभ्यः। वृहदन्त्रस्याऽपि आरोहिभागः दशमनाड्याऽनुप्राणितः—इति परीक्षकाः। अतएव प्राञ्चः—

"स्थानं प्राणस्य शीर्षोरः-कर्णजिह्वाक्षिनासिकाः।
ष्ठीवन-क्षवथूद्गार-श्वासाहारादि कर्म च॥" (चरक० चिकि० २८ अ०)

"उरःकण्ठचरो वुद्धि-हृदयेन्द्रिय-चित्तधृक्।
ष्ठीवन-क्षवथूद्गार-निःश्वासान्नप्रवेशकृत्॥" (अष्टांग हृ० सूत्र० १२ अ०)

---

१। Pelvic plexus. २। Hæmorrhoidal plexus. ३। Vesical plexus. ४। Prostatic plexus. ५। Vaginal plexus. ६। Uterine plexus. ७। Ganglion Coccygeum Impar.

**उदानो** नाम वायुः प्राणवायोः सहकारी। तस्य मूलानि मध्यमस्वतन्त्र-नाडीमण्डलस्य उत्तरानुग्रीविक ग्रन्थिषु साक्षात्, सुषुम्नाकाण्डस्य अनुग्रीविकांशे अनुपृष्ठिक भागोत्तरार्द्धे च परम्परया। तस्य वर्त्मानि उर्द्ध्वं जत्रुगताः कण्ठोरश्चराश्च स्वतन्त्रनाडीप्रतानाः आमहाप्राचीरं प्रसृताः। तैर्हि तस्य क्रियाप्रसरः स्तोकेन शीर्षण्येष्विन्द्रियाधिष्ठानेषु, विशेषतश्च स्वरयन्त्रे, लालाग्रन्थिषु, श्वासयन्त्रे हृदये महाप्राचीरायाञ्च।

तदुक्तं—"उरः स्थानमुदानस्य नासानाभि[1]गलाञ्चरेत्।

वाक्प्रवृत्तिः प्रयत्नोर्ज्जो वलवर्णस्मृतिक्रियः॥" (अष्टांग हृ०सूत्र० १२ अ०)

**समानो** नाम वायुरुदर्य्ययन्त्राणां कर्मप्रवर्त्तको विशेषेण। तस्य मूलानि सुषुम्नाकाण्डस्य अनुपृष्ठिकभागोत्तरार्द्धे, अनुपृष्ठिक स्वतन्त्रग्रन्थिषु, सौरमण्डले, उत्तरान्त्रिकाधरान्त्रिकयो-र्नाडीचक्रयोश्च द्रष्टव्यानि।

उक्तञ्च—"आमपक्वाशयचरः समानो वह्निसङ्गतः।

सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि॥ (सु० निदान० १ अ०)

**अपानो** नाम वायुः वृहदन्त्र-वृक्क-वस्ति-वृषण-वीजकोषगर्भाशयादीनां कर्म्म-प्रवर्त्तकः। तस्य मूलानि सुषुम्नाकाण्डस्य अनुकटिकभागान्तर्द्रष्टव्यानि, अधि-वस्तिक नाडीचक्रे च। अतएव प्राञ्चः—

"पक्वाधानालयोऽपानः काले कर्षति चाप्ययम्।

समीरणः शकृन्मूत्रशुक्रगर्भार्त्तवान्यधः॥" (सु० निदान० १ अ०)

**व्यानो** नाम वायुः सर्वशरीरगः पेशीनां प्रचेष्टनः सिराधमन्यादीनां संकोचप्रसारकरो मस्तिष्कसौषुम्निकनाडीतन्त्रमूलः। स एव रससंवहन सहायः इति सुश्रुतः। तथाह्युक्तं—

"कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः[2]।

स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि॥" (सु० निदान० १ अ०)

अथ पूर्वप्रसङ्गतः षट्चक्रपरिचयञ्चेह प्रत्यक्षानुगतं संक्षेपेण सूचयामः। अतीन्द्रियप्रत्यक्षन्तु[3] तस्य योगिजनगम्यम्।

श्रूयते हि तन्त्रेषु मूलाधार-स्वाधिष्ठान-मणिपूराऽनाहत-विशुद्धाऽज्ञासंज्ञानि षट् पद्मानि (चक्राणि वा) सुषुम्नान्तर्निगूढानि, यानि निर्भिद्य मालासूत्रवदूर्द्ध्वं

१। नाभिपदमत्र महाप्राचीरामूलाभिप्रायम्। २। रससंवहनं हृत्संकोचप्रसारकृतमपि सिरा-धमन्यादि संकोचप्रसार साहाय्येनैव सम्पाद्यते, अत उक्तं—"रससंवहनोद्यतः, स्वेदासृक् स्रावणश्च" इति। प्राणवायुप्रसंगे तूक्तं—"हृदयेन्द्रियचित्तधृक्"—इति। ३। अतीन्द्रिय प्रत्यक्षन्तु नामावर्णादि समन्वित द्विदल-चतुर्दलादिरूपैः। तद् ध्यानमात्रगोचरं योगिनाम्।

गता चित्रिणी[1] नाम नाडी। तान्याभ्यन्तर चक्राणि तेषां प्रत्यक्षगोचरा भागाः सुषुम्नाकाण्डस्य खण्डिकाविशेषरूपाः, येभ्यो निर्गतास्तनुसूत्रप्रतानाः स्वतन्त्रनाडी-सूत्रजालरचितानि तानि तानि नाडीचक्राणि वाह्यरूपाणि विरचयन्ति। तद्यथा—

(१) मूलाधारचक्रम्[2] (२५४ चित्रम्) सुषुम्नाकाण्डस्य अनुकटिकांश-शेषान्तरीयम्। तस्य वाह्यं रूपं वस्तिगुहान्तरीयचक्रं दर्शितपूर्वम् यस्य प्रतानाः गुद-वस्तिवृषणादिषु प्रतताः।

(२) स्वाधिष्ठानं[3] (२५४।२५७ चित्रयोः) नाम चक्रम् सुषुम्नाकाण्डस्य अनुकटिकांशस्य उत्तरखण्डिकान्तर्वर्त्ति। तस्य वाह्यं रूपम् अधरान्त्रिकं नाम नाडीचक्रम्।

(३) मणिपूरचक्रम्[4] (२५४।२५७ चित्रयोः) सुषुम्नाकाण्डस्य अधरानुपृष्ठिकांश-खण्डिकाभ्यन्तरस्थम् यतो निर्गतानि नाडीसूत्राणि सौरमण्डलाख्यं वाह्यं नाडीचक्रं सपरिकरमारचयन्ति।

(४) अनाहत चक्रम्[5] (२५४।२५७ चित्रयोः)—सुषुम्नाकाण्डस्य अनुपृष्ठिकाऽद्य-खण्डिकाचतुष्टयान्तःस्थम्। तस्माद् विनिर्गताः स्वतन्त्रनाडीतन्तवो मध्यस्वतन्त्र-मण्डलीय तन्तु-पुष्टाः हार्दिकादिनाडीचक्राणि विरचयन्ति, तदस्य वाह्यं रूपम्।

(५) विशुद्धचक्रम्[6] (२५७ चित्रम्) सुषुम्नाशीर्षकान्तरस्थम्। परिग्रसनिकादि चक्राणि तद्वाह्यरूपाणि।

(६) आज्ञाचक्रम्[7] (२५७ चित्रम्)—आज्ञाकन्दद्वयवेष्टितो व्रह्मगुहांशः। तन्मनसोऽधिष्ठान मिति योगिनः।

सर्वेषाञ्चैषां वाह्याभ्यन्तरचक्राणामधिष्ठातृ शीर्षान्तःस्थं सहस्रारपद्मं मस्तिष्क संज्ञम् यत् परमशिवस्थानमामनन्ति योगिनः।

तदेतद् वीजरूपेण व्याख्यातं षट्चक्रनिरूपणम्। विस्तरस्त्वाकरेषु मृग्यः, गुरुवक्त्रगम्यश्च।

इति द्वादशोऽध्यायः।

---

१। इयं वर्णितपूर्वा तृतीयाध्याये (२३ पृष्ठे)। अस्या आंग्ल नाम—Substantia Gelatinosa Centralis. २। Spinal portion = Lumbar centres. Outer portion = Pelvic plexus. ३। Spinal portion = Lumbar centres. Outer portion = Inferior mesenteric plexus. ४। Spinal portion = Sympathetic centres in lower dorsal section of Spinal cord. Outer portion = Solar plexus. ५। Spinal portion = Upper dorsal section of Spinal cord. Outer portion = Cardiac and Pulmonary plexuses. ६। Vital centres in the Medulla (Upper Para-Sympathetic system). ७। Optic Thalami.

# प्रत्यक्षशारीरम्

## इन्द्रियखण्डम् ।

### प्रथमोऽध्यायः ।

अथातः पञ्चज्ञानेन्द्रियाधिष्ठानविज्ञाने
श्रवणेन्द्रिय विज्ञानीयमध्यायं व्याख्यास्यामः ।

पञ्च खल्विह ज्ञानेन्द्रियाणि, यानि मनःसनाथानि शब्द-स्पर्श-रूप-रस-गन्ध-संज्ञाग्रहणाय प्रभवन्ति । तेषां द्विविधान्यधिष्ठानानि—बाह्यान्याभ्यन्तराणि चेति । तत्र बाह्यानि - श्रोत्र-त्वङ्-नेत्र-रसना-घ्राणाख्यानि । तानि सामान्यतः इन्द्रियाधिष्ठानानि नाम प्राचाम् । आभ्यन्तराणि तु मस्तिष्कस्य एकैकार्धेऽवस्थितानि विपर्य्ययेण, तानि 'संज्ञाबोधनक्षेत्राणि' नाम वर्णितचराणि । तान्येव ऐन्द्रियसंज्ञाधिष्ठानानि ।

सर्वाणि चेन्द्रियाणि युग्मरूपाणि । तत्र श्रोत्र-नेत्र-घ्राणेन्द्रियाणां युग्मत्वं स्फुटमेव । रसना त्वेकाऽपि वाम-दक्षिणार्धविभागेन युग्मा । त्वचोऽप्येवम् । तत्तत्संज्ञावहनाडीनां वाम-दक्षिणभेदेन द्वैविध्यात्, तत्तत्संज्ञाधिष्ठानानां च विपर्य्ययेणावस्थानात् । आहुश्च प्राञ्चः—

"प्राणाः प्राणभृतां यत्र श्रिताः सर्वेन्द्रियाणि च ।
तदुत्तमाङ्गमङ्गानां शिरस्तदभिधीयते ॥" (चरक० सूत्र० २७ अ०)

"शिरस्तात्वन्तरगतं सर्वेन्द्रियपरं मनः ।
तत्रस्थं तद्धि विषयानिन्द्रियाणां रसादिकान् ।
समीपस्थान् विजानाति त्रीन् भावांश्च नियच्छति ।
तन्मनःप्रभवश्चापि सर्वेन्द्रियमयं बलम् ॥" (भेल० चिकि० ८ अ०)

### अथ श्रवणेन्द्रियम् ।

**श्रवणेन्द्रियं**[१] नाम शब्दसंज्ञाऽऽदानसाधनं श्रुति-श्रोत्र-कर्णाऽपरपर्य्यायम् । तस्य बाह्याधिष्ठानमेकैकतः शिरःपार्श्वे शङ्खास्थिसंलग्नं तद्बहिरन्तश्च दृश्यम् । आभ्यन्तरन्तु अधिष्ठानं (संज्ञाबोधनक्षेत्रम्) मस्तिष्कापरार्धे उत्तरशङ्खिकाख्यकर्णिकाश्रितमिति वर्णितचरम् (६४ पृष्ठे) ।

---

१। Organ of Hearing.

तस्य च बाह्याधिष्ठानस्य त्रेधा विभागः—

बहिःकर्णः, मध्यकर्णः, अन्तःकर्णश्चेति। तत्राद्यो बहिरेव दृश्यः, अपरौ तु निगूढौ शङ्खास्थिमध्ये।

अथ बहिःकर्णः।

**बहिःकर्णो**[1] नाम बाह्यतमो भागः श्रवणेन्द्रियस्य। स त्वगावृततरुणास्थि-निर्म्मितो भूम्ना, शङ्खास्थिसंसक्तस्तत्समाश्रयश्च कर्णगुहाभागे। तस्य द्वावंशौ मुख्यौ—कर्णशष्कुली, कर्णकुहरञ्चेति। तत्र—

१। **कर्णशष्कुली**[2] तनुत्वङ्मांसावृत तरुणास्थिनिर्मिता शंखास्थिपार्श्वे संलग्ना शष्कुल्याकृतिः (२५८ चित्रम्)। तस्य विभागाः—कर्णपालिद्वयं, कर्णखातानि, कर्णपुत्रिके, कर्णचूचुकश्चेति। तद्यथा—

(२५८ चित्रम्)

**कर्णशष्कुली।**




(क) कर्णपाल्यौ द्वे—बाह्या,[3] आन्तरी[4] चेति। तयोर्बाह्या कर्णविवरो-परिष्टादारभ्य शङ्खावर्त्तवदावृत्ता कर्णशष्कुल्यास्तोरणाकृतिभागं बाह्यमारचयति। तदुत्सङ्गे दृश्यो दीर्घवक्रः स्थूलोत्सेधः आन्तरकर्णपालिः नाम सा ऊर्द्ध्वसीम्नि द्विधाविभक्तमूला त्रिकोणखातं क्रोडे मूलयोर्धारयति।

१। External Ear. २। Pinna of the Ear. ३। Helix. ४। Anti-helix,

(ख) कर्णपालिखातानि त्रीणि (चत्वारि वा)—त्रिकोणखातं,[१] मध्यखातम्,[२] पालिसीता[३] चेति। तत्राद्यं वर्णितम्। मध्यखातं ह्रस्ववक्रं आभ्यन्तरपालिक्रोडस्थमुपरिष्टात्, तस्य द्वेधा विभक्तस्य उत्तरं खातमञ्जलिखातं[४] नाम, अधरं कर्णपीठं[५] नाम, तत् कर्णगुहाद्वारस्थं पश्चात्। पालिसीता पाल्योरन्तरालस्था दीर्घवक्रा स्वनामव्याख्याता।

(ग) कर्णपुत्रिके[६] द्वे अग्रिम-पश्चिमभेदेन त्रिकोणकूटरूपे। तत्राग्रिमा बृहत्तरा—सैव प्राचां कर्णपुत्रिका। उभयोरन्तराले च परिखा पुत्रिकान्तराला[७] नाम।

(घ) कर्णचूचुकं[८] नाम कर्णशष्कुल्या अधःप्रान्तश्चूचुकसदृशो मृदुमेदुरः। तन्मध्ये दैवकृतं विवरं व्यधयोग्यमिति प्राञ्चः।

( २५६ चित्रम् )

## श्रवणेन्द्रियस्य बाह्याधिष्ठानम्।

[ श्रोत्रच्छदिकूटस्य तत्पार्श्वांशस्य चापसारणेन दर्शितम् ]




---

१। Triangular Fossa. २। Concha. ३। Scapha. ४। Cymba Conchæ. ५। Cavum Conchæ. ६। Tragus & Anti-tragus. ७। Inter-tragic Incisure. ८। Lobule.

२। **कर्णकुहरं,**[१] **बाह्या कर्णगुहा** वा नाम (२५६ चित्रम्) कर्ण-पुत्रिकाद्वयान्तरालादारभ्य कर्णपटहावधि वक्रगत्या विस्तृता सार्धाङ्गुलदीर्घा वक्रसुरङ्गा या तनुमलस्रावित्वगावृततरुणास्थिवेष्टिता शङ्खास्थिमध्यस्था। तस्या व्यतिकर इत्थम्भूतः।—पुरोऽधस्ताच्च हन्वस्थिमुण्डम्। अधः पुरतश्च कर्ण-मूलिको नाम लालाग्रन्थिर्वर्णितपूर्वः। पश्चात् गोस्तनप्रवर्द्धनान्तरीयकोटराणि। ऊर्द्ध्वमपि तान्येव श्रोत्रच्छदिकूटश्च शङ्खास्थ्नः।

दृश्या च कर्णगुहान्तःप्रान्ते किञ्चित्खण्डितमण्डलाकारा सूक्ष्मपरिखा पटहनेमिर्नाम[२] (२६० चित्रम्), यत्र तरुणास्थिवलयकेन संसक्ता पटहाख्या कला वक्ष्यमाणा।

धमन्यस्तु—बहिःकर्णपोषण्यो बहिर्मातृकाख्यधमन्याः शाखा-प्रशाखाः अग्रिम-कर्णिका-पश्चिमकर्णिका-कपालमूलिनीप्रभृतयो वर्णितपूर्वाः, अन्तर्हान्व्याऽनुशङ्खादि-प्रशाखाश्च।

नाड्यः पुनर्बहिःकर्णस्य पञ्चम-सप्तम-दशमनाडीनां शाखाप्रशाखाः कर्ण-शङ्किकाद्याः वर्णितचराः, ग्रीवाप्रवेणीसम्भवाश्च।

अथ मध्यकर्णः।

**मध्यकर्णः, मध्यमा कर्णगुहा**[३] वा नाम क्षुद्रविषमायतना गुहा अंगुलमात्रविस्तारा या जीवच्छरीरे पटहकलया प्रच्छन्नमुखी (२५६।२६० चित्रयोः) शङ्खास्थ्नोऽश्मकूटभागान्तर्निगूढा। तस्या द्वौ भागौ कल्प्येते वर्णनासौकर्य्याय—मध्यभागः पटलभागश्चेति। तत्र मध्यभागः[४] कर्णास्थित्रितयस्य अधरार्द्धं, वक्त्रनाडीं, रसग्रहां कर्णान्तिकां नाम तच्छाखाश्च क्रोडेकृत्य तिष्ठति वायुपूर्णः। तस्यानुवन्धभूतः पुरस्तादधश्च पटहपूरणिकाख्यो वायुमार्गः अश्मकूटाग्रे दृश्यः, यस्य द्वारं गलविल-पार्श्वे प्रच्छन्नमवतिष्ठते। तत्रैव तदूर्द्ध्वभागे दृश्यः पटहोत्तंसन्याः पेश्याः सुरङ्गामार्गः अस्थ्यालिकया किञ्चिदिव पृथगभूतः।

मध्यकर्णस्य पटलभागः अस्थिपत्रकमयः, तत्र निगूढाऽपरा क्षुद्रगुहा पटलगुहा[५] नाम। सा मुद्गरकाऽङ्कुशकाख्ययोः क्षुद्रकर्णास्थ्नोरुत्तरार्द्धधारणाय। तलभागोऽपि मध्यकर्णस्य अस्थिपत्रकमयः, यद्व्यवधानेन तदधस्तादवतिष्ठते मन्याखातम् अनुमन्याख्य स्थूलसिराधारणम्। श्रावणी च शाखा[६] नवम्या नाड्यास्तत्रैवान्तः-पार्श्वस्थच्छिद्रेण प्रविष्टा।

---

१। Ext. Auditory Meatus. २। Tympanic sulcus. ३। Middle Ear. ४। Atrium or Tympanic cavity proper. ५। Attic or Epitympanic recess. ६। Jacobson's Nerve or Tympanic branch of Glosso-pharyngeal nerve.

बहिर्द्वारं पुनर्मध्यकर्णस्य पटहाख्यया कलया संवृतम्।

अन्तःपार्श्वस्तु निर्मीयते अन्तःकर्णस्य बहिःप्राचीरभूतेन तुम्बिकाच्छिद्र-शम्बूकच्छिद्रादिलक्षितेन अस्थिफलकभागेन। तत्र—

तुम्बिकाच्छिद्रं[1] पुरस्तात् दीर्घवृत्तप्रायं कलावृतञ्च, तत्र सन्धीयते धरणकास्थ्नः पादपीठभागः, येन पटहोत्थास्तरङ्गवेगाः श्रुतितुम्बिकान्तः समर्प्यन्ते। शम्बूकच्छिद्रं[2] तु पश्चादधश्च दृश्यं वृत्तप्रायं कलावृतञ्च, सेयं कला पटहवत् कम्पमाना मध्यकर्णीय-तरङ्गवेगान् शम्बूकान्तरर्पयन्ति। ऊर्द्ध्वभागे च तुम्बिकाच्छिद्रस्य दृश्या वक्त्रनाड्याः सन्धारणी परिखा[3] या वक्रीभूयपश्चिमतो गता। मध्ये चानयोश्छिद्रयोरीषदुन्नता अस्थ्यालिका शम्बूकालिका[4] नाम, सा श्रुतिशम्बूकस्य प्रथमावर्त्तं दर्शयति।

इदञ्चात्र लक्षणीयम्। मध्यकर्णस्य सम्मुखभागे अस्थिपत्रकमात्रव्यवहिता मातृकाधमन्याः वक्रसुरङ्गा,[5] पटहपूरणिका च तदूर्द्ध्वस्था। पश्चिमभागे च कोटरं[6] गोस्तनान्तरीय कोटरानुवन्धि। सोऽयं मध्यकर्णस्य व्यतिकरो व्याख्यातः।

**श्रुतिपटहः, पटहकला वा**[7] नाम तनुदृढमसृणा स्वच्छप्राया कला मण्डलाकारा या बहिःकर्ण-मध्यकर्णयोर्मध्ये पटहनेमिस्थे मण्डलाकारतरुणास्थ्नि सम्बद्धा अर्धशायितभावेनावतिष्ठते (२५६।२६० चित्रयोः)। सेयं वायुवाहितैः शब्दतरंगैः कर्णशष्कुल्यवच्छिन्ने नभसि समुत्थितैः प्रकम्पिता स्वसंसक्तं कर्णास्थि-त्रयं नुदति तरङ्गवेगाणामन्तःकर्णप्रापणाय। दृश्यते चासौ जीवच्छरीरे (कर्ण-वीक्षणयन्त्रेण सूर्य्यालोकसहायेन) पूर्णोज्ज्वलमण्डलप्रायाकृतिः किञ्चित्-कोरोदरा च।

अथास्या इमे भागास्तथा परीक्षणीयाः—(२६० चित्रम्)

(१) पटहदण्डिका[8]—सेयं मुद्गरकाख्यकर्णास्थिदण्डभागस्य पटहपृष्ठे संसक्तस्य संज्ञा। स च दण्डभागः पटहोत्तरार्धस्य मध्यरेखायामेव पटहनाभिं यावत् संसज्यते। पटहनाभिश्च[9] तत्केन्द्रविन्दुः।

(२) त्रिकोणिका[10]—नाम तनुत्रिकोणमुज्ज्वलस्थानं कोरोदरम् पटहस्य, यत् कर्णपरीक्षाकाले सूर्य्यालोकः सम्यगुद्भासयति। तस्याग्रं पटहनाभ्यां समाप्यते।

---

१। Fenenstra Ovalis. २। Fenestra Rotunda. ३। Facial Canal. ४। Promontary. ५। Carotid Canal. ६। Tympanic Antrum. ७। Tympanic membrane. ८। Handle of Malleus. ९। Umbo. १०। Antero-Inferior Quadrant (Cone of light).

(४) पटहनीवी[1] नाम पटहकलामण्डलस्य पटहवेष्टनिकाख्ये खण्डितशिरस्के तरुणास्थिवलये संसक्तस्य शिथिलबन्धन उत्तरभागः ।

आन्तरतलन्तु पटहकलायाः कूर्म्मपृष्ठाकारं पटहदण्डिकासम्बद्धम् । तदूर्द्ध्व-धाराश्रया रसग्रहा कर्णान्तिका नाम नाडी ( २६० चित्रम् ) रसनां प्रति प्रस्थिता ।

निर्म्माणन्तु पटहकलायाः सुसूक्ष्मैः स्नायुसूत्रैः भूम्ना । तस्यास्त्रयो भागाः परीक्षार्हाः—(१) त्वक्प्रायिको वाह्यः[2]—यो वाह्यकर्णगुहान्तरीयतनुत्वचा सानुवन्धः । (२) स्नायुसूत्रमयो मध्यमः,[3] स विसारिभिर्मण्डलाकारैश्च तनुसूत्रै-निर्मितः, यमाश्रित्यावतिष्ठते भागद्वयमपरम् । (३) श्लेष्मस्नाविसूक्ष्मकलामयः आभ्यन्तरः,[4] यो मध्यकर्णस्य पटहपूरणिकायाश्चाऽभ्यन्तरीयकलया ताद्रूश्या सानुवन्धः ।

पोषणं पुनः श्रुतिपटहस्य अन्तर्हान्व्याया धमन्याः गम्भीरकर्णिकाख्यया शाखया, अन्तर्मातृकायाः पटहानुगशाखाभिः, वहिर्मातृकायाः पश्चिमकर्णिकाख्यशाखया चांशेन । सिराश्च प्रविशन्ति अनुमन्यामेव भूम्ना, सिरासरितश्च पार्श्विकाख्याम्, सिराश्च मस्तिष्कवहिर्वृतिगाः । नाड्यश्चास्य पूर्ववदेव प्रायेण ।

### अथ कर्णास्थित्रयम् ।

त्रीणि खलु विषमकठिनानि क्षुद्रतमान्यस्थीनि मध्यमकर्णगुहान्तर्निगूढानि ( २६० चित्रम् ) मुद्गरकाऽङ्कुशक-धरणक-संज्ञानि । तानि परस्परसंहितानि उन्नमनयन्त्रकम्[5] आरचय्य पटहकम्पनोत्थान् वेगतरङ्गान् अन्तःकर्णीयश्रुतियन्त्रिकां प्रापयन्ति । तत्र—

**मुद्गरकं**[6] नाम क्षुद्रमुद्गराकारं दीर्घप्रायं क्षुद्रास्थि यस्य दण्डाकारो भागः पटहपृष्ठे संसक्तः पटहकलाकम्पनवेगमादौ संगृह्णाति । तस्य त्रयो भागाः—मुण्डं, दण्डं, पुच्छञ्चेति । तत्र मुण्डं मध्यकर्णगुहायां शिखरस्थं स्वशिखया गुहापटले सम्बद्धम् , संहितश्च तत्पृष्ठभागः अंकुशकास्थ्नः पर्य्याणकलक्ष्मणा । दण्डभागस्तु अधोमुखः पटहकलापृष्ठे मध्यरेखायां पटहनाभिं यावत् संसक्तः । पुच्छं दण्डभाग-मूलादुद्भूय पार्श्वतोगतं पटहकलायाः शिथिलभागेन सम्बध्यते ।

**अंकुशकं**[7] नाम मध्यमं कर्णास्थिशकलं मध्यकर्णगुहायां शिखरस्थम् । तस्य च कूटाकारभागस्य क्रोडस्थं पर्य्याणकाकारं सन्धिलक्ष्म मुद्गरकमुण्डेन

---

१। Pars Flaccida. २। External or Cuti-cular layer. ३। Middle or Fibrous layer. ४। Internal or Mucous layer. ५। Lever. ६। Malleus. ७। Incus.

सन्धीयते। तस्य वहिर्मुखं लघुप्रवर्द्धनकमंकुशबन्धन्या निबद्धं पार्श्वतः। अधरं प्रवर्द्धनं तु दीर्घतरमंकुशाकृति किञ्चिद्वक्रञ्च मुद्गरकस्य दण्डभागपार्श्वस्थम्, तस्याग्रं कलायकयुतं धरणकास्थ्नो वलयभागशिरसि सम्बध्यते।

( २६० चित्रम् )

## कर्णपटहः कर्णास्थित्रयसहितः।

[ अभ्यन्तरतो दृष्टः ]




**धरणकं**[1] नाम क्षुद्रतमं चरमं कर्णास्थिखण्डम् पर्य्याणपार्श्वस्थ 'पादधरणी'[2] समाकारं यत् पटहोत्थान् वेगतरङ्गान् साक्षात् प्रापयति अन्तःकर्णयन्त्रिकान्तः। तत् कर्णमध्यगुहायामधःशीर्षमवतिष्ठते। तस्य चत्वारो भागाः कल्प्यन्ते वर्णनासौकर्य्याय —शीर्षकं, ग्रीवा, वलयभागः, पादपीठञ्चेति। तत्र शीर्षकभागः अंकुशकस्य दीर्घप्रवर्द्धनकाग्रस्थेन कलायकेन सन्धीयते। तद्ग्रीवायां वक्रीभूय सम्बद्धा पर्य्याणिका नाम पेशी, या स्वक्रियया धरणकास्थ्नः शिथिलीकरणी। वलयभागः द्वाभ्यां मूलाभ्यां पादपीठभागे निबध्यते, आच्छाद्यते च सूक्ष्मया कलया। पादपीठ-भागस्तु अन्तःकर्णस्य वहिःप्राचीरस्थं श्रुतितुम्बिकाविवरं कलावृतमधिरूढः।

---

१। Stapes (Stirrup). २। 'पादधरणी' अश्वपृष्ठनिबद्ध पर्य्याणस्य एकैकस्मिन् पार्श्वे लम्बते, यत्र पादं निधाय अश्वारोहणं क्रियते।

## अथ कर्णान्तरीय पेश्यौ।

द्वे खलु पेश्यौ मध्यकर्णाभ्यन्तरे दृश्येते—पटहोत्तंसनी, पर्य्याणिका चेति। तत्र—

**पटहोत्तंसनी**[1] दीर्घतरा, सा पटहपूरणिकाख्यसुरङ्गाया अस्थिमयभागस्य ऊर्द्ध्वस्थेन सुरङ्गापथेन ( अस्थ्यालिकया पृथक्कृतेन ) धार्य्यते। तस्याः प्रभवः पटहपूरणिकावेष्टनमस्थिमयं प्राचीरम्, जतूकास्थ्नो वृहत्पक्षत्यंशश्च। सा पश्चिमाभिमुखं प्रसृता वक्रीभूतमुखो मुद्गरकास्थ्नो दण्डिकामूले निविष्टा। तस्याः कार्य्यं पटहकलाया उत्तंसनम्।

**पर्य्याणिका**[2] नाम तन्वी पेशी मध्यकर्णगुहायाः पश्चिमप्राचीरैकदेशादुद्भूय पुरोगता धरणकाख्यस्य कर्णास्थ्नो ग्रीवायां निविशते। तस्याः कार्य्यं धरणक-शिरसः पश्चिमतः कर्मणम् येन तुम्बिकाविवरच्छादि कलाभागस्य पीडनं पटहो-त्तंसनीपेशीकृतं मृदूक्रियते। पटहोत्तंसनी हि स्वक्रियापरम्परया पटहदण्डिका-प्रचालनेन तीव्रं पीडयति तुम्बिकाविवरच्छादिनीं कलामिति तद्विपरीतक्रिया पर्य्याणिका नाम पेशी।

## अथ पटहपूरणिका।

**पटहपूरणिका**[3] नाम मध्यकर्णगुहायाः पुरःस्थस्तदनुबन्धी च तिरश्चीनो वायुमार्गो यस्य द्वारं गलविलस्य उत्तरार्धपार्श्वे दृश्यम् (२५९।२६० चित्रयोः)। सेयं गुहा अधरभागे तरुणास्थिनिर्म्मितप्राचीरा, ऊर्द्ध्वांशे शङ्खास्थ्नः अश्मकूटभागान्तः प्रविष्टा, अन्तः श्लेष्मस्राविकलावृता च। तद्दैर्ध्यं साकल्येन द्व्यंगुलपरिमाणम् तस्याः प्रयोजनं मध्यकर्णस्य बाह्यवायुनाऽपूरणं, येन विना बहिर्वायुभारपीडिता पटहकला द्रुतं निर्भिद्येत। निर्भिद्यत एव हि सा कण्ठरोगेषु श्लेष्मस्रावरुद्धेऽस्मिन् वायुमार्गे।

तस्य च वायुमार्गस्योर्द्ध्वभागे तादृश एव अस्थिमयमार्गोऽपरस्तदनुबन्धो, स पटहोत्तंसन्याः पेश्या धारणाय।

पोषणं पुनर्मध्यकर्णस्येत्थं सम्पद्यते। तत्र धमन्यः—वहिर्मातृकायाः अन्तर्हानव्य शाखायाः पश्चिमकर्णिकादि प्रशाखाः, अन्तर्मातृकायाः अनुपटहिकाद्याः प्रशाखाः, मस्तिष्कमातृकायाः प्रशाखाश्च।

सिरास्तु—मध्यकर्णस्य अधिमन्यां[4] सिरां प्रविशन्ति, सिरासरितश्च अश्मतटिन्यनुपार्श्विकाख्याः[5] करोटिगुहान्तः।

---

१। Tensor Tympani. २। Stapedius. ३। Eustachian or Auditory Tube. ४। External Jugular Vein. ५। Petrosal Sinuses & Transverse Sinus.

नाड्यः पुनर्मध्यकर्णस्य पञ्चधा स्मर्त्तव्याः। यथा—

(१) पञ्चमनाड्याः अधोहानव्यशाखासम्भवा कर्णशंखिका[१] नाम, (२) सप्तम नाड्याः कर्णान्तरीया[२] शाखा (पर्य्याणिकां पेशीं प्रति), (३) नवमनाड्याः श्रावणी[३]शाखा, (४) दशमनाड्याः श्रावणी[४]शाखा, (५) मातृकाचक्रसम्भवाः कर्णिकाख्य स्वतन्त्रग्रन्थिसम्भवाश्च नाडीप्रतानाः[५]।

रसग्रहा कर्णान्तिका[६] नाम सप्तमनाडीप्रशाखा तु मध्यकर्णमुल्लंघ्य वक्रगत्या रसनां प्रति प्रस्थिता शिफागोस्तनान्तरीयविवरेण कर्णाधःस्थेन वहिर्गच्छति।

अथ अन्तःकर्णः।

**अन्तःकर्णः, कान्तारकं वा**[७] नाम मुख्यश्रुतियन्त्रिकाधरो निगूढतम-भागः श्रवणेन्द्रियस्य, यः शंखास्थ्नः अश्मकूटभागान्तः प्रच्छन्नः श्रोत्रच्छदिकूटाप-सारणेन दृश्यः (२६१तः २६६ चित्रेषु)। तस्य गहनवर्त्मरूपेणावस्थानात् कान्तारक-मिति संज्ञा। तदन्तरेव हि श्रुतियन्त्रिकाभ्यन्तरे प्रतायन्ते श्रुतिनाड्याः प्रतानाः।

तस्य च कान्तारकस्य द्वावंशौ—अस्थिमयांशः, कलामयांशश्चेति।

तत्राद्यः आधारः, द्वितीय आधेयः। अस्थिमयांशो हि शिलोत्कीर्णगुहा-गृहाणीव, तस्मिन् जलपूर्णे प्लवते कलामयोंऽशः अन्तर्जलपूर्णः। प्रत्यंशञ्च त्रेधा विभागः। तद्यथा—

१। अस्थिमयकान्तारके[८]—

(क) मध्ये—तुम्बिकाधारः, (ख) पुरस्तात्—श्रुतिशम्बूकम्,

(ग) पश्चात्—शुण्डिकाधारिकात्रयम्।

२। कलामयकान्तारके[९]—

(क) मध्ये—तुम्बिका, कन्दुकश्च, (ख) पुरस्तात्—श्रुतिशम्बूकी कलामयी,

(ग) पश्चात्—शुण्डिकात्रयम्।

---

१। Auriculo-temporal Nerve ( Br. of Mandibular division of 5th Nerve ).
२। Nerve to the Stapedius ( Br. of Facial Nerve ). ३। Tympanic Nerve ( Br. of Glosso-pharyngeal Nerve). ४। Auricular Branch of Vagus Nerve.
५। Small Deep Petrosal from the Carotid Plexus and Small Superficial Petrosal from the Otic ganglion ६। Chroda Tympani (Br. of 7th Nerve).
७। Internal Ear or Labarynth. ८। Bony Labarynth. ९। Membranous Labyrinth.

## अथ अस्थिमयकान्तारकम्

अथैतदस्थिमयं कान्तारकं जीवच्छरीरे तनुलसीकापूर्णम् ( २६१ चित्रम् ), सा च लसीका परिजलं[1] नाम। तत्र च प्लवते कलामयं कान्तारकं प्रायेण सर्वावयवम्, तदपि तादृशलसीकापूर्णम्, सेयं लसीका अन्तर्जल[2]संज्ञा। तदन्तश्च प्लवन्ते सूक्ष्मतमाः सूत्रप्रतानाः श्रुतिनाड्याः। श्रुतिनाडी च ( सह वक्त्रनाड्या ) शंखास्थ्नः अश्मकूटपश्चिमतो दृश्येन कर्णान्तर्द्वाराख्यविवरेण कान्तारकं प्रविशति द्वाभ्यां शाखाभ्याम्—तयोरेका तुम्बिकाभिगा, अपरा शम्बूकाभिगेत्युक्तपूर्वम्।

( २६१ चित्रम् )

### अस्थिमयकान्तारकस्य बाह्यदृश्यम्।




तस्य च अस्थिमय कान्तारकस्य त्रयो विभागाः वर्णिताः—मध्ये तुम्बिकाधारः, पुरस्तात् श्रुतिशम्बूकम्, पश्चात् शुण्डिकावर्त्मानि चेति। तद्विशेषाः यथा—

**तुम्बिकाधारो**[3] नाम शङ्खास्थ्नः अश्मभागान्तरुत्कीर्णं गुहागृहम्, अंगुलपादमात्रगभीरं मध्यकर्णगुहाया अन्तःसीमस्थम् ( २६१। २६२ चित्रयोः )। तदन्तरस्था गुहा पुरस्तात् शम्बूकान्तरीयेण उत्तरसोपानिकामार्गेण पश्चिमतश्च शुण्डिकात्रयान्तरीयगुहाभिः सानुबन्धा। तदभ्यन्तरे च 'परिजल'पूर्णे प्लवते तुम्बिका कन्दुकी चेति कलामयं कोषद्वयम्।

दृश्यश्च तुम्बिकाधारस्य बहिःप्राचीरसीम्नि दीर्घवृत्तप्रायः कलावृतो गवाक्षः तुम्बिकाछिद्रं[4] नाम। तत्र सन्धीयते धरणकाख्य कर्णास्थ्नः पादपीठभागः।

---

१। Peri-lymph. २। Endo-lymph. ३। Vestibule. ४। Fenestra ovalis or Vestibulæ.

( २६२ चित्रम् )

## अस्थिमयकान्तारकस्य अभ्यन्तरम् ।

[ अर्धच्छेदेन दर्शितम् ]




अथ तुम्बिकाधारस्य अभ्यन्तरतो दृश्यं खातद्वयं—तुम्बिकाखातं,[१] कन्दुकीखात-[२]ञ्चेति, ते क्रमेण कलामयतुम्बिका-कन्दुक्योर्धारणाय ( २६२ चित्रम् )। मध्ये च तयोरस्थिमयी आलिका अर्धचन्द्राकारा अर्धेन्दुलेखा[३] नाम। पश्चिमतश्च खातयो द्वृश्यं युक्तशुण्डिकाद्वारं,[४] तद् उत्तर-पश्चिम शुण्डिकाप्रान्तयोः सम्मिलितयोर्द्वाररूपम, ततूपरितश्च चत्वारि शुण्डिकाद्वाराणि आयतमुखानि। तले च खातयोः, पार्श्वे च, दृश्यानि सूक्ष्मविवराणि तुम्बिकाभिगनाडीप्रतानानां प्रवेशाय।

अस्ति च खातद्वयाधस्तात् सूक्ष्मं विवरं तुम्बप्रपिकामुखं[५] नाम, तद् अन्तर्जल-धारिण्याः क्षुद्रप्रपाया मस्तिष्कवृत्यन्तरे प्रसृताया तुम्बिकाप्रवेश द्वारभूतम्। सेयं कलामयकान्तारकवर्णने पुनर्व्याख्येया।

**श्रुतिशम्बूकम्**[६] नाम शम्बूकाकारमस्थिमयं गुहागृहं शङ्खास्थ्नोऽश्म-भागान्तरुत्कीर्णम् (२६१-आदि चित्रेषु)। तत् कर्णान्तरद्वारस्य विपरीतपृष्ठेऽवतिष्ठते दृश्यञ्च श्रोत्रच्छदिकूटापसारणेन। आवर्त्तमार्गश्च[७] तदन्तः सार्धद्विवारमुत्क्रामति स्थूलमूलादारभ्य शम्बूकचूडान्तम्, दक्षिणतो दक्षिणावर्त्तेन, वामतश्च वामावर्त्तेन। तत्र प्रथमावर्त्तः मध्यकर्णस्य अन्तःप्राचीरे शम्बूकालिका[८]रूपेण लक्षणीयः। समग्रस्य चावर्त्तस्य दैर्घ्यं द्व्यंगुलपरिमाणम्। स मध्यवर्त्तिनीं स्थूलमूलां सूक्ष्माग्रां

१। Recessus Ellipticus (for the Utricle). २। Recessus Sphæricus (for the Saccule). ३। Crista Vestibuli. ४। Opening of the Crus Commune. ५। Aquæductus Vestibuli. ६। Bony Cochlea. ७। Spiral Canal. ८। Promontory.

( २६३ चित्रम् )

## श्रुतिशम्बूकस्य अभ्यन्तरम् ।

[ अर्धच्छेदेन दर्शितम् ]




स्तम्भिकां[1] परिवेष्ट्य क्रमशः परिहीयते। सेयं स्तम्भिका सूक्ष्मसिरा-धमनी-धारणाङ्कितगात्रा मध्येऽपि सूक्ष्ममार्गवती नाडीसूत्रधारणाय। आवर्त्तनिर्मापणी चात्र अस्थिमयी पत्रिका आवर्त्तपत्रिका[2] नाम, सा तदग्रधारालग्नया कलामय-शम्बूक्या अन्तर्धारया सम्पूर्णाङ्गा आवर्त्तमार्गं द्वेधा विभजते उत्तराधरक्रमेण। तयोश्च मार्गयोरुत्तरः तुम्बिकानुबन्धी उत्तरसोपानिका[3] नाम, अधरस्तु मध्य-कर्णानुबन्धी अधरसोपानिका[4] नाम। तच्च मार्गद्वयं शम्बूकचूडायामेकीभवति चूडाविवरसंज्ञेन[5] विवरमार्गेण येन उत्तराऽधर सोपानिकयोः परिजलस्य परम्परा-नुबन्धः। मध्ये च मार्गद्वयस्य शम्बूक्या आभ्यन्तरी सुरङ्गा—मध्यसोपानिका[6] नामेत्यग्रे वर्णयिष्यामः।

दृश्यश्च शम्बूकमूलपार्श्वे कलावृतं छिद्रं शम्बूकच्छिद्रं[7] नाम, तद् धरणकास्थ्नः पादपीठकेन सन्धायि। अस्ति च शम्बूकमूलाभ्यन्तरे सूक्ष्मतरं विवरं शम्बूकप्रपिकामुखं[8] नाम, यदाश्रित्य मस्तिष्कान्तरीय ब्रह्मवारिणः शम्बूकान्तः सञ्चारः। तच्च वारि शम्बूकान्तः परिजलं नामेत्युक्तपूर्वम्।

**शुण्डिकाधारिकाः**[9] नाम कान्तारकस्य पश्चिमभागे अस्थ्यन्तरुत्कीर्णानि त्रीणि गुहागृहाणि हस्तिशुण्डिकाकाराणि (२६१।२६२ चित्रयोः)। तेषामवस्थानभेदेन उत्तर-पश्चिम-पार्श्वगेति संज्ञाः। तेष्वाधीयन्ते कलामय्यः शुण्डिकाः।

---

१। Modiolus. २। Lamina Spiralis. ३। Scala Vestibuli. ४। Scala Tympani. ५। Helicotrema. ६। Ductus Cochlearis or Scala Media. ७। Fenestra Rotunda or Cochlearis. ८। Aquæductus Cochleæ. ९। Bony Semi-circular Canals.

तानि च शुण्डिकागृहाणि पञ्चभिमुखैस्तुम्बिकाधारान्तरुन्मुच्यन्ते, अवतिष्ठन्ते च परस्परं प्रति समकोणतया[1] समतलनिखात सरलोर्द्ध्व फलकवत्। तत्र उत्तरा पश्चिमा च शुण्डाधारिका सार्धांगुलदीर्घा, तयोरेकैकः प्रान्तः परस्परमिलितः एकामेव युक्तशुण्डिकाधारिकां[2] रचयति। पार्श्वगा शुण्डिकाधारिका तु अंगुलमात्र-दीर्घा वहिर्मुखी पश्चिमाभिगा च।

अस्ति च शुण्डिकाधारिकाणामभ्यन्तरे परिजलं[3] नाम लसीका विशेषः, यत्र प्लवन्ते अन्तर्जलपूर्णाः शुण्डिकाः।

### अथ कलामयकान्तारकम्।

**कलामयकान्तारकं**[4] नाम अस्थिमयकान्तारकाभ्यन्तरे प्लवमानं तत्पृष्ठतः पुरश्चान्यतो वा किञ्चिन्मात्रसंबद्धं ताद्रशप्रायं वस्तुजातं सूक्ष्मतरं सूचितपूर्वम् (२६४ चित्रम्)। तदवयवाः—

( २६४ चित्रम् )

## कलामयकान्तारकम्।




१। At right angles. २। Crus Commune. ३। Peri-lymph. ४। Membranous Labyrinth.

(१) तुम्बिकाधारान्तः—तुम्बिका, कन्दुकी चेति द्वयम्, (२) पुरस्तात् शम्बूकान्तः—शम्बूकी, (३) पश्चात् शुण्डिकाधारिकात्रयान्तः—शुण्डिकात्रयम् इति। तत्र—

**तुम्बिका,[1] कन्दुकी[2] च** तुम्बिकाधारान्तः स्वपृष्ठाभ्यां स्वनामकखातयोः संलग्ने (२६४ चित्रम्)। खातयोस्तलद्वयं च निभद्य तुम्बिकभिगाख्यश्रुतिनाडी-शाखायाः सूक्ष्माः प्रतानाः तुम्बिका-कन्दुक्योरन्तः प्रविशन्ति।

अथानयोः तुम्बिका-कन्दुक्योरन्तर्जलस्य परस्परसम्बन्धः तयोरन्तरालस्थया अन्तर्जलप्रपिका[3] संज्ञया द्विमुखप्रणालिकया। प्रपिका च सा ब्रह्मवारिपूर्णा मस्तिष्कावृतीनामवकाशे अंगुलिवत् प्रसृता। तन्निर्गमद्वारं शंखास्थ्नोऽश्मकूट-भागे कर्णान्तर्द्वारसमीपे दृश्यम्। मुखद्वयं तु तुम्बिका-कन्दुक्योः प्रविष्टम्।

अस्ति च कन्दुकीतले अपराऽपि प्रपिका ह्रस्वतमा या शम्बूक्या सह कन्दुक्याः सम्बन्धस्थापनी अन्तर्जलानुबन्धेन। सा योजनीप्रपिका[4] नाम।

( २६५ चित्रम् )

**तुम्बिकादेरन्तर्दृश्यानि अग्रे रोमवन्ति कोषाणुकानि।**




क०—अग्रे रोमवन्ति कोषाणुकानि।
ख०—श्रुतिनाडीप्रतानाः तन्मूलस्थाः।
ग०—कलाभ्यन्तरीणाः धारक कोषाणुकाः।
घ०—अन्तर्जले प्लवमानानि अग्ररोमाणि।

तुम्बिकान्तश्च पञ्च विवराणि शुण्डिकात्रयस्य यैस्तिसृणामपि शुण्डिकानां तुम्बिकाभ्यन्तरेण सम्बन्धः। अन्तश्च समग्रस्य कलामयकान्तारकस्य अन्तर्जलं परस्परानुबन्धीति स्मर्त्तव्यम्।

तुम्बिका-कन्दुक्योरन्तःसंलग्ने च द्वे पिपीलिकाण्डसदृशे अण्डके,[5] ययोरन्तर्दृश्यानि अग्ररोमवन्ति कोषाणुकानि,[6] ( २६५ चित्रम् ) अश्मकणिका[7]श्च खटिका-निर्मिताः कलाभागान्तर्निगूढाः सह श्रुतिनाडीप्रतानैः।

---

१। Utricle. २। Saccule. ३। Ductus Endo-lymphaticus. ४। Ductus Reuniens. ५। Maculæ Acusticæ. ६। Hair Cells. ७। Otoliths.

**शुण्डिकाः**[1] नाम द्विगुणीकृत हस्तिशुण्डाकाराः कलामयनलिकाः शुण्डिका-धारिकासु प्रविष्टाः। तास्तिस्रः स्वमध्यभागैः सम्बद्धाः शुण्डिकाधारिकापटलेषु परिजलान्तः प्लवन्ते अन्तर्जलधराः। अन्तर्जले च शुण्डिकाभ्यन्तरीय कलासंसक्तानि अग्ररोमवन्ति कोषाणुकानि पूर्ववत् (२६४।२६५ चित्रयोः)।

एकैकस्याश्च शुण्डिकाया एकैकप्रान्तः स्फारोदरः, कलामय मुण्डिका[2] नाम। मुखे तु द्वे उभयतः। तत्र उत्तरशुण्डिकाया एकः प्रान्तः पश्चिमशुण्डिकाप्रान्तेनैकेन मिलितः, तयोरेकमेव विवरं युक्तशुण्डिकाद्वारं नाम। तस्मात् शुण्डिकाद्वाराणि पञ्चैव, न षट्। तानि कलामयतुम्बिकान्तरुन्मुच्यन्ते।

शुण्डिकान्तश्च प्रसृताः तुम्बिकाभिगनाड्याः सूत्रप्रतानाः, येषां शिरःसञ्चालनकृतेन स्वाभाविकप्रकम्पनेन दिशामुपलब्धिः।

**शम्बूकी**[3] नाम अस्थिमयस्य शम्बूकस्योत्सङ्गे धृता कलामयी नलिका कुण्डलीभूत किञ्चुलुकसंस्थाना (२६४ चित्रम्)। सा त्रिधारस्नुहीकाण्डवत् त्रिधारा, त्रिपार्श्वा च। तस्या धारात्रयम्—अन्तर्धारा, वहिर्धारे च उत्तराधर संज्ञे। पार्श्वत्रयम्—उत्तरमधरं वाह्यञ्चेति, तेषां पटलं, तलं, वहिःपार्श्वश्चेति संज्ञाः।

सेयमान्तरधारया आवर्त्तपत्रिकाग्रसंलग्ना शम्बूकाभ्यन्तरीयमावर्त्तमार्गं द्वेधा विभजते—उत्तराऽधरमार्गयोः (२६३ चित्रम्)। तत्र ऊर्ध्वस्थ आवर्त्तमार्गः उत्तरसोपानिका[4] नाम। अधःस्थः अधरसोपानिका[5] नामेत्युक्तपूर्वम्। अनयो-र्मध्यस्था तु शम्बूकी, तदन्तरीयमार्गश्च अन्तर्जलपूर्णः शम्बूकीसुरङ्गा नाम, मध्यसोपानिका[6] वा।

तस्याश्च शम्बूक्याः ऊर्द्धतलं पटलभूतम्, सोऽयं कलांशः पटलपत्रिका[7] नाम। अधस्तलम् आधारतलभूतं, स च कलांशः तलपत्रिका[8] नाम। सेयं वक्ष्यमाण-स्वरादानिकाख्य विचित्रयन्त्रिकायाः आधारभूता। मध्ये चानयोः निर्गता तनुतमा पत्रिका मध्यमपत्रिका[9] नाम, सा स्वरादानिकायाश्छदिभूता। वहिःपार्श्वस्तु अर्धवृत्तप्रायः शम्बूकवहिःप्राचीरे सम्बद्धः शम्बूकीबन्धन्या स्नाय्वा।

---

१। Membranous Semi-circular Canals. २। Membranous Ampulla. ३। Membranous Cochlea. ४। Scala Vestibuli. ५। Scala Tympani. ६। Ductus Cochlearis or Scala Media. ७। Vestibular Membrane ८। Basilar Membrane. ९। Membrana Tectoria.

**स्वरादानिका**[1] नाम तलपत्रिकाया मध्यभागोपरिष्टादवस्थिता स्वरादान-यन्त्रिका या आवर्त्तपत्रिकाग्रनिर्गतया तनुतमपत्रिकया च्छदिरूपया सुरक्षिता । सेयं स्वरादानिका युग्मैः सूक्ष्मदण्डकैः[2] परस्परग्रस्त-वक्रशीर्षकैः, अग्रे रोमवद्भिः कोषाणुकैश्च निर्मिता । मूलेषु च तेषां प्रतताः श्रुतिनाड्याः शम्बूकाभिगशाखायाः सूक्ष्मतमाः प्रतानाः आवर्त्तपत्रिकाश्रयेण । संस्थानादिविस्तरस्तु तेषां २६६।२६७ चित्रयोः द्रष्टव्यः ।

स्वरादानिका च सा षड्जादि सप्तस्वरग्रामाणामादानकार्या—इति परीक्षकाणां सिद्धान्तः । तस्याः सूक्ष्मतररूपाणि अणुवीक्षणसहायेन चक्षुषा दृश्यानि ।

( २६६ चित्रम् )

## समग्र श्रुतियन्त्रिकाया आभ्यन्तरदृश्यम् ।

[ अश्मकूटस्य अनुलम्बच्छेदेन स्फुटीकृतम् ]




चित्रव्याख्या—शु० — शुण्डिकावर्त्म । क—मुण्डिका । तु०—तुम्बिका । कं०—कन्दुकी । ध—धरणकास्थि । अ—अङ्कुशकम् । म० - मुद्गरिका । प०—पटहकला । उ०—उत्तर-सोपानिका । अ०—अधरसोपानिका । १—तुम्बिकाच्छिद्रं कलावृतम् । २—अन्तर्जल-प्रपिका । ३—शम्बूकच्छिद्रं कलावृतम् ।

१ । Organ of Corti. २ । Rods of Corti.

सूक्ष्मावयवाश्च स्वरादानिकाया इत्थंभूताः—

१। सूक्ष्मदण्डकाः[१] नाम सग्रीवसर्पफणाकाराः स्वरादानिकावयवाः श्रेणीद्वयविन्यस्ताः - बाह्या आभ्यन्तराश्चेति (२६८ चित्रम्)। ते तलपत्रिकामध्यभागादुत्तिष्ठन्ति वक्रीभूय सर्पवत्। तेषामाभ्यन्तराः दण्डा ग्रसन्तीव फणभागैः बाह्यदण्डकानां फणभागान्। ग्रीवांशैश्च ते परस्परविदूरस्थाः। अन्तराले च दण्डकश्रेण्योः सूक्ष्मा सुरङ्गा त्रिकोणसुरङ्गा[२] नाम। शिरसि च दण्डकानां बहिर्मुखी तनुतमा पत्रिका छदिपत्रिका[३] नाम, सा अग्ररोमवतां कोषाणुकानां कलामयपटलभूता।

(२६७ चित्रम्)

## शम्बूकीसुरङ्गान्तर्दृश्या स्वरादानिका।

[ बहुवर्द्धितायतना ]




**चित्रव्याख्या**—१। पटलपत्रिकांशः। २। मध्यपत्रिका। ३।६। मध्यपत्रिकाधोवर्तिन्याः सुरङ्गिकायाः आन्तरभागः, बाह्यभागश्च क्रमेण। ४। स्वरादानिकाङ्गभूतानि अग्ररोमवन्ति कोषाणुकानि। ५। तलपत्रिका। ७। शम्बूकस्य बहिःप्राचीरसंलग्नः कलाभागः। ८। उभयतः स्वरादानिकानिर्मापकं वक्रशीर्षदण्डकद्वयं, मध्ये त्रिकोणसुरङ्गिका। ९। श्रुतिनाड्याः सूक्ष्मतमाः प्रतानाः स्वरादानिकाभिमुख्यः। १०। शम्बूकीबन्धनी स्नायुः बाह्या।

२। अग्ररोमवन्ति कोषाणुकानि[४] च सूक्ष्मदण्डकपार्श्वयोरवतिष्ठन्ते—अन्तःसीम्नि एकयैव श्रेण्या, बहिःसीम्नि त्रि-चतुरश्रेणीभिः (२६८ चित्रम्)। तत्र बहिःसीमस्थानि तलपत्रिकायां मूलैः संलग्नानि। छदिपत्रिकां निर्भिद्य च गतानि तदग्ररोमाणि। तेषां च कोषाणुकानां सार्द्धपञ्चदशसहस्रं गणयन्ति सूक्ष्मपरीक्षकाः।

१। Rods of Corti. २। Tunnel of Corti. ३। Lamina Reticularis. ४। Hair Cells.

त एते सूक्ष्मावयवाः स्वरादानिकायाः, ये स्वरग्रामाणां स्थूल-सूक्ष्माणां सम्यगादानाय प्रभवन्तीति हन्त विधातुर्निर्म्माणवैचित्र्यम् ।

( २६८ चित्रम् )

## स्वरादानिकायाः सूक्ष्मावयवाः ।

[ स्पष्टीकरणाय पृथगुदर्शिताः बहुगुणवर्द्धितायतनाः ]




चित्रव्याख्या—क०—रोमवत्कोषाणुकानि अन्तःसीमस्थानि । ख०—तान्येव बहिःसीमस्थानि ( येषां रोमवदग्राणि छदिपत्रिकां निर्भिद्य उत्थितानि )। द१—आन्तरसीमस्थः सूक्ष्मदण्डकः । द२—बहिःसीमस्थः स एव ( तत्फणाग्रनिर्गता छदिपत्रिका च द्रष्टव्या )। त०—तलपत्रिका । ३—स्वरादानिकामूलस्था धमनी ( कर्त्तिता )।

### अथ श्रुतिनाड्याः प्रसरक्रमः ।

श्रुतिनाडी[1] हि सप्तमनाड्या सह समुत्तिष्ठति प्राणगुहायाश्चतुरस्रखाताऽधरांशात्, निर्गच्छति च मस्तिष्काद् उष्णीषक-सुषुम्नाशीर्षकयोरन्तरालपार्श्वेन । सेयं सहैव सप्तमनाड्या कर्णान्तर्द्वारं प्रविश्य पृथग् भवति, विभज्यते च द्वयोः शाखयोः तुम्बिकाभिग-शम्बूकाभिग-संज्ञयोरित्युक्तपूर्वम् । तत्र—

तुम्बिकाभिगा[2] नाम शाखानाडी आदावेव अनुतुम्बिकाख्यं[3] नाडीग्रन्थिं प्रविशति कर्णान्तर्द्वारेण, विभज्यते च तत ऊर्द्ध्वं तिसृषु प्रशाखासु । ताश्च प्रशाखाः अश्म-

१ । Auditory Nerve. २ । Vestibular Nerve. ३ । Vestibular ganglion ( of Scarpa ).

कूटान्तरीय ह्रस्वसुरङ्गापथेन तद्द्वाररोधि सुषिरमस्थिपत्रकं निर्भिद्य कणकान्तारमभिविशन्ति। प्रसरन्ति च तत्र तुम्बिकाधारमादौ प्रविश्य तुम्बिकान्तः, उत्तर-बाह्य-शुण्डिकयोश्च। सेयं तुम्बिकाभिगा नाम नाडी शुण्डिकान्तरीय प्रतानैः दिग्देशबोधनाय प्रभवति, स्थानासनसामञ्जस्य रक्षणाय च, न तु श्रवणायेति स्मर्त्तव्यम्।

शम्बूकाभिगा[1] नाम शाखानाडी तु श्रवणाय कल्पते। तस्याः काश्चित् प्रशाखाः कन्दुकीम्, उत्तरशुण्डिकाञ्च प्रविशन्ति। मुख्यतस्तु सा श्रुतिशम्बूक्याः स्तम्भिकामूलं प्रविश्य वृक्ष इव शाखाभिरावर्त्तपत्रिकानुसरणेन बहुभिः प्रतानैः प्रतायते (२६६।२६८ चित्रयोः)। प्रतानाश्च ते स्वरादानिकायाः सूक्ष्मावयवान् प्रविशन्ति। सन्ति च तेषां प्रविशतां मूलेषु कतिचित् कन्दिकाः—स्तम्भकन्दिकाः[2] नाम। ताः शम्बूकाभिगनाडीप्रतानानां बलवर्द्धन्यः।

## अथ अन्तःकर्णपोषणम्।

अन्तःकर्णपोषणं तावत् सम्पाद्यते द्वाभ्यां धमनीभ्याम्। तयोः प्रथमा अन्तःश्रुतिगा नाम मस्तिष्कमूलिकाया धमन्याः शाखा, या कर्णान्तर्द्वारेण (सह श्रुतिनाड्या) प्रविष्टा अन्तःकर्णीयान् विशेषांस्तर्पयति द्वाभ्यां प्रशाखाभ्यां—तुम्बिकाभिगा-शम्बूकाभिगा-संज्ञाभ्याम्। द्वितीया शिफागोस्तनान्तरीया नाम धमनी बहिर्मातृकायाः पश्चिमकर्णिकाख्य शाखासम्भवा शम्बूकाभ्यन्तरमेव पुष्णाति।

सिराः पुनरन्तःकर्णीयाः पूर्वोक्तधमनीप्रशाखानां सहचर्य्यः। ताः क्रमेण अन्तःकर्णीयं सिरारक्तं संगृह्य शम्बूकस्तम्भिकामूलं प्राप्ताः अस्थिप्राचीरकं निर्भिद्य करोटिमध्यस्थां पार्श्विकाख्यां सिरासरितम्, अश्मतटिनीमुत्तरां वा, प्रविशन्ति।

## अथ शब्दसंज्ञादानप्रकारः।

शब्दः खलु विविध पाञ्चभौतिक वस्तुप्रतीघातकृत कम्पन समुत्थः। स वायुतरंगैः कर्णकुहरमुपनीत आदौ पटहकलामभिहन्ति। सा चैवमभिहता मुद्गरिकोन्नमनात् कर्णास्थित्रिकं चालयति, पीडयति च धरणकास्थ्नः पादपीठेन तुम्बिकाच्छिद्र पिधानिकां कलाम्। सा चैवं पीडिता प्रकम्पयति अस्थिमयकान्तार-कान्तरीयं परिजलं सर्वतः। परिजलोत्थाश्च तरङ्गवेगाः द्वेधा प्रसरन्ति - पुरस्तात् शम्बूकान्तः, पश्चात् शुण्डिकाधारिकान्तरिति। तत्र—

१। Cochlear Nerve. २। Spiral Ganglions.

शम्बूकान्तरुत्थितास्तरङ्गवेगाः उत्तरसोपानिकामार्गेण शम्बूकीयपरिजले प्रसर्पन्ति – तस्य तुम्बिकाधारेण साक्षात्सम्बन्धात्। ते च तरङ्गवेगाः शम्बूक-चूडाविवरद्वारेण प्रसर्पन्तः अधरसोपानिकास्थितं परिजलं प्रकम्पयन्ति आ-शम्बूकच्छिद्रात्। शम्बूकच्छिद्रपिधानिका च कला तरङ्गवेगाभिहता मध्यकर्णान्तः किञ्चित् स्फीतीभूय परिजलीयतरङ्गवेगान् प्रतिरुणद्धि।

अथैवमुभयतः सोपानिकामार्गयोः प्रवृत्तैस्तरङ्गवेगैः प्रकम्प्यते तन्मध्यस्था शम्बूकी कलामयी सहान्तर्जलेन। तच्चान्तर्जलं मृदुमन्दवेगैः कम्पमानं स्वरादानिकावयवान् पूर्वोक्तान् वोणातन्त्रीराजिमिव प्रकम्पयति, समुत्थापयति च षड्जादिसप्तस्वरग्रामीय शब्दान् विविधान्। ते चादीयन्ते शम्बूकाभिगनाड्याः सूक्ष्मैः प्रतानैः, समर्प्यन्ते च पूर्वोक्त संज्ञावहवर्त्मभिरधिमस्तिष्कम्। सोऽयं मुख्यः शब्दसंज्ञादान प्रकारः।

अथ ये तावत् परिजलोयास्तरङ्गवेगाः पश्चादुपसर्पन्ति तुम्बिकाधारात्, तैः प्रकम्प्यते शुण्डिकाधारिकान्तरीयं परिजलम्। तस्य च प्रकम्पमानस्य वेगास्तदन्तः प्लवमानानां शुण्डिकानामभ्यन्तरीयमन्तर्जलं प्रतिसंक्रामन्ति। तच्च कम्पमानं तदन्तरीयान् रोमवत्कोषाणुकांश्चञ्चलीकुर्वन्ति। तथा चोत्पद्यन्ते तुम्बिकाभिगनाडीप्रतानेषु कोषाणुकमूलस्थेषु संज्ञाविशेषाः ये शुण्डिकावस्थानविशेषहेतोः दिग्देशादिविवेकं स्थानासनस्थैर्य्यञ्च सम्पादयन्ति।

अथास्ति गौणोऽपि प्रकारः शब्दसंज्ञाऽदानस्य अस्थिद्वारिको[1] नाम। सा हि शब्दसंज्ञा सशब्दवस्तुनः शंखास्थिस्पर्शनेन समुत्थिता अस्थिद्वारेणैव संक्रामति शम्बूकान्तः, पिहितकर्णस्यापि (प्रनष्टपटहस्य वा) पुरुषस्य। एवञ्च परीक्ष्यते बधिराणां श्रुतिनाड्याः शब्दग्रहणसामर्थ्यम्।

इति प्रथमोऽध्यायः।

---

१। Hearing by Bony conduction.

# द्वितीयोऽध्यायः ।

अथातः स्पर्शनेन्द्रियविज्ञानीयमध्यायं व्याख्यास्यामः ।

द्विविधा खल्विह स्पर्शसंज्ञा—मुख्या गौणी च। तत्र मुख्या त्वाची नाम शीतोष्ण-खर-श्लक्ष्ण-मृदु-कठिनादिस्पर्शानुभवलक्षणा, रुजा-पीडनादि बोधविशेष-लक्षणा च। तां बाह्यां साधारणीं वा स्पर्शसंज्ञामाचक्षते। गौणी तु स्पर्शसंज्ञा मांसास्थि-सन्धि चेष्टनसमुत्थानातिस्फुटा। सा आभ्यन्तरी गम्भीरा वा नाम इत्युक्तपूर्वम्।

अस्ति च घ्राण-मुखादि विवराभ्यन्तरेषु श्लेष्मलकलाभागप्रभवाऽपि स्पर्शसंज्ञा, सा साधारणस्पर्शसंज्ञायामन्तर्भवति। श्लेष्मलकलाभागानां त्वक्परिणाममात्रत्वात्। सर्वे चैते त्वगादिविशेषाः बाह्याधिष्ठानभूताः स्पर्शनेन्द्रियस्य। आभ्यन्तराधिष्ठानन्तु आज्ञाकन्दद्वयं, मस्तिष्कबहिस्तरीयानि स्पर्शसंज्ञाधिष्ठानानि च शरीरार्धविपर्ययेण—दक्षिणार्धस्य वामतो, वामार्धस्य च दक्षिणतः—इति। तदेतत् सविस्तरमवोचाम संज्ञावहवर्त्मविवेक प्रकरणे ( १०० पृष्ठतः, तत्पूर्वतश्च )।

## अथ त्वगिन्द्रिय वर्णनम्।

**त्वचो**[१] नाम सर्वदेहावरणरूपा भूमिः स्पर्शेन्द्रियस्य, स्रोतसाञ्च स्वेदवहानां, रोम्णामपि सरोमकूपानाम्। ताः स्थूलदृष्ट्या स्तरद्वयविभक्ताः,—बहिस्त्वग्भागः, अन्तस्त्वग्भागश्चेति। तत्र बहिस्त्वङ् नामाऽतीव तन्वी कृष्णगौरादिवर्णाधारा प्लोषपिडकाव्यञ्जना च। अन्तस्त्वङ् नाम स्थूला शरीराभिरक्षणी स्नेहादिकर्षणी च। सैव प्रधानायतनं स्पर्शभूमेः—इत्युक्तपूर्वम् सामान्यतः। विस्तरोऽत ऊर्द्ध्वम्।

## अथ बहिस्त्वक्।

**बहिस्त्वक्**[२] नाम त्वगिन्द्रियस्य बाह्यावरणी सिराधमन्यादि वर्जिता। सैव प्राचामवभासिनी, उदकधरा वा नाम। तां पञ्चसु तनुतरस्तरिकासु विभजन्ते नव्याः सूक्ष्मवीक्षणेन ( २६६ चित्रम् )। तद्यथा—

१। शार्ङ्गिणी[३] नाम प्रथमा स्तरिका बाह्यतमा, सा ईषत्कठिनशार्ङ्गवस्तु-धरैरावरणकोषाणुकै र्निर्मिता।

२। शल्किनी[४] नाम द्वितीया मीनशल्कवत् स्वच्छैः कोषाणुकै र्विरचिता।

३। कणिनी[५] नाम तृतीया मृदुकोमलकणिकाधरैः कोषाणुकैः शार्ङ्गवस्तु-प्रभवै र्निष्पन्ना।

---

१। Skin. २। Epidermis or Cuticle. ३। Stratum Corneum. ४। Stratum Lucidum. ५। Stratum Granulosum.

( २६६ चित्रम् )

## त्वग्विभागाः त्वगन्तरीयविशेषाश्च ।

[ सूक्ष्मवीक्षण दृश्याः ]




चित्रव्याख्या—१—शार्ङ्गिणी । २—शल्किनी । ३—कणिनी । ४—वर्णिनी । ५—क्षेत्रिणी । स्पर्श१—स्पर्शांकुरिका भेदः (अभ्रांकुरिका) । स्पर्श२—स्पर्शांकुरिका पुष्पितशीर्षा ।

**४ । वर्णिनी[1] नाम चतुर्थी या कृष्ण-पीतादि वर्णयुक्तैः कोषाणुकैरनुविद्धा ।**

**५ । क्षेत्रिणी[2] नाम पञ्चमी या अन्तस्त्वचः प्रथमास्तरिकाच्छादिनी, क्षेत्रमिव वहिस्त्वचः ।**

---

१ । Rete Mucosum or Stratum Malpighii. २ । Stratum Germinativum.

सेयं वहिस्त्वक् हस्त-पादतलयोः स्थूला, स्वेदवहस्रोतोवहुला च, विशेषतश्च पादतले। तन्वी चान्यत्र। स्वेदस्रोतोमुखानि रोमाग्राणि च स-रोमकूपानि तत्र दृश्यानि। सा स्पर्शसंज्ञावर्जितेत्येके। किञ्चित्स्पर्शवती, अतिसूक्ष्मनाडीप्रतानवत्त्वादित्यपरे। लसीकावहस्रोतांसि पुनः सूक्ष्मतराणि तत्र सन्त्येव—तैः सम्पाद्यते पोषणम् वहिस्त्वक् स्तरिकाणाम्।

अथ अन्तस्त्वक्।

अन्तस्त्वक्[1] तावत् स्थूलतरं मुख्यायतनं स्पर्शनेन्द्रियस्य पूर्वोक्तस्वरूपम्। सा क्वचित् स्थूला, क्वचित्तन्वी, शरीरतापरक्षणी स्नेहादि वर्षणी च। तत्रैव प्रसरन्ति सिराधमनीनां सूक्ष्माः प्रतानाः, नाडीप्रतानाश्च सूक्ष्म स्पर्शांकुरिकाग्राः। स्वेदग्रन्थयश्च वहिर्मुखस्रोतसः। रोमाणि च समूलानि वसाग्रन्थियुतानि, रसायन्यश्च स्नेहादिकर्षण्यः।

सेयमन्तस्त्वक् द्वयोः स्तरिकयोर्विभज्यते सूक्ष्मवीक्षणेन।* तयोरंकुरिणी, जालिनी चेति संज्ञे। तत्र—

१। अंकुरिणी[2] नाम सूक्ष्मैरंकुरवदवयवैर्व्याप्ता उत्तानस्तरिका यदुपरि विन्यस्ता वर्णिनी नाम वहिस्त्वचश्चतुर्थी स्तरिका। अंकुराणि च तानि सिराधमनीप्रतानभूयिष्ठानि, प्रायेण स्पर्शांकुरिकागर्भाणि, श्रेणीनिवद्धानि, घनसन्निवेशानि च विशेषतः स्पर्शवत्सु देशेषु। स्पर्शांकुराणि च तत्र त्वाचनाडीनां प्रतानमुखेषु निवद्धानि स्पर्शसंज्ञाग्रहणानि। तद्भेदा अग्रे व्याख्येयाः।

२। जालिनी[3] नाम—जालवद्वस्तुनिर्मिता गम्भीरा स्तरिका अन्तस्त्वचः, या त्वक्शय्यां नाम त्वगधोवर्त्ति मेदुरस्तरमधिशेते। तत्र प्रतायन्ते सिराधमनी-रसायनीनां सूक्ष्माः शाखाप्रशाखाः, नाडीप्रतानाश्च। दृश्यन्ते च

---

१। Derma or Cutis Vera. २। Papillary Layer. ३। Reticular Layer.

* प्राचां मतेन तु अन्तस्त्वचः (त्वक्शय्यासहितायाः) पञ्चधा षोढा वा विभागः। तत्र सुश्रुतमते या लोहिता नाम (चरकमते असृग्धरा), सैव अंकुरिणीति सुवचम्। या तु सुश्रुतस्य पञ्चमी वेदिनी नाम, सैव चरकस्य षष्ठी ("यस्यां छिन्नायां ताम्यति, अन्ध इव तमः प्रविशति"), वाग्भटस्य च प्राणधरा। सेयं जालिन्याः, त्वक्शय्याया वा, अभिन्ना प्रतिभाति, नाडीप्रतानानां स्पर्शाण्डिकादि-सहितानां तत्रैव वाहुल्यदर्शनात्। या तु सुश्रुतस्य मांसधरा, साऽपि त्वक्शय्यांश एव, रोममूललग्नानामन्यविधानां वा मांसतन्तूनां तत्र सद्भावात्। अपरासां प्राचीनविभागोक्तानां त्वचां दृष्टसामञ्जस्येन व्याख्यानन्तु दुःशकमेव, चरक-सुश्रुतादिषु तत्स्वरूपवर्णनाभावात्।

[ १४५ चित्रम् ]

## ग्रसनिकापेश्यः, अन्ननलिका च ( पृष्ठतो दृष्टाः )।




तस्यास्त्रयो भागाः कल्प्यन्ते वर्णनासौकर्याय—ऊर्ध्वं नासागुहापश्चिमांशः, मध्ये गलबिलांशः, अधस्तात् स्वरयन्त्रपश्चिमांशश्चेति। तेषां क्रमेण उत्तर-मध्यमाऽधरग्रसनिका-संज्ञाभिर्व्यपदेशः। तत्र—

( क ) **नासागुहापश्चिमांशे**[1] पुरस्ताद् दृश्यानि मध्ये नासामध्य-प्राचीरं, तदुभयतः पश्चिमं नासागुहाद्वारयुगलं[2] च। तदुभयतश्च द्वे छिद्रे श्रुतिसुरङ्गाद्वारे[3] नाम, ते तद्वेष्टनाभ्यां त्रिकोणतरुणास्थिभ्या[4]मुपलक्षिते। पश्चिमतश्च ग्रसमिकाप्राचीरे संलग्नस्तूलपिण्डकाकारो ग्रन्थिः ग्रसनिकाग्रन्थिः[5]

---

१। नासागुहापश्चिमांशः—Naso-pharynx. २। नासागुहाद्वारयुगलम्—Choanœ. ३। श्रुतिसुरङ्गाद्वारद्वयम्—Openings of Auditory tubes. ४। तत्रत्यं त्रिकोणतरुणास्थि—Torus. ५। ग्रसनिकाग्रन्थिः—Pharyngeal Tonsil (of Luschka).

नाम। तस्य निर्माणमुपजिह्विकावद् रसग्रन्थिप्रायम्। नासागुहापश्चिमांशस्य अधोभागस्तु गलविलानुबन्धी। स च अन्नादिनिगरणकाले पुरःस्थेन कोमलतालुना किञ्चिदुत्पतिष्णुना सर्वथाऽवरुध्यते, अन्नादीनां नासागुहाप्रवेशवारणाय।

( ख ) **गलविलांशः**[1] नाम ग्रसनिकामध्यभागो **गलविल**-संज्ञः ( १४४।१४६ चित्रयोः )। स ऊर्ध्वं नासागुहापश्चिमांशेन अनुबध्यते, अधश्च स्वरयन्त्रपश्चिमांशेन, आ कण्ठिकास्थिपृष्ठात्। तस्य पुरस्तात् संकुचितप्रायं गलविलद्वारं, गलतोरणिकाभ्यामुपलक्षितम्। पश्चिमतो द्वितीय-तृतीयग्रीवा-कशेरुकयोः पिण्डद्वयं। तदुभयतश्च उत्तर-मध्यमयोः कण्ठसङ्कोचन्योः पेश्योः पक्षांशौ कलावृतौ।

( ग ) **स्वरयन्त्रपश्चिमांशः**[2] नाम स्वरयन्त्रस्य पृष्ठस्थो ग्रसनिका-ऽधरांशः, स कण्ठिकास्थिपृष्ठादारभ्य कृकाटिकापृष्ठान्तमायतः, कलावृतयाऽधरकण्ठ-सङ्कोचन्याख्यपेश्या परिवृतश्च ( १४६ चित्रम् )। स चोर्ध्व गलविलेन, अधश्च अन्ननलिकयाऽनुबध्यते। तत्रैव पुरस्ताद् दृश्यं स्वरयन्त्रद्वारम्।

सप्त च विवराणि ग्रसनिकान्तर्दृश्यानि – द्वे नासागुहापश्चिमद्वारे, द्वे श्रुति-सुरङ्गाद्वारे, एकं गलविलद्वारम्, एकं स्वरयन्त्रद्वारम्, एकमन्ननलिकाद्वारञ्चेति।

पेश्यः पुनर्ग्रसनिकां परितोऽवस्थिताः एकैकतः पञ्च—कण्ठसङ्कोचनी[3]-संज्ञास्तिस्रः, शिफागलान्तरीया[4], श्रुतिसुरङ्गाद्वारिका[5] चेति। ( १४४।१४५ चित्रयोः ) तत्र—कण्ठसङ्कोचन्याख्यं पेशीत्रयम् उत्तर-मध्यमाऽधरसंज्ञम् उत्तरोत्तरा-श्लेषेण ग्रसनिकां परिवृत्य तिष्ठति इतरपार्श्वस्थेन पेशीत्रयेण मिलितम्। तस्य क्वचिद् "ग्रासनी" पेशीति साधारणी संज्ञा। तत्प्रावरणी च दृढस्नायु-सूत्रमयी प्रच्छदाकृतिः, या पश्चिमतो ग्रीवावंशपुरोभागेण संबद्धा। तत्रैव च मध्यरेखायां दृश्या पेशीत्रिकयोः सन्धानरेखा ग्रसनिकासेवनी[6] नाम। तत्रोत्तरायाः कण्ठसङ्कोचन्याः प्रभवः एकैकतो जतूकाचरणफलकम्, अधोहनु-मण्डलीयं पश्चिमदन्तोदूखलमूलञ्च। मध्यमायाः प्रभवः कण्ठिकास्थ्नः शृङ्गद्वयं सान्तरालं, शिफाकण्ठिकास्नायुश्च। अधरायास्तु स्थूलप्रच्छदाकृतेः प्रभवः अवटु-कृकाटिकाख्यतरुणास्थ्नोः पार्श्वद्वयम्। निवेशः पुनस्तिसृणामपि ग्रसनिका-सेवनी दृढस्नायुसूत्रमयी। शिफागलान्तरीयादिपेशीद्वयन्तु ग्रसनिकामूर्ध्वं कर्षति।

---

१। Oral part of Pharynx ( or Cavity of Throat ). २। Laryngeal part of Pharynx. ३। Constrictor muscles of the Pharynx. ४। Stylo-pharyngeus Muscle. ५। Salpingo-pharyngeus Muscle. ६। Pharyngeal Raphe.

**रोमाणि**[१] नाम—तनु शार्ङ्गवस्तुमय शल्कैरावृतानि सूत्राणि त्वगन्तरीयेषु रोमकूपेषु[२] निविष्टानि। रोममूलानि[३] च वर्त्तुलप्रायाणि मूलांकुर[४]गर्भाणि अन्तस्त्वचो जालिन्याख्यस्तरिकायां, कदाचित् त्वक्शय्यायां वा, दृश्यानि। तेषु च मूलांकुरेषु विशन्ति सूक्ष्माः सिराधमनी-रसायनी शाखाः, नाडीप्रतानाश्च स्पर्श-संज्ञावहाः। सन्ति च रोमकाण्डानां पार्श्वतः सम्बद्धाः पेशीतन्तवोऽपि तिरश्चीनाः रोमाञ्चन्यः[५] नाम, येषां सङ्कोचेन सम्भवति रोमाञ्चः (रोमोत्थानरूपः)। दीर्घाणाञ्च रोम्णां केश इति संज्ञा (२६६ चित्रम्)।

**वसाग्रन्थयः**[६] नाम तनुतैलाभ वसास्राविणः द्राक्षाफलगुच्छाकारा ग्रन्थयः अन्तस्त्वचि सन्निविष्टाः। तानि प्रायेण रोमकाण्डान् परितस्तिष्ठन्ति। तत्-स्रोतांसि च प्रायेण रोमकूपमूलेषु उन्मुच्यन्ते, पृथग् वा वहिस्त्वचि कदाचित्। तेष्वपि प्रविशन्ति सिराधमनी-नाडीनां सूक्ष्माः प्रतानाः (२६६ चित्रम्)।

**स्वेदग्रन्थयः**[७] नाम सूक्ष्मसूत्रगुच्छाकाराः ग्रन्थयः, ते अन्तस्त्वचि त्वक्शय्यायां वा गम्भीरनिविष्टाः। तन्मूलेषु प्रविष्टाः सिराधमनीनाडीनां सुसूक्ष्माः प्रतानाः बाहुल्येन, रक्तादेव स्वेदजलसम्भवात्। तेषाञ्च ग्रन्थीनां स्रोतांसि[८] वृक्षावेष्टन-लताप्रतानवद् आघूर्णिकया वहिः प्रसरन्ति समग्रां त्वचं निर्भिद्य। तन्मुखानि च स्वेदकूप[९]संज्ञानि बहिस्त्वचि सहस्रशो दृश्यानि (२६६ चित्रम्)।

### अथ गौणस्पर्शाः।

गौणस्पर्शग्राहिण्यो यन्त्रिकास्तु प्रायेण पेशीनां कण्डरामूलान्यधितिष्ठन्ति। ताः गुल्मवदास्तृतैः नाडीप्रतानैरभिलक्षिताः नाडीगुल्मिका[१०] संज्ञाः। सन्ति चास्थिवेष्टनकलासु सन्धिच्छादिस्नायुकोषेषु च तादृश्य एव यन्त्रिकाः। सर्वाश्च गौणस्पर्शयन्त्रिकाः रुजा-ताप-पीडनमात्र संवेदिन्यः।

आशयाभ्यन्तरेषु तु स्पर्शज्ञानं स्तोकेनैव विद्यते, अन्यत्र पित्त-मूत्रादिस्रोतोभ्यः। तेष्वपि रुजापीडन संज्ञैव।

इति द्वितीयोऽध्यायः।

---

१। Hairs. २। Hair Follicles. ३। Hair bulbs. ४। Papilla of hair. ५। Arrectors pili muscle. ६। Sebaceous glands. ७। Sweat glands. ८। Ducts of Sweat glands. ९। Openings of Sudoriferous ducts. १०। Organ of Golgi.

# तृतीयोऽध्यायः ।

अथातो दर्शनेन्द्रियविज्ञानीयमध्यायं व्याख्यास्यामः ।

इह खलु **दर्शनेन्द्रियं**[1] नाम रूपसंज्ञाग्राहकमिन्द्रियं, यत् प्रवरं ज्ञानेन्द्रियाणाम् । तस्य बाह्याधिष्ठानं नेत्रगोलकद्वयं दृष्टिनाड्योरग्रसम्बद्धम् । एकैका हि दृष्टिनाडी एकैकं नेत्रगोलकं प्रविश्य तदन्तः प्रतायते दृष्टिवितानरूपेण यत्र प्रतिविम्बन्ति नानाविधानि रूपाणि । समन्वयेन च उभयोर्नेत्रगोलकप्रतिविम्बयोर्दृश्यते रूपमेकमेव । आभ्यन्तराधिष्ठानन्तु— दृष्टिनाड्योः प्रभवरूपं द्विविधम् । तत्र आज्ञाकन्दौ, उत्तराधिपीठिके, उत्तरकलायिके चेति तयोरुत्तानप्रभवो मस्तिष्कमूलस्थः । त्रिकोणपिण्डके रासनपिण्डके चेति द्वयं गम्भीरप्रभवो मस्तिष्कान्तरीयः, तत् चरमं रूपसंज्ञाधिष्ठानमिति वर्णितपूर्वम् । रूपसंज्ञावर्त्मविवेकश्च दृष्टिनाडीवर्णने व्याख्यातचरः ।

अथ नेत्रगोलकम् ।

**नेत्रगोलकं**[2] नाम बहिःकठिनमन्तःकोमलं कपोताण्डनिभं गोलकं यद् एकैकतो नेत्रगुहायाः पुरोभागमधितिष्ठति, मूले दृष्टिनाड्या सम्बद्धम् ( २७२।२७३ चित्रयोः ) । तत्परितो निबद्धाः षट् पेश्यः तस्य सन्धारण्यः प्रचेष्टन्यश्च । तदुपाधानं मेदःपिण्ड पश्चिमतः । तदाच्छादनं च पुरस्तात् नेत्रच्छदद्वयं नेत्रवर्त्माख्यकलया अन्तरावृतम् ।

तच्च नेत्रगोलकं नेत्रबुद्बुदसंज्ञम् प्राचाम् । तत्प्रमाणञ्चेत्थमाहुः—

"विद्याद् द्व्यङ्गुलबाहुल्यं स्वांगुष्ठोदर-सम्मितम् ।
द्व्यङ्गुलं सर्वतः सार्धं भिषङ् नयनबुद्बुदम् ॥" इति *

( सुश्रुत० उत्तर० १ अ० )

इत्थम्भूतश्च नेत्रगोलकं सन्धार्य्यते नेत्रधराख्येन कलाकोषेण । सोऽयं नेत्रधरकलाकोषः[3] नेत्रगुहायां प्रच्छन्नः पश्चिमतः, संसक्तश्च नेत्रगोलकस्य पश्चिम-द्वि-तृतीयांशे । तस्य द्वौ स्तरौ— बाह्य आभ्यन्तरश्च । तत्र बाह्यः स्तरः नेत्रगुहाभ्यन्तरीयपरिसरच्छादनः, संवेष्टनश्च नेत्रपेशीनां नलकाकृतिभिः शाखाभिः । तस्य प्रान्तद्वयमश्रुपीठ-गण्डास्थ्नोः संसक्तं दोलावदङ्के धारयति नेत्रगोलकम् ।

* बाहुल्यं विस्तारः बाह्यान्तरसीमान्तरालिको व्यासः । अंगुष्ठोदरसम्मितमिति अनुलम्बमानम् । सार्धद्व्यंगुलं सर्वतः—इति परिणाहमानम् । अंगुलमात्रन्तु 'इञ्च' प्रमाणस्य त्रि-चतुर्थभागः ( ¾th of an inch ) ।

१ । Organ of Vision. २ । Bulb of the eye. ३ । Fascia Bulbi or Capsule of Tenon.

आभ्यन्तरस्तरस्तु नेत्रगोलकस्य दृष्टिनाड्याश्च संवेष्टनः पश्चिमतः । स पुरस्तात् चाक्षुषनेत्रवर्त्मनाऽनुबध्यते । अन्तरा च स्तरयोरवकाशः लसीकाधारणः, सेयं लसीका नेत्रगोलकं स्नेहाभ्यक्तमिव कृत्वा धारयति सह तत्प्रचेष्टनीभिः पेशीभिः ।

नेत्रोपाङ्गानि तु नेत्रच्छदौ, नेत्रवर्त्मनी, अश्रुग्रन्थिः, अश्रुमार्गाः, दूषिकाग्रन्थयः, नेत्रपेश्यश्चेति । तानि अग्रे व्याख्येयानि ।

( २७२ चित्रम् )

## नेत्रगुहान्तर्दृष्टं सपरिकरं नेत्रगोलकम् ।

[ ऊर्द्ध्वाधःक्रमेण अनुलम्बच्छेदः ]




चित्रव्याख्या।—अस्थिधरा कला १।२—क्रमेण नेत्रगुहाया उत्तराधरपरिधिच्छादिनी। अस्थि१—पुरःकपालांशः नेत्रगुहाच्छदिभूतः। अस्थि२—ऊर्द्ध्वहन्वंशः नेत्रगुहातलभूतः। क१।क२—अस्थिधरकलायाः अंशद्वयम् उत्तराधर नेत्रच्छदान्तरीय तरुणास्थिच्छादनम्। त१।त२—नेत्रच्छदान्तरीयं तरुणास्थिपत्रकद्वयम्। ×—अग्रिमा जलधानी। द—दृष्टिमण्डलम्। स—सान्द्रजलम्।

( २७३ चित्रम् )

## नेत्रगोलकस्य अनुप्रस्थच्छेदः (मध्यतः) ।

[ बर्द्धितायतनः ]




चित्रव्याख्या ।—क—स्वच्छमण्डलम् । अ—अग्रिमा जलधानी । ख-ख—तारामण्डलं जवनिकावदुभयतो दृश्यम् (तत्पश्चात् त्रिकोणशून्यं— पश्चिमा जलधानी नाम)। ग— दृष्टिमण्डलम् । च—दृष्टिवितानः ( अन्तर्वृतिः ) । छ—कर्बुरवृतिः । ज—पीतविम्बम् । १— दृष्टिमण्डल-बन्धनी स्नायुः । २—सन्धानदर्शिकाः ( दृष्टिवितानस्य अग्रकलयाच्छादिताः ) । ३—स्वच्छ-शुक्लसन्धिस्थः रसायनीमार्गः—'अग्रिमरसायनिका' नाम (विवरमात्रेण दर्शितः)। ४—नेत्रवर्त्माख्या कला (चाक्षुष भागः)। ५—सन्धानपेशिका । स-स—सान्द्रजलम् । घ-ङ—सान्द्रजलान्तरीयो लसीकामार्गः ।

## अथ नेत्रगोलकनिर्म्माणम् ।

निर्म्माणं पुनर्नेत्रगोलकस्य तिसृभिर्वृतिभिः। ताश्च बाह्य-मध्याऽन्तर-संज्ञाः। अभ्यन्तरे च नेत्रगोलकस्य दृश्यानि त्रिविधानि स्वच्छवस्तूनि—तनुजलं, दृष्टि-मण्डलं, सान्द्रजलञ्चेति। तत्र वृतयो यथा—( २७३ चित्रम् )

१। **बहिर्वृतिः**[१] दृढस्नायुसूत्रनिर्म्मिता कठिनप्राया स्थूला च। तस्या द्वौ भागौ—स्वच्छमण्डलं शुक्लवृतिश्चेति। तत्र शुक्लवृतिः नेत्रगोलकस्य पश्चिमं षड्-भागपञ्चकमावृणोति। अग्रिमषड्भागावरणं तु तस्य स्वच्छमण्डलं समुन्नतमध्यम्।

तदेतत् **स्वच्छमण्डलं**[२] खण्डमिव शून्यगर्भकाचवर्त्तुलस्य शुक्लभागपुरस्तात् संयोजितम् ( २७२।२७३ चित्रयोः )। प्रतिभाति चेदमापातदृष्ट्या कृष्णमिव (पिङ्गलं वा), पश्चिमस्थस्य तादृश तारामण्डलस्य तद्द्वारेण दर्शनात्। अतएव कृष्णभागोऽयमिति लौकिको व्यपदेशः। वस्तुतस्तु स्वच्छकाचवदस्य निर्म्माणमिति स्मर्त्तव्यम्।

सन्धिश्च स्वच्छमण्डल-शुक्लवृत्योः मण्डलाकारः स्वच्छ-शुक्लसन्धिः[३] नाम। तत्परिधौ दृश्यं सिराधमनीचक्रम्, रसायनीमार्गश्च मण्डलाकारः पश्चिमतः—अग्रिम-रसायनिका[४] नाम।

सूक्ष्मदर्शनेन तु स्वच्छमण्डलस्य चत्वारः स्तरा उपलभ्यन्ते—पुरस्तात् चाक्षुषनेत्रवर्त्माख्यस्तनुकलाभागः तत्संसक्तः। पश्चिमतः अग्रिमजलधान्याः पुरोगस्तनुतरः कलाभागः तदाभ्यन्तरावरणः। मध्ये चानयोः स्वच्छ-शार्ङ्ग-वस्तुमयः, स्थितिस्थापकसूत्रजालमयश्चेति द्वौ स्तराविति।

**शुक्लवृतिः**[५] पुनः स्वच्छ-शुक्लसन्धित आरभ्य पश्चिमतः समग्रनेत्रगोलकवेष्टनी स्थूलवृतिः। सा पश्चिमप्रान्ते निर्भिद्यते दृष्टिनाड्या, सिरा-धमनी-नाडीभिश्च तारामण्डलाभिगाभिः। परितश्च शुक्लवृतिं संसज्यन्ते नेत्रपेश्यः, आन्तरस्तरश्च नेत्रधरकलाकोषस्य। आन्तरभागस्तु शुक्लवृतेः मध्यवृतिसंसक्तः श्याववर्णश्च, तत्र दृश्याः सूक्ष्माः सीतिकाः तारामण्डलानुगानां बहूनां नाडीप्रतानानां धारणाय।

स्थूलता च शुक्लवृतेः यवोदर-चतुर्थांशः, स्वच्छमण्डलस्य तु यवोदर-दशमांशः।

२। **मध्यवृतिः**[६] नाम—मध्यमा वृतिर्नेत्रगोलकान्तःस्था या शुक्लवृतेरन्त-

---

१। External Tunic of the Eye-ball. २। Cornea. ३। Sclero-corneal junction. ४। Canal of Schlemm. ५। Sclerotic coat or Sclera. ६। Middle or Vascular Tunic of Eye-ball.

स्तलेन भूम्ना संसक्ता, स्वाङ्के दृष्टिवितानधारणी। तस्यास्त्रयो भागाः पौर्वापर्य्य-क्रमेण तारामण्डलं, सन्धानमण्डलं, कर्बुरवृतिश्चेति। तत्र—

(क) **तारामण्डलं**[1] नाम तनुपेशीसूत्रमयी मण्डलाकारा जवनिका या स्वच्छमण्डलस्य पश्चिमवर्त्तिनि जले संप्लवते स्वपरिधिमात्रेण सर्वतो निबद्धा (२७३ चित्रम्)। सा यवोदरायता संकोचविस्फारशीला च। तस्याश्च कृष्णवर्णायाः (क्वचित् पिङ्गलवर्णाया वा) प्रतिच्छाया स्वच्छमण्डले संक्रमिता तं श्यामीकरोतीत्युक्तपूर्वम्। मध्ये च तारामण्डलस्य दैवकृतं विवरं कनीनकं[2] नाम येन प्रविशन्ति तेजोरश्मयः, किरणानि चोज्ज्वल-वस्तूनाम्। तस्य च विवरस्य सूक्ष्मता स्फारता वा तारामण्डलीयपेशीतन्तूनां प्रसार-संकोचाभ्यां सम्पद्यते।

दृश्यते च गर्भस्थशिशोः (सद्योजात पक्षिशावकानाञ्च) कनीनकच्छादनी[3] कला[3] तन्वी या जन्मतः पूर्वमनन्तरं वा स्वयमेव विलीयते।

पुरश्च तारामण्डलस्याऽवकाशस्तनुजलपूर्णः—अग्रिमा जलधानी[4] नाम। तत्-पश्चिमतश्चापरोऽवकाशो मण्डलाकारस्त्रिकोणपरिणाहः पश्चिमा जलधानी[5] नाम। उभयोश्च जलधान्योः सम्बन्धः कनीनकमार्गेण। तस्य च जलस्य तनुजलम्[6]—इति संज्ञा।

अथास्य तारामण्डलस्य द्वे प्रबन्धने स्वपरिधिसम्बद्धे—तयोरग्रिमं स्वच्छ-मण्डलपरिधिना संसज्यते कङ्कतिकाकारैः सूत्रैः, पश्चिमन्तु सन्धानमण्डलस्य अग्रपरिधिना संसक्तं कर्बुरवृत्यनुबन्धि।

व्यतिकरश्च तारामण्डलस्येत्थम्भूतः।—

पुरस्तात् स्वच्छमण्डलपृष्ठतः अग्रिमा जलधानी। पश्चिमतः पश्चिमा जलधानी, दृष्टिमण्डलञ्च। परितः—सन्धानमण्डलम्—इति।

निर्माणं पुनस्तारामण्डलस्य सूक्ष्मैः स्नायुसूत्रैः वर्णवद्वस्तुबहुलैः, पेशीसूत्रैश्च भूम्ना सूक्ष्मसिरा-धमनी-नाडीप्रतानसहितैः। द्विविधानि चात्र पेशीसूत्राणि—(क) कनीनक-संकोचनानि[7]—कनीनकपरिधौ वलयवद् विन्यस्तानि, (ख) कनीनक-विस्फारणानि[8]—कनीनकं परितो विसारीणि, अरा इव चक्रनाभिमभितः। तत्राद्यानि तृतीयनाड्याः प्रतानैः सक्रियाणि, अपराणि त्रिधारग्रन्थि-चाक्षुषग्रन्थि-

---

१। Iris. २। Pupil. ३। Membrena Pupillaris. ४। Anterior Chamber. ५। Posterior Chamber. ६। Aqueous Humour. ७। Sphincter Pupillæ. ८। Dilator Pupillæ.

समुत्थैः स्वतन्त्रनाडीसूत्रैः । ते च नाडीप्रतानाः प्रायेण पञ्चदशसंख्याः सिराधमनी-प्रतानानुसराः । सिरा धमन्यश्च ताः चाक्षुषसिरा-धमन्योः शाखाप्रशाखारूपाः अग्रे व्याख्येयाः ।

(ख) **सन्धानमण्डलं**[1] नाम—तारामण्डल-कर्बुरवृत्योर्मध्यस्थं मण्डलम् उभयतःसन्धायि (२७४।२७५ चित्रयोः)। तस्य त्रयो विभागाः सन्धानवलयिका, सन्धानपेशिका, सन्धानदशिकाश्चेति । तत्र—

(१) सन्धानवलयिका[2] कर्बुरवृतेरग्रिमधाराऽनुबन्धिनी यवोदरायता ।

( २७४ चित्रम् )

## नेत्रगोलकस्य अग्रिमार्द्धम् ।

[ पश्चिमतो दृष्टम् ]




(२) सन्धानपेशिका[3] तस्यैव पुरस्ताद् बहिःपरिधौ सम्बद्धा मण्डलाकृतिः पेशीसूत्रमयी। तानि च पेशीसूत्राणि द्विविधानि—(१) विसारिसूत्राणि स्वच्छ-शुक्ल सन्धितः सम्भूय पश्चात् कर्बुरवृत्यभिगानि। (२ वृत्तसूत्राणि च तारामण्डलसन्धानमावेष्ट्य सन्धानदशिकानां मूलेषु सम्बद्धानि। तानि दशिकानामाकर्षणेन दृष्टिमण्डलबन्धन्याः शिथिलीकरणानि। सेयं सन्धानपेशिका तृतीयनाडीप्रतानैरनुप्राण्यते ( २७३ चित्रम् )।

१। Ciliary Body (Corpus Ciliare). २। Orbiculus Ciliaris. ३। Ciliary Muscles.

(३) सन्धानदशिका:[१] नाम सन्धानमण्डलस्य पश्चिमस्थाः वस्त्रदशान्ताकारा (नागकेशरपुष्प केशराकारा वा) अवयवाः ये कर्बुरवृतेः पुरोधारांशस्य कुञ्चितकैरिव निष्पन्नाः। ताः संख्यया सप्ततिरशीतिर्वा दृष्टिमण्डलवन्धन्या वहिःपरिधौ चक्राऽराकारेण प्रविष्टाग्राः, सान्द्रजलस्य पुरोभागमधिशेरते। तासां मूलेषु निवद्धानि सन्धानपेशिकाया वृत्तसूत्राणि।

३। **कर्बुरवृतिः**[२] नाम मध्यवृतेः पश्चिमविभागः कर्बुरवर्णवहुलः। स शुक्लवृति-दृष्टिवितानयोर्मध्ये तिष्ठति शोणितस्रोतोभिरनुविद्धः प्राचुर्य्येण। तस्य चाग्रधारा दृष्टिवितानस्य दन्तुरधारां यावत् प्रसृता स्वदशाकुञ्चितकैरिव सन्धानदशिकानां निर्मापणी। सेयं कर्बुरवृतिः नेत्रगोलकाभ्यन्तरस्य षड्भागपञ्चकमावृणोति, संसज्यते च शुक्लवृत्या। तयोर्मध्ये व्यवधायिनी संयोजनी च तनुकला वर्णक[३]वहुला शवलकला[४] नाम। सा समन्ताद्रसायनस्रोतोभिरभिव्याप्ता उभयतः। अन्तराले च कर्बुरवृति-दृष्टिवितानयोः दृश्यते अपराऽपि कला तनुस्वच्छा या दृष्टिवितानस्य वाह्यतमां स्तरिकां चित्रजवनिकाख्यां स्वाङ्के धारयति। सेयं वितानभूमिका[५] नाम।

( २७५ चित्रम् )

## नेत्रगोलकस्य मध्यवृतिदर्शकम्।

[ वहिर्वृतेरर्द्धापसारणेन स्फुटीकृतम् ]




१। Ciliary Processes. २। Choroid Coat. ३। वर्णकम्=Pigment. ४। Lamina Fusca. ५। Lamina Basalis.

निर्म्माणञ्च कर्बुरवृतेः स्तरद्वयेन। तत्र प्रथमः स्तरो बाह्यः, स सिरागुलिमका[१]ख्य-नेत्रसिराणां ह्रस्वसन्धानिकाख्य धमनीनाञ्च प्रतानपुञ्जधारणः, कर्बुरवर्णकधरश्च। द्वितीयः स्तर आभ्यन्तरः, स तेषामेव सिराधमनीप्रतानानां प्रतनुजालकैरभिव्याप्तः। तत्सम्बन्धिन्यश्च स्थूलाः सिराः धमन्यश्च पञ्चषाः शुक्लवृतिं तन्मध्यदेशमभितो निर्भिद्य वहिरन्तश्च यथाक्रमं प्रसरन्ति, प्रीणयन्ति च शुक्लवृतिमपि। नाड्यश्च कर्बुरवृतेस्तृतीय-पञ्चमशीर्षण्यनाड्योः प्रतानभूताः, स्वतन्त्रनाडीप्रतानाश्च चाक्षुषादि-ग्रन्थि-सम्भवाः। तत्र तृतीयाप्रतानाः कनीनकसंकोचनाः, स्वतन्त्रनाडीप्रतानास्तु तद्विस्फारण्यः। पञ्चमनाडीप्रतानाः पुनः स्पर्शसंज्ञाप्रदाः।

३। **अन्तर्वृतिः, दृष्टिवितानो**[२] वा नाम नेत्रगोलकस्यान्तरतमा वृतिरतितन्वी, या अग्रिमषड्भागवर्जं समग्रमपि नेत्रगोलाभ्यन्तरं व्याप्नोति (२७३ चित्रम्)। सेयं नेत्रगोलकप्रविष्टाया दृष्टिनाड्याः प्रतनुविस्तारस्वरूपा। अतएवाऽस्या दृष्टिवितान इति संज्ञा। दृष्टिनाडी च नेत्रगोलकस्याऽक्षरेखां[३] (स्वच्छमण्डल-दृष्टिमण्डलादिमध्य-विन्दु संयोजनीं) नाऽनुसरति। प्रविशति तु सा किञ्चित्तदन्तःपार्श्वस्थेन छिद्रेण, प्रतायते च वितानरूपेण परितो विसारिभिः प्रतानैः। तदेतत् दृष्टिनाडीप्रवेशस्थानम् (२७६ चित्रम्) अन्तर्वीक्षणदर्पणेन दृष्टिपरीक्षाकाले शुभ्रलक्ष्मवद् दृश्यते समन्तादारक्तिमं, तस्य सितविम्बमिति[४] संज्ञा, अन्धविन्दुरिति[५] वा, तत्र दृष्टिशक्तेः सर्वथाऽभावात्। मध्ये चास्य अंकुरिका विम्बांकुरिका[६] नाम, सा दृष्टिनाडीमध्यगाया धमन्याः प्रवेशस्थानम्। अक्षरेखास्पर्शस्थानन्तु तत्पार्श्वस्थं स्तोकेन निम्नं पीतविम्बम्[७] नाम, पूर्वोक्तपरीक्षा-काले तथादर्शनात्। तन्मध्यविन्दौ च किञ्चिद् गभीरे तीक्ष्णतमा दृष्टिशक्तिरिति तस्य दर्शनकेन्द्र[८]मिति संज्ञा।

अथास्य दृष्टिवितानस्य पुरस्तात् प्रसृतस्य सम्मुखीना धारा करपत्राग्रनिभा मण्डलाकृतिः—दन्तुरधारामण्डलं[९] नाम, सा कर्बुरवृतेरग्रधारामनुसरति (२७४ चित्रम्)। तदग्रे च तदनुवन्धभूता तनुतमा कला सन्धानदशिकानां पश्चिमावरणभूता—वितानाग्रकला[१०] नाम, तत्र दृष्टिशक्तेः सर्वथाभावः, दृष्टिनाडीप्रतानाभावात्।

---

१। Venæ Vorticosæ. २। Retina. ३। Axis. ४। Optic Disc. ५। Blind spot. ६। Optic Papilla. ७। Macula Lutea or Yellow Spot. ८। Fovea Centralis. ९। Ora Serrata. १०। Pars Ciliaris Retinæ.

निर्माणं खलु दृष्टिवितानस्य दृष्टिनाडीविस्तारभूतैः प्रतानैः, नाडीकन्दाणुकैश्च स-तन्तुकैरनेकस्तरविन्यस्तैः। तदापूरणन्तु क्षेत्रवस्तुना, योजकतन्तुभिश्च। शोणित-स्रोतांसि च तत्र नातिप्रचुराणि सूक्ष्मतमानि च। दश चास्य स्तरिकाः सूक्ष्मपरीक्षा-दृश्याः (२७७ चित्रम्)। तद्यथा—(अभ्यन्तरतो वहिर्मुखम्)—

(१) अन्तःसीमिका[१] नाम तन्वी कला प्रथमा, या सान्द्रजलं परितो वर्त्तमाना दृष्टिवितान-स्यान्तःसीमां निर्दिशति।

(२) वितानसूत्रिणी[२] नाम स्तरिका द्वितीया, या दृष्टिनाडीसूत्रैर्वितानरूपेण परिणतै-र्निर्म्मिता।

(३) पुरुकन्दाणुकिनी[३] नाम तृतीया या पुरुभिः कन्दाणुकैर्विरचिता तन्तुभिरुभयतः सम्बन्धिनी।

(४) तन्तुजालिनी आन्तरी[४] नाम चतुर्थी, या पूर्वापरस्तरिकयोरवस्थितानां कन्दाणुकानां तन्तुप्रतानैः परस्पराश्लेषिभिरारचिता।

(५) यवकन्दिनी आन्तरी[५] नाम पञ्चमी, या यवाकार द्विवाहुक कन्दाणुकैः भूम्ना निर्मिता, अन्यैश्च कन्दाणुकैः स्तोकेन।

(६) तन्तुजालिनी बाह्या[६] नाम षष्ठी, या पूर्ववदुभयतः सङ्गतैस्तन्तुप्रतानैर्निर्मिता।

(७) यवकन्दिनी बाह्या[७] नाम सप्तमी, या पूर्ववद् द्विवाहुककन्दाणुकैः भूम्ना विरचिता।

(८) बहिःसीमिका[८] नाम तन्वी कला चाष्टमी, या पूर्वोक्त सप्त स्तरिकाणां वहिःसीम-निर्देशिनी। तां च निर्भिद्य बहिर्गताः सप्तमस्तरीय कन्दाणुकाणां सूत्रप्रतानाः।

(९) नवमी पुनः स्तरिका रूपादानिका[९] नाम। सा पृथग्जातीयैः कन्दाणुविशेषैर्निर्म्मिता, तानि च कन्दाणुकानि स्थूलमूलानि चित्रवर्णानि द्विविधानि—शूलाकाराणि वेमाकाराणि चेति। तानि प्रायेण दण्डराजिवत् परस्परपार्श्वगानि मूलेषु पूर्वस्तरीय द्विवाहु कन्दाणुकैः संयोगवन्ति।

(१०) दशमी तु स्तरिका चित्रजवनिका[१०] नाम। सा नानावर्णकधरैः पत्रकाकार षट्कोण-चिपिटाकृति कोषाणुकैर्विरचिता। तेषां तन्तुप्रतानाः शूल-वेमाकाराणां विशिष्ट-कन्दाणुकानामन्तरालेषु प्रविशन्ति प्राचुर्य्येण। सेयं दशमी स्तरिका कर्वुरवृते-रङ्गस्था वितानभूमिकाख्य-कलाव्यवधानेन। वर्णकानि च तत्र समुज्ज्वलानि क्षणपरिणामीनि। तैर्हि विचित्रशक्तिभिरंक्यन्ते नानावर्णानि चित्राणि प्रति-विम्बानां चित्रजवनिकायां, यानि क्षणमात्रं स्थित्वा विलीयन्ते।

सेयं चित्रजवनिका आलोचकपित्तधरा नाम प्राचाम्।

---

१। Membrana Limitans Interna. २। Stratum Opticum. ३। Ganglionic Layer. ४। Inner Plexiform Layer ५। Inner Nuclear or Granular Layer. ६। Outer Plexiform Layer. ७। Outer Nuclear or Granular. Layer. ८। Membrana Limitans Externa. ९। Jacob's Membrane or Layer of Rods and Cones. १०। Tapetum Nigrum or Pigmentary Layer.

## ( २७६ चित्रम् ) दृष्टिवितानस्य पश्चिमांश प्रदर्शकम् ।

[ अन्तर्वीक्षणदर्पणेन यथा दृश्यते तथाङ्कितम् ]




चित्रव्याख्या।—ध० ध० ध० ध०—दृष्टिनाडीमध्यगायाः धमन्याः विसारिशाखाः। तेषां मूले दृष्टिनाडीप्रवेशस्थानम् ( सितविम्बम् )। तद्वामतः क्षुद्रतरं पीतलक्ष्म, मध्ये चास्य विम्बांकुरिका। चित्रस्य वामार्द्धे तु दर्शिताः तनुतराङ्काः सिराप्रतानाः (स्पष्टार्थं पृथगङ्किताः)। वस्तुतस्तु ते धमनीप्रतानानां सहचराः सर्वत्र। १—बहिर्वृतिः। २—मध्यवृतिः। ३—अन्तर्वृतिः।

## ( २७७ चित्रम् ) दृष्टिवितानान्तरीय स्तरिकानां प्रदर्शकम्।

[ सूक्ष्मपरीक्षादृश्यम् ]




चित्रव्याख्या।—१।२।३—इत्यादिभिरङ्कैः मूलोक्त स्तरिकानां निर्देशः। ककारादिवर्णत्रयं त्रिविध-सहकारि कन्दाणुकानां प्रदर्शनाय। घ—यवकन्दाणुकाः। च—वेमाकारकन्दाणुकानां मूलानि। छ—शलाकाराः कन्दाणुकाः। ज०—नवम-दशम स्तरस्थ कन्दाणुकानां परस्पर प्रतानाश्लेषः।

अत्रेदमवधेयम्। रूपादानिका चित्रजवनिका चेति नवम-दशम्यौ स्तरिके पूर्वोक्ताभिरष्टाभिः स्तरिकाभिः पिहिते। तथापि तासां स्वच्छत्वात् प्रतिविम्बग्रहणं न बाध्यते। व्यवधानञ्च तदतितनूभूतं पोतविम्बान्तरीये दृष्टिकेन्द्रे। तेन तीक्ष्णतमा तत्र दृष्टिशक्तिः। रूपादानकाले च तस्यैव साम्मुख्यं विधातुं प्रयतन्ते नेत्रप्रचेष्ट्न्यः पेश्यः, शिरोग्रीवपेश्यश्च यथार्हं शिरोविवर्त्तनेन। संव्यूह्यन्ते च तत्रैव एकाग्रीकृत्य तेजोरश्मयो दृष्टिमण्डलेन। परितस्तु दृष्टिकेन्द्रं क्रमशो हीयते तीक्ष्णता दृष्टिशक्तेः, स्तरिकाष्टकस्य क्रमशः स्थूलीभूतस्य व्यवधानात्।

इदञ्च दृष्टिवितानविर्म्माणस्य सुखस्मरणाय पद्यपञ्चकम्—

दृश्या दृष्टिवितानान्तः सुसूक्ष्माः स्तरिका दश।<br>
तासामाद्याऽष्टमी चापि सीमनिर्देशिके कले।<br>
मध्ये तयोः षट् स्तरिकाः तन्तु-कन्दाणुनिर्मिताः॥<br>
तन्तुजालमयी पूर्वा कन्दाणुकमयी ततः।<br>
पुनस्तन्तुमयीत्यादि-क्रमस्तासां सुखस्मरः॥<br>
अथ या नवमी सा तु शूल-वेमोपमैः कृता।<br>
कन्दाणुभिः श्रेणिवद्धैः, रूपादानकरी हि सा॥<br>
क्षणं चित्राङ्कनकरी वर्णकैर्दशमी स्मृता।<br>
सा चित्रजवनी नाम सङ्गता कर्बुरां वृतिम्॥<br>
सैवाऽलोचकपित्तस्य धारणी वैद्यकोदिता॥

### अथ स्वच्छवस्तुव्यूहः।

त्रिविधानि हि स्वच्छवस्तूनि नेत्रगोलक गर्भस्थानि—तनुजलं, दृष्टिमण्डलं, सान्द्रजलञ्चेति। पुरश्चैषामपरं वहिर्वृत्त्यंशभूतं स्वच्छमण्डलं नाम; तदेतत् चतुष्टयं स्वच्छवस्तुव्यूह[1] संज्ञम् (२७३।२७८ चित्रयोः)। तदेव परस्परसहायभूतं रूपवद्वस्तूनामालोकितानां रश्मिसंग्रहणम्। स्वच्छमण्डलसंगृहीता हि रश्मयः कनीनकपथेन प्रविष्टाः दृष्टिमण्डलेन संव्यूह्यन्ते,[2] तथा संव्यूढाश्च सान्द्रजलमतिक्रम्य प्रतिविम्बं रचयन्ति दृष्टिवितानान्तः। प्रतिविम्बग्रहणक्रमस्तु अग्रे व्याख्येयः।

तत्र **स्वच्छमण्डलं**[3] व्याख्यातपूर्वम्। तत् प्रथमं रश्मिसंग्रहणयन्त्रम्, पुरस्तुन्दिलत्वात् स्वच्छत्वाच्च। तनुजलं द्वितीयमकिञ्चित्करञ्च, तस्य प्राधान्येन

१। Transparent or Refracting Media. २। संव्यूहनं नाम एकमुखीकरणम् (Focussing). ३। Cornea. न चैतत् 'कर्णिका'संज्ञयाभिधेयम्, असादृश्यात्, मस्तिष्कावयवेषु तत्संज्ञायाः प्रयुक्तत्वाच्च।

पोषणकर्म्मत्वात्। दृष्टिमण्डलं तृतीयं प्रधानञ्च, उभयतस्तुन्दिल यवकाच-[1] वन्निर्म्माणात्। सान्द्रजलं चतुर्थं स्वच्छं पारदर्शकञ्च। तत् प्राधान्येन नेत्रगोलका-भ्यन्तरपूरणम्, यदभावे गोलकाकृतिविपर्य्ययात् प्रतिविम्बग्रहणं न सम्पद्येत।

तत्र **तनुजलं**[2] नाम स्वच्छतरलमीषत्क्षारलवणं जलं द्विरक्तिकामानम् यत् स्वच्छमण्डलस्य पश्चात् तारामण्डलमुभयतश्च अग्रिम-पश्चिमजलधान्योरवतिष्ठते, पुष्णाति च स्वच्छवस्तुव्यूहं स्वरसेन। तस्य च प्रतिदिनं क्षीयमाणस्याऽपूरणं नवीकरणञ्च स्वच्छ-शुक्लसन्धि मध्यस्थया अग्रिमरसायनीमार्गस्थया लसीकया— इति स्मर्त्तव्यम्। तदेतत् तनुजलमेव प्राचां तेजोजलं नामेति केचित्।

( २७८ चित्रम् )

## नेत्रगोलक पुरोभागस्य अर्द्धार्द्धम्।

[ अनुप्रस्थच्छेदेन दर्शितम् ]




चित्रव्याख्या—त०—तारामण्डलम्। थ—दृष्टिमण्डलधरः कलाकोषः। प०—सन्धानपेशिका। द०—सन्धानदशिकानां मूलानि। ब०—दृष्टिमण्डलबन्धनी, तन्मध्यस्थः पश्चिमरसायनीमार्गश्च।

१। Bi-convex Lens. २। Aqueous Humour.

अथ **दृष्टिमण्डलं,**[१] **दृष्टिमणिः** वा नाम चिपिटमौक्तिकाकारं यवकाच-सदृशं वा पारदर्शकवस्तुमयं स्थूलमध्यं मण्डलं यत् तारामण्डलस्य पश्चात् नेत्रगोलकान्त र्मध्येऽवलम्बते, समन्तात् तद्वन्धन्या सन्धानमण्डलनिवद्धया सन्धृतम् ( २७२।२७३।२७८ चित्रेषु )। तस्य चाग्रतः सकनीनकं तारामण्डलम् पश्चिमजलधान्या व्यवहितम्। पश्चात् प्रतनुकलाकोषावृतं सान्द्रजलं दृष्टिमण्डल-धारणाय किञ्चित्खातोदरम्। अस्ति चात्र दृष्टिमण्डलपरिधिवेष्टनं कलाचक्रं[२] यत् सान्द्रजलधरायाः कलायाः अग्रविस्ताररूपम्, तत् स्तरद्वयेन दृष्टिमण्डलवन्धनीं विरचयति ( २७४।२७८ चित्रयोः )।

सेयं दृष्टिमण्डलवन्धनी[३] स्तरद्वयान्तराले विवरमार्गयुता, स च मार्गो मण्डल-परिणाहवेष्टनः पश्चिमरसायनीमार्गः[४] नाम। तत्रोपचीयमाना हि लसीका स-दृष्टिमण्डलं सान्द्रजलं निरन्तरं पुष्णाति।

तदेतद् दृष्टिमण्डलम् प्रतनु-स्वच्छकलाकोषावृतं, सूर्य्यकान्तमणिवद् उभयत-स्तुन्दिलमध्यत्वाद् रश्मिजालसंव्यूहनञ्च प्राधान्येन। तस्य तुन्दिलमध्यत्वं पुरस्तादल्पं पश्चादधिकम्। तद्वन्धनीपरिधिस्थेन च कलाचक्रेण संसक्ताः सन्धान-दशिकाः, यासां मूलानि सन्धानपेशिकया सम्बद्धानि।

निर्म्माणञ्च दृष्टिमण्डलस्य पलाण्डुकन्दवत् कोषस्तरैः। मध्ये त्वस्य अष्ठिका मण्डलाष्ठिका[५] नाम। स्तरकोषाश्च अन्तरन्तर्गताः क्रमशः कठिनतराः, कठिन तमामष्ठिकामाच्छादयन्ति परितः ( २७८ चित्रम् )। न च तथापि पारदर्शकताऽस्य व्याहन्यते सर्वांशानां तुल्यस्वच्छत्वाद्। न च सन्ति तेषु सिरा-धमनी-नाडीनां प्रतानाः, लसीकामात्रेण परितःस्थेन तत्पोषणात्।

अथास्य दृष्टिमण्डलस्य वार्द्धकादिहेतोः स्वच्छत्वापगमाद् रूपग्रहणव्याघाते सम्भवति सुप्रसिद्धो रोगः लिङ्गनाशो नाम, नीलिकाकाचसंज्ञो[६] वा। स एव मुक्ताविन्दु[७]र्नाम लोके। सोऽसौ दृष्टिमण्डलस्य वहिर्निष्काशनेन वा, नेत्रान्तरेवाधः-पातनेन[८] वा प्रतिविधेयः। एवं दृष्टिमण्डलाऽपाकरणे च तदभावः तत्सदृशयवकाचेन नेत्रपुरोधृतेन पूर्य्यते।

**सान्द्रजलं**[९] नाम विहगाण्डाऽन्तरीयाऽच्छ-घनलालाभं स्वच्छवस्तु यत् नेत्र-

---

१। Lens. काचसंज्ञा तु नात्र प्रयोक्तव्या, वैद्यके तस्या रोगाभिधायित्वात्। दृष्टिपदं च सुश्रुतेन एतदर्थं प्रयुक्तं प्रायेण। क्वचित् कनीनकाद्यर्थऽपि। २। Zonula Ciliaris or Zonule of Zinn. ३। Suspensory Ligament of the Lens. ४। Canal of Petit. ५। Nucleus Lentis. ६। Cataract. उभे अपि संज्ञे सुश्रुतोक्ते (सु० उत्तर० ८ अ०)। ७। मोतिया बिन्द--इति भाषायाम्। ८। एष शस्त्र कर्म्मविधिः प्राचीनः। अधुना तु निष्काशनमेव क्रियते। ९। Vitreous Body.

गोलकाभ्यन्तरस्य चतुःपञ्चमभागमापूरयति पश्चिमतः, गोलकस्य सुसंहतवर्त्तुलाकाररक्षणाय। तच्च प्रतनुकलाकोषावृतं दृष्टिवितानस्याङ्कमधिशेते, धारयति च स्वयं पुरस्तान्निजाङ्कस्थे नातिगभीरे खाते दृष्टिमण्डलस्य पृष्ठभागं समुन्नतमध्यम्। तस्य च खातस्य दृष्टिमण्डलाधानिका[१]–इति संज्ञा। मध्ये च सान्द्रजलस्य दृष्टिमण्डलपृष्ठतो दृष्टिनाडोप्रवेशस्थानावधि विस्तृता तन्वी प्रणालिका लसीकापूर्णा सान्द्रजलान्तरीया प्रपिका[२] नाम। सा गर्भस्थशिशोः कनीनकच्छदपोषण्या धमन्याः अवशेषरूपा।

सान्द्रजलधरा कला[३] तु दृष्टिवितानान्तःसीमिकया कलया परितः संसज्यते आ दन्तुरधारामण्डलात् ( २७८ चित्रम् )। दृश्यते च तदग्रिमांशः स्थूलीभूतः कलाचक्ररूपेण दृष्टिमण्डलपरिधौ। कलाचक्रं च तत् परिवेष्ट्य स्थिताः सन्धानदर्शिकाः, अरा इव चक्रनाभिम्। सान्द्रजलपुरःस्थे च कलाभागे दृश्यानि तासां धारणलक्ष्माणि। कलाचक्रतश्च निर्गतौ द्वौ स्तरौ--तयोरेकः दृष्टिमण्डलधारणेन कलाकोषेण[४] उभयतः संसज्यमानो दृष्टिमण्डलबन्धनीं रचयति सन्धानपेशिकासम्बद्धाम्। अपरस्तु तत्पृष्ठगः दृष्टिमण्डलाधानिकां सान्द्रजलोत्सङ्गस्थामावृणोति।

अथ नेत्रगोलकान्तरीयाः सिरा-धमनी-नाड्यः।

पोषणधमन्यः खलु नेत्रगोलकस्येत्थं प्रवर्त्तन्ते चाक्षुषीसंज्ञाया धमन्याः शाखाप्रशाखाद्याः ( २७९ चित्रम् )।

शुक्लवृतेः पोषण्यो धमन्यः दीर्घसन्धानिकाख्यानां चाक्षुषधमनीप्रशाखानां कतिचिदनुशाखाः। ताः स्वल्पसंख्याः दूरान्तराश्च। स्वच्छमण्डलस्य तु न सन्ति धमन्यः, अन्यत्र तत्परिधिस्थधमनीचक्राद्, यस्य जालकेभ्यो निःस्रवता रसेनाऽभिप्रीयते तत्समीपस्थं तनुजलादि। तनुजलेन चाभिप्रीयते स्वच्छमण्डलम्।

मध्यवृतिस्तु शोणितस्रोतोभिरभिव्याप्ता सर्वत्र। तत्र पोषण्यो धमन्यः सन्धानमण्डलगाः सन्धानिकाः[५] नाम, ताः दीर्घाः, ह्रस्वाः, पुरोगमाश्चेति त्रिविधाः कर्बुरवृतिं प्रविशन्ति। तासां दीर्घाः सन्धानिकाः पुरोगमाश्च तारामण्डलं परितो बृहद्धमनीचक्रमारचयन्ति, कनीनकं परितश्च लघुचक्रं, परस्परमिलितैः शाखाप्रतानैः। तयोश्च धमनीचक्रयोः क्रमेण परितारामण्डलं[६] परिकनीनकं[७] चेति संज्ञे। ह्रस्वास्तु सन्धानिकाः धमन्यः कर्बुरवृत्यन्तः प्रसृताः तत्पश्चिमार्द्धम् प्रीणयन्ति।

१। Fossa Patellaris. २। Canalis Hyaloideus. ३। Hyaloid Membrane. ४। Capsule of the Lens. ५। Ciliary Arteries ( Long, Short & Anterior ). ६।७। Major & Minor Arterial circles.

( २७६ चित्रम् )

( ~~२८८ चित्रम्~~ )

## नेत्रगोलकीयाः सिराधमन्यः ।




[ To face Page ~~218~~ 208

दृष्टिवितानस्तु दृष्टिनाडीमध्यगया धमन्या[1] (चाक्षुषधमनीप्रशाखया) सन्तर्प्यते। सा च दृष्टिनाडीवद् विस्तीर्य्यते सितबिम्बमभितो विसारिभिः सूक्ष्मशाखाप्रतानैः, सिराभिश्च तत्सहचरीभिः ।

सिरास्तु नेत्रगोलकीया बहवः । तासां चतस्रः पञ्च वा गुल्माकाराः मुख्याः—सिरागुल्मिकाः[2] नाम (२७६ चित्रम् ) । ताः शुक्ल-कर्बु रवृत्योरन्तराले नेत्रगोलकस्य परिणाहमेखलाम्[3] परितो दृश्याः । सम्मिलिताश्च ताश्चाक्षुषसिरयोः परिणमन्ति उत्तराधर-संज्ञयोः । ते त्रिकोणिकां नाम सिरासरितं मातृकापरिखाऽवस्थितां प्रविशतः ।

नाड्यः पुनर्नेत्रगोलकस्य चतुर्विधाः । यथा— ( २७५ चित्रम् ) ।

(१) दृष्टिनाडीप्रतानाः वर्णितपूर्वाः, ते दृष्टिवितानस्य निर्म्मापण्यः ।

(२) तृतीयनाडीप्रतानाः—ये न केवलं षड् नेत्रपेशीः परं कनीनक-संकोचनानि पेशीसूत्राण्यपि तारामण्डलस्य ( पूर्वोक्तानि ) प्रचेष्टयन्ति, सन्धानपेशिकाञ्च ।

(३) पञ्चमनाड्याश्चाक्षुषशाखायाः प्रतानाः—ये नेत्रगोलकस्य सपरिकरस्य स्पर्शशक्तिमादधते । तेषाञ्च संख्याधिकाः सूक्ष्मतमाः प्रतानाः स्वच्छमण्डलं प्रविष्टाः तत् समधिकस्पर्शवत् कुर्वन्ति ।

(४) स्वतन्त्रनाडीप्रतानाश्च त्रिधार-चाक्षुषग्रन्थ्यादिसम्भवाः—ये तारा-मण्डलस्य विस्फारणानि पेशीसूत्राणि, सिराधमनीश्च चाक्षुषी-रनुप्राणयन्ति ।

### अथ रूपसंज्ञादानप्रकारः ।

समग्रं हि नेत्रगोलकम् आलोकचित्रग्राहक यन्त्रमिव[4] शोभते निर्म्माणवैचित्र्येण । तत्र दृष्टिवितानः तदन्तरीय प्रतिबिम्बग्राहिकाचत्रत्[5] । नेत्रान्तश्छादिनी कर्बु र-वृतिः कृष्णवर्णाभ्यन्तरपरिधिवत् तस्य यन्त्रस्य । तारामण्डलञ्च संकोच-विस्फारशीलं जवनिकाचक्रमिव[6] तद्यन्त्रमध्यस्थम् , तेजोरश्मीनामल्पाधिक्येन ग्रहणाय । सन्धानपेशिका तारामण्डलप्रचेष्टनी जवनिकाचक्र-प्रचेष्टनयन्त्रिकेव । यथा चेदमालोकचित्रग्राहियन्त्रम् ऊर्द्ध्वाऽधः-पार्श्वदेशेषु स्थानपरिवर्त्तनेन शक्यं स्थापयितुम् अभिकेन्द्रं प्रतिबिम्बग्रहणाय, नेत्रगोलकमपि तथैव नेत्रपेशीभिः शिरोग्रीवप्रचेष्टनपेशीभिश्च ।

१। Arteria Centralis Retinæ. २। Venæ Vorticosæ. ३। Equatorial region. ४। Camera. ५। Sensitive plate. ६। Iris Diaphragm.

अयं परमत्र विशेषः। आलोकचित्रग्राहिणि यन्त्रे एक एव यवकाचः[१] सामीप्येन वा दूरत्वेन वा यथाप्रयोजनं स्थापयितुं शक्यस्तेजोरश्मिसंव्यूहनाय। इह तु द्विविधं रश्मिसंव्यूहनयन्त्रं प्राधान्येन—एकं स्वच्छमण्डलं, यत् पुरस्तात् समुन्नतमध्यं कोरोदरञ्च पश्चिमतः, अपरं दृष्टिमण्डलं यद् उभयतस्तुन्दिलम्[२]। तत्र स्वच्छमण्डलेन आदीयन्ते तेजोरश्मयः प्रथमतः संव्यूह्य ( २७८ चित्रम् )। ते चादौ तनुजलप्रवेशेन स्वभावनियमात् किञ्चिद् भुग्नीकृतमार्गाः[३], अनन्तरञ्च तारामण्डलस्य संकोच-विस्फाराभ्यामल्पीकृतगुच्छाः बहुलीकृतगुच्छाः वा, दृष्टिमण्डलस्य पुरोभागे किञ्चित्परिवर्त्तितपरिणाहे † सम्पतन्ति कनीनकमार्गेण। ततो दृष्टिमण्डलप्रवेश-निर्गमाभ्यां द्वेधा भुग्नीकृत्य संव्यूढाः दृष्टिवितानान्तः प्रतिबिम्बरूपेण परिणमन्ति चित्रजवनिकायाम्। प्रतिबिम्बानि च तत्र ( यथा आलोकचित्रग्राहियन्त्रान्तरीये प्रतिबिम्बग्राहिकाचे ) विपरीतान्येव सम्पद्यन्ते। न तु रूपादानकाले मनसा तथोपलभ्यन्ते, स्पर्शादिना तत्स्वाभाविक परिस्थिति ग्रहणाभ्यासाद् बहुधा।

( २८० चित्रम् )

## रूपादानाय रश्मीनां प्रवेशक्रम दर्शकम्।




चित्रव्याख्या। --- अ-अ० — अक्षरेखागता सरलरश्मिः (अभुग्ना)। क-ख — दृश्यवस्तु (वाणरूपम्)। द-द — दृष्टिमण्डल प्रवेशिन्यो रश्मयः ( भुग्नीभूताः )। * — चिह्नं तन्मध्यविन्दु-दर्शकम्। घ-घ — स्वच्छमण्डलस्य परिधिः। ग-ग — इति वर्णद्वयं क-ख-लक्षित वस्तु-निर्गतानां रश्मीनां भुग्नीभावेन प्रवेशसूचकम्। ब — इति वर्णः प्रान्तीयरश्मीनां केन्द्रीभाव-सूचकः। ख०-क० — इति वर्णद्वयं विपरीतप्रतिबिम्बस्य संस्थानदर्शकम्। अत्र सामकोण्येन प्रविष्टा रश्मयो न भुग्नीभूता — इति लक्षणीयम्।

---

१। Lens. २। Biconvex. ३। भुग्नीभावः (Refraction of Rays) खलु भिन्नसंघात काचादिषु प्रविष्टानां रश्मीनां स्वभावनियमेन भवतीति वस्तुशक्तिविज्ञानविदां सकाशादवगन्तव्यम्।

† दृष्टिमण्डलमपि तदा पुरःसमधिकतुन्दिलमल्पतुन्दिलं वा भवति तारामण्डलस्य संकोच-विस्फाराभ्यां तद्बन्धन्याः शिथिलाऽशिथिलीभावात्, तस्य स्थितिस्थापकस्वभावाच्च—इत्यपरोऽत्र विशेषः स्मर्त्तव्यः। तत्प्रयोजनञ्च यथार्हं केन्द्रीकरणं रश्मीनाम्, सा च क्रिया केन्द्रिकरणं (Accommodation) नाम। इत्यादिविज्ञानं दृष्टिविज्ञानविद्भ्य उन्नेयम् ( २८१ चित्रम् )।

अथेमानि रूपवद्वस्तुप्रतिविम्बानि चित्रजवनिकास्थैर्वर्णकैस्तत्र सम्यगङ्कितानि क्षणमात्रमवतिष्ठन्ते। प्रतिबोधयन्ति च समकालमेव दृष्टिनाडीवितानस्य रुपादानिकाख्य नवमस्तरिकास्थानि शूल-वेमाकाराणि विचित्रकन्दाणुकानि। तानि पुनर्विलोमक्रमेण प्रतिबोधयन्ति उत्तरोत्तरस्तरिकावस्थितानि कन्दाणुपुञ्जानि परम्परया, अन्ते च दृष्टिनाडीतन्तून्। ते च वेगाः मस्तिष्कान्तरीयं दृष्टिसंज्ञाधिष्ठानमुद्बोधयन्ति दृष्टिसंज्ञावर्त्मभिः प्रसृताः सम्यग् रूपसंज्ञाग्रहणाय। तानि च वर्त्मानि दृष्टिनाडीवर्णने वर्णितपूर्वाणि।

( २८१ चित्रम् )

## दृष्टिमण्डलपरिणाहस्य परिवृत्तिदर्शकम्।




चित्रव्याख्या। — त-त — तारामण्डलम्। तत्पुरोवर्त्ति द्विगुणितविन्दुमालोपलक्षितमंशद्वयं तस्यैव सन्धानपेशिका सङ्कोचकृत स्थानपरिवर्त्तनसूचकम्। द०—दृष्टिमण्डलम्। तत्पुरःपार्श्ववर्त्तिनी विन्दुमाला तु तत्परिणाहपरिवर्त्तनं तावन्मात्रं सूचयति। तच्च दृश्यवस्तुसामीप्ये आलोकाधिक्ये च सम्भवति।

### अथ नेत्रोपाङ्गानि।

नेत्रोपाङ्गानि खलु नेत्रच्छदौ, नेत्रवर्त्मनी, अश्रुग्रन्थिः, अश्रुमार्गाः, दूषिकाग्रन्थिः, नेत्रपेश्यश्चेति षड्विधानि। तत्रेह नेत्रपेश्य एवादौ वर्ण्यन्ते, तासां नेत्रगोलकेन विशिष्टसम्बन्धात्।

### अथ नेत्रपेश्यः।

**नेत्रपेश्यः**[1] नाम नेत्रगोलकस्य स-नेत्रच्छदस्य नानाविधचेष्टाप्रवर्त्तिन्यः पेश्यः। तासु साक्षात् नेत्रगोलक सम्बन्धिन्यो मुख्याः[2], ताः षट्संख्याः प्रतिनेत्रम्। द्वे च गौण्यौ[3] नेत्रोन्मीलन-निमीलनकार्य्ये नेत्रच्छदसम्बद्धे। (२८२।२८४ चित्रयोः)

---

१। Muscles of the Eye. २। Muscles of the Eye-ball proper. ३। Muscles of the Eyelids.

मुख्यासु च नेत्रपेशीषु चतस्रः सरलाः नाम—तासां नेत्रगोलकचतुःसीमसु सरलऋजुवदवस्थानात् । ताः क्रमेण—**ऊर्ध्वदर्शिनी**[१], **अधोदर्शिनी**[२], **अन्तर्दर्शिनी**[३] **बहिर्दर्शिनी**[४] चेति संज्ञायन्ते । द्वे च वक्रे नेत्रपेश्यौ—**वक्रोर्ध्वदर्शिनी**[५], **वक्राधोदर्शिनी**[६] चेति ।

( २८२ चित्रम् ) **नेत्रपेशीनामवस्थानदर्शकम् ।**




[ अत्र वामतो वहिर्दर्शिन्याः कर्त्तितमूलोपरिष्टाद् वृत्ताकारा 'प्रभवचक्रिका' लक्षणीया । ]

तासां सरलाश्चतस्रो नेत्रगोलकस्य पूर्वार्धपरिधौ शुक्लवृत्त्यंशेषु निविशन्ते यथासंज्ञकोणेषु । निवेशस्थानानि च तासां नेत्रगोलकस्य पश्चिमार्धे स्वस्तिकवदाभासन्ते (+) परस्परविपरीतरेखासंयोगेन । वक्रे तु पेश्यौ नेत्रगोलकस्य पृष्ठभागे इत्थं निविशेते, तत्र वक्रोर्द्ध्वदर्शिनी नाम पेशी स्वकण्डरया पुरःकपालान्तःकोटिनिवद्धां स्नायुमयीमाकर्षिकां[७] प्रविश्य पुनरावृत्ता ऊर्द्ध्वदर्शिनी-वहिर्दर्शिन्योः पेश्योरन्तरालोर्द्ध्वभागे नेत्रगोलकपृष्ठे संसज्यते । वक्राधोदर्शिनी तु तिरश्चीनं प्रसृता तत्रैवाधस्ताद् विपरीत-कोणे । गौण्यौ तु पेश्यौ — **नेत्रोन्मीलनी**[८] **नेत्रनिमीलनी**[९] —चेति द्वे क्रमेण उत्तरनेत्रच्छदान्तः, उभयोश्च नेत्रच्छदयोर्निविशेते ( ६४।२७२।२८४ चित्रेषु ) ।

---

१ । Superior Rectus. २ । Inferior Rectus. ३ । Internal Rectus. ४ । External Rectus. ५ । Sup. Oblique. ६ । Inf. Oblique. ७ । Pulley of the Sup. Oblique. ८ । Levator Palpabræ. ९ । Orbicularis Oris.

सर्व्वासाञ्चासां पेशीनां प्रभवस्थानम् नेत्रगुहामूले दृष्टिनाडीरन्ध्रं परितः स्थितम् स्नायुचक्रम्, अन्यत्र नेत्रनिमीलन्याः पेश्याः। सेयं प्रभवचक्रिका[१] नाम। नेत्रनिमीलन्याः पेश्याः प्रभवस्तु जतूकास्थ्नो लघुपक्षतितले दृश्यः। वक्रोर्द्ध्व-दर्शिन्याः पेश्याः स्नायुनिर्म्मिता आकर्षिका पुनः पुरःकपालस्य भ्रूतोरणिकान्तःकोटौ सम्बद्धा। क्षुद्रोंऽशश्च पेश्या अश्रुवाहिनीं संवेष्ट्य स्थितः अश्रुविसर्जनकार्य्यः, सा अश्रुविसर्जनी नाम पृथगेव पेशीति केचित्।

अथासां पेशीनां शीर्षण्यनाडीभिरनुप्राणनमित्थं सम्पद्यते। बहिर्दर्शिनी-वक्रोर्द्ध्वदर्शिनीभ्यामृते सर्व्वासां तृतीयनाड्या। बहिर्दर्शिन्याः षष्ठ्या। वक्रोर्द्ध-दर्शिन्यास्तु चतुर्थ्या—इति।

कार्य्याणि तु नेत्रपेशीनां नामभिरेव व्याख्यातानि। विशेषतस्तु वक्रोर्द्धदर्शिनी कटाक्षवीक्षणसम्पादनीति तन्नाड्याः ( चतुर्थ्याः ) कटाक्षिणीति संज्ञा।

पोषणन्तु नेत्रपेशीनां 'चाक्षुषो' संज्ञाया धमन्याः पेशीगशाखाभिः।

## अथ नेत्रच्छदौ।

**नेत्रच्छदौ**[२] नाम एकैकस्य नेत्रगोलकस्य पुरःपिधानभूते तनुपत्रके प्रवेष्टन-शीले ये रजोधूमादिभ्यो नेत्रमभिरक्षतः (२८३ चित्रम्)। तयोरुत्तरो नेत्रच्छदो बृहत्तरः समधिकचेष्टनशीलश्च, नेत्रोन्मीलन्याः पेश्या निवेशात्। उभयोश्च नेत्रच्छदयोः निविशते नेत्रनिमीलनी पेशी या नेत्रनिमीलने वृत्तप्राया प्रतिभाति। निमीलितयोश्च नेत्रच्छदयोः नेत्रपुटमिति संज्ञा, तन्मध्यपरिखायाश्च पुटान्तरीय परिखेति[३]। तस्या नासाभिमुखः कोणः — नेत्रान्तःकोण[४]-संज्ञः, बहिःकोणः[५] अपाङ्ग-संज्ञः। परिखातटद्वये च दृश्या द्वि-त्र श्रेणिका रोमराज्यः पक्ष्माणि[६] नाम, सूक्ष्माणि च विवराणि तनुवसा स्राविणां ग्रन्थीनां स्रोतोद्वारभूतानि ( २८५ चित्रम् )। सेयं वसा नेत्रच्छदतटयोः स्नेहनकरी।

इमे चात्र अन्ये विशेषाः। अन्तःकोणे—कोणच्छदिका[७] नाम अर्धचन्द्राकृति-कला या विलुप्तप्रायकनीनकच्छादन्याः कलाया अवशेषरूपा। दृश्यते च तत्रैव निमीलितयोर्नेत्रच्छदयोर्व्यवधायकं त्रिकोणखातं—अश्रुकूपं[८] नाम यत्रोपचीयते अश्रुजलम्। तन्मध्ये च कोणांकुरो[९] नाम स्थूलसर्षपाकार उत्सेधः दूषिकाख्य-श्वेतमलस्रावी ( २८६।२८४ चित्रयोः )।

---

१। Annulus Tendinous Communis. २। Eye-lids. ३। Palpebral Fissure. ४। Inner Canthus. ५। Outer Canthns. ६। Eyelashes. ७। Plica Semilunaris. ८। Lacus Lacrimalis. ९। Caruncula Lacrimalis.

( २८३ चित्रम् )

## नेत्रबहिरङ्गानां दर्शकम्।




एकैकस्य च नेत्रच्छदस्य तटान्तःसीम्नि दृश्यमेकैकं सूक्ष्मविवरमंकुरमध्यस्थं — अश्रुद्वारं[1] नाम (२८३ चित्रम्)। तद्धारणस्य चांऽकुरकस्य अश्रुद्वारांकुर[2] इति संज्ञा। उभयोश्च अश्रुद्वारविवरयोः सम्बन्धो वक्ष्यमाणाभ्यामश्रुप्रपिकाभ्यां तत्रैवोभयतो निगूढाभ्याम्। ते च नासापार्श्वनिगूढामश्रुकुम्भिकां प्रविशतः, सा च तदनुबन्धिनीमश्रुकुल्यां नासाधः-सुरङ्गां यावत् — इत्यग्रे वर्णयिष्यामः।

निर्म्माणं पुनर्नेत्रच्छदयोः त्वङ्मांसावृत तनुतरुणास्थिपत्रकाभ्याम्। तदन्तस्तलयोश्च संसक्तौ नेत्रवर्त्मनश्छदान्तरीयौ भागौ। तरुणास्थिपत्रके च पत्रपुटाकारे नेत्रपुटस्य ईषत्काठिन्यप्रदे — छदपत्रिके[3] नाम। तयोरुत्तरा मध्ये साधांगुलायता, अधरा तु तदर्धायता। एकैका च छदपत्रिका बहिःसीम्नि गण्डास्थ्ना सम्बद्धा, अन्तःसीम्नि च नासास्थिपार्श्वेन स्नायुमयबन्धनीभ्याम्। पेश्यौ च पत्रिकयोः सम्मुखतले निविशेते नेत्रोन्मीलनी-नेत्रनिमीलनी-संज्ञे — इत्युक्तपूर्वम्। आभ्यन्तरतले तु च्छदपत्रिकयोर्दृश्याः वसाग्रन्थयः पुष्पमञ्जरीसदृशाः मञ्जरीग्रन्थयः[4] नाम येषां स्रोतोद्वाराणि नेत्रच्छदान्तरीयपरिखातटयोरुन्मुच्यन्ते। ते प्रायेण प्रतिनेत्रच्छदं पञ्चविंशतिसंख्याः त्रिंशत्संख्या वा ( २८५ चित्रम् )।

---

१। Punctum Lacrimale. २। Papilla Lacrimale. ३। Trasal Plates.
४। Tarsal or Meibomian Glands.

पोषणं पुनर्नेत्रच्छदयोश्चाक्षुषीभ्यां शाखाधमनीभ्याम् । तत्प्रशाखाः अनुशंखिकादिधमनीप्रतानैः सह मिलिता धमनीचक्रमारचयन्ति एकैकं नेत्रछदं परितः ।

नाड्यस्तु नेत्रच्छदयोः प्राधान्येन तृतीयनाड्याः शाखाप्रशाखाः, पञ्चमनाड्याश्च त्वग्भागे । स्वतन्त्रनाडीप्रतानाश्च तत्सिरा-धमनीचक्रेषु प्रतताः ।

( २८४ चित्रम् )

## नेत्रच्छदयोर्गम्भीरव्यवच्छेदः ।




चित्रव्याख्या ।—क—अन्तःकोणः, तस्योर्ध्वमधश्च अश्रुद्वारद्वयम् । अ०—अपाङ्गः । पे०—पेशी ।

**नेत्रवर्त्म**[१] नाम प्रतिनेत्रं नेत्रच्छदान्तरावरणभूता तन्वी श्लेष्मलकला या अन्तःप्रत्यावृत्ता नेत्रगोलकस्य पुरोभागमाच्छादयति ( २७२।२८४ चित्रयोः ) । तस्या द्वौ भागौ कल्प्येते—छदान्तरीयभागः, चाक्षुषभागश्चेति । तयोः नेत्रवर्त्मनी—इति संज्ञा प्रतिनेत्रम् । तत्र—

१ । Conjunctiva.

(१) छदान्तरीयं नेत्रवर्त्म[१] नेत्रच्छदयोरन्तस्तलावरणं, यत् पुरस्तात् नेत्र-पुटान्तरीयपरिखां प्राप्य तस्यास्तद्द्वये बहिस्त्वचा संसज्यते (२८३ चित्रम्)। तत्र दृश्याः सूक्ष्माः स्पर्शांकुरिकाः, लसीकाग्रन्थयः, शोणितस्रोतांसि, नाडीप्रतानाश्च प्राचुर्य्येण। अतएवासौ किञ्चित् स्थूलः स्पर्शसंज्ञाभूयिष्ठः, आरक्तिमवर्णश्च स्वस्थजनस्य। तत्रैव च सम्भवन्ति पोथक्यादयो रोगाः।

(२) चाक्षुषं नेत्रवर्त्म[२] पुनर्नेत्रगोलकस्य पूर्वार्धसंसक्तो नेत्रवर्त्मभागः प्रतनु-स्वच्छकलारूपः (२८३ चित्रम्)। तस्य स्वच्छमण्डलसंसक्तो भागः स्पर्शसंज्ञा-बहुलोऽपि शोणितस्रोतोवर्जितः। शुक्लवृति संसक्तभागस्तु कतिचित्शोणित-स्रोतोभिरनुविद्धः, स्पर्शांकुरिकाभिश्च विरलाभिः।

अनयोश्च नेत्रवर्त्मभागयोः परस्परसन्धानं नेत्रगोलकस्य दृश्यभाग परिधिमभितः पश्चिमसीम्नि लक्षणीयं नेत्रच्छदयोरपाकर्षणेन, नेत्रगोलकस्य उर्द्ध्वाधोविवर्त्तनेन च। तस्यापि द्वौ भागौ कल्प्येते उत्तराधरभेदेन। नेत्रवर्त्मसन्धी च तौ अर्द्धचन्द्राकारौ कोणवद् भासेते उत्तराधर-नेत्रच्छदसम्बन्धेन, तौ वर्त्मकोण[३]-संज्ञौ। साकल्येन ग्रहणे तु एक एव नेत्रवर्त्मसन्धिश्चक्राकारो नेत्रगोलकस्य परिधौ दृश्यः। तञ्च पश्चिमतः स्पृशति नेत्रधरकलाकोषस्य पुरोभागः।

या च कोणच्छदिका नाम अर्धेन्दुसदृशी कला नेत्रान्तःकोणे वर्णितपूर्वा साऽपि नेत्रवर्त्मनव निर्मिता प्राचुर्य्येण। सेयं विहङ्गानां तृतीयनेत्रच्छदरूपा।

## अथ अश्रुग्रन्थिः।

**अश्रुग्रन्थिः**[४] नाम अश्रुजलस्रावी ग्रन्थिर्वातामफलबीजाकारः पुरः-कपालास्थ्नः अश्रुपीठखाते निगूढः (२८५ चित्रं), स नेत्रगुहाया उत्तरबहिःकोणस्थः। तस्य द्वौ भागौ उत्तराधरभेदेन। तत्र उत्तरभागः नेत्रगुहान्तर्वर्त्तिन्या अस्थिधर-कलया स्नायुसूत्रैः संसक्तः। अधरभागस्तु उत्तरनेत्रच्छदपृष्ठेन तद्बाह्यांशे। मध्ये चानयोः प्रविष्टा नेत्रोन्मीलन्याः पेश्याः कलाकण्डरा।

इत्थम्भूतस्य चाश्रुग्रन्थेः सूत्रवत् स्रोतांसि अष्टौ दश द्वादश वा। तद्द्वाराणि उत्तरनेत्रच्छदान्तरीयवर्त्मनि तदधस्तादुन्मुच्यन्ते।

सन्ति चोत्तराधरनेत्रवर्त्मकोणेषु क्षुद्रतरा उपग्रन्थयोऽप्यश्रुस्राविणः।

---

१। Palpebral Conjunctiva. २। Ocular Conjunctiva. ३। Conjunctival Fornix—Upper & lower.

( २८५ चित्रम् )

## अश्रुग्रन्थिः, नेत्रपुटस्थाः मञ्जरीग्रन्थयश्च।




अश्रुग्रन्थि[1] निर्गतञ्च अश्रुजलमीषत्क्षारलवणं नेत्रवर्त्माभ्यन्तरस्य नियतार्द्रता-सम्पादकं रजोधूमादिधावनं दोषसंशोधकञ्च। तत् नियतमेव स्रवति स्तोकेन, भूम्ना च हर्षशोकादिहेतोः। स्वतन्त्रनाडीप्रतानाश्च तदुत्तेजकाः। समधिकस्रुतञ्च अश्रुजलं नेत्रान्तःकोणस्थेऽश्रुकूपे समुपचीयमानम् अश्रुद्वाराभ्यामश्रुप्रपिकयोः, ततश्चाऽश्रुकुल्यां प्रविशति, क्षरति च तद्द्वारेण नासाधःसुरङ्गायाम्। तत्र—

अश्रुप्रपिके[2] नाम धनुर्वक्रे तनुनलिके नेत्रच्छदयोरन्तःकोणनिगूढे। तयोः द्वारद्वयम् अश्रुद्वारसंज्ञं[3] वर्णितपूर्वम्। ते च प्रान्तयोः सम्मिलिते अश्रुकुल्यायाः शिरःस्थामश्रुकुम्भिकां प्रविशतः।

अश्रुकुल्या[4] तु अश्रुपीठास्थ्नः अश्रुवाहिकाख्य प्रणालिकातः आरभ्य नासाधः-सुरङ्गां यावदायता स्नायुसूत्रमयी नलिका अंगुलमात्रदीर्घा या नासापार्श्वान्तरेकैकतो निगूढा श्लेष्मलकलावृता च ( २८४ चित्रम् )। तस्याः शिखरभागः स्फारगर्भः अश्रु-पीठाङ्कशायी—अश्रुकुम्भिका[5] नाम। मध्यभागः संकुचितप्रायः अधःशुक्तिकास्थ्नः पार्श्ववर्त्ती। अधरभागोऽपि तथावस्थायी नासाधःसुरङ्गायामुन्मुच्यते संकुचितेन द्वारेण। सेयं प्राधान्येन ऊर्ध्वहन्वस्थ्नो नासाकूटधृतया अश्रुवाहिकया संधार्य्यते।

१। Lacrimal gland. २। Lacrimal Canaliculi. ३। Puncta Lacrimalia. ४। Naso-lacrimal Duct. ५। Lacrimal Sac.

दूषिकाग्रन्थयस्तु[१] नेत्रान्तःकोणस्थस्य कोणांकुरस्य गर्भस्थाः। ते दूषिकाख्यं श्वेतवसाभं नेत्रमलं स्रवन्ति। कोणांकुरश्च पुरस्तात् तनुत्वचा संवृतः, परितश्च नेत्रवर्त्मना।

अथ साङ्गोपाङ्गनेत्रगाः सिरा-धमनी-नाड्यः।

इह खलु चाक्षुषी[२] नाम धमनी सर्वानपि वाह्याभ्यन्तरान् चाक्षुषविशेषान् प्रीणयति शाखाप्रशाखादिभिरित्युक्तपूर्वम्। सा च अन्तर्मातृकाख्यधमन्याः शाखा जतूकापक्षान्तरालेन नेत्रगुहां प्रविष्टा, आदौ तद्वहिःसीम्नि, ततो वक्रीभूय तदन्तः-सीम्नि प्रसृता। प्रसरन्त्याश्च तस्या वाह्याः शाखा-प्रशाखा उभयतः समुद्भवन्ति। यथा—( २८६ चित्रम् )

(१) दृष्टिनाडीमध्यगा[३] नाम प्रथमा शाखा या सहैव दृष्टिनाड्या दृष्टि-वितानान्तरीयं सितविम्बं प्रविश्य आदौ उत्तराधराख्यशाखयोः विभज्यते, ताभ्याञ्च सर्वतः प्रतायते परितो विसारिभिः शाखाप्रतानैः।

(२) आश्रवी[४] नाम द्वितीया शाखा या नेत्रगुहाबहिःसीम्नि प्रसरति अश्रुग्रन्थिं प्रवेष्टुम्। तथाप्रविष्टा च सा तं ग्रन्थिं सन्तर्प्य, निर्भिद्य चापाङ्गकोणे, पुनः प्रसर्पति नेत्रच्छद-नेत्रवर्त्म-गण्डपार्श्वादीन् प्रीणयितुं स्वशाखाप्रतानैः।

(३) पेशीगा[५] नाम तृतीया प्रायेण एकैवाक्षशाखा या बहुधा विभक्ता उत्तराधरनेत्रपेशीः पुष्णाति। तस्या एव प्रायेण सम्भवन्ति पुरोगाः सन्धानिकाख्याः धमन्यः।

(४) सन्धानिकाः[६] नाम नेत्रगोलकान्तःप्रविष्टाः शाखाधमन्यो वहवः याः दीर्घपश्चिमाः, ह्रस्वपश्चिमाः, पुरोगाश्चेति त्रेधा विभज्य वर्ण्यन्ते। तासां दीर्घा-स्तिस्रो द्वे वा, ह्रस्वाः षडष्टौ दश वा ( द्वादश वा क्वचित् )। ताः दृष्टिनाडी-प्रवेशस्थानमभितः शुक्लवृतिं निर्भिद्य प्रविशन्ति बहुभिर्विवरैः। ताभिः कर्बुरवृति-पोषणीभिरारच्यते धमनीचक्रद्वयम्—परितारामण्डलं, परिकनीनकमण्डलञ्चेति। पुरोगास्तु सन्धानिकाः प्रायेण पेशीगशाखासम्भवाः। ता आदौ नेत्रगोलकस्य शुक्लवृतिं परितो वहिःप्रसर्पन्ति, प्रीणयन्ति च चाक्षुषं नेत्रवर्त्म, नेत्रच्छदौ च। ततश्च ता एव स्वच्छशुक्लसन्धौ नेत्रगोलकान्तः प्रविश्य परितारामण्डलं नाम वृहत्तरं धमनीचक्रं पुष्णन्ति।

---

१। Meibomian Glands. २। Ophthalmic Artery. ३। Arteria Centralis Retinæ. ४। Lacrimal Branch. ५। Muscular Branches. ६। Ciliary Arteries ( Long, Short & Anterior. )

( २८६ चित्रम् )

## चाक्षुषी धमनी, तच्छाखाश्च ।




## ( २८६-क चित्रम् ) नेत्रगोलकीय-नाडीप्रतानविस्तारः ।




[ To face Page 218.

(५) अधिभ्रुवा[१] नाम शाखा नेत्रगुहान्तरपार्श्वसंगता स्वनामिकया नाड्या सह अधिभ्रुवाख्यं पुरःकपालास्थिविवरं प्रविश्य भ्रूप्रदेशं तर्पयति।

(६) झर्झराभिगे[२] नाम द्वे प्रशाखे अग्रिम-पश्चिमे सर्व्वानपि झर्झरास्थ्नोऽवयवान् गन्धग्राहि नाडीप्रतानाश्च प्रीणयतः।

(७) मस्तिष्कवृतिगा अग्रिमा[३] नाम प्रशाखा स्वनाम व्याख्याता या जतूकास्थ्नः पत्रान्तरालेन मस्तिष्कवृतिं प्रविशति।

(८) नेत्रच्छदगे[४] नाम द्वे उत्तराधरनेत्रच्छदयोः प्रसृते।

(९) लालाटिकी[५] नाम प्रशाखा चाक्षुष धमन्या अन्यतराऽग्रशाखा या अधिभ्रुवाख्य धमन्या अनुवर्त्तिनी ललाटादिविशेषां स्तर्पयति।

(१०) औपनासिकी[६] नाम नासापार्श्वपृष्ठगा चापराऽग्रशाखा।

अस्ति च नेत्रगुहाधःसीम्नि अपराऽपि धमनी नेत्रगुहाधरीया[७] नाम, सा अन्तर्हान्वाख्यधमनीसम्भवा अधोदर्शिनीं वक्राधोदर्शिनीञ्च पेशीं पुष्णाति, अश्रुग्रन्थिञ्च।

एतासाञ्च धमनीनां मध्ये सन्धानिकाख्या एव धमन्यो नेत्रगोलकं तर्पयन्ति, अपरास्तु नेत्रोपाङ्गानि, तदुपकण्ठस्थानि भ्रू-ललाट-नासापृष्ठादीनि चेति निष्कर्षः।

**सिराः** खलु नेत्रसम्बन्धिन्यः प्रायेण धमनीसहचर्य्यः। तत्र नेत्रगोलकान्तरीया सिरागुल्मिकाः व्याख्यातपूर्वाः। ताः क्रमशो मिलिताः द्वयोः स्थूलसिरयोः परिणमन्ति उत्तराधरचाक्षुषी संज्ञयोः। ते च त्रिकोणिकां नाम सिरासरितं करोटिमध्यस्थां प्रविशतः।

**नाड्यः** पुनर्द्विविधाः नेत्रगोलकान्तरीयाः, तद्बाह्याश्च। तत्र गोलकान्तरीयाः व्याख्यातपूर्वाः (२३५ चित्रम्)। बाह्याश्च नेत्रपेशीगास्तिस्रः—तृतीया, चतुर्थी, षष्ठी चेति। तत्र बहिर्दर्शिन्याः षष्ठी, वक्रोर्ध्वदर्शिन्याः चतुर्थी, अपरासां तृतीयेति दर्शितचरम्। पञ्चमी च साङ्गोपाङ्ग-नेत्रस्य स्पर्शसंज्ञाधायिनी। स्वतन्त्रनाडीप्रतानाश्च चाक्षुषादिग्रन्थिनिर्गताः तारामण्डलस्य विस्फारणसूत्राणां प्रचेष्टन्यः।

इति तृतीयोऽध्यायः।*

---

१। Supra-Orbital. २। Ethmoidal (Posterior & Anterior). ३। Anterior Meningeal. ४। Medial Palpebral ( Superior & Inferior ). ५। Frontal. ६। Nasal. ७। Infra-Orbital.

* सुश्रुतोक्तो नेत्रगोलकस्य पटलविभागस्तावदतिदुर्बोधः स्वोक्तिविरोधी प्रत्यक्षविरुद्धो वेति नास्माभिः समाद्रियते। डा० मुञ्जे महाभागेन स्वकीयनेत्रचिकित्साग्रन्थे कृतः पटलत्रयविभागस्तु न सौश्रुतविभागेन संवदति। अतएवास्माभिः पटलपदं न प्रयुक्तं नेत्रगोलकावयवविभागे प्राय इति सुधीभिर्विभाव्यम्।

# अथ चतुर्थोऽध्यायः ।

अथातो रसनेन्द्रियविज्ञानीयमध्यायं व्याख्यास्यामः ।

**रसनेन्द्रियं** नाम मधुराम्लादिरसग्रहणकार्मणम् इन्द्रियं यस्याधिष्ठानं बाह्यं रसना नाम स्वादांकुराणां सन्धारणी । आभ्यन्तराधिष्ठानं पुनरुपधानपिण्डिका मस्तिष्कान्तर्वर्णितपूर्वा । अन्ये त्वाहुः, रस-गन्धसंज्ञयोर्नियतसाहचर्य्यदर्शना-दधिष्ठानसाङ्कर्य्याच्च उपधानपिण्डिका अंकुशकर्णिका चेत्युभयमपि उभयोः संज्ञयोरधिष्ठानमाभ्यन्तरमिति । तदेतत् सूचितपूर्वं नाडी-क्ष्वेलवर्त्मविज्ञानीयाध्याये ।

रसग्रहणसाधनानि तु रसादानयन्त्रिकाः स्वादांकुररूपाः रसनायाम्, येषां मूलेषु निबद्धा रसग्राहिनाडीनां सूक्ष्माः प्रतानाः । तद्विस्तरोऽनुपदं वर्णनीयः ।

( २८७ चित्रम् )

## रसनापृष्ठं स्वादांकुराश्च ।




---

१ । The Organ of Taste.

अथ रसना।

**रसना, जिह्वा**[1] **वा** नाम स्वादग्रहण-चर्वण-ग्रसन-भाषण-साधनं यन्त्रम्, या मुखकुहरे अधोहनुमण्डलान्तर्वर्त्तते (२८७ चित्रम्)। सा मुखभूमौ पश्चिमतश्चाऽनद्धा स्नायुसूत्रैः पेशीभिश्च। सेयं प्रधानतो मांसमयी तनुश्लेष्मलकलासंवृता, स्वादांकुरैरनुविद्धा चोर्द्ध्वतले पार्श्वयोश्च। सम्यग् विपरिवर्त्तनशीला च सा स्थानाकृतिभ्यां पेशीक्रियाप्रभावाद्। विभागयोग्या च मध्यरेखायां विदारणाद् दक्षिण-वामयोरर्धयोः। मध्ये चार्धयोर्दृश्या स्नायुपत्रिका जिह्वाविभजनी[2] नाम।

अथ रसनाया द्वे तले—ऊर्द्ध्वतलमधस्तलञ्चेति। तत्रोर्ध्वतलं किञ्चित् स्फीतोदरं मध्यरेखाङ्कितञ्च रसनापृष्ठ[3] संज्ञम्। तच्च उपरिष्टात् निःसङ्गम्, स्वादांकुरानुविद्धञ्च प्राचुर्य्येण। मध्यरेखायां चास्य दृश्यं विवरप्रायं खातम् अन्धविवरं[4] नाम। तत्पश्चिमतो दृश्या स्नायुमयी प्रबन्धनी अधिजिह्विकासंयोगिनी।

अधस्तलमपि रसनाया निःसङ्गमन्यत्र सेवन्याः। सा च सेवनी[5] तनुत्रिकोणकलामयी, रसनातलपश्चिमार्धस्य मुखभूमौ प्रबन्धनी। तस्याः मूले अंकुरिका, उभयतश्च—आलिकाद्वयं, हन्वधरीय-जिह्वाधरीयाख्यलालाग्रन्थ्योः तनुजलस्राविग्रन्थीनां च स्रोतोमुखानि। ग्रन्थयश्च ते वर्णितपूर्वाः। एकैकपार्श्वे च सेवन्याः रासनी नाम धमनी सिरा च स्थूला सुस्पष्ट दृश्या, कलामञ्जरिका[6] च (२८८ चित्रम्)।

द्वे च धारे रसनाया दक्षिण-वाम संज्ञे निःसङ्गे। ते पुरस्तान्मिलिते रसनाग्ररचनाय, स्वादांकुरभूयिष्ठे च। रसनाग्रं तु तनु-तीक्ष्णप्रायमाकृतिपरिवर्त्तनशीलम् पेशीचेष्टनेन, तद् विशेषतः स्वाद-स्पर्श संज्ञे गृह्णाति।

पश्चिमभागस्तु रसनायाः अष्टधा सम्बद्धः पारिपार्श्विकैः प्रत्यङ्गैः। तन्मुख्यं प्रबन्धनस्थानम्। तत्र च त्रिशूलाकारे खातोदरस्थाने मध्यरेखायां प्रबन्धनी तनुस्नायुमयी अधिजिह्विकासंयोगिनी (२८७ चित्रम्)। तदुभयतो मांसमयं प्रबन्धनद्वयं शिफारसनिकाख्य पेशीद्वयनिर्मितं शंखास्थ्नः शिफाद्वयसंयोगि। तत्पार्श्वयोश्च गलस्तम्भिके पुरःस्थे कोमलतालुना रसनामूलस्य संयोगमारचयतः। अधःस्थं प्रबन्धनं तु चिबुक-जिह्वा-कण्ठिकाख्य-पेश्या मध्यतः, जिह्वाकण्ठिकाख्यपेशीद्वयेन चोभयतः। तत् क्रमेण अधोहनु-कण्ठिकास्थिभ्यां, कण्ठिकास्थ्ना च रसनामूलस्य संयोगं घटयति। पेशीसंयोगाश्च रसनापेशी-वर्णने विशिष्य वर्णनीयाः।

---

१। Tongue. २। Raphe or Medial Septum. ३। Dorsum of the Tongue. ४। Foramen Cæcum. ५। Frænum. ६। Fimbriate fold.

( २८८ चित्रम् )

## रसनायास्तलदेशदर्शकम् ।

[ रसनाऽत्र परावृत्त्य दर्शिता ]




### अथ स्वादांकुराः ।

**स्वादांकुराः**[1] नाम रसादानयन्त्रिकाः या रसनाया ऊर्द्ध्व तले परिधौ च श्लेष्मलकलावृता दृश्यन्ते असंख्यप्रायाः । सन्ति च ते स्तोकेन कोमलतालुभागेऽपि ।

ते त्रिविधाः — कूर्चाकाराः, शिलीन्ध्राकाराः, द्वीपाकाराश्च ( २८७ चित्रम् ) । तत्र —

(१) कूर्चाकाराः[2] असंख्यकल्पाः तृणकूर्चवदाभासन्ते सूक्ष्मपरीक्षया । ते सूक्ष्माग्राः स्थूलाग्राः वा प्रायेण रसनाया अग्रिम द्वि-तृतीयांशे दृश्याः ।

(२) शिलीन्ध्राकाराः[3] छत्राकवदूर्द्ध्वं प्रतताः अधःसंकुचिताः, घनशोणवर्णाश्च ( २८७ चित्रम् ) । ते स्वादकोरकैरनुविद्धाः, प्रायेण रसनाग्रे तत्पार्श्वधारयोश्च दृश्याः ।

---

१ । Lingual papillæ. २ । Filiform papillæ. ३ । Fungiform papillæ.

( २८९ चित्रम् )

## द्वीपाकारं स्वादांकुरद्वयम् ।

[ वहुगुणवर्द्धितायतनम् ]




( २९० चित्रम् ) स्वादकोरकः ।

[ वहुगुणवर्द्धितरूपः ]




(३) द्वीपाकारास्तु[१] स्थूलाः परिखावेष्टितदुर्गसदृशाः रसनापृष्ठस्य पश्चिम-तृतीयांशे स्थूल चक्षुषा दृश्याः। ते संख्ययाऽष्टौ दश द्वादश वा रसनामूले ^-इतिवत् श्रेणिद्वयविन्यस्ताः। तेष्वपि लक्षणीयं स्वादकोरकाणां वाहुल्यम् ।

स्वादकोरकास्तु[२] द्रोणपुष्पीमुकुलवद वर्त्तुलाः कूर्चधरकूपशीर्षाः विचित्रनिर्माणाश्च (२९० चित्रम्)। ते रसादानयन्त्रिकासु मुख्या इति केचित्।

सर्वेषाञ्च स्वादांकुराणां मूलस्थाः सूक्ष्मा रसग्राहिनाडीप्रतानाः रससंज्ञामभिवहन्ति मस्तिष्काभिमुखम्। सन्ति च तेषामन्तरान्तरा स्पर्शांकुरिका अपि रसनायां, विशेषतश्च रसनाग्रे। श्लेष्मस्राविग्रन्थयश्च[३] श्लेष्मलकलाभ्यन्तरस्थाः तनुजलाभं वोधकाख्यं श्लेष्माणं नियतं स्रवन्ति, रसनाया नियतार्द्रतासम्पादनाय। तेषां पश्चिमाः स्थूलतमाः जिह्वानुगाः[४] नाम।

### अथ रसादानप्रकारः ।

एष च रसादानस्य वैचित्रीविशेषः। यावद्धि रसवद्वस्तुकणिकाः न द्रवीक्रियन्ते वोधकश्लेष्मणा, मुखलालया, जलादिना वा, न तावद् रसग्रहः। द्रवीकृताश्च ताः स्वादकोरकाणां कूर्चाग्राणि समुत्तेजयन्ति, ततश्चोत्पद्यन्ते रससंज्ञाः या नाडीप्रतानै स्तैस्तैरूह्यन्ते मस्तिष्काभिमुखम् ।

१। Circumvallate Papillæ. २। Taste-buds. ३। Mucous Glands. ४। Lingual Tonsils.

पृथग्विधाश्च ता रससंज्ञाः—इति परीक्षकाः। नातिपृथग्भूताश्च गन्ध-संज्ञातः, रस-गन्धसंज्ञयोर्घनिष्ठसम्बन्धदर्शनात्।

षट् चेह रसाः—मधुराम्ल-लवण-कटु-तिक्त-कषायसंज्ञाः, इति प्राञ्चः। चत्वार एव मधुराम्लवणतिक्ताः—इति प्रतीच्याः। कटुकषायाख्यौ हि रसौ तन्मतेन स्पर्शसंज्ञोत्तेजनविशेषौ नाऽस्वादरूपौ।

अथाप्ययं विशेषः। रसग्राहिता हि रसनायाः पृथग्भागेषु पृथक्प्रकारैः स्फुटतमा। तद्यथा—मधुरस्य रसनाग्रे। तिक्तस्य रसनामूले, द्वीपाकार-स्वादांकुरेषु च विशेषेण। अम्लस्य रसनापार्श्वयोः। लवणस्य तत्रैव रसनाग्रे च।

यत्तु कटुकषाययोः स्पर्शमात्रत्वमित्याचक्षते प्रतीच्याः, तन्न सम्यक्। कटुरसग्राहिता हि रसनाग्रे रसनापार्श्वयोश्च स्फुटतमा। कषायरसग्राहिता तु रसनामूले तत्पार्श्वयोश्च। यदि तु स्पर्शमात्रत्वं स्यादनयोः रसयोः, तर्हि नैषा रसग्राहिता स्थानभेदेन भिद्येत? तस्मात् षडेव रसाः—इति साधीयान् सिद्धान्तः।

अथ रसनापेश्यः।

**रसनापेश्यः**[१] नाम रसनाया निर्मापण्यः, प्रचेष्टन्यः, संयोजन्यश्च पेश्यः (२६१ चित्रम्)। तासां चतस्रस्तिस्रो वा एकैकार्धे रसनायाः, मध्ये चैका—इति साकल्येन नव सप्त वा पेश्यः। द्वेधा च तासां विभागः बाह्याभ्यन्तर भेदात्। तत्र बाह्याः रसनानिर्मापण्योऽपि तद्बाह्यप्रत्यङ्गेषु सम्बद्धा। आभ्यन्तर्यस्तु रसनान्तरेव विन्यस्ताः तन्तुगुच्छिकाख्य पेश्याश्चत्वारो विभागाः।

अथ बाह्यं पेशीचतुष्टयं—जिह्वाकण्ठिका, अनुजिह्वाकण्ठिका, चिबुकजिह्वा-कण्ठिका, शिफारसनिका चेति संज्ञायते। तासु—

१। जिह्वाकण्ठिका[२] नाम पेशी तनुचतुरस्रा जिह्वामूलाधस्तादेकैकतो दृश्या। तस्याः प्रभवः कण्ठिकास्थ्नो महाशृङ्गं, लघुशृङ्गं, पिण्डार्द्धञ्च। निवेशः जिह्वायाः पार्श्वे पश्चिमभागे च। कार्य्यम्—मिलितयोर्दक्षिणवामपेश्योः जिह्वापार्श्वद्वय-स्यावनमनं, मध्योन्नमनं च जिह्वायाः। प्रचेष्टनी नाडी द्वादशी नाम।

२। अनुजिह्वाकण्ठिका[३] नाम लघ्वी पेशी जिह्वाकण्ठिकायाः कन्यकावदा-भासते, चिबुकजिह्वाकण्ठिकाख्य पेश्याःकैश्चन सूत्रैः पृथक्कृता। तस्याः प्रभव-निवेश-कार्य्याणि जिह्वाकण्ठिकावत्। नाडी च द्वादश्येव।

---

१। Muscles of the Tongue. २। Hyo-glossus muscle. ३। Chondro-glossus.

## ( २६१ चित्रम् ) रसनापेश्यः ।




चित्रव्याख्या ।—१ । चिवुक-कण्ठिका पेशी २ । मुखभूमि-कण्ठिका पेशी ( कर्तिता ) ३ । अधिजिह्विकास्थानं पेशीसंवृतम् ( विन्दुभिरङ्कितम् ) । ४ । कण्ठिकावटुका नाम कलामयी स्नायुः । ५ । ६ । अवटुपट्टिका स्नायुः चषकास्थियुता ।

३ । चिवुक-जिह्वाकण्ठिका[१] नाम पेशी तालवृन्ताकारा मुखभूमौ जिह्वाधरतलार्द्धे संलग्ना । सा वृन्तभागेन अधोहन्वस्थ्नः चिवुकपिण्डान्तरीयाद् उत्तर रसनाकलायकात् प्रभवति । ततश्चोत्थाय तन्मांसतन्तवस्तालपत्रवदायताः ऊर्ध्वं समग्रेऽपि जिह्वाधरतले निविशन्ते, अधश्च कण्ठिकास्थ्नो मध्यपिण्डे । तस्य कार्य्यं जिह्वायाः पुरोनिरसनम्, उन्नमनञ्च । प्रचेष्टनो नाडी द्वादश्येव ।

४ । शिफारसनिका[२] नाम पेशी शङ्खास्थ्नः शिफाप्रवर्द्धनात्, शिफाहनुकोणिकाख्यस्नाय्वाश्च समुत्थाय जिह्वापृष्ठे निविशते जिह्वाग्रे च । तस्याः कार्य्यम् जिह्वायाः कर्षणमूर्ध्वं पश्चिमतश्च । प्रचेष्टनो नाडी द्वादश्येव ।

आभ्यन्तरी तु रसनापेशी तन्तुगुच्छिका[३] नाम समग्ररसनाव्यापिनी । सा चतुर्धा विभक्ता पृथङ् नामानि लभते । तद्यथा—तन्तुगुच्छिका दीर्घोत्तरा, दीर्घाधरा[४] चेति द्वे अनुलम्बमांसतन्तुनिर्मिते । अनुप्रस्था[५] नाम एका अनुप्रस्थसूत्रमयी ।

---

१ । Genio-glossus. २ । Stylo-glossus. ३ । Intrinsic Muscles of the Tongue.
४ । Longitudinalis Linguæ—Superior & Inferior. ५ । Transversus Linguæ.

गम्भीरिका[१] चेत्यपरा शंकुवदूर्द्ध्वाधोनिविष्टसूत्रा। तत्र दीर्घाख्य पेशिकाद्वयस्य तन्तवः आ मूलादग्रं यावदायताः मध्यरेखावर्त्ति-विभजन्याख्यस्नायुपत्रिकायाः एकैक-पार्श्वे सम्बद्धाः। तत्र दीर्घोत्तरया निर्मितं रसनापृष्ठम्। अनुप्रस्थया पूर्वोक्तस्नायु-पत्रिकापार्श्वतो निबद्धया पार्श्वधारे। गम्भीरिकासूत्राणि पुनः रसनापूर्वार्धस्य दार्ढ्य सम्पादनी। तासां पेशीनां कार्य्यम् रसनाया आकृतिसंघातविशेषयोः विपरिवर्त्तनम्, सञ्चालनञ्च तस्याः शब्दोच्चारण-चर्बण-निगिरणादिकार्य्यार्थम्। प्रचेष्टनी नाडी तु द्वादश्येव।

शक्यञ्च पृथक्करणं रसनाया दक्षिण-वामार्धयोः विभजनस्नायुपत्रिकाच्छेदेन। तद् रसनार्धगतं कर्कटकादिरोगे* सुखमेव कुर्वन्ति शल्यतान्त्रिकाः।

अथ रसनागताः सिरा-धमनी-नाड्यः।

पोषणं खलु रसनाया अनुजिह्विकाख्यधमनीभ्यां[२] जिह्वातले सेवनीमुभयतः प्रसृताभ्याम्। एकैका च सा धमनी एकैकस्या बहिर्मातृकायाः पुरोगा शाखेति[३] वर्णितपूर्वा। सा जिह्वाग्रं यावत् प्रसरन्ती गम्भीरजिह्विकाख्य[३] धमन्यां पारणमति, आरचयति च अपरपार्श्वीयधमन्या स्वसंज्ञया धमनीचक्रम्। तच्छाखाप्रतानाः सर्वत्र जिह्वापेशीषु, जिह्वाधरीयग्रन्थ्योः, स्वादांकुरादिषु च प्रसर्पन्ति। सिराश्च तत्सहचर्य्यः तत्तत्स्थानेभ्यः शोणितं संगृह्य अनुमन्याख्यां स्थूलसिरामेकैकतः प्रविशन्ति।

नाड्यस्तु रसनागता विविधाः। तत्र रसनाया एकैकार्धे—

(क) रसग्राहिनाड्यौ यथा—

(१) सप्तम्याः रसग्रहा कर्णान्तिका नाम शाखा[४] या अग्रिम द्वि-तृतीयांशयोः प्रसृता स्वादांकुरमूलेषु सूक्ष्मैः प्रतानैः प्रविशति। तस्याः सम्बन्धो जानुकाख्य-नाडीग्रन्थिना वर्णितपूर्वेण। (२) नवम्या रसनाभिगा नाम शाखा[५] च रसनार्धस्य पश्चिमतृतीयांशे स्वादांकुरमूलेषु सूक्ष्मप्रतानैः प्रसृता।

(ख) स्पर्शसंज्ञावाहिनी नाडी तु सामान्यतः सर्वत्रापि रसनायाः रासनी[६] नाम, सा पञ्चमनाड्या अधोहानव्यांशसम्भवा।

(ग) प्रचेष्टनी च नाडी रसनाया द्वादशी नाम, या सर्वा अपि रसना-पेशीरनुप्राणयति। सा स-प्रभव-प्रसरा वर्णितपूर्वा।

इति चतुर्थोऽध्यायः।

१। Verticalis Linguæ. २। Lingual Branch of the Ext. Carotid Artery. ३। Arteria Profunda Linguæ. ४। Chorda Tympani. ५। Lingual Branch of Glosso-pharyngeal Nerve. ६। Lingual Branch of Mandibular division of 5th Nerve. * कर्कटको नाम प्रायोहन्ता रोगोऽधुना "क्यान्सर" इति (Cancer) प्रसिद्धः।

# अथ पञ्चमोऽध्यायः ।

अथातो घ्राणेन्द्रियवर्णनीयमध्यायं व्याख्यास्यामः ।

**घ्राणेन्द्रियं**[१] नाम गन्धसंज्ञाऽऽदानकार्मणमिन्द्रियं नासापरपर्य्यायं यस्य वाह्याधिष्ठानं नासाभ्यन्तरस्थाः गन्धादानयन्त्रिकाः घ्राणनाडीप्रतानसम्बद्धाः। आभ्यन्तराधिष्ठानन्तु तस्य अंकुशकर्णिका मस्तिष्कवर्णने वर्णितचरा। उपधान-पिण्डिकाऽपि तथेत्यन्ये, रस-गन्धसंज्ञयोर्घनिष्ठसम्वन्धदर्शनात्। घ्राणनाडी च गन्धसंज्ञावाहिनी व्याख्यातपूर्वा ( नाडीखण्डस्य नवमाध्याये )।

अथ नासाविभागः ।

**नासा, नासिका**[२] वा नाम मध्येमुखमण्डलमवस्थितोऽवयवो वहिः-समुन्नतः, अन्तर्गभीरश्च। सा त्वङ्मांसास्थिकलादिनिर्मिता मध्यस्थेन प्राचीरकेण समानार्द्धयोर्विभक्ता। तस्या द्वेधा विभागः — वहिर्नासा, अन्तर्नासा चेति। तयोराद्यस्य विभागस्य नासावंश इति प्रसिद्धिः। द्वितीयस्य नासागुहेति।

अथ वहिर्नासा ( नासावंशो वा )।

**वहिर्नासा, नासावंशो**[३] वा नाम नासावहिरङ्गं त्वङ्मांसास्थिमयं यत् नासागुहयोराच्छादनभूतम्। तस्याष्टौ अवयवाः यथा—नासामूलं, नासापृष्ठं, नासापक्षौ, नासाग्रं, नासापुटौ, नासाविवरद्वयं, नासालिके, नासावंशगुहे चेति। ( २६२ चित्रम् )।

तत्र भ्रूमध्याधःस्थो देशो नासामूलम्[४]। तदनुबन्धेन नासाग्रं यावत् नासापृष्ठम्[५] ( नासासेतु र्वा )। उभयतो नासापक्षौ[६] ( नासापार्श्वौ वा )। नासाधर-प्रान्तो नासाग्रम्[७]। तदुभयतो नासापुटौ[८]। ताभ्यां धृते नासाविवरे[९] बाह्य-नासामार्गयो-रग्रिमद्वारभूते। एकैकस्य च नासापुटपार्श्वस्य किञ्चित् स्फीतस्य नासपालिकेति[१०] संज्ञा। नासाविवरप्रवेशितायाः स्वकनिष्ठांगुल्याः प्रथमपर्वविस्तारा गुहा नासावंशगुहा[११], वहिर्नासागुहा वा नाम एकैकतः। सा अन्तर्नासागुहया सम्बन्धवती उर्द्ध्वं पश्चिमतश्च निगूढेन नातिदीर्घखातेन अंगुल्यग्रप्रवेशार्हेण।

१। Organ of smell. २। Nose. ३। Outer nose. ४। Root. ५। Dorsum. ६। Sides. ७। Tip or Apex. ८। Circumference of Nostrils. ९। Anterior Nares or Nostrils. १०। Alæ Nasi. ११। Anterior Nasal Canal.

नासालिका[१] तु ईषत्कठिनमांसला नासामध्यप्राचीराधो नासाग्रादोष्ठं यावत् । दृश्यश्च नासालिकोपरिष्टात् नासाग्राभ्यन्तरे किञ्चिद् गभीरं खातं तनुत्वगावृतं नासालिन्द[२] संज्ञम् । तदुपरिष्टात् मध्यप्राचीरमधिष्ठाय प्रसरति नासानाडी, घ्राणनाडीप्रतानाश्चोर्ध्वभागे ।

( २६२ चित्रम् )

## नासावंशः ( वहिर्नासा वा ) ।




निर्म्माणं पुनर्नासावंशस्य—उत्तरार्द्धे नासास्थिभ्यां नासाकूटाभ्यां च ऊर्द्ध्व-हन्वस्थ्नोः । अधरार्द्धे पञ्चभिस्तरुणास्थिभिः तत्सहकारि-लघतरुणास्थि-वृन्द सहितैः । तरुणास्थीनि च यथा — ( २६३।२६४ चित्रयोः ) ।

द्वे नासापार्श्विके[३] नाम पत्रकाकारे नासापक्षद्वय रचनाय । द्वे नासापालिधरे[४] नाम स्थूलवडिशवद् वक्राऽयते नासापालिद्वयस्य नासालिकायाश्च निर्म्माणाय, नासालिकायां तदान्तरकोटयोः सन्धानात् । एकम् त्रिकोणतरुणास्थि[५] नाम नसावंशस्य मध्यप्राचीरभूतं, यस्य अग्रधारायां सन्धीयते नासास्थिद्वयं तरुणास्थि-चतुष्टयं च पूर्वोक्तम् । तदेतद् त्रिकोणतरुणास्थि झर्झरास्थ्नो मध्यफलकेन सन्धीयते पश्चादूर्ध्वं च, सीरिकास्थ्ना पश्चादधश्च ।

१। Base of the Septum. २। Vestibule. ३। Lateral Nasal Cartilages. ४। Greater Alar Cartilages. ५। Triangular (Septal) Cartilage.

( २६३ चित्रम् )

## नासावंशस्य अस्थिमयनिर्म्माणम् ।




( २६४ चित्रम् )

## नासावंशस्य मध्यप्राचीर दर्शकम् ।



सन्ति च कानिचिदपराणि लघुतरुणास्थीनि[1] तैः सम्बद्धानि, तेषां त्रिचतुराणि नासापार्श्विकास्थ्नो वहिःकोटिपार्श्वे एकैकतः, एकञ्च सोरिकाग्रे। तदेतद् नासा-वंशस्य अस्थिमयनिर्म्माणं व्याख्यातम्। नासापालिपार्श्वयोर्निर्म्माणन्तु मेदः-स्नायुमय-स्थूलवस्तुना[2]।

सेऽयं नासावंशः बहिः त्वङ्मांसादिधारण्या अस्थिधरकलया संवृतः, तनुकलावृतश्च अभ्यन्तरतः। तनुरोमभिरभिरक्षितश्च घ्राणविवरान्तःपरिधौ। तानि च रोमाणि श्वासवायोः धूलिकणशोधनानि। अस्ति च त्रिकोणतरुणास्थि-नासालिकयोरन्तराले कलामयं प्रवन्धनस्थानं नासाग्रलम्बिभूषणधारणाय व्यधयोग्यम्।

नासापेश्यश्च प्रतिनासापार्श्वं सम्बद्धाः पञ्च वर्णितपूर्वाः पेशीखण्डे। ताः नासावंशावरण्याम् अस्थिधरकलायां सम्बद्धाः नासोष्ठापकर्षणादिकार्य्याः।

अथ अन्तर्नासा ( नासागुहा वा )।

**अन्तर्नासा**[3] नाम—आन्तरनासागुहाद्वयमेव सपरिकरम्। तत् त्रिभिः-शिरोऽस्थिभिः, एकादशभिमर्मुखमण्डलास्थिभिश्च * निामतम्, करोटिमध्यनिगूढं, सुगभीरं, त्रिभूमिकम्, उच्चावचसीमकञ्च। न च तत् सम्यगदृश्यम् स-मांस-शरीरे नासावंशपिहितत्वाद्, अन्यत्र यान्त्रिकपरीक्षातः। नासावंशापसारणे तु प्रत्यग्रमृतकशरीरे सम्यगदृश्यमेव तत् निपुणपरीक्षणेन।

एकैकस्याश्च नासागुहाया द्वौ विभागौ कार्य्यविभागेन—गन्धग्राहिभागः[4], श्वासग्राहिभाग[5]श्चेति। तत्राद्यः झर्झरास्थ्नो मध्यफलकेन उर्द्ध्व शुक्तिकाभ्यां च वेष्टितः ऊर्द्ध्व सुरङ्गावच्छिन्नः प्रदेशः, तत्रैव घ्राणनाडीप्रतानानां विशेषतः प्रसरात्। अवशिष्टभागस्तु नासागुहायाः श्वासग्रहणाय।

सेयमान्तरी नासागुहा लाघवाय नासागुहेति-संज्ञा। तस्याश्च सर्वत्र श्लेष्मलकलावृतायाः षड् भागाः पूर्ववत्—

गुहाच्छदिः, गुहाभूमिः, अन्तःप्राचीरम्, बहिःप्राचीरम्, गुहापुरोद्वारम्, गुहापश्चिमद्वारञ्चेति। तत्र—

**नासागुहाच्छदि**[6] निर्म्माणम्—अग्रतो नासास्थिभ्यां, पुरःकपालाग्र-कण्टकेन च समूलेन। मध्ये झर्झरास्थ्नश्चालनीपटलेन। पश्चिमतो जतूकास्थ्नः

१। Lesser Alar & Sesamoid Cartilages. २। Fibro-fatty Tissue. ३। Inner Nose. ४। Olfactory region. ५। Respiratory region. ६। Roof of the Nose. * अस्थिखण्डे नासागुहावर्णने दर्शितानि तान्यस्थीनि।

( २६५ चित्रम् )

## अन्तर्नासागता विशेषाः ।

( वाम नासागुहाया बहिःप्राचीरे दृश्याः ) ।




**चित्रव्याख्या।**—श१—श२ — अश्रुमार्ग प्रवेशित शलाकाया ऊर्ध्वाधःप्रान्तौ। तत्राधः-प्रान्तः अधःसुरंगायां दृश्यः। श३—ललाटकोटरान्तः 'कूपिकाद्वार' प्रवेशिता शलाका। श४—सैव मध्यसुरंगा निर्गता। अ० प्र०—झर्झरकास्थ्नः अङ्कुशप्रवर्धनम्। ज० च०—जतूकाचरण-फलकमान्तरम्।

कायपिण्डेन—इत्यवोचाम। तत्र नासास्थितले नासानाड्योः प्रवेशः, चालनो-पटलच्छिद्रैस्तु घ्राणनाडीप्रतानानाम्।

**नासागुहाभूमिः**[1], **नासाभूमि**र्वा नाम स्वनामव्याख्याता ईषत्कोरोदरा। तस्या निर्म्माणं सम्मुखार्द्धे ऊर्ध्वहन्वोस्तालुफलकाभ्यां, पश्चिमार्द्धे ताल्वस्थ्नोः ह्रस्वपत्रकाभ्याम्—इत्युक्तपूर्वम्। द्वेधा विभागश्च तस्या मध्यप्राचीरकेण।

**अन्तःप्राचीरं**[2], **मध्यप्राचीरं** वा नासागुहयोरेकमेव। तस्य निर्म्माणं परस्परसंहिताभ्यां झर्झरास्थिमध्यफलक-सीरिकास्थिभ्यां त्रिकोणतरुणास्थ्ना च। सीरिकास्थिसन्धानञ्च उर्ध्वहन्वस्थ्नोस्ताल्वस्थ्नोश्च समुन्नतसन्धान-रेखायामधस्तात्, जतूकास्थ्नो रसनिकया चोर्ध्वं पश्चिमतः। तदेतत् मध्यप्राचीरं

१। Floor of the Nose. २। Medial wall.

स्तोकेन पार्श्वाऽनतं दृश्यते करोटौ स्वभावात् क्वचिदुच्चावचञ्च। दृश्यश्चास्य तलद्वयं वाम-दक्षिणभेदेन। उभयतश्च तत्र दृश्यन्ते--पूर्वार्धे नासानाड्यौ नासावंशानुगे, मध्ये घ्राणनाडीप्रतानाः, पश्चिमार्धे सीरिकानुपूर्व्या नासा-तालुकाख्यनाडीद्वय-धारिण्यौ तिरश्चीनपरिखे, अनल्पानि च सूक्ष्मच्छिद्राणि नाडी-सिरा-धमनी-प्रतानप्रवेशाय।

**बहिःप्राचीरं**[1] पुनर्नासागुहाया बहिःपार्श्वगम्। तस्य निर्म्माणम्—उत्तरार्धे ऊर्ध्वहन्वोर्नासाकूटेनाऽश्रुपीठेन च। मध्ये झर्झरकपार्श्वपिण्डेन, ऊर्ध्व-हनुपिण्डेन, शुक्तिकास्थ्ना च। पश्चिमतस्तालवस्थ्नोः दीर्घपत्रकेन, जतूकास्थ्न-श्वरणफलकेन चाऽन्तरेण—इत्यवोचाम। तत्र तिस्रः सुरङ्गाः—ऊर्ध्व-मध्याऽधः-संज्ञैः शुक्तिकापत्रकैः बहिःप्राचीरसंलग्नैर्विभक्ताः, ताः क्रमात्—ऊर्ध्वसुरङ्गा, मध्य-सुरङ्गा, अधःसुरङ्गा चेति-संज्ञाः। तत्र--ऊर्द्ध-मध्यशुक्तिकयोन्तराले ऊर्द्धसुरङ्गा, मध्यऽधः-शुक्तिकयोरन्तराले मध्यसुरङ्गा, अधःशुक्तिका-नासाभूम्योरन्तराले अधः-सुरंगेति विभागः। तासाम्—

(१) **ऊर्ध्वसुरङ्गा**[2] नाम नासागुहामार्गो ह्रस्वतमः। सा नासागुहायाः-शिखरदेशस्य पश्चार्द्धमात्रे वर्त्तते, झर्झरास्थ्न ऊर्ध्व-मध्यशुक्तिकाभागयोर्मध्ये। त्रीणि चात्र प्रकाशन्ते विवराणि, तद्यथा—पश्चात् तालुजातूकं[3] नाम तदाख्यनाडी-धमनीनां प्रवेशाय। अग्रतो झर्झरकोटरद्वारं[4] नाम झर्झरास्थिपश्चिमकोटरानुवन्धि। चूड़ायां पश्चिमतश्च सुरङ्गायाः दृश्यं त्रिकोणं खातं जातूक-झर्झरिकं[5] नाम, तत्रोन्मुच्यते जतूकाद्वारं[6] जतूकास्थिपिण्डान्तरीयकोटरानुवन्धि। पुराणपीनसादि-रोगेषु च एतयोः कोटरयोरन्तः पूयप्रवेशेण अस्थ्नां जर्जरीभावो मस्तिष्कवृति-विकृतिश्च दृश्यते बहुधा।

(२) **मध्यसुरङ्गा**[7] नाम मध्याऽधःशुक्तिकयोरन्तरालस्थः मध्यशुक्ति-पार्श्वस्थश्च मार्गो मध्यमाकारः। तस्य पुरस्तादूर्ध्वञ्च तदनुबन्धरूपं नातिगभीरं तोरणकारं खातं सुरङ्गातोरणम्[8] नाम। तत् मध्यसुरङ्गायाः पुरोद्वारभूतम्, तस्योर्ध्वसीम्नि दृश्या चाऽलिका तोरणालिका[9] नाम।

---

१। Lateral Wall. २। Superior Meatus. ३। Spheno-palatine Foramen. ४। Opening of Posterior Ethmoidal cells. ५। Spheno-Ethmoidal Recess. ६। Opening of Sphenoidal Sinus. ७। Middle Meatus. ८। Atrium ९। Agger Nasi.

इमे च मध्यसुरङ्गान्तरीया विशेषाः मध्यशुक्तिकापसारणेन पार्श्वतो द्रष्टव्याः ( २६६ चित्रम् )।

( २६६ चित्रम् )

## दक्षिण नासागुहाया बहिःप्राचीरम् ।

[ शुक्तिकात्रयच्छेदनेन दर्शितम् ]




**चित्रव्याख्या ।**— अ— अधःसुरङ्गा । ग—मध्यसुरङ्गाऽग्रद्वारं सुरङ्गातोरणकं नाम । ज—जतूकाकोटरम् । क—कठिनतालु । त—कोमलतालु । न—नासालिन्दः । श१—ललाटकोटर-द्वारप्रविष्टा शलाका अर्धेन्दुखाते निर्गता । श २—नेत्रच्छदान्तःकोणस्थेन अधराऽश्रुद्वारेण अश्रुकुल्यायां प्रवेशिता शलाका अधःसुरङ्गायां निर्गता । झ०म०—झर्झरास्थ्नो मध्यकोटरद्वारम् । झ० प० तस्यैव पश्चिम कोटरद्वारम् ।

झर्झरपीठिका[१] नाम वक्रस्थूल उत्सेधः यत्र यदूर्ध्वं वा उन्मुच्यन्ते झर्झरास्थ्यो-मध्यकोटराणि । तदधस्तात् पुरश्च दृश्यं वक्रखातं अर्धेन्दुखातं[२] नाम, तत्रोन्मुच्यन्ते ललाटकोटराणि, आन्तरकोटराणि च झर्झरास्थ्नः, समानेन विवरमार्गेण कूपिकाख्येन,[३] । हनुगर्भकोटरद्वारश्च तदधस्तात् पृथगेव ( २६६ चित्रम् ) ।

(३) अधःसुरङ्गा[४] तावद् अधःशुक्तिकास्थ्नोऽधस्ताद् दृश्यो दीर्घतमो मार्गः, स हि समग्र वहिःप्राचीरानुवृत्या नासाभूमिमधितिष्ठति आ नासापश्चिमद्वारात् । तस्याः पूर्वार्द्धे दृश्यम् अश्रुवाहिकाधृताया अश्रुकुल्याया द्वारम् अतिप्रवृत्तस्य अश्रुजलस्य नासागुहाप्रवेशाय ( २६६ चित्रम् ) ।

**गुहापुरोद्वारं**[५] नाम अन्तर्नासागुहयोः पुरोभागस्थं द्वारं बाह्याभिमुखं नरकरोटौ ताम्बूलपत्राकारं वर्णितपूर्वम् । तत् समांसशरीरे तरुणास्थिसंयोगात् संकुचिततरम्, अन्तर्निगूढं, द्विभागविभक्तश्च आ-वहिर्नासं नासामध्यप्राचीरेण । तस्योर्ध्वसीम्नि नासास्थिनी, पार्श्वयोरधःसीम्नि चोर्ध्वहन्वस्थिनी परस्परसंहिते, तरुणास्थिचतुष्टयश्च पूर्वोक्तम् । नासाविवरोपलक्षितं द्वारं तु **नासाग्रद्वारं**[६] नाम पृथगेव ।

**नासापश्चिमद्वारं**[७] तावद् नासागुहयोः पश्चिमं द्वारं संकुचित-वृत्तप्रायं गलविलाभिमुखम् ( २६७/२६८ चित्रयोः ) । द्विभागविभक्तश्च तत् सीरिकास्थ्ना । तस्य पश्चिमतो गलविलच्छदिभूतं पश्चिमकपालस्य मूलपिण्डम् । ऊर्ध्वसीम्नि जतूकाशरीरम् । अधःसीम्नि तालवस्थ्नो ह्रस्वपत्रकद्वयम् । पार्श्वयोस्तु जतूकाचरण-द्वयमान्तराख्यम् । गलविलप्रवेशिते वृत्तदर्पणे प्रतिविम्बितं च तद् दर्शनयोग्यं भवति सह गलविलोत्तरार्धपार्श्वस्थेन पटहपूरणिकाद्वारेण ।

## अथ नासाभ्यन्तरीया कला ।

नासाभ्यन्तरीया[८] नाम श्लेष्मलकला समग्रमपि नासाभ्यन्तरमाच्छादयति । स्रवति च तस्याः सततं स्वस्थजनस्य तनुजलाभः श्लेष्मा तदार्द्रतासम्पादनाय । सा स्वभावेन अतितन्वी अपि शुक्तिकात्रयं मध्यप्राचीरकं च परितो भृशं स्थूला शोणितस्रोतोवहुला च भवति । गन्धग्राहिभागे तु नासागुहायां तस्यां प्रसरन्ति गन्धग्राहिनाड़ीप्रतानाः सहस्रशः घ्राणादानयन्त्रिकाप्रवेशिनः ।

---

१ । Bulla Ethmoidalis. २ । Hiatus Semilunaris. ३ । Infundibulum. ४ । Inferior Meatus. ५ । Anterior Nasal Fossa. ६ । Anterior Nares. ७ । osterior Nares. ८ । Nasal Mucous Membrane.

## ( २६७ चित्रम् )

## नासागुहयोरभ्यन्तरभागः ।

[ मध्यांशे ऊर्ध्वाधश्छेदेन प्रदर्शितः, पश्चिमतो दृष्टश्च ]




चित्रव्याख्या ।—न० न०—नेत्रगुहे । झ—झर्झरास्थि (यस्यांशभूते उर्ध्व-मध्य शुक्तिके) । त०—ताल्वस्थ्नोः सन्धानम् ।

## ( २६८ चित्रम् ) नासागुहयोः पश्चिमद्वारम् ।

[ गलविलप्रवेशिते वृत्तदर्पणे प्रतिविम्बितम् ]




[ * तदेतत् त्रिकोणतरुणास्थिभ्यां निर्मितम् । पटहपूरणिका तु अस्थिमय्यां श्रुतिसुरङ्गायामवतिष्ठते । आशयखण्डे गलविलवर्णनमपि द्रष्टव्यम् । ]

सेयं नासाभ्यन्तरीया कला गलविल-पटहपूरणिका-मध्यकर्ण-ग्रसनिकाभ्यन्तरीय श्लेष्मलकलाभागैः सानुवन्धा, ललाट-झर्झर-जतूका-हनुगर्भकोटराभ्यन्तरीय श्लेष्मलकलाभागैश्च। तदनुबन्धश्च अश्रुकुल्याद्वारेण नेत्रवर्त्मनाऽपि। आच्छादिता चेयं तनुस्तम्भिकाकारैः पिधानकोषाणुकैः[१] अग्रे सूक्ष्मरोमराजिमद्भिः। अन्तराऽन्तरा च तेषां श्लेष्मवहाः तनुलसीकावहाश्च ग्रन्थयः[२] सूक्ष्मपरीक्षाद्दृश्याः। गन्धग्राहिभागे तु नासायाः तस्यामेव दृश्या गन्धग्राहिकोषाणुकविशेषाः[३] अग्रे वक्ष्यमाणाः।

अथ नासागताः सिरा-धमनी-नाड्यः।

**धमन्यो** हि नासागता द्विविधाः—वहिर्नासागताः, अन्तर्नासागताश्चेति। तत्र—

वहिर्नासां पुष्णन्ति—वक्त्रधमन्या नासापार्श्विका-नासामूलिकाख्ये शाखे, 'चाक्षुषी' धमन्या औपनासिकी शाखा, पारिपार्श्विकधमनीनां शाखाप्रतानाश्च।

अन्तर्नासापोषणं तु सम्पद्यते श्लेष्मलकलायां घनजालवत् प्रततैर्धमनीप्रतानैः। तत्प्रसरश्च इत्थम्भूतः।—

चाक्षुषधमन्या झर्झराभिगे शाखे सर्वानपि झर्झरास्थिभागान् पुष्णीतः। अन्तर्हानव्यायाः तालुगा शाखा—शुक्तिकात्रयं, सुरङ्गात्रयं, मध्यप्राचीरञ्च। तस्या एव अधरोत्तर-पश्चिमसंज्ञाः दन्तगाः शाखाः, नेत्राधरीया च — हनुगर्भकोटरम्। वक्त्रधमन्या नासामूलिका शाखा मध्यप्राचीरमिति।

**सिराः** खलु प्रायेण तत्सहचर्य्यः श्लेष्मलकलास्वेव दृश्याः। तत्र वहिर्नासाप्रभवाः क्रमशः स्थूलीभूय नासामूलिकाम् (अग्रिमवक्त्रिकां वा) नाम सिरां, चाक्षुषीश्च सिराः प्रविशन्ति। नासागुहयोः परिसरसम्भवास्तु सिराः वहवः स्फारोदराश्च प्रायेण। तासामपि तथैव परिणामः।

**नाड्यः** पुनर्नासिकाया बहवः। तत्र—

वहिर्नासाया नाड्यः वक्त्रनाड्याः शाखाप्रतानाः नासापेशीषु प्रसृताः। नासात्वचि तु प्रतायन्ते चाक्षुषनाड्याः 'औपनासिकी'-संज्ञकप्रशाखा सम्भवाः नाड्यः, 'ऊर्ध्वहानव्या'सम्भवाश्च।

---

१। Ciliated Columnar Epithelium. २। Mucous & Serous glands. ३। Olfactory Cells.

अन्तर्नासा सङ्गतास्तु नाड्यः एकैकार्धे श्लेष्मलकलान्तः प्रसृताः। तद्यथा—

(१) घ्राणनाडीप्रतानाः नासामध्यप्राचीरकस्योत्तर तृतीयांशे, ऊर्ध्वशुक्तिकायां, तत् पुरःस्थे झर्झरास्थ्यंशे च प्रतताः। ते चाग्रभागैः घ्राणादानयन्त्रिकासु सम्बद्धाः। (२) चाक्षुषनाड्याः 'औपनासिकी' शाखा, या मध्यप्राचीरके बहिःप्राचीरके च द्वाभ्यां प्रशाखाभ्यां प्रसृता। (३) ऊर्ध्वहानव्यनाड्या दन्तमूलग शाखा सम्भवाः प्रतानाः — अधःसुरङ्गायाम् अधःशुक्तिकायाञ्च प्रसृताः। (४) तालुजातूक ग्रन्थिसमुत्थाः नाडीप्रतानाः—मध्यप्राचीरगाः, मध्याधःशुक्तिकाभिगाश्च।

तासां घ्राणनाडीवर्जं सर्वा अपि स्पर्शसंज्ञावहाः। घ्राणनाडी तु गन्धसंज्ञावहा वर्णितपूर्वा, वर्ण्यते चाग्रे विस्तरेण।

( २९९ चित्रम् )

## नासामध्यप्राचीरे घ्राणनाडीप्रतानविस्तारः।




### अथ गन्धसंज्ञादानप्रकारः।

गन्धसंज्ञा हि गन्धादानयन्त्रिकाद्वारेणाऽदीयते गन्धग्राहिभिर्नाडीतन्तुप्रतानैः। गन्धादानयन्त्रिकाश्च नासागुहयोरुर्ध्वभागस्थे गन्धग्राहिभागे श्लेष्मल-कलान्तर्विन्यस्ताः, सम्बद्धाश्च गन्धग्राहिनाडीप्रतानानां मुखेष्वसंख्येयप्रायेषु (३०० चित्रम्)।

ताश्च गन्धादानयन्त्रिकाः विशिष्टकोषाणुकानां स्तरचतुष्टयेन निर्मिताः। तत्र प्रथमस्तरे दृश्याः श्लेष्मलकलायाः पिधानकोषाणुकानामन्तरालेषु स्थूलोदरा

( ३०० चित्रम् )

**श्लेष्मलकलान्तः घ्राणदानयन्त्रिकाणां स्वरूपम् ।**

[ सूक्ष्मवीक्षणेन दृश्यम् ]




१। गन्धादायिकोषाणुकाः श्लेष्मलकलायाः पिधानकोषाणुकान्तरालेषु दृश्यमानाः (कृष्ण-वर्णाङ्किताः)। अ-अ-अ—तेषामग्रभागाः सूक्ष्म-रोमराजिमन्तः। २। तेषामक्षतन्तवः (द्वितीय-स्तरः)। ३। तृतीयस्तरः चतुर्थस्तरीय कोषाणु-कानामूर्णातन्तुभिराश्लेषवान्। ४। चतुर्थस्तरीयाः चतुर्भुजकन्दाणवः। ५। तेषामेवाक्षतन्तवः (गन्धग्राहिनाडीप्रतानाः)। ६। त एव गुच्छी-भूताः घ्राणपिण्डिकां प्रति प्रस्थिताः।

गन्धादायिकोषाणुकाः अग्रे-रोमराजिमन्तः। तदग्रैरेव हि संस्पर्शः गन्धवद्वस्तुकणिकानां वायुवाहितानाम्। ताश्च कणिकाः तर्पक-श्लेष्मणा किञ्चिदार्द्रीकृतायां श्लेष्मलकलायां विलाय्यमानाः गन्धसंज्ञामुत्पादयन्ति, न शुष्कायाम्, नापि प्रतिश्यायादिभिराप्य-भागाधिक्ये।

अथ द्वितीयस्तरे दृश्या गन्धादायि-कोषाणुकानां मूलस्था दीर्घा अक्षतन्तवः। तद्विभागजाः सूक्ष्मतन्तुप्रतानाः चतुर्थस्तर-स्थानां कन्दाणुकविशेषाणामूर्णातन्तून् उत्तेजयन्ति, सोऽयं तृतीयस्तरः। ते च करीराकृति-चतुर्भुजकन्दाणुकाः चतुर्थस्तरं रचयन्ति। अथैषां सुदीर्घा अक्षतन्तुप्रतानाः गुच्छीभूताः प्रायेण विंशतिसंख्याः घ्राण-नाडीप्रतानाः नाम, ते झर्झरास्थनश्चालनी-पटलविवरैरुर्ध्वं गताः घ्राणपिण्डिकयोरन्तः प्रविशन्ति, समुत्तेजयन्ति च तत्रस्थान् विशिष्टकोषाणुकान् त्रिकोणाकारान्। ते च नाडीतन्तु-कन्दाणुकपरम्परया आज्ञा-कन्दयोरंकुशकर्णिकयोश्चाऽन्तःस्थितान् कोषाणकानुद्बोधयन्ति घ्राणसंज्ञानिष्पत्त्यै

— इति घ्राण-संज्ञादानप्रकारः।

त्रिविधाश्च गन्धाः मृदु-मध्य-तीक्ष्णभेदेन। तत्र मृदवो गन्धाः तीव्रप्रयत्नेन श्वासवायुकर्षणादेव लभ्यन्ते, गन्धग्राहियन्त्रिकाणां नासागुहोर्ध्वभागेऽवस्थानात्। मध्याः स्तोकप्रयत्नेन, विनैव वा तीव्रप्रयत्नेन तीक्ष्णघ्राणेन्द्रियाणाम्। तीक्ष्णानान्तु गन्धानामादानं सममेव श्वासवायुग्रहणेन सम्भवति।

प्रियाऽप्रियभेदेन च द्विविधो गन्धः,—सुगन्धः, दुर्गन्धश्च। तत्र यदेकस्य प्रियं तदन्यस्याप्रियं रुचि-स्वभावाऽभ्यासानां वैचित्र्यात्।

घ्राणादानशक्तिश्च प्रायेण तीक्ष्णैव मानुषाणाम्, तीक्ष्णतरा गवाश्व-सारमेयादीनाम्, तीक्ष्णतमा मत्स्यानाम्। गन्धविशेषाणां पार्थक्येन ग्रहणं तु अभ्यासाऽनुभव-शक्तिविशेषसाध्यम्।

अथ संज्ञादानयन्त्रिकाणां स्वरूपेण सादृश्यमेव सत्यपि किञ्चिद्वैसादृश्ये प्रतिसंज्ञमित्यपि लक्षणीयम्। अतएव सर्वमपि ऐन्द्रियकं ज्ञानं स्पर्शकृतमाहुः प्राज्ञः।

( ३०१ चित्रम् )

संज्ञादानयन्त्रिकाणां सादृश्यदर्शकम्।




नस्योतवधवद् यस्येच्छया ग्रन्थमपूरयम्।
सर्वान्तर्यामिणे तस्मै श्रीकृष्णाय नमो नमः॥ १

यौवने लीलयाऽरब्धं प्रौढौ सामि-समापितम्।
जरागमे सुसम्पूर्णमिदमस्तु सतां मुदे॥ २

यत्रोत्सृष्टपुराणजर्ज्जरतनुर्न्यायोऽगमन्नव्यतां
शास्त्रं धर्म्मपरं पुरातनमभूत् नव्या स्मृतिर्यद्विदाम्॥
यत्र श्रीजयदेवकान्तकविता कृष्णं सतृष्णं व्यधात्।
तस्या वङ्गभुवः प्रथां भुवि गतं शारीरशास्त्रं नवम्॥ ३

इति पञ्चमोऽध्यायः।

समाप्तमिन्द्रियखण्डम्।

## सोऽयम्

श्रीमन्नारायणकरुणावतार श्रीकृष्णचैतन्य तनयीकृत-धन्यजनि

श्रीमद्रघुनन्दनगोस्वामिवंशावतंसस्य

निखिलराढाभूमिसौरभप्रभवश्रीखण्डपुरादिवास्तव्यस्य

प्राच्य-प्रतीच्यचिकित्सातन्त्रपारङ्गत श्रीकुञ्जविहारिकविराजपौत्रस्य

विद्याकल्पद्रुमेत्यन्वर्थ नामधेय-सर्व तन्त्रस्वतन्त्र-

वाराणसीभूषण-सर्वपण्डितमान्य-चिकित्सकशिरोमणि

श्रीविश्वनाथोपम श्रीविश्वनाथकविराजात्मजस्य

**महामहोपाध्याय श्रीगणनाथ सेन-शर्म-**

सरस्वती-प्राणाचार्य्य-विद्यासागर, एम्-ए, एल्-एम्-एस् कविराजस्य

**नवीनकृतौ प्रत्यक्षशारीरे**

**नाडीखण्डेन्द्रियखण्डवर्णनीयो नाम**

**तृतीयो भागः ।**

समाप्तश्चायं ग्रन्थः ।

॥ श्रीकृष्णचरणार्पणमस्तु ॥

# प्रत्यक्षशारीर—तृतीयभागस्य

## शुद्धिपत्रम् ।

| ( अशुद्धम् ) | ( शुद्धम् ) | ( पृष्ठायाम् ) | ( पङ्क्तौ ) |
|---|---|---|---|
| पयोधा | पयोधौ | २ | १५ |
| क्षत्तृष्णा | क्षुत्तृष्णा | ५ | ४ |
| सुखदुखः | सुखदुःख | ५ | ११ |
| वद्यके | वैद्यके | ५ | पादटीकायाम् |
| श्रयन्ते | श्रूयन्ते | ५ | ,, |
| कैकस्य | एकैकस्य | ८१ | १५ |
| नाडीतन्त्र | मस्तुलुङ्ग | ८६ | १५ |
| ( २२८ चित्रम् ) | ( २२६ चित्रम् ) | १०२ | चित्रशिरसि |
| मेरुजानाड्यः पश्चिमाः | मेरुजनाडीनां पश्चिममूलानि | १०३ | सारण्यामुभयतः |
| ( २२६ चित्रम् ) | ( २३० चित्रम् ) | १०४ | चित्रशिरसि |
| नवमोऽध्यायः | अष्टमोऽध्यायः | १०५ | पत्रशिरसि |
| शम्बूकान्तर्पर्यन्ति | शम्बूकान्तः संयमयन्ति | १७३ | ७ |
| मध्यकर्णीय | अन्तःकर्णीय | १७३ | ६ |
| कर्मणं | कर्षणम् | १८६ | ६ |
| ३ । | ( ग ) | २०१ | ६ |
| अनुरूपर्शांकुरिका | अग्ररूपर्शांकुरिका | ( २६६ चित्रे ) | चित्रशिरसि |

[ सप्तमपृष्ठायां १७५ चित्रे इडापिङ्गलयोरवस्थितिर्विपर्ययेण बोध्या ]

प्राणाचार्य-विद्यासागराद्युपाधिक

## महामहोपाध्याय श्रीगणनाथ सेन-शर्म-सरस्वती,

एम्-ए, एल्-एम्-एस् विरचितं ग्रन्थद्वयम्।

# संज्ञापञ्चक-विमर्शः।

प्रत्यक्षशारीरे प्रयुक्तानां कला-पेशी-स्नायु-सिरा-धमनीसंज्ञानाम्

अर्थनिर्णयात्मकः प्रतिवादिभयङ्करो विचारग्रन्थः।

शारीराध्येतॄणामवश्यपाठ्यः। मूल्यम् — रु० १)।

# सिद्धान्तनिदानम्।

**निदानस्थानद्वारोन्मोचको नवीनग्रन्थः, त्रिदोषतत्त्व पञ्चनिदानादिविषयेषु प्रौढ़-विचारमूलक सत्यसिद्धान्तोद्भासितत्वाद् विद्वद्भिर्बहुसमादृतः। ज्वराधिकारे प्लेग्न्युमोनियादिसन्निपातज्वरविशेषाणाम् अग्रे च फिरङ्ग पूयमेहादिनानाविधनवीन-रोगाणां सविस्तरवर्णनमिहैव दृश्यते। सोऽयं ग्रन्थ इदानीं बहुषु वैद्यकविद्यालयेषु सादरमध्याप्यते। एतत्सिद्धान्ताश्च वाराणस्यां नानादिग्देशागतैः वैद्यकोविदैः त्रिदोषचर्चापरिषदि निर्णीतैः सिद्धान्तैः सम्यग् दृढीकृताः।**

अस्य प्रथमभागः ज्वराधिकारान्तः पूर्वं प्रकाशितः। तस्य चेदानीं द्वितीयावृत्तिः समाप्तप्राया, तृतीयावृत्तिः मुद्रायन्त्रस्था। मूल्यम् प्रतिभागं रूप्यकद्वयम्। द्वितीय-तृतीयभागौ शीघ्रं प्रकाशमेष्यतः।

### केषाञ्चिद् विदुषामभिमतसाराणि।

[ मद्रासवास्तव्य पण्डितप्रकाण्ड **श्रीमत् के० जी० नटेशशास्त्रि**भिरस्य ग्रन्थस्योपादेयतामङ्गीकृत्य एतदुपरि स्वकीयं व्याख्यानमारचितम् तत्तेषामेव समीपे प्राप्तव्यम् ]

**वाराणसीवास्तव्य विद्वद्वरेण्य कविराज प० श्रीमदुमाचरण कविरत्नानाम्—**

"भवदीयसिद्धान्तनिदानं निदानाधिकरणे परमोपादेयः प्रौढपाण्डित्यप्रसूतज्योतिश्छटोद्भासितोऽभिनवग्रन्थः। रचना च भवतामार्षरचनाशैलीं विडम्बयति, सिद्धान्ताश्च सर्वमान्याः स्युः।"

**मद्रासवास्तव्य पण्डितप्रवर श्रीमद् दुरैस्वामी आयाङ्गार महाशयानाम्—**

"भावत्कं ग्रन्थमवलोक्य साम्प्रतमयमहमस्मि भवतां पराधीनः। भवदीयं सिद्धान्तनिदानमपि लोके निदानानां सिद्धान्तत्वेनैव वैद्यतन्त्रतत्त्वज्ञैर्विद्वद्भिर्भविष्यति परिगणितमिति मे मतिः।"

**कलकत्तावास्तव्याऽध्यापकप्रवर कविराज प० शीतलचन्द्र कविरत्नानाम्—**

"सिद्धान्तनिदानं नामेदमपूर्वं ग्रन्थरत्नं पूर्वत एव सादरमध्याप्यतेऽस्माभिः।"

**नागपुरवास्तव्य वैद्यभूषण प० श्रीगोवर्द्धन शर्म्म छाङ्गानी-महोदयानाम्—**

"भवन्निर्मितं सिद्धान्तनिदानं दृष्ट्वा नितरामाह्लादितोऽस्मि। श्रीमतामुद्भटपाण्डित्यं संक्षिप्तसारार्थ-विचारगर्भा वर्णनशैली, चमत्कारित्वं च सिद्धान्तानां पदे पदे दृग्गोचरीभवन्ति।"

= प्राप्तिस्थानम् =

**कल्पतरु प्रासादः,**

२२३, चित्तरञ्जन एभिनिउ ( नर्थ ), कलकत्ता।

# प्रकाशकस्य निवेदनम्

एतानि तावदभिनन्दनपत्राणि अस्मदीयगुरुचरणै स्तत्रभवद्भि र्महामहोपाध्याय-कविराजश्रीमद्गणनाथसेनशर्म्मभिः कार्य्यवशाद् भारतीयनानादेशप्रस्थितैः तत्तद्देशीय-विद्वद्वरेभ्यः समाजनसभासमवेतेभ्य आसादितानि। तानि चैतावन्तं कालममुद्रितानि साम्प्रतं शिष्यजनानुरोधात् प्राकाश्यं नीयन्ते। इति

कलकत्ता, महानगर्य्याम्
सं० १९८१
मार्गशीर्ष पूर्णिमा

विदुषां विधेयस्य
आयुर्वेदविशारदोपाधिक—
श्रीचारुचन्द्रदाश शर्म्मणः

[ Address Presented by the Rishikul, Hardwar, in appreciation of services done to Ayurveda, 30th march, 1912. ]

( श्रीहरिद्वारस्थ ऋषिकुल-वार्षिकोत्सवे खी०१९१२तमे वर्षे मार्चमासे समवेतानां विद्वद्वराणां सदसि प्रदत्तमिदमभिनन्दनपत्रम् । )

# प्रशस्तिपत्रम् ।

अविकलेन्दुकलामलनिजयशःपटलप्रसरविमलीकृतदशदिगन्तराणाम्, अनवरताभिनवविविधशास्त्राभ्याससमुद्भासमानदिव्यप्रतिभाविलोचनपरःशतानाम्, आयुर्वेदादिशास्त्रावलोकनविघटितबाह्याभ्यन्तरमलनिर्मलमानसानाम्, अगणितगुणपुञ्जरञ्जिताखिलजनताचेतसाम्, अज्ञानान्धतमसपाटनपटीयसां श्रीमतां वैद्यावतंस-कविराज-श्रीगणनाथ-सेन-विद्यानिधि-कविभूषण एम् ए, एल् एम् एस् महोदयानां करकमलयुगले षट्पदभावं भजतां सस्नेहपूर्वकं समर्पितमिदमभिनन्दनम् ।

अद्य भगवतस्तरुणेन्दुशेखरस्य शुभासीमकृपाकटाक्षपयःप्रक्षालितान्तरात्मनाम्, अस्माकं मानसभूमावानन्दकन्दमुद्भावयताम्,—आयुर्वेदोन्नमनविहितैकसाहसानाम्, असाधारणानुभवविराजमानमानसानाम्,—ससम्भ्रमविद्वन्मण्डलनीराजितपादयुगलानाम् श्रीमतां शुभसंदर्शनेन परमपुण्यैकलभ्येन—आत्मानं कृतकृत्यं मन्यमाना वयं नितरामानन्दसागरे निमग्नाः स्मः ।

अनन्यगम्येन सन्दर्शनसुखेन धन्यंमन्याः श्रीमद्भिः सम्पादिता वयमानन्दसन्ततिसन्ततपरिपूर्यमाणकण्ठगद्गदा न किमप्यभिधातुं गुणगणानां शक्नुमः । देशहितप्रवणैर्भवद्भिरनुकम्पिता जनता नितरां निरन्तरं धन्यवादपरःसहस्रैरभिनन्दयति श्रीमतः, प्रयागीयायुर्वेदसम्मेलनसंस्थायां परिभूषितसभापतिपदैः, श्रीमद्भिरनुरञ्जिता लोकाः, किमन्यद्ब्रूमः ? प्रत्यक्षशारीराद्यसाधारणग्रन्थरचनाश्चर्यितजनमनःकदम्बकानाम्, भवतां गुणगणाकृष्टा भारती नैव ननु प्रसरति विह्वला समुपवर्णयितुं गुणगणानाम् । कियतीं वा शक्तिमावहेद् वराकी वाक् ?, केवलमानन्दनन्दनविलासविस्मृतान्यकार्या धन्यवादपरःसहस्रैरभिनन्दयति श्रीमतः ।

पाश्चात्यायुर्वैदिकवैदुषीविभवावलम्बाकृष्टलोकानां लोकानां समक्षमुपदर्शितः श्रीमताऽऽयुर्वेदरहस्यैकविदा प्राचीनार्षायुर्वेदशास्त्रगरिमा, अनुपलपरिहीयमानाऽऽर्षायुर्वेदविद्यायै समर्पितो भुजावलम्बः । समुद्घाटितानि चक्षूंषि लोकानामार्षायुर्वेदप्रबोधशून्यचक्षुषामायुर्वेदमहत्त्वविदा, किंवा प्राचीनार्षायुर्वेदविद्यारहस्यप्रबोधपटीयसा न सम्पादितं भारतीगोचरातिक्रान्तमियत्तापरिमाणरहितम् । आशास्महे प्रतिदिनमार्षायुर्वेदमुपचिन्वन्तो भवन्त आर्षायुर्वेदप्रचारपरिपूर्णं भूमण्डलं विधास्यन्तीति । शुभं भूयात् ॥

श्रीमतां कृपाकांक्षी

हरिद्वार ऋषिकुल महोत्सवस्थो वैद्यगणः ।

〈 Address Presented by the Vidwat Sabha, Muttra, in appreciation of services to Ayurveda, on the 24th December, 1913. 〉

[ १९७०-तमे विक्रमसंवत्सरे मथुरापुर्य्यां निखिलभारतीय-वैद्यसम्मेलनस्य वार्षिकोत्सवकाले माथुरविद्वत्समिति-प्रदत्तं प्रशस्तिपत्रमेतत् । ]

॥ श्रीः ॥

# प्रशस्तिपत्रम् ।

अस्तीह खलु भराक्रान्तधरोद्धरणशील-जगदाधार-जगन्मङ्गलपादपद्मविचरणपवित्री-भूतेऽचलामूर्द्ध मुकुटस्वरूपेऽस्मिन् भारते वर्षे नगरत्नहिमविन्ध्याचलान्तरालवर्तिन्यतिपुण्य-प्रतिष्ठास्पद आर्यावर्ते गृहीतशक्तित्रितयात्मपूर्णषोड़शकलावतारे श्रीमन्नन्दनन्दनावतरण-स्थले व्रजमण्डले शेषैनोऽपनोदिन्या सत्कृष्णरुचिं दधानया तरणितनुजया श्रीयमुनया पावितायां तत्प्रतीच्यां वेलायां श्रीमद्रमारमण-गोविन्द-श्रीकृष्णचन्द्रजनुः पुरी सप्तपुरी-मुख्या सर्वगुणगुम्फितेयं श्रीमथुरा व्रजराजधानी। तत्रेयं सम्पादिता गुणगण-गुम्फितैरिहत्यैस्सुधीभिर्विविधविद्योन्नतिकारिणी पुरातनागमोपदिष्टधर्माचरणप्रचारिणी श्रीविद्वत्सभा-नाम्नी परिषत् ।

सैवेदानीं वैद्यवंशावतंस-विद्यानिधि एम० ए०, एल० एम० एस० इत्याद्युपाधि-वतां राजलब्धप्रतिष्ठानां चिकित्साशास्त्रोद्धरणशीलानां आयुर्वेदमहामण्डलस्य भूतपूर्वा-धिपतीनां नानाप्रान्तीयभिषग्वरैस्सह समागतानां श्रीमतां श्रीगणनाथसेनकविराजानां दर्शनेनात्युत्फुल्लास्फुटितपुष्पवाटिकेव भासमाना विद्वत्समितिस्तत्रभवत्सु समर्प्यैतत् प्रशस्तिपत्रमेवमाशास्ते ॥

जितामहन्निन्दकवैरिसेन-
श्चिकित्सिताधःस्थितितामसेनः ॥
सुसत्कृतो विज्ञनमानसेन
जीयाच्चिरं श्रीगणनाथसेनः ॥१॥

आयुर्वेदस्वरूपो निखिलगुणवतामग्रणीर्वैद्यवर्यः
कर्तव्ये दत्तचित्तः प्रवचनकुशलो वैद्यवंशावतंसः ॥
आर्षग्रन्थप्रवीणो भरतभुवि भवान् वैद्यसंसत्प्रधानः
आयुर्वेदप्रचारे प्रभवतु कृपया श्रीहरेर्लब्धशक्तिः ॥२॥

इति—प्रार्थयते श्रीमाथुरविद्वत्सभा

पौषे कृष्णे १२बुधे, सम्वत् १९७० ।

( Address Presented by the Ayurveda Pracharini Sabha, Moradabad, in appreciation of services done to Ayurveda, The 1st June, 1912. )

आयुर्वेदप्रचारिणी सभा,

मुरादाबाद।

श्रीमान् वैद्यावतंस कविराज श्रीगणनाथसेन—

विद्यानिधि कविभूषण एम. ए., एल. एम. एस. महोदय,

श्रीमान् ने हमारी प्रार्थना पर मुरादाबाद में पदार्प्पण कर हमको विशेषतः और मुरादाबाद के जनसाधारणको साधारणतः अत्यंत उपकृत किया है, तदर्थ हम श्रीमान् का हृदय से धन्यवाद करते हैं। श्रीमान् ने इस समय, जब कि भारतवर्ष की सब प्राचीन विद्या लुप्तप्राय होचुकी हैं, उसके एक विशेष अंग अर्थात् आयुर्वेदका जीर्णोद्धार करके हमारा और सारे भारतवर्ष का मुख उज्ज्वल किया है उसके लिये श्रीमान् की धवल यशःपताका यावत् चन्द्रसूर्य विद्यमान हैं तावत् भारतवर्षमें फ़हराती रहेगी। श्रीमान् जिसप्रकार पाश्चात्यविद्याके आचार्य्य हैं उसीप्रकार प्राच्यविद्या के महार्णव हैं, पूर्व और पश्चिमको एक करके अपने सुविशाल अनुभवद्वारा आयुर्वेदका उपकार किया है, उसके लिये भारतसन्तान आपकी सदा बाधित रहेगी। आपने गवेषणापूर्ण ग्रंथ लिखकर आयुर्वेदके अनुसार चिकित्सा करनेवाले हमलोगोंके लिये विशाल और सर्वांगपूर्ण अनुभव का जो पथ खोल दिया है, उसके लिये कौन वैद्य आपकी कृपाका धन्यवाद नहीं करेगा। अन्तमें हम "मुरादाबाद आयुर्वेदप्रचारिणी सभा"के सभासद्-लोग श्रीमान् का हृदय से स्वागत करते हैं॥

प० घनानन्द पन्त विद्यार्णव-

प्रमुख वैद्यवर्य्याणाम्।

(Address Presented by Bharat Dharma Mahamandal, Benares, in appreciation of services to Ayurveda, December, 1915.)

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥

# विद्यासंमानपत्रम् ।

## श्रीयुक्त गणनाथ सेन एम. ए., एल. एम. एस.

महाशय, कलकत्ता ।

ज्ञानस्य जननी विद्या। अविद्यारूपं तमो यया निरस्यते सा विद्या। पारमार्थिकं च तस्या विद्यायाः स्वरूपं संस्कृतां देवगिरं द्वारीकृत्यैव जगति प्राकाश्यत। साम्प्रतमधःपतितायामार्य्यजातौ सद्विद्यां पुनः प्रवाय्यर्याऽज्ञानोद्यमराहित्यादिदोषजातं च दूरीकृत्य यावदस्यां धर्म्मशक्तिर्न पुनराविर्भाव्यते तावदस्या जीवनरक्षा कर्त्तुं न शक्यते। आदिशिक्षितायामादिमननशीलायामादिज्ञानविदि जगद्गुरुत्वेन अभिमतायामार्य्यजातौ सद्विद्यायाः पुनर्विकाशार्थं सनातनधर्म्मस्य पुनरभ्युदयसाधनपुरस्सरं जगत्कल्याणकारिण्या धर्म्मशक्तेराविर्भावार्थं च सकलधर्म्मसभाधर्म्मालयानां समष्टिरूपायाः श्रीभारतधर्म्ममहामण्डलाख्याया विराड्धर्म्मसभायाः स्थापनमभूत्।

यत्र ये केचित् श्रीसरस्वतीदेव्याः कृपास्पदीभूताः विद्वांसो विद्योन्नतौ रतास्ते सर्व्वेऽप्यस्याः स्वजातीयविराड्धर्म्मसभायाः प्रेमभाजनानीति भवतो विविधविद्यायोग्यतया प्रसन्नेयं स्वजातीयधर्म्ममहासभा सद्विद्यायाः सम्मानवृद्ध्यर्थं भवन्तं "विद्यासरस्वती" विद्योपाधिरूपाऽलंकारेणाऽलंकृत्य परमं प्रमोदमश्नुते। सर्व्वज्ञानमयस्य सर्व्वशक्तिमतः परमेश्वरस्य चरणकमलयोः सविनयं प्रार्थयते च भवत आध्यात्मिक्युन्नतिर्भूयादिति शम्।

श्रीकाशीधाम्नि
श्रीभारतधर्ममहामण्डलप्रधानकार्य्यालयः।
अष्टमी तिथौ कृष्णपक्षे पौषमासे १९७२ वर्षे
(स्वा०) श्रीरामचंद्र नायक कालिया
प्रधानाध्यक्षः।

(स्वा०) श्रीरामेश्वर सिंहः
( मिथिलाधिपतिःमहाराज दर्भङ्गा
जी. सी. आई. ई. )
श्रीभारतधर्म्ममहामण्डलस्य सभापतिः।

< Address Presented by the Sahitya Sabha, Calcutta, at a Vast Congratulatory Evening party held on the 6th August, 1916. >

श्रीनारायणो जयति ।

अशेषशास्त्राध्यापक-वैद्यावतंस-महामहोपाध्याय—श्रीगणनाथ सेन एम्-ए, एल्-एम्-एस्, विद्यानिधि-विद्यासरस्वती-महोदयस्य सम्माननार्थं वङ्गीय"साहित्यसभा"प्रदत्तम्

# अभिनन्दनपत्रम् ।

वाराणसीभूषणविश्वनाथा-
दवाप्तजन्मा गणनाथ एषः ।
सिद्ध्या महिम्नाऽद्य गतोऽग्रभूमिं
गणेषु नैतत् खलु विस्मयाय ।

शास्त्रं "प्रत्यक्षशारीर"मिह विजयते यस्य लोकातिशायि
ह्रीणो वाचस्पतिर्यद्वचनविलसितैः प्रौढ़गम्भीरबन्धैः ।
क्षीणायुर्वेदविद्या तरुणिमनि पुनर्येन दत्तास्पदाऽभूत्
स त्वं जीयाः शतायुर्विमलगुणगणैर्भासयन्नार्य्यभूमिम् ॥

त्वं 'साहित्यसभा'-सदस्य इति ते सम्माननैषा नृपा-
दस्माकं हृदि सन्तनोति परमानन्दाब्धिमुद्वेलितम् ।
तेन प्रीत्यभिनन्दनं सदसि ते यद्दीयते गौरवात्
तत् प्रीत्या परिगृह्यतां, ननु सतां प्रेमैव मूल्यातिगम् ॥

महामान्यः सम्राट्प्रतिनिधिरुपाधिं त्वयि दिशन्
गुणेष्वेव प्रीतिं परमकृत लोके प्रकटिताम् ।
हृतो दैवात् प्राप्तो मणिरिव पुनस्त्वत्प्रतिभया
महान् मानस्तोषं जनयतितरां सज्जनहृदि ॥

आयुर्वेदं दैन्यविघ्नादुद्धरन् सिद्धिसम्पदा ।
राजसे गणनाथ त्वं गणनाथ इवापरः ॥

कलिकाता महानगर्य्यां
श्रावणशुक्लसप्तम्यां
सं १९७३ ।

श्रीराजेन्द्रचन्द्र शास्त्रिणः
"साहित्य सभा" प्रतिनिधिभूतस्य सम्पादकस्य ।

(Address in Silver Casket Presented at a Congratulatory Meeting of the Citizens of Calcutta held on the 16th July, 1916.)

प्राच्यप्रतीच्यज्ञानविज्ञानैकनिधान—निखिलभारतीयबुधजनानेकसम्मानभाजन—

नानादिग्देशागतशिष्यवृन्दवन्दितचरणारविन्द—वैद्यावतंस—

**महामहोपाध्याय कविराज श्रीगणनाथ सेन एम्-ए, एल्-एम्-एस्,**

विद्यानिधि-कविभूषण-करकमलयोः—

कलिकातावास्तव्य-गुणमुग्धहृदय-समवेतसकलसामाजिकसज्जनानाम्

## अभिनन्दन-पत्रम् ।

प्राच्यप्रतीच्यविद्याब्धिलब्धचिन्तामणिर्भवान् ।
गुणानुरक्तसुहृदामद्य प्रेम्नैव तृप्यताम् ॥

रोगार्तलोकपरिरक्षणदक्षकर्म्मा
धन्वन्तरिः समुदियाय यतो नगर्य्याः ।
तस्यां तथाप्तजनुषं वृणुते न कस्त्वाम्
श्रीविश्वनाथतनयं गणनाथमुच्चैः ॥

लब्ध्वा प्राक्तनसंस्कृतेः सुरगिरां सर्वस्वमाबाल्यतः
काव्यालंकृतिदर्शनाम्बुधिसुधामाकण्ठमाचामता ।
कैशोरे कवितामृतैर्बुधजनान् सन्तर्प्य लब्धश्रिया
आयुर्वेदपयोधिरप्यतितरां तीर्णस्त्वया लीलया ॥

दुर्दैवेन समस्तभारतभुवां सारं परं वैद्यकम्
ध्वस्तप्रायमतीतदीप्तमहिमश्रीसाक्षितामागतम् ।
अस्माभिः कटुफेरुशब्दमुखरे ध्वान्ते श्रमाद्रक्षितम्
तेजोभिः परिधूय सन्तततमस्त्वं शोभयन् शोभसे ॥

दिष्ट्याऽनन्तमचिन्त्यमद्भुतमिदं ज्ञानं त्वया बिभ्रता
भग्नस्तूपमिदं सुरम्यरचनं हर्म्यं पुनः कल्पितम् ।
यत् सम्प्रत्यधिगत्य गोपुरमिदं:"प्रत्यक्षशारीरकम्"
"सिद्धान्ताख्यनिदान"दीपसहिताः शिष्या विशन्त्यञ्जसा ।

त्वं सत्यव्रतकोविदैरभिहितो "विद्यानिधि"र्गौरवात्
श्रीमद्भारतधर्म्ममण्डलबुधैः "विद्यासरस्वत्य"पि ।
गीतस्त्वं भिषजां गणैश्च निखिलै"र्वैद्यावतंस"श्च यत्
किंचित्, ननु भारते भुवि भवान् कस्यास्ति वा नाग्रणीः ॥

सोऽयं शास्त्रमहीरुहानिह नवीकुर्व्वन् सुधाशीकरै-
राकाश्मीरकुमारिकं निजयशोज्योत्स्नां तनोषि स्थिराम् ।
येनाद्वेलजलेन वारिनिधिना दूतेन पारेऽपरे
श्रीमद्भारतभूपतिस्तव गुणानित्यं मुहुः श्रावितः ॥

"प्राचीनामार्य्यविद्यां वितरति बहुधा, शिष्यवर्य्यास्तदीया-
स्तोर्थीभूताः परेषां, दिशि दिशि हि परे तेऽपि चाध्यापयन्ति ।
सोऽयं श्रीभारतेऽस्मिन् सकलबुभिषजां संसदीशो वरेण्यो-
ऽनेकग्रन्थप्रणेता प्रियगुण, भवता माननीयो यथार्हम् ॥"

**भूमण्डलार्द्धाधीशेन राजराजेश्वरेण तत् ।**
**महामहोपाध्याति कीर्त्तितः स्याः शतं समाः ॥**

इति कलिकाता महानगर्य्याम्
सम्वत् १९७३
श्रावण कृष्ण प्रतिपदि रविवासरे ।

**महामहोपाध्याय लक्ष्मण शास्त्रि—**
**सर् कैलासचन्द्र वसु प्रभृति-**
**प्रमुखैः सदस्यैः सादरमर्पितम् ।**

(Address in Silver Casket presented at a Congratulatory Evening Party by the Vidwat Sabha—Calcutta on the 18th June, 1916.)

अशेष-शास्त्रपारावार-पारंगत—दिगन्तविस्तारिकीर्त्ति-सन्तान—प्रपन्नार्त्तजन-रोगपरित्राणपरायण-महामहोपाध्याय-वैद्यावतंस—श्रीगणनाथसेन-विद्यानिधि-सरस्वती—एम्-ए, एल्-एम्-एस्—कविभूषण-

करकमलयोः—

विद्वत्सभासमवेतानां वैद्यबुधवृन्दानाम्

# अभिनन्दनपत्रम् ।

महात्मन् गणनाथ—

सद्वैद्यवंशपीयूषपाथोधेरमृतांशुवत् ।
दिष्ट्या समुदितं कस्त्वां सतृष्णो नाभिनन्दति ॥

२

आ बाल्यात् सुरभारतीमधुरिमास्वादोन्मदेन त्वया
वेल्लद्व्याकरणाम्बुधिश्चु लुकितः, काव्यश्रियो लुण्ठिताः ।
तारुण्ये कवितारसैरतितरां धीमन्मनः प्लावितम्
शास्त्रार्थेषु च निर्ज्जितो बुधगणः,—किं किं न चित्रं कृतम् ॥

३

विद्याकल्पद्रुमाणां चरणपरिचरः स त्वमुच्चैः पितृणाम्
सांख्यन्यायादिशास्त्रेष्ववहितसुमतिर्वेदवेदान्तनिष्ठः ।
श्रामं श्रामं प्रतीच्येष्वपि निखिलनयेष्वर्ज्जिताशेषरत्नः
शास्त्रे धान्वन्तरेऽपि प्रथयसि गुरुतां वैद्यकाम्भोधितीर्णः ॥

४

"प्रत्यक्षशारीर"मशेषवैद्य-
बोधाय वेधा इव यो व्यधत्त ।
"निदानसिद्धान्त" मनन्ततत्त्वै-
रुद्भास्य भानोरिव यस्य तेजः ॥

५

तस्यानवद्याखिलभारतीय-
सद्वैद्यसंसत्पति-मानभाजः ।
भिषग्वर श्रीगणनाथसेन,—
धन्यास्तव स्मो गुणकीर्त्तनेन ॥

६

अध्यापितागणितशिष्यजनैः प्रवीणै-
र्व्याख्यामृतैश्च तव तृप्यति वैद्यलोके ।
आसेतुशीतगिरि धावति कीर्त्तिदूते
कस्त्वां न मानयति सर्वभिषग्वरेण्यम् ॥

७

यो "वैद्यष्ववतंस" इत्यभिहितः सद्वैद्यसम्मेलने,
श्रीमद्भारतधर्म्ममण्डलबुधै "र्विद्यासरस्वत्य"पि ।
तस्मै तुभ्यमशेषवित् प्रियगुणः श्रीभारताधीश्वरः
स्थाने कीर्त्तिमते "महोत्तरमहोपाध्याय"शोभामदात् ॥

८

वैद्याख्यब्राह्मणानां सुचिरपरिचितं रत्नमापत्तमिस्रा-
मग्नं तेजः प्रभावात् पुनरधिकुरुषे श्रीमुषां ग्रासतो यत् ।
अद्य त्वां वैद्यभास्वन्, बुधजननलिनश्रीसमुन्मीलनं तत्
सम्मानाशीभिरुच्चैरभिवदति मुदा वैद्यविद्वत्सभेयम् ॥

९

नारायणपदाम्भोजरजस्त्वामभिरक्षतु ।
ब्राह्मेण तेजसा युक्तः सुखं जीव शतं समाः ॥

इति—

कलिकाता महानगर्य्यां
( संवत् १९७३ वैद्याब्द १३२३ ) आषाढ़स्य चतुर्थवासरे
विद्वत्सभा-सभ्यवृन्दैः
प्रदत्तम् ।

( Address of Welcome Presented in Silver Casket by the Ayurvedic Physicians and General public assembled in a large Reception Meeting at Jubbulpore, 29th March, 1920. )

श्रीधन्वतरये नमः ।

# अभिनन्दनपत्रम्

श्रीमन्महामहोपाध्याय-वैद्यावतंस-विद्यानिधि-कविभूषण-सरस्वत्याद्यनेकोपाधि-समलंकृतानां श्रीगणनाथसेन कविराज, एम. ए., एल. एम. एस—महोदयानां करकमलेषु बहुमानपुरःसरमर्प्यतेऽभिनन्दनपत्रमिदम् ।

विहाय प्रयागस्थविद्वद्वराणां त्वया स्वीकृता प्रार्थनाऽहो मदीया ।
सभेयस्प्रहृष्टा सुधन्या ह्यतोऽद्य प्रहृष्येत्स्वसिद्ध्या कथं को न लोके ॥१॥

संदर्श्य मार्गम्भिषजां समुन्नतेः कृतोपकारा भवता यदन्वहम् ।
विस्मर्तुमेतन्न सुवैद्यसन्ततिः समाः सहस्रं क्षमते हि भारते ॥२॥

प्राचाम्प्रभावेण गता गुरुत्वं म्लानाधुना कालवशेन सेयम् ।
भवादृशां ज्ञानबलेन भूयो लब्धप्रतिष्ठा खलु वैद्यविद्या ॥३॥

वेदाद्यंगरहस्यवेदिनममुं सर्वाभिलाषप्रदम् ।
लोकाऽज्ञानहरं सदाशिवकरं श्रीविश्वनाथात्मजम् ।
प्रेम्णा श्रीगणनाथमेव सुधियः सम्प्राप्य लब्धास्पदाः
मोदन्ते हृदये विशीर्णहृदयं ह्यष्टांगमुज्जीवति ॥४॥

येनाखिलं योगिजनैकगम्यं प्रत्यक्षमेतद् बहुगूढतत्वम् ।
अकारि शारीरमहो स्वबुद्ध्या, स्तुत्यः कथं नो गणनाथसेनः ॥५॥

प्रत्यक्षशारीरमहो विलोक्य प्रेमात्मदेहप्रभवं त्यजद्भिः ।
शारीरकज्ञैः कृतमात्मनीनं, गुणेऽनुरागो गुणिनां न वस्तुनि ॥६॥

इत्येव याचे गणनाथतोऽद्य, भूयाच्छतायुर्गणनाथसेनः ।
कालः समेयाच्च शुभः स शीघ्रं, कीर्तिः स्थिरा सद्भिषजां यतः स्यात् ॥७॥

चैत्र शुक्र दशम्यां
चन्द्रवारे सं० १९७७

भवदीयचरणसरोरुहरजःकांक्षिणी
**जबलपुरीया—वैद्यसभा ।**
( श्रीमद्गोविन्दशास्त्रि प्रमुखा )

⟨ Complimentary Address Presented in Public meeting of Ayurvedic Physicians of Cochin State, S. India, the 18th Oct. 1923. ⟩

[ कोचीन राजधान्यां त्रिचूड़ाख्य (शिवपुर) नगर्य्यां समवेतानाम् 'अष्टवैद्य'प्रमुखानां विद्वद्वर्य्याणां सदसि प्रदत्ता । ]

# महामहोपाध्याय कविराज श्रीगणनाथसेन-सरस्वतीमहाशयानां

पादमूले श्रीशिवपुरवासिभिरायुर्वेदप्रणयिभिः सबहुमानादरमुपह्रियमाणेयं

# स्वागतपत्रिका ।

अयि भो आयुर्वेदपारावारपारीणा महाशयाः !

तत्रभवत्सु निरतिशयां बहुमतिं प्रणयातिरेकञ्च धारयतामेतद्देशवासिनामस्माक-मतिचिराभिलषितमिदं तत्रभवतां सन्दर्शनभागधेयमनुकूलेन विधिनाद्य समपादीति सर्वे वयमिदानीं परामानन्दकाष्ठामधितिष्ठामः । प्रमोदभरपरवशैः कतिपयैरक्षरैरकैतवानु-रागावेदकं स्वागतञ्च वो व्याहरामः ।

पौरस्त्य-पाश्चात्यवैद्यविज्ञानयोः स्पृहणीयां वैशारदीमधिजग्मुषां भवतां, धनुष्मतामिव सव्यसाचिनः, भिषग्वराणामग्रेसरभूयमनितरसाधारणं विलसतीतीदमत्रत्यैरिव पाश्चात्यै-रपि सुतरामभिनन्द्यत एव । अमुमेवार्थं द्रढ़यति तत्रभवद्भिरनायाससम्पादिता सर्वकला शालाविरुदावलिरिव सार्वभौमसम्मानिता साधारणसुदुर्लभा महामहोपाध्यायपदवी ।

भवतां पाण्डित्यप्रकर्षस्य विज्ञापकं 'प्रत्यक्षशारीरं' नाम ग्रन्थरत्नं यस्मिन्नेवानेहसि केरलदेशे प्रथमप्रवेशमलभत, ततःप्रभृति निरर्गलमिह विसृत्वरी श्रीमतां यशस्सन्ततिः केरलीयानां श्रीमत्सु महीयसीं बहुमतिमकैतवञ्चानुरागमनुदिनमादधातीति प्रमोदभरिताः प्रस्तुवीमः ।

साम्प्रतं विधिवैपरीत्येन शोचनीयां दशामापन्नाया आयुर्वेदसरणेः पुनरुद्दिधीर्षया वितन्यमानोऽयं राजकीयोद्यमो यथा नाम नचिरेण फलेग्रहितामासादयेत्तथा तस्य समीचीनपथप्रणयनं भवादृशेष्वायत्तमिति सविनयं स्मारयामः । गुरुतरे चात्र विषये चिरन्तनादारभ्य कालादायुर्वेदप्रचारेणे कामपि प्रथामधिगतस्यास्य केरलदेशस्यापि गणनीयता भवद्भिराकलितेति,—धन्यानस्मान् मन्यामहे । अपिच, समुचितस्य साहाय्यस्याधाने वयमिमे बद्धश्रद्धा इति च बोधयामः ।

तत्रभवतामिदं प्रथममेतद्देशसन्दर्शनं परस्परप्रणयस्येवोभयेषामप्यभ्युदयपरम्पराया नान्दीभावमालम्बतामिति सर्वान्तर्यामिणं प्रार्थयमाना व्याहृतपूर्वमेव स्वागतं सकृ-दप्यावर्तयमानास्सम्प्रति विरमामः ॥ शुभं भूयात् ॥

श्रीशिवपुरात्
18th Oct. 1923.

इति विनयावनतकन्धराः
**आयुर्वेदप्रणयिनः**

[ स्वा० ए. कृष्णन् नायर. के. नारायण मेनोन्, कृष्णन्, टी. वासुदेवन् मूस, पी. के. नारायणन् नम्बीशन्, इव्याणत् कृष्ण मेनोन्, के. वासुदेवन् मूस् नीलकण्ठन्, पी. वासुदेव नम्बीशन्, एस. रामन् वारियर, पी. जोसेफ़-प्रमुखा विद्वांसः । ]

"प्रत्यक्षशारीर"मधिकृत्य निखिलभारतीय-वैद्यशिरोमणीनां

# अप्रार्थितप्रशंसा-वचनानि

**कलिकातावास्तव्यानां कविरत्नोपाधिक-विद्वद्वर-कविराज श्री राजेन्द्रनारायण सेन महोदयानामभिप्रायः—**

"प्रत्यक्षदृष्ट नरदेहतत्त्ववर्णनपरं संस्कृतभाषया संकलितं पुस्तकमिदं शारीरतत्त्वबोधकैश्चित्रै स्तथा सुसिद्धान्तनिकरै रन्वर्थपरिभाषाप्रकटनैश्च अत्युपादेयतया प्रतिभाति। सफलश्रमोऽयं ग्रन्थकारः। अध्येतारश्च सर्वथा सिद्धार्थाः स्युरिति"

**वैद्यरत्नोपाधिधारिणां प्राच्यप्रतीच्यसाहित्यविदुषां कविराज-श्रीयोगीन्द्रनाथ सेन विद्याभूषण, एम्, ए, महाशयानामभिप्रायः—**

"प्रत्यक्षशारीरं" दृष्ट्वा नितरां ह्लादितोऽस्मि। अस्य भाषाया उत्कर्षो विषयस्य गौरवं संवदत्येव। अस्थिसङ्ख्यानादि-प्रस्तावेषु समधिकं वैदुष्यमत्र प्रकटीकृतम्। सिद्धान्तानां चमत्कारित्वं च सर्वै र्वाङ्गीकर्त्तव्य। ग्रन्थोऽयं वैद्यानामुपादेयो भविष्यतीत्याशास्ते—योगीन्द्रनाथ सेनः।"

**कलिकातास्थ-भिषग्वराणां कविराज श्रीश्यामादास वाचस्पति महोदयानामभिप्रायः—**

"धान्वन्तरीय-निबन्ध-प्रतिसंस्कारमेनं वदतां कमपि धीविभ्रमं नावैमि। कालवशाद् विपरिणम्यमाने जगति विविधेषु खल्वपि विषयेष्ववश्यम्भावी प्रतिसंस्कारः। यो यो मनीषिशिता देशकालपात्राण्यनुसृत्य तमनुतिष्ठति, स तु नायकपदवीमलङ्कुर्वाणो धन्यवचनभाग् भवति। प्रणेता तावत् "प्रत्यक्षशारीरस्य" गणनाथो धन्यवचनभूमिः। नवीनतत्त्वजिज्ञासुधान्वन्तरीयाणामन्येषाञ्चायमुपकर्त्ता, चेतश्चमत्कर्त्ता च सम्पत्स्यते।"

**श्रीखण्डवास्तव्यानां सर्वतन्त्रस्वतन्त्राणां कविराज-श्रीराधिकानाथ राय महोदयानामभिप्रायः—**

"इतः प्राग् द्विसहस्रवर्षकालेनापि यत्कार्य्यं कर्त्तुमशक्यमासीदतीतैर्वर्त्तमानैश्च वैद्यवर्य्यैः, अधुना प्राच्यप्रतीच्योभयशास्त्रपारदर्शिना कुशाग्रधीसम्पन्नेन श्रीमता गणनाथसेन-विद्यानिधि-महोदयेन तादृग् अतिदुरूहकार्य्यं लीलया सुष्ठु कृतमिति तु महच्चित्रमेव। ग्रन्थस्य भाषासम्पद्वर्णनावैचित्र्यञ्च मामिदं वक्तुं मुखरयति यद् अपि खलु चरकमुनिरेष उत वा भगवान् शङ्कराचार्य्यः, उत वा कोप्यन्यः प्राचीन ऋषिः योऽधुना पुनः पृथिव्यामाविर्भूय आयुर्व्वेदशास्त्रस्य चिरन्तनमभावं दूरीकर्त्तुमित्थं प्रयतते।"

**कूचविहारराज्याधिपतिचिकित्सकानां सुप्रसिद्ध "वनौषधिदर्पण"-ख्यमहाग्रन्थकृतां कविराज-श्रीविरजाचरण-काव्यतीर्थ-कविभूषण-महोदयानामभिप्रायः—**

"प्रत्यक्षदृष्टनिखिलार्थकमद्य शास्त्रमुद्योतयन्तं श्रीमद्गणनाथं को नार्हत्यभिनन्दितुं शिष्यजनहितकामी। अस्तु निर्विघ्नपरिसमाप्तिः "प्रत्यक्षशारीरस्य"। बीजरूपं धन्वन्तरिप्रोक्तं शारीरतत्त्वं महीरुहसदृशेन "प्रत्यक्षशारीरेण" प्रपञ्चयता श्रीमद्गणनाथेन "कुशलेनाभिपन्नं तद् बहुधाभिप्ररोहतीति" धन्वन्तरिवाक्यम् सफलीकृतम्। पारिभाषिकसंज्ञारचनायामभिधेयवर्णने, चित्रव्याख्यायां, मुद्रणव्यापारे च ग्रन्थकर्त्तुर्या श्रमशीलता, कार्य्यपटुता, लिपिकुशलता, गभीरदर्शिता च परिस्फुटा, कालेऽस्मिन् पाल्लविकोत्पातबहुले सुदुर्लभैव सा।"

